ॐ अर्हं नमः ।

सर्वतन्त्रस्वतन्त्र–शासनसम्राट्–सूरिचक्रचक्रवर्ति जगद्गुरु–तपोगच्छाधिपति
भट्टारक–आचार्यवर्य्य–श्रीमद्विजयनेमिसूरीश्वरेभ्यो नमः ॥

श्रीमत्कारुण्यमूर्त्तिः परमगुरुवरः सर्वतन्त्रस्वतन्त्रः
सम्राट् श्रेयस्कराणां शुभविधिविदधज्जैनसच्छासनानाम् ॥
धीरः शश्वज्जगत्यां जयति सविजयश्रीतपोगच्छनाथ–
दिव्याचार्यादिभट्टारकपदविलसन्नेमिसूरीश्वराख्यः ॥ १ ॥
संसारेऽस्मिन्नसारे प्रथितगुणिगणे सौम्यसौराष्ट्रदेशे
पुण्यात्मोक्तस्तपस्वी सुखदमधुमतीपत्तने जन्म लेभे ॥
अङ्काक्ष्यङ्केन्दुसंख्ये शुभदिनलसिते वैक्रमाब्दे वलक्ष–
पक्षे जूकाभिधेये प्रतिपदि सुतिथौ कञ्जिनीजानियुक्ते ॥ २ ॥
संसारोऽयं ह्यसारस्त्विह खलु सततं सारतत्त्वं दयेति
ध्यायं ध्यायं महात्मा विविधजनमनःक्षोभसंक्षोभणाय ॥
दीक्षां जग्राह बाणश्रुतिनिधिवसुधासंमिते वैक्रमेऽब्दे

सप्तम्यां शुभ्रपक्षे सकलजलमनोमोददे ज्येष्ठमासे ॥ ३ ॥
तस्मात्कालात्तदुक्तव्रतनियमतपोज्ञानविज्ञानवाग्भि-
र्लोकानुद्धर्तुकामो निजसुमतितर्तिं कारयन् स्वोपदेशैः ॥
पन्यासाख्यं पदं सद्-गगनरसनिधिग्लौमिते विक्रमाब्दे
मार्गे मासि त्रितिथ्यामतिथिविनयकृल्लब्धवान्-शुक्लपक्षे ॥ ४ ॥
ततः पारावाराहितनिधिमहीसंख्यकसमे
पुरोक्ते वैक्रम्ये शरतिथिशुभाह्लादिलसिते ॥
शुभे ज्येष्ठे मासि प्रचुरविनयज्ञानगुरुभि-
र्भवे भव्यां यातो गुरुरयमलं सूरिपदवीम् ॥ ५ ॥
दीक्षाऽऽदानादनल्पैर्विविधजपविधानैः सदाषोडशाब्दा-
दाबालब्रह्मचर्यव्रतनियमतपोऽतूलनीयप्रभावैः ॥
शुद्धैश्चारित्रसंघैर्निजपरबहुसच्छास्त्रसिद्धान्ततत्त्वै-
र्नैजं तेजो वितन्वन् जयति गुरुवरो जैनसच्छासनेषु ॥ ६ ॥
शान्तो यः प्रकृतौ कृतौ सुकुशलः कान्तः कृती चाकृतौ
प्रान्तः सन्मतिसागरस्य सततं श्रान्तो न धर्मार्चने ॥

साधूनामवधिः स भारतरसासद्भूषणं भूतिमद्-
विद्वत्कैरवचन्द्रमा विजयते श्रीनेमिसूरीश्वरः ॥ ७ ॥
श्रीमान् सिद्धगिरौ कदम्बकगिरौ सत्सेरिसातीर्थके
चात्रसद्गिरनारनामगिरिषु प्रेम्णा प्रतिष्ठादिकम् ॥
भूयः कापरडादिसन्मधुमतीकुम्भारियाख्येषु सद्-
ग्रामेषु प्रचुरव्ययं विजयते तीर्थार्थमाकारयन् ॥ ८ ॥
एतत्सन्महनीयचित्रचरिताऽऽसंबोधिताः साधवो-
ऽनेके सद्गुणगुम्फिता मुनिवराः शिष्यप्रशिष्यादिकाः ॥
लोकानामुपकारकारणपरास्तच्छासनोद्धारणे
सर्वत्र भ्रमणे जयन्ति कुशलाः सद्भारते भारते ॥ ९ ॥
तस्मिन् श्रीमति पादपद्मयुगले भक्त्यार्पयित्वाऽधुना
नानासज्जनराजिते मुनिगुरौ श्रीनेमिसूरीश्वरे ॥
सद्बोधायतनं सुपुस्तकमिदं स्थानाङ्गसूत्राभिधं
सेवार्थं समुपस्थितः सविजयोऽहं वल्लभाह्वः सदा ॥ १० ॥

# उपोद्घातः

शश्वन्नमोऽर्हते तस्मै सच्चिदानन्दरूपिणे ।
चरीकर्त्ति वरीभर्त्ति सञ्जरीहर्त्ति यो भुवः ॥

अये ! अभिनवनिबन्धबन्धनवराः ! विबुधव्रजाः !

विविधविद्योद्योतविद्योतिते वैरिञ्चिप्रपञ्चाञ्चितेऽस्मिन्नतिमहनि जगति प्रोच्चावचरचनाचयचातुर्य्यचणानां नानाविधविषयविषविषमीकृतचेतसां सचेतसामपि समेषामितीहा नैसर्गिकी यत्कथं नु खलु सातिशयं सातं द्रागधिगमिष्याम इति सर्वविवादरहितम् । तत्र सातिशयसुखाप्तेः सद्धर्माचरणसात्वात्तेषु चाहिंसाधर्मस्यैव प्राधान्यात् सर्वथा स्वान्तशान्तिनितान्ताभ्युपयोगाय–"अहिंसा परमो धर्मः" इत्यपि सर्ववादिसम्मतो राद्धान्तः ॥

अथातिक्रामति हि काले निरस्तमुपयाते चाशेषसौभाग्यसुखमूलशालिनि तदहिंसाधर्मे निखिलभुवनचराचरचित्तवृत्तिविद्भिर्जगदुद्भासकैः सर्वशासकैरशेषलोकशोकजिहासुभिः करुणावरुणालयैः श्रीमद्भगवज्जिनेश्वरचरणैर्विनिगदितया "उप्पणे इवा, विगमे इवा, धुवे इवा", ऽनया त्रिपद्या प्रथमं श्रीगणधरमहाराजानां द्वादशाङ्गिप्रबोधः समभवत् । ततो निस्सीमकारुण्यामृतरङ्गिनपूतचित्ताः प्रोक्तमहाराजा अपि श्रीमज्जिनेश्वरोक्तान् तानेव भव्यभावान् भूयः परिभावयन्तः सूत्ररूपानवद्यगद्यपद्यक्रमेणाचाराङ्गादिद्वादशविभागेभ्यः पार्थक्यं संचक्रुः । अत एवाचाराङ्गादिद्वादशसूत्राणि द्वादशाङ्गिसमभिधानत्वेन व्यपदिश्यन्ते ।

अमीष्वेवान्तर्गतं विमलविषयविलासोल्लासितं तृतीयं–"स्थानाङ्गसूत्र" मिदं श्रीमतामध्यापकाध्येतृश्रावकानामधिकरकमलं सबहुमानपुरस्सरं समर्प्यते ।

पुरा गन्तु—"आगमोदयसमितौ" मुद्रितस्याप्येतस्य पठनपाठनप्रचारप्राचुर्य्यात् सम्प्रति दौर्लभ्याच्च पुनरेतन्मुद्रणस्य नितरामावश्यकतां पर्य्यालोच्य सदुपदेशप्रदानादिना मयैतन्मुद्रणव्ययभारग्रहणे—"अहमदावादगत-माण्डवीप्रतोलिका(पोल)स्थश्रेष्ठिवर्य्य-श्रीमाणेकलाल चुन्नीलालजी महोदयः सहर्षं प्रोत्साहितः। तत उक्तश्रेष्ठिवर्य्योऽपि सानुनयमेनमुररीकृत्योक्तसूत्रप्रसिद्धिसिद्धिविधौ यथेष्टमार्थिकमाहाय्यं संपादयन् नैजां राज्यलक्ष्मीं साफल्यमधिनीतवानिति नाल्पप्रमोदगौरवावसरः समेषामेतन्मतानुसारिणामिति।

इत्थमयोक्तश्रेष्ठिमहोदयस्य विमलकुलकीर्त्तिनिचयपरिचयोल्लेखनमपि प्रसङ्गतौचित्यसरणिमधिसरतीति समासत एवमभिधीयते। श्रीमान् माणेकलालः श्रेष्ठी विशाश्रीमालीजातीयः, एतत्पूज्यपितुश्शुभनाम श्रीसाधुचुन्नीलाल नत्थुभाईनि। स्मरणीयमातुर्नाम च श्रीमती मङ्गुदेवीति॥

प्रथममेभिः मुगदुःखद्वन्द्वजुष्टामवस्थामनुभवद्भिर्भूयो भूरिभूतिविभूषितैर्वदान्यतामनिलताविततां विदधद्भिर्विविधाभिर्विधाभिर्दानमानमेदुरा मेदिनी दैनन्दिनी चेक्रियते यदतिक्रामति चानधिकेऽनेहसीदानीमपि तदौदार्य्यमार्य्यैराजितं भिन्नभिन्नविभागेषु दिग्विदिक्षु जाजागर्त्तिनमामिति। यथा—

पांजरापोलस्थगोशालाकृते १८००० सहस्राणि, लल्लुरायजी छात्रालयार्थं ११००० स०, 'कालेज आफ् कोमर्स' कृते २५००० स०, उत्तरीयहिन्दमहाविद्यालयकृते ११००० स०, श्रीमहावीरविद्यालयकृते १०००० स०, जीवदयामण्डलीकृते ६००० स०, भोजनालयकृते च २५००० सहस्राणि रूप्यकानि श्रेष्ठिमहोदयैः प्रभूतप्रेमपुरस्सरं प्रदत्तानीतीत्थमेतदतिरिक्तेष्वपि धर्मकर्मसु प्रायस्त्वेन १३२००० त्रयस्त्रिंशत्सहस्राधिकैकलक्षप्रमितरजतमुद्राव्ययसंख्याः परिगण्यन्ते।

अथ नैतावतास्थानाङ्गसूत्रादन्यान्यपि—"समवायाङ्गसूत्र-कर्मप्रकृतिप्रभृति पुस्तकानि नैजवित्तव्ययेनैवैभिर्मुद्रापयित्वा पुस्तकदौर्लभ्यमपाकुर्वद्भिः सर्वथा सौलभ्यमेव परिस्थापितमिति।

एवमुक्तश्रेष्ठिवर्य्यमहोदयस्य प्रत्येकधर्मकर्मसु तत्कनिष्ठभ्रातृभिः श्रीकान्तिलालश्रेष्ठिभिर्यदपूर्वपाटवं प्रदर्शितं तदपि प्रशंसातिशयसमुदीरणतां नातिशेते। इत्थमेतादृक्षाः प्रतिक्षणविलक्षणक्षेमक्षोददक्षाः सपरिवारपुण्योपार्जननिरताः श्रेष्ठिश्रेष्ठाः सहृदयैर्धन्यवादैर्बहुविधैरभिभूष्यन्त इति।

एवमिह सूत्रग्रन्थाभ्यासदत्तचित्ता मुनिमहाशया साध्वीजनाश्च नूनमेतत्सूत्रश्रवणमननाध्ययनाध्यापनविधिं बहुधा विस्तारयिष्यन्ति, विधास्यन्ति च मुद्रणस्यास्य साफल्यमिति बलीयान् मे विश्वासः।

अथ च मुद्रणेऽस्मिन् मदीयमतिदोषेण वर्णयोजकदोषेण च मानुष्यसुलभानि स्खलितानि दूषणानि संशोधयित्वा सुधाब्धीरितमेतदास्वादं स्वादयन्तु सुधिय इति सप्रश्रयमभ्यर्थ्यन्ते गुणैकपक्षपातिनो विवेकशालिनो विपश्चित इत्यलमनल्पजल्पनकल्पनयेति शिवम्।

कृतं नो पाण्डित्यं प्रकटमिह किन्तु प्रपठतां
जनानां सौलभ्यं भवतु भुवि भव्यार्थपठने॥
इति ध्यानाधीनेन विजयपदा बल्लभयुजा
मयाकारीत्येतद् गुरुपदपयोजस्थशिरसा॥

वशम्वदो—
वल्लभविजयः

॥ अर्हम् ॥

नवाङ्गीटीकाकारश्रीमदभयदेवसूरिविरचितविवृत्तिसमेतं ।

# श्रीस्थानाङ्गसूत्रम् ।

श्रीवीरं जिननाथं नत्वा स्थानाङ्गकतिपयपदानाम् । प्रायोऽन्यशास्त्रदृष्टं करोम्यहं विवरणं किञ्चित् ॥१॥

इह हि श्रमणस्य भगवतः श्रीमन्महावीरवर्द्धमानस्वामिन इक्ष्वाकुकुलनन्दनस्य प्रसिद्धसिद्धार्थराजसूनोर्महाराजस्येव परमपुरुषकाराक्रान्तविक्रान्तरागादिशत्रोराज्ञाकरणदक्षक्ष्मापतिशतसततसेवितपादपद्मस्य सकलपदार्थसार्थसाक्षात्करणदक्षकेवलज्ञानदर्शनरूपप्रधानप्रणिध्यंत्रबुद्धसर्वविषयग्रामस्वभावस्य सकलत्रिभुवनातिशायिपरमसाम्राज्यस्य निखिलनीतिप्रवर्त्तकस्य परमगम्भीरान्महार्थादुपदेशान्निपुणबुद्ध्यादिगुणगणमाणिक्यरोहणधरणीकल्पेन भाण्डागारनियुक्तेनेव गणधरेण पूर्वकाले चतुर्वर्णश्रीश्रमणसङ्घभट्टारकस्य तत्सन्तानस्येवोपकाराय निरूपितस्य विविधार्थरत्नसारस्य देवताधिष्ठितस्य विद्याक्रियाबलवताऽपि पूर्वपुरुषेण केनापि कुतोऽपि कारणादनुन्मुद्रितस्यात

१ ठाणांगः. २ °नस्य चोप° प्र. ३ °धार्थरत्न° प्र.

एव च केषाञ्चिदनर्थभीरूणां मनोरथगोचरातिक्रान्तस्य महानिधानस्येव स्थानाङ्गस्य तथाविधविद्याबलविकलैरपि केवलधार्ष्ट्यप्रधानैः स्वपरोपकारायार्थविनियोजनाभिलाषिभिरत एव चाविगणितस्वयोग्यतैर्निपुणपूर्वपुरुषप्रयोगानुपश्रुत्य किञ्चित्स्वमत्योत्प्रेक्ष्य तथाविधवर्तमानजनानापृच्छय च तदुपायान् द्यूतादिमहाव्यसनोपेतैरिवास्माभिरुन्मुद्रणमिवानुयोगः प्रारभ्यते इति शास्त्रप्रस्तावना ॥ तस्य चानुयोगस्य फलादिद्वारनिरूपणतः प्रवृत्तिः, यत उक्तम्—"तस्स[1] फलजोगमंगल[2]समुदायत्था[3] तहेव दाराइं। तब्भेयनिरुत्तिक्कमपयोयणाइं[4] च वच्चाइं ॥१॥"ति, तत्र प्रेक्षावतां प्रवृत्तये फलमस्यावश्यं वाच्यम्, अन्यथा हि निष्प्रयोजनत्वमस्याशङ्कमानाः श्रोतारः कण्टकशाखामर्दन इव न प्रवर्त्तेरन्निति, तच्चानन्तरपरम्परभेदाद् द्विधा, तत्रानन्तरमर्थावगमः, तत्पूर्वकानुष्ठानतश्चापवर्गप्राप्तिर्या सा परम्परप्रयोजनमिति १। तथा योगः—सम्बन्धः, स च यद्युपायोपेयभावलक्षणो यदुतानुयोग उपायोऽर्थावगमादि चोपेयमिति तदा स प्रयोजनाभिधानादेवाभिहित[3] इत्यवसरलक्षणः सम्बन्धोऽस्य वाच्यः, कोऽस्य दाने सम्बन्धोऽवसर इति भावः, योग्यो वा दाने अस्य क इति, तत्र भव्यस्य मोक्षमार्गाभिलाषिणः स्थितगुरूपदेशस्य प्राणिनोऽष्टवर्षप्रमाणप्रव्रज्यापर्यायस्यैव सूत्रतोऽपि स्थानाङ्गं देयमित्ययमवसरः, योग्योऽपि चायमेवेति, यत उक्तम्—"तिवरिसपरियागस्स[4] उ आयारपकप्पनाममज्झयणं। चउवरिसस्स य सम्मं सूयगडं नाम अंगंति

१ °पहतैरिव० प्र. २ तस्य (अनुयोगस्य) फलयोगमङ्गलसमुदायार्थास्तथैव द्वाराणि। तद् (अनुयोगद्वार) भेदनिरुक्तिक्रमप्रयोजनानि च वाच्यानि ॥१॥ (विशेषावश्यककर्त्रभिप्रायेण प्रयोजनमिति भिन्नं द्वारं तथा च द्वारप्रयोजनमित्यर्थः) ३ प्रयोजनस्य साधितत्वात्, यदि च न तथा तर्ह्ययमपि साध्य एव। ४ त्रिवर्षपर्यायस्य तु आचारप्रकल्पनामाध्ययनम्। चतुर्वर्षस्य च सम्यक् सूत्रकृतं नामाङ्गमिति ॥१॥ दशाकल्पव्यवहाराः संवत्सरपञ्चकदीक्षितस्यैव। स्थानाङ्गं समवायोऽपि चाङ्गे ते अष्टवर्षस्य ॥२॥

॥१॥ दसकप्पव्ववहारा संवच्छरपणगदिक्खियस्सेव । ठाणं समवाओऽवि य अंगे ते अट्ठ वासस्स ॥२॥ त्ति" अन्यथा दानेऽस्याज्ञाभङ्गादयो दोषा इति २। तथा श्रेयोभूततयाऽस्य विघ्नसम्भवे तदुपहतशक्तयः शिष्या नैवात्र प्रवर्त्तेरन्निति तदुपशमाय मङ्गलमुपदर्शनीयम्, उक्तञ्च-"बहुविग्घाइं सेयाइं तेण कयमङ्गलोवयारेहिं । घेत्तव्वो सो सुमहानिहिव्व जह वा महाविज्जा ॥१॥" इति, मङ्गलं च शास्त्रस्यादिमध्यावसानेषु क्रमेण शास्त्रार्थस्याविघ्नेन परिसमाप्तये तस्यैव स्थैर्याय तस्यैवाव्यवच्छेदाय च भवतीति, तदुक्तम्-"तं[2] मंगलमाईए मज्झे पज्जन्तए य सत्थस्स । पढमं सत्थत्थाविग्घपारगमणाय निद्दिट्ठं ॥१॥ तस्सेव य थिज्जत्थं मज्झिमयं अंतिमंपि तस्सेव । अव्वोच्छित्तिनिमित्तं सिस्सपसिस्साइवंसस्स ॥२॥" त्ति ॥ तत्रादिमङ्गलं 'सुयं मे आउसं ! तेणं भगवये' त्यादिसूत्रं, नन्द्यन्तर्भूतत्वात् श्रुतशब्दस्य, भगवद्बहुमानगर्भत्वाद्वा आयुष्मता भगवतेत्यस्य, नन्दीभगवद्बहुमानयोश्च मङ्ग्यते-अधिगम्यते वाञ्छितमनेनेति मङ्गलार्थस्य युज्यमानत्वादिति, मध्यमङ्गलं पञ्चमाध्ययनस्यादिसूत्रं 'पंच महव्वए इत्यादि,' महाव्रतानां क्षायिकादिभावतया मङ्गलत्वाद्, भवति हि क्षायिकादिको भावो मङ्गलं, यत उक्तम्-"नोआगमओ भावो सुविसुद्धो खाइयाईओ" त्ति, अथवा षष्ठाध्ययनादिसूत्रं 'छहिं ठाणेहिं संपन्ने अणगारे अरहई गणं धरित्तए' इत्यादि, अनगारस्य परमेष्ठिपञ्चकान्तर्गतत्वेन मङ्गलत्वात्, सूत्राभिधेयानां वा गणधरस्थानानां क्षायोपशमिकादिभावरूपतया मङ्गलत्वादिति, अन्तमङ्गलं तु दशमाध्ययनस्यान्तसूत्रं 'दसगुणलुक्खा पोग्गला अणंता

---

१ बहुविघ्नानि श्रेयांसि तेन कृतमङ्गलोपचारैः । ग्रहीतव्यः स सुमहानिधिरिव यथा वा महाविद्या ॥१॥ २ तन्मङ्गलमादौ मध्ये पर्यन्ते च शास्त्रस्य । प्रथमं शास्त्रार्थ(स्या)विघ्नपारगमनाय निर्दिष्टम् ॥१॥ तस्यैव च स्थैर्यार्थं मध्यममन्त्यमपि तस्यैव । अव्युच्छित्तिनिमित्तं शिष्यप्रशिष्यादेर्वंशस्य ॥२॥ ३ मङ्गलमाशिष्ट्रमिति योगः. ४ नोआगमतो भावः सुविशुद्धः क्षायिकादिकः ।

पणत्ते'तीहानन्तशब्दस्य वृद्धिशब्दवन्मङ्गलत्वादिति, सर्वमेव वा शास्त्रं मङ्गलं, निर्जरार्थत्वात्, तपोवत्, मङ्गलभूतस्यापि शास्त्रस्य यो मङ्गलत्वानुवादः स शिष्यमतिमङ्गलत्वपरिग्रहार्थं, मङ्गलतया हि परिगृहीतं शास्त्रं मङ्गलं स्याद्, यथा साधुः, इत्यलं प्रसङ्गेनेति, इह च शास्त्रस्य मङ्गलादि निरूपितमपि तदनुयोगस्य द्रष्टव्यम्, तयोः कथञ्चिद्भेदा[1]दिति ३। अथेदानीं समुदायार्थश्चिन्त्यते–तत्र स्थानाङ्गमित्येतच्छास्त्रनाम, नाम च यथार्थादिभेदात् त्रिविधं, तद्यथा–यथार्थमयथार्थमर्थशून्यं च, तत्र यथार्थं प्रदीपादि, अयथार्थं पलाशादि, अर्थशून्यं डित्थादि, तत्र यथार्थं शास्त्राभिधानमिष्यते, तत्रैव समुदायार्थपरिसमाप्तेः, यत एवमतस्तन्निरूप्यते–तत्र च स्थानमङ्गं चेति पदद्वयं निक्षेपणीयमिति, तत्र स्थानं नामस्थापनादिभेदात् पञ्चदशधा, यदाह–"नामं[1]ठवणा[2]दविए[3] खेत्त[4]ऽद्धा[5] उड्ड[6] उवरती[7] वसही[8] । संजम[9]पग्गह[10]जोहे[11]" अचल[12]गणण[13]संधणा[14]भावे[15] ॥१॥ त्ति, तत्र स्थानमिति नामैव नामस्थानं, यस्य वा सचेतनस्याचेतनस्य वा स्थानमिति नाम क्रियते तद्वस्तु नाम्ना स्थानं नामस्थानमित्युच्यते, तथा स्थाप्यत इति स्थापना–अक्षादिः, सा च स्थानाभिप्रायेण स्थाप्यमाना स्थानम[2]प्यभिधीयते, ततः स्थापनैव स्थानं स्थापनास्थानं, तथा द्रव्यं–सचित्ताचित्तमिश्रभेदं स्थानं गुणपर्यायाश्रयत्वात्, ततः कर्मधारय इति, तथा क्षेत्रम्–आकाशं, तच्च तत् स्थानं च द्रव्याणामाश्रयत्वात् क्षेत्रस्थानं, तथा अद्धा–कालः, स च स्थानं, यतो भवस्थितिः कायस्थितिश्च भवकालः कायकालश्चाभिधीयते, स्थितिश्च स्थानमेवेति, 'उड्ड'त्ति ऊर्ध्वतया स्थानम्–अवस्थानं पुरुषस्य ऊर्ध्वस्थानं–कायोत्सर्ग इति, इह स्थानशब्दः क्रियावचनः, एवं निषदनत्वग्वर्त्तनादिस्थानमपि द्रष्टव्यम्, ऊर्ध्वशब्दस्योपलक्षणत्वादिति, तथा उपरतिः–विरतिः सैव स्थानं विविधगुणानामाश्रयत्वात्, विशेषार्थो वेह स्थानशब्दः, ततो विरतेः

१ कथंचिद्भेदा° प्र. २ अपिना अन्यव्यपदेशा अपि.

स्थानं-निरोधो विरतिस्थानं, तत्र देशविरतिः सर्वविरतिर्वेति, तथा वसतिः स्थानमुच्यते, स्थीयते तस्मिन्निति कृत्वेति, तथा संयमस्य स्थानं संयमस्थानम्, इह स्थानशब्दो भेदार्थः, संयमस्य शुद्धिप्रकार्षापकर्षकृतो विशेषः संयमस्थानं, तथा प्रगृह्यते-उपादीयते आदेयवचनन्यायः स प्रग्रहो-ग्राह्यवाक्यो नायक इत्यर्थः, स च लौकिको लोकोत्तरश्चेति, तत्र लौकिको राजयुवराजमहत्तरामात्यकुमाररूपो, लोकोत्तरश्चाचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकरूप इति, तस्य स्थानं-पदं प्रग्रहस्थानमिति, तथा योधानां स्थानम्-आलीढप्रत्यालीढवैशाखमण्डलसमपादरूपं शरीरन्यासविशेषात्मकं योधस्थानं, तथा 'अचल'त्ति अचलतालक्षणो धर्म्मः सादिसपर्यवसितादिरूपः स्थानमचलतास्थानं, तथा 'गणण'त्ति गणनाविषयं स्थानमेकद्व्यादिशीर्षप्रहेलिकापर्यन्तं गणनास्थानं, तथा सन्धानं द्रव्यतश्छिन्नस्य कञ्चुकादेरच्छिन्नस्य तु पक्ष्मोत्पद्यमानतन्त्वादेरिति, भावतस्तु छिन्नस्य प्रशस्ताप्रशस्तभावस्य पुनः सन्धानमच्छिन्नस्य त्वपरापरोत्पद्यमानस्य प्रशस्ताप्रशस्तभावस्य सन्धानं तदेव स्थानं-वस्तुनः संहतत्वेनावस्थानं सन्धानस्थानं, 'भावे'त्ति भावानाम्-औदयिकादीनां स्थानम्-अवस्थितिरिति भावस्थानमिति। एवमिह स्थानशब्दोऽनेकार्थः, इह च वसतिस्थानेन गणनास्थानेन वाऽधिकार इति दर्शयिष्यते ॥ इदानीमङ्गनिक्षेप उच्यते, तत्र गाथा—"नामंगं ठवणंगं दव्वंगं चेव होइ भावंगं। एसो खलु अंगस्स निक्खेवो चउव्विहो होइ ॥१॥" त्ति, तत्र नामस्थापने प्रसिद्धे, द्रव्याङ्गं पुनर्द्रव्यस्य-मद्यौषधादेरङ्गं-कारणमवयवो वेति द्रव्याङ्गं, भावस्य-क्षायोपशमिकादेरेवमेवाङ्गं भावाङ्गमिति, इह भावाङ्गेनाधिकार इत्यपि दर्शयिष्यते, तत्र तिष्ठन्त्यासते वसन्ति यथावदभिधेयतयैकत्वादिभिर्विशेषिता आत्मादयः पदार्था यस्मिंस्तत् स्थानम्, अथवा स्थानशब्देनेहैकादिकः संख्याभेदोऽभिधीयते, ततश्चात्मादिपदार्थगतानामेकादिदशा-

१ नामाङ्गं स्थापनाङ्गं द्रव्याङ्गं चैव भवति भावाङ्गम्। एष खलु अङ्गस्य निक्षेपश्चतुर्विधो भवति ॥१॥ २ इह च प्र.

न्तानां स्थानानामभिधायकत्वेन स्थानम्, आचाराभिधायकत्वादाचारवदिति, स्थानञ्च तत्प्रवचनपुरुषस्य क्षायोपशमिकभावरूपस्याङ्गमिवाङ्गं चेति स्थानाङ्गमिति समुदायार्थः ४। तत्र च दशाध्यनानि, तेषु प्रथममध्ययनमेकादित्वात् सङ्ख्याया एकसंख्योपेतात्मादिपदार्थप्रतिपादकत्वात् एकस्थानम्, तस्य च महापुरस्येव चत्वार्यनुयोगद्वाराणि भवन्ति, तद्यथा–उपक्रमो निक्षेपोऽनुगमो नयश्चेति, तत्र अनुयोजनमनुयोगः–सूत्रस्यार्थेन सह सम्बन्धनम्[1], अथवा अनुरूपोऽनुकूलो वा यो योगो–व्यापारः सूत्रस्यार्थप्रतिपादनरूपः सोऽनुयोग इति, आह च—"अणुजोजणमणुजोगो[2] सुयस्स नियएण जमभिधेयेण। वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥१॥" इति, अथवा अर्थापेक्षया अणोः[3]–लघोः पश्चाज्जाततया वा अनुशब्दवाच्यस्य सूत्रस्य योऽभिधेये योगो–व्यापारस्तेन सम्बन्धो वा सोऽणुयोगोऽनुयोगो वेति, आह च–"अहवा[4] जमत्थओ थोवपच्छभावेहि सुयमणुं तस्स। अभिधेये वावारो जोगो तेणं व संबंधो ॥१॥" त्ति, तस्य द्वाराणीव द्वाराणि–तत्प्रवेशमुखानि, एकस्थानकाध्ययनपुरस्यार्थाधिगमोपाया इत्यर्थः, नगरदृष्टान्तश्चात्र,यथा हि अकृतद्वारं नगरमनगरमेव भवति, कृतैकद्वारमपि दुरधिगमं कार्यातिपत्तये च, चतुर्मूलद्वारं तु प्रतिद्वारानुगतं सुखाधिगमं कार्यानतिपत्तये च, एवमेकस्थानकाध्ययनपुरमप्यर्थाधिगमोपायद्वारशून्यमशक्याधिगमं भवति, एकद्वारानुगतमपि च दुरधिगमं, सप्रभेदचतुर्द्वारानुद्वारानुगतं तु सुखाधिगममित्यतः फलवान् द्वारोपन्यास इति ५। तानि च द्वित्रिद्विद्विभेदानि क्रमेण भवन्तीति तद्भेदाः ६। निरुक्तिस्तु उपक्रमणमुपक्रम इति भावसाधनः शास्त्रस्य न्यासदेशसमीपीकरणलक्षणः, उपक्रम्यते वाऽनेन गुरुवाग्योगेनेत्युपक्रम इति करणसाधनः, उपक्रम्यतेऽस्मि-

१ संबन्धः प्र. २ अनुयोजनमनुयोगः सूत्रस्य निजकेन यदभिधेयेन। व्यापारो वा योगो योऽनुरूपोऽनुकूलो वा ॥१॥ ३ सूत्रानुयोगापेक्षया पुंस्त्वं. ४ अथवा यदर्थतः स्तोकपश्चाद्भावाभ्यां सूत्रमणु तस्य। अभिधेये व्यापारो योगस्तेन वा संबन्धः ॥१॥

क्रिति वा शिष्यश्रवणभावे सतीत्युपक्रम इत्यधिकरणसाधनः, उपक्रम्यतेऽस्मादिति वा विनीतविनेयविनयादित्युपक्रम इत्यपादान इति, एवं निक्षेपणं निक्षिप्यते वाऽनेनास्मिन्नस्मादिति वा निक्षेपो न्यासः स्थापनेति पर्यायाः, एवमनुगमनमनुगमः अनुगम्यतेऽनेनास्मिन्नस्मादिति वाऽनुगमः–सूत्रस्य न्यासानुकूलः परिच्छेदः, एवं नयनं नयः नीयतेऽनेनास्मिन्नस्मादिति वा नयः–अनन्तधर्मात्मकस्य वस्तुन एकांशपरिच्छेद इत्यर्थः ७। अथैषामुपक्रमादिद्वाराणामित्थंक्रमे किं प्रयोजनमिति ?, अत्रोच्यते, न ह्यनुपक्रान्तं सदसमीपीभूतं निक्षिप्यते, नचानिक्षिप्तं नामादिभिरर्थतोऽनुगम्यते, न चार्थतोऽननुगतं नयैर्विचार्यते इत्ययमेव क्रम इति, उक्तञ्च—"दारकमोऽयमेव उ निक्खिप्पइ जेण नासमीवत्थं। अणुगम्मइ नानत्थं नाणुगमो नयमयविहूणो ॥१॥" त्ति ८॥ तदेवं फलादीन्युक्तानि। साम्प्रतमनुयोगद्वारभेदभणनपुरस्सरमिदमेवाध्ययनमनुचिन्त्यते–तत्रोपक्रमो द्विविधो–लौकिकः शास्त्रीयश्च, तत्र लौकिकः षोढा–नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्, तत्र नामस्थापने क्षुण्णे, द्रव्योपक्रमो द्वेधा–सचेतनाचेतनमिश्रद्विपदचतुष्पदापदरूपस्य द्रव्यस्य परिकर्म्म विनाशश्चेति, तत्र परिकर्म्म–गुणान्तरोत्पादनं विनाशः–प्रसिद्ध एव, एवं क्षेत्रस्य–शालिक्षेत्रादेः, कालस्य त्वपरिज्ञातस्वरूपस्य नाडिकादिभिः परिज्ञानं, भावस्य च–गुर्वादिचित्तलक्षणस्यानवगतस्येङ्गितादिभिरवगम इति, शास्त्रीयोऽपि षोढैव–आनुपूर्वीनामप्रमाणवक्तव्यताऽर्थाधिकारसमवतारभेदात्, तत्रानुपूर्वी दशधाऽन्यत्रोक्ता, तत्र चोत्कीर्त्तनगणनानुपूर्व्योरिदमवतरति, उत्कीर्त्तनञ्च एकस्थानं द्विस्थानं त्रिस्थानमित्यादि, गणनं तु परिसङ्ख्यानं–एकं द्वे त्रीणि इत्यादि, सा च गणनानुपूर्वी त्रिप्रकारा–पूर्वानुपूर्वी पश्चानुपूर्व्यनानुपूर्वी चेति, पूर्वानुपूर्व्येदं प्रथमं सद् व्याख्यायते पश्चानुपूर्व्या दशममनानुपूर्व्या त्वनियतमिति, तथा नाम दशधा–एकादि दशान्तं,

१ दारकमोऽयमेव तु निक्षिप्यते येन नासमीपस्थं। नान्यस्तमनुगम्यते नानुगमो नयमतविहीनः ॥१॥

तत्र षड्नाम्न्यस्यावतारः, तत्रापि क्षायोपशमिके भावे, क्षायोपशमिकभावस्वरूपत्वात् सकलश्रुतस्येति, उक्तञ्च–"छव्विहनामे भावे खओवसमिए सुयं समोयरति । जं सुयणाणावरणक्खओवसमजं तयं सव्वं ॥१॥"ति । तथा प्रमाणं द्रव्यादिभेदाच्चतुर्विधम्, तत्र क्षायोपशमिकभावरूपत्वादस्य भावप्रमाणे अवतारो, यत आह–"दव्वादि[2] चउब्भेयं पमीयते जेण तं पमाणंति । इणमज्झयणं भावोत्ति भावमाणे समोयरति ॥१॥"त्ति, भावप्रमाणं च गुणनयसंख्याभेदतस्त्रिधा, तत्रास्य गुणप्रमाणसंख्याप्रमाणयोरेवावतारः, नयप्रमाणे तु न सम्प्रति, यदाह–"मूढनइयं[3] सुयं कालियं तु न नया समोयरंति इहं । अपुहुत्ते समोयारो नत्थि पुहुत्ते समोयारो ॥१॥"त्ति, गुणप्रमाणं तु द्विधा–जीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्र अस्य जीवोपयोगरूपत्वात् जीवगुणप्रमाणेऽवतारः, तस्मिन्नपि ज्ञानदर्शनचारित्रभेदतस्त्रयात्मके अस्य ज्ञानरूपतया ज्ञानप्रमाणे, तत्रापि प्रत्यक्षानुमानोपमानागमात्मके प्रकृताध्ययनस्याप्तोपदेशरूपत्वादागमप्रमाणे, तत्रापि लौकिकलोकोत्तरभेदे परमगुरुप्रणीतत्वेन लोकोत्तरे सूत्रार्थोभयात्मनि तथा चाह–जीवाँणण्णत्तणओ जीवगुणे बोहभावओ णाणे । लोगुत्तरसुत्तत्थोभयागमे तस्स भावाओ ॥१॥" तत्राप्यात्मानन्तरपरम्परागमभेदतस्त्रिविधेऽर्थतस्तीर्थंकरगणधरतदन्तेवासिनः सूत्रतस्तु गणधरतच्छिष्यतत्प्रशिष्यानपेक्ष्य यथाक्रममात्मानन्तरपरंपरागमेष्ववतारः, संख्याप्रमाणमन्यत्र प्रपञ्चितं तत एवावधारणीयं, तत्र चास्य परि-

१ षड्विधनाम्नि भावे क्षायोपशमिके श्रुतं समवतरति । यत् श्रुतज्ञानावरणक्षयोपशमजं तकत् सर्वम् ॥१॥

२ द्रव्यादि चतुर्भेदं प्रमीयते येन तत्प्रमाणमिति । इदमध्ययनं भाव इति भावमाने समवतरति ॥ १ ॥ ३ मूढनयिकं श्रुतं कालिकं तु न नयाः समवतरन्तीह । अपृथक्त्वे समवतारो नास्ति पृथक्त्वे समवतारः ॥ १ ॥ ४ जीवानन्यत्वात् जीवगुणे बोधभावात् ज्ञाने । लोकोत्तरसूत्रार्थोभयागमे तस्य भावात् ॥ १ ॥

माणसङ्ख्यायामवतारः, तत्रापि कालिकश्रुतदृष्टिवादश्रुतपरिमाणभेदतो द्विभेदायां कालिकश्रुतपरिमाणसङ्ख्यायां, कालिकश्रुतत्वादस्येति, तत्रापि शब्दापेक्षया संख्येयाक्षरपदाद्यात्मकतया संख्यातपरिमाणात्मिकायां पर्यायापेक्षया त्वनन्तपरिमाणात्मिकायां, अनन्तगमपर्यायत्वादागमस्य,तथा चाह–'अणंता गमा अणंता पज्जवा' इत्यादि। तथा वक्तव्यता स्वसमयेतरोभयवक्तव्यताभेदाद् त्रिधा, तत्रेदं स्वसमयवक्तव्यतायामेवावतरति, सर्वाध्ययनानां तद्रूपत्वात्, तदुक्तम्–"परसमओ उभयं वा सम्मद्दिट्ठिस्स ससमओ जेणं। ता सव्वज्झयणा ससमयवत्तव्वनिययाइं ॥१॥" ति। तथा अर्थाधिकारो वक्तव्यताविशेष एव, स चैकत्वविशिष्टात्मादिपदार्थप्ररूपणलक्षण इति। तथा समवतारः प्रतिद्वारमधिकृताध्ययनसमवतारलक्षणः स चानुपूर्व्यादिषु लाघवार्थमुक्त एवेति न पुनरुच्यते, तथाहि–अहुणा य समोयारो जेण समोयारियं पइद्दारं। एगट्ठाणमणुगओ सो लाघवओ ण पुण वच्चो ॥१॥" निक्षेपस्त्रिधा–ओघनामसूत्रालापकनिष्पन्नभेदात्, आह च–"[3]भण्णइ घेप्पइ य सुहं निक्खेवपयाणुसारओ सत्थं। ओहो नामं सुत्तं निखेत्तव्वं तओऽवस्सं ॥१॥"तत्रौघः–सामान्यमध्ययनादि नाम, उक्तञ्च–,'ओहो जं सामन्नं सुयाभिहाणं चउव्विहं तं च। अज्झयणं अज्झीणं आओ झवणा य पत्तेयं ॥१॥ नामादिचउब्भेयं वन्नेऊणं सुआणुसारेणं। "एगट्ठाणमाजोज्जं चउसुंपि कमेण भावेसुं ॥ २ ॥" तत्राध्यात्मं–मनस्तत्र शुभे

१ परसमय उभयं वा सम्यग्दृष्टेः स्वसमयो येन। ततः सर्वाण्यध्ययनानि स्वसमयवक्तव्यतानियतानि ॥१॥ २ अधुना च समवतारो येन समवतारितं प्रतिद्वारम्। एकस्थानेऽनुगतः स लाघवतो न पुनर्वाच्य इति ॥१॥ ( सामइयं सोऽणुगओ लाघवओ णो पुणो वच्चो वि० भा० ) ३ भण्यते गृह्यते च सुखं निक्षेपपदानुसारतः शास्त्रम्। ओघो नाम सूत्रं निक्षेप्तव्यं ततोऽवश्यम् ॥१॥ ४ ओघो यत्सामान्यं सूत्राभिधानं चतुर्विधं तच्च। अध्ययनमक्षीणमायः क्षपणा च प्रत्येकम् ॥१॥ नामादिचतुर्भेदं वर्णयित्वा श्रुतानुसारेण। एकस्थानमायोज्यं चतुर्ष्वपि क्रमेण भावेषु ॥२॥ ५ सामा-

अयनं-गमनं अर्थादात्मनो भवति यस्मादध्यात्मशब्दवाच्यस्य वा मनसः शुभस्य आनयनमात्मनि यतो भवति बोधादीनां वाऽधिकमयनं यतो भवति तदज्झयणंति प्राकृतशैल्या भवतीति, आह च-"[1]जेणं सुहप्पज्झयणं अज्झप्पाणयणमहियमयणं वा। बोहस्स संजमस्स व मोक्खस्स व तो तमज्झयणं ॥१॥" ति, अधीयते वा-पठ्यते आधिक्येन स्मर्यते गम्यते वा तदित्यध्ययनमिति, तथा यद्दीयमानं न क्षीयते स्म तदक्षीणं, तथा ज्ञानादीनामायहेतुत्वादायः, तथा पापानां कर्मणां क्षपणहेतुत्वात् क्षपणेति, आह च-"[2]अज्झीणं दिज्जंतं अव्वोच्छित्तिनयतो अलोगोव्व। आओ नाणाईणं झवणा पावाण खवणंति (कम्माणं) ॥१॥" नामनिष्पन्ने तु निक्षेपे अस्यैकस्थानकमिति नाम, तत एकशब्दस्य स्थानशब्दस्य च निक्षेपो वाच्यः, तत्र एकस्य नामादिः सप्तधा, तदुक्तम्-"[3]नामं १ ठवणा २ दविए ३ माउयपय ४ संगहेक्कए चेव ५। पज्जव ६ भावे य ७ तहा सत्तेते एक्कगा होंति ॥१॥" तत्र नामैको यस्यैक इति नाम, स्थापनैकः पुस्तकादिन्यस्तैकाङ्कः, द्रव्यैकः सचित्तादिस्त्रिधा, मातृकापदैकस्तु 'उप्पन्ने इ वा विगमे इ वा धुवे इ वा' इत्येष मातृकावत्सकलवाङ्मयमूलतया अवस्थितानामन्यतरद्विवक्षितम् अकाराद्यक्षरात्मिकाया वा मातृकाया एकतरोऽकारादिः, संग्रहैको येनैकेनापि ध्वनिना बहवः सङ्गृह्यन्ते, यथा जातिप्राधान्येन व्रीहिरिति, पर्यायैकः शिवकादिरेकः पर्यायो, भावैक औदयिकादिभावा-

इयमा० वि० भा०

१ येन शुभाध्यात्मानयनमध्यात्मानयनमधिकमयनं वा। बोधस्य संयमस्य वा मोक्षस्य वा ततस्तद् अध्ययनम् ॥१॥ २ अक्षीणं दीयमानमव्युच्छित्तिनयतोऽलोक इव। आयो ज्ञानादीनां क्षपणा पापानां क्षपणमिति ॥ १ ॥ ३ नामस्थापनाद्रव्ये मातृकापदसंग्रहैककश्चैव। पर्ययभावे च तथा सप्तैते एकका भवन्ति ॥१॥

नामन्यतमो भाव इति. इह भावैकेन अधिकारो यतो गणनालक्षणस्थानविषयोऽयमेको गणना च सङ्ख्या सङ्ख्या च गुणो गुणश्च भाव इति, स्थानस्य तु निक्षेप उक्त एव, तत्र च गणनास्थानेनेहाधिकारः, ततः एकलक्षणं स्थानं-संख्याभेद एकस्थानं तद्विशिष्टजीवाद्यर्थप्रतिपादनपरमध्ययनमप्येकस्थानमिति, उक्तावोघनिष्पन्ननामनिष्पन्ननिक्षेपौ, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपः प्राप्तावसरः, तत्स्वरूपं चेदम्-सूत्रालापकानां-सूत्रपदानां 'श्रुतं मे आयुष्मन्नि' त्यादीनां निक्षेपो-नामादिन्यासः, स च अवसरप्राप्तोऽपि नोच्यते, सति सूत्रे तस्य संभवात्, सूत्रं च सूत्रानुगमे, स चानुगमभेद एवेत्यनुगम एव तावदुपवर्ण्यते-द्विविधोऽनुगमो-निर्युक्त्यनुगमः सूत्रानुगमश्च, तत्र आद्यो निक्षेपनिर्युक्त्युपोद्घातनिर्युक्तिसूत्रस्पर्शिकनिर्युक्त्यनुगमविधानतस्त्रिविधः, तत्र च निक्षेपनिर्युक्त्यनुगमः स्थानाङ्गाध्ययनाद्येकशब्दानां निक्षेपप्रतिपादनादनुगत एवेति, उपोद्घातनिर्युक्त्यनुगमस्तु-'उद्देसे निद्देसे य निग्गमे'इत्यादिगाथाद्वयादवसेय इति, सूत्रस्पर्शिकनिर्युक्त्यनुगमस्तु संहितादौ षड्विधे व्याख्यालक्षणे पदार्थपदविग्रहचालनाप्रत्यवस्थानलक्षणव्याख्यानभेदचतुष्टयस्वरूपः, स च सूत्रानुगमे संहितापदलक्षणव्याख्यानभेदद्वयलक्षणे सति भवतीत्यतः सूत्रानुगम एवोच्यते, तत्र च अल्पग्रन्थमहार्थादिसूत्रलक्षणोपेतं स्खलितादिदोषवर्जितं सूत्रमुच्चारणीयं, तच्चेदम्—

**सुयं मे आउसं! तेणं भगवता एवमक्खायं (सू० १)**

अस्य च व्याख्या संहितादिक्रमेणेति, आह च भाष्यकारः-"सुत्तं १ पयं २ पयत्थो ३ संभवतो विग्गहो ४ वियारो य ५

१ छि अर्थो गम्भाति प्र. २ सूत्रं पदं पदार्थः संभवतो विग्रहो विचारश्च । दूषितसिद्धिर्नयमतविशेषतो नेयमनुसूत्रम् ॥१॥

[चालनेत्यर्थः] । दूसियसिद्धी ६ नयमयविसेसओ नेयमणुसुत्तं ॥१॥" तत्र सूत्रमिति संहिता, सा चानुगतैव, सूत्रानुगमस्य तद्रूपत्वादिति, आह च–"होई कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो" त्ति सूत्रे चास्खलितादिगुणोपेते उच्चारिते केचिदर्था अवगताः प्राज्ञानां भवन्त्यतः संहिता व्याख्याभेदो भवति, अनधिगतार्थाधिगमाय च पदादयो व्याख्याभेदाः प्रवर्त्तन्त इति, तत्र पदानि–'श्रुतं मया आयुष्मन् ! तेन भगवता एवमाख्यात'मिति, एवं पदेषु व्यवस्थापितेषु सूत्रालापकनिष्पन्ननिक्षेपावसरः, तत्र चेयं व्यवस्था–"जत्थ उ जं जाणेज्जा निक्खेवं निक्खिवे निरवसेसं । जत्थवि य ण जाणेज्जा चउक्कयं निक्खिवे तत्थ ॥१॥" त्ति, तत्र नामश्रुतं स्थापनाश्रुतं च प्रतीतं, द्रव्यश्रुतमधीयानस्यानुपयुक्तस्य पत्रकपुस्तकन्यस्तं वा, भावश्रुतं तु श्रुतोपयुक्तस्येति, इह च भावश्रुतेन श्रोत्रेन्द्रियोपयोगलक्षणेनाधिकारः, तथा 'आउसं'ति आयुः–जीवितं, तन्नामादिभेदतो दशधा, तद्यथा–"नामं १ ठवणा २ दविए ३ ओहे ४ भव ५ तब्भवे य ६ भोगे य ७ । संजम ८ जस ९ कित्ती १० जीवियं च तं भण्णती दसहा ॥१॥" तत्र नामस्थापने क्षुण्णे 'दविए' त्ति द्रव्यमेव सचेतनादिभेदं जीवितव्यहेतुत्वाज्जीवितं द्रव्यजीवितं, ओघजीवितं नारकाद्यविशेषितायुर्द्रव्यमात्रं सामान्यजीवितं भवति, नारकादिभवविशिष्टं जीवितं भवजीवितं नारकजीवितमित्यादि, 'तब्भवे य' त्ति तस्यैव–पूर्वभवस्य समानजातीयतया सम्बन्धि जीवितं तद्भवजीवितं, यथा मनुष्यस्य सतो मानुषत्वेनोत्पन्नस्येति, भोगजीवितं चक्रवर्त्यादीनां, संयमजीवितं साधूनां, यशोजीवितं कीर्त्तिजीवितं च यथा महावीरस्येति, जीवितं चायुरेवेति, इह च संयमायुषा यशःकीर्त्त्यायुषा चाधिकार इति, एवं शेषपदानां यथासम्भवं निक्षेपो

१ भवति कृतार्थं उक्त्वा सपदच्छेदं सूत्रं सूत्रानुगम इति। २ यत्र तु यं जानीयात् निक्षेपं निक्षिपेत् निरवशेषम्। यत्रापि च न जानीयात् चतुष्ककं निक्षिपेत्तत्र॥१॥ ३ वाक्यनिक्षेपप्रस्तावे भाषानिक्षेपवदत्र आयुःप्रस्तावे जीवितनिक्षेप इत्यर्थः।

वान्य इति ॥ उक्तः सूत्रालापकनिष्पन्ननिक्षेपः, पदार्थः पुनरेवम्—इह किल सुधर्म्मस्वामी पञ्चमो गणधरदेवो जम्बूनामानं स्वशिष्यं प्रति प्रतिपादयाञ्चकार—श्रुतम्—आकर्णितं 'मे' मया 'आउसं'ति आयुः—जीवितं तत्संयमप्रधानतया प्रशस्तं प्रभूतं वा विद्यते यस्यासावायुष्मांस्तस्यामन्त्रणं हे आयुष्मन् !—शिष्य ! 'तेणं' ति यः सन्निहितव्यवहितसूक्ष्मबादरबाह्याध्यात्मिकसकलपदार्थेष्वव्याहतवचनतयाऽऽप्तत्वेन जगति प्रतीतः अथवा पूर्वभवोपात्ततीर्थकरनामकर्मादिलक्षणपरमपुण्यप्राग्भारो विलीनानादिकालालीनमिथ्यादर्शनादिवासनः परिहृतमहाराज्यो दिव्याद्युपसर्गवर्गसंसर्गाविचलितशुभध्यानमार्गो भास्कर इव घनघातिकर्म्मघनाघनपटलविघटनोल्लसितविमलकेवलभानुमण्डलो त्रिदशपतिपद्मपदपटलजुष्टपादपद्मो मध्यमाभिधानपुरीप्रथमप्रवर्त्तितप्रवचनो जिनो महावीरस्तेन 'भगवता' अष्टमहाप्रातिहार्यरूपसमग्रैश्वर्यादियुक्तेन 'एव' मित्यमुना वक्ष्यमाणेनैकत्वादिना प्रकारेण 'आख्यात'मिति आ—मर्यादया जीवाजीवलक्षणासङ्कीर्णतारूपया अभिविधिना वा—समस्तवस्तुविस्तारव्यापनलक्षणेन ख्यातं—कथितं आख्यातमात्मादिवस्तुजातमिति गम्यते, अत्र च 'श्रुत'मित्यनेनावधारणाभिधायिना स्वयमवधारितमेवान्यस्मै प्रतिपादनीयमित्याह, अन्यथाऽभिधाने प्रत्युतापायसम्भवात्, उक्तञ्च—"किं[1] एत्तो पावयरं ? सम्मं अणहिगयधम्मसब्भावो। अन्नं कुदेसणाए कट्ठयरागंमि पाडेइ ॥१॥" त्ति, 'मये'त्यनेनोपक्रमद्वाराभिहितभावप्रमाणद्वारगतात्मानन्तरपरम्परभेदभिन्नागमे[2]ऽयं वक्ष्यमाणो ग्रन्थोऽर्थतोऽनन्तरागमः सूत्रतस्त्वात्मागम इत्याह, 'आयुष्मन्नि'त्यनेन तु कोमलवचोभिः शिष्यमनःप्रह्लादयनाऽऽचार्येणोपदेशो देय इत्याह, उक्तञ्च—"[3]धम्ममइएहिं अइसुंदरेहिं कारणगुणोवणीएहिं। पल्हायंतो य

१ किमितस्मात् पापतरं ? सम्यग् अनधिगतसमयसद्भावः। अन्यं कुदेशनया कष्टतरागसि पातयति ॥१॥ २ भिन्नागमोऽयं प्र. ३ धर्ममयैरतिसुन्दरैः कारणगुणोपनीतैः। प्रह्लादयंश्च मनः शिष्यं चोदयत्याचार्यः ॥३॥

मणं सीसं चोइए आयरिओ ॥१॥'त्ति। आयुष्मत्त्वाभिधानं चात्यन्तमाह्लादकं, प्राणिनामायुषोऽत्यन्ताभीष्टत्वाद्, यत उच्यते-'सव्वे[1] पाणा पियाउया अप्पियवहा सुहासाया दुक्खपडिकूला सव्वे जीविउकामा सव्वेसिं जीवियं पियं''ति, तथा-''तृणायापि न मन्यन्ते, पुत्रदारार्थसम्पदः। जीवितार्थे नरास्तेन, तेषामायुरतिप्रियम् ॥१॥'' इति, अथवा 'आयुष्मन्नि'त्यनेन ग्रहणधारणादिगुणवते शिष्याय शास्त्रार्थो देय इति ज्ञापनार्थं सकलगुणाधारभूतत्वेनाशेषगुणोपलक्षणेन चिरायुर्लक्षगुणेन शिष्यामन्त्रणमकारि, यत उक्तम्—''वुट्ठेऽवि[2] दोणमेहे न कण्हभूमाउ लोट्टए उदयं। गहणधरणासमत्थे इय देयमछित्तिकारिंमि ॥१॥'' विपर्यये तु दोष इति, आह च-''आयरिए[3] सुत्तम्मि य परिवाओ सुत्तअत्थपलिमंथो। अन्नेसिंपि य हाणी पुट्ठावि न दुद्धदा वंझा ॥१॥'' इति, तथा 'तेने'त्यनेन त्वाप्तत्वादिगुणप्रसिद्धताऽभिधायकेन प्रस्तुताध्ययनप्रामाण्यमाह, वक्तृगुणापेक्षत्वाद्वचनप्रामाण्यस्येति, 'भगवते'त्यनेन तु प्रस्तुताध्ययनस्योपादेयतामाह, अतिशयवान् किलोपादेयः, तद्वचनमपि तथेति, अथवा 'तेणं'ति अनेनोपोद्घातनिर्युक्त्यन्तर्गतं निर्गमद्वारमाह, यो हि मिथ्यात्वतमःप्रभृतिभ्यो दोषेभ्यो निर्गतमिदमध्ययनं क्षेत्रतोऽपापायां कालतो वैशाखशुद्धैकादश्यां पूर्वाह्णे भावे क्षायिके वर्त्तमानादिति, एवं च गुरुपर्वक्रमलक्षणः सम्बन्धोऽस्य प्रदर्शितो भवति, तथा तथाविधेन भगवता यदुक्तं तत् सप्रयोजनमेव भवतीति सामान्यतः सप्रयोजनता चास्योक्ता, न हि पुरुषार्थानुपयोगि भगवन्तो भाषन्ते, भगवत्त्वहानेः, अत एव चास्योपायोपेयभावलक्षणः सम्बन्धोऽपि दर्शितः,

१ सर्वे प्राणाः प्रियायुषोऽप्रियवधाः सुखास्वादाः प्रतिकूलदुःखाः सर्वे जीवितुकामाः सर्वेषां जीवितं प्रियम्। २ वृष्टेऽपि द्रोणमेघे न कृष्णभूमाल्लुठति उदकं। ग्रहणधारणसमर्थे इति देयमच्छित्तिकारिणि ॥१॥ ३ आचार्ये सूत्रे च परिवादः सूत्रार्थविघ्नः। अन्येषामपि च हानिः स्पृष्टाऽपि न दुग्धदा वन्ध्या ॥१॥

इदं हि भगवदाख्यातं ग्रन्थरूपापन्नमुपायः, पुरुषार्थस्तूपेय इति, अत एव चात्र श्रोतारः श्रवणे प्रवर्त्तिताः, यतः—"सिद्धार्थं सिद्धसम्बन्धं, श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः, सम्बन्धः सप्रयोजनः ॥१॥" इति, 'एव'मित्यनेन तु भगवद्वचनादात्मवचनस्यानुत्तीर्णतामाह, अत एव स्ववचनस्य प्रामाण्यं, सर्वज्ञवचनानुवादमात्रत्वादस्येति, अथवा 'एव'मित्येकत्वादिः प्रकारोऽभिधेयतया निर्दिष्टः, निरभिधेयताऽऽशङ्कया श्रोतॄणां काकदन्तपरीक्षायामिवाप्रवृत्तिरत्र मा भूदिति, 'आख्यात'मित्यनेन तु नापौरुषेयवचनरूपमिदं, तस्यासम्भवादित्याह, यत उक्तम्—"वेयवयणं[1] न माणं अपोरुसेयंति निम्मियं[2] [तम्मयं] जेण। इदमच्चंतविरुद्धं वयणं च अपोरुसेयं च ॥१॥ जं वुच्चइत्ति वयणं पुरिसाभावे उ नेयमेवंति। ता तस्सेवाभावो नियमेण अपोरुसेयत्ते ॥२॥" इति, अथवा आख्यातं भगवतेदं, न कुड्यादिनिःसृतं, यथा कैश्चिदभ्युपगम्यते—"तस्मिन् ध्यानसमापन्ने, चिन्तारत्नवदास्थिते। निःसरन्ति यथाकामं, कुड्यादिभ्योऽपि देशनाः ॥१॥" इत्यस्यानेनानभ्युपगममाह, यतः—'कुड्यादिनिःसृतानां तु, न स्यादाप्तोपदिष्टता। विश्वासश्च न तासु स्यात्केनेमाः कीर्त्तिता इति ? ॥१॥" समस्तपदसमुदायेन त्वात्मौद्धत्यपरिहारेण गुरुगुणप्रभावनापरैरेव विनेयेभ्यो देशना विधेयेत्याह, एवं हि तेषु भक्तिपरता स्यात्, तया च विद्यादेरपि सफलता स्यादिति, यदुक्तम्—"भत्तीएँ[3] जिणवराणं खिज्जंती पुव्वसंचिया कम्मा। आयरियनमोक्कारेण विज्जा मंता य सिज्झंति ॥१॥"त्ति, नमस्कारश्च भक्तिरेवेति, अथवा 'आउसंतेणं'ति भगवद्विशेषणं, आयुष्मता भगवता, चिर-

---

१ वेदवचनं न मानमपौरुषेयमिति निर्मितं येन (तन्मतं येन)। इदमत्यन्तविरुद्धं वचनं चापौरुषेयं च ॥१॥ यदुच्यते इति वचनं पुरुषाभावे तु नेदमेवमिति। तत् तस्यैवाभावो नियमेनापौरुषेयत्वे ॥२॥ २ न निम्मियं प्र। ३ भक्त्या जिनवराणां क्षीयन्ते पूर्वसंचितानि कर्माणि। आचार्यनमस्कारेण विद्या मन्त्राश्च सिध्यन्ति ॥१॥

जीविनेत्यर्थः, अनेन भगवद्बहुमानगर्भेण मङ्गलमभिहितं, भगवद्बहुमानस्य मङ्गलत्वादिति चोक्तमेव, यद्वा 'आयुष्मते'ति परार्थप्रवृत्त्यादिना प्रशस्तमायुर्धारयता नतु मुक्तिमवाप्यापि तीर्थनिकारादिदर्शनात् पुनरिहायातेनाभिमानादिभावतोऽप्रशस्तं, यथोच्यते कैश्चित्— "ज्ञानिनो धर्म्मतीर्थस्य, कर्त्तारः परमं पदम्। गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥१॥" [यदा यदा हि धर्मस्य, ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्मस्य, तदाऽऽत्मानं सृजाम्यहम् ॥२॥] एवं ह्यनुन्मूलितरागादिदोषत्वात् तद्वचसोऽप्रामाण्यमेव स्यात्, निःशेषोन्मूलने हि रागादीनां कुतः पुनरिहागमनसम्भव इति ? अथवा 'आयुष्मता' प्राणधारणधर्मवता न तु सदा संशुद्धेन, तस्याकरणत्वेनाख्यातृत्वासम्भवादिति, यद्वा—'आवसंतेणं'ति मयेत्यस्य विशेषणं, तत आङिति—गुरुदर्शितमर्यादया वसता, अनेन तत्त्वतो गुरुमर्यादावर्त्तिस्वरूपत्वात् गुरुकुलवासस्य तद्विधानमर्थत उक्तं, ज्ञानादिहेतुत्वात्तस्य, उक्तञ्च—"णाणस्स होइ भागी थिरयरओ दंसणे चरित्ते य। धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥१॥ गीयावासो रती धम्मे, अणाययणवज्जणं। निग्गहो य कसायाणं, एयं धीराण सासणं ॥२॥" त्ति, अथवा 'आमुसंतेणं'ति आमृशता भगवत्पादारविन्दं भक्तितः करतलयुगलादिना स्पृशता, अनेनैतदाह—अधिगतसकलशास्त्रेणापि गुरुविश्रामणादि विनयकृत्यं न मोक्तव्यम्; उक्तं हि—"जहाऽऽहिअग्गी[3] जलणं णमंसे, णाणाहुतीमंतपयाभिसित्तं। एवायरीयं उवचिट्ठएज्जा, अणंतणाणोवगओऽवि संतो ॥१॥" त्ति, यद्वा 'आउसंतेणं'ति आजुषमाणेन—श्रवणविधिमर्यादया गुरूनासेवमानेन, अने-

१ अशरीरत्वेन। २ ज्ञानस्य भवति भागी स्थिरतरो दर्शने चारित्रे च। धन्या यावत्कथं गुरुकुलवासं न मुञ्चन्ति ॥१॥ गीतावासो रतिर्धर्मे अनायतनवर्जनम्। निग्रहश्च कषायाणामेतत् धीराणां शासनम् ॥२॥ ३ यथाऽऽहिताग्निर्ज्वलनं नमस्यति नानाहुतिमन्त्रपदाभिषिक्तम्। एवमाचार्यमुपतिष्ठेत अनन्तज्ञानोपगतोऽपि सन् ॥१॥

नान्येतदाह–विधिनैवोचितदेशस्थेन गुरुसकाशाच्छ्रोतव्यम्, न तु यथाकथञ्चित्, यत आह–'निद्दाविगहापरिवज्जिएहिं गुत्तेहिं पंजलिउडेहिं। भत्तिबहुमाणपुव्वं उवउत्तेहिं सुणेयव्वं ॥१॥'' इत्यादि, एवमुक्तः पदार्थः, पदविग्रहस्तु सामासिकपदविषयः, स चाख्यातमित्यादिषु दर्शित इति। इदानीं चालनाप्रत्यवस्थाने, ते च शब्दतोऽर्थतश्च, तत्र शब्दतः ननु 'मे' इत्यस्य मम मह्यं चेति व्याख्यानमुचितं, षष्ठीचतुर्थ्योरेकवचनान्तस्यास्मत्पदस्य मे इत्यादेशादिति, अत्रोच्यते, मे इत्ययं विभक्तिप्रतिरूपकोऽव्ययशब्दस्तृतीयैकवचनान्तोऽस्मच्छब्दार्थे वर्तत इति न दोषः। अर्थतस्तु चालना–ननु वस्तु नित्यं वा स्यादनित्यं वा?, नित्यं चेत्तर्हि नित्यस्याप्रच्युतानुत्पन्नस्थिरैकरूपत्वाद्यो भगवतः सकाशे श्रोतृत्वस्वभावः स एव च कथं शिष्योपदेशकत्वस्वभाव इति?, किञ्च–शिष्योपदेशकत्वं त्वस्य पूर्वस्वभावत्यागे स्यादत्यागे वा?, यदि त्यागे हन्त हतं वस्तुनो नित्यत्वं, वस्तुनः स्वभावाव्यतिरिक्तत्वेन तत्क्षये तत्क्षतेरिति, अपरित्याग इति चेत्, न, विरुद्धयोः स्वभावयोर्युगपदसम्भवादिति, अथ चानित्यमिति पक्षस्तदपि न, निरन्वयनाशे हि श्रोतुः श्रवणकाल एव विनष्टत्वात् कथनावसरेऽन्यस्यैवोत्पन्नत्वादकथनप्रसङ्गः, यज्ञदत्तश्रुतस्य देवदत्ताकथनवदिति, अत्र समाधिर्नयमतेनेति नयद्वारमवतरन्ति, तत्र नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवम्भूता नयाः, तत्र चाद्यास्त्रयो द्रव्यमेवार्थोऽस्तीतिवादितया द्रव्यार्थिकेऽवतरन्ति, इतरे तु पर्याय एवार्थोऽस्तीतिवादितया पर्यायार्थिकनये, तदेवमुभयमताश्रयणे द्रव्यार्थितया नित्यं वस्तु पर्यायार्थितया त्वनित्यमिति नित्यानित्यं वस्त्विति प्रत्येकपक्षोक्तदोषाभावो गुडनागरादिवदिति, एवमेव च सकलव्यवहारप्रवृत्तिरिति, उक्तञ्च–''[3]सव्वं चिय पइस-

१ परित्यक्तनिद्राविकथैर्गुप्तैः प्राञ्जलिपुटैः। भक्तिबहुमानपूर्वमुपयुक्तैः श्रोतव्यम् ॥१॥ २ °ताश्रयेण ॥ ३ सर्वमेव प्रतिसमयमुत्पद्यते नश्यति च नित्यं च। एवमेव च सुखदुःखबन्धमोक्षादिसद्भावः ॥१॥

मयं उप्पज्जइ नासए य निच्चं च । एवं चेव य सुहदुक्खबंधमोक्खादिसब्भावो ॥१॥" त्ति । उक्तः सूत्रस्पर्शिकनिर्युक्त्यनुगमः, तदेवमधिकृतसूत्रमाश्रित्य सूत्रानुगमसूत्रालापकनिक्षेपसूत्रस्पर्शिकनिर्युक्त्यनुगमनया उपदर्शिताः, आराधितश्च सक्रमं भाष्यकारवचनं, तद्यथा—"सुत्तं सुत्ताणुगमो सुत्तालावगकओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ति नया य समगं तु वच्चंति ॥१॥"त्ति, एतेषां चायं विषय उक्तो भाष्यकारेण—"होई कयत्थो वोत्तुं सपयच्छेयं सुअं सुयाणुगमो । सुत्तालावगनासो नामाइन्नासविनियोगं ॥१॥ सुत्तप्फासियनिज्जुत्तिनिओगो सेसओ पयत्थाई । पायं सो च्चिय नेगमनयाइमयगोयरो होइ ॥२॥" त्ति, एवं प्रतिसूत्रं स्वयमनुसरणीयं, वयं तु संक्षेपार्थं क्वचित्किञ्चिदेव भणिष्याम इति ॥ यदाख्यातं भगवता तदधुनोच्यते—तत्र सकलपदार्थानां सम्यग्मिथ्याज्ञानश्रद्धानानुष्ठानैर्विषयीकरणेनोपयोगनयनादात्मनः सर्वपदार्थप्राधान्यमतस्तद्विचारं तावदादावाह—

एगे आया ( सू० २ )

एको न द्व्यादिरूप आत्मा—जीवः, कथञ्चिदिति गम्यते, तत्र अतति—सततमवगच्छति 'अत सातत्यगमने' इति वचनादतो धातोर्गत्यर्थत्वाद्गत्यर्थानां च ज्ञानार्थत्वादनवरतं जानातीति निपातनादात्मा—जीवः, उपयोगलक्षणत्वादस्य सिद्धसंसार्यवस्थाद्वयेऽप्युपयोग-

१ सूत्रं सूत्रानुगमः सूत्रालापककृतश्च निक्षेपः । सूत्रस्पर्शिकनिर्युक्तिर्नयाश्च समकमेव व्रजन्ति ॥१॥ २ भवति कृतार्थ उक्त्वा सपदच्छेदं सूत्रं सूत्रानुगमः । सूत्रालापकन्यासो नामादिन्यासविनियोगम् ॥१॥ सूत्रस्पर्शिकनिर्युक्तिनियोगः शेषकः पदार्थादिः । प्रायः स एव नैगमनयादिमतगोचरो भवति ॥२॥ ३ °पदार्थज्ञानप्रा० प्र.

भावेन गततानवोधभावात् , सततावबोधाभावे चाजीवत्वप्रसङ्गात् , अजीवस्य च सतः पुनर्जीवत्वाभावाद् , भावे चाकाशादीनामपि तथात्वप्रसङ्गात् , एवञ्च जीवानादित्वाभ्युपगमाभावप्रसङ्ग इति, अथवा अतति–सततं गच्छति स्वकीयान् ज्ञानादिपर्यायानित्यात्मा, नन्वेवमाकाशादीनामप्यात्मशब्दव्यपदेशप्रसङ्गः, तेषामपि स्वपर्यायेषु सततगमनाद् , अन्यथा अपरिणामित्वेनावस्तुत्वप्रसङ्गादिति, नैवं, व्युत्पत्तिमात्रनिमित्तत्वादस्य, उपयोगस्यैव च प्रवृत्तिनिमित्तत्वाद् , जीव एव आत्मा नाकाशादिरिति, यद्वा संसार्यपेक्षया नानागतिषु सततगमनात् मुक्तापेक्षया च भूततद्भावत्वादात्मेति, तस्य चैकत्वं कथञ्चिदेव,तथाहि–द्रव्यार्थतयैकत्वमेकद्रव्यत्वादात्मनः,प्रदेशार्थतया त्वनेकत्वमसङ्ख्येयप्रदेशात्मकत्वात् तस्येति, तत्र द्रव्यं च तदर्थश्चेति द्रव्यार्थस्तस्य भावो द्रव्यार्थता–प्रदेशगुणपर्यायाधारता अवयविद्रव्यतेतियावत्, तथा प्रकृष्टो देशः प्रदेशो–निरवयवोंऽशः स चासावर्थश्चेति प्रदेशार्थः तस्य भावः प्रदेशार्थता–गुणपर्यायाधारा (रता अ) वयवलक्षणार्थतेतियावत् , नन्ववयवि द्रव्यमेव नास्ति, विकल्पद्वयेन तस्यायुज्यमानत्वात्, खरविषाणवत्, तथाहि–अवयविद्रव्यमवयवेभ्यो भिन्नमभिन्नं वा स्याद् ?,न तावदभिन्नमभेदे हि अवयविद्रव्यवदवयवानामेकत्वं स्याद्, अवयववद्वाऽवयविद्रव्यस्याप्यनेकत्वं स्यात्, अन्यथा भेद एव स्यात् , विरुद्धधर्माध्यासस्य भेदनिबन्धनत्वादिति, भिन्नं चेत् तत्तेभ्यस्तदा किमवयविद्रव्यं प्रत्येकमवयवेषु सर्वात्मना समवैति देशतो वेति ?, यदि सर्वात्मना तदाऽवयवसङ्ख्यमवयविद्रव्यं स्यात् कथमेकत्वं तस्य ?, अथ देशैः समवैति ततो तैर्देशैरवयवेषु तद्वर्त्तते तेष्वपि देशेषु तत्कथं प्रवर्त्तते देशतः सर्वतो वेति ?, सर्वतश्चेत्तदेव दूषणं, देशतश्चेत् तेष्वपि देशेषु कथमित्यादिरनवस्था स्यादिति, अत्रोच्यते, यदुक्तम्—'विकल्पद्वयेन तस्यायुज्यमानत्वा' दिति तदयुक्तम् , एकान्तेन भेदाभेदयोरनभ्युपगमात् , अवयवा एव हि तथाविधैकपरिणामितया अवयविद्रव्यतया व्यपदिश्यन्ते, त एव च तथाविधविचित्रपरिणामापेक्षया अवयवा इति, अवयवि-

द्रव्याभावे तु एते घटावयवा एते च पटावयवा इत्येवमसङ्कीर्णावयवव्यवस्था न स्यात्, तथा च प्रतिनियतकार्यार्थिनां प्रतिनियतवस्तूपादानं न स्यात्, तथा च सर्वमसमञ्जसमापनीपद्येत, सन्निवेशविशेषाद् घटाद्यवयवानां प्रतिनियतता भविष्यतीति चेत्, सत्यं, केवलं स एव सन्निवेशविशेषोऽवयविद्रव्यमिति, यच्चोच्यते-विरुद्धधर्माध्यासो भेदनिबन्धनमिति, तदपि न सूक्तं, प्रत्यक्षसंवेदनस्य परमार्थापेक्षया भ्रान्तत्वेन संव्यवहारापेक्षया त्वभ्रान्तत्वेनाभ्युपगमादिति, यदि नाम भ्रान्तमभ्रान्तं कथमित्येवमत्रापि वक्तुं शक्यत्वादिति। किञ्च-विद्यते अवयविद्रव्यम्, अव्यभिचारितया तथैव प्रतिभासमानत्वाद् अवयववन्नीलवद्वा, न चायमसिद्धो हेतुः, तथाप्रतिभासस्यानुभूयमानत्वात्, नाप्यनैकान्तिकत्वविरुद्धत्वे, सर्ववस्तुव्यवस्थायाः प्रतिभासाधीनत्वाद्, अन्यथा न किञ्चनापि वस्तु सिध्येदिति। भवतु नामावयविद्रव्यं केवलमात्मा न विद्यते, तस्य प्रत्यक्षादिभिरनुपलभ्यमानत्वादिति, तथाहि-न प्रत्यक्षग्राह्योऽसावतीन्द्रियत्वात्, नाप्यनुमानग्राह्यः, अनुमानस्य लिङ्गलिङ्गिनोः साक्षात्सम्बन्धदर्शनेन प्रवृत्तेरिति, आगमगम्योऽपि नासौ, आगमानामन्योऽन्यं विसंवादादिति, अत्रोच्यते, केयमनुपलभ्यमानता?, किमेकपुरुषाश्रिता सकलपुरुषाश्रिता वा?, यद्येकपुरुषाश्रिता न तयाऽऽत्माभावः सिध्यति, सत्यपि वस्तुनि तस्याः सम्भवात्, न हि कस्यचित् पुरुषविशेषस्य घटाद्यर्थग्राहकं प्रमाणं न प्रवृत्तमिति सर्वत्र सर्वदा तदभावो निर्णेतुं शक्य इति, न हि प्रमाणनिवृत्तौ प्रमेयं विनिवर्त्तते, प्रमेयकार्यत्वात् प्रमाणस्य, न च कार्याभावे कारणाभावो दृष्ट इत्यनैकान्तिकताऽनुपलम्भहेतोः, सकलपुरुषाश्रितानुपलम्भस्त्वसिद्ध इत्यसिद्धो हेतुः, न ह्यसर्वज्ञेन सर्वे पुरुषाः सर्वदा सर्वत्रात्मानं न पश्यन्तीति वक्तुं शक्यमिति, किञ्च-विद्यते आत्मा, प्रत्यक्षादिभिरुपलभ्यमानत्वात्, घटवदिति, न चायमसिद्धो हेतुः, यतोऽस्मदादिप्रत्यक्षेणाप्यात्मा तावद्गम्यत एव, आत्मा हि ज्ञानादनन्यः, आत्मधर्मत्वात् ज्ञानस्य, तस्य च स्वसंविदितरूपत्वात्, स्वसंविदितत्वञ्च ज्ञानस्य नीलज्ञानमुत्पन्नमासीदि

त्यादिस्मृतिदर्शनात्, न ह्यस्वसंविदिते ज्ञाने स्मृतिप्रभवो युज्यते, प्रमात्रन्तरज्ञानस्यापि स्मृतिगोचरत्वप्रसङ्गादिति, तदेवं तदव्यतिरिक्तज्ञानगुणप्रत्यक्षत्वे आत्मा गुणी प्रत्यक्ष एव, रूपगुणप्रत्यक्षत्वे घटगुणिप्रत्यक्षत्ववदिति, उक्तञ्च—"गुणपच्चक्खत्तणओ गुणी वि जीवो घडोव्व पच्चक्खो। घडओव्व घिप्पइ गुणी गुणमित्तग्गहणओ जम्हा ॥१॥" तथा—"अण्णोऽणन्नो व गुणी होज्ज गुणेहिं? जइ णाम सोऽणन्नो। णाणगुणमित्तगहणे घिप्पइ जीवो गुणी सक्खं ॥१॥ अह अन्नो तो एवं गुणिणो न घडादयो वि पच्चक्खा। गुणमित्तग्गहणाओ जीवम्मि कुतो विआरोऽयं? ॥२॥"ति,ये तु सकलपदार्थसार्थस्वरूपाविर्भावनसमर्थज्ञानवन्तस्तेषां सर्वात्मनैव प्रत्यक्ष इति। तथाऽनुमानगम्योऽप्यात्मा, तथाहि—विद्यमानककर्तृमिदं शरीरं भोग्यत्वाद्, ओदनादिवत्, व्योमकुसुमं विपक्षः, स च कर्त्ता जीव इति, नन्वोदनकर्तृवन्मूर्त्त आत्मा सिध्यतीति साध्यविरुद्धो हेतुरिति, नैवं, संसारिणो मूर्त्तत्वेनाप्यभ्युपगमाद्, आह च—"[3]जो कत्तादि स जीवो सज्झविरुद्धत्ति ते मई हुज्जा। मुत्ताइपसंगाओ तं नो संसारिणो दोसो ॥१॥" त्ति, न चायमेकान्तो, यदुत—लिङ्गयविनाभूतलिङ्गोपलम्भव्यतिरेकेणानुमानस्यैव एकान्ततोऽप्रवृत्तिरिति, हसितादिलिङ्गविशेषस्य ग्रहाख्यलिङ्ग्यविनाभावग्रहणमन्तरेणापि ग्रहगमकत्वदर्शनात्, न च देह एव ग्रहो येनान्यदेहेऽदर्शनमविनाभावग्रहणनियामकं भवतीति,उक्तञ्च—"सोऽणेगंतो जम्हा लिंगेहिं समं अदिट्ठ-

१ गुणप्रत्यक्षत्वात् गुण्यपि जीवो घट इव प्रत्यक्षः। घट इव गृह्यते गुणी गुणमात्रग्रहणात् यस्मात् ॥१॥

२ अन्योऽनन्यो वा गुणी भवेत् गुणेभ्यः, यदि नाम सोऽनन्यः। ज्ञानगुणमात्रग्रहणे गृह्यते जीवो गुणी साक्षात् ॥१॥ अथान्यस्तदेवं गुणिनो न घटादयोऽपि प्रत्यक्षाः। गुणमात्रग्रहणात् जीवे कुतो विचारोऽयम्? ॥२॥ ३ यः कर्त्रादिः स जीवः साध्यविरुद्ध इति ते मतिर्भवेत्। मूर्त्तत्वाद्यप्रसङ्गात् तन्न संसारिणो दोषः ॥१॥ ४ सोऽनेकान्तो यस्मात् लिङ्गैः सममदृष्टपूर्वोऽपि। ग्रहलिङ्गदर्शनात् ग्रहोऽनुमेयः शरीरे ॥१॥

पुव्वोवि। गहलिंगदरिसणातो गहोऽणुमेयो सरीरंमि ॥१॥''इति, आगमगम्यत्वं त्वात्मनः 'एगे आया' अत एव वचनात्, नचास्यागमान्तरैर्विसंवादः संभावनीयः, सुनिश्चिताप्तप्रणीतत्वादस्येति, बहु वक्तव्यमत्र तच्च स्थानान्तरादवसेयमिति। किञ्च आत्माभावे जातिस्मरणादयस्तथा प्रेतीभूतपितृपितामहादिकृतावनुग्रहोपघातौ च न प्राप्नुयुरिति। आत्मनस्तु सप्रदेशत्वमवश्यमभ्युपगन्तव्यं, निरवयवत्वे तु हस्ताद्यवयवानामेकत्वप्रसङ्गः प्रत्यवयवं स्पर्शाद्यनुपलब्धिप्रसङ्गश्चेति सप्रदेश आत्मा प्रत्यवयवं चैतन्यलक्षणतद्गुणोपलम्भात्, प्रतिग्रीवाद्यवयवमुपलभ्यमानरूपगुणघटवदिति स्थापितमेतत् 'द्रव्यार्थतया एक आत्मे'ति, अथवा एक आत्मा कथञ्चिदिति, प्रतिक्षणं सम्भवदपरापरकालकृतकुमारतरुणनरनारकत्वादिपर्यायैरुत्पादविनाशयोगेऽपि द्रव्यार्थतयैकत्वादस्य, यद्यपि हि कालकृतपर्यायैरुत्पद्यते नश्यति च वस्तु तथापि स्वपरपर्यायरूपानन्तधर्मात्मकत्वात् तस्य न सर्वथा नाशो युक्त इति, आह च—"[1]न हि सव्वहा विणासो अद्धापज्जायमित्तनासंमि। सपरपज्जायाणंतधम्मुणो वत्थुणो जुत्तो ॥१॥" त्ति, किञ्च—'प्रतिक्षणं क्षयिणो भावा' इत्येतस्माद् वचनात् प्रतिपाद्यस्य यत्क्षणभङ्गविज्ञानमुपजायते तदसंख्यातसमयैरेव वाक्यार्थग्रहणपरिणामाज्जायते, न तु प्रतिपत्तुः प्रतिसमयं विनाशे सति, यत एकैकमप्यक्षरं पदसत्कं सङ्ख्यातीतसमयसंभूतं सङ्ख्यातानि चाक्षराणि पदं, सङ्ख्यातपदं च वाक्यं, तदर्थग्रहणपरिणामाच्च सर्वं क्षणभङ्गुरमिति विज्ञानं भवेत्, तच्चायुक्तं समयनष्टस्येति, आह च—"[2]कह वा सव्वं खणियं विन्नायं?, जई मई सुयाओत्ति। तदसं-

१ न हि सर्वथा विनाशोऽद्धापर्यायमात्रनाशे। स्वपरपर्यायानन्तधर्मस्य वस्तुनो युक्तः ॥१॥ २ कथं वा सर्वं क्षणिकं विज्ञातं? यदि मतिः-श्रुतादिति। तदसंख्यसमयसूत्रार्थग्रहणपरिणामतोऽयुक्तम् ॥१॥ न तु प्रतिसमयविनाशे येनैकैकमक्षरमपि पदस्य। संख्यातीतसामयिकं संख्येयानि पदं तानि ॥२॥ संख्येयपदं वाक्यं तदर्थग्रहणपरिणामतो भवेत्। सर्वक्षणभङ्गज्ञानं तदयुक्तं समयनष्टस्य ॥३॥

समसमयगुणत्थगहणपरिणामओ जुत्तं ॥१॥ नउ पइसमयविणासे जेणेक्केकक्खरंपि य पयस्स। संखाईयसमइयं संखेज्जाइं पयं ताइं ॥२॥ गंमेअपयं वक्कं तदत्थगहणपरिणामओ होज्जा। सव्वखणभंगनाणं तदजुत्तं समयनट्ठस्स ॥३॥" इति, तथा सर्वथोच्छेदे तृप्त्यादयो न घटन्ते, पूर्वसंस्कारानुवृत्तावेव तेषां युज्यमानत्वाद्, आह च—"तित्ती समो किलामो सारिक्खविवक्खपच्चयाईणि। अज्झयणं झाणं भावणा य का सव्वनासंमि ? ॥१॥" त्ति, तत्र तृप्तिः-धाणिः श्रमः-अध्वादिखेदः क्लमो-ग्लानिः सादृश्यं-साधर्म्यं विपक्षो-वैधर्म्यं प्रत्ययः-अवबोधः, शेषपदानि प्रतीतानि, इत्यादि बहु वक्तव्यं तत्तु स्थानान्तरादवसेयमिति। तदेवमात्मा स्थितिभवनभङ्गरूपः स्थिररूपापेक्षया नित्यो नित्यत्वाच्चैकः भवनभङ्गरूपापेक्षया त्वनित्यः अनित्यत्वाच्चानेक इति, आह च—"जेमणंतपज्जयमयं वत्थुं भवणं च चित्तपरिणामं। ठिइविभवभङ्गरूवं णिच्चाणिच्चाइ तोऽभिमयं ॥१॥" ति, एवं च—"सुहदुक्खबंधमोक्खा उभयनयमयाणुवत्तिणो जुत्ता। एगयरपरिच्चाए सव्वव्ववहारवुच्छित्ति ॥२॥" त्ति, अथवा-एक आत्मा कथञ्चिदेवेति, यतो जैनानां न हि सर्वथा किञ्चिद्वस्तु एकमनेकं वाऽभ्नि, सामान्यविशेषरूपत्वाद्वस्तुनः, अथ ब्रूयात्-विशेषरूपमेव वस्तु, सामान्यस्य विशेषेभ्यो भेदाभेदाभ्यां चिन्त्यमानस्यायोगात् तथाहि-सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा स्यात्?, न भिन्नमुपलम्भाभावाद्, न चानुपलभ्यमानमपि सत्तया व्यवहर्तुं शक्यं, खरविषाणस्यापि तथाप्रसङ्गात्, अथाभिन्नमिति पक्षः, तथा च सामान्यमात्रं वा स्याद्विशेषमात्रं वेति, न ह्येकस्मिन् सामान्यमेकं विशे·

१ तृप्तिः श्रमः क्लमः सादृश्यविपक्षप्रत्ययादयः। अध्ययनं ध्यानं भावना च का सर्वनाशे ॥१॥ २ यदनन्तपर्ययमयं वस्तु भवनं च चित्रपरिणामम्। स्थितिविभवभङ्गरूपं नित्यानित्यादि ततोऽभिमतम् ॥ १ ॥ सुखदुःखबन्धमोक्षा उभयनयमतानुवर्त्तिनो युक्ताः। एकतरपरित्यागे सर्वव्यवहारव्युच्छित्तिः ॥२॥

षास्त्वनेकरूपा इत्यसङ्कीर्णवस्तुव्यवस्था स्यादिति, अत्रोच्यते, न ह्यस्माभिः सामान्यविशेषयोरेकान्तेन भेदोऽभेदो वाऽभ्युपगम्यते, अपि तु विशेषा एव प्रधानीकृतातुल्यरूपा उपसर्जनीकृततुल्यरूपा विषमतया प्रज्ञायमाना विशेषा व्यपदिश्यन्ते, त एव च विशेषा उपसर्जनीकृतातुल्यरूपाः प्रधानीकृततुल्यरूपाः समतया प्रज्ञायमानाः सामान्यमिति व्यपदिश्यन्त इति, आह च—"निर्विशेषं गृहीताश्च, भेदाः सामान्यमुच्यते। ततो विशेषात्सामान्यविशिष्टत्वं न युज्यते ॥१॥ वैषम्यसमभावेन, ज्ञानमाना इमे किल। प्रकल्पयन्ति सामान्यविशेषस्थितिमात्मनि ॥२॥" इति, तदेवं सामान्यरूपेणात्मा एको विशेषरूपेण त्वनेकः, न चात्मनां तुल्यरूपं नास्ति, एकात्मव्यतिरेकेण शेषात्मनामनात्मत्वप्रसङ्गादिति, तुल्यं च स्वरूपमुपयोगः 'उपयोगलक्षणो जीव' इति वचनात्, तदेवमुपयोगरूपैकलक्षणत्वात् सर्वे एवात्मान एकरूपाः, एवं चैकलक्षणत्वादेक आत्मेति, अथवा जन्ममरणसुखदुःखादिसंवेदनेष्वसहायत्वादेक आत्मेति भावनीयमिति। इह च सर्वसूत्रेषु कथञ्चिदित्यनुस्मरणीयं, कथञ्चिद्वादस्याविरोधेन सर्वत्रवस्तुव्यवस्थानिबन्धनत्वात्, उक्तञ्च—"स्याद्वादाय नमस्तस्मै, यं विना सकलाः क्रियाः। लोकद्वितयभाविन्यो, नैव साङ्गत्यमियूति ॥१॥" तथा "नयास्तव स्यात्पदसत्त्वलाञ्छिता, रसोपविद्धा इव लोहधातवः। भवन्त्यभिप्रेतफला यतस्ततो, भवन्तमार्याः प्रणता हितैषिणः ॥१॥" इति। आत्मन एकत्वमुक्तन्यायतोऽभ्युपगच्छद्भिरपि कैश्चिन्निष्क्रियत्वं तस्याभ्युपगतमतस्तन्निराकरणाय तस्य क्रियावत्त्वमभिधित्सुः क्रियायाः कारणभूतं (त)दण्डस्वरूपं प्रथमं तावदभिधातुमाह—

एगे दंडे (सू० ३) एगा किरिया (सू० ४) एगे लोए (सू० ५) एगे अलोए (सू० ६)

'एगे दंडे' एकोऽविवक्षितविशेषत्वात् दण्डयते- ज्ञानाद्यैश्वर्यापहारतोऽसारीक्रियते आत्माऽनेनेति दण्डः, स च द्रव्यतो भावतश्च, द्रव्यतो यष्टिर्भावतो दुष्प्रयुक्तं मनःप्रभृति॥ तेन चात्मा क्रियां करोतीति तामाह—'एगा किरिया' एका—अविवक्षितविशेषतया करणमात्रविवक्षणात् करणं क्रिया—कायिक्यादिकेति, अथवा 'एगे दंडे एगा किरिय'त्ति सूत्रद्वयेनात्मनोऽक्रियत्वनिरासेन सक्रियत्वमाह, यतो दण्डक्रियाशब्दाभ्यां त्रयोदश क्रियास्थानानि प्रतिपादितानि, तत्रार्थदण्डानर्थदण्डहिंसादण्डाकस्माद्दण्डदृष्टिविपर्यासदण्डरूपः पञ्चविधो दण्डः परप्राणापहरणलक्षणो दण्डशब्देन गृहीतः, तस्य चैकत्वं वधसामान्यादिति, क्रियाशब्देन तु मृषाप्रत्यया अदत्तादानप्रत्यया आध्यात्मिकी मानप्रत्यया मित्रद्वेषप्रत्यया मायाप्रत्यया लोभप्रत्यया ऐर्यापथिकीत्यष्टविधा क्रियोक्ता, तदेकत्वञ्च करणमात्रसामान्यदिति, दण्डक्रिययोश्च स्वरूपविशेषमुपरिष्टात् स्वस्थान एव वक्ष्याम इति। अक्रियावत्त्वनिरासश्चात्मन एवं, यैः किलाक्रियावत्त्वमभ्युपगतमात्मनस्तैर्भोक्तृत्वमप्यभ्युपगतमतो भुजिक्रियानिर्वर्त्तनसामर्थ्ये सति भोक्तृत्वमुपपद्यते तदेव च क्रियावत्त्वं नामेति, अथ प्रकृतिः करोति पुरुषस्तु भुङ्क्ते प्रतिबिम्बन्यायेनेति, तदयुक्तम्, कथञ्चित् सक्रियत्वमन्तरेण प्रकृत्युपधानयोगेऽपि प्रतिबिम्बभावानुपपत्तेः, रूपान्तरपरिणमनरूपत्वात् प्रतिबिम्बस्येति, अथ प्रकृतिविकाररूपाया बुद्धेरेव सुखाद्यर्थप्रतिबिम्बनं नात्मनः, तर्हि नास्य भोगः, तदवस्थत्वात्तस्येति, अत्रापि बहु वक्तव्यं तत्तु स्थानान्तरादवसेयमिति॥ उक्तस्वरूपस्यात्मन आधारस्वरूपनिरूपणायाह—'एगे लोए' एकोऽविवक्षितासङ्ख्यप्रदेशाधस्तिर्यगादिदिग्भेदतया लोक्यते—दृश्यते केवलालोकेनेति लोकः—धर्मास्तिकायादिद्रव्याधारभूत आकाशविशेषः, तदुक्तम्—"धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥१॥"इति, अथवा लोको नामादिरष्टधा, आह च—"नामं ठवणा दविए खित्ते काले भवे य भावे य। पज्जवलोए य तहा अट्ठविहो लोयनिक्खेवो ॥१॥"त्ति, नामस्थापने सुज्ञाने,

द्रव्यलोको जीवाजीवद्रव्यरूपः, क्षेत्रलोक आकाशमात्रमनन्तप्रदेशात्मकं, काललोकः समयावलिकादिः, भवलोको नारकादयः स्वस्मिन् २ भवे वर्त्तमाना यथा मनुष्यलोको देवलोक इति, भावलोकः षडौदयिकादयो भावाः, पर्यवलोकस्तु द्रव्याणां पर्यायमात्ररूप इति, एतेषां चैकत्वं केवलज्ञानालोकनीयत्वसामान्यादिति ॥ लोकव्यवस्था ह्यलोके तद्विपक्षभूते सति भवतीति तमाह–'एगे अलोए' एकोऽनन्तप्रदेशात्मकत्वेऽप्यविवक्षितभेदत्वादलोको लोकव्युदासात् नत्वनालोकनीयतया, केवलालोकेन तस्याप्यालोक्यमानत्वादिति, ननु लोकैकदेशस्य प्रत्यक्षत्वात् तद्देशान्तरमपि बाधकप्रमाणाभावात् सम्भावयामो योऽयं पुनरलोकोऽस्य देशतोऽप्यप्रत्यक्षत्वात् कथमसावस्तीत्यध्यवसातुं शक्यो ? येनैकत्वेन प्ररूप्यत इति, उच्यते, अनुमानादिति, तच्चेदं–विद्यमानविपक्षो लोको, व्युत्पत्तिमच्छुद्धपदाभिधेयत्वाद्, इह यद्व्युत्पत्तिमता शुद्धशब्देनाभिधीयते तस्य विपक्षोऽस्तीति द्रष्टव्यं, यथा घटस्याघटः, व्युत्पत्तिमच्छुद्धपदवाच्यश्च लोकस्तस्मात् सविपक्ष इति, यश्च लोकस्य विपक्षः सोऽलोकस्तस्मादस्त्यलोक इति, अथ न लोकोऽलोक इति घटादीनामेवान्यतमो भविष्यति किमिह वस्त्वन्तरकल्पनयेति ?, नैवं, यतो निषेधसद्भावान्निषेध्यस्यैवानुरूपेण भवितव्यं निषेध्यश्च लोकः स चाकाशविशेषो जीवादिद्रव्यभाजनमतः खल्वलोकेनाप्याकाशविशेषेणैव भवितव्यम्, यथेहापण्डित इत्युक्ते विशिष्टज्ञानविकलश्चेतन एव गम्यते न घटादिरचेतनस्तद्वदलोकेनापि लोकानुरूपेणेति, आह च–"लोगस्सऽत्थि विवक्खो सुद्धत्तणओ घडस्स अघडोव्व । [प्रेरकः] स घडादी चेव मती [गुरुः] न निसेहाओ तदणुरूवो ॥१॥" त्ति ॥ लोकालोकयोश्च विभागकरणं धर्मास्तिकायोऽतस्तत्स्वरूपमाह–

एगे धम्मे (सू० ७) एगे अधम्मे (सू० ८) एगे बंधे (सू० ९) एगे मोक्खे (सू० १०) एगे पुण्णे (सू० ११) एगे

१ लोकस्यास्ति विपक्षः शुद्ध(पद)त्वात् घटस्याघट इव । स घटादिरेव मतिः न निषेधात् तदनुरूपः ॥१॥

पावे (सू० १२) एगे आसवे (सू० १३) एगे संवरे (सू० १४) एगा वेयणा (सू० १५) एगा निज्जरा (सू० १६) ॥१॥

एकः प्रदेशार्थतयाऽसंख्यातप्रदेशात्मकत्वेऽपि द्रव्यार्थतया तस्यैकत्वात्, जीवपुद्गलानां स्वाभाविके क्रियावत्त्वे सति गतिपरिणतानां तत्स्वभावधारणाद् धर्म्मः, स चास्तीनां-प्रदेशानां सङ्घातात्मकत्वात् कायोऽस्तिकाय इति ॥ धर्मस्यापि विपक्षस्वरूपमाह—'एगे अधम्मे' एको द्रव्यत एव न धर्म्मोऽधर्म्मः अधर्म्मास्तिकाय इत्यर्थः, धर्म्मो हि जीवपुद्गलानां गत्युपष्टम्भकारी, अयं तु तद्विपरीतत्वात् स्थित्युपष्टम्भकारीति, ननु धर्म्मास्तिकायाधर्मास्तिकाययोः कथमस्तित्वावगमः?, प्रमाणादिति ब्रूमः, तच्चेदम्-इह गतिः स्थितिश्च सकललोकप्रसिद्धं कार्यं, कार्यं च परिणाम्यपेक्षाकारणायत्तात्मलाभं वर्त्तते, घटादिकार्येषु तथादर्शनात्, तथा च मृत्पिण्डभावेऽपि दिग्देशकालाकाशप्रकाशाद्यपेक्षाकारणमन्तरेण न घटो भवति, यदि स्यात् मृत्पिण्डमात्रादेव स्यात् न च भवति, गतिस्थिती अपि जीवपुद्गलाख्यपरिणामिकारणभावेऽपि नापेक्षाकारणमन्तरेण भवितुमर्हतः दृश्यते च तद्भावोऽतस्तत्सत्ता गम्यते यच्चापेक्षाकारणं स धर्मोऽधर्मश्चेति भावार्थः, गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्मास्तिकायो, मत्स्यानामिव जलं, तथा स्थितिपरिणामपरिणतानां स्थित्युपष्टम्भकोऽधर्म्मास्तिकायो, मत्स्यादीनामिव मेदिनी, विवक्षया जलं वा, प्रयोगश्च-गतिस्थिती अपेक्षाकारणवत्यौ, कार्यत्वात्, घटवत्, विपक्षस्त्वलोकशुषिरमभावो वेति, किञ्च-अलोकाभ्युपगमे सति धर्म्माधर्म्माभ्यां लोकपरिमाणकारिभ्यामवश्यं भवितव्यम्, अन्यथाऽऽकाशसाम्ये सति लोकोऽलोको वेति विशेषो न स्यात्, तथा चाविशिष्ट एवाकाशे गतिमतामात्मनां पुद्गलानाञ्च प्रतिघाताभावादनवस्थानम्, अतः सम्बन्धाभावात् सुखदुःखबन्धादिसंव्यवहारो न स्यादिति, उक्तञ्च—"तम्हा धम्माधम्मा लोगप-

१ तस्मात् धर्माधर्मौ लोकपरिच्छेदकारिणौ युक्तौ। इतरथाऽऽकाशे तुल्ये लोकोऽलोक इति को भेदः? ॥१॥ लोकविभागाभावे प्रतिघाता-

रिच्छेयकारिणो जुत्ता। इहराऽऽगासे तुल्ले लोगोऽलोगोत्ति को भेओ ? ॥ १ ॥ लोगविभागाभावे पडिघाताभावओऽणवत्थाओ। संववहाराभावो संबंधाभावओ होज्जा ॥२॥" इति। आत्मा च लोकवृत्तिर्धर्म्माधर्म्मास्तिकायोपगृहीतः सदण्डः सक्रियश्च कर्मणा बध्यत इति, बन्धनिरूपणायाह—'एगे बंधे' बन्धनं बन्धः, सकषायत्वात् जीवः कर्मणो योग्यान् पुद्गलान् आदत्ते यत् स बन्ध इति भावः, स च प्रकृतिस्थितिप्रदेशानुभावविभेदात् चतुर्विधोऽपि बन्धसामान्यादेकः, मुक्तस्य सतः पुनर्बन्धाभावाद्वा एको बन्ध इति, अथवा द्रव्यतो बन्धो निगडादिभिर्भावतः कर्म्मणा तयोश्च बन्धनसामान्यादेको बन्ध इति, ननु बन्धो जीवकर्म्मणोः संयोगोऽभिप्रेतः, स खल्वादिमानादिरहितो वा स्यादिति कल्पनाद्वयं, तत्र यद्यादिमानिति पक्षस्तदा किं पूर्वमात्मा पश्चात् कर्म्म अथ पूर्वं कर्म्म पश्चादात्मा उत युगपत्कर्मात्मानौ संप्रसूयेतामिति त्रयो विकल्पाः, तत्र न तावत् पूर्वमात्मसंभूतिः सम्भाव्यते, निर्हेतुकत्वात्, खरविषाणवत्, अकारणप्रसूतस्य च अकारणत एवोपरमः स्याद्. अथानादिरेव आत्मा तथाप्यकारणत्वान्नास्य कर्मणा योग उपपद्यते नभोवत्, अथाकारणोऽपि कर्मणा योगः स्यात् तर्हि स मुक्तस्यापि स्यादिति, अथासावात्मा नित्यमुक्त एव तर्हि किं मोक्षजिज्ञासया ?, बन्धाभावे च मुक्तव्यपदेशाभाव एव, आकाशवदिति, नापि कर्मणः प्राक् प्रसूतिरिति द्वितीयो विकल्पः सङ्गच्छते, कर्त्तुरभावात्, न चाक्रियमाणस्य कर्मव्यपदेशोऽभिमतः, अकारणप्रसूतेश्चाकारणत एवोपरमः स्यादिति, युगपदुत्पत्तिल-

भावतोऽनवस्थानात्। संव्यवहाराभावः संबन्धाभावतो भवेत् ॥२॥

१ सदण्डाद्यपेक्षया। २ नभोऽङ्गिरोमनुषां वेति संज्ञाविषयं छन्दोविषयं वा, भाष्यप्रदीपेऽत एवोक्तं उपसंख्यानान्येतानि छन्दोविषयाणीत्याहुरिति ॥

१ स्थानाध्ययने धर्मास्तिकायाद्या-निर्जरान्ताः ७–१६

श्रृगस्तृतीयपक्षोऽपि न क्षमः, अकारणत्वादेव, न च युगपदुत्पत्तौ सत्यामयं कर्त्ता कर्म्मेदमिति व्यपदेशो युक्तरूपः, सव्येतरगोविषाणवदिति, अथादिरहितो जीवकर्मयोग इति पक्षः, ततश्चानादित्वादेव नात्मकर्मवियोगः स्यात्, आत्माऽऽकाशसंयोगवदिति, अत्रोच्यते, आदिमत्संयोगपक्षदोषा अनभ्युपगमादेव निरस्ताः, यच्चादिरहितजीवकर्मयोगेऽभिधीयते 'अनादित्वान्नात्मकर्म्मवियोग' इति, तदयुक्तम्, अनादित्वेऽपि संयोगस्य वियोगोपलब्धेः, काञ्चनोपलयोरिवेति, यदाह—"जह वेह कंचणोवलसंजोगोऽणाइसंतइगओऽवि। वोच्छिज्जइ सोवायं तह जोगो जीवकम्माणं ॥१॥" ति, तथा अनादेरपि सन्तानस्य विनाशो दृष्टो बीजाङ्कुरसन्तानवत्, आह च—"अन्नतरमणिव्वत्तियकज्जं बीयंकुराण जं विहयं। तत्थ हओ संताणो कुक्कुडियंडाइयाणं च ॥१॥" त्ति। अनादिबन्धसद्भावेऽपि भव्यात्मनः कस्यचिन्मोक्षो भवतीति मोक्षस्वरूपमाह—'एगे मोक्खे' मोचनं कर्मपाशवियोजनमात्मनो मोक्षः, आह च—'कृत्स्नकर्मक्षयान्मोक्षः' स चैको ज्ञानावरणादिकर्मापेक्षयाऽष्टविधोऽपि मोचनसामान्यात् मुक्तस्य वा पुनर्मोक्षाभावात् ईषत्प्राग्भाराख्यक्षेत्रलक्षणो वा द्रव्यार्थतयैकः, अथवा द्रव्यतो मोक्षो निगडादितो भावतः कर्मतस्तयोश्च मोचनसामान्यादेको मोक्ष इति, नन्वपर्यवसानो जीवकर्मसंयोगोऽनादित्वाज्जीवाकाशसंयोगवदिति कथं मोक्षसम्भवः ?, कर्मवियोगरूपत्वादस्य, अत्रोच्यते, अनादित्वादित्यनैकान्तिको हेतुः, धातुकाञ्चनसंयोगो ह्यनादिः, स च सपर्यवसानो दृष्टः, क्रियाविशेषाद्, एवमयमपि जीवकर्म्मयोगः सम्यग्दर्शनज्ञानचारित्रैः सपर्यवसानो भविष्यति, जीवकर्म्मवियोगश्च मोक्ष उच्यते इति, ननु नारकादिपर्यायस्वभावः संसारो नान्यः, तेभ्यश्च नारकत्वादिपर्यायेभ्यो भिन्नो नाम

१ यथा वेह काञ्चनोपलसंयोगोऽनादिसंततिगतोऽपि व्युच्छिद्यते सोपायं तथा योगो जीवकर्मणोः ॥१॥ २ अन्यतरत् अनिर्वर्त्तितकार्यं बीजाङ्कुरयोर्विहतम्। तत्र हतः संतानः कुक्कुट्यण्डादिकानां च ॥१॥

न कश्चिज्जीवो, नारकादय एव पर्याया जीवः, तदनर्थान्तरत्वादिति संसाराभावे जीवाभाव एव नारकादिपर्यायस्वरूपवदित्यसत्पदार्थो मोक्ष इति, आह च—"जं नारगादिभावो संसारो नारगाइभिन्नो य। को जीवो तं मन्नसि ? तन्नासे जीवनासोत्ति ॥१॥" अत्र प्रतिविधीयते-यदुक्तम् 'नारकादिपर्यायसंसाराभावे सर्वथा जीवाभाव एवानर्थान्तरत्वान्नारकादिपर्यायस्वरूपवदि' ति, अयमनैकान्तिको हेतुः, हेम्नो मुद्रिकायाश्चानर्थान्तरत्वं सिद्धं न च मुद्रिकाकारविनाशे हेमविनाश इति, तद्वन्नारकादिपर्यायमात्रनाशे सर्वथा जीवनाशो न भविष्यतीति, आह च—"न हि नारगादिपज्जायमेत्तनासंमि सव्वहा नासो। जीवद्दव्वस्स मओ मुद्दानासेव्व हेमस्स ॥१॥" त्ति, अपि च—"कम्मकओ संसारो तन्नासे तस्स जुज्जए नासो। जीवत्तमकम्मकयं तन्नासे तस्स को नासो ? ॥२॥" त्ति। मोक्षश्च पुण्यपापक्षयाद्भवतीति पुण्यपापयोः स्वरूपं वाच्यं, तत्रापि मोक्षस्य पुण्यस्य च शुभस्वरूपसाधर्म्यात् पुण्यं तावदाह—'एगे पुण्णे' 'पुण शुभे' इति वचनात् पुणति-शुभीकरोति पुनाति वा-पवित्रीकरोत्यात्मानमिति पुण्यं-शुभकर्म्म, सद्वेद्यादि द्विचत्वारिंशद्विधम्, यथोक्तम्—"सायं १ उच्चागोयं २ नरतिरिदेवाउ ५ नाम एयाउ। मणुयदुगं ७ देवदुगं ९ पंचेंदियजाति १० तणुपणगं १५॥ १ ॥ अंगोवंगतियंपिय १८ संघयणं वज्जरिसहनारायं १९। पढमंचिय संठाणं २० वन्नाइचउक्क सुपसत्थं २४॥ २॥ अगुरुलहु २५ पराघायं २६ उस्सासं २७ आयवं च २८ उज्जोयं २९। सुपसत्था विहयगई ३० तसाइदसगं च ४० णिम्माणं ४१ ॥ ३ ॥ तित्थ-

१ यन्नारकादिभावः संसारो नारकादिभावभिन्नश्च। को जीवः ? (इति) त्वं मन्यसे, (यतः) तन्नाशे जीवनाश इति (स्यात्) २ न हि नारकादिपर्यायमात्रनाशे सर्वथा नाशः। जीवद्रव्यस्य मतो मुद्रानाशे इव हेम्नः ॥१॥ ३ कर्मकृतः संसारस्तन्नाशे तस्य युज्यते नाशः। जीवत्वमकर्मकृतं तन्नाशे तस्य को नाशः ? ॥२॥ इति

यरेण महिया बायाला पुण्णपगईओ " त्ति ॥ एवं द्विचत्वारिंशद्विधमपि अथवा पुण्यानुबन्धिपापानुबन्धिभेदेन द्विविधमपि अथवा प्रतिप्राणि विचित्रत्वादनन्तभेदमपि पुण्यसामान्यादेकमिति । अथ कर्मैव न विद्यते प्रमाणगोचरातिक्रान्तत्वात् शशविषाणवदिति कुतः पुण्यकर्मसत्तेति ?, असत्यमेतत्, यतोऽनुमानसिद्धं कर्म्म, तथाहि–सुखदुःखानुभूतेर्हेतुरस्ति कार्यत्वादङ्कुरस्येव बीजं, यश्च हेतुरस्यास्तत्कर्म्म तस्मादस्ति कर्म्मेति, स्यान्मतिः–सुखदुःखानुभूतेर्दृष्ट एव हेतुरिष्टानिष्टविषयप्राप्तिमयो भविष्यति, किमिह कर्म्मपरिकल्पनया ?, न हि दृष्टं निमित्तमपास्य निमित्तान्तरान्वेषणं युक्तरूपमिति, नैवं, व्यभिचारात्, इह यो हि द्वयोरिष्टशब्दादिविषयसुखसाधनसमेतयोरेकस्य तत्फले विशेषो–दुःखानुभूतिमयो यश्चानिष्टसाधनसमेतयोरेकस्य तत्फले विशेषः सुखानुभूतिमयो नासौ हेतुमन्तरेण सम्भाव्यते, न च तद्धेतुक एवासौ युक्तः, साधनानां विपर्यासादिति पारिशेष्याद्विशिष्टहेतुमानसौ, कार्यत्वात्, घटवत्, यश्च समानसाधनसमेनयोस्तत्फलविशेषहेतुस्तद् कर्म्म, तस्मादस्ति कर्म्मेति, आह च—"जो तुल्लसाहणाणं फले विसेसो न सो विणा हेउं । कज्जत्तणओ गोयम ! घडो व्व हेऊ य से कम्मं ॥१॥" ति, किञ्च–अन्यदेहपूर्वकमिदं बालशरीरं, इन्द्रियादिमत्त्वात्, यदिहेन्द्रियादिमत्तदन्यदेहपूर्वकं दृष्टं, यथा बालदेहपूर्वकं युवशरीरम्, इन्द्रियादिमच्चेदं बालशरीरकं तस्मादन्यशरीरपूर्वकं, यच्छरीरपूर्वकं चेदं बालकशरीरं तत्कर्म, तस्मादस्ति कर्म्मेति, आह च—"बालसरीरं देहंतरपुव्वं इंदियाइमत्ताओ । जह बालदेहपुव्वो जुवदेहो पुव्वमिह कम्मं ॥१॥" ति, ननु कर्मसद्भावेऽपि पापमेवैकं विद्यते पदार्थो न पुण्यं नामास्ति, यत्त पुण्यफलं सुखमुच्यते तत्पापस्यैव तरतमयोगादपकृष्टस्य फलं,

१ तत्तुल्यसाधनयोः फले विशेषः स न विना हेतुम् । कार्यत्वात् गौतम ! घट इव हेतुश्च तस्य कर्म ॥१॥ २ बालशरीरं देहान्तरपूर्वं इन्द्रियादिमत्त्वात् । यथा बालदेहपूर्वो युवदेहः पूर्वमिह कर्म ॥१॥

यतः पापस्य परमोत्कर्षेऽत्यन्ताधमफलता, तस्यैव च तरतमयोगापकर्षभिन्नस्य मात्रापरिवृद्धिहान्या यावत् प्रकृष्टोऽपकर्षस्तत्र या काचित्पापमात्रा अवतिष्ठते तस्यामत्यन्तं शुभफलता पापापकर्षात्, तस्यैव च पापस्य सर्वात्मना क्षयो मोक्षः, यथाऽत्यन्तापथ्याहारसेवनादनारोग्यम्, तस्यैवापथ्यस्य किञ्चित्किञ्चिदपकर्षात् यावत् स्तोकापथ्याहारत्वमारोग्यकरं, सर्वाहारपरित्यागाच्च प्राणमोक्ष इति, आह च —"पावुक्करिसेऽधमया तरतमजोगाऽवकरिसओ सुभया। तस्सेव खए मोक्खो अपत्थभत्तोवमाणाओ ॥१॥" त्ति, अत्रोच्यते, यदुक्तम्—'अत्यन्तापचितात् पापात् सुखप्रकर्ष' इति, तदयुक्तम्, यतो येयं सुखप्रकर्षानुभूतिः सा स्वानुरूपकर्मप्रकर्षजनिता, प्रकर्षानुभूतित्वात्, दुःखप्रकर्षानुभूतिवत्, यथा हि दुःखप्रकर्षानुभूतिः स्वानुरूपपापकर्म्मप्रकर्षजनितेति त्वयाऽभ्युपगम्यते तथेयमपि सुखप्रकर्षानुभूतिः (प्रकर्षानुभूतिरिति) स्वानुरूपपुण्यकर्मप्रकर्षजनिता भविष्यतीति प्रमाणफलमिति। पुण्यप्रतिपक्षभूतं पापमिति तत्स्वरूपमाह—'एगे पावे' पाशयति—गुण्डयत्यात्मानं पातयति चात्मन आनन्दरसं शोषयति क्षपयतीति पापम्, तच्च ज्ञानावरणादि द्व्यशीतिभेदम्, यदाऽऽह—"नाणंतरायदसगं १० दंसण नव १९ मोहणीयछव्वीसं ४५। अस्सायं ४६ निरयाऊ ४७ नीयागोएण अडयाला ४८ ॥१॥ निरयदुगं २ तिरियदुगं ४ जाइचउक्कं च ८ पंच संघयणा १३। संठाणाविय पंच उ १८ वन्नाइ चउक्कमपसत्थं २२ ॥२॥ उवघाय २३ कुविहयगइ २४ थावरदसगेण हौंति चोत्तीसं ३४। सव्वाओ मिलिआओ बासीती पावपगईओ ८२ ॥३॥" तदेवं द्व्यशीतिभेदमपि पुण्यानुबन्धिपापानुबन्धिभेदाद् द्विविधमपि वा अनन्तसत्त्वाश्रितत्वादनन्तमपि वाऽशुभसामान्यादेकमिति। ननु कर्म्मसत्त्वेऽपि पुण्यमेवैकं कर्म्म न तत्प्रतिपक्षभूतं पापं कर्मास्ति, शुभाशुभफलानां पुण्यादेव सिद्धेरिति, तथाहि—यत्परमप्रकृष्टं शुभफलमेतत्

१ पापोत्कर्षेऽधमता तरतमयोगाद् अपकर्षतः शुभता। तस्यैव क्षये मोक्षः अपथ्यभक्तोपमानात् ॥१॥

पुण्योत्कर्षस्य कार्यं, यत्पुनस्तस्मादपकृष्टमपकृष्टतरमपकृष्टतमं च तत्पुण्यस्यैव तरतमयोगापकर्षभिन्नस्य यावत्परमप्रकर्षहानिः, परमप्रकर्षहीनस्य च पुण्यस्य परमापकृष्टतमं शुभफलं—या काचित् शुभमात्रेत्यर्थः—दुःखप्रकर्ष इति तात्पर्यं, तस्यैव च परमापकृष्टपुण्यस्य सर्वात्मना क्षये पुण्यात्मकबन्धाभावान्मोक्ष इति, यथा अत्यन्तपथ्याहारसेवनात् पुंसः परमारोग्यसुखं, तस्यैव च किञ्चित्[2]पथ्याहारविवर्जनादपथ्याहारपरिवृद्धेरारोग्यसुखहानिः, सर्वथैवाहारपरिवर्जनात् प्राणमोक्ष इति, पथ्याहारोपमानं चेह पुण्यमिति, अत्रोच्यते, येयं दुःखप्रकर्षानुभूतिः सा स्वानुरूपकर्मप्रकर्षप्रभवा, प्रकर्षानुभूतित्वात्, सौख्यप्रकर्षानुभूतिवत्, यथा हि सौख्यप्रकर्षानुभूतिः स्वानुरूपपुण्यकर्मप्रकर्षजनितेति त्वयाऽभ्युपगम्यते तथेयमपि दुःखप्रकर्षानुभूतिः (प्रकर्षानुभूतित्वात्) स्वानुरूपपापकर्मप्रकर्षजनिता भविष्यतीति प्रमाणफलमिति, आह च—"कम्मप्पगरिसजणियं तदवस्सं पगरिसाणुभूइओ। सोक्खप्पगरिसभूई जह पुण्णप्पगरिसप्पभवा ॥१॥" इति, 'तदि'ति दुःखमिति। इदानीमनन्तरोक्तयोः पुण्यपापकर्मणोर्बन्धकारणनिरूपणायाह—'एगे आसवे' आश्रवन्ति—प्रविशन्ति येन कर्माण्यात्मनीत्याश्रवः, कर्मबन्धहेतुरिति भावः, स चेन्द्रियकषायाव्रतक्रियायोगरूपः क्रमेण पञ्चचतुःपञ्चपञ्चविंशतित्रिभेदः उक्तश्च—"इंदिय ५ कसाय ४ अव्वय ५ किरिया २५ पणचउरपंचपणुवीसा। जोगा तिन्नेव भवे आसवभेया उ बायाला ॥१॥" इति, तदेवमयं द्विचत्वारिंशद्विधोऽथवा द्विविधो द्रव्यभावभेदात्, तत्र द्रव्याश्रवो यज्जलान्तर्गतनावादौ तथाविधच्छिद्रैर्जलप्रवेशनं भावाश्रवस्तु यज्जीवनावीन्द्रियादिच्छिद्रतः कर्मजलसञ्चय इति, स चाश्रवसामान्यादेक एवेति ॥ अथाश्रवप्रतिपक्षभूतसंवरस्वरूपमाह—'एगे संवरे' संव्रियते—कर्मकारणं प्राणातिपातादि निरुध्यते येन परिणामेन स संवरः, आश्रवनिरोध इत्यर्थः, स च समितिगुप्तिध-

१ कर्मप्रकर्षजनितं तद् (दुःखं) अवश्यं प्रकर्षानुभूतेः। सौख्यप्रकर्षानुभूतिर्यथा पुण्यप्रकर्षप्रभवा ॥१॥ २ तथाविधपरिणामेन छिद्रै०।

र्म्मानुप्रेक्षापरीषह(जय)चारित्ररूपः क्रमेण पञ्चत्रिदशद्वादशद्वाविंशतिपञ्चभेदः, आह च—"समिई ५ गुत्ती ३ धम्मो १० अणुपेह १२ परीसहा २२ चरित्तं च ५ । सत्तावन्नं भेया पणतिगभेयाइं संवरणे ॥१॥" त्ति, अथवाऽयं द्विविधो द्रव्यतो भावतश्च, तत्र द्रव्यतो जलमध्यगतनावादेरनवरतप्रविशज्जलानां छिद्राणां तथाविधद्रव्येण स्थगनं संवरः, भावतस्तु जीवद्रोण्यामाश्रवत्कर्म्मजलानामिन्द्रियादिच्छिद्राणां समित्यादिना निरोधनं संवर इति, स च द्विविधोऽपि संवरसामान्यादेक इति ॥ संवरविशेषे चायोग्यवस्थारूपे कर्म्मणां वेदनैव भवति न बन्ध इति वेदनास्वरूपमाह—'एगा वेयणा' वेदनं वेदना—स्वभावेनोदीरणाकरणेन वोदयावलिकाप्रविष्टस्य कर्म्मणोऽनुभवनमिति भावः, सा च ज्ञानावरणीयादिकर्म्मापेक्षया अष्टविधाऽपि विपाकोदयप्रदेशोदयापेक्षया द्विविधाऽपि आभ्युपगमिकी—शिरोलोचादिका औपक्रमिकी—रोगादिजनितेत्येवं द्विविधाऽपि वेदनासामान्यादेकैवेति ॥ अनुभूतरसं कर्म प्रदेशेभ्यः परिशटतीति वेदनानन्तरं कर्मपरिशटनरूपां निर्ज्जरां निरूपयन्नाह—'एगा निज्जरा' निर्ज्जरणं निर्जरा विशरणं परिशटनमित्यर्थः, सा चाष्टविधकर्म्मापेक्षयाऽष्टविधाऽपि द्वादशविधतपोजन्यत्वेन द्वादशविधाऽपि अकामक्षुत्पिपासाशीतातपदंशमशकमलसहनब्रह्मचर्यधारणाद्यनेकविधकारणजनितत्वेनानेकविधाऽपि द्रव्यतो वस्त्रादेर्भावतः कर्मणामेवं द्विविधाऽपि वा निर्जरासामान्यादेकैवेति । ननु निर्जरामोक्षयोः कः प्रतिविशेषः ?, उच्यते, देशतः कर्मक्षयो निर्जरा सर्वतस्तु मोक्ष इति ॥ इह च जीवो विशिष्टनिर्जराभाजन प्रत्येकशरीरावस्थायामेव भवति न साधारणशरीरावस्थायामतः प्रत्येकशरीरावस्थस्य जीवस्य स्वरूपनिरूपणायाह—'एगे जीवे' इत्यादि, अथवा उक्ताः सामान्यतः प्रस्तुतशास्त्रव्युत्पादनीया जीवादयो नव पदार्थाः, साम्प्रतं जीवपदार्थं विशेषेण प्ररूपयन्नाह —

एगे जीवे पाडिक्कएणं सरीरएणं (सू० १७) एगा जीवाणं अपरिआइत्ता विगुव्वणा (सू० १८) एगे मणे

(सू० १९) एगा मई (सू० २०) एगे कायवायामे (सू० २१) एगा उप्पा (सू० २२) एगा वियती (सू० २३) एगा वियच्चा (सू० २४) एगा गती (सू० २५) एगा आगती (सू० २६) एगे चयणे (सू० २७) एगे उववाए (सू० २८) एगा तक्का (सू० २९) एगा सन्ना (सू० ३०) एगा मन्ना (सू० ३१) एगा विन्नू (सू० ३२) एगा वेयणा (सू० ३३) एगा छेयणा (सू० ३४) एगा भेयणा (सू० ३५) एगे मरणे अंतिमसारीरियाणं (सू० ३६) एगे संसुद्धे अहाभूए पत्ते (सू० ३७) एगदुक्खे जीवाणं एगभूए (सू० ३८) एगा अहम्मपडिमा जं से आया परिकिलेसति (सू० ३९) एगा धम्मपडिमा जं से आया पज्जवजाए (सू० ४०) एगे मणे देवासुरमणुयाणं तंसि तंसि समयंसि (सू० ४१) एगे उट्ठाणकम्मबलवीरियपुरिसकारपरक्कमे देवासुरमणुयाणं तंसि २ समयंसि (सू० ४२) एगे नाणे एगे दंसणे एगे चरित्ते (सू० ४३)

'एगे जीवे पाडिक्कएणं सरीरएणं' एकः-केवलो जीवितवान् जीवति जीविष्यति चेति जीवः-प्राणधारणधर्मा आत्मेत्यर्थः, एकं जीवं प्रति गतं यच्छरीरं प्रत्येकशरीरनामकर्मोदयात् तत्प्रत्येकं तदेव प्रत्येककं, दीर्घत्वादि प्राकृतत्वात्, तेन प्रत्येककेन शीर्यत इति शरीरं-देहः तदेवानुकम्पितादिधर्मोपेतं शरीरकं तेन लक्षितः तदाश्रित एको जीव इत्यर्थः, अथवा णंकारो वाक्यालङ्कारार्थो, तत एको जीवः प्रत्येकके शरीरे वर्त्तत इति वाक्यार्थः स्यादिति, इह च 'पडिक्खएणं'ति क्वचित्पाठो दृश्यते, स च न व्याख्यातः, अनवबोधात्, इह च वाचनानामनियतत्वात् सर्वासां व्याख्यातुमशक्यत्वात् काञ्चिदेव वाचनां व्याख्यास्याम इति ॥ इह बन्धमोक्षादय

आत्मधर्म्मा अनन्तरमुक्तास्ततस्तदधिकारादेवातः परमात्मधर्म्मान् 'एगा जीवाणं इत्यादिना एगे चरित्ते' इत्येतदन्तेन ग्रन्थेनाह— 'एगा जीवाणं अपरियाइत्ता विगुव्वणा' 'एगा जीवाणं' ति प्रतीतं 'अपरियाइत्त'त्ति अपर्यादाय परितः—समन्तादगृहीत्वा वैक्रियसमुद्घातेन बाह्यान् पुद्गलान् या विकुर्वणा भवधारणीयवैक्रियशरीररचनालक्षणा स्वस्मिन् २ उत्पत्तिस्थाने जीवैः क्रियते सा एकैव, प्रत्येकमेकत्वाद्भवधारणीयस्येति, सकलवैक्रियशरीरा[र्था]पेक्षया वा भवधारणीयस्यैकलक्षणत्वाद् कथञ्चिदिति, या पुनर्बाह्यपुद्गलपर्यादानपूर्विका सोत्तरवैक्रियरचनालक्षणा, सा च विचित्राभिप्रायपूर्वकत्वाद् वैक्रियलब्धिमतस्तथाविधशक्तिमत्त्वाच्चैकजीवस्याप्यनेकापि स्यादिति पर्यवसितम्, अथ बाह्यपुद्गलोपादान एवोत्तरवैक्रियं भवतीति कुतोऽवसीयते ?, येनेह सूत्रे 'अपरियाइत्ता' इत्यनेन तद्विकुर्वणा व्यवच्छिद्यते इति चेत्, उच्यते, भगवतीवचनात्, तथाहि—''देवे णं भंते! महिड्ढिए जाव महाणुभागे बाहिरए पोग्गलए अपरियाइत्ता पभू एगवन्नं एगरूवं विउव्वित्तए ?, गोयमा! नो इणट्ठे समट्ठे, देवे णं भंते! बाहिरए पोग्गले परियाइत्ता प्रभू ?, हंता पभू''त्ति, इह हि उत्तरवैक्रियं बाह्यपुद्गलादानाद् भवतीति विवक्षितमिति॥ 'एगे मणे'त्ति मननं मनः—औदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो, मनोयोग इति भावः, मन्यते वाऽनेनेति मनो—मनोद्रव्यमात्रमेवेति, तच्च सत्यादिभेदादनेकमपि संज्ञिनां वा असङ्ख्यातत्वादसङ्ख्यातभेदमप्येकं मननलक्षणत्वेन सर्वमनसामेकत्वादिति॥ 'एगा वइ'त्ति वचनं वाक्—औदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो, वाग्योग इति भावः, इयं च सत्यादिभेदादनेकाऽप्येकैव, सर्ववाचां वचनसामान्येऽन्तर्भावादिति॥ 'एगे कायवायामे'त्ति चीयत इति कायः—शरीरं तस्य व्यायामो व्यापारः कायव्यायामः औदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेष इति भावः, स पुनरौदारिकादिभेदेन सप्तप्रकारोऽपि जीवानन्तत्वेनानन्तभेदोऽपि

वा एक एव, कायन्यायमसामान्यादिति, यच्चैकस्यैकदा मनःप्रभृतीनामेकत्वं तत् सूत्र एव विशेषेण वक्ष्यति, 'एगे मणे देवासुरे'त्यादिनेति सामान्याश्रयमेवेहैकत्वं व्याख्यातमिति ॥ 'उप्प'त्ति प्राकृतत्वादुत्पादः, स चैक एकसमये एकपर्यायापेक्षया, न हि तस्य युगपदुत्पादद्वयादिरस्ति, अनपेक्षिततद्विशेषकपदार्थतया वैकोऽसाविति ॥ 'वियइ'त्ति विगतिर्विगमः, सा चैकोत्पादवदिति विकृतिर्विगतिरित्यादिव्याख्यान्तरमप्युचितमायोज्यम्, अस्माभिस्तु उत्पादसूत्रानुगुण्यतो व्याख्यातमिति। वियच्च'त्ति विगतेः प्रागुक्तत्वादिह विगतस्य विगमवतो जीवस्य मृतस्येत्यर्थः अर्चा-शरीरं विगतार्चा, प्राकृतत्वादिति, विवर्चा वा-विशिष्टोपपत्तिपद्धतिर्विशिष्टभूषा वा, सा चैका सामान्यादिति ॥ 'गइ'त्ति मरणानन्तरं मनुजत्वादेः सकाशान्नारकत्वादौ जीवस्य गमनं गतिः, सा चैकदैकस्यैकैव ऋज्वादिका नरकगत्यादिका वा, पुद्गलस्य वा, स्थितिवैलक्षण्यमात्रतया वैकरूपा सर्वजीवपुद्गलानामिति ॥ 'आगइ'त्ति आगमनमागतिः-नारकत्वादेरेव प्रतिनिवृत्तिः, तदेकत्वं गतेरिवेति ॥ 'चयणे'त्ति च्युतिः च्यवनम्-वैमानिकज्योतिष्काणां मरणं, तदेकमेकजीवापेक्षया नानाजीवापेक्षया न पूर्ववदिति ॥ 'उववाए'त्ति उपपतनमुपपातो-देवनारकाणां जन्म, स चैकश्च्यवनवदिति ॥ 'तक्क'त्ति तर्कणं तर्को-विमर्शः अवायात् पूर्वा ईहाया उत्तरा प्रायः शिरःकण्डूयनादयः पुरुषधर्म्मा इह घटन्त इतिसम्प्रत्ययरूपा, इह चैकत्वं प्रागिवेति ॥

'सन्न'त्ति संज्ञानं संज्ञा व्यञ्जनावग्रहोत्तरकालभावी मतिविशेषः आहारभयाद्युपाधिका वा चेतना संज्ञा, अभिधानं वा संज्ञेति ॥ 'मन्न'त्ति प्राकृतत्वान्मननं मतिः-कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मालोचनरूपा बुद्धिरितियावत्, आलोचनमिति केचित्, अथवा मन्ता मन्नियव्वं(मनितव्यं) अभ्युपगम इत्यर्थः, सूत्रद्वयेऽपि सामान्यत एकत्वमिति ॥ 'एगा विन्नु'त्ति विद्वान् विज्ञो वा तुल्यबोधत्वादेक इति, मीलित्वं च प्राकृतत्वात् उत्पाद(स) उप्पावत्, लुप्तभावप्रत्ययत्वाद्वा एका विद्वत्ता विज्ञता वेत्यर्थः ॥ 'वेयण'त्ति

प्राग्वेदना सामान्यकर्मानुभवलक्षणोक्ता इह तु पीडालक्षणैव, सा च सामान्यत एकैवेति ॥ अस्या एव कारणविशेपनिरूपणायाह—'छेयणे'त्ति छेदनं शरीरस्यान्यस्य वा खड्गादिनेति ॥ 'भेयणे'त्ति, भेदनं कुन्तादिना, अथवा छेदनं कर्मणः स्थितिघातः भेदनं तु रसघात इति, एकता च विशेषाविवक्षणादिति। वेदनादिभ्यश्च मरणमतस्तद्विशेपमाह—'एगे मरणे' इत्यादि, मृतिर्मरणं अन्ते भवमन्तिमं—चरमं तच्च तच्छरीरं चेत्यन्तिमशरीरं तत्र भवा अन्तिमशारीरिकी उत्तरपदवृद्धिः, तद्वा तेषामस्तीति अन्तिमशारीरिका दीर्घत्वञ्च प्राकृतशैल्या, तेषां चरमदेहानां, मरणैकता च सिद्धत्वे पुनर्मरणाभावादिति। अन्तिमशरीरश्च स्नातको भूत्वा म्रियते अतस्तमाह—'एगे संसुद्धे' इत्यादि, एकः संशुद्धः—अशबलचरणः अकषायत्वात् 'यथाभूतः' तात्त्विकः ('पत्ते'त्ति) पात्रमिव पात्रमतिशयवद्ज्ञानादिगुणरत्नानां प्राप्तो वा गुणप्रकर्षमिति गम्यते। 'एगे दुक्खे' एकमेवान्तिमभवग्रहणसम्भवं दुःखं यस्य स एकदुःखः 'एगहक्खे'त्ति पाठान्तरे त्वेकधैवाख्या—संशुद्धादिर्व्यपदेशो यस्य, न त्वसंशुद्धसंशुद्धासंशुद्ध इत्यादिकोऽपि, व्यपदेशान्तरनिमित्तस्य कषायादेरभावादिति स भवत्येकधाख्यः, एकधा अक्षो वा—जीवो यस्य स तथेति, जीवानां—प्राणिनामेकभूतः—एक एव—आत्मोपम इत्यर्थः, एकान्तहितवृत्तित्वाद्, एकत्वं चास्य बहूनामपि समस्वभावत्वादिति, अथवा 'पत्ते' इत्यादि सूत्रान्तरं उक्तरूपसंशुद्धादन्येषां स्वरूपप्रतिपादनपरं, तत्र प्राकृतत्वात् प्रत्येकमेकं दुःखं प्रत्येकैकदुःखं जीवानां स्वकृतकर्म्मफलभोगित्वात्, किंभूतं तदित्याह—एकभूतमनन्यतया व्यवस्थितं प्राणिषु, न साङ्ख्यानामिव बाह्यमिति ॥ दुःखं पुनरधर्म्माभिनिवेशादिति तत्स्वरूपमाह—

'एगा अहम्मे'त्यादि, धारयति दुर्गतौ प्रपततो जीवान् धारयति—सुगतौ वा तान् स्थापयतीति धर्म्मः, उक्तञ्च—"दुर्गतिप्रसृतान् जन्तून्, यस्माद्धारयते ततः। धत्ते चैतान् शुभे स्थाने, तस्माद्धर्म्म इति स्मृतः ॥१॥" स च श्रुतचारित्रलक्षणः, तत्प्रतिपक्षस्त्व-

धर्म्मलक्षिणया प्रतिमा-प्रतिज्ञा अधर्म्मप्रधानं शरीरं वा अधर्म्मप्रतिमा, सा चैका, सर्वस्याः परिक्लेशकारणतयैकरूपत्वाद्, अत एवाह-'जं से' इत्यादि, 'यत्' यस्मात् 'से' तस्याः स्वाम्यात्मा-जीवो अथवा 'से'त्ति सोऽधर्म्मप्रतिमावानात्मा परिक्लिश्यते-रागादिभिर्बाध्यते संक्लिश्यत इत्यर्थः, 'जंसी'ति पाठान्तरं वा, ततश्च प्राकृतत्वेन लिङ्गव्यत्ययात् यस्यामधर्म्मप्रतिमायां सत्यामात्मा परिक्लिश्यते सा न एकैवेति । एतद्विपर्ययमाह—'एगा धम्मे'त्यादि, प्राग्वन्नवरं पर्यवाः-ज्ञानादिविशेषा जाता यस्य स पर्यवजातो भवतीति शेषः, विशुध्यतीत्यर्थः, आहिताग्न्यादित्वाच्च जातशब्दस्योत्तरपदत्वमिति, अथवा पर्यवान् पर्यवेषु वा यातः-प्राप्तः पर्यवयातोऽथवा पर्यवः-परिरक्षा परिज्ञानं वा शेषं तथैवेति ॥ धर्म्माधर्म्मप्रतिमे च योगत्रयाद्भवत इति तत्स्वरूपमाह—

'एगे मणे' इत्यादि सूत्रत्रयं, तत्र मन इति मनोयोगः, तच्च यस्मिन् २ समये विचार्यते तस्मिन् २ 'समये' कालविशेष एकमेव, वीप्सानिर्देशेन न क्वचनापि समये तद् व्यादिसंख्यं सम्भवतीत्याह, एकत्वं च तस्यैकोपयोगत्वात् जीवानां, स्यादेतत्-नैकोपयोगो जीवो, युगपच्छीतोष्णस्पर्शविषयसंवेदनद्वयदर्शनात्, तथाविधभिन्नविषयोपयोगपुरुषद्वयवत्, अत्रोच्यते, यदिदं शीतोष्णोपयोगद्वयं तत्क्रमेण भिन्नकालमपि समयमनसोरतिसूक्ष्मतया युगपदिव प्रतीयते, न पुनस्तद्युगपदेवेति, आह च—"समयातिसुहुमयाओ मन्नसि जुगवं च भिन्नकालंपि । उप्पलदलसयवेहं व जह व तमलायचक्कंति ॥१॥" यदि पुनरेकत्रोपयुक्तं मनोऽर्थान्तरमपि संवेदयति तदा किमन्यत्र गतचेताः पुरोऽवस्थितं हस्तिनमपि न विषयीकरोतीति, आह च—"अन्नविणिउत्तमन्नं विणिओगं लहइ जइ मणो तेणं ।

१ समयातिसौक्ष्म्यात् मन्यसे युगपच्च भिन्नकालमपि । उत्पलदलशतवेध इव यथा वा तदलातचक्रमिति ॥१॥ २ अन्यविनियुक्तमन्यं विनियोगं लभते यदि मनस्तेन । पुरतोऽपि स्थितं पुरतः किमन्यचित्तो न लक्षयति ? ॥१॥

हत्थिंपि ठियं पुरओ किमन्नचित्तो न लक्खेइ ? ॥१॥" त्ति इह च बहुवक्तव्यमस्ति तत् स्थानान्तरादवसेयमिति, अथवा सत्यासत्योभयस्वभावानुभयरूपाणां चतुर्णां मनोयोगानामन्यतर एव भवत्येकदा, द्व्यादीनां विरोधेनासम्भवादिति, केषामित्याह—'देवासुरमणुयाणं'ति तत्र दीव्यन्ति इति देवाः—वैमानिकज्योतिष्कास्ते च न सुरा असुराः—भवनपतिव्यन्तरास्ते च मनोर्जाता मनुजा—मनुष्यास्ते च देवासुरमनुजास्तेषां, तथा 'वागि'ति वाग्योगः, स चैषामेकदा एक एव, तथाविधमनोयोगपूर्वकत्वात् तथाविधवाग्योगस्य, सत्यादीनामन्यतरभावाद्वा, वक्ष्यति च—"छहिं ठाणेहिं णत्थि जीवाणं इड्ढी इ वा जाव परक्कमे इ वा, तंजहा—जीवं वा अजीवं करणयाए १, अजीवं वा जीवं करणयाए २, एगसमएणं दो भासाओ भासित्तए" इति । तथा कायव्यायामः—काययोगः, स चैषामेकदा एक एव, सप्तानां काययोगानामेकदा एकतरस्यैव भावात्, ननु यदाहारकप्रयोक्ता भवति तदौदारिकस्यावस्थितस्य श्रूयमाणत्वात् कथमेकदा न काययोगद्वयमिति ?, अत्रोच्यते, सतोऽप्यौदारिकस्य व्यायामाभावादाहारकस्यैव च तत्र व्याप्रियमाणत्वाद्, अप्यौदारिकमपि तदा व्याप्रियते तर्हि मिश्रयोगता भविष्यति, केवलिसमुद्घाते सप्तमषष्ठद्वितीयसमयेष्वौदारिकमिश्रवत्, तथा चाहारकप्रयोक्ता न लभ्येत एवं च सप्तविधकाययोगप्रतिपादनमनर्थकं स्यादित्येक एव कायव्यायाम इति, एवं कृतवैक्रियशरीरस्य चक्रवर्त्यादेरप्यौदारिकं निर्व्यापारमेव, व्यापारवच्चेत् उभयस्य व्यापारवत्त्वे केवलिसमुद्घातवन्मिश्रयोगतेत्येवमप्येकयोगत्वमव्याहतमेवेति, तथा काययोगस्याप्यौदारिकतया वैक्रियतया च क्रमेण व्याप्रियमाणत्वे आशुवृत्तितया मनोयोगवद्यदि यौगपद्यभ्रान्तिः स्यात् तदा को दोष

१ षड्भिः स्थानैर्नास्ति जीवाना ऋद्धिरिति वा यावत्पराक्रम इति वा, तद्यथा—जीवं वाजीवकरणतायै अजीवं वा जीवकरणतायै एकसमयेन द्वे भाषे भाषितुं ॥१॥

इति, एवञ्च काययोगैकत्वे सत्यौदारिकादिकाययोगाहृतमनोद्रव्यवाग्द्रव्यसाचिव्यजातजीवव्यापाररूपत्वात् मनोयोगवाग्योगयोरेककाययोगपूर्वकतयाऽपि प्रागुक्तमेकत्वमवसेयमिति. अथवेदमेव वचनमत्र प्रमाणम्, आज्ञाग्राह्यत्वात् अस्य, यतः—"आणागेज्झो अत्थो आणाए चेव सो कहेयव्वो। दिट्ठंता दिट्ठंतिय कहणविहिविराहणा इहरा ॥१॥" इति, दृष्टान्तदार्ष्टान्तिकोऽर्थ इत्यर्थः। ननु सामान्यार्थैकत्वेनैव सूत्रं गमकं भविष्यतीति किमनेन विशेषव्याख्यानेनेति ?, उच्यते, नैवं, सामान्यैकत्वस्य पूर्वसूत्रैरेवाभिहितत्वादस्य पुनरुक्तत्वप्रसङ्गात्, देवादिग्रहणसमयग्रहणयोश्च वैयर्थ्यप्रसङ्गाच्चेति। इह च देवादिग्रहणं विशिष्टवैक्रियलब्धिसम्पन्नतयैषामनेकशरीररचने सत्येकदा मनोयोगादीनामनेकत्वं शरीरवद् भविष्यतीति प्रतिपत्तिनिरासार्थं, न तु तिर्यग्नारकाणां व्यवच्छेदार्थं, ननु तिर्यग्नारका अपि वैक्रियलब्धिमन्तस्तेषामपि विक्रियायां शरीरानेकत्वेन मनःप्रभृतीनामनेकत्वप्रतिपत्तिः सम्भाव्यत एवेति तद्ग्रहणमपि न्याय्यमिति, सत्यम्. किन्तु देवादीनां विशिष्टतरलब्धितया शरीराणामत्यन्तानेकतेति तद्ग्रहणं, तथा 'प्रधानग्रहण इतरग्रहणं भवती'ति न्यायाद्दोषो. नारकादिभ्यश्च देवादीनां प्रधानत्वं प्रतीतमेवेति, एतेषां च मनःप्रभृतीनां यथाप्राधान्यकृतः क्रमः, प्रधानत्वं च बहुत्वात्पुण्यकर्मक्षयोपशमप्रभवलाभकृतमिति ॥ कायव्यायामस्यैव भेदानामेकतामाह—'एगे उट्ठाणे'त्यादि. उत्थानं च-चेष्टाविशेषः कर्म च-भ्रमणादिक्रिया बलं च-शरीरसामर्थ्यं वीर्यं च-जीवप्रभवं पुरुषकारश्च-अभिमानविशेषः पराक्रमश्च-पुरुषकार एव निष्पादितस्वविषय इति विग्रहे द्वन्द्वैकवद्भावः, एते च वीर्यान्तराय[क्षय]क्षयोपशमसमुत्था जीवपरिणामविशेषाः, एतेषु प्रत्येकमेकशब्दो योजनीयः, वीर्यान्तराय[क्षय]क्षयोपशमवैचित्र्यतः प्रत्येकं जघन्यादिभेदैरनेकत्वेऽप्येषामेकजीवस्यैकदा [क्षय]क्षयोपशममात्राया एकनियता-

१ आज्ञाग्राह्योऽर्थ आज्ञयैव स कथयितव्यः। दृष्टान्तदार्ष्टान्तिकः कथनविधेरितरथा विराधना ॥१॥

देक एव जघन्यादिरेतद्विशेषो भवति कारणमात्राधीनत्वात् कार्यमात्राया इति सूत्रभावार्थः, शेषं प्राग्वदिति ॥ पराक्रमादेश्च ज्ञानादिमोक्षमार्गोऽवाप्यते, यत आह—"अब्भुट्ठाणे[1] विणये परक्कमे साहुसेवणाए य । सम्मद्दंसणलंभो विरयाविरइए विरइए ॥१॥" इति, अतो ज्ञानादीनां निरूपणायाह—'एगे नाणे' इत्यादि, अथवा धर्म्मप्रतिमा प्रागुदिता सा च ज्ञानादिस्वभावेति ज्ञानादीन् निरूपयन्नाह—

ज्ञायन्ते-परिच्छिद्यन्तेऽर्था अनेनास्मिन्नस्माद्वेति ज्ञानं-ज्ञानदर्शनावरणयोः क्षयः क्षयोपशमो वा ज्ञातिर्वा ज्ञानम्-आवरणद्वयक्षयाद्याविर्भूत आत्मपर्यवविशेषः सामान्यविशेषात्मके वस्तुनि विशेषांशग्रहणप्रवणः सामान्यांशग्राहकश्च ज्ञानपञ्चकाज्ञानत्रयदर्शनचतुष्टयरूपः, तच्चानेकमप्यवबोधसामान्यादेकमुपयोगापेक्षया वा, तथाहि-लब्धितो बहूनां बोधविशेषाणामेकदा सम्भवेऽप्युपयोगत एक एव सम्भवति, एकोपयोगत्वाज्जीवानामिति, ननु दर्शनस्य ज्ञानव्यपदेशत्वमयुक्तं, विषयभेदाद्, उक्तञ्च—"जं सामन्नग्गहणं[2] दंसणमेयं विसेसियं नाणं"ति, अत्रोच्यते, ईहावग्रहौ हि दर्शनं, सामान्यग्राहकत्वाद्, अपायधारणे च ज्ञानं, विशेषग्राहकत्वाद्, अथचोभयमपि ज्ञानग्रहणेन गृहीतमागमे "आभिनिबोहियनाणे[3] अट्ठावीसं हवन्ति पयडीउ"त्ति वचनात्, तस्मादवबोधसामान्याद्दर्शनस्यापि ज्ञानव्यपदेश्यत्वमविरुद्धमिति, ननु दर्शनं पृथगेवोपात्तमुत्तरसूत्रे तत्किमिह ज्ञानशब्देन दर्शनमपि व्यपदिष्टमिति ?, अत्रोच्यते, तत्र हि दर्शनं श्रद्धानं विवक्षितं, ज्ञानादित्रयस्य सम्यक्शब्दलाञ्छितत्वे सति मोक्षमार्गत्वेन विवक्षितत्वात्, मोक्षमार्गभूतं चैतत्रयं श्रद्धानपर्यायेणैव दर्शनेन सहेति । 'एगे दंसणे'त्ति, दृश्यन्ते-श्रद्धीयन्ते पदार्था अनेनास्मादस्मिन् वेति दर्शनं-दर्शनमोहनीयस्य क्षयः क्षयोपशमो

१ अभ्युत्थाने विनये पराक्रमे साधुसेवनायां च । सम्यग्दर्शनलाभो विरताविरतेर्विरतेश्च ॥१॥ २ यत् सामान्यग्रहणं दर्शनमेतत् विशेषितं ज्ञानम् । ३ आभिनिबोधिकज्ञाने अष्टाविंशतिर्भवन्ति प्रकृतयः ।

वा, दृष्टिर्वा दर्शनं-दर्शनमोहनीयक्षयाद्याविर्भूततत्त्वश्रद्धानरूप आत्मपरिणामः, तच्चोपाधिभेदादनेकविधमपि श्रद्धानसाम्यादेकम् , एकजीवस्य वैकदा एकस्यैव भावादिति, नन्वनयोरसामान्याज्ज्ञानसम्यक्त्वयोः कः प्रतिविशेषः?, उच्यते, रुचिः सम्यक्त्वं रुचिकारणं तु ज्ञानं यथोक्तम्—"नाणमवायधिईओ दंसणमिट्ठं जहोग्गहेहाओ। तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥१॥"ति, 'चरित्ते'त्ति चर्यते-मुमुक्षुभिरासेव्यते तदिति चर्यते वा गम्यते अनेन निर्वृताविति चरित्रं अथवा चयस्य कर्मणां रिक्तीकरणाच्चरित्रं निरुक्तन्यायादिति-चारित्रमोहनीयक्षयाद्याविर्भूत आत्मनो विरतिरूपः परिणाम इति, तदेवं वक्ष्यमाणानां सामायिकादितद्भेदानां विरतिसामान्यात्सर्वादेकमेकदा भावाद्वेति, एतेषां च ज्ञानादीनामयमेव क्रमो, यतो नाज्ञातं श्रद्धीयते नाश्रद्धत्तं सम्यगनुष्ठीयत इति। ज्ञानादीनि गुणवन्ति विगतिस्थितिमन्ति, स्थितिश्च समयादिकेति समयं प्ररूपयन्नाह—

एगे समए (सू० ४४) एगे पएसे एगे परमाणू (सू० ४५) एगा सिद्धी। एगे सिद्धे। एगे परिनिव्वाणे। एगे परिनिव्वुए (सू० ४६)

'एगे समए' समयः-परमनिरुद्धकाल उत्पलपत्रशतव्यतिभेददृष्टान्ताज्जरत्पट्टसाटिकापाटनदृष्टान्ताच्च समयप्रसिद्धादवबोद्धव्यः, स चैक एव वर्तमानस्वरूपः, अतीतानागतयोर्विनष्टानुत्पन्नत्वेनाभावात् , अथवा असावेकः स्वरूपेण निरंशत्वादिति निरंशवस्त्वधिकारादेवेदं सूत्रद्वयमाह-'एगे पएसे एगे परमाणू' प्रकृष्टो-निरंशो धर्माधर्माकाशजीवानां देशः-अवयवविशेषः प्रदेशः स चैकः स्वरूपतः सद्वितीयत्वादौ देशव्यपदेशत्वेन प्रदेशत्वाभावप्रसङ्गादिति। 'परमाणु'त्ति परमश्चासावात्यन्तिकोऽणुश्च सूक्ष्मः

१ ज्ञानमपायधृती दर्शनमिष्टं यथाऽवग्रहेहे। तथा तत्त्वरुचिः सम्यक्त्वं रोच्यते येन तत् ज्ञानम् ॥१॥

परमाणुः—द्व्यणुकादिस्कन्धानां कारणभूतः, आह च—"कारणमेव तदन्त्यं सूक्ष्मो नित्यश्च भवति परमाणुः। एकरसवर्णगन्धो द्विस्पर्शः कार्यलिङ्गश्च ॥१॥" इति, स च स्वरूपतः एक एवान्यथा परमाणुरेवासौ न स्यादिति। अथवा समयादीनां प्रत्येकमनन्तानामपि तुल्यरूपापेक्षयैकत्वमिति। यथा परमाणोस्तथाविधैकत्वपरिणामविशेषादेकत्वं भवति तथा तत एवानन्ताणुमयस्कन्धस्यापि स्यादिति दर्शयन् सकलबादरस्कन्धप्रधानभूतमीषत्प्राग्भाराभिधानं पृथिवीस्कन्धं प्ररूपयन्नाह—'एगा सिद्धी' सिध्यन्ति—कृतार्था भवन्ति यस्यां सा सिद्धिः, सा च यद्यपि लोकाग्रं, यत आह—"इहं बुंदिं[1] चइत्ताणं, तत्थ गंतूण सिज्झइ"त्ति, तथापि तत्प्रत्यासन्नत्वेषत्प्राग्भाराऽपि तथा व्यपदिश्यते, आह च—"बारसेहिं[2] जोयणेहिं सिद्धी सव्वट्ठसिद्धाउ"त्ति, यदि च लोकाग्रमेव सिद्धिः स्यात् तदा कथमेतदनन्तरमुक्तम्—"निम्मलदगरयवण्णा[3] तुसारगोक्खीरहारसरिवन्ने"त्यादि तत्स्वरूपवर्णनं घटते?, लोकाग्रस्यामूर्त्तत्वादिति, तस्मादीषत्प्राग्भारा सिद्धिरिहोच्यते, सा चैका, द्रव्यार्थतया पञ्चचत्वारिंशद्योजनलक्षप्रमाणस्कन्धस्यैकपरिणामत्वात्, पर्यायार्थतया त्वनन्ता, अथवा कृतकृत्यत्वं लोकाग्रमणिमादिका वा सिद्धिः, एकत्वं च सामान्यत इति। सिद्धेरनन्तरं सिद्धिमन्तमाह—'एगे सिद्धे' सिद्ध्यति स्म—कृतकृत्योऽभवत् सेधति स्म वा—अगच्छत् अपुनरावृत्त्या लोकाग्रमिति सिद्धः, सितं वा—बद्धं कर्म्म ध्मातं—दग्धं यस्य स निरुक्तात् सिद्धः—कर्म्मप्रपञ्चनिर्मुक्तः, स च एको द्रव्यार्थतया, पर्यायार्थतस्त्वनन्तपर्याय इति, अथवा सिद्धानां अनन्तत्वेऽपि तत्सामान्यादेकत्वम्, अथवा कर्म्मशिल्पविद्यामन्त्रयोगागमार्थयात्राबुद्धितपःकर्म्मक्षयभेदेनानेकत्वेऽप्यस्यैकत्वं सिद्धशब्दाभिधेयत्वसाम्यादिति। कर्म्मक्षयसिद्धस्य च परिनिर्वाणं धर्म्मो भवतीति तदाह—'एगे परिनिव्वाणे' परि—समन्तान्निर्वाणं—सकलकर्म्मकृतविकारनिराकरणतः

१ इह तनुं त्यक्त्वा तत्र गत्वा सिध्यन्ति। २ द्वादशभिर्योजनैः सिद्धिः सर्वार्थसिद्धात्। ३ निर्मलदकरजोवर्णा तुषारगोक्षीरहारसदृशवर्णा।

मन्धीभवनं परिनिर्व्वाणं तदेकम्, एकदा तस्य सम्भवे पुनरभावादिति। परिनिर्व्वाणधर्म्मयोगात् स एव कर्मक्षयसिद्धः परिनिर्वृत उच्यते इति तद्दर्शनायाह—'एगे परिनिव्वुए' परिनिर्वृतः सर्वतः शारीरमानसास्वास्थ्यविरहित इति भावः, तदेकत्वं सिद्धस्येव भावनीयमिति। तदेतावता ग्रन्थेनैते प्रायो जीवधर्म्मा एकतया निरूपिताः, इदानीं जीवोपग्राहकत्वात् पुद्गलानां तल्लक्षणाजीवधर्म्मा 'एगे सद्दे' इत्यादिना 'जाव लुक्खे' इत्येतदन्तेन ग्रन्थेनैकतयैव दर्श्यन्ते, पुद्गलादीनां तु सत्ता केषाञ्चिदनुमानतोऽवसीयते घटादिकार्यान्यथानुपपत्तेः केषाञ्चित्सांव्यवहारिकप्रत्यक्षत इति ॥

एगे सद्दे। एगे रूवे। एगे गंधे। एगे रसे। एगे फासे। एगे सुब्भिसद्दे। एगे दुब्भिसद्दे। एगे सुरूवे। एगे दुरूवे। एगे दीहे। एगे हस्से। एगे वट्टे। एगे तंसे। एगे चउरंसे। एगे पिहुले। एगे परिमंडले। एगे किण्हे। एगे णीले। एगे लोहिए। एगे हलिद्दे। एगे सुक्किल्ले। एगे सुब्भिगंधे। एगे दुब्भिगंधे। एगे तित्ते। एगे कडुए। एगे कसाए। एगे अंबिले। एगे महुरे। एगे कक्खडे जाव लुक्खे (सू० ४७)

तत्र शब्दादिसूत्राणि सुगमानि, नवरं शब्द्यते—अभिधीयते अनेनेति शब्दो—ध्वनिः श्रोत्रेन्द्रियविषयः, रूप्यते—अवलोक्यत इति रूपम्—आकारश्चक्षुर्विषयः, घ्रायते—सिङ्घ्यते इति गन्धो—घ्राणविषयः, रस्यते—आस्वाद्यते इति रसः—रसनेन्द्रियविषयः, स्पृश्यते—छुप्यत इति स्पर्शः—स्पर्शनकरणविषयः, शब्दानां चैकत्वं सामान्यतः सजातीयविजातीयव्यावृत्तरूपापेक्षया वा भावनीयं। शब्दभेदावाह—'सुब्भिसद्दे' त्ति शुभशब्दो मनोज्ञ इत्यर्थः, 'दुब्भि' त्ति अशुभो मनोज्ञो यो न भवतीति, एवं च शब्दान्तरमत्रान्तर्भूतमवसेयम्,

एवं रूपव्याख्यानेऽपि, सुरूपादयश्चतुर्दश शुक्लान्ता रूपभेदाः, तत्र सुरूपं–मनोज्ञरूपमितरद्दूरूपमिति । दीर्घम्–आयततरं ह्रस्वं–तदितरद्, वृत्तादयः पञ्च स्कन्धसंस्थानभेदाः, तत्र वृत्तसंस्थानं मोदकवत्, तच्च प्रतरघनभेदात् द्विधा, पुनः प्रत्येकं समविषमप्रदेशावगाढमिति चतुर्द्धा, एवं च शेषाण्यपि, 'तंसे'त्ति तिस्रोऽस्रयः–कोटयो यस्मिंस्तत् त्र्यस्रं–त्रिकोणम्, 'चतुरंसे'त्ति चतस्रोऽस्रयो यस्य तत्तथा–चतुष्कोणमित्यर्थः, तथा 'पिहुले'त्ति पृथुलं–विस्तीर्णम्, अन्यत्र पुनरिह स्थाने आयतमभिधीयते, तदेव चेह दीर्घह्रस्वपृथुलशब्दैर्विभज्योक्तम्, आयतधर्मत्वादेषां, तच्चायतं प्रतरघनश्रेणिभेदात् त्रिधा, पुनरेकैकं समविषमप्रदेशमिति षोढा, यच्चायतभेदयोरपि ह्रस्वदीर्घयोरादावभिधानं तद्वृत्तादिषु संस्थानेष्वायतस्य प्रायोवृत्तिदर्शनार्थं, तथाहि–दीर्घायतः स्तंभो वृत्तस्त्र्यस्रः चतुरस्रश्चेत्यादि भावनीयम्, विचित्रत्वाद्वा सूत्रगतेरेवमुपन्यास इति, 'परिमंडले'त्ति परिमण्डलसंस्थानं वलयाकारं प्रतरघनभेदाद् द्विविधमिति, रूपभेदो वर्णः, स च कृष्णादिः पञ्चधा प्रतीत एव, नवरं हारिद्रः–पीतः, कपिशादयस्तु संसर्गजा इति न तेषामुपन्यासः, गन्धो द्वेधा–सुरभिर्दुरभिश्च, तत्र सौमुख्यकृत्सुरभिर्वैमुख्यकृत् दुरभिः, साधारणपरिणामोऽस्पष्टो दुर्ग्रह इति संसर्गजत्वादेव नोक्त इति, रसः पञ्चधा, तत्र श्लेष्मनाशकृत् तिक्तः १ वैशद्यच्छेदनकृत्कटुकः २ अन्नरुचिस्तम्भनकृत्कषायः ३ आश्रवणक्लेदनकृदम्लः ४ ह्लादनबृंहणकृन्मधुरः ५ संसर्गजो लवण इति नोक्त इति, स्पर्शोऽष्टविधः, तत्र कर्कशः कठिनोऽनमनलक्षणः १ यावत्करणात् मृद्वादयः षडन्ये, तत्र मृदुः सन्नतिलक्षणः २ गुरुरधोगमनहेतुः ३ लघुः प्रायस्तिर्यगूर्ध्वगमनहेतुः ४ शीतो वैशद्यकृत् स्तम्भनस्वभावः ५ उष्णो मार्दवपाककृत् ६ स्निग्धः संयोगे सति संयोगिनां बन्धकारणं ७ रूक्षस्तथैवाबन्धकारणमिति ८। उक्ता पुद्गलधर्म्माणामेकता, इदानीं पुद्गलालिङ्गितजीवाप्रशस्तधर्म्माणामष्टादशानां पापस्थानकाभिधानानां 'एगे पाणाइवाए' इत्यादिना ग्रन्थेन 'दंसणसल्ले' इत्येतदन्तेन

नामेवाह—

एगे पाणातिवाए जाव एगे परिग्गहे। एगे कोधे जाव लोभे। एगे पेज्जे एगे दोसे जाव एगे परपरिवाए। एगा अरतिरती। एगे मायामोसे एगे मिच्छादंसणसल्ले। (सू० ४८)। एगे पाणाइवायवेरमणे जाव परिग्गह वेरमणे। एगे कोहविवेगे जाव मिच्छादंसणसल्लविवेगे (सू० ४९)

तत्र प्राणाः—उच्छ्वासादयस्तेषामतिपातनं—प्राणवता सह वियोजनं प्राणातिपातो हिंसेत्यर्थः, उक्तञ्च—"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायुः। प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोजीकरणं तु हिंसा ॥१॥" इति, स च प्राणातिपातो द्रव्यभावभेदात् द्विविधो, विनाशपरितापसंक्लेशभेदात् त्रिविधो वा, आह च—"तप्पज्जायविणासो दुक्खुप्पाओ य संकिलेसो य। एस वहो जिणभणिओ वज्जेयव्वो पयत्तेणं ॥१॥"ति, अथवा मनोवाक्कायैः करणकारणानुमतिभेदान्नवधा, पुनः स क्रोधादिभेदात् षट्त्रिंशद्विधो वेति १, तथा मृषा—मिथ्या वदनं वादो मृषावादः, स च द्रव्यभावभेदात् द्विधा, अभूतोद्भावनादिभिश्चतुर्धा वा, तथाहि—अभूतोद्भावनं यथा सर्वगत आत्मा, भूतनिह्नवो नास्त्यात्मा, वस्त्वन्तरन्यासो यथा गौरपि सन्नश्वोऽयमिति, निन्दा च यथा कुष्ठी त्वमसीति २, तथा अदत्तस्य—स्वामिजीवतीर्थकरगुरुभिरवितीर्णस्याननुज्ञातस्य सचित्ताचित्तमिश्रभेदस्य वस्तुनः आदानं—ग्रहणमदत्तादानं, चौर्यमित्यर्थः, तच्च विविधोपाधिवशादनेकविधमिति, तथा मिथुनस्य—स्त्रीपुंसलक्षणस्य कर्म्म मैथुनम्—अब्रह्म, तत् मनोवाक्कायानां कृतका-

१ तत्पर्यायविनाशो दुःखोत्पादश्च संक्लेशश्च। एष वधो जिनैर्भणितो वर्जयितव्यः प्रयत्नेन ॥१॥

रितानुमतिभिरौदारिकवक्रियशरीरविषयाभिरष्टादशधा विविधोपाधितो बहुविधतरं वेति ४, तथा परिगृह्यते–स्वीक्रियत इति परिग्रहः, बाह्याभ्यन्तरभेदात् द्विधा, तत्र बाह्यो धर्मसाधनव्यतिरेकेण धनधान्यादिरनेकधा, अ(आ)भ्यन्तरस्तु मिथ्यात्वाविरतिकषायप्रमादादिरनेकधा, परिग्रहणं वा परिग्रहो मूर्च्छेत्यर्थः ५, तथा क्रोधमानमायालोभाः कषायमोहनीयकर्म्मपुद्गलोदयसम्पाद्या जीवपरिणामा इति, एते चानन्तानुबन्ध्यादिभेदतोऽसङ्ख्याताध्यवसायस्थानभेदतो वा बहुविधाः, तथा 'पेज्जे' त्ति प्रियस्य भावः कर्म्म वा प्रेम, तच्चानभिव्यक्तमायालोभलक्षणभेदस्वभावमभिष्वङ्गमात्रमिति १०, तथा—'दोसे'त्ति द्वेषणं द्वेषः, दूषणं वा दोषः, स चानभिव्यक्तक्रोधमानलक्षणभेदस्वभावोऽप्रीतिमात्रमिति ११, 'जाव'त्ति 'कलहे अब्भक्खाणे पेसुण्णे' इत्यर्थः, तत्र कलहो–राटी १२ अभ्याख्यानं–प्रकटमसद्दोषारोपणं १३ पैशून्यं–पिशुनकर्म्म प्रच्छन्नं सदसद्दोषाविर्भावनं १४, परेषां परिवादः परपरिवादो विकत्थनमित्यर्थः १५, अरतिश्च तन्मोहनीयोदयजश्चित्तविकार उद्वेगलक्षणो रतिश्च तथाविधानन्दरूपा अरतिरति इत्येकमेव विवक्षितं, यतः क्वचन विषये या रतिस्तामेव विषयान्तरापेक्षया अरतिं व्यपदिशन्त्येवमरतिमेव रतिमित्यौपचारिकमेकत्वमनयोरस्तीति १६, तथा 'मायामोसं' त्ति माया च–निकृतिर्मृषा च–मृषावादो मायया वा सह मृषा मायामृषा प्राकृतत्वान्मायामोसं, दोषद्वययोगः, इदं च मानमृषादिसंयोगदोषोपलक्षणं, वेषान्तरकरणेन लोकप्रतारणमित्यन्ये, प्रेमादीनि च बहुविधानि विषयभेदेन अध्यवसायस्थानभेदतो वा १७, मिथ्यादर्शनं–विपर्यस्ता दृष्टिः, तदेव तोमरादिशल्यमिव शल्यं दुःखहेतुत्वात् मिथ्यादर्शनशल्यमिति, मिथ्यादर्शनञ्च पञ्चधा–अभिग्रहिकानभिग्रहिकाभिनिवेशिकानाभोगिकसांशयिकभेदाद् उपाधिभेदतो बहुतरभेदं वेति १८ ॥ एतेषां च प्राणातिपातादीनां उक्तक्रमेणानेकविधत्वेऽपि वधादिसाम्यादेकत्वमवगन्तव्यमिति । उक्तान्यष्टादश पापस्थानानि, इदानीं तद्विपक्षाणामेव 'एगे पाणाइवायवेरमणे'

इत्यादिभिरष्टादशभिः सूत्रैरेकतामाह, सुगमानि चैतानि नवरं विरमणं विरतिः, तथा विवेकस्त्याग इति ॥ उक्तं सपुद्गलजीवद्रव्यधर्म्मा-णामेकत्वमिदानीं कालस्य स्थितिरूपत्वेन तद्धर्म्मत्वात् तद्विशेषाणां 'एगा ओसप्पिणी' त्यादिना 'सुसमसुसमे' त्येतदन्तेनैतदेवाह—

**एगा ओसप्पिणी । एगा सुसमसुसमा जाव एगा दूसमदूसमा । एगा उस्सप्पिणी एगा दुस्समदुस्समा जाव एगा सुसमसुसमा । (सू० ५०)**

अथ काल एव कथमवसीयत इति चेत् ?, उच्यते, बकुलचम्पकाशोकादिपुष्पप्रदानस्य नियमेन दर्शनान्नियामकश्च काल इति, तत्र 'ओसप्पिणी'ति अवसर्प्पति हीयमानारकतया अवसर्प्पयति वाऽऽयुष्कशरीरादिभावान् हापयतीत्यवसर्प्पिणी सागरोपमकोटीकोटीद-शकप्रमाणः कालविशेषः सुष्ठु समा सुषमा अत्यन्तं सुषमा सुषमसुषमा अत्यन्तसुखस्वरूपत्तस्या एव प्रथमारक इति, एकत्वं चावसर्प्पि-ण्याः स्वरूपेणैकत्वादेवं सर्वत्र, यावदिति सीमोपदर्शनार्थः, ततश्च सुषमसुषमेत्यादि सूत्रं स्थानान्तरप्रसिद्धं तावदध्येयमिह यावद् 'दूसमदूसमे'ति पदमित्यतिदेशः, अयं च सूत्रलाघवार्थमिति, एवं च सर्वत्र यावदिति व्याख्येयम्, अतिदेशलब्धानि च पदान्येकश-ब्दोपपदान्येतानि—एगा सुसमा एगा सुसमदूसमा एगा दूसमसुसमा एगा दूसमे'ति, आसां स्वरूपं शब्दानुसारतो ज्ञेयं, प्रमाणं पुनरा-द्यानां तिसृणां समानां क्रमेण सागरोपमकोटीकोटयश्चतुस्त्रिद्विसङ्ख्याः, चतुर्थ्यास्त्वेका द्विचत्वारिंशद्वर्षसहस्रोना, अन्त्ययोस्तु प्रत्येकं वर्षसहस्राण्येकविंशतिरिति । तथा उत्सर्प्पति—वर्द्धतेऽरकापेक्षया उत्सर्प्पयति वा भावानायुष्कादीन् वर्द्धयतीति उत्सर्प्पिणी अवसर्प्पिणी-प्रमाणा दुष्ठु समा दुष्षमा—दुःखरूपा अत्यन्तं दुष्षमा दुष्षमदुष्षमा, यावत्करणाद् 'एगा दूसमा एगा दूसमसुसमा एगा सुसमदूसमा

एगा सुसमे'ति दृश्यं, एतत्प्रमाणं च पूर्वोक्तमेव नवरं विपर्यासादिति। कृता जीवपुद्गलकाललक्षणद्रव्यविनिधधर्म्मविशेषाणामेकत्वप्ररूपणा, अधुना संसारिमुक्तजीवपुद्गलद्रव्यविशेषाणां नारकपरमाण्वादीनां समुदायलक्षणधर्म्मस्य 'एगा नेरइयाणं वग्गणे' त्यादिना 'एगा अजहण्णुक्कोसगुणलुक्खाणं पोग्गलाणं वग्गणे' त्येतदन्तेन ग्रन्थेन तामेवाह—

एगा नेरइयाणं वग्गणा एगा असुरकुमाराणं वग्गणा चउवीसदंडओ जाव वेमाणियाणं वग्गणा। एगा भवसिद्धियाणं वग्गणा एगा अभवसिद्धियाणं वग्गणा एगा भवसिद्धिनेरइयाणं वग्गणा एगा अभवसिद्धियाणं णेरतियाणं वग्गणा, एवं जाव एगा भवसिद्धियाणं वेमाणियाणं वग्गणा एगा अभवसिद्धियाणं वेमाणियाणं वग्गणा। एगा सम्मदिट्ठियाणं वग्गणा एगा मिच्छदिट्ठियाणं वग्गणा एगा सम्मामिच्छदिट्ठियाणं वग्गणा। एगा सम्मदिट्ठियाणं णेरइयाणं वग्गणा एगा मिच्छदिट्ठियाणं णेरइयाणं वग्गणा एगा सम्मामिच्छदिट्ठियाणं णेरइयाणं वग्गणा, एवं जाव थणियकुमाराणं वग्गणा। एगा मिच्छादिट्ठियाणं पुढविक्काइयाणं वग्गणा एवं जाव वणस्सईकाइयाणं। एगा सम्मदिट्ठियाणं बेइंदियाणं वग्गणा एगा मिच्छदिट्ठियाणं बेइंदियाणं वग्गणा, एवं तेइंदियाणंपि चउरिंदियाणवि। सेसा जहा नेरइया जाव एगा सम्मामिच्छदिट्ठियाणं वेमाणियाणं वग्गणा॥ एगा सुक्कपक्खियाणं वग्गणा, एगा कण्हपक्खियाणं वग्गणा, एगा कण्हपक्खियाणं णेरइयाणं वग्गणा, एगा सुक्कपक्खियाणं णेरइयाणं वग्गणा, एवं चउवीसदंडओ भाणियव्वो। एगा कण्हलेसाणं वग्गणा एगा नीललेसाणं वग्गणा एवं जाव सुक्कलेसाणं वग्गणा, एगा कण्हलेसाणं नेरइयाणं वग्गणा जाव काउलेसाणं णेरइयाणं वग्गणा

१ स्थानाध्ययने नैरयिकाणां वर्गणाद्याः

॥२५॥

एवं जस्स जइ लेसाओ, भवणवइवाणमंतरपुढविआउवणस्सइकाइयाणं च चत्तारि लेसाओ तेउवाउबेइंदियतिइंदिअचउरिंदियाणं तिन्नि लेसाओ, पंचिंदियतिरिक्खजोणियाणं मणुस्साणं छल्लेसाओ, जोतिसियाणं एगा तेउलेसा, वेमाणियाणं तिन्नि उवरिमलेसाओ। एगा कण्हलेसाणं भवसिद्धियाणं वग्गणा एवं छसुवि लेसासु दो दो पयाणि भाणियव्वाणि। एगा कण्हलेसाणं भवसिद्धिआणं णेरइयाणं वग्गणा एगा कण्हलेसाणं अभवसिद्धियाणं णेइयाणं वग्गणा एवं जस्स जति लेसाओ तस्स तति भाणियव्वाओ जाव वेमाणियाणं। एगा कण्हलेसाणं सम्मद्दिट्ठिआणं वग्गणा, एगा कण्हलेसाणं मिच्छद्दिट्ठियाणं वग्गणा, एगा कण्हलेसाणं सम्मामिच्छद्दिट्ठियाणं वग्गणा, एवं छसुवि लेसासु जाव वेमाणियाणं जेसिं जति दिट्ठीओ। एगा कण्हलेसाणं कण्हपक्खियाणं वग्गणा, एगा कण्हलेसाणं सुक्कपक्खियाणं वग्गणा, जाव वेमाणियाणं जस्स जति लेसाओ एए अट्ठ चउवीसदंडगा॥ एगा तित्थसिद्धाणं वग्गणा, एवं जाव एगा एक्कसिद्धाणं वग्गणा एगा अणिक्कसिद्धाणं वग्गणा एगा पढमसमयसिद्धाणं वग्गणा एवं जाव अणंतसमयसिद्धाणं वग्गणा॥ एगा परमाणुपोग्गलाणं वग्गणा एवं जाव एगा अणंतपएसियाणं खंधाणं वग्गणा। एगा एगपएसोगाढाणं पोग्गलाणं वग्गणा जाव एगा असंखेज्जपएसोगाढाणं पोग्गलाणं वग्गणा। एगा एगसमयठितियाणं पोग्गलाणं वग्गणा जाव असंखेज्जसमयठितियाणं पोग्गलाणं वग्गणा। एगा एगगुणकालगाणं पोग्गलाणं वग्गणा, जाव एगा असंखेज्ज० एगा अणंतगुणकालगाणं पोग्गलाणं वग्गणा। एवं वण्णा गंधा रसा फासा भाणियव्वा जाव एगा अणंतगुणलुक्खाणं

पोग्गलाणं वग्गणा। एगा जहन्नपएसियाणं खंधाणं वग्गणा एगा उक्कस्सपएसियाणं खंधाणं वग्गणा एगा अजहन्नुक्कस्सपएसियाणं खंधाणं वग्गणा। एवं जहन्नोगाहणयाणं उक्कोसोगाहणगाणं अजहन्नुक्कोसोगाहणगाणं जहन्नठितियाणं उक्कस्सठितियाणं अजहन्नुक्कोसठितियाणं जहन्नगुणकालगाणं उक्कस्सगुणकालयाणं अजहन्नुक्कस्सगुणकालगाणं एवं वण्णगंधरसफासाणं वग्गणा भाणियव्वा, जाव एगा अजहन्नुक्कस्सगुणलुक्खाणं पोग्गलाणं वग्गणा ॥ (सू० ५१)

तत्र 'नेरइयाणं'ति निर्गतम्–अविद्यमानमयम्–इष्टफलं कर्म्म येभ्यस्ते निरयास्तेषु भवा नैरयिकाः-क्लिष्टसत्त्वविशेषाः, ते च पृथिवीप्रस्तटनरकावासस्थितिभव्यत्वादिभेदादनेकविधास्तेषां सर्वेषां वर्गणा वर्गः समुदायः, तस्याश्चैकत्वं सर्वत्र नारकत्वादिपर्याय साम्यादिति। तथा असुराश्च ते नवयौवनतया कुमारा इव कुमाराश्चेत्यसुरकुमारास्तेषामेका वर्गणेति, 'चउवीसदंडउ'त्ति चतुर्विंशतिपदप्रतिबद्धो दण्डको वाक्यपद्धतिश्चतुर्विंशतिदण्डकः, स इह वाच्य इति शेषः, स चायं—"नेरइया १ असुरादी १० पुढवाइ ५ बेइंदियादयो चेव ४। नर १ वंतर १ जोतिसिय १ वेमाणी १ दंडओ एवं ॥ १ ॥" भवनपतयो दशधा—"असुरा नाग सुवण्णा विज्जु अग्गी य दीव उदही य। दिसि पवणथणियनामा दसहा एए भवणवासि ॥ २ ॥" त्ति, एतदनुसारेण सूत्राणि वाच्यानि, यावच्चतुर्विंशतितमं 'एगा वेमाणियाणं वग्गण'त्ति, एष सामान्यदण्डकः १। ननु नारकसत्त्वैव दुरुपपादा आस्तां तद्धर्म्मभूताया वर्गणाया

---

१ नैरयिका असुरादयः पृथ्व्यादयो द्वीन्द्रियादयश्चैव। नरा व्यन्तरा ज्योतिष्का वैमानिका दण्डकश्चैवं ॥१॥ २ असुरा नागाः सुपर्णा विद्युतः अग्नयश्च द्वीपा उदधयश्च। दिशः पवनाः स्तनितनामानः दशधा एते भवनवासिनः ॥१॥

एकत्वमनेकत्वं चेति तथाहि—न सन्ति नारकाः, तत्साधकप्रमाणाभावात्, व्योमकुसुमवत्, अत्रोच्यते, प्रमाणाभावादित्यसिद्धो हेतुः, तत्साधकानुमानसद्भावात्, तथाहि—विद्यमानभोक्तृकं प्रकृष्टपापकर्म्मफलं, कर्म्मफलत्वात्, पुण्यकर्मफलवत्, न च तिर्यङ्नरा एव प्रकृष्टपापफलभुजः, तस्यौदारिकशरीरवता वेदयितुमशक्यत्वात्, विशिष्टसुरजन्मनिबन्धनप्रकृष्टपुण्यफलवत्, आह च—"पावफलस्स पगिट्ठस्स भोइणो कम्मओऽवरोमव्व। संति धुवं तेऽभिमया नेरइया अह मई होज्जा ॥१॥ अच्चत्थदुक्खिया जे तिरियनरा नारगत्ति तेऽभिमया। तं न जओ सुरसोक्खप्पगरिससरिसं न तं दुक्खं ॥२॥" त्ति, 'अवसेसव्व' त्ति यथा नारकेभ्योऽन्ये तिर्यङ्नरा इत्यर्थः, अथ सुराणामपि विवादास्पदीभूतत्वात् विशिष्टसुरजन्मनिबन्धनप्रकृष्टपुण्यफलवत् इत्यसिद्धो दृष्टान्तः, अत्रोच्यते, देव इति सार्थकं पदं, व्युत्पत्तिमच्छुद्धपदत्वात्, घटाभिधानवदिति, ततः सन्ति देवा इति प्रत्येतव्यम्, अथ मनुष्येण गुणर्द्धिसंपन्नेनार्थवद् भविष्यति देवपदमिति न विवक्षितदेवसिद्धिरिति, अत्रोच्यते, यदिदं नरविशेषे देवत्वं तदौपचारिकम्, उपचारश्च तथ्यार्थसिद्धौ सत्यां भवति, यथा निरुपचरितसिंहसद्भावे माणवके सिंहोपचार इति, आह च—"देवेत्ति सत्थयमिदं सुद्धत्तणओ घडाभिहाणं व। अह व मती मणुओ चिय देवो गुणरिद्धिसंपन्नो ॥१॥ तं न जओ तच्चत्थे सिद्धे उवयारओ मया सिद्धी। तच्चत्थसीह सिद्धे माणवसीहोवयारोव्व ॥२॥" इति, अपि

१ पापफलस्य प्रकृष्टस्य भोगिनः कर्मत्वात् अवशेषा (प्रकृष्टपुण्यफला देवा) इव। सन्ति ध्रुवं तेऽभिमता नैरयिकाः, अथ मतिर्भवेत् ॥१॥ अत्यर्थदुःखिता ये तिर्यङ्नरा नारका इति तेऽभिमताः। तन्न यतः सुरसौख्यप्रकर्षसदृशं न तद्दुःखम् ॥२॥ २ सव्वत्थ प्र। ३ देव इति सार्थकमिदं शुद्ध(पद)त्वात् घटाभिधानमिव। अथ च मतिर्मनुजश्चैव देवो गुणर्द्धिसंपन्नः ॥१॥ तन्न यतस्तथ्यार्थे सिद्धे उपचारतो मता सिद्धिः। तथ्यार्थसिंहे सिद्धे माणवके सिंहोपचारवत् ॥२॥

च–"देवेसु न संदेहो जुत्तो जं जोइसा सपच्चक्खं। दीसंति तक्कयावि य उवघायाणुग्गहा जगओ ॥१॥ आलयमेत्तं च मई पुरं व तव्वासिणो तहवि सिद्धा। जे ते देवत्ति मया न य निलया निच्चपडिसुण्णा ॥२॥ को जाणइ व किमेयंति होज्ज णिस्संसयं विमाणाइ। रयणमयनभोगमणादिह जह विज्जाहरादीणं ॥३॥" इति, तेषामसुरादिविशेषः पुनराप्तवचनादवसेय इति। अथ पृथिव्यप्तेजोवायुवनस्पतिकायिकाः कथमिह जीवत्वेन प्रतिपत्तव्याः [1], उच्छ्वासादिप्राणिधर्म्माणां तेष्वप्रतीयमानत्वाद्, अत्रोच्यते, आप्तवचनादनुमानतश्च, तत्राप्तवचनमिदमेव, अनुमानं त्विदं–वनस्पतयो विद्रुमलवणोपलादयः[2] स्वस्वाश्रये वर्त्तमानाः सात्मकाः, समानजातीयाङ्कुरसद्भावाद्, अर्शोविकाराङ्कुरवत्, आह च—"मंसंकुरो[3]व्व समाणजाइरूवंकुरोवलभाओ। तरुगणविद्दुमलवणोपलादयो सासयावत्था ॥१॥" इति, इह समानजातिग्रहणं शृङ्गाङ्कुरव्यवच्छेदार्थं, स हि न समानजातीयो भवतीति, तथा सात्मकमम्भो भौमं, भूमिखनने स्वाभाविकसम्भवाद्, दर्दुरवत्, अथवा सात्मकमन्तरिक्षोदकं स्वभावतो व्योमसम्भूतस्य पातात्, मत्स्यवत्, आह च—"भूमिक्खय[5]साभावियसंभवओ दद्दुरोव्व जलमुत्तं,' [सात्मकत्वेनेति]। अहवा मच्छोव सहाववोमसंभूयपायाओ ॥१॥" इति, तथा सात्मको

१ देवेषु न संदेहो युक्तो यत् ज्योतिष्काः स्वप्रत्यक्षेण। दृश्यन्ते तत्कृता अपि चोपघातानुग्रहा जगतः ॥१॥ आलयमात्रं च मतिः पुरमिव तद्वासिनः तथापि सिद्धाः। ये ते देवा इति मता न च निलया नित्यं प्रतिशून्याः ॥२॥ को जानाति किमेतदिति भवेत् ?, निस्संशयं विमानादि। रत्नमयनभोगमनादिह यथा विद्याधरादीनाम् ॥३॥ २ °दयश्च स्वा० प्र। ३ अस्संकुर० प्र। ४ अर्शोऽ(मांसा)ङ्कुर इव समानजातीयरूपाङ्कुरोपलम्भात्। तरुगणविद्रुमलवणोपलादयः स्वाश्रयस्थाः ॥१॥ ५ भूमिक्षतस्वाभाविकसंभवात् दर्दुरवत् जलमुक्तम्। अथवा मत्स्यवत् स्वभावव्योमसंभूतपातात् ॥१॥

वायुरपरप्रेरिततिर्यगनियतदिग्गतित्वाद् गोवत्, इह चापरप्रेरितग्रहणेन लेष्ट्वादिना व्यभिचारः परिहृतः, एवं तिर्यग्ग्रहणेनोर्ध्वगतिना धूमेनानियमितग्रहणेन च नियमितगतिना परमाणुनेति, तथा तेजः सात्मकमाहारोपादानात् तद्वृद्धिविशेषोपलब्धेस्तद्विकारदर्शनाच्च पुरुषवत्, आह च—"अपरप्पेरियतिरियानियमियदिग्गमणओऽनिलो गोव्व। अनलो आहाराओ विद्धिविगारोवलंभाओ ॥१॥" त्ति, अथवा पृथिव्यप्तेजोवायवो जीवशरीराणि, अभ्रादिविकारवर्जितमूर्त्तजातीयत्वात्, गवादिशरीरवदिति, अभ्रादिविकारा हि मूर्त्तजातीयत्वे सत्यपि न जीवतनवस्तेन तत्परिहारो हेतुविशेषणम्, आह च—"[2]तणओऽणब्भाइविगारमुत्तजाइत्तओऽनिलंताइं [भूतानीति गम्यते] सत्थासत्थहयाओ निज्जीवसजीवरूवाओ ॥१॥" त्ति, वनस्पतीनां विशेषेण सचेतनत्वं भाष्यगाथाभिरभिधीयते—"[3]जम्म-जराजीवणमरणरोहणाहारदोहलामयओ। रोगतिगिच्छाईहि य णारिव्व सचेयणा तरवो ॥१॥ छिक्कप्परोइया छिक्कमित्तसंकोयओ कुलिंगिव्व। आसयसंचाराओ वियत्त! वल्ली वियाणाहि ॥२॥" ['वियत्त' त्ति गणधरामन्त्रणमिति] [4]सम्मादयो य सावप्पबोहसंकोयणादिओऽभिमया। बउलादयो य सद्दाइविसयकालोवलंभाओ ॥३॥ त्ति ['सम्मादउ' त्ति शम्यादयः 'विसयकालोवलंभाओ' त्ति विषयाणां—गीतसुरागण्डूषकामिनीचरणताडनादीनां कालो वसन्तादिरिति] १ 'एगा भवसिद्धिये' त्यादि, भविष्यतीति भवा—भाविनी

१ अपरप्रेरिततिर्यगनियमितदिग्गमनादनिलो गोवत्। अनल आहारात् वृद्धिविकारोपलम्भात् ॥१॥ २ तनवोऽनभ्रादिविकारा मूर्त्तजातित्वात् अनिलान्तानि। शस्त्राशस्त्रहतानि निर्जीवसजीवरूपाणि ॥१॥ ३ जन्मजराजीवनमरणरोहणाहारदोहदामयात्। रोगचिकित्सादिभिश्च नारीव सचेतनास्तरवः ॥१॥ स्पृष्टप्ररोहिका स्पृष्टमात्रात् संकोचनः कुलिङ्गिवत्। आश्रयसंचारात् व्यक्त! वल्लीर्विजानीहि (सचेतनाः) ॥२॥ ४ शम्यादयश्च स्वापावबोधसंकोचनादितोऽभिमताः। बकुलादयश्च शब्दादिविषयकालोपलम्भात् ॥१॥

सा सिद्धिः—निर्वृतिर्येषां ते भवसिद्धिका—भव्याः, तद्विपरीतास्त्वभवसिद्धिका अभव्या इत्यर्थः। ननु जीवत्वे समाने सति को भव्याभव्ययोर्विशेषः ?, उच्यते, स्वभावकृतो, द्रव्यत्वेन समानयोर्जीवनभसोरिव, आह च—"[1]दव्वाइत्ते तुल्ले जीवनभाणं सभावओ भेदो। जीवाजीवाइगओ जह तह भव्वेयरविसेसो॥१॥" त्ति, आभ्यां विशेषितोऽन्यो दण्डकः २। 'एगा सम्मद्दिट्ठियाण'मित्यादि, सम्यग्—अविपरीता दृष्टिः—दर्शनं रुचिस्तत्त्वानि प्रति येषां ते सम्यग्दृष्टिकाः, ते च मिथ्यात्वमोहनीयक्षयक्षयोपशमोपशमेभ्यो भवन्ति, तथा मिथ्या—विपर्यासवती जिनाभिहितार्थसार्थाश्रद्धानवती दृष्टिः—दर्शनं श्रद्धानं येषां ते मिथ्यादृष्टिकाः—मिथ्यात्वमोहनीयकर्मोदयादरुचितजिनवचना इति भावः, उक्तञ्च—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः। मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥१॥" इति। तथा सम्यक् मिथ्या च दृष्टिर्येषां ते सम्यग्मिथ्यादृष्टिकाः—जिनोक्तभावान् प्रत्युदासीनाः, इह च गम्भीरभवोदधिमध्यविपरिवर्त्ती जन्तुरनाभोगनिर्वर्तितेन गिरिसरिदुपलघोलनाकल्पेन यथाप्रवृत्तिकरणेन संपादितान्तःसागरोपमकोटाकोटीस्थितिकस्य मिथ्यात्ववेदनीयस्य कर्मणः स्थितेरन्तर्मुहूर्त्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तिकरणसंज्ञिताभ्यां विशुद्धिविशेषाभ्यामन्तर्मुहूर्त्तकालप्रमाणमन्तरकरणं करोति, तस्मिन् कृते तस्य कर्म्मणः स्थितिद्वयं भवति, अन्तरकरणादधस्तनी प्रथमस्थितिरन्तर्मुहूर्त्तमात्रा, तस्मादेवोपरितनी शेषा, तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिः, अन्तर्मुहूर्त्तेन तु तस्यामपगतायामन्तरकरणप्रथमसमय एवौपशमिकसम्यक्त्वमाप्नोति, मिथ्यात्वदलिकवेदनाऽभावात्, यथा हि दवानलः पूर्वदग्धेन्धनमूषरं वा देशमवाप्य विध्यायति तथा मिथ्यात्ववेदनाग्निरन्तरकरणमवाप्य विध्यायतीति, तदेवं सम्यक्त्वमौषधविशेषकल्पमासाद्य

[1] द्रव्यादित्वे तुल्ये जीवनभसोः स्वभावतो भेदः। जीवाजीवादिगतो यथा तथा भव्येतरविशेषः ॥१॥

मदनकोद्रवस्थानीयं दर्शनमोहनीयमशुद्धं कर्म त्रिधा भवति—अशुद्धमर्धविशुद्धं विशुद्धं चेति, त्रयाणां तेषां पुञ्जानां मध्ये यदाऽर्द्धविशुद्धः पुञ्ज उदेति तदा तदुदयवशादर्द्धविशुद्धमर्हद्दृष्टतत्त्वश्रद्धानं भवति जीवस्य, तेन तदाऽसौ सम्यग्मिथ्यादृष्टिर्भवति अन्तमुहूर्त्तं यावत्, तत ऊर्ध्वं सम्यक्त्वपुञ्जं मिथ्यात्वपुञ्जं वा गच्छतीति, सम्यग्दृष्टिमिथ्यादृष्टिमिश्रविशेषितोऽन्यो दण्डकः, तत्र च नारकादिष्वेकादशसु पदेषु दर्शनत्रयमस्ति, अत उक्तम्—'एवं जाव थणिए'त्यादि, पृथिव्यादीनां मिथ्यात्वमेव, तेन तेषां तेनैव व्यपदेशः, उक्तञ्च—'चोद्दस तस सेसया मिच्छ' त्ति चतुर्दशगुणस्थानकवन्तस्त्रसाः स्थावरास्तु मिथ्यादृष्टय एवेत्यर्थः। द्वीन्द्रियादीनां मिश्रं नास्ति, संज्ञिनामेव तद्भावात्, ततस्तेषु सम्यग्दृष्टिमिथ्यादृष्टितयैव व्यपदेशः, एवं 'तेइंदियाणवि चउरिंदियाणवि'त्ति द्वीन्द्रियवत् व्यपदेशद्वयेन वर्गणैकत्वं वाच्यम्, पञ्चेन्द्रियतिर्यगादीनां दर्शनत्रयमप्यस्ति ततस्त्रिधाऽपि तद्व्यपदेशः, अत एवोक्तम्—'सेसा जहा नेरइय'त्ति तथा वाच्या इति शेषः, दण्डकपर्यन्तसूत्रं पुनरिदम् 'एगा सम्मदिट्ठियाणं वेमाणियाणं वग्गणा, एवं मिच्छदिट्ठियाणं, एवं सम्मामिच्छादिट्ठियाणं, एतत्पर्यन्तमाह—जाव एगा सम्मामिच्छेत्यादि ३। 'एगा कण्हपक्खियाणं' इत्यादि, कृष्णपाक्षिकेतरयोर्लक्षणं—"जेसिमवड्ढो पोग्गलपरियट्टो सेसओ उ संसारो। ते सुक्कपक्खिया खलु अहिए पुण किण्हपक्खीआ ॥१॥" इति, एतद्विशेषितोऽन्यो दण्डकः ४॥ 'एगा कण्हले ाण'मित्यादि, लिश्यते प्राणी कर्मणा यया सा लेश्या, यदाह—"श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः" तथा "कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं लेश्याशब्दः प्रयुज्यते ॥१॥" इति, इयं च शरीरनामकर्मपरिणतिरूपा योगपरिणतिरूपत्वात्, योगस्य च शरीरनामकर्मपरिणतिविशेषत्वात्,

१. येषामपार्धपुद्गलपरावर्तः शेषस्तु संसारः। ते शुक्लपाक्षिकाः खलु अधिके पुनः कृष्णपाक्षिकाः ॥१॥

यत उक्तं प्रज्ञापनावृत्तिकृता—"योगपरिणामो लेश्या, कथं पुनर्योगपरिणामो लेश्या?, यस्मात् सयोगिकेवली शुक्ललेश्यापरिणामेन विहृत्यान्तर्मुहूर्त्ते शेषे योगनिरोधं करोति ततोऽयोगित्वमलेश्यत्वं च प्राप्नोति अतोऽवगम्यते 'योगपरिणामो लेश्ये'ति, स पुनर्योगः शरीरनामकर्म्मपरिणतिविशेषः, यस्मादुक्तम्—"कर्म्म हि कार्मणस्य कारणमन्येषां च शरीराणा"मिति," तस्मादौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः १, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्यात् जीवव्यापारो यः स वाग्योगः २, तथौदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्यात् जीवव्यापारो यः स मनोयोग इति ३, ततो यथैव कायादिकरणयुक्तस्यात्मनो वीर्यपरिणतिर्योग उच्यते तथैव लेश्यापीति, अन्ये तु व्याचक्षते—'कर्म्मनिस्यन्दो लेश्ये'ति, सा च द्रव्यभावभेदात् द्विधा, तत्र द्रव्यलेश्या कृष्णादिद्रव्याण्येव, भावलेश्या तु तज्जन्यो जीवपरिणाम इति, इयं च षट्प्रकारा जम्बूफलखादकपुरुषषट्कदृष्टान्ताद् ग्रामघातकचौरपुरुषषट्कदृष्टान्ताद्वा आगमप्रसिद्धादवसेयेति, तत्सूत्राणि सुगमानि, नवरं कृष्णवर्णद्रव्यसाचिव्यात् जाताऽशुभपरिणामरूपा कृष्णा सा लेश्या येषां ते तथा, एवं शेषाण्यपि पदानि, नवरं नीला ईषत्सुन्दररूपैवमिति—अनेनैव क्रमेण यावत्करणात् 'एगा कावोयलेस्साण'मित्यादि सूत्रत्रयं दृश्यं, तत्र कपोतस्य—पक्षिविशेषस्य वर्णेन तुल्यानि यानि द्रव्याणि धूम्राणि इत्यर्थः, तत्साहाय्याज्जाता कापोतलेश्या मनाक् शुभतरा सा लेश्या येषां ते तथा, तेजः—अग्निज्वाला तद्वर्णानि यानि द्रव्याणि लोहितानीत्यर्थः, तत्साचिव्याज्जाता तेजोलेश्या शुभस्वभावा, पद्मगर्भवर्णानि यानि द्रव्याणि पीतानीत्यर्थः तत्साचिव्याज्जाता पद्मलेश्या शुभतरा, शुक्लवर्णद्रव्यजनिता शुक्ला, अत्यन्तशुभेति। एतासां च विशेषतः स्वरूपं लेश्याध्ययनादवसेयमिति, 'एव जस्स जइ'त्ति नारकाणामिव यस्यासुरादेर्या यावत्यो लेश्यास्तदुद्देशेन तद्वर्गणैकत्वं वाच्यं, 'भवणे'त्यादिना तल्लेश्यापरिमाणमाह, अत्र संग्रहणी—

"काऊ नीला किण्हा लेसाओ तिन्नि होंति नरएसुं। तइयाए काउनीला [पृथिव्यामित्यर्थः] नीला किण्हा य रिट्ठाए [पञ्चम्यामित्यर्थः] ॥१॥ किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया। जोइससोहंमीसाण तेउलेसा मुणेयव्वा ॥ २ ॥ कप्पे सणंकुमारे माहिंदे चेव बंभलोए य। एएसु पम्हलेसा तेण परं सुक्कलेसा उ ॥ ३ ॥ पुढवी आउ वणस्सइ बायर पत्तेय लेस चत्तारि। गब्भयतिरियनरेसुं छल्लेसा तिन्नि सेसाणं ॥४॥" अयं सामान्यो लेश्यादण्डकः ५। अयमेव भव्याभव्यविशेषणादन्यः, 'एगा कण्हलेसाणं भवसिद्धियाणं वग्गणे'त्यादि 'एव'मिति कृष्णलेश्यायामिव 'छसुवि'त्ति कृष्णया सह षट्सु, अन्यथा अन्या पञ्चैवातिदेश्या भवन्तीति, द्वे द्वे पदे प्रतिलेश्यं भव्याभव्यलक्षणे वाच्ये, यथा 'एगा नीललेसाणं भवसिद्धियाणं वग्गणे'त्यादि ६, लेश्यादण्डक एव दर्शनत्रयविशेषितोऽन्यः, 'एगा कण्हलेसाणं सम्मद्दिट्ठियाण'मित्यादि 'जेसिं जइ दिट्ठीओ'त्ति येषां नारकादीनां या यावत्यो दृष्टयः सम्यक्त्वाद्यास्तेषां ता वाच्या इति, तत्र एकेन्द्रियाणां मिथ्यात्वमेव, विकलेन्द्रियाणां सम्यक्त्वमिथ्यात्वे, शेषाणां तिस्रोऽपि दृष्टय इति ७, लेश्यादण्डक एव कृष्णशुक्लपक्षविशिष्टोऽन्यः, 'एगा कण्हलेसाणं कण्हपक्खीयाण'मित्यादि, एते 'अट्ठ चउवीसदंडय'त्ति। एते चैवं—ओहो १ भव्वाईहिं विसेसिओ २ दंसणेहिं ३ पक्खेहिं ४। लेसाहिं ५ भव्व ६ दंसण ७ पक्खेहिं ८ विसिट्ठ

१ कापोता नीला कृष्णा लेश्यास्तिस्रो भवन्ति नरकेषु। तृतीयायां कापोता नीला (च) नीला कृष्णा च रिष्टायाम् ॥१॥ कृष्णानीलाकापोतातेजोलेश्याश्च भवनव्यन्तराः। ज्योतिष्कसौधर्मेशानेषु च तेजोलेश्या मुणितव्याः ॥२॥ कल्पे सनत्कुमारे माहेन्द्रे चैव ब्रह्मलोके च। एतेषु पद्मलेश्यास्ततः परं शुक्ललेश्यास्तु ॥३॥ पृथ्व्यब्वनस्पतिबादरप्रत्येकेषु लेश्याश्चतस्रः। गर्भजतिर्यग्नरेषु षड्लेश्याः तिस्रः शेषाणाम् ॥४॥ २ ओघो भव्याभव्याभ्यां विशेषितः दर्शनैः पक्षाभ्यां। लेश्याभिर्भव्यदर्शनपक्षैर्विशिष्टाभिर्लेश्याभिः ॥१॥

लेसाहिं ॥१॥ ति ॥ इतः सिद्धवर्ग्गणा अभिधीयते, तत्र सिद्धा द्विधा-अनन्तरसिद्धपरम्परसिद्धभेदात्, तत्रानन्तरसिद्धाः पञ्चदशविधाः, तद्वर्गणैकत्वमाह—'एगा तित्थे'त्यादिना, तत्र तीर्यतेऽनेनेति तीर्थं। द्रव्यतो नद्यादीनां समोऽनपायश्च भूभागो मौतादिप्रवचनं वा, द्रव्यतीर्थता त्वस्याप्रधानत्वाद्, अप्रधानत्वं च भावतस्तरणीयस्य संसारसागरस्य तेन तरीतुमशक्यत्वात्, सावद्यत्वादस्येति, भावतीर्थं तु सङ्घो, यतो ज्ञानादिभावेन तद्विपक्षादज्ञानादितो भवाच्च भावभूतात् तारयतीति, आह च—"जं णाणदंसणचरित्तभावओ तव्विवक्खभावाओ। भवभावओ य तारेइ तेण तं भावओ तित्थं॥१॥" ति, त्रिषु वा-क्रोधाग्निदाहोपशमलोभतृष्णानिरासकर्म्ममलापनयनलक्षणेषु ज्ञानादिलक्षणेषु वा अर्थेषु तिष्ठतीति त्रिस्थं, प्राकृतत्वात् तित्थं, आह च—"दाहोवसमादिसु वा जं तिसु थियमहव दंसणाईसुं। तो तित्थं सङ्घो चिय उभयं च विसेसणविसेसं॥१॥" ति, 'विशेषणविशेष्य'मिति तीर्थं सङ्घ इति सङ्घो वा तीर्थमिति, त्रयो वा क्रोधाग्निदाहोपशमादयोऽर्थाः-फलानि यस्य तत् त्र्यर्थं, तित्थंति पूर्ववत्, आह च—"कोहग्गिदाहसमणादओ व ते चेव तिन्नि जस्सऽत्था। होइ तियत्थं तित्थं तमत्थसद्दो फलत्थोऽयं॥१॥" अथवा त्रयो ज्ञानादयोऽर्थाः-वस्तुनि यस्य तत् त्र्यर्थम्, आह च—"अहवा सम्मद्दंसणनाणचरित्ताइं तिन्नि जस्सऽत्था। तं तित्थं पुव्वोदियमिहमत्थो वत्थुपज्जाओ॥१॥" त्ति॥ तत्र तीर्थे सति सिद्धाः-निर्वृतास्तीर्थसिद्धा ऋषभसेनगणधरादिवत् तेषां वर्ग्गणेति ?, तथा अतीर्थे-तीर्थान्तरे साधुव्यवच्छेदे जातिसरणादिना

१ यत् ज्ञानदर्शनचारित्रभावतस्तद्विपक्षभावात्। भवभावतश्च तारयति तेन तद्भावतस्तीर्थम् ॥१॥ २ दाहोपशमादिषु वा यत् त्रिषु स्थितमथवा दर्शनादिषु। ततस्तीर्थं सङ्घ एवोभयं च विशेषणविशेष्यम् ॥१॥ ३ क्रोधाग्निदाहशमनादयो वा ते चैव त्रयो यस्यार्थाः। भवति त्र्यर्थं तीर्थं तत् अर्थशब्दः फलार्थोऽयम् ॥१॥ ४ अथवा सम्यग्दर्शनज्ञानचारित्राणि त्रयो यस्यार्थाः। तत् तीर्थं पूर्वोदितमिहार्थो वस्तुपर्यायः ॥१॥ ५ अनादि तीर्थ-

प्राप्तापवर्गमार्गा मरुदेवीवत् सिद्धा अतीर्थसिद्धास्तेषां २, एवंकरणात् 'एगा तित्थगरसिद्धाणं वग्गणे'त्यादि दृश्यं, तीर्थमुक्तरूपं तत्कुर्वन्त्यानुलोम्येन हेतुत्वेन तच्छीलतया वेति तीर्थकराः, आह च—"अणुलोमहेउतस्सीलयाय जे भावतित्थमेयं तु। कुव्वंति पगासंति उ ते तित्थगरा हियत्थकरा ॥ १ ॥" इति, तीर्थकराः सन्तो ये सिद्धास्ते तीर्थकरसिद्धा ऋषभादिवत् तेषां ३, अतीर्थकरसिद्धाः सामान्यकेवलिनः सन्तो ये सिद्धा गौतमादिवत् तेषाम् ४, तथा स्वयम्—आत्मना बुद्धाः—तत्त्वं ज्ञातवन्तः स्वयम्बुद्धास्ते सन्तो ये सिद्धास्ते तथा तेषां ५, तथा प्रतीत्यैकं किञ्चित् वृषभादिकं अनित्यतादिभावनाकारणं वस्तु बुद्धाः—बुद्धवन्तः परमार्थमिति प्रत्येकबुद्धास्ते सन्तो ये सिद्धास्ते तथा तेषां ६, स्वयम्बुद्धप्रत्येकबुद्धानां च बोध्युपधिश्रुतलिङ्गकृतो विशेषः, तथाहि—स्वयम्बुद्धानां बाह्यनिमित्तमन्तरेणैव बोधिः प्रत्येकबुद्धानां तु तदपेक्षया, करकण्ड्वादीनामिवेति, उपधिः स्वयम्बुद्धानां पात्रादिर्द्वादशविधः, तद्यथा—'पत्तं १ पत्ताबंधो २ पायठवणं ३ च पायकेसरिया ४। पडलाइं ५ रयत्ताणं च ६ गोच्छओ ७ पायनिज्जोगो ॥ १ ॥ तिन्नेव य पच्छागा १० रयहरणं ११ चेव होई मुहपोत्ति १२ ॥" त्ति, प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्ज इति, स्वयम्बुद्धानां पूर्वाधीते श्रुते अनियमः प्रत्येकबुद्धानां तु नियमतो भवत्येव, लिङ्गप्रतिपत्तिः स्वयम्बुद्धानामाचार्यसन्निधावपि भवति. प्रत्येकबुद्धानां तु देवता प्रयच्छतीति। बुद्धबोधिताः—आचार्यादिबोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धास्तेषां ७, एतेषामेव स्त्रीलिङ्गसिद्धानां ८ पुल्लिङ्ग-

... तीर्थान्तरता अत एव ... साधुव्यनेत्यादिना।

१ आनुलोम्यहेतुतच्छीलतया ये भावतीर्थमेतत्तु। कुर्वन्ति प्रकाशयन्ति तु ते तीर्थकरा हितार्थकराः ॥१॥ २ पात्राणि पात्रबन्धः पात्रस्थापनं पात्रकेसरिका। पटलानि रजस्त्राणं च गोच्छकः पात्रनिर्योगः ॥१॥ त्रय एव प्रच्छादका रजोहरणमेव भवति मुखवस्त्रिका।

लेसाहिं ॥ १ ॥ ति ॥ इतः सिद्धवर्ग्गणा अभिधीयते, तत्र सिद्धा द्विधा–अनन्तरसिद्धपरम्परसिद्धभेदात्, तत्रानन्तरसिद्धाः पञ्चदशविधाः, तद्वर्गणैकत्वमाह—'एगा तित्थे'त्यादिना, तत्र तीर्यतेऽनेनेति तीर्थं। द्रव्यतो नद्यादीनां समोऽनपायश्च भूभागो भौतादिप्रवचनं वा, द्रव्यतीर्थता त्वस्याप्रधानत्वाद्, अप्रधानत्वं च भावतस्तरणीयस्य संसारसागरस्य तेन तरीतुमशक्यत्वात्, सावद्यत्वादस्येति, भावतीर्थं तु सङ्घो, यतो ज्ञानादिभावेन तद्विपक्षादज्ञानादितो भवाच्च भावभूतात् तारयतीति, आह च—"जं णाणदंसणचरित्तभावओ तव्विवक्खभावाओ। भवभावओ य तारेइ तेण तं भावओ तित्थं ॥ १ ॥" ति, त्रिषु वा–क्रोधाग्निदाहोपशमलोभतृष्णानिरासकर्म्ममलापनयनलक्षणेषु ज्ञानादिलक्षणेषु वा अर्थेषु तिष्ठतीति त्रिस्थं, प्राकृतत्वात् तित्थं, आह च—"दाहोवसमादिसु वा जं तिसु थियमहव दंसणाईसुं। तो तित्थं सङ्घो च्चिय उभयं च विसेसणविसेसं ॥ १ ॥" ति, 'विशेषणविशेष्य'मिति तीर्थं सङ्घ इति सङ्घो वा तीर्थमिति, त्रयो वा क्रोधाग्निदाहोपशमादयोऽर्थाः–फलानि यस्य तत् त्र्यर्थं, तित्थंति पूर्ववत्, आह च—"कोहग्गिदाहसमणादओ व ते चेव तिन्नि जस्सऽत्था। होइ तियत्थं तित्थं तमत्थसद्दो फलत्थोऽयं ॥१॥" अथवा त्रयो ज्ञानादयोऽर्थाः–वस्तुनि यस्य तत् त्र्यर्थम्, आह च—"अहवा सम्मद्दंसणनाणचरित्ताइं तिन्नि जस्सऽत्था। तं तित्थं पुव्वोदियमिहमत्थो वत्थुपज्जाओ ॥ १ ॥" त्ति ॥ तत्र तीर्थे सति सिद्धाः–निर्वृतास्तीर्थसिद्धा ऋषभसेनगणधरादिवत् तेषां वर्ग्गणेति ?, तथा अतीर्थे–तीर्थान्तरे साधुव्यवच्छेदे जातिस्मरणादिना

१ यत् ज्ञानदर्शनचारित्रभावतस्तद्विपक्षभावात्। भवभावतश्च तारयति तेन तद्भावतस्तीर्थम् ॥१॥ २ दाहोपशमादिषु वा यत् त्रिषु स्थितमथवा दर्शनादिषु। ततस्तीर्थं सङ्घ एवोभयं च विशेषणविशेष्यम् ॥१॥ ३ क्रोधाग्निदाहशमनादयो वा ते चैव त्रयो यस्यार्थाः। भवति त्र्यर्थं तीर्थं तत् अर्थशब्दः फलार्थोऽयम् ॥१॥ ४ अथवा सम्यग्दर्शनज्ञानचारित्राणि त्रयो यस्यार्थाः। तत् तीर्थं पूर्वोदितमिहार्थो वस्तुपर्यायः ॥१॥ ५ अनादि तीर्थ-

प्राप्तापवर्गमार्गा मरुदेवीवत् सिद्धा अतीर्थसिद्धास्तेषां २, एवंकरणात् 'एगा तित्थगरसिद्धाणं वग्गणे'त्यादि दृश्यं, तीर्थमुक्तलक्षणं तत्कुर्वन्त्यानुलोम्येन हेतुत्वेन तच्छीलतया वेति तीर्थकराः, आह च—"अणुलोमहेउतस्सीलयाय जे भावतित्थमेयं तु। कुव्वंति पगासंति उ ते तित्थगरा हियत्थकरा ॥ १ ॥" इति, तीर्थकराः सन्तो ये सिद्धास्ते तीर्थकरसिद्धा ऋषभादिवत् तेषां ३, अतीर्थकरसिद्धाः सामान्यकेवलिनः सन्तो ये सिद्धा गौतमादिवत् तेषाम् ४, तथा स्वयम्—आत्मना बुद्धाः—तत्त्वं ज्ञातवन्तः स्वयम्बुद्धास्ते सन्तो ये सिद्धास्ते तथा तेषां ५, तथा प्रतीत्यैकं किञ्चित् वृषभादिकं अनित्यतादिभावनाकारणं वस्तु बुद्धाः—बुद्धवन्तः परमार्थमिति प्रत्येकबुद्धास्ते सन्तो ये सिद्धास्ते तथा तेषां ६, स्वयम्बुद्धप्रत्येकबुद्धानां च बोध्युपधिश्रुतलिङ्गकृतो विशेषः, तथाहि—स्वयम्बुद्धानां बाह्यनिमित्तमन्तरेणैव बोधिः प्रत्येकबुद्धानां तु तदपेक्षया, करकण्ड्वादीनामिवेति, उपधिः स्वयम्बुद्धानां पात्रादिर्द्वादशविधः, तद्यथा—'पत्तं १ पत्ताबंधो २ पायठवणं ३ च पायकेसरिया ४। पडलाइ ५ रयत्ताणं च ६ गोच्छओ ७ पायनिज्जोगो ॥ १ ॥ तिन्नेव य पच्छागा १० रयहरणं ११ चेव होई मुहपोत्ति १२ ॥" त्ति, प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्ज इति, स्वयम्बुद्धानां पूर्वाधीते श्रुते अनियमः प्रत्येकबुद्धानां तु नियमतो भवत्येव, लिङ्गप्रतिपत्तिः स्वयम्बुद्धानामाचार्यसन्निधावपि भवति प्रत्येकबुद्धानां तु देवता प्रयच्छतीति। बुद्धबोधिताः—आचार्यादिबोधिताः सन्तो ये सिद्धास्ते बुद्धबोधितसिद्धास्तेषां ७, एतेषामेव स्त्रीलिङ्गसिद्धानां ८ पुल्लिङ्ग-

गिरुक्तेऽपि तीर्थान्तरता अत एव विशिष्टता साधुव्यनेत्यादिना।

१ आनुलोम्यहेतुतच्छीलतया ये भावतीर्थमेतत्तु। कुर्वन्ति प्रकाशयन्ति तु ते तीर्थंकरा हितार्थकराः ॥१॥ २ पात्राणि पात्रबन्धः पात्रस्थापनं पात्रकेसरिका। पटलानि रजस्त्राणं च गोच्छकः पात्रनिर्योगः ॥१॥ त्रय एव प्रच्छादका रजोहरणमेव भवति मुखवस्त्रिका।

सिद्धानां ९ नपुंसकलिङ्गसिद्धानां १० स्वलिङ्गसिद्धानां रजोहरणाद्यपेक्षया ११ अन्यलिङ्गसिद्धानां परिव्राजकादिलिङ्गसिद्धानां १२ गृहिलिङ्गसिद्धानां मरुदेवीप्रभृतीनां १३ एकसिद्धानामेकैकस्मिन् समये एकैकसिद्धानां १४ अनेकसिद्धानामेकसमये द्व्यादीनां अष्टशतान्तानां सिद्धानामेका वर्गणेति १५ । तत्रानेकसमयसिद्धानां प्ररूपणा, गाथा—'बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा । चुलसीई छन्नउई दुरहियअट्ठोत्तरसयं च ॥ १ ॥" एतद्विवरणं–यदा एकसमयेन एकादय उत्कर्षेण द्वात्रिंशत् सिध्यन्ति तदा द्वितीयेऽपि समये द्वात्रिंशद्, एवं नैरन्तर्येण अष्टौ समयान् यावत् द्वात्रिंशत् सिध्यन्ति, तत ऊर्ध्वमवश्यमेवान्तरं भवतीति, यदा पुनस्त्रयस्त्रिंशद(त आ)रभ्य अष्टचत्वारिंशदन्ताः एकसमयेन सिद्ध्यन्ति, तदा निरन्तरं सप्त समयान् यावत् सिद्ध्यन्ति, ततोऽवश्यमेवान्तरं भवतीति, एवं यदा एकोनपञ्चाशतमादि कृत्वा यावत् षष्टिरेकसमयेन सिद्ध्यन्ति तदा निरन्तरं षट् समयान् सिद्ध्यन्ति, तदुपरि अन्तरं समयादिर्भवति, एवमन्यत्रापि योज्यम्, यावत् अष्टशतमेकसमयेन यदा सि[illegible]ति तदाऽवश्यमेव समयाद्यन्तरं भवतीति । अन्ये तु व्याचक्षते–अष्टौ समयान् यदा नैरन्तर्येण सिद्धिस्तदा प्रथमसमये जघन्येनैकः सिध्यत्युत्कृष्टतो द्वात्रिंशदिति, द्वितीयसमये जघन्येनैकः उत्कृष्टतोऽष्टचत्वारिंशत्, तदेवं सर्वत्र जघन्येनैकः समय उत्कृष्टतो गाथार्थोऽयं भावनीयः बत्तीसेत्यादि ॥ एवमनन्तरसिद्धानां तीर्थादिना भूतभावेन प्रत्यासत्तिव्यपदेश्यत्वेन पञ्चदशविधानां वर्ग्गणैकत्वमुक्तं, इदानीं परम्परसिद्धानामुच्यते, तत्र 'अपढमसमयसिद्धाण'मित्यादित्रयोदशसूत्री, न प्रथमसमयसिद्धाः अप्रथमसमयसिद्धाः सिद्धत्वद्वितीयसमयवर्त्तिनः तेषामेवं 'जाव'त्तिकरणाद् 'दुसमयसिद्धाणं तिचउपंचछसत्तट्ठनवदससंखेज्जासंखेज्जसमयसिद्धाण'मिति दृश्यं, तत्र सिद्धत्वस्य तृतीयादिषु समयेषु द्विसमयसिद्धादयः प्रोच्यन्ते, यद्वा सामान्येनाप्रथमसमयाभिधानं विशेषतो द्विसमयाद्यभिधानमिति, अतस्तेषां वर्गणा, क्वचित् 'पढमसमयसिद्धाणं'ति

पाठः, तत्र अनन्तरपरम्परसमयसिद्धलक्षणं भेदमकृत्वा प्रथमसमयसिद्धा अनन्तरसिद्धा एव व्याख्यातव्याः, द्व्यादिसमयसिद्धास्तु यथाश्रुता एवेति ॥ इतो द्रव्यक्षेत्रकालभावानाश्रित्य पुद्गलवर्गणैकत्वं चिन्त्यते—पूरणगलनधर्माणः पुद्गलाः, ते च स्कन्धा अपि स्युरिति विशेषयति–परमाणवो–निष्प्रदेशास्ते च पुद्गलाश्चेति विग्रहस्तेषां, एवंकरणात् 'दुपएसियाणं खंधाणं तिचउपंचछसत्तट्ठन-वदसगसंखेज्जपएसियाणं असंखेज्जपएसियाण'मिति दृश्यमिति, कृता द्रव्यतः पुद्गलचिन्ता, अतः क्षेत्रतः क्रियते—'एगा एगपएसे'त्यादि, एकस्मिन् प्रदेशे क्षेत्रस्यावगाढाः–अवस्थिता एकप्रदेशावगाढास्तेषां ते च परमाण्वादयोऽनन्तप्रादेशिकस्कन्धान्ताः स्युः, अचिन्त्यत्वात् द्रव्यपरिणामस्य, यथा पारदस्यैकेन कर्षेण चारिताः सुवर्णस्य ते सप्ताप्येकीभवन्ति, पुनर्वामिताः प्रयोगतः सप्तैव त इति, 'जाव एगा असंखेज्जपएसोगाढाणं'ति, अनन्तप्रदेशावगाहित्वं तु नास्ति पुद्गलानां, लोकलक्षणस्यावगाहक्षेत्रस्याप्यसङ्ख्येयप्रदेशत्वादिति, कालत आह—'एगा एगसमय'त्यादि, एकं समयं यावत् स्थितिः–परमाणुत्वादिना एकप्रदेशावगाढादित्वेन एकगुणकालादित्वेन वाऽवस्थानं येषां ते एकसमयस्थितिकास्तेषामिति, इह च अनन्तसमयस्थितेः पुद्गलानामभावाद् असङ्खेज्जसमयट्ठितीयाणमित्युक्तमिति, भावतः पुद्गलानाह—एकेन गुणो—गुणनं ताडनं यस्य स एकगुणः, एकगुणः कालो वर्णो येषां ते एकगुणकालकाः, तारतम्येन कृष्ण-तरकृष्णतमादीनां येभ्य आरभ्य प्रथममुत्कर्षप्रवृत्तिर्भवतीति भावस्तेषाम्, एवं सर्वाण्यपि भावसूत्राणि षष्ट्यधिकद्विशतप्रमाणानि वाच्यानि २६०, विंशतेः कृष्णादिभावानां त्रयोदशभिर्गुणनादिति । साम्प्रतं भङ्ग्यन्तरेण द्रव्यादिविशेषितानां जघन्यादिभेदभिन्नानां स्कन्धानां वर्गणैकत्वमाह—'एगा जहन्नपएसियाण'मित्यादि, जघन्याः–सर्वाल्पाः प्रदेशाः–परमाणवस्ते सन्ति येषां ते जघन्य-

१ एकगुणादय अनन्ताः संख्येयासंख्येयानन्ताश्चेति त्रयोदश ।

प्रदेशिकाः, द्व्यणुकादय[1] इत्यर्थः, स्कन्धाः-अणुसमुदयास्तेषां उत्कर्षन्तीत्युत्कर्षाः-उत्कर्षवन्तः उत्कृष्टसङ्ख्याः परमानन्ताः प्रदेशाः-अणवस्ते सन्ति येषां ते उत्कर्षप्रदेशिकाः तेषां, जघन्याश्च उत्कर्षाश्च जघन्योत्कर्षाः न तथा ये ते अजघन्योत्कर्षाः, मध्यमा इत्यर्थः, ते प्रदेशाः सन्ति येषां ते अजघन्योत्कर्षप्रदेशिकास्तेषाम् , एतेषां चानन्तवर्गणत्वेऽप्यजघन्योत्कर्षशब्दव्यपदेश्यत्वादेकवर्गणात्वमिति । 'जहन्नोगाहणगाणं'ति अवगाहन्ते-आसते यस्यां साऽवगाहना-क्षेत्रप्रदेशरूपा सा जघन्या येषां ते स्वार्थिककप्रत्ययाज्जघन्यावगाहनकास्तेषाम् , एकप्रदेशावगाढानामित्यर्थः, उत्कर्षावगाहनकानामसङ्ख्यातप्रदेशावगाढानामित्यर्थः, अजघन्योत्कर्षावगाहनकानां सङ्ख्येयासङ्ख्येयप्रदेशावगाढानामित्यर्थः । जघन्या-जघन्यसङ्ख्या समयापेक्षया स्थितिर्येषां ते जघन्यस्थितिकाः,एकसमयस्थितिका इत्यर्थः, तेषां, उत्कर्षा-उत्कर्षवत्सङ्ख्या समयापेक्षया स्थितिर्येषां ते तथा तेषामसङ्ख्यातसमयस्थितिकानामित्यर्थः, तृतीयं कण्ठ्यं, जघन्येन-जघन्यसङ्ख्याविशेषेणैकेनेत्यर्थः गुणो-गुणनं ताडनं यस्य स तथा(तथा)विधः कालो वर्णो येषां ते जघन्यगुणकालकास्तेषाम् , एवमुत्कर्षगुणकालकानामनन्तगुणकालकानामित्यर्थः, तृतीयं कण्ठ्यं, एवं भावसूत्राण्यपि षष्टिर्भावनीयानीति ॥ सामान्यस्कन्धवर्गणैकत्वाधिकारादेवाजघन्योत्कर्षप्रदेशिकस्याजघन्योत्कर्षप्रदेशावगाढस्य स्कन्धविशेषस्यैकत्वमाह—

**एगे जंबूदीवे २ सव्वदीवसमुद्दाणं जाव अद्धंगुलगं च किंचिविसेसाहिए परिक्खेवेणं (सू० ५२) एगे समणे भगवं महावीरे इमीसे ओसप्पिणीए चउव्वीसाए तित्थगराणं चरमतित्थयरे सिद्धे बुद्धे मुत्ते जाव सव्वदुक्खप्पहीणे (सू० ५३) अणुत्तरोववाइयाणं देवाणं एगा रयणी उड्ढंउच्चत्तेणं पन्नत्ता (सू० ५४) अद्दाणक्खत्ते एगतारे**

१ स्वस्ववर्गणायां जघन्यानां वर्गणानामनेकविधत्वात् द्व्यणुकादय इति ।

नक्षत्त चित्ताणक्खत्ते एगतारे पं० सातीणक्खत्ते एगतारे पं० (सू० ५२) एगपदेसोगाढा पोग्गला अणंता पन्नत्ता,
एवमेगसमयठितिया एगगुणकालगा पोग्गला अणंता पन्नत्ता, जाव एगगुणलुक्खा पोग्गला अणंता पन्नत्ता॥
(सू० ५३) एगट्ठाणं समत्तं ॥०॥

जम्ब्वा-वृक्षविशेषेणोपलक्षितो द्वीपः जम्बूद्वीपः द्वीप इति नाम सामान्यं यावद्ग्रहणादेवं सूत्रं द्रष्टव्यम्—'सव्वब्भंतरए सव्व-
खुड्डाए वट्टे तेल्लापूयसंठाणसंठिए एगं जोयणसयसहस्सं आयामविक्खंभेणं तिन्नि जोयणसयसहस्साइं सोलससहस्साइं दोन्नि सयाइं
सत्तावीसाइं तिन्नि कोसा अट्ठावीसं धणुसयं तेरस अंगुलाइं अद्धंगुलं च किंचिविसेसाहिए परिक्खेवेणं'ति, सुगममेतत्, उक्तविशेषणश्च
जम्बूद्वीप एक एव, अन्यथा अनेकेऽपि ते सन्तीति ॥ अनन्तरं जम्बूद्वीप उक्त इति तत्प्ररूपकस्य भगवतो महावीरस्यैकतामाह—
'एगे समणे'इत्यादि, एकः-असहायः, अस्य च सिद्ध इत्यादिना सम्बन्धः, श्राम्यति-तपस्यतीति श्रमणः, भज्यत इति भगः-सम-
ग्रैश्वर्यादिलक्षणः, उक्तं च—"ऐश्वर्यस्य समग्रस्य, रूपस्य यशसः श्रियः। धर्मस्याथ प्रयत्नस्य, पण्णां भग इतीङ्गना ॥१॥" इति,
स विद्यते यस्येति भगवान्, तथा विशेषेणेरयति-मोक्षं प्रति गच्छति गमयति वा प्राणिनः, प्रेरयति वा-कर्म्माणि निराकरोति, वीरय-
यति वा-रागादिशत्रून् प्रति पराक्रमयति इति वीरः, निरुक्तितो वा वीरो, यदाह—"विदारयति यत्कर्म्म, तपसा च विराजते।
तपोवीर्येण युक्तश्च, तस्माद् वीर इति स्मृतः ॥१॥" इतरवीरापेक्षया महांश्चासौ वीरश्चेति महावीरः, भाष्योक्तं च—'तिहुयणविक्खा-

१ त्रिभुवनविख्यातयशा महायशा नामतो महावीरः। विक्रान्तश्च कषायादिशत्रुसैन्यपराजयात् ॥१॥ ईरयति विशेषेण वा क्षपयति कर्माणि
गमयति शि॰ वा ।;गच्छति च तेन वीरः स महान् वीरो महावीरः ॥२॥

यजसो महाजसो नामओ महावीरो । विक्तो य कसायाइसत्तुसेन्नप्पराजओ ॥१॥ ईरेइ विसेसेण व खिवइ कम्माई गमयइ सिवं वा । गच्छइ अ तेण वीरो स महं वीरो महावीरो ॥२॥" त्ति ॥ अस्यामवसर्प्पिण्यां चतुर्विंशतेस्तीर्थकराणां मध्ये चरमतीर्थंकरः सिद्धः—कृतार्थो जातः बुद्धः—केवलज्ञानेन बुद्धवान् बोध्यं, मुक्तः—कर्म्मभिः यावत्करणात् 'अंतकडे' अन्तो भवस्य कृतो येन सोऽन्तकृतः 'परिनिव्वुडे' परिनिर्वृतः कर्म्मकृतविकारविरहात् स्वस्थीभूतः, किमुक्तं भवति ?—सव्वदुःक्खप्पहीणे—सर्वाणि शारीरादीनि दुःखानि प्रक्षीणानि प्रहीणानि वा यस्य स सर्वदुःखप्रक्षीणः सर्वदुःखप्रहीणो वा, सर्वत्र बहुव्रीहौ क्तान्तस्य यः परनिपातः स आहिताग्न्यादिदर्शनादिति, इह च तीर्थकरेष्वेतस्यैवैकत्वं मोक्षगमने, न तु ऋषभादीनां, दशसहस्रादिपरिवृतत्वेन तेषां सिद्धत्वाद्, उक्तं च—"[2]एगो भगवं वीरो तेत्तीसाएँ सह निव्वुओ पासो । छत्तीसएहिं पंचहिं सएहिं नेमी उ सिद्धिं गओ ॥१॥" इत्यादि ॥ एकाकी वीरो निर्वृत इत्युक्तं, निर्वृतिक्षेत्रासन्नानि चानुत्तरविमानानीति तन्निवासिदेवमानं[3]माह—'अनुत्तरे'त्यादि, अनुत्तरत्वादनुत्तराणि—विजयादिविमानानि तेषु य उपपातो—जन्म स विद्यते येषां तेऽनुत्तरोपपातिकास्ते, णंकारो वाक्यालङ्कारे, देवाः—सुरा एकां रत्निं—हस्तं यावत् 'क्रोशं कौटिल्येन नदी'तिवदिह द्वितीया, 'उड्ढंउच्चत्तेणं' ति वस्तुनो ह्यनेकधोच्चत्वम्, ऊर्ध्वस्थितस्यैकमपरं तिर्यक्स्थितस्यान्यत् गुणोन्नतिरूपम्; तत्रेतरापोहेनोर्ध्वस्थितस्य यदुच्चत्वं तदूर्ध्वोच्चत्वमित्यागमे रूढमिति तेनोर्ध्वोच्चत्वेन, अनुस्वारः प्राकृतत्वात्, प्रज्ञप्ताः—प्ररूपिताः सर्वविद्भिरिति, अथवा अनुत्तरोपपातिकानां देवानामूर्ध्वोच्चत्वेन प्रमाणमिति शेषः, एका रत्निः प्रज्ञ-

१ एवं प्रकारेण तु भाष्योक्तमिति संबन्धः । २ एको भगवान् वीरस्त्रयस्त्रिंशता सह निर्वृतः पार्श्वः । षट्त्रिंशदधिकैः पञ्चभिः शतैर्नेमिस्तु सिद्धिं गतः ॥१॥ ३ °वदेहमान° मुद्रिते ।

मेति व्याख्येयमिति॥ देवाधिकारादेव नक्षत्रदेवानां 'अट्ठा नक्खत्ते'इत्यादिना कण्ठयेन सूत्रत्रयेण तारैकत्वमुक्तम्, तारा च—ज्योतिर्विमानरूपेति, कृत्तिकादिषु च नक्षत्रेष्विदं ताराप्रमाणम्—'छ ६ प्पंच ५ तिन्नि ३ एगं १ चउ ४ तिग ३ रस ६ वेय ४ जुयल २ जुयलं च २। इंदिय ५ एगं १ एगं १ विसय ६ गि ३ समुद्द ४ बारसगं १२ ॥१॥ चउरो ४ तिय ३ तिय ३ तिय ३ पंच ५ सत्त ७ दु २ दु २ भवे तिया तिन्नि ३-३-३। रिक्खे तारपमाणं जइ तिहितुल्लं हयं कज्जं ॥२॥" ति, इह चैकस्थानकानुरोधान्नक्षत्रत्रयस्य ताराप्रमाणमुक्तं, शेपनक्षत्राणां तु प्रायोऽग्रेतनाध्ययनेषु तद् वक्ष्यति, यस्तु क्वचिद्विसंवादस्ताराप्रमाणस्य स तथाविधप्रयोजनेषु तिथिविशेषस्य नक्षत्रविशेषयुक्तस्याशुभत्वसूचनार्थत्वेनोक्तगाथयोर्मतान्तरभूतत्वान्न बाधक इति। तारा पुद्गलरूपेति पुद्गलस्वरूपमभिधातुमाह—'एगपएसोगाढे' इत्यादि सुगमं, नवरमेकत्र प्रदेशे-क्षेत्रस्यांशविशेषे अवगाढाः—आश्रिता एकप्रदेशावगाढाः, ते च परमाणुरूपाः स्कन्धरूपाश्चेति, एवं वर्ण ५ गन्ध २ रस ५ स्पर्श ५ भेदविशिष्टाः पुद्गला वाच्याः, अत एवोक्तम्—'जाव एगगुणलुक्खे'इत्यादि॥ तदेवमनुगमोऽभिहितः, अधुना कथञ्चित्पत्यत्रस्थानावसरे भणितमपि नयद्वारमनुयोगद्वारक्रमायातमिति पुनर्विशेपेणोच्यते—तत्र नैगमादयः सप्त नयाः, ते च ज्ञाननये क्रियानये चान्तर्भवन्तीति ताभ्यामध्ययनमिदं विचार्यते—तत्र ज्ञानचरणात्मकेऽस्मिन्नध्ययने ज्ञाननयो ज्ञानमेव प्रधानमिच्छति, ज्ञानाधीनत्वात् सकलपुरुषार्थसिद्धेः, यतः—"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता। मिथ्याज्ञानात् प्रवृत्तस्य, फलप्राप्तेरसम्भवाद् ॥१॥"इत्यत ऐहिकामुष्मिकफलार्थिना ज्ञान एव यत्नो विधेय इति। क्रियानयस्तु क्रियामेवेच्छति, तस्या एव पुरुषार्थसिद्धावुपयुज्यमानत्वात्, तथा चोक्तम्—"क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥१॥" इत्यत ऐहिकामुष्मिकफलार्थिना क्रियैव कार्येति। जिनमते, तु नानयोः प्रत्येकं पुरुपार्थ-

साधनता, यत उक्तम्—"हयं नाणं कियाहीणं, हया अन्नाणओ किया। पासंतो पंगुलो दड्ढो, धावमाणो य अंधओ ॥१॥" त्ति, संयोग एव चानयोः फलसाधकत्वं, यत उक्तम्—"संजोगसिद्धीइ फलं वयंति, नहु एगचक्केण रहो पयाइ। अंधो य पंगू य वणे समिच्चा, ते संपउत्ता नगरं पविट्ठा ॥१॥" इति ॥ भाष्यकृताऽप्युक्तम्—"नाणाहीणं सव्वं नाणणओ भणति किं च किरियाए?। किरियाए करणनओ तदुभयगाहो य सम्मत्त ॥१॥" ति, अथवा सप्तापि नैगमादयः सामान्यनये चान्तर्भवन्ति, तत्र सामान्यनयः प्रक्रान्ताध्ययनोक्तानामात्मादिपदार्थानामेकत्वमेवाभिमन्यते, सामान्यवादित्वात् तस्य, स हि ब्रूते—एकं नित्यं निरवयवं निष्क्रियं सर्वगं च सामान्यमेवास्ति, न विशेषो, निःसामान्यत्वात्, इह यन्निःसामान्यं तन्नास्ति यथा खरविषाणं, यच्चास्ति न तन्निःसामान्यं यथा घट इति, तथा सामान्यादन्येऽनन्ये वा विशेषाः प्रतिपद्येरन्?, यद्यन्ये ननूक्तमसन्तस्ते निःसामान्यत्वात् खपुष्पवत्, अथानन्ये तदा सामान्यमात्रमेव, तत्र वा विशेषोपचारः, न चोपचारेणार्थतत्त्वं चिन्त्यत इति, आह च—"एक्कं निच्चं निरवयवमक्कियं सव्वगं च सामन्नं। निस्सामन्नत्ताओ नत्थि विसेसो खपुप्फं व ॥१॥ तथा—सामन्नाओ विसेसो अन्नोऽनन्नो व होज्ज? जइ अन्नो। सो नत्थि खपुप्फं पिवऽणन्नो सामन्नमेव तयं ॥२॥" ति, तदेवं सामान्यनयाभिप्रायेणात्मादीनामेकत्वमेव। विशेषनयमतेन तु तेषामनेकत्वमेव,

---

१ हतं ज्ञानं क्रियाहीनं हताऽज्ञानतः क्रिया। पश्यन् पङ्गुर्दग्धो धावंश्चान्धः ॥१॥ संयोगसिद्धेः फलं वदन्ति, नैवैकचक्रेण रथः प्रयाति। अन्धश्च पङ्गुश्च वने समेत्य तौ संप्रयुक्तौ नगरं प्रविष्टौ ॥१॥ज्ञानाधीनं सर्वं ज्ञाननयो भणति किंच क्रियया?। क्रियायाः करणनयस्तदुभयग्रहश्च सम्यक्त्वम् ॥१॥ २ एकं नित्यं निरवयवमक्रियं सर्वगं च सामान्यम्। निस्सामान्यत्वात् नास्ति विशेषः खपुष्पवत् ॥१॥ सामान्याद्विशेषः अन्योऽनन्यो वा भवेत्? यद्यन्यः। स नास्ति खपुष्पमिव अनन्यः सामान्यमेव तकत् ॥२॥

स हि अतो-विशेषेभ्यः सामान्यं भिन्नमभिन्नं वा स्यात् ?, न भिन्नमत्यन्तानुपलम्भात् खपुष्पवत्, तथा-न सामान्यं विशेषेभ्यो भिन्नमस्ति, दाहपाकस्नानपानावगाहवाहदोहादिसर्वसंव्यवहाराभावात् खरविषाणवत्, अथाभिन्नं तदा विशेषमात्रं वस्तु न नाम सामान्यमस्ति तेषु वा सामान्यमात्रोपचार इति. न चोपचारेणार्थतत्त्वं चिन्त्यत इति, आह च—"न विसेसत्थंतरभूयमत्थि सामन्नमाह ववहारो। उवलंभव्ववहाराभावाओ खरविसाणं व ॥१॥" इति, तदेवमात्मादीनामनेकत्वमेवेति । ननु पक्षद्वयेऽपि युक्तिसम्भवात् किं तत्त्वं प्रतिपत्तव्यमिति ?, उच्यते, स्यादेकत्वं स्यादनेकत्वमिति, तथाहि-समविषयरूपत्वाद्वस्तुनः समरूपापेक्षया एकत्वं विषमरूपापेक्षया त्वनेकत्वमिति, उक्तञ्च-"वस्तुन एव समानः परिणामो यः स एव सामान्यम् । विपरीतास्तु विशेषा वस्त्वेकमनेकरूपं तद् ॥१॥" इति॥

१ न विशेषार्थान्तरभूतमस्ति सामान्यमाह व्यवहारः । उपलम्भव्यवहाराभावात् खरविषाणमिव ॥१॥

इति श्रीमदभयदेवसूरिविरचिते स्थानाख्यतृतीयाङ्गविवरणे प्रथममध्ययनमेकस्थानकाभिधानं समाप्तमिति, ( ग्रन्थाग्रं ११८७॥ )

# अथ द्वितीयं द्विस्थानकाख्यमध्ययनम्

व्याख्यातमेकस्थानकाख्यं प्रथममध्ययनं, अतः सङ्ख्याक्रमसम्बद्धमेव द्विस्थानकाख्यं द्वितीयमध्ययनमारभ्यते, अस्य चायं विशेषसम्बन्धः–इह जैनानां सामान्यविशेषात्मकं वस्तु, तत्र सामान्यमाश्रित्य प्रथमाध्ययने आत्मादिवस्त्वेकत्वेन प्ररूपितमिह तु विशेषाश्रयणात् तदेव द्विविधत्वेन प्ररूप्यत इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराण्युपक्रमादीनि भवन्ति, तानि च प्रथमाध्ययनवत् द्रष्टव्यानि यस्तु विशेषः स स्वबुद्ध्याऽवगन्तव्यः, केवलमस्य चतुरुद्देशकात्मकस्याध्ययनस्य सूत्रानुगमे प्रथमोद्देशकादिसूत्रमिदमुच्चारणीयम्––

जदत्थि णं लोगे तं सव्वं दुपओआरं, तंजहा–जीवच्चेव अजीवच्चेव। तसे चेव थावरे चेव १, सजोणियच्चेव अजोणियच्चेव २, साउयच्चेव अणाउयच्चेव ३, सइंदियच्चेव, अणिंदिए चेव ४, सवेयगा चेव अवेयगा चेव ५, सरूवि चेव अरूवि चेव ६, सपोग्गला चेव अपोग्गला चेव ७, संसारसमावन्नगा चेव असंसारसमावन्नगा चेव ८, सासया चेव असासया चेव ९। (सू० ५७)

अस्य च पूर्वसूत्रेण सहायं सम्बन्धः–पूर्वं ह्युक्तम् 'एकगुणरूक्षाः पुद्गलाः अनन्ताः, तत्र किमनेकगुणरूक्षा अपि पुद्गला भवन्ति येन ते एकगुणरूक्षतया विशिष्यन्त इति ?, उच्यते, भवन्त्येव, यतो 'जदत्थी'त्यादि, परम्परसूत्रसम्बन्धस्तु–– 'श्रुतं मयाऽऽयुष्मता भगवतैवमाख्यातमेक आत्मे' त्यादि, तथेदमपरमाख्यातं 'जदत्थी' त्यादि, संहितादिचर्चः पूर्ववत् , 'यद्', जीवादिकं वस्तु 'अस्ति'

विद्यते, णमिति वाक्यालङ्कारे, क्वचित्पाठो 'जदत्थि च णं'ति, तत्रानुस्वार आगमिकश्चशब्दः पुनरर्थः, एवं चास्य प्रयोगः—अस्त्यात्मादि वस्तु, पूर्वाध्ययनप्ररूपितत्वाद्, यच्चास्ति 'लोके' पञ्चास्तिकायात्मके लोक्यते—प्रमीयत इति लोक इति व्युत्पत्त्या, लोकालोकरूपे वा तत् 'सर्वं' निरवशेषं द्वयोः पदयोः—स्थानयोः पक्षयोर्विवक्षितवस्तुतद्विपर्ययलक्षणयोरवतारो यस्य तद् द्विपदावतारमिति, 'दुपडोयारं' ति क्वचित् पठ्यते, तत्र द्वयोः प्रत्यवतारो यस्य तत् द्विप्रत्यवतारमिति, स्वरूपवत् प्रतिपक्षवच्चेत्यर्थः, 'तद्यथे'त्युदाहरणोपन्यासे, 'जीवच्चेव अजीवच्चेव' त्ति, जीवाश्चैवाजीवाश्चैव, प्राकृतत्वात् संयुक्तपरत्वेन ह्रस्वः, चकारौ समुच्चयार्थौ, एवकाराववधारणे, तेन च राश्यन्तरापोहमाह, नोजीवाख्यं राश्यन्तरमस्तीति चेत्, नैवम्, सर्वनिषेधकत्वे नोशब्दस्य नोजीवशब्देनाजीव एव प्रतीयते, देशनिषेधकत्वे तु जीवदेश एव प्रतीयते. न च देशो देशिनोऽत्यन्तव्यतिरिक्त इति जीव एवासाविति, 'चेय' इति वा एवकारार्थः 'चिय चेय एवार्थ' इति वचनात्, ततश्च जीवा एवेति विवक्षितवस्तु अजीवा एवेति च तत्प्रतिपक्ष इति, एवं सर्वत्र, अथवा 'यदस्ति' अस्तीति यत् सन्मात्रं यदित्यर्थः तद् द्विपदावतारं—द्विविधं, जीवाजीवभेदादिति, शेषं तथैव । अथ त्रसेत्यादिकया नवसूत्र्या जीवतत्त्वस्यैव भेदान् सप्रतिपक्षानुपदर्शयति—'तसे चेवे'त्यादि, तत्र त्रसनामकर्मोदयतस्त्रसन्तीति त्रसाः—द्वीन्द्रियादयः, स्थावरनामकर्मोदयात् तिष्ठन्तीत्येवंशीलाः स्थावराः—पृथिव्यादयः, सह योन्या—उत्पत्तिस्थानेन सयोनिकाः—संसारिणस्तद्विपर्यासभूताः अयोनिकाः—सिद्धाः, सहायुषा वर्तन्त इति सायुषस्तद्व्यवच्छेदेनानायुषः—सिद्धाः, एवं सेन्द्रियाः—संसारिणः, अनिन्द्रियाः—सिद्धादयः, सवेदकाः—स्त्रीवेदाद्युदयवन्तः, अवेदकाः—सिद्धादयः, सह रूपेण—मूर्त्या वर्तन्त इति समासान्ते इन्प्रत्यये सति सरूपिणः—संस्थानवर्णादिमन्तः सशरीरा इत्यर्थः, न रूपिणोऽरूपिणो—मुक्ताः,

१ भाविना सयोगिकेवल्यादयः, तेषां क्षायोपशमिकभावाभावात्, क्षायोपशमिकानि चेन्द्रियाणि ।

सपुद्गलाः कर्म्मादिपुद्गलवन्तो जीवाः, अपुद्गलाः–सिद्धाः, संसारं–भवं समापन्नकाः–आश्रिताः संसारसमापन्नकाः–संसारिणः, तदितरे सिद्धाः, शाश्वताः–सिद्धाः जन्ममरणादिरहितत्वाद्, अशाश्वताः–संसारिणस्तद्युक्तत्वादिति ॥ एवं जीवतत्त्वस्य द्विपदावतारं निरूप्याजीवतत्त्वस्य तं निरूपयन्नाह–

आगासा चेव नोआगासा चेव। धम्मे चेव अधम्मे चेव। (सू० ५८) बंधे चेव मोक्खे चेव १ पुन्ने चेव पावे चेव २ आसवे चेव संवरे चेव ३ वेयणा चेव निज्जरा चेव ४ (सू० ५९) दो किरियाओ पन्नत्ताओ, तंजहा–जीवकिरिया चेव अजीवकिरिया चेव १, जीवकिरिया दुविहा पन्नत्ता, तंजहा—सम्मत्तकिरिया चेव, मिच्छत्तकिरिया चेव २, अजीवकिरिया दुविहा पन्नत्ता, तं०—इरियावहिया चेव संपराइगा चेव ३, दो किरियाओ पं० तं०—काइया चेव अहिगरणिया चेव ४, काइया किरिया दुविहा पन्नत्ता तं०—अणुवरयकायकिरिया चेव, दुप्पउत्तकायकिरिया चेव ५, अहिकरणिया किरिया दुविहा पन्नत्ता, तं०—संजोयणाधिकरणिया चेव णिव्वत्तणाधिकरणिया चेव ६, दो किरियाओ पं० तं०—पाउसिया चेव पारियावणिया चेव ७, पाउसिया किरिया दुविहा पं० तं०—जीवपाउसिया चेव अजीवपाउसिया चेव ८, पारियावणिया किरिया दुविहा पं० तं०—सहत्थपारियावणिया चेव परहत्थपारियावणिया चेव ९, दो किरियाओ पं० तं०—पाणातिवायकिरिया चेव अपचक्खाणकिरिया चेव १०, पाणातिवायकिरिया दुविहा पं० तं—सहत्थपाणातिवायकिरिया चेव परहत्थपाणातिवायकिरिया चेव ११, अपचक्खाणकिरिया दुविहा पं० तं—जीवअपचक्खाणकिरिया चेव अजीवअपचक्खाणकिरिया

चेव १२, दो किरियाओ पं० तं०—आरंभिया चेव परिग्गहिया चेव १३, आरंभिया किरिया दुविहा पं० तं— जीवआरंभिया चेव अजीवआरंभिया चेव, १४ एवं परिग्गहियावि १५, दो किरियाओ पं० तं०—मायावत्तिआ चेव मिच्छादंसणवत्तिया चेव १६, मायावत्तिया किरिया दुविहा पं० तं०—आयभाववंकणता चेव परभाववंकणता चेव १७, मिच्छादंसणवत्तिया किरिया दुविहा पं० तं०—ऊणाइरित्तमिच्छादंसणवत्तिया चेव तव्वइरित्तमिच्छादंसणवत्तिया चेव १८, दो किरियाओ पं० तं०—दिट्ठिया चेव पुट्ठिया चेव १९, दिट्ठिया किरिया दुविहा पं० तं०—जीवदिट्ठिया चेव अजीवदिट्ठिया चेव २०, एवं पुट्ठियावि २१, दो किरियाओ पं० तं—पाडुच्चिया चेव सामंतोवणिवाइया चेव २२ पाडुच्चिया किरिया दुविहा पं० तं०—जीवपाडुच्चिया चेव अजीवपाडुच्चिया चेव २३, एवं सामंतोवणिवाइयावि २४, दो किरियाओ पं० तं०—साहत्थिया चेव णेसत्थिया चेव २५, साहत्थियाकिरिया दुविहा पं० तं०–जीवसाहत्थिया चेव अजीवसाहत्थिया चेव २६, एवं णेसत्थियावि २७, दो किरियाओ पं० तं०—आणवणिया चेव वेयारणिया चेव २८, जहेव णेसत्थियाओ २९-३०, दो किरियाओ पं० तं०—अणाभोगवत्तिया चेव अणवकंखवत्तिया चेव ३१, अणाभोगवत्तिया किरिया दुविहा पं० तं०—अणाउत्तआइयणता चेव अणाउत्तपमज्जणता चेव ३२, अणवकंखवत्तिया किरिया दुविहा पं० तं०—आयसरीरअणवकंखवत्तिया चेव परसरीरअणवकंखवत्तिया चेव ३३, दो किरियाओ पं० तं०—पिज्जवत्तिया चेव दोसवत्तिया चेव ३४, पेज्जवत्तिया किरिया दुविहा पं० तं०—मायावत्तिया चेव लोभवत्तिया चेव ३५, दोसवत्तिया किरिया

दुविहा पं० तं०--कोहे चेव माणे चेव २६, (सू० ६०)

आकाशं–व्योम नोआकाशम्–तदन्यद्धर्मास्तिकायादि, धर्मः–धर्म्मास्तिकायो गत्युपष्टम्भगुणः तदन्योऽधर्मः–अधर्मास्तिकायः स्थित्युपष्टम्भगुणः। सविपक्षबन्धादितत्त्वसूत्राणि चत्वारि प्राग्वदिति। बन्धादयश्च क्रियायां सत्यामात्मनो भवन्तीति क्रियानिरूपणायाह–'दो किरिये'त्यादि सूत्राणि षट्त्रिंशत्, करणं क्रिया क्रियत इति वा क्रिया, ते च द्वे प्रज्ञप्ते–प्ररूपिते जिनैः, तत्र जीवस्य क्रिया–व्यापारो जीवक्रिया, तथा अजीवस्य–पुद्गलसमुदायस्य यत्कर्म्मतया परिणमनं सा अजीवक्रियेति, इह चियशब्दस्य चैवशब्दस्य च पाठान्तरे प्राकृतत्वाद् द्विर्भाव इति, चैवेत्ययं च समुच्चयमात्र एव प्रतीयते, अपिचेत्यादिवदिति, 'जीवकिरिये'त्यादि, सम्यक्त्वं–तत्त्वश्रद्धानं तदेव जीवव्यापारत्वात् क्रिया सम्यक्त्वक्रिया, एवं मिथ्यात्वक्रियाऽपि, नवरं मिथ्यात्वम्–अतत्त्वश्रद्धानं तदपि जीवव्यापार एवेति, अथवा सम्यग्दर्शनमिथ्यात्वयोः सतोर्ये भवतः ते सम्यक्त्वमिथ्यात्वक्रिये इति ॥ तत्र 'ईरियावहिय'त्ति–ईरणमीर्या–गमनं तद्विशिष्टः पन्था ईर्यापथस्तत्र भवा ऐर्यापथिकी, व्युत्पत्तिमात्रमिदं, प्रवृत्तिनिमित्तं तु यत्केवलयोगप्रत्ययमुपशान्तमोहादित्रयस्य सातवेदनीयकर्म्मतया अजीवस्य पुद्गलराशेर्भवनं सा ऐर्यापथिकी क्रिया, इह जीवव्यापारेऽप्यजीवप्रधानत्वविवक्षयाऽजीवक्रियेयमुक्ता, कर्म्मविशेषो वैर्यापथिकी क्रियोच्यते, यतोऽभिहितं–"इरियावहिया किरिया दुविहा–बज्झमाणा वेइज्जमाणा य, जा[व] पढमसमये बद्धा बीयसमये वेइया सा बद्धा पुट्ठा वेइया णिज्जिण्णा सेयकाले अकम्मं वावि भवती'ति, तथा सम्परायाः–कषायास्तेषु भवा सांपरायिकी, सा ह्यजीवस्य

१ ईर्यापथिकी क्रिया द्विविधा बध्यमाना वेद्यमाना च, या प्रथमसमये बद्धा द्वितीयसमये वेदिता बद्धा स्पृष्टा वेदिता निर्जीर्णा एष्यत्काले अकर्म चापि भवति ॥१॥

२ स्थानाध्ययने अजीवबन्धादि क्रियाणां द्वैविध्यं

पुद्गलराशेः कर्मतापरिणतिरूपा जीवव्यापारस्याविवक्षणादजीवक्रियेति, सा च सूक्ष्मसम्परायान्तानां गुणस्थानकवतां भवतीति ॥ पुनरन्यथा द्वे 'दो किरिये'त्यादि, 'काइया चेव'त्ति कायेन निर्वृत्ता कायिकी–कायव्यापारः, तथा 'अहिगरणिया चेव'त्ति अधिक्रियते आत्मा नरकादिषु येन तदधिकरणम्–अनुष्ठानं बाह्यं वा वस्तु, इह च बाह्यं विवक्षितं खड्गादि, तत्र भवा आधिकरणिकीति ॥ कायिकी द्विधा–'अणुवरयकायकिरिया चेव'त्ति अनुपरतस्य–अविरतस्य सावद्यात् मिथ्यादृष्टेः सम्यग्दृष्टेर्वा कायक्रिया–उत्क्षेपादिलक्षणा कर्मबन्धनिबन्धनमनुपरतकायक्रिया, तथा 'दुप्पउत्तकायकिरिया चेव'त्ति दुष्प्रयुक्तस्य–दुष्टप्रयोगवतो दुष्प्रणिहितस्येन्द्रियाण्याश्रित्येष्टानिष्टविषयप्राप्तौ मनाक् संवेगनिर्वेदगमनेन तथा अनिन्द्रियमाश्रित्याशुभमनःसङ्कल्पद्वारेणापवर्गमार्गं प्रति दुर्व्यवस्थितस्य प्रमत्तसंयतस्येत्यर्थः कायक्रिया दुष्प्रयुक्तकायक्रियेति ५, आधिकरणिकी द्विधा, तत्र 'संजोयणाहिगरणिया चेव'त्ति यत्पूर्वं निर्वर्तितयोः खड्गतन्मुष्ट्यादिकयोरर्थयोः संयोजनं क्रियते सा संयोजनाऽधिकरणिकी, तथा 'णिव्वत्तणाहिकरणिया चेव' त्ति यखड्गादितत्तयोर्निर्वर्तनं सा निर्वर्तनाधिकरणिकीति । पुनरन्यथा द्वे—'पाउसिया चेव'त्ति प्रद्वेषो–मत्सरस्तेन निर्वृत्ता प्राद्वेषिकी, तथा 'पारियावणिया चेव'त्ति परितापनं–ताडनादिदुःखविशेषलक्षणं तेन निर्वृत्ता पारितापनिकी, आद्या द्विधा–जीवपाउसिया चेव'त्ति जीवे प्रद्वेषाज्जीवप्राद्वेषिकी, तथा 'अजीवपाउसिया चेव'त्ति अजीवे–पाषाणादौ स्खलितस्य प्रद्वेषादजीवप्राद्वेषिकीति, द्वितीयाऽपि द्विविधा—'सहत्थपारियावणिया चेव'त्ति स्वहस्तेन स्वदेहस्य परदेहस्य वा परितापनं कुर्वतः स्वहस्तपारितापनिकी तथा 'परहत्थपारियावणिया चेव'त्ति परहस्तेन तथैव च तत्कारयतः परहस्तपारितापनिकीति ॥ अन्यथा द्वे पाणाइवायकि-

१ गुणस्थानानामन्यत्र इष्टे इच्छाप्रतिबन्धेन इतरस्मिन् उद्वेगेन । २ संवेदनि० प्र ।

रिया चेव'त्ति प्रतीता, तथा 'अपच्चक्खाणकिरिया चेव'त्ति अप्रत्याख्यानम्-अविरतिस्तन्निमित्तः कर्म्मबन्धोऽप्रत्याख्यानक्रिया सा चाविरतानां भवतीति। आद्या द्वेधा—'सहत्थपाणाइवायकिरिया चेव'त्ति स्वहस्तेन स्वप्राणान् निर्वेदादिना परप्राणान् वा क्रोधादिना अतिपातयतः स्वहस्तप्राणातिपातक्रिया, तथा 'परहत्थपाणाइवायकिरिया चेव'त्ति परहस्तेनापि तथैव परहस्तप्राणातिपातक्रियेति। द्वितीयापि द्विधा, 'जीवअपच्चक्खाणकिरिया चेव'त्ति जीवविषये प्रत्याख्यानाभावेन यो बन्धादिर्व्यापारः सा जीवाप्रत्याख्यानक्रिया, तथा 'अजीवअपच्चक्खाणकिरिया चेव'त्ति यदजीवेषु-मद्यादिष्वप्रत्याख्यानात् कर्मबन्धनं सा अजीवाप्रत्याख्यानक्रियेति। पुनरन्यथा द्वे 'आरंभिया चेव'त्ति आरम्भणमारम्भः तत्र भवा आरम्भिकी, तथा 'परिग्गहिया चेव'त्ति 'जीवआ' परिग्रहे भवा पारिग्रहिकी॥ आद्या द्वेधा 'जीवआरम्भिया चेव'त्ति, यज्जीवानारभमाणस्य-उपमृद्नतः कर्मबन्धनं सा जीवारम्भिकी, तथा 'अजीवारंभिया चेव'त्ति यच्चाजीवान् जीवकडेवराणि पिष्टादिमयजीवाकृतींश्च वस्त्रादीन् वा आरभमाणस्य सा अजीवारम्भिकीति, एवं 'पारिग्गहिया चेव'त्ति आरम्भिकीवद् द्विविधेत्यर्थः, जीवाजीवपरिग्रहप्रभवत्वात् तस्या इति भावः। पुनरन्यथा द्वे 'मायावत्तिया चेव'त्ति माया-शाठ्यं प्रत्ययो-निमित्तं यस्याः कर्मबन्धक्रियाया व्यापारस्य वा सा तथा, 'मिच्छादंसणवत्तिया चेव'त्ति मिथ्यादर्शनं-मिथ्यात्वं प्रत्ययो यस्याः सा तथेति, आद्या द्वेधा—'आयभाववंकणया चेव'त्ति आत्मभावस्याप्रशस्तस्य वङ्कनता-वक्रीकरणं प्रशस्तत्वोपदर्शनता आत्मभाववङ्कनता, वङ्कनानां च बहुत्वविवक्षायां भावप्रत्ययो न विरुद्धः, सा च क्रिया व्यापारत्वात्, तथा 'परभाववंकणया चेव'त्ति परभावस्य वङ्कनता-वञ्चनता या कूटलेखकरणादिभिः, सा परभाववङ्कनतेति, यतो वृद्धव्याख्येयं—"तं तं भावमायरइ जेण परो वंचिज्जइ कूडलेहकरणाईहिं"ति, द्वितीयाऽपि द्वेधा—'ऊणाइरित्तमिच्छादंस-

णवत्तिया चेव'त्ति ऊनं-स्वप्रमाणाद्धीनमतिरिक्तं-ततोऽधिकमात्मादि वस्तु तद्विषयं मिथ्यादर्शनमूनातिरिक्तमिथ्यादर्शनं तदेव प्रत्ययो यस्याः सा ऊनातिरिक्तमिथ्यादर्शनप्रत्ययेति, तथाहि-कोऽपि मिथ्यादृष्टिरात्मानं शरीरव्यापकमपि अङ्गुष्ठपर्वमात्रं [यवमात्रं] श्यामाकतन्दुलमात्रं वेति हीनतया वेत्ति तथाऽन्यः पञ्चधनुःशतिकं सर्वव्यापकं वेत्यधिकतयाऽभिमन्यते, तथा 'तव्वइरित्तमिच्छादंसणवत्तिया चेव'त्ति तस्माद्-ऊनातिरिक्तमिथ्यादर्शनाद् व्यतिरिक्तं मिथ्यादर्शनं-नास्त्येवात्मेत्यादिमतरूपं प्रत्ययो यस्याः सा तथेति। पुनरन्यथा द्वे—'दिट्ठिया चेव'त्ति दृष्टेर्जाता दृष्टिजा अथवा दृष्टं-दर्शनं वस्तु वा निमित्ततया यस्यामस्ति सा दृष्टिका-दर्शनार्थं या गतिक्रिया, दर्शनाद् वा यत्कर्मोदिति सा दृष्टिजा दृष्टिका वा, तथा 'पुट्ठिया चेव'त्ति पृष्टिः-पृच्छा ततो जाता पृष्टिजा-प्रश्नजनितो व्यापारः, अथवा पृष्टं-प्रश्नः वस्तु वा तदस्ति कारणत्वेन यस्यां सा पृष्टिकेति, अथवा स्पृष्टिः स्पर्शनं ततो जाता स्पृष्टिजा, तथैव स्पृष्टिकाऽपीति। आद्या द्वेधा—'जीवदिट्ठिया चेव'त्ति या अश्वादिदर्शनार्थं गच्छतः, तथा 'अजीवदिट्ठिया चेव'त्ति अजीवानां चित्रकर्मादीनां दर्शनार्थं गच्छतो या सा अजीवदृष्टिकेति, एवं 'पुट्ठिया चेव'त्ति 'एव'मिति जीवाजीवभेदेन द्विधैव, तथाहि-जीवमजीवं वा रागद्वेषाभ्यां पृच्छतः स्पृशतो वा या सा जीवपृष्टिका जीवस्पृष्टिका वा अजीवपृष्टिका अजीवस्पृष्टिका वेति। पुनरन्यथा द्वे—'पाडुच्चिया चेव'त्ति बाह्यं वस्तु प्रतीत्य-आश्रित्य भवा प्रातीत्यिकी तथा 'सामन्तोवणिवाइया चेव'त्ति समन्तात्-सर्वत उपनिपातो-जनमीलकस्तस्मिन् भवा सामन्तोपनिपातिकी आद्या द्वेधा-'जीवपाडुच्चिया चेव'त्ति जीवं प्रतीत्य यः कर्मबन्धः सा तथा 'अजीवपाडुच्चिया चेव'त्ति अजीवं प्रतीत्य यो रागद्वेषोद्भवस्तज्जो वा बन्धः सा अजीवप्रातीत्यिकीति। द्वितीयापि द्विधैवेत्यतिदिशन्नाह—'एवं सामन्तोवणिवाइयावि'त्ति, तथाहि-कस्यापि षण्डो रूपवानस्ति तं च जनो यथा यथा प्रलोकयति प्रशंसयति

च तथा तथा तत्स्वामी हृष्यतीति जीवसामन्तोपनिपातिकी, तथा रथादौ तथैव हृष्यतोऽजीवसामन्तोपनिपातिकीति, अन्यथा वा द्वे 'साहत्थिया चेव'त्ति स्वहस्तेन निर्वृत्ता स्वाहस्तिकी तथा 'नेसत्थिया चेव'त्ति, निसर्जनं निसृष्टं, क्षेपणमित्यर्थः, तत्र भवा तदेव वा नैसृष्टिकी, निसृजतो यः कर्म्मबन्ध इत्यर्थः, निसर्ग्ग एव वेति, तत्र आद्या द्वेधा—'जीवसाहत्थिया चेव'त्ति यत् स्वहस्तगृहीतेन जीवेन जीवं मारयति सा जीवस्वाहस्तिकी, तथा 'अजीवसाहत्थिया चेव'त्ति यच्च स्वहस्तगृहीतेनैवाजीवेन-खड्गादिना जीवं मारयति सा अजीवस्वाहस्तिकीति, अथवा स्वहस्तेन जीवं ताडयत एका, अजीवं ताडयतोऽन्येति । द्वितीयाऽपि जीवाजीवभेदैवेत्यतिदिशन्नाह—'एवं नेसत्थिया चेव'त्ति, तथाहि-राजादिसमादेशाद्यदुदकस्य यन्त्रादिभिर्निसर्जनं सा जीवनैसृष्टिकीति, यत्तु काण्डादीनां धनुरादिभिः सा अजीवनैसृष्टिकीति, अथवा गुर्व्वादौ जीवं-शिष्यं पुत्रं वा निसृजतो-ददत एका, अजीवं पुनरेषणीयभक्तपानादिकं निसृजतो-त्यजतोऽन्येति, पुनरन्यथा द्वे 'आणवणिया चेव'त्ति आज्ञापनस्य-आदेशनस्येयमाज्ञापनमेव वेत्याज्ञापनी सैवाज्ञापनिका तज्जः कर्मबन्धः, आदेशनमेव वेति, आनायनं वा आनायनी, तथा 'वेयारणिया चेव'त्ति विदारणं विचारणं वितारणं वा स्वार्थिकप्रत्ययोपादानाद् वैदारिणीत्यादि वाच्यमिति ॥ एते च द्वे अपि द्वेधा-जीवाजीवभेदादिति, तथाहि-जीवमाज्ञापयत आनाययतो वा परेण जीवाज्ञापनी जीवानायनी वा, एवमेवाजीवविषया अजीवाऽऽज्ञापनी अजीवानायनी वेति ॥ तथा 'वेयारणिय'त्ति जीवमजीवं वा विदारयति-स्फोटयतीति, अथवा जीवमजीवं वाऽऽसमानभाषेषु[1] विक्रीणति सति[2] द्वैभाषिको विचारयति परियच्छावेइत्ति[3] भणितं होति, अथवा जीवं-पुरुषं वितारयति-प्रतारयति वञ्चयतीत्यर्थः असद्गुणैरेतादृशः तादृशस्त्वमिति,

१ असमानभागेषु यो विक्रीणाति द्वैभाषिको त्रि० २ वाऽसमानभावेषु प्र० ३ व्यवहारे द्वारीभवनि (द्विलाल:)

पुरुषादिविप्रतारणबुद्ध्या याऽजीवं भणत्येतादृशमेतदिति यत्सा 'जीववेयारणिआऽजीववेयारणिया च'त्ति। एतत्सर्वमतिदेशेनाह—'जहेव नेसत्थिय'त्ति, अन्यथा वा द्वे 'अणाभोगवत्तिया चेव'त्ति अनाभोगः-अज्ञानं प्रत्ययो—निमित्तं यस्याः सा तथा, 'अणवकंखवत्तिया चेव'त्ति अनवकाङ्क्षा—स्वशरीराद्यनपेक्षत्वं सैव प्रत्ययो यस्याः साऽनवकाङ्क्षाप्रत्ययेति, आद्या द्विधा—'अणाउत्तआइयणया चेव' त्ति अनायुक्तः—अनाभोगवाननुपयुक्त इत्यर्थः तस्याऽऽदानता—वस्त्रादिविषये ग्रहणता अनायुक्तादानता, तथा 'अणाउत्त-पमज्जणया चेव'त्ति अनायुक्तस्यैव पात्रादिविषया प्रमार्जनता अनायुक्तप्रमार्जनता, इह च ताप्रत्ययः स्वार्थिकः प्राकृतत्वेन आदानादीनां भावविवक्षया वेति। द्वितीयाऽपि द्विविधा—'आयसरीरे'त्यादि, तत्रात्मशरीरानवकाङ्क्षाप्रत्यया स्वशरीरक्षतिकारिकर्माणि कुर्वतः, तथा परशरीरक्षतिकराणि तु कुर्वतो द्वितीयेति। 'दो किरिये'त्यादि त्रीणि सूत्राणि, कण्ठ्यानि, नवरं प्रेम—रागो मायालोभलक्षणः द्वेषः क्रोधमानलक्षण इति, यदत्र न व्याख्यातं तत्सुगमत्वादिति॥ एताश्च क्रियाः प्रायो गर्हणीया इति गर्हामाह—

दुविहा गरिहा पं० तं०—मणसा वेगे गरहति। वयसा वेगे गरहति। अहवा गरहा दुविहा पं० तं०—दीहं वेगे अद्धं गरहति, रहस्सं वेगे अद्धं गरहति। (सू० ६१)

'दुविहा गरहे'त्यादि, विधानं विधा द्वे विधे-भेदौ यस्याः सा द्विविधा, गर्हणं गर्हा—दुश्चरितं प्रति कुत्सा, सा च स्वपरविषयत्वेन द्विविधा, साऽपि मिथ्यादृष्टेरनुपयुक्तस्य सम्यग्दृष्टेश्च द्रव्यगर्हा, अप्रधानगर्हेत्यर्थः, द्रव्यशब्दस्याप्रधानार्थत्वाद्, उक्तं च—"अप्पाहन्नेऽवि इहं कत्थइ दिट्ठो हु दव्वसद्दोत्ति। अंगारमद्दओ जह दव्वायरिओ सयाऽभव्वो॥१॥" त्ति, सम्यग्दृष्टेस्तूपयुक्तस्य भावगर्हेति,

१ अप्राधान्येऽपि इह क्वचिद्दृष्ट एव द्रव्यशब्द इति। अङ्गारमर्दको यथा द्रव्याचार्यः सदाऽभव्यः॥१॥

चतुर्द्धा गर्हणीयभेदाद्बहुप्रकारा वा, सा चेह करणापेक्षया द्विविधोक्ता, तथा चाह—'मणसा वेगे गरहइ'त्ति मनसा—चेतसा वा-शब्दो विकल्पार्थो अवधारणार्थो वा, ततो मनसैव न वाचेत्यर्थः, कायोत्सर्गस्थो दुर्मुखसुमुखाभिधानपुरुषद्वयनिन्दिताभिष्टुतस्तद्वचनोपलब्धसामन्तपरिभूतस्वतनयराजवार्त्तो मनसा समारब्धपुत्रपरिभवकारिसामन्तसङ्ग्रामो वैकल्पिकप्रहरणक्षये स्वशीर्षकग्रहणार्थव्यापारितहस्तसंस्पृष्टलुञ्चितमस्तकस्ततः समुपजातपश्चात्तापानलज्वालाकलापदन्दह्यमानसकलकर्म्मेन्धनो राजर्षिप्रसन्नचन्द्र इव एकः कोऽपि साध्वादिर्गर्हते—जुगुप्सते गर्ह्यमिति गम्यते, तथा वचसा वा—वाचा वा अथवा वचसैव न मनसा भावतो दुश्चरितादि उक्तत्वाज्जनरञ्जनार्थं गर्हाप्रवृत्ताङ्गारमर्द्दकादिप्रायसाधुवत् एकोऽन्यो गर्हत इति, अथवा 'मणसाऽवेगे'त्ति इह अपिः, स च सम्भावने, तेन सम्भाव्यते अयमर्थः—अपि मनसैको गर्हते अन्यो वचसेति, अथवा मनसाऽपि न केवलं वचसा एको गर्हते, तथा वचसाऽपि न केवलं मनसा एक इति स एव गर्हते, उभयथाऽप्येक एव गर्हत इति भावः, अन्यथा गर्हाद्वैविध्यमाह—'अहवे'त्यादि, अथवेति पूर्वोक्तद्वैविध्यप्रकारापेक्षो द्विविधा गर्हा प्रज्ञप्तेति प्राग्वि, अपिः सम्भावने, तेन अपि दीर्घां—बृहतीं अद्धां—कालं यावदेकः कोऽपि गर्हते गर्हणीयमाजन्मापीत्यर्थः, अन्यथा वा दीर्घत्वं विवक्षया भावनीयम्, आपेक्षिकत्वात् दीर्घह्रस्वयोरिति, एवमपि ह्रस्वाम्—अल्पां यावदेकोऽन्य इति, अथवा दीर्घामेव यावत् ह्रस्वामेव यावदिति व्याख्येयमपेरवधारणार्थत्वादिति, एक एव वा द्विधा कालभेदेन गर्हते भावभेदादिति अथवा दीर्घं ह्रस्वं वा कालमेव गर्हत इति ॥ अतीते गर्ह्ये कर्मणि गर्हा भवति भविष्यति तु प्रत्याख्यानम्, उक्तं च—"अईयं[1] निंदामि पडुप्पन्नं संवरेमि अणागयं पच्चक्खामी'ति । प्रत्याख्यानमाह—

[1] अतीतं निन्दामि प्रत्युत्पन्नं संवृणोमि अनागतं प्रत्याख्यामि.

दुविहे पच्चक्खाणे पं० तं०—मणसा वेगे पच्चक्खाति वयसा वेगे पच्चक्खाति, अहवा पच्चक्खाणे दुविहे पं० तं०—दीहं वेगे अद्धं पच्चक्खाति रहस्सं वेगे अद्धं पच्चक्खाति (सू० ६२)। दोहिं ठाणेहिं अणगारे संपन्ने अणादीयं अणवयग्गं दीहमद्धं चाउरंतसंसारकंतारं वीतिवतेज्जा, तंजहा—विज्जाए चेव चरणेण चेव (सू० ६३)

'दुविहे पच्चक्खाणे' इत्यादि, प्रमादप्रातिकूल्येन मर्यादया ख्यानं-कथनं प्रत्याख्यानं, विधिनिषेधविषया प्रतिज्ञेत्यर्थः, तच्च द्रव्यतो मिथ्यादृष्टेः सम्यग्दृष्टेर्वाऽनुपयुक्तस्य कृतचतुर्मासमांसप्रत्याख्यानायाः पारणकदिनमांसदानप्रवृत्ताया राजदुहितुरिवेति, भावप्रत्याख्यानमुपयुक्तस्य सम्यग्दृष्टेरिति, तत्र देशसर्वमूलगुणोत्तरगुणभेदादनेकविधमपि करणभेदाद् द्विविधम्, आह च—मनसा वैकः प्रत्याख्याति वधादिकं निवृत्तिविषयीकरोति, शेषं प्राग्वदेवेति। प्रकारान्तरेणापि तदाह—'अहवे'त्यादि, सुगमं। ज्ञानपूर्वकं प्रत्याख्यानादि मोक्षफलमत आह—'दोहिं ठाणेहीं'त्यादि, द्वाभ्यां स्थानाभ्यां-गुणाभ्यां सम्पन्नो-युक्तो नास्यागारं-गेहमस्तीत्यनगारः साधुः नास्त्यादिरस्येत्यनादिकं तत् अवदग्रं-पर्यन्तस्तन्नास्ति यस्य सामान्यजीवापेक्षया तदनवदग्रं तत् दीर्घा अद्धा-कालो यस्य तद् दीर्घाद्धं तत्, मकार आगमिकः, दीर्घो वाऽध्वा-मार्गो यस्मिंस्तद्दीर्घाध्वं तच्चतुरन्तं-चतुर्विभागं नरकादिगतिविभागेन, दीर्घत्वं प्रकटादित्यादिति, संसारकान्तारं-भवारण्यं व्यतिव्रजेद्-अतिक्रामेत्, तद्यदा 'विद्यया चैव' ज्ञानेन चैव 'चरणेन चैव' चारित्रेण चैवेति, इह च संसारकान्तारव्यतिव्रजनं प्रति विद्याचरणयोर्यौगपद्येनैव कारणत्वमवगन्तव्यम्, एकैकशो विद्याक्रिययोरैहिकार्थेऽव्यकारणत्वात्, नन्वनयोः कारणतया अविशेषाभिधानेऽपि प्रधानं ज्ञानमेव न चरणम्, अथवा ज्ञानमेवैकं कारणं न तु क्रिया, यतो ज्ञानफलमेवासौ. किञ्च-यथा क्रिया ज्ञानस्य फलं तथा शेषमपि यत् क्रियानन्तरमवाप्यते बोधकालेऽपि यज्ज्ञेयपरिच्छेदात्मकं यच्च रागादि-

विनिग्रहमयमेषामविशेषेण ज्ञानं कारणं, यथा मृत्तिका घटस्य कारणं भवन्ती तदन्तरालवर्त्तिनां पिण्डशिवकस्थासकोशकुशूलादीनामपि कारणतामापद्यते तथेह ज्ञानमपि भवाभावस्य तदन्तरालवर्तिनां च तत्त्वपरिच्छेदसमाधानादीनां कारणमिति, यच्चानुसरणमात्रमन्त्रपूतविषभक्षणनभोगमनादिकमनेकविधं फलमुपलभ्यते साक्षात्तदपि क्रियाशून्यस्य ज्ञानस्य, यथा चैतद् दृष्टफलं तथा अदृष्टमप्यनुमीयत इति, आह च—"[1]आह पहाणं नाणं न चरित्तं नाणमेव वा सुद्धं। कारणमिह न उ किरिया साऽवि हु नाणफलं जम्हा ॥१॥ जह सा नाणस्स फलं तह सेसंपि तह बोहकालेवि। नेयपरिच्छेयमयं रागादिविणिग्गहो जो य ॥२॥ जं च मणोचिंतियमंतपूयविसभक्खणादि वहुभेयं। फलमिह तं पच्चक्खं किरियारहियस्स नाणस्स ॥३॥" त्ति, अत्रोच्यते, यत्तावदुक्तम्—'ज्ञानमेव प्रधानं ज्ञानमेव चैकं कारणं न क्रिया, यतो ज्ञानफलमेवासावि'ति, तदयुक्तम्, यतो यत एव ज्ञानात् क्रिया ततश्चेष्टफलप्राप्तिरत एवोभयमपि कारणमिष्यते, अन्यथा हि ज्ञानफलं क्रियेति क्रियापरिकल्पनमनर्थकं, ज्ञानमेव हि क्रियाविकलमपि प्रसाधयेत्, न च साधयति, क्रियाऽभ्युपगमात्, ज्ञानक्रियाप्रतिपत्तौ च ज्ञानं परम्परयोपकुरुते अनन्तरं च क्रिया, यतस्तस्मात् क्रियैव प्रधानतरं युक्तं कारणं, नाप्रधानमकारणं चेति, अथ युगपदुपकुरुतस्तत उभयमपि युक्तं, न युक्तमप्राधान्यं क्रियाया अकारणत्वं चेति, यः पुनरकारणत्वमेव क्रियायाः प्रतिपद्यते तं प्रतीदं विशेषेणोच्यते—क्रिया हि साक्षात्कारित्वात् कारणमन्त्यं, ज्ञानं तु परम्परोपकारित्वादनन्त्यम्, अतः को हेतुर्यदन्त्यं विहायानन्त्यं कारणमिष्यते ?, अथ सहचारिताऽङ्गीक्रियते अनयोः, अतोऽपि हि ज्ञानमेव कारणं न क्रियेत्यत्र न हेतुरस्तीति, यच्चो-

१ आह प्रधानं ज्ञानं न चारित्रं ज्ञानमेव वा शुद्धं। कारणमिह नैव क्रिया सापि ज्ञानफलं यस्मात् ॥१॥ यथा सा ज्ञानस्य फलं तथा शेषमपि बोधकालेऽपि। ज्ञेयपरिच्छेदमयं रागादिविनिग्रहो यश्च ॥२॥ यच्च मनश्चिन्तितमन्त्रपूतविषभक्षणादि बहुभेदं। फलमिह तत् प्रत्यक्षं क्रियारहितस्य ज्ञानस्य ॥३॥

२ स्थानाध्ययने प्रत्याख्यानस्य मोक्षहेतोश्च द्वैविध्यं

क्तम्—'बोधकालेऽपी'त्यादि, तत्र ज्ञेयपरिच्छेदो ज्ञानमेवेति रागादिशमश्च संयमक्रियैव ज्ञानकारणा भवेदिति प्रतिपद्यामहे, किन्तु तत्फले भववियोगाख्येऽयं विचारो, यदुत-किं तत् ज्ञानस्य क्रियायास्तदुभयस्य वा फलमिति ?, तत्र न ज्ञानस्यैव, क्रियाफलत्वात् तस्य, नापि केवलक्रियायाः, क्रियामात्रत्वात्, उन्मत्तकक्रियावत्, ततः पारिशेष्याज्ज्ञानसहितक्रियाया इति, यच्चोक्तम्—'अनुस्मृतिज्ञानमात्रात् मन्त्रादीनां फलमुपलभ्यते, तत्र ब्रूमो-मन्त्रेष्वपि परिजपनादिक्रियायाः साधनभावो न मन्त्रज्ञानस्य, प्रत्यक्षविरुद्धमिदमिति चेत् यतो दृष्टं हि क्वचित् मन्त्रानुस्मृतिमात्रज्ञानादिष्टफलमिति, अत्रोच्यते, न मन्त्रज्ञानमात्रनिर्वर्त्त्यं तत्फलं, तज्ज्ञानस्याक्रियत्वात्, इह यदक्रियं न तत् कार्यस्य निर्वर्त्तकं दृष्टं, यथाऽऽकाशकुसुमं, यच्च निर्वर्त्तकं तदक्रियं न भवति, यथा कुलालः, न चेदं प्रत्यक्षविरुद्धं, न हि ज्ञानं साक्षात्फलमुपहरदुपलक्ष्यत इति, अथ यदि न मन्त्रज्ञानकृतं तत्फलं ततः कुतः पुनस्तदिति ?, तत्समयनिबद्धदेवताविशेषेभ्य इति ब्रूमः, तेषां हि सक्रियत्वेन क्रियानिर्वर्त्त्यमेतत् न मन्त्रज्ञानसाध्यमिति, आह च—"तो तं कत्तो ? [आचार्यः] भणति, तस्समयनिबद्धदेवओवहियं । किरियाफलं चिय जओ न मंतणाणोवओगस्स ॥१॥" त्ति, ननु सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति श्रूयते, इह तु ज्ञानक्रियाभ्यामसावुक्त इति कथं न विरोधः ?, अथ द्विस्थानकानुरोधादेवं निर्देशेऽपि न विरोधो नैवमवधारणगर्भत्वात् निर्देशस्येति, अत्रोच्यते, विद्याग्रहणेन दर्शनमप्यविरुद्धं द्रष्टव्यं ज्ञानभेदत्वात् सम्यग्दर्शनस्य, यथा हि अवबोधात्मकत्वे सति मतेरनाकारत्वादवग्रहेहे दर्शनं साकारत्वाच्चापायधारणे ज्ञानमुक्तमेवं व्यवसायात्मकत्वे सत्यवायस्य रुचिरूपोंऽशः सम्यग्दर्शनमवगमरूपोंऽशो ज्ञानमतो नेति न विरोधः, अवधारणं तु ज्ञानादिव्यतिरेकेण नान्य उपायो भवव्यवच्छेदस्येति दर्शनार्थमिति ॥ विद्याचरणे च कथ-

१ ततस्तत् कुतः ? भण्यते तत्समयनिबद्धदेवतोपहितम् । क्रियाफलमेव यतो न मन्त्रज्ञानोपयोगस्य ॥१॥

मात्मा न लभत इत्याह–'दो ठाणाइ' मित्यादि सूत्राण्येकादश,

दो ठाणाइं अपरियाणित्ता आया णो केवलिपन्नत्तं धम्मं लभेज्ज सवणयाए, तं०—आरंभे चेव परिग्गहे चेव १, दो ठाणाइं अपरियादित्ता आया णो केवलं बोधिं बुज्झेज्जा तं०—आरंभे चेव परिग्गहे चेव २, दो ठाणाइं अपरियाइत्ता आया नो केवलं मुंडे भवित्ता अगाराओ अणगारियं पव्वइज्जा तं०—आरंभे चेव परिग्गहे चेव ३, एवं णो केवलं बंभचेरवासमावसेज्जा ४ णो केवलेणं संजमेणं संजमेज्जा ५, नो केवलेणं संवरेणं संवरेज्जा ६, नो केवलमाभिणिबोहियणाणं उप्पाडेज्जा ७, एवं सुयनाणं ८ ओहिनाणं ९ मणपज्जवनाणं १० केवलनाणं ११ । (सू० ६४)

'द्वे स्थाने' द्वे वस्तुनी 'अपरियाणित्त'त्ति अपरिज्ञाय ज्ञपरिज्ञया यथैतावारम्भपरिग्रहावनर्थाय तथा अलं ममाभ्यामिति परिहाराभिमुख्यद्वारेण प्रत्याख्यानपरिज्ञया अप्रत्याख्याय च ब्रह्मदत्तवत्तयोरनिर्विण्ण इत्यर्थः, 'अपरियाइत्त'त्ति क्वचित्पाठः, तत्र 'स्वरूपतस्तावपर्यादायागृहीत्वेत्यर्थः, आत्मा 'नो' नैव 'केवलिप्रज्ञप्तं' जिनोक्तं 'धम्मं' श्रुतधर्मं लभेत 'श्रवणतया' श्रवणभावेन श्रोतुमित्यर्थः, तद्यथा—'आरम्भाः' कृष्यादिद्वारेण पृथिव्याद्युपमर्दास्तान् 'परिग्रहा'धर्म्मसाधनव्यतिरेकेग धनधान्यादयस्तान्, इह चैकवचनप्रक्रमेऽपि व्यक्त्यपेक्षं बहुवचनम्, अवधारणसमुच्चयौ स्वबुद्ध्या ज्ञेयाविति, 'केवलां' शुद्धां 'बोधिं' दर्शनं सम्यक्त्वमित्यर्थो 'बुध्येत' अनुभवेत्, अथवा केवलया बोध्येति विभक्तिपरिणामात् बोध्यं जीवादीति गम्यते 'बुध्येत' श्रद्धीतेति ॥ मुण्डो

द्रव्यतः शिरोलोचेन भावतः कषायाद्यपनयनेन 'भूत्वा' संपद्य 'अगाराद्' गेहान्निष्क्रम्येति गम्यते, केवलमित्यस्येह सम्बन्धात् 'केवलां' परिपूर्णां विशुद्धां वाऽनगारितां-प्रव्रज्यां 'प्रव्रजेत्' यायादिति, 'एव'मिति यथा प्राक् तथोत्तरवाक्येष्वपि 'दो ठाणाइं' इत्यादि वाक्यं पठनीयमित्यर्थः, 'ब्रह्मचर्येण' अब्रह्मविरमणेन वासो-रात्रौ स्वापः तत्रैव वा वासो-निवासो ब्रह्मचर्यवासस्तमावसेत्-कुर्यादिति, 'संयमेन' पृथिव्यादिरक्षणलक्षणेन संयमयेदात्मानमिति, 'संवरेण' आश्रवनिरोधलक्षणेन संवृणुयादाश्रवद्वाराणीति गम्यते 'केवलं' परिपूर्णं सर्वस्वविषयग्राहकम् 'आभिणिबोहियनाणं' ति अर्थाभिमुखोऽविपर्ययरूपत्वान्नियतोऽसंशयस्वभावत्वात् बोधो-वेदनमभिनिबोधः स एवाभिनिबोधिकं तच्च तज्ज्ञानं चेत्याभिनिबोधिकज्ञानम्-इन्द्रियानिन्द्रियनिमित्तमोघतः सर्वद्रव्यासर्वपर्याय-विषयं 'उप्पाडेज्ज' त्ति उत्पादयेदिति, तथा 'एव' मित्यनेनोत्तरपदेषु 'नो केवलं उप्पाडेज्ज' त्ति द्रष्टव्यम् , 'सुयनाणं' ति श्रूयते तदिति श्रुतं-शब्द एव स च भावश्रुतकारणत्वात् ज्ञानं श्रुतज्ञानं श्रुतग्रन्थानुसारि ओघतः सर्वद्रव्यासर्वपर्यायविषयमक्षरश्रुतादिभेदमिति, तथा 'ओहिनाणं' ति अवधीयतेऽनेनास्मादस्मिन् वेत्यवधिः, अवधीयते-इत्यधोऽधो विस्तृतं परिच्छिद्यते मर्यादया वेत्यवधिः-अवधिज्ञानावरणक्षयोपशम एव, तदुपयोगहेतुत्वादिति, अवधानं वाऽवधिर्विषयपरिच्छेदनमिति, अवधिश्चासौ ज्ञानं चेत्यवधिज्ञानं-इन्द्रियमनोनिरपेक्षमात्मनो रूपिद्रव्यसाक्षात्करणमिति । तथा 'मणपज्जवनाणं' ति मनसि मनसो वा पर्यवः-परिच्छेदः स एव ज्ञानमथवा मनसः पर्यवाः पर्यायाः पर्यया वा-विशेषाः अवस्था मनःपर्यवादयस्तेषां तेषु वा ज्ञानं मनःपर्यवज्ञानमेवमितरत्रापि, समयक्षेत्रगतसंज्ञिमन्यमानमनोद्रव्यसाक्षात्कारीति । 'केवलनाणं'ति केवलम्-असहायं मत्यादिनिरपेक्षत्वादकलङ्कं वा आवरणमलाभावात् , सकलं वा-तत्प्रथमतयैवाशेषतदावरणाभावतः सम्पूर्णोत्पत्तेः, असाधारणं वा-अनन्यसदृशत्वात् , अनन्तं वा-ज्ञेयानन्तत्वात्

तच्च तज्ज्ञानं च केवलज्ञानमिति ॥ कथं पुनर्धर्मादीनि विद्याचरणस्वरूपाणि प्राप्नोतीत्याह—'दो ठाणाइ'-मित्याद्येकादशसूत्री

दो ठाणाइं परियादित्ता आया केवलिपन्नत्तं धम्मं लभेज्ज सवणयाए, तं०—आरंभे चेव परिग्गहे चेव, एवं जाव केवलनाणमुप्पाडेज्जा (सू० ६५)। दोहिं ठाणेहिं आया केवलिपन्नत्तं धम्मं लभेज्ज सवणयाए तं०—सोच्च च्चेव अभिसमेच्च च्चेव जाव केवलनाणं उप्पाडेज्जा (सू० ६६)।

सुगमा। धर्मादिलाभ एव पुनः कारणान्तरद्वयमाह—'दोही' त्यादि सुगमं, केवलं 'श्रवणतया' श्रवणभावेन, 'सोच्च च्चेव' त्ति ह्रस्वत्वादि प्राकृतत्वादेव, श्रुत्वा-आकर्ण्य तस्यैवोपादेयतामिति गम्यते, 'अभिसमेत्य' समधिगम्य तामेवावबुध्येत्यर्थः, उक्तं च—"सद्धर्मश्रवणादेव, नरो विगतकल्मषः। ज्ञाततत्त्वो महासत्त्वः, परं संवेगमागतः ॥१॥ धर्मोपादेयतां ज्ञात्वा, सञ्जातेच्छोऽत्र भावतः। दृढं स्वशक्तिमालोच्य, ग्रहणे संप्रवर्त्तते ॥२॥" इति, 'एवं बोहिं बुज्झेज्जे-त्यादि यावत् केवलनाणं उप्पाडेज्जत्ति। केवलज्ञानं च कालविशेषे भवतीति तमाह—

दो समाओ पन्नत्ताओ, तं—ओसप्पिणी समा चेव उस्सप्पिणी समा चेव (सू० ६७) दुविहे उम्माए पं० तं०—जक्खावेसे चेव मोहणिज्जस्स चेव कम्मस्स उदएणं, तत्थ णं जे से जक्खावेसे से णं सुहवेयतराए चेव सुहविमोयतराए चेव, तत्थ णं जे से मोहणिज्जस्स कम्मस उदएणं से णं दुहवेयतराए चेव दुहविमोययराए चेव (सू० ६८)। दो दंडा पं० तं०—अट्ठादंडे चेव अणट्ठादंडे चेव, नेरइयाणं दो दंडा पं० तं०—अट्ठादंडे य

अणट्ठादंडे य, एवं चउवीसा दंडओ जाव वेमाणियाणं। (सू० ३९)

समा-कालविशेषः, शेषं सुगमम्॥ केवलज्ञानं मोहनीयोन्मादक्षय एव भवत्यतः सामान्येनोन्मादं निरूपयन्नाह—'दुविहे उम्माए' इत्यादि, उन्मादो ग्रहो बुद्धिविप्लव इत्यर्थः, यक्षावेशः—देवताधिष्ठितत्वं ततो यः स यक्षावेश एवेत्येको, मोहनीयस्य—दर्शनमोहनीयादेः कर्मण उदयेन यः सोऽन्य इति, 'तत्रे'ति तयोर्मध्ये योऽसौ यक्षावेशेन भवति स सुखवेद्यतरक एव—मोहजनितग्रहापेक्षयाऽकृच्छ्रानुभवनीयतर एव, अनैकान्तिकानात्यन्तिकभ्रमरूपत्वादस्येति, अतिशयेन सुखं विमोच्यते—त्याज्यते यः स सुखविमोच्यतरकश्चैव, मन्त्रमूलादिमात्रसाध्यत्वादस्येति, अथवा अत्यन्तं सुखापेयः—सुखापनेयः सुखापेयतरः, तथा अत्यन्तं सुखेनैव विमुञ्चति यो देहिनं स सुखविमोचतरक इति, मोहजस्तु तद्विपरीतः, ऐकान्तिकात्यन्तिकभ्रमस्वभावतयाऽत्यन्तानुचितप्रवृत्तिहेतुत्वेनानन्तभवकारणत्वात् तथाऽऽन्तरकारणजनितत्वेन मन्त्राद्यसाध्यत्वात् कर्मक्षयोपशमादिनैव साध्यत्वादिति, अत एवोक्तं—'दुहवेयतराए चेव दुहविमोअतराए चेव'त्ति, अतिशयेन दुःखवेद्य एव दुःखविमोच्य एव चासाविति॥ उन्मादात् प्राणी प्राणातिपातादिरूपे दण्डे प्रवर्त्तते दण्डभाजनं वा भवतीति दण्डं निरूपयन्नाह—'दो दंडे'त्यादि, दण्डः—प्राणातिपातादिः, स चार्थाय—इन्द्रियादिप्रयोजनाय यः सोऽर्थदण्डः, निष्प्रयोजनस्त्वनर्थदण्ड इति। उक्तरूपमेव दण्डं सर्वजीवेषु चतुर्विंशतिदण्डकेन निरूपयन्नाह—'णेरइयाण'मित्यादि, 'एव'मिति नारकवदर्थदण्डानर्थदण्डाभिलापेन चतुर्विंशतिदण्डको ज्ञेयो, नवरं—नारकस्य स्वशरीररक्षार्थं परस्योपहननमर्थदण्डः प्रद्वेषमात्रादनर्थदण्डः, पृथिव्यादीनां त्वनाभोगेनाप्याहारग्रहणे जीववधभावादर्थदण्डोऽन्यथा त्वनर्थदण्डः अथवोभयमपि भवान्तरार्थदण्डादिपरिणतेरिति। सम्यग्दर्शनादित्रयवतामेव च दण्डो नास्तीति त्रितयनिरूपणेच्छुर्दर्शनं सामान्येन तावन्निरूपयति—तत्र

दुविहे दंसणे पन्नत्ते तं०—सम्मदंसणे चेव मिच्छादंसणे चेव १, सम्मदंसणे दुविहे पं० तं०—णिसग्गसम्मदंसणे चेव अभिगमसम्मदंसणे चेव २, णिसग्गसम्मदंसणे दुविहे पं० तं०—पडिवाई चेव अपडिवाई चेव ३, अभिगमसम्मदंसणे दुविहे पं० तं०—पडिवाई चेव अप्पडिवाई चेव ४, मिच्छादंसणे दुविहे पं० तं०—अभिग्गहियमिच्छादंसणे चेव अणाभिगहियमिच्छादंसणे चेव ५, अभिग्गहियमिच्छादंसणे दुविहे पं० तं०—सपज्जवसिते चेव अपज्जवसिते चेव ६, एवमणभिगहितमिच्छादंसणेऽवि ७। (सू० ७०)

'दुविहे दंसणे'इत्यादि सूत्राणि सप्त सुगमान्येव, नवरं, दृष्टिर्दर्शनम्–तत्त्वेषु रुचिः तच्च सम्यग्–अविपरीतं जिनोक्तानुसारि, तथा मिथ्या–विपरीतमिति। 'सम्मदंसणे'इत्यादि, निसर्गः स्वभावोऽनुपदेश इत्यनर्थान्तरं, अभिगमोऽधिगमो गुरूपदेशादिरिति, ताभ्यां यत्तत् तथा, क्रमेण मरुदेवीभरतवदिति, 'निसग्गे'त्यादि, प्रतिपतनशीलं प्रतिपाति सम्यग्दर्शनमौपशमिकं क्षायोपशमिकं च, अप्रतिपाति क्षायिकं, तत्रैषां क्रमेण लक्षणं–इहौपशमिकीं श्रेणीमनुप्रविष्टस्यानन्तानुबन्धिनां दर्शनमोहनीयत्रयस्य चोपशमादौपशमिकं भवति, यो वाऽनादिमिथ्यादृष्टिरकृतसम्यक्त्वमिथ्यात्वमिश्राभिधानशुद्धाशुद्धोभयरूपमिथ्यात्वपुद्गलत्रिपुञ्जीक एव अक्षीणमिथ्यादर्शनोऽक्षपक इत्यर्थः, सम्यक्त्वं प्रतिपद्यते तस्यौपशमिकं भवतीति, कथं?–इह यदस्य मिथ्यादर्शनमोहनीयमुदीर्णं तदनुभवेनैवोपक्षीणमन्यत्तु मन्दपरिणामतया नोदितमतस्तदन्तर्मुहूर्त्तमात्रमुपशान्तमास्ते, विष्कम्भितोदयमित्यर्थः, तावन्तं कालमस्यौपशमिकसम्यक्त्वलाभ इति, आह च—"उवसामगसेढिगयस्स होइ उवसामिअं तु सम्मत्तं। जो वा अकयतिपुञ्जो अखवियमिच्छो लहइ

१ उपशमश्रेणिगतस्य भवति औपशमिकं तु सम्यक्त्वम्। यो वाऽकृतत्रिपुञ्जोऽक्षपितमिथ्यात्वो लभते सम्यक्त्वम् ॥१॥ क्षीणे उदीर्णे अनुदीर्णे

मम्मं ॥ १ ॥ खीणम्मि उदिन्नंमी अणुदिज्जंते य सेसमिच्छत्ते। अंतोमुहुत्तकालं उवसमसम्मं लहइ जीवो ॥ २ ॥" त्ति। अन्तर्मुहूर्त्तमात्रकालत्वादेवास्य प्रतिपातित्वं, यच्चानन्तानुबन्ध्युदये औपशमिकसम्यक्त्वात् प्रतिपततः सास्वादनमुच्यते तदौपशमिकमेव, तदपि च प्रतिपात्येव, जघन्यतः समयमात्रत्वादुत्कृष्टतस्तु षडावलिकामानत्वादस्येति, तथा इह यदस्य मिथ्यादर्शनदलिकमुदीर्णं तदुपक्षीणं यच्चानुदीर्णं तदुपशान्तम्, उपशान्तं नाम विष्कम्भितोदयमपनीतमिथ्यास्वभावं च, तदिह क्षयोपशमस्वभावमनुभूयमानं क्षायोपशमिकमित्युच्यते, नन्वौपशमिकेऽपि क्षयश्चोपशमश्च तथेहापीति कोऽनयोर्विशेषः?, उच्यते, अयमेव हि विशेषः—यदिह वेद्यते दलिकं न तत्र, इह हि क्षायोपशमिके पूर्वशमितमनुसमयमुदेति वेद्यते क्षीयते च, औपशमिके तूदयविष्कम्भणमात्रमेव, आह च—"मिच्छत्तं जमुइन्नं तं खीणं अणुइयं च उवसंतं। मीसीभावपरिणयं वेइज्जंतं खओवसमं ॥१॥" ति, एतदपि जघन्यतोऽन्तर्मुहूर्त्तस्थितिकत्वादुत्कर्षतः षट्षष्टिसागरोपमस्थितिकत्वाच्च प्रतिपातीति, यदपि च क्षपकस्य सम्यग्दर्शनदलिकचरमपुद्गलानुभवनरूपं वेदकमित्युच्यते तदपि क्षायोपशमिकभेदत्वात् प्रतिपात्येवेति, तथा मिथ्यात्वसम्यगिमथ्यात्वसम्यक्त्वमोहनीयक्षयात् क्षायिकमिति, आह च—"खीणे दंसणमोहे तिविहंमिवि भवनियाणभूयंमि। निप्पच्चवायमउलं सम्मत्तं खाइयं होइ ॥१॥" त्ति, इदं तु क्षायिकत्वादेवाप्रतिपाति, अत एव सिद्धत्वेऽप्यनुवर्त्तत इति। 'मिच्छादंसणे' इत्यादि, अभिग्रहः—कुमतपरिग्रहः स यत्रास्ति तदाभिग्रहिकं तद्विपरीतम्—अनभिग्रहिक-

१ शेषमिथ्यात्वे। अन्तर्मुहूर्त्तकालमौपशमिकसम्यक्त्वं लभते जीवः ॥२॥

१ मिथ्यात्वं यदुदीर्णं तत् क्षीणं अनुदीर्णं चोपशान्तम्। मिश्रीभावपरिणतं वेद्यमानं क्षायोपशमिकम् ॥१॥ २ क्षीणे दर्शनमोहे त्रिविधेऽपि भवनिदानभूते। निष्प्रत्यपायमतुलं सम्यक्त्वं क्षायिकं भवति ॥१॥

मिति । 'अभिग्गहिए' इत्यादि, अभिग्रहिकमिथ्यादर्शनं सपर्यवसितं-सपर्यवसानं सम्यक्त्वप्राप्तौ, अपर्यवसितमभव्यस्य सम्यक्त्वाप्राप्तेः, तच्च मिथ्यात्वमात्रमप्यतीतकालनयानुवृत्त्याऽऽभिग्रहिकमिति व्यपदिश्यते, अनभिग्रहिकं भव्यस्य सपर्यवसितमितरस्यापर्यवसितमिति, अत एवाह—'एवं अणभी'त्यादि ।

दर्शनमभिहितमथ ज्ञानमभिधीयते, तत्र 'दुविहे नाणे' इत्यादीनि आवस्सयवइरित्ते दुविहे' इत्यादिसूत्रावसानानि त्रयोविंशतिः सूत्राणि ॥

दुविहे नाणे पं० तं०—पच्चक्खे चेव परोक्खे चेव १, पच्चक्खे नाणे दुविहे पन्नत्ते तं०—केवलनाणे चेव णोकेवलनाणे चेव २, केवलणाणे दुविहे पं० तं०—भवत्थकेवलनाणे चेव ३, सिद्धकेवलणाणे चेव ३, भवत्थकेवलणाणे दुविहे पं० तं०—सजोगिभवत्थकेवलणाणे चेव अजोगिभवत्थकेवलणाणे चेव ४, सजोगिभवत्थकेवलणाणे दुविहे पं० तं०—पढमसमयसजोगिभवत्थकेवलणाणे चेव अपढमसमयसजोगिभवत्थकेवलणाणे चेव ५, अहवा चरिमसमयसजोगिभवत्थकेवलणाणे चेव अचरिमसमयसजोगिभवत्थकेवलनाणे चेव ६, एवं अजोगिभवत्थ केवलनाणेऽवि ७-८, सिद्धकेवलणाणे दुविहे पं० तं०—अणंतरसिद्धकेवलणाणे चेव परंपरसिद्धकेवलनाणे चेव ९, अणंतरसिद्धकेवलनाणे दुविहे पं० तं०—एक्काणंतरसिद्धकेवलणाणे चेव अणेक्काणंतरसिद्धकेवलणाणे चेव १०, परंपरसिद्धकेवलणाणे दुविहे पं० तं०—एक्कपरंपरसिद्धकेवलणाणे चेव अणेक्कपरंपरसिद्धकेवलणाणे चेव ११, णोके-

१ संज्ञिनामेवाभिग्रहिकसंभवात्, तत्त्वस्यापर्यवसितत्वाभावात् अतीतेत्यादि.

पच्चक्खणाणे दुविहे पं० तं०—ओहिणाणे चेव मणपज्जवणाणे चेव १२, ओहिणाणे दुविहे पं० तं०—भवपच्चइए चेव खओवसमिए चेव १३, दोण्हं भवपच्चइए पन्नत्ते, तं०—देवाणं चेव नेरइयाणं चेव १४, दोण्हं खओवसमिए पं० तं०—मणुस्साणं चेव पंचिंदियतिरिक्खजोणियाणं चेव १५, मणपज्जवणाणे दुविहे पं० तं०—उज्जुमति चेव विउलमति चेव १६, परोक्खे णाणे दुविहे पन्नत्ते, तं० आभिणिबोहियणाणे चेव सुयनाणे चेव १७, आभिणिबोहियणाणे दुविहे पं० तं०—सुयनिस्सिए चेव असुयनिस्सिए चेव १८, सुयनिस्सिए दुविहे पं० तं०—अत्थोग्गहे चेव वंजणोग्गहे चेव १९, असुयनिस्सितेऽवि एमेव २०, सुयनाणे दुविहे पं० तं०—अंगपविट्ठे चेव अंगबाहिरे चेव २१, अंगबाहिरे दुविहे पं० तं०—आवस्सए चेव आवस्सयवइरित्ते चेव २२, आवस्सयवतिरित्ते दुविहे पं० तं०—कालिए चेव उक्कालिए चेव २३ ॥ (सू० ७१)

सुगमानि, नवरं 'ज्ञानं' विशेषावबोधः अश्नाति-भुङ्क्ते अश्नुते वा-व्याप्नोति ज्ञानेनार्थानित्यक्षः-आत्मा तं प्रति यद् वर्त्तते इन्द्रियमनोनिरपेक्षत्वेन तत्प्रत्यक्षम्-अव्यवहितत्वेनार्थसाक्षात्करणदक्षमिति, आह च—"अक्खो जीवो अत्थव्वावणभोयणगुणण्णिओ जेण । तं पइ वट्टइ नाणं जं पच्चक्खं तमिह तिविहं ॥१॥"ति, परेभ्यः-अक्षापेक्षया पुद्गलमयत्वेन द्रव्येन्द्रियमनोभ्योऽक्षस्य-जीवस्य यत्परोक्षं निमित्तवशादिति, आह च—'अक्खस्स पोग्गलकया जं दव्विंदियमणा परा तेण । तेहिंतो जं नाणं परोक्खमिह तमणु माणं

१ अक्षो जीवोऽर्थव्यापनभोजनगुणान्वितो येन । तं प्रति वर्त्तते ज्ञानं यत् प्रत्यक्षं तदिह त्रिविधम् ॥१॥ २ अक्षात् पुद्गलमयानि यद्द्रव्येन्द्रियमनांसि पराणि तेन । तेभ्यो यत् ज्ञानं परोक्षमिह तदनुमानमिव ॥१॥ ३ पोग्गलमया प्र.

व ॥१॥"त्ति, अथवा परैरुक्षा-सम्बन्धनं जन्यजनकभावलक्षणमस्येति परोक्षम्-इन्द्रियमनोव्यवधानेनात्मनोऽर्थप्रत्यायकमसाक्षात्कारीत्यर्थः ॥ 'पचक्खे'त्यादि, केवलम्-एकं ज्ञानं केवलज्ञानं तदन्यन्नोकेवलज्ञानम्-अवधिमनःपर्यायलक्षणमिति । 'केवले'त्यादि, 'भवत्थकेवलनाणे चेव'त्ति भवस्थस्य केवलज्ञानं यत्तत्तथा, एवमितरदपि, 'भवत्थे'त्यादि, सह योगैः-कायव्यापारादिभिर्यः स सयोगी इन्समासान्तत्वात् स चासौ भवस्थश्च तस्य केवलज्ञानमिति विग्रहः, न सन्ति योगा यस्य स न योगीति वा योऽसावयोगी-शैलेशीकरणव्यवस्थितः, शेषं तथैव, 'सयोगी'त्यादि, प्रथमः समयः सयोगित्वे यस्य स तथा, एवमप्रथमो-व्यादिसमयो यस्य स तथा, शेषं तथैव, 'अथवे'त्यादि, चरमः-अन्त्यः समयो यस्य सयोग्यवस्थायाः स तथा, शेषं तथैव, 'एव'मिति सयोगिसूत्रवत्प्रथमाप्रथमचरमाचरमविशेषणयुक्तमयोगिसूत्रमपि वाच्यमिति, 'सिद्धे'त्यादि, अनन्तरसिद्धो यः सम्प्रति समये सिद्धः, स चैकोऽनेको वा, तथा परम्परसिद्धो यस्य व्यादयः समयाः सिद्धस्य सोऽप्येकोऽनेको वेति, तेषां यत्केवलज्ञानं तत्तथा व्यपदिश्यत इति । 'ओहिनाणे'इत्यादि, 'भवपच्चइए'त्ति क्षयोपशमनिमित्तत्वेऽप्यस्य क्षयोपशमस्यापि भवप्रत्ययत्वेन तत्प्राधान्येन भव एव प्रत्ययो यस्य तद्भवप्रत्ययमिति व्यपदिश्यत इति, इदमेव भाष्यकारेण साक्षेपपरिहारमुक्तं, तत्राक्षेपः—"[1]ओही खओवसमिए भावे भणितो भवो तहोदइए। तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं? ॥१॥" (दोण्हं)ति देवनारकयोः, अत्र परिहारः—'[2]सोऽवि हु खओवसमिओ किन्तु स एव उ खओवसमलाभो। तंमि सइ होइऽवस्सं भण्णइ भवपच्चओ तो सो ॥१॥" यतः—"[3]उदयक्खयखओवसमोवसमावि

१ अवधिः क्षायोपशमिके भावे भणितो भवस्तथौदयिके। ततः कथं भवप्रत्ययिको वक्तुं युक्तोऽवधिर्द्वयोः ? ॥१॥ २ सोऽपि हु क्षायोपशमिकः किन्तु स एव तु क्षयोपशमलाभः। तस्मिन् सति भवत्यवश्यं भण्यते भवप्रत्ययिकस्ततः सः ॥१॥ ३ उदयक्षयक्षयोपशमोपशमा यच्च कर्मणो भणिताः।

अ तं च कम्मुणो भणिया। दव्वं खेत्तं कालं भवं च भावं च संपप्प ॥१॥"त्ति, तथा तदावरणस्य क्षयोपशमे भवं क्षायोपशमिक-
मिति। 'मणपज्जवे'त्यादि, ऋज्वी-सामान्यग्राहिणी मतिः ऋजुमतिः-घटोऽनेन चिन्तित इत्यध्यवसायनिबन्धनं मनोद्रव्यपरिच्छि-
त्तिरित्यर्थः, विपुला-विशेषग्राहिणी मतिर्विपुलमतिः-घटोऽनेन चिन्तितः स च सौवर्णः पाटलिपुत्रिकोऽद्यतनो महानित्याद्यध्यवसाय-
हेतुभूता मनोद्रव्यविज्ञप्तिरिति, आह च—"रिजु सामण्णं तम्मत्तगाहिणी रिजुमती मणोनाणं। पायं विसेस विमुहं घडमेत्तं चिंतितं
मुणइ ॥१॥ विउलं वत्थुविसेसणमाणं तग्गाहिणी मती विउला। चिंतियमणुसरइ घडं पसंगओ पज्जयसएहिं ॥२॥" 'आभिणिबोहिए'
इत्यादि श्रुतं कर्मतापन्नं निश्रितम्-आश्रितं श्रुतं वा निश्रितमनेनेति श्रुतनिश्रितं, यत्पूर्वमेव श्रुतकृतोपकारस्येदानीं पुनस्तदनपेक्षमेवानु-
प्रवर्तते तदवग्रहादिलक्षणं श्रुतनिश्रितमिति, यत्पुनः पुर्वं तदपरिकर्मितमतेः क्षयोपशमपटीयस्त्वादौत्पत्तिक्यादिलक्षणमुपजायतेऽन्यद्वा
श्रोत्रादिप्रभवं तदश्रुतनिश्रितमिति, आह च—"पुव्वं सुयपरिकम्मियमतिस्स जं संपयं सुयाईयं। [तं] सुयनिस्सियमियरं पुण अणि-
स्सियं मइचउक्कं(तं) ॥१॥"ति 'सुए'त्यादि, 'अत्थोग्गहे'त्ति अर्यते-अधिगम्यतेऽर्यते वा अन्विष्यत इत्यर्थः, तस्य सामान्यरू-
पस्य अशेषविशेषनिरपेक्षानिर्देश्यस्य रूपादेरवग्रहणं-प्रथमपरिच्छेदनमर्थावग्रह इति, निर्विकल्पकं ज्ञानं दर्शनमिति यदुच्यते इत्यर्थः,

---

द्रव्यं क्षेत्रं कालं भवं च भावं च संप्राप्य ॥१॥

१ ऋजु सामान्यं तन्मात्रग्राहिणी ऋजुमतिर्मनोज्ञानम्। प्रायो विशेषविमुखं घटमात्रं चिन्तितं जानाति ॥१॥ विपुलं वस्तुविशेषणमानं तद्ग्राहिणी मतिः विपुला। चिन्तितमनुसरति घटं प्रसङ्गतः पर्यायशतैः ॥२॥ २ पूर्वं श्रुतपरिकर्मितमतेर्यत् साम्प्रतं श्रुतातीतम्। तन्निश्रितमितरत् पुनरनिश्रितं मतिचतुष्कं तत् ॥१॥

स च नैश्चयिको यः स सामयिको यस्तु व्यावहारिकः शब्दोऽयमित्याद्युल्लेखवान् स आन्तर्मौहूर्त्तिक इति, अयं चेन्द्रियमनःसम्बन्धात् षोढा इति, तथा व्यज्यतेऽनेनार्थः प्रदीपेनेव घट इति व्यञ्जनं-तच्चोपकरणेन्द्रियं शब्दादित्वपरिणतद्रव्यसङ्घातो वा, ततश्च व्यञ्जनेन-उपकरणेन्द्रियेण शब्दादित्वपरिणतद्रव्याणां व्यञ्जनानामवग्रहो व्यञ्जनावग्रह इति, अथवा व्यञ्जनम्-इन्द्रियशब्दादिद्रव्यसम्बन्धः इति, आह च-"वंजिज्जइ जेणऽत्थो घडोव्व दीवेण वंजणं तो तं। उवगरणिंदियसद्दादिपरिणयद्दव्वसंबंधो ॥१॥"त्ति, अयं च मनोनयनवर्जेन्द्रियाणां भवतीति चतुर्द्धा, नयनमनसोरप्राप्तार्थपरिच्छेदकत्वात्, इतरेषां पुनरन्यथेति, ननु व्यञ्जनावग्रहो ज्ञानमेव न भवति, इन्द्रियशब्दादिद्रव्यसम्बन्धकाले तदनुभवाभावात्, बधिरादीनामिवेति, नैवं, व्यञ्जनावग्रहान्ते तद्वस्तुग्रहणादेवोपलब्धिसद्भावात्, इह यस्य ज्ञेयवस्तुग्रहणस्यान्ते तत एव ज्ञेयवस्तूपादानात् उपलब्धिर्भवति तत् ज्ञानं दृष्टं, यथाऽर्थावग्रहपर्यन्ते तत एवार्थावग्रहग्राह्यवस्तुग्रहणादीहासद्भावात् अर्थावग्रहज्ञानमिति, आह च,--"अन्नाणं सो बहिराइणं व तक्कालमणुवलंभाओ। [आचार्यः] न तदन्ते तत्तोच्चिय उवलंभाओ तयं नाणं ॥१॥"ति, किञ्च-व्यञ्जनावग्रहकालेऽपि ज्ञानमस्त्येव, सूक्ष्माव्यक्तत्वात्तु नोपलभ्यते, सुप्ताव्यक्तविज्ञानवदिति, ईहादयोऽपि श्रुतनिश्रिता एव, न तूक्ताः, द्विस्थानकानुरोधादिति। 'अस्सुयनिस्सिएऽवि एमेव' त्ति अर्थावग्रहव्यञ्जनावग्रहभेदेनाश्रुतनिश्रितमपि द्विधैवेति, इदं च श्रोत्रादिप्रभवमेव, यत्तु औत्पत्तिक्याद्यश्रुतनिश्रितं तत्रार्थावग्रहः सम्भवति, यदाह--"[3]किह

१ व्यज्यते येनार्थो घट इव दीपेन व्यञ्जनं ततस्तत्। उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसम्बन्धः ॥१॥ २ अज्ञानं स बधिरादीनामिव तत्कालमनुपलम्भात्। न तदन्ते तत एवोपलम्भात्तकत् ज्ञानम् ॥१॥ ३ कथं प्रतिकुक्कुटहीनो युद्ध्यति बिम्बेनावग्रह ईहा किं सुश्लिष्टमवायो दर्पण संक्रान्तं बिम्बमिति ॥१॥

पडिपुण्णकुद्धीणो तुज्झे चिंतेण उग्गहो ईहा । किं सुसिलिट्ठमवाओ दप्पणसंकंत बिंबंति ॥१॥" न तु व्यञ्जनावग्रहः, तस्येन्द्रियाश्रितत्वात्, बुद्धीनां तु मानसत्वात्, ततो बुद्धिभ्योऽन्यत्र व्यञ्जनावग्रहो मन्तव्य इति । 'सुयणाणे' इत्यादि, प्रवचनपुरुषस्याङ्गानीवाङ्गानि तेषु प्रविष्टं-तदभ्यन्तरं तत्स्वरूपमित्यर्थः, तच्च गणधरकृतं 'उप्पन्ने इ वे' त्यादिमातृकापदत्रयप्रभवं वा ध्रुवश्रुतं वा आचारादि, यत्पुनः स्थविरकृतं मातृकापदत्रयव्यतिरिक्तव्याकरणनिबद्धमध्रुवश्रुतं वोत्तराध्ययनादि तदङ्गबाह्यमिति, आह च—"गणधरथेराइकतं २ आएसा १ मुक्कवागरणओ वा २ । धुव १ चलविसेसणाओ २ अंगाणंगेसु नाणत्तं ॥१॥" ति, 'अंगबाहि' त्यादि अवश्यं कर्त्तव्यमित्यावश्यकं-सामायिकादि षड्विधम्, आह च—"समणेण सावएण य अवस्स कायव्वयं हवइ जम्हा । अंतो अहोणिसस्स य तम्हा आवस्सयं नामं ॥१॥"॥ आवश्यकाद् व्यतिरिक्तं ततो यदन्यदिति। 'आवस्सगवतिरित्ते'इत्यादि, यदिह दिवसनिशाप्रथमपश्चिमपौरुषीद्वय एव पठ्यते तत्कालेन निर्वृत्तं कालिकम्-उत्तराध्ययनादि, यत्पुनः कालवेलावर्जं पठ्यते तदूर्ध्वं कालिकादित्युत्कालिकं-दशकालिकादीति ॥ उक्तं ज्ञानं । चारित्रं प्रस्तावयति—

दुविहे धम्मे पं० तं०—सुयधम्मे चेव चरित्तधम्मे चेव, सुयधम्मे दुविहे पं० तं०—सुत्तसुयधम्मे चेव अत्थसुयधम्मे चेव, चरित्तधम्मे दुविहे पं० तं०—अगारचरित्तधम्मे चेव अणगारचरित्तधम्मे चेव, दुविहे संजमे पं० तं०—सरागसंजमे चेव वीतरागसंजमे चेव, सरागसंजमे दुविहे पं० तं०—सुहुमसंपरायसरागसंजमे चेव

१ गणधरस्थविरकृतं आदेशात् मुक्तव्याकरणतो वा। ध्रुवचलविशेषणाद्वा अङ्गानङ्गयो' नानात्वम् ॥१॥ २ श्रमणेन श्रावकेण चावश्यं कर्त्तव्यं भवति यस्मात् । अन्तेऽह्नो निशश्च तस्मादावश्यकं नाम ॥१॥

बादरसंपरायसरागसंजमे चेव, सुहुमसंपरायसरागसंजमे दुविहे पन्नत्ते, तं०—पढमसमयसुहुमसंपरायसरागसंजमे चेव अपढमसमयसु०, अथवा चरमसमयसु० अचरिमसमयसु०, अहवा सुहुमसंपरायसरागसंजमे दुविहे पं० तं०—संकिलेसमाणए चेव विसुज्झमाणए चेव, बादरसंपरायसरागसंजमे दुविहे पं० तं०—पढमसमयबादर० अपढमसमयबादरसं०, अहवा चरिमसमय० अचरिमसमय०, अहवा बायरसंपरायसरागसंजमे दुविहे पं० तं०—पडिवाति चेव अपडिवाति चेव, वीयरागसंजमे दुविहे पं० तं०—उवसंतकसायवीयरागसंजमे चेव खीणकसायवीयरागसंजमे चेव, उवसंतकसायवीयरागसंजमे दुविहे पं० तं०—पढमसमयउवसंतकसायवीतरागसंजमे चेव अपढमसमयउव०, अहवा चरिमसमय० अचरिमसमय०, खीणकसायवीतरागसंजमे दुविहे पं० तं०—छउमत्थखीणकसायवीयरागसंजमे चेव केवलिखीणकसायवीयरागसंजमे चेव, छउमत्थखीणकसायवीयरागसंजमे दुविहे पं० तं०—सयंबुद्धछउमत्थखीणकसाय० बुद्धबोहियछउमत्थ०, सयंबुद्धछउमत्थ० दुविहे पं० तं०—पढमसमय० अपढमसमय०, अहवा चरिमसमय० अचरिमसमय०, बुद्धबोहियछउमत्थखीण० दुविहे पं० तं०—पढमसमय० अपढमसमय०, अहवा चरिमसमय० अचरिमसमय०, केवलिखीणकसायवीतरागसंजमे दुविहे पं० तं०—सजोगिकेवलिखीणकसाय० अजोगिकेवलिखीणकसायवीयराग०, सजोगिकेवलिखीणकसायसंजमे दुविहे पं० तं०—पढमसमय० अपढमसमय०, अहवा चरिमसमय० अचरिमसमय०, अजोगिकेवलिखीणकसाय० संजमे दुविहे पं० तं०—पढमसमय० अपढमसमय० अहवा चरिमसमय० अचरिमसमय० । (सू० ७२)

दुर्गतौ प्रपततो जीवान् रुणद्धि सुगतौ च तान् धारयतीति धर्मः श्रुतं—द्वादशाङ्गं तदेव धर्म्मः श्रुतधर्मः, चर्यते—आसेव्यते यत् तेन वा चर्यते—गम्यते मोक्ष इति चरित्रं—मूलोत्तरगुणकलापस्तदेव धर्मश्चारित्रधर्म्म इति। 'सुयधम्मे' इत्यादि, सूत्र्यन्ते सूच्यन्ते वाऽर्था अनेनेति सूत्रम्, सुस्थितत्वेन व्यापित्वेन च सुष्टूक्तत्वाद्वा सूक्तं, सुप्तमिव वा सुप्तम्, अव्याख्यानेनाप्रबुद्धावस्थत्वादिति, भाष्यवचनं त्वेवं—"सिञ्चति खरइ जमत्थं तम्हा सुत्तं निरुत्तविहिणा वा। सूएइ सवति सुव्वइ सिव्वइ सरए व जेणऽत्थं ॥१॥ अविवरियं सुत्तंपि व सुट्ठियवावित्तओ सुवुत्तं"ति ॥ अर्यतेऽधिगम्यतेऽर्थ्यते वा याच्यते बुभुत्सुभिरित्यर्थो—व्याख्यानमिति, आह च—"जो सुत्ताभिप्पाओ सो अत्थो अज्जए य जम्हत्ति" 'चरित्ते'त्यादि, अगारं—गृहं तद्योगादगाराः—गृहिणस्तेषां यश्चरित्रधर्म्मः—सम्यक्त्वमूलाणुव्रतादिपालनरूपः स तथा, एवमितरोऽपि, नवरमगारं नास्ति येषां तेऽनगाराः—साधव इति। चरित्रधर्मश्च संयमोऽतस्तमेवाह—'दुविहे'त्यादि, सह रागेण—अभिष्वङ्गेण मायादिरूपेण यः स सरागः स चासौ संयमश्च सरागस्य वा संयम इति वाक्यम्, वीतो—विगतो रागो यस्मात् स चासौ संयमश्च वीतरागस्य वा संयम इति वाक्यमिति। 'सरागे'त्यादि, सूक्ष्मः—असंख्यातकिट्टिकावेदनतः सम्परायः—कषायः सम्परैति—संसरति संसारं जन्तुरनेनेति व्युत्पादनाद्, आह च—"कोहाइ संपराओ तेण जुओ संपरीति संसारं"ति, स च लोभकषायरूपः उपशमकस्य क्षपकस्य वा यस्य स सूक्ष्मसम्परायः साधुस्तस्य सरागसंयमः, विशेषणसमासो वा भणनीय इति,

१ पततो रुणद्धि सुगतौ च धत्ते इति। २ सिञ्चति क्षरति यस्मादर्थं तस्मात्सूत्रं निरुक्तविधिना वा। सूचयति श्रवति श्रूयते सिव्यते स्मर्यते वा येनार्थः ॥१॥ अविवृतं सुप्तमिव सुस्थितव्यापित्वात् सूक्तमिति। ३ यः सूत्राभिप्रायः सोऽर्थोऽर्यते च यस्मादिति। ४ षष्ठीलोपमपेक्ष्य। ५ क्रोधाद्याः संपरायास्तैर्युतः संपरैति संसारम्।

बादराः-स्थूराः सम्परायाः-कषाया यस्य साधोः यस्मिन् वा संयमे स तथा-सूक्ष्मसम्परायप्राचीनगुणस्थानकेषु, शेषं प्राग्वदिति । 'सुहुमे'त्यादिसूत्रद्वये प्रथमाप्रथमसमयादिविभागः केवलज्ञानवदिति । 'अहवे'त्यादि, सङ्क्लिश्यमानः संयमः उपशमश्रेण्याः प्रतिपततः, विशुद्ध्यमानस्तामुपशमश्रेणीं वा समारोहत इति । 'बादरे'त्यादिसूत्रद्वयं, बादरसम्परायसरागसंयमस्य प्रथमाप्रथमसमयता संयमप्रतिपत्तिकालापेक्षया चरमाचरमसमयता तु यदनन्तरं सूक्ष्मसम्परायता असंयतत्वं वा भविष्यति तदपेक्षयेति, 'अहवे'त्यादि, प्रतिपाती उपशमकस्यान्यस्य वा, अप्रतिपाती क्षपकस्येति। सरागसंयम उक्तोऽतो वीतरागसंयममाह—'वीयरागे'त्यादि, उपशान्ताः-प्रदेशतोऽप्यवेद्यमानाः कषाया यस्य यस्मिन् वा स तथा साधुः संयमो वेति-एकादशगुणस्थानवर्त्तीति, क्षीणकषायो द्वादशगुणस्थानवर्त्तीति। 'उवसंते'त्यादि सूत्रद्वयं प्रागिव। 'खीणे'त्यादि, छादयत्यात्मस्वरूपं यत्तच्छद्म-ज्ञानावरणादिघातिकर्म तत्र तिष्ठतीति छद्मस्थः-अकेवली, शेषं तथैव, केवलम्-उक्तस्वरूपं ज्ञानं च दर्शनं चास्यास्तीति केवलीति। 'छउमत्थे'त्यादि, स्वयम्बुद्धादिस्वरूपं प्रागिवेति, 'सयंबुद्धे'त्यादि नव सूत्राणि गतार्थान्येवेति।

उक्तः संयमः, स च जीवाजीवविषय इति पृथिव्यादिजीवस्वरूपमाह-'दुविहा पुढवी'त्यादिरष्टाविंशतिः सूत्राणि ।।

दुविहा पुढविकाइया पं० तं०—सुहुमा चेव बायरा चेव १, एवं जाव दुविहा वणस्सइकाइया पं० तं—सुहुमा चेव बायरा चेव ५, दुविहा पुढविकाइया पं० तं०—पज्जत्तगा चेव अपज्जत्तगा चेव ९, एवं जाव वणस्सइकाइया १०, दुविहा पुढविकाइया पं० तं०—परिणया चेव अपरिणया चेव ११, एवं जाव वणस्सइकाइया १५, दुविहा दव्वा पं० तं०—परिणता चेव अपरिणता चेव १६, दुविहा पुढविकाइया पं० तं०—गतिसमावन्नगा चेव

अगइसमावन्नगा चेव १७, एवं जाव वणस्सइकाइया २१, दुविहा दव्वा पं० तं०—गतिसमावन्नगा चेव अगतिसमावन्नगा चेव २२, दुविहा पुढविकाइया पं० तं०—अणंतरोगाढा चेव परंपरोगाढा चेव २३, जाव दव्वा० २८ (सू० ७३)

तत्र पृथिव्येव कायो येषां ते पृथिवीकायिनः समासान्तविधौ एव स्वार्थिककप्रत्ययात् पृथिवीकायिकाः, पृथिव्येव वा कायः—शरीरं—सोऽस्ति येषां ते पृथिवीकायिकास्ते सूक्ष्मनामकर्मोदयात् सूक्ष्माश्चैव ये सर्वलोकापन्नाः, बादरनामकर्मोदयवर्त्तिनो बादरा ये पृथिवीनगादिष्वेवेति, नैषामापेक्षिकं सूक्ष्मबादरत्वमिति, 'एव'मिति पृथिवीसूत्रवदप्तेजोवायूनां सूत्राणि वाच्यानि यावद्वनस्पतिसूत्रम्, अत एवाह—'जावे'त्यादि, 'दुविहे'त्यादि पञ्चसूत्री, तत्र पर्याप्तनामकर्मोदयवर्त्तिनः पर्याप्ताः, ये हि चतस्रः स्वपर्याप्तीः पूरयन्तीति, अपर्याप्तनामकर्मोदयादपर्याप्तका ये स्वपर्याप्तीर्न पूरयन्तीति, इह च पर्याप्तिर्नाम शक्तिः सामर्थ्यविशेष इतियावत्, सा च पुद्गलद्रव्योपचयादुत्पद्यते, षड्भेदा चेयं, तद्यथा—आहार १ सरीरिं २ दिय ३ पज्जत्ती आणपाण ४ भास ५ मणे ६। चत्तारि पंच छप्पिय एगिंदियविगलसन्नीणं ॥१॥"ति, तत्र एकेन्द्रियाणां चतस्रो विकलेन्द्रियाणां पञ्च संज्ञिनां षट्, तत्र आहारपर्याप्तिर्नाम खलरसपरिणमनशक्तिः १, शरीरपर्याप्तिः सप्तधातुतया रसस्य परिणमनशक्तिः २, इन्द्रियपर्याप्तिः पञ्चानामिन्द्रियाणां योग्यान् पुद्गलान् गृहीत्वाऽनाभोगनिर्वर्त्तितेन वीर्येण तद्भावनयनशक्तिः ३, आनप्राणपर्याप्तिः उच्छ्वासनिःश्वासयोग्यान् पुद्गलान् गृहीत्वा तथा परिणमय्याऽऽलम्ब्य निसर्जनशक्तिः ४, भाषापर्याप्तिर्वचोयोग्यान् पुद्गलान् गृहीत्वा भाषात्वेन परिणमय्य वाग्योगतया निसर्जनशक्तिः ५, मनःपर्याप्तिर्मनोयोग्यान् पुद्गलान् गृहीत्वा मनस्तया परिणमय्य मनोयोगतया निसर्जनशक्तिरिति ६। एताः पर्याप्तयः पर्याप्तनाम-

कर्मोदयेन निर्वर्त्यन्ते, तद् येषामस्ति ते पर्याप्तकाः, अपर्याप्तकनामकर्मोदयेनानिर्वृत्ताः येषामेताः सन्तीति तेऽपर्याप्तका इति, एताश्च युगपदारभ्यन्तेऽन्तर्मुहूर्त्तेन च निर्वर्त्यन्ते, तत्र आहारपर्याप्तेर्निर्वृत्तिकालः समय एव, कथम् ?, उच्यते, यस्मात् प्रज्ञापनायामुक्तं—'आहारपज्जत्तीए अपज्जत्तए णं भंते ! जीवे किं आहारए अणाहारए ?, गोयमा ! नो आहारए अणाहारए'' त्ति, स च विग्रहे आहारपर्याप्त्या अपर्याप्तको लभ्यते, यदि पुनरुपपातक्षेत्रप्राप्तोऽप्याहारपर्याप्त्याऽपर्याप्तको भवेत्तदैवं व्याकरणं भवेद्—गोयमा ! सिय आहारए सिय अणाहारए' त्ति, यथा शरीरादिपर्याप्तिषु 'सिय आहारए सिय अणाहारए' त्ति, शेषाः पुनरसंख्यातसमया अन्तर्मुहूर्त्तेन निर्वर्त्यन्त इति, अपर्याप्तकास्तु उच्छ्वासपर्याप्त्या अपर्याप्ता एव म्रियन्ते, न तु शरीरेन्द्रियपर्याप्तिभ्यां, यस्मादागामिभवायुष्कं बद्ध्वा म्रियन्ते, तच्च शरीरेन्द्रियादिपर्याप्त्या पर्याप्तैरेव बध्यत इति । 'एव'मिति पूर्ववदेवेति । 'दुविहा पुढवी'त्यादिषट्सूत्री, परिणताः—स्वकायपरकायशस्त्रादिना परिणामान्तरमापादिताः, अचित्तीभूता इत्यर्थः, तत्र द्रव्यतः क्षेत्रादिना[3] मिश्रेण द्रव्येण कालतः पौरुष्यादिना [मिश्रेण]कालेन, भावतो वर्णगन्धरसस्पर्शान्यथात्वेन परिणताः, क्षेत्रतस्तु 'जोयणसयं तु गंतां अणहारेणं तु भंडसंकंती । वायागणिधूमेण य विद्धत्थं होइ लोणाइ ॥१॥ हरियाल मणोसिल पिप्पली य खज्जूर मुद्दिया अभया । आइन्नमणाइन्ना तेऽवि हु एमेव णायव्वा ॥२॥ आरुहणे ओरुहणे णिसियण गोणाइणं च गाउम्हा । भूमाहारच्छेदे उवक्कमेणेव परिणामो ॥३॥'' 'अणहारेणं'ति स्वदेशजाहाराभा-

१ आहारपर्याप्त्याऽपर्याप्तो भदन्त ! जीवः किमाहारकोऽनाहारकः ? गौतम ! नो आहारकोऽनाहारकः । २ गौतम ! स्यादाहारकः स्यादनाहारकः । ३ क्षेत्रादिना प्र । ४ योजनशतं तु गत्वाऽनाहारेण तु भाण्डसंक्रान्त्या । वाताग्निधूमेन च विध्वस्तं भवति लवणादि ॥१॥ हरितालमनःशिले पिप्पली च खर्जूरः मृद्विकाऽभया । आचीर्णा अनाचीर्णास्तेऽपि एवमेव ज्ञातव्याः ॥२॥ आरोहेऽवरोहे निषीदनं गवादीनां च गात्रोष्मा ।

त्रेनेति, 'भंडसंकंती'ति भाजनाद् भाजनान्तरसंक्रान्त्या, खर्ज्जूरादयोऽनाचरिताः अभयादयस्तु आचरिता इति, परिणामान्तरेऽपि पृथिवीकायिका एव ते, केवलमचेतना इति, कथमन्यथाऽचेतनपृथिवीकायपिण्डप्रयोजनाभिधानमिदं स्यात्, यथा—'घट्टगडगलगलेवो एमादि पओयणं बहुहा' इति। 'एव'मित्यादि प्रागिव, तदेवं पञ्चैतानि सूत्राणि। द्रवन्ति—गच्छन्ति विचित्रपर्यायानिति द्रव्याणि—जीवपुद्गलरूपाणि तानि च विवक्षितपरिणामत्यागेन परिणामान्तरापन्नानि परिणतानि—विवक्षितपरिणामवन्त्येव, अपरिणतानीति द्रव्यसूत्रं षष्ठम्। 'दुविहे'त्यादि पट्सूत्री, गतिर्गमनं तां समापन्नाः—प्राप्तास्तद्वन्तो गतिसमापन्नाः, ये हि पृथिवीकायिकाद्यायुष्कोदयात् पृथिवीकायिकादिव्यपदेशवन्तो विग्रहगत्या उत्पत्तिस्थानं व्रजन्ति, अगतिसमापन्नास्तु स्थितिमन्तः, द्रव्यसूत्रे गतिर्गमनमात्रमेव, शेषं तथैवेति॥ 'दुविहा पुढवी'त्यादि पट्सूत्री, अनन्तरं—सम्प्रत्येव समये क्वचिदाकाशदेशे अवगाढाः—आश्रितास्त एवानन्तरावगाढकाः, येषां तु द्व्यादयः समया अवगाढानां ते परम्परावगाढकाः, अथवा विवक्षितं क्षेत्रं द्रव्यं वाऽपेक्ष्यानन्तरम्—अव्यवधानेनावगाढा अनन्तरावगाढा, इतरे तु परम्परावगाढा इति॥

अनन्तरं द्रव्यस्वरूपमुक्तम्, अधुना द्रव्याधिकारादेव द्रव्यविशेषयोः कालाकाशयोर्द्विस्थान्या प्ररूपणामाह—

**दुविहे काले पं० तं०—ओसप्पिणीकाले चेव उस्सप्पिणीकाले चेव, दुविहे आगासे पं० तं०—लोगागासे चेव अलोगागासे चेव, ( सू० ७४ )**

तत्र कल्यते—सङ्ख्यायतेऽसावनेन वा कलनं वा कलासमूहो वेति कालः—वर्त्तनापरापरत्वादिलक्षणः स चावसर्प्पिण्युत्सर्प्पिणीरूप-

तया द्विविधो द्विस्थानकानुरोधादुक्तः अन्यथाऽवस्थितलक्षणो महाविदेहभोगभूमिसम्भवी तृतीयोऽप्यस्तीति ॥ 'आगासे'त्ति सर्वद्रव्यस्वभावानाकाशयति—आदीपयति तेषां स्वभावलाभेऽवस्थानदानादित्याकाशम्, आङ् मर्यादाऽभिविधिवाची, तत्र मर्यादायामाकाशे भवन्तोऽपि भावाः स्वात्मन्येवाऽऽसते नाकाशतां यान्तीत्येवं तेषामात्मसादकरणाद्, अभिविधौ तु सर्वभावव्यापनादाकाशमिति, तत्र लोको यत्राकाशदेशे धर्मास्तिकायादिद्रव्याणां वृत्तिरस्ति स एवाकाशं लोकाकाशमिति, विपरीतमलोकाकाशमिति ॥

अनन्तरं लोकालोकभेदेनाकाशद्वैविध्यमुक्तं, लोकश्च शरीरिशरीराणां सर्वत आश्रयस्वरूप इति नारकादिशरीरिदण्डकेन शरीरप्ररूपणायाह—

णेरइयाणं दो सरीरगा पं० तं०—अब्भंतरगे चेव बाहिरगे चेव, अब्भंतरए कम्मए बाहिरए वेउव्विए, एवं देवाणं भाणियव्वं, पुढविकाइयाणं दो सरीरगा पं० तं०—अब्भंतरगे चेव बाहिरगे चेव, अब्भंतरगे कम्मए बाहिरगे ओरालियगे, जाव वणस्सइकाइयाणं, वेइंदियाणं दो सरीरा पं० तं०—अब्भंतरए चेव, बाहिरए चेव, अब्भंतरगे कम्मए, अट्ठिमंससोणितबद्धे बाहिरए ओरालिए, जाव चउरिंदियाणं, पंचिंदियतिरिक्खजोणियाणं दो सरीरगा पं० तं० —अब्भंतरगे चेव बाहिरगे चेव, अब्भंतरगे कम्मए, अट्ठिमंससोणियण्हारुछिराबद्धे बाहिरए ओरालिए, मणुस्साणवि एवं चेव । विग्गहगइसमावन्नगाणं नेरइयाणं दो सरीरगा पं० तं०—तेयए चेव कम्मए चेव, निरन्तरं जाव वेमाणियाणं, नेरइयाणं दोहिं ठाणेहिं सरीरुप्पत्ती सिया, तं०—रागेण चेव दोसेण चेव, जाव वेमाणियाणं, नेरइयाणं दुट्ठाणनिव्वत्तिए सरीरगे पं० तं०—रागनिव्वत्तिए चेव, दोसनिव्वत्तिए चेव,

**जाव वेमाणियाणं, दो काया पं० तं०—तसकाए चेव थावरकाए चेव, तसकाए दुविहे पं० तं०—भवसिद्धिए चेव अभवसिद्धिए चेव, एवं थावरकाएऽवि ( सू० ७५ )**

'णेरइयाण'मित्यादि, प्रायः कण्ठ्यं, नवरं शीर्यते–अनुक्षणं चयापचयाभ्यां विनश्यतीति शरीरं तदेव शटनादिधर्मतयाऽनुकम्पितत्वात् शरीरकं, ते च द्वे प्रज्ञप्ते जिनैः, अभ्यन्तः–मध्ये भवमाभ्यन्तरं, आभ्यन्तरत्वं च तस्य जीवप्रदेशैः सह क्षीरनीरन्यायेन लोलीभवनात् भवान्तरगतावपि च जीवस्यानुगतिप्रधानत्वादपवरकाद्यन्तःप्रविष्टपुरुषवदनतिशयिनामप्रत्यक्षत्वाच्चेति, तथा बहिर्भवं बाह्यं, बाह्यता चास्य जीवप्रदेशैः कस्यापि केषुचिदवयवेष्वव्याप्तेर्भवान्तराननुयायित्वान्निरतिशयानामपि प्रायः प्रत्यक्षत्वाच्चेति, तत्राभ्यन्तरं 'कम्मए'त्ति कार्मणशरीरनामकर्मोदयनिर्वर्त्त्यमशेषकर्मणां प्ररोहभूमिराधारभूतं, तथा संसार्यात्मनां गत्यन्तरसंक्रमणे साधकतमं तत् कार्मणवर्गणास्वरूपं, कर्मैव कर्मकमिति, कर्मकग्रहणे च तैजसमपि गृहीतं द्रष्टव्यं, तयोरव्यभिचारित्वेनैकत्वस्य विवक्षितत्वादिति, 'एवं देवाणं भाणियव्वं'ति अयमर्थो–यथा नैरयिकाणां शरीरद्वयं भणितमेवं देवानाम्–असुरादीनां वैमानिकान्तानां भणितव्यम्, कार्मणवैक्रिययोरेव तेषां भावात्, चतुर्विंशतिदण्डकस्य च विवक्षितत्वादिति। 'पुढवी'त्यादि, पृथिव्यादीनां तु बाह्यमौदारिकमौदारिकशरीरनामकर्मोदयादुदारपुद्गलनिर्वृत्तमौदारिकं, केवलमेकेन्द्रियाणामस्थ्यादिविरहितं, वायूनां वैक्रियं यत्तन्न विवक्षितं, प्रायिकत्वात् तस्येति ॥ 'बेइंदियाण'मित्यादि, अस्थिमांसशोणितैर्बद्धं–नद्धं यत्तथा, द्वीन्द्रियादीनामौदारिकत्वेऽपि शरीरस्यायं विशेषः। 'पंचेंदिए'त्यादि, पञ्चेन्द्रियतिर्यग्मनुष्याणां पुनरयं विशेषो यदस्थिमांसशोणितस्नायुशिराबद्धमिति, अस्थ्यादयस्तु प्रतीता इति ॥ प्रकारान्तरेण चतुर्विंशतिदण्डकेन शरीरप्ररूपणामेवाह—'विग्गहे'त्यादि, विग्रहगतिः–वक्रगतिर्यदा विश्रेणिव्यवस्थितमुत्पत्तिस्थानं गन्तव्यं भवति

तदा या स्यात्तां समापन्ना विग्रहगतिसमापन्नास्तेषां द्वे शरीरे, इह तैजसकार्मणयोर्भेदेन विवक्षेति, एवं दण्डकः ॥ शरीराधिकारात् शरीरोत्पत्तिं दण्डकेन निरूपयन्नाह—'नेरइयाण'मित्यादि, कण्ठ्यं, किन्तु या रागद्वेषजनितकर्मणा शरीरोत्पत्तिः सा रागद्वेषाभ्यामेवेति व्यपदिश्यते, कार्ये कारणोपचारादिति, 'जाव वेमाणियाणं'ति दण्डकः सूचितः। शरीराधिकाराच्छरीरनिर्वर्त्तनसूत्रं, तदप्येवं, नवरमुत्पत्तिः–आरम्भमात्रं निर्वर्त्तना तु निष्ठानयनमिति। शरीराधिकाराच्छरीरवतां राशिद्वयेन प्ररूपणामाह—'दो काए'त्यादि, त्रसनामकर्मोदयात् त्रस्यन्तीति त्रसाः तेषां कायो–राशिस्त्रसकायः, स्थावरनामकर्मोदयात् तिष्ठन्तीत्येवंशीलाः स्थावरास्तेषां कायः स्थावरकाय इति। त्रसस्थावरकाययोरेव द्वैविध्यप्ररूपणार्थं 'तसकाये'त्यादि सूत्रद्वयं, सुगमं चेति।

पूर्वसूत्रे भव्याः शरीरिण उक्ता इतस्तद्विशेषाणामेव यद्यथा कर्त्तुमुचितं तत् तथा द्विस्थानकानुपातेनाह—

**दो दिसाओ अभिगिज्झ कप्पति णिग्गंथाण वा णिग्गंथीण वा पव्वावित्तए—पाईणं चेव उदीणं चेव, एवं मुंडावित्तए सिक्खावित्तए उवट्ठावित्तए संभुंजित्तए संवसित्तए सज्झायमुद्दिसित्तए सज्झायं समुद्दिसित्तए सज्झायमणुजाणित्तए आलोइत्तए पडिक्कमित्तए निंदित्तए गरहित्तए विउट्टित्तए विसोहित्तए अकरणयाए अब्भुट्ठित्तए आहारिहं पायच्छित्तं तवोकम्मं पडिवज्जित्तए, दो दिसातो अभिगिज्झ कप्पति णिग्गंथाण वा णिग्गंथीण वा अपच्छिममारणंतियसंलेहणाजूसणाजूसियाणं भत्तपाणपडियाइक्खिताणं पाओवगताणं कालं अणवकंखमाणाणं विहरित्तए, तंजहा—पाईणं चेव उदीणं चेव।' (सू० ७६) बिट्ठाणस्स पढमो उद्देसओ समत्तो २–१॥**

'दो दिसाओ'इत्यादि, द्वे दिशौ काष्ठे अभिगृह्य–अङ्गीकृत्य तदभिमुखीभूयेत्यर्थः कल्पते–युज्यते, निर्ग्गता ग्रन्थाद्–धनादे-

रिति निर्ग्रन्था:-साधवस्तेषां, निर्ग्रन्थ्य:-साध्व्यस्तासां प्रव्राजयितुं रजोहरणादिदानेन, 'प्राचीनां' प्राचीं पूर्वामित्यर्थः, 'उदीचीनाम्' उदीचीमुत्तरामित्यर्थः, उक्तं च-"पुव्वामुहो उ उत्तरमुहो व देज्जाऽहवा पडिच्छेज्जा। जाए जिणादओ वा हवेज्ज जिणचेइयाइं वा ॥१॥" इति ॥ 'एव'मिति यथा प्रव्राजनसूत्रं दिग्द्वयाभिलापेनाधीतमेवं मुण्डनादिसूत्राण्यपि षोडशाध्येतव्यानीति, तत्र मुण्डयितुं शिरोलोचनेन १ शिक्षयितुं ग्रहणशिक्षापेक्षया सूत्रार्थौ ग्राहयितुं आसेवनाशिक्षापेक्षया तु प्रत्युपेक्षणादि शिक्षयितुमिति २, उत्थापयितुं महाव्रतेषु व्यवस्थापयितुं ३ संभोजयितुं भोजनमण्डल्यां निवेशयितुं ४ संवासयितुं संस्तारकमण्डल्यां निवेशयितुं ५, सुष्ठु आ-मर्यादया अधीयत इति स्वाध्याय:-अङ्गादिस्तमुद्देष्टुं योगविधिक्रमेण सम्यग्योगेनाधीष्वेदमित्येवमुपदेष्टुमिति ६, समुद्देष्टुं योगसामाचार्यैव स्थिरपरिचितं कुर्विदमिति वक्तुमिति ७, अनुज्ञातुं तथैव सम्यगेतद् धारय अन्येषां च प्रवेदयेत्येवमभिधातुमिति ८, आलोचयितुं गुरवेऽपराधान्निवेदयितुमिति ९, प्रतिक्रमितुं-प्रतिक्रमणं कर्त्तुमिति १०, निन्दितुमतिचारान् स्वसमक्षं जुगुप्सितुं, आह च—"सचरित्तपच्छयावो निंद"त्ति ११, गर्हितुं गुरुसमक्षं तानेव जुगुप्सितुं, आह च—"गरहाऽवि तहाजातीयमेव नवरं परप्पयासणए"त्ति १२, 'विउट्टित्तए'त्ति व्यतिवर्त्तयितुं वित्रोटयितुं विकुट्टयितुं वा, अतिचारानुबन्धं विच्छेदयितुमित्यर्थः १३, विशोधयितुमतिचारपङ्कापेक्षयाऽऽत्मानं विमलीकर्त्तुमिति १४, अकरणतया-पुनर्न करिष्यामीत्येवमभ्युत्थातुम्-अभ्युपगन्तुमिति १५, 'यथार्हम्' अतिचाराद्यपेक्षया यथोचितं पापच्छेदकत्वात् प्रायश्चित्तविशोधकत्वाद्वा प्रायश्चित्तं, उक्तं च—"पावं छिंदइ जम्हा पायच्छित्तं तु भन्नए तेण।

१ पूर्वमुखो वोत्तरमुखो वा दद्यादथवा प्रतीच्छेत्। यस्यां जिनादयो वा भवेयुर्जिनचैत्यानि वा॥१॥ २ स्वचरितपश्चात्तापो निन्दा, ३ गर्हाऽपि तथाजातीयैव नवरं परस्मै प्रकाशनम्, ४ पापं छिनत्ति यस्मात् पापच्छित्त भण्यते तस्मात्। प्रायेण वाऽपि चित्तं विशोधयति तेन प्रायश्चित्तं ॥१॥

पाएण वावि चित्तं विसोहए तेण पच्छित्तं ॥१॥"ति, तपः-कर्म-निर्विकृतिकादिकं प्रतिपत्तुम्-अभ्युपगन्तुमिति १६, सप्तदशं सूत्रं साक्षादेवाह— 'दो दिसे'त्यादि, पश्चिमैवामङ्गलपरिहारार्थमपश्चिमा सा चासौ मरणमेव योऽन्तस्तत्र भवा मारणान्तिकी च सा चासौ संलिख्यतेऽनया शरीरकषायादीति संलेखना-तपोविशेषः सा चेति अपश्चिममारणान्तिकसंलेखना तस्याः 'जूसण'त्ति जोषणा-सेवा तया तल्लक्षणधर्मेणेत्यर्थः 'जुसियाण'न्ति सेवितानां, तद्युक्तानामित्यर्थः, तया वा 'झोषितानां' क्षपितानां क्षपितदेहानामित्यर्थः, तथा भक्तपाने प्रत्याख्याते यैस्ते तथा तेषां, पादपवदुपगतानाम्-अचेष्टतया स्थितानामनशनविशेषं प्रतिपन्नानामित्यर्थः, 'कालं' मरणकालमनवकाङ्क्षतां-तत्रानुत्सुकानां विहर्त्तुं-स्थातुमिति १७। एवमेतानि दिक्सूत्राण्यादितोऽष्टादश। सर्वत्र यन्न व्याख्यातं, तत्सुगमत्वादिति ॥ द्विस्थानकस्य प्रथमोद्देशको विवरणतः समाप्तः ॥

---

इहानन्तरोद्देशके जीवाजीवधर्मा द्वित्वविशिष्टा उक्ताः, द्वितीयोद्देशके तु द्वित्वविशिष्टा एव जीवधर्मा उच्यन्ते, इत्यनेन सम्बन्धेन आयातस्यास्योद्देशकस्येदमादिसूत्रम्—

जे देवा उड्ढोववन्नगा कप्पोववन्नगा विमाणोववन्नगा चारोववन्नगा चारट्ठितीया गतिरतिया गतिसमावन्नगा, तेसिणं देवाणं सता समितं जे पावे कम्मे कज्जति तत्थगतावि एगतिया वेदणं वेदेंति अन्नत्थगतावि एगतिया वेअणं वेदेंति, णेरइयाणं सता समियं जे पावे कम्मे कज्जति तत्थगतावि एगतिया वेयणं वेदेंति अन्नत्थगतावि

एगतिआ वेयणं वेदेंति, जाव पंचेंदियतिरिक्खजोणियाणं, मणुस्साणं सता समितं जे पावे कम्मे कज्जति इह-गतावि एगतिता वेयणं वेयंति अन्नत्थगतावि एगतिया वेयणं वेयंति, मणुस्सवज्जा सेसा एक्कगमा ॥ (सू० ७७)

'जे देवे' त्यादि, अस्य चानन्तरसूत्रेण सहायमभिसम्बन्धः–प्रथमोद्देशकान्त्यसूत्रे पादपोपगमनमुक्तम्, तस्माच्च देवत्वं केपाञ्चि-द्भवतीति देवविशेषभणनेन तत्कर्मबन्धवेदने प्रतिपादयन्नाह–'जे देवे, त्यादि, ये देवाः–सुराः वक्ष्यमाणविशेषणेभ्यो वैमानिका अन-शनादेरुत्पन्नाः, किंभूताः–'उड्ढं'त्ति ऊर्द्ध्वलोकस्तत्रोपपन्नकाः–उत्पन्ना ऊर्द्ध्वोपपन्नकास्ते च द्विधा–कल्पोपपन्नकाः–सौधर्मादिदेव-लोकोत्पन्नास्तथा विमानोपपन्नकाः–ग्रैवेयकानुत्तरलक्षणविमानोत्पन्नाः कल्पातीता इत्यर्थः, तथा परे 'चारोववन्नग'त्ति चरन्ति–भ्रमन्ति ज्योतिष्कविमानानि यत्र स चारो–ज्योतिश्चक्रक्षेत्रं समस्तमेव, व्युत्पत्त्यर्थमात्रानपेक्षणेन शब्दप्रवृत्तिनिमित्ताश्रयणात्, तत्रो-पपन्नकाश्चारोपपन्नकाः–ज्योतिष्काः, न च पादपोपगमनादेर्ज्योतिष्कत्वं न भवति, परिणामविशेषादिति, तेऽपि च द्विधैव, तथाहि–चारे–ज्योतिश्चक्रक्षेत्रे स्थितिरेव येषां ते चारस्थितिकाः–समयक्षेत्रबहिर्वर्त्तिनो घण्टाकृतय इत्यर्थः, तथा गतौ रतिर्येषां ते गतिरतिकाः, समयक्षेत्रवर्त्तिन इत्यर्थः, गतिरतयश्चासततगतयोऽपि भवन्तीत्यत आह–गतिं–गमनं समिति–सन्ततमापन्नकाः–प्राप्ता गतिसमापन्नकाः, अनुपरतगतय इत्यर्थः, तेषां देवानां द्विविधानां पुनर्द्विविधानां सदा–नित्यं समितं–सन्ततं यत्पापं कर्म–ज्ञानावरणादि, सततबन्ध-कत्वात् जीवानां, क्रियते–बध्यते, कर्मकर्तृप्रयोगोऽयं, भवति सम्पद्यत इत्यर्थः, ते देवास्तस्य–कर्मणः अबाधाकालातिक्रमे सति 'तत्थगयावि' त्ति अपिरेवकारार्थस्तस्य चैवं प्रयोगः–तत्रैव–देवभव एव कल्पातीतानां क्षेत्रान्तरादिगमनासम्भवादिह तत्रान्यत्रशब्दा-भ्यां भव एव विवक्षितः, न क्षेत्रशयनासनादीति, गताः–वर्त्तमाना 'एके' केचन देवा वेदनाम्–उदयं विपाकं 'वेदयन्ति' अनुभवन्ति,

'अन्नत्थगयावि'त्ति देवभवादन्यत्रैव भवान्तरे गता—उत्पन्ना वेदनामनुभवन्ति, केचित्तूभयत्रापि, अन्ये विपाकोदयापेक्षया नोभयत्रापीति, एतच्च विकल्पद्वयं सूत्रे नाश्रितं, द्वित्वाधिकारादिति ॥ सूत्रोक्तमेव विकल्पद्वयं सर्वजीवेषु चतुर्विंशतिदण्डकेन प्ररूपयन्नाह— 'नेरइयाण' मित्यादि, प्रायः सुगमम् , नवरं, ''तत्थगयावि अन्नत्थगयावि'' एवमभिलापेन दण्डको नेयो यावत्पञ्चेन्द्रियतिर्यञ्चोऽत एवाह—'जावे' त्यादि, मनुष्येषु पुनरभिलापविशेषो दृश्यः, यथा 'इहगतावि एगइया' इति, सूत्रकारो हि मनुष्योऽतस्तत्रेत्येवंभूतं परोक्षानासन्ननिर्देशं विमुच्य मनुष्यसूत्रे इहेत्येवं निर्दिशति स्म, मनुष्यभवस्य स्वीकृतत्वेन प्रत्यक्षासन्नवाचिन इदंशब्दस्य विषयत्वादिति, अत एवाह—'मणुस्सवज्जा सेसा एक्कगम'त्ति शेषाः—व्यन्तरज्योतिष्कवैमानिका एकगमाः—तुल्याभिलापाः, ननु प्रथमसूत्र एव ज्योतिष्कवैमानिकदेवानां विवक्षितार्थस्याभिहितत्वात् किं पुनरिह तद्ग्रहणेनेति ?, उच्यते, तत्रानुष्ठानफलदर्शनप्रसङ्गेन भेदतश्चोक्तत्वाद् , इह तु दण्डकक्रमेण सामान्यतश्चोक्तत्वादिति न दोषो, दृश्यते चेह तत्र तत्र विशेषोक्तावपि सामान्योक्तिरितरोक्तौ त्वितरेति ॥ तत्रगता वेदनां वेदयन्तीत्युक्तमतो नारकादीनां गतिं तद्विपर्यस्तामागतिं च निरूपयन्नाह—

नेरतिता दुगतिया दुयागतिया पं० तं०—नेरइए २ सु उववज्जमाणे मणुस्सेहिंतो वा पंचिंदियतिरिक्खजोणिएहिंतो वा उववज्जेज्जा, से चेव णं से नेरइए णेरइयत्तं विप्पजहमाणे मणुस्सत्ताए वा पंचेंदियतिरिक्खजोणियत्ताए वा गच्छेज्जा; एवं असुरकुमारावि, णवरं, से चेव णं से असुरकुमारे असुरकुमारत्तं विप्पजहमाणे मणुस्सत्ताए वा तिरिक्खजोणियत्ताए वा गच्छिज्जा, एवं सव्वदेवा, पुढविकाइया दुगतिया दुयागतिया पं० तं०—पुढविकाइए पुढविकाइएसु उववज्जमाणे पुढविकाइएहिंतो वा णोपुढविकाइएहिंतो वा उववज्जेज्जा, से चेव

णं से पुढविकाइए पुढविकाइयत्तं विप्पजहमाणे पुढविकाइयत्ताए वा णोपुढविकाइयत्ताए वा गच्छेज्जा एवं जाव मणुस्सा ॥ (सू० ७८)

दण्डकः कण्ठ्यो, नवरं नैरयिका–नारका द्वयोः–मनुष्यगतितिर्यग्गतिलक्षणयोर्गत्योरधिकरणभूतयोर्गतिर्येषां ते तथा, द्वाभ्यामेताभ्यामेवावधिभूताभ्यामागतिः–आगमनं येषां ते तथा, उदितनारकायुर्नारक एव व्यपदिश्यते, अत उच्यते 'णेरइए णेरइएसु'त्ति, नारकेषु मध्ये इत्यर्थः, इह चोद्देशक्रमव्यत्ययात् प्रथमवाक्येनागतिरुक्ता, 'से चेव णं से'त्ति यो मानुषत्वादितो नरकं गतः स एवासौ नारको नान्यः, अनेनैकान्तानित्यत्वं निरस्तमिति, 'विप्पजहमाणे'त्ति विप्रजहन्–परित्यजन्, इह च भूतभावतया नारकव्यपदेशः, अनेन वाक्येन गतिरुक्ता, इत्थं च व्याख्यानं 'तेजस्कायिका आगतयस्तिर्यग्मनुष्यापेक्षया, एकगतयस्तिर्यगपेक्षये'ति वाक्यमुपजीव्येति, 'एवं असुरकुमारावि'त्ति, नारकवद्वक्तव्या इत्यर्थः, 'नवरं'ति केवलमयं विशेषः–तिर्यक्षु न पञ्चेन्द्रियेष्वेवोत्पद्यन्ते पृथिव्यादिष्वपि तदुत्पत्तेरित्यतः सामान्यत आह–'से चेव णं से इत्यादि जाव तिरिक्खजोणियत्ताए वा गच्छेज्ज'त्ति, 'एवं सव्वदेव'त्ति असुरवत् द्वादशापि दण्डकदेवपदानि वाच्यानि, तेषामप्येकेन्द्रियेषूत्पत्तेरिति । 'णोपुढविकाइएहिंतो'त्ति अनेन पृथ्वीकायिकनिषेधद्वारेणाप्कायिकादयः सर्वे गृहीता द्विस्थानकानुरोधादिति, तेभ्यो वा–नारकवर्जेभ्यः समुत्पद्यते, 'णोपुढविकाइयत्ताए'त्ति, देवनारकवर्जाप्कायादितया गच्छेदिति, 'एवं जाव मणुस्स'त्ति, यथा पृथिवीकायिका 'दुगतिया' इत्यादिभिरभिलापैरुक्ता एवमेभिरेवाप्कायिकादयो मनुष्यावसानाः पृथिवीकायिकशब्दस्थानेऽप्कायादिव्यपदेशं कुर्वद्भिरभिधातव्या इति । व्यन्तरादयस्तु पूर्वमतिदिष्टा एवेति ।

जीवाधिकारादेव भव्यादिविशेषणैः षोडशभिर्दण्डकप्ररूपणायाह—

दुविहा नेरइया पन्नत्ता, तंजहा—भवसिद्धिया चेव अभवसिद्धिया चेव, जाव वेमाणिया १। दुविहा नेरइया पं० तं०—अणंतरोववन्नगा चेव परंपरोववन्नगा चेव जाव वेमाणिया २। दुविहा णेरइया पं० तं०—गतिसमावन्नगा चेव अगतिसमावन्नगा चेव, जाव वेमाणिया ३। दुविहा नेरइया पं० तं०—पढमसमओववन्नगा चेव अपढमसमओववन्नगा चेव, जाव वेमाणिया ४। दुविहा नेरइया पं० तं०—आहारगा चेव अणाहारगा चेव, एवं जाव वेमाणिया ५। दुविहा णेरइया पं० तं०—उस्सासगा चेव णोउस्सासगा चेव, जाव वेमाणिया ६। दुविहा नेरइया पं० तं०—सइंदिया चेव अणिंदिया चेव, जाव वेमाणिया ७। दुविहा नेरइया पं० तं०—पज्जत्तगा चेव अपज्जत्तगा चेव, जाव वेमाणिया ८। दुविहा नेरइया पं० तं०—सन्नि चेव असन्नि चेव, एवं पंचेंदिया सव्वे विगलिंदियवज्जा जाव वाणमंतरा (वेमाणिया) ९। दुविहा नेरइया पं० तं०—भासगा चेव अभासगा चेव, एवमेगिंदियवज्जा सव्वे १०। दुविहा नेरइया पं० तं०—सम्मदिट्ठीया चेव मिच्छदिट्ठीया चेव, एगिंदियवज्जा सव्वे ११। दुविहा नेरइया पं० तं०—परित्तसंसारिता चेव अणंतसंसारिया चेव, जाव वेमाणिया १२। दुविहा नेरइया पं० तं०—संखेज्जकालसमयट्ठितीया चेव असंखेज्जकालसमयट्ठितीया चेव, एवं पंचेंदिया एगिंदियविगलिंदियवज्जा जाव वाणमंतरा १३। दुविहा नेरइया पं० तं०—सुलभबोधिया चेव दुलभबोधिया चेव, जाव वेमाणिया १४। दुविहा नेरइया पं० तं०—कण्हपक्खिया चेव सुक्कपक्खिया चेव, जाव वेमाणिया १५। दुविहा नेरइया पं० तं०—चरिमा चेव अचरिमा चेव, जाव वेमाणिया १६ (सू० ७९)

तत्र भव्यदण्डकः कण्ठ्यः, अनन्तरदण्डके 'अणंतर'त्ति एकस्मादनन्तरमुत्पन्ना ये तेऽनन्तरोपपन्नकाः, तदन्यथा तु परम्परोपपन्नकाः, विवक्षितदेशापेक्षया वा येऽनन्तरतयोत्पन्नास्ते आद्याः, परम्परया त्वितरे इति २, गतिदण्डके गतिसमापन्नका-नरकं गच्छन्तः इतरे तु तत्र ये गताः, अथवा गतिसमापन्ना-नारकत्वं प्राप्ता इतरे तु द्रव्यनारकाः, अथवा चलस्थिरत्वापेक्षया ते ज्ञेया इति ३, प्रथमसमयदण्डके 'पढमे'त्यादि, प्रथमः समय उपपन्नानां येषां ते प्रथमसमयोपपन्नकाः, तदन्ये अप्रथमसमयोपपन्नका इति ४, आहारकदण्डे आहारकाः सर्वत्र, अनाहारकास्तु विग्रहगतावेकं द्वौ वा समयौ, ये नाडीमध्ये मृत्वा तत्रैवोत्पद्यन्ते, ये त्वन्यथा ते त्रीनिति ५, उच्छ्वासदण्डके उच्छ्वसन्तीत्युच्छ्वासकास्तत्पर्याप्ति (त्या) पर्याप्तकाः, तदन्ये तु नोच्छ्वासकाः ६, इन्द्रियदण्डके सेन्द्रियाः-इन्द्रियपर्याप्त्या पर्याप्ताः, तदपर्याप्तास्तु अनिन्द्रियाः ७, पर्याप्तदण्डके पर्याप्ताः पर्याप्तनामकर्मोदयादितरे त्वितरोदयादिति ८, संज्ञिदण्डके संज्ञिनो-मनःपर्याप्त्या पर्याप्तकाः तथा अपर्याप्तकास्तु ये (न तथा) ते असंज्ञिन इति, 'एवं पंचिंदिए'त्यादि-अस्यायमर्थः-यथा नारकाः संज्ञ्यसंज्ञिभेदेनोक्ताः 'एवं विगलेंदियवज्ज'त्ति, विकलानि-अपरिपूर्णानि सङ्ख्ययेन्द्रियाणि येषां ते विकलेन्द्रियाः, तान् पृथिव्यादीन् द्वित्रिचतुरिन्द्रियांश्च वर्जयित्वा येऽन्ये चतुर्विंशतिदण्डके पञ्चेन्द्रिया असुरादयो भवन्ति ते सर्वेऽपि संज्ञ्यसंज्ञितया वाच्याः, दण्डकावसानमाह--'जाव वेमाणिय'त्ति वैमानिकपर्यवसाना अप्येवं वाच्या इति, क्वचिद् 'जाव वाणवंतरिय'त्ति पाठस्तत्रायमर्थो-येऽसंज्ञिभ्यो नारकादितयोत्पद्यन्ते तेऽसंज्ञिन एवोच्यन्ते, असंज्ञिनश्च नारकादिषु व्यन्तरावसानेषूत्पद्यन्ते न ज्योतिष्कवैमानिकेष्विति तेषामसंज्ञित्वाभावादिहाग्रहणमिति ९, भाषादण्डके भाषका-भाषापर्याप्त्युदये, अभाषकास्तदपर्याप्तकावस्थायामिति, एकेन्द्रियाणां

१ सामान्यतोऽपेक्षया, तेन यदि नाडीबहिःस्थमानां तत्रोत्पादाभावः करणापर्याप्तिकालेऽपर्याप्तनामकर्मोदयस्याभावश्च तदापि न क्षतिः

भाषापर्याप्तिर्नास्तीत्यत आह—'एव'मित्यादि १०, सम्यग्दृष्टिदण्डके सम्यक्त्वमेकेन्द्रियाणां नास्ति, द्वीन्द्रियादीनां तु सास्वादनं स्यादपीत्युक्तम्—'एगिंदियवज्जा सव्वे'त्ति ११, संसारदण्डके परीत्तसंसारिकाः—सङ्क्षिप्तभवा इतरे त्वितरे १२, स्थितिदण्डके कालः कृष्णोऽपि स्यात् समय आचारोऽपि स्यादतः कालश्चासौ समयश्चेति कालसमयः संख्येयो वर्षप्रमाणतः स यस्यां सा संख्येयकालसमया सा स्थितिः—अवस्थानं येषां ते संख्येयकालसमयस्थितिकाः, दशवर्षसहस्रादिस्थितय इत्यर्थः, इतरे तु पल्योपमासंख्येयभागादिस्थितयः, 'संखिज्जकालठिइय'त्ति क्वचित्पाठः, स च सुगम एवेति, 'एव'मिति नारकवद् द्विविधस्थितिका दण्डकोक्ताः, किं सर्वेऽपि?, नेत्याह—पञ्चेन्द्रियाः असुरादयः, किमुक्तं भवति?—एकेन्द्रियविकलेन्द्रियवर्ज्जाः, एतेषां हि द्वाविंशतिवर्षसहस्रादिका सङ्ख्यातैव स्थितिः, पञ्चेन्द्रिया अपि किं सर्वे?, नेत्याह—यावद् व्यन्तराः व्यन्तरान्ताः, एते हि उभयस्वभावा भवन्ति, ज्योतिष्कवैमानिकास्तु असङ्ख्यातकालस्थितय एवेति १३, बोधिदण्डके बोधिः—जिनधर्म्मः (प्राप्तिः) सा सुलभा येषां ते सुलभबोधिकाः, एवमितरेऽपि १४, पाक्षिकदण्डके शुक्लो विशुद्धत्वात् पक्षः—अभ्युपगमः शुक्लपक्षस्तेन चरन्तीति शुक्लपाक्षिकाः, शुक्लत्वं च क्रियावादित्वेनेति, आह च—'किरियावाई भव्वे णो अभव्वे सुक्कपक्खिए णो किण्हपक्खिए'त्ति, शुक्लानां वा—आस्तिकत्वेन विशुद्धानां पक्षो—वर्गः शुक्लपक्षस्तत्र भवाः शुक्लपाक्षिकाः, तद्विपरीतास्तु कृष्णपाक्षिका इति १५, चरमदण्डके येषां स नारकादिभवश्चरमः, पुनस्तेनैव नोत्पत्स्यन्ते सिद्धिगमनात् ते चरमाः, अन्ये त्वचरमा इति १६, एवमेते आदितोऽष्टादश दण्डकाः।

प्राग्वैमानिकाश्चरमाचरमत्वेनोक्ताः, ते चावधिनाऽधोलोकादीन् विदन्त्यतस्तद्वेदने जीवस्य प्रकारद्वयमाह—

१ क्रियावादी भव्यो नो अभव्यः शुक्लपाक्षिको नो कृष्णपाक्षिकः.

दोहिं ठाणेहिं आया अधोलोगं जाणइ पासइ तं०—समोहतेणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ असमोहतेणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ, आधोहि समोहतासमोहतेणं चेव अप्पाणेणं आया अहेलोगं जाणइ पासइ एवं तिरियलोगं २ उड्ढलोगं ३ केवलकप्पं लोगं ४। दोहिं ठाणेहिं आया अधोलोगं जाणइ पासइ तं०—विउव्वितेण चेव अप्पाणेणं आता अधोलोगं जाणइ पासइ अविउव्वितेणं चेव अप्पाणेणं आता अधोलोगं जाणइ पासइ आहोधि विउव्वियाविउव्वितेण चेव अप्पाणेणं आता अधोलोगं जाणइ(पासइ) १, एवं तिरियलोगं, ४। दोहिं ठाणेहिं आया सद्दाइं सुणेइ, तं०—देसेणवि आया सद्दाइं सुणेइ सव्वेणवि आया सद्दाइं सुणेति, एवं रूवाइं पासइ, गंधाइं अग्घाति, रसाइं आसादेति, फासाइं पडिसंवेदेति ५। दोहिं ठाणेहिं आया ओभासइ, तं०—देसेणवि आया ओभासइ सव्वेणवि आया ओभासति, एवं पभासति विकुव्वति परियारेति भासं भासति आहारेति परिणामेति वेदेति निज्जरेति ९। दोहिं ठाणेहिं देवे सद्दाइं सुणेइ, तं०—देसेणवि देवे सद्दाइं सुणेति सव्वेणवि देवे सद्दाइं सुणेइ, जाव निज्जरेति १४। मरुया देवा दुविहा० पं० तं०—एगसरीरे चेव बिसरीरे चेव, एवं किन्नरा किंपुरिसा गंधव्वा णागकुमारा सुवन्नकुमारा अग्गिकुमारा वायुकुमारा ८. देवा दुविहा पं० तं०—एगसरीरे चेव बिसरीरे चेव। (सू० ८०) बिट्ठाणस्स बीओ उद्देसओ समत्तो २-१।

'दोहीं'त्यादि सूत्रचतुष्टयं, द्वाभ्यां 'स्थानाभ्यां' प्रकाराभ्यामात्मगताभ्यामात्मा-जीवोऽधोलोकं जानात्यवधिज्ञानेन पश्यत्यवधिदर्शनेन 'समवहतेन' वैक्रियसमुद्घातगतेनात्मना-स्वभावेन, समुद्घातान्तरगतेन वा, असमवहतेन त्वन्यथेति, एतदेव व्या·

ख्याति—'आहोही'त्यादि यत्प्रकारोऽवधिरस्येति यथावधिः, आदिदीर्घत्वं प्राकृतत्वात्, परमावधेर्वाऽधोवर्त्यवधिर्यस्य सोऽधोऽवधिरात्मा—नियतक्षेत्रविषयावधिज्ञानी स कदाचित् समवहतेन कदाचिदन्यथेति समवहतासमवहतेनेति, 'एव'मित्यादि, 'एव'मिति यथाऽधोलोकः समवहतासमवहतप्रकाराभ्यामवधेर्विषयतयोक्त एवं तिर्यग्लोकादयोऽपीति, सुगमानि च तिर्यग्लोकोद्र्ध्वलोककेवलकल्पसूत्राणि, नवरं केवलः—परिपूर्णः स चासौ स्वकार्यसामर्थ्यात् कल्पश्च केवलज्ञानमिव वा परिपूर्णतयेति केवलकल्पः, अथवा केवलकल्पः समयभाषया परिपूर्णस्तं 'लोकं' चतुर्दशरज्ज्वात्मकमिति ॥ वैक्रियसमुद्घातानन्तरं वैक्रियं शरीरं भवतीति वैक्रियशरीरमाश्रित्याधोलोकादिज्ञाने प्रकारद्वयमाह—'दोही'त्यादि सूत्रचतुष्टयं कण्ठ्यम्, नवरं 'विउव्विएणं'ति कृतवैक्रियशरीरेणेति। ज्ञानाधिकार एवेदमपरमाह—'दोही'त्यादि पञ्चसूत्री, द्वाभ्यां 'स्थानाभ्यां' प्रकाराभ्यां 'देसेणवि'त्ति देशेन च शृणोत्येकेन श्रोत्रेणैकश्रोत्रोपघाते सति, सर्वेण वाऽनुपहतश्रोत्रेन्द्रियो, यो वा सम्भिन्नश्रोतोऽभिधानलब्धियुक्तः स सर्वैरिन्द्रियैः शृणोतीति सर्वेणेति व्यपदिश्यते, 'एव'मिति यथा शब्दान् देशसर्वाभ्यां एवं रूपादीनपि, नवरं जिह्वादेशस्य प्रसुप्त्यादिनोपघाताद्देशेनास्वादयतीत्यवसेयमिति। शब्दश्रवणादयो जीवपरिणामा उक्ताः, तत्प्रस्तावात् तत्परिणामान्तराण्याह—'दोही'त्यादि, नव सूत्राणि सुगमानि, नवरम्, अवभासते—द्योतते देशेन खद्योतकवत्, सर्वतः प्रदीपवत्, अथवा अवभासते—जानाति स च देशतः फड्डकावधिज्ञानी सर्वतोऽभ्यन्तरावधिरिति १, 'एव'मिति देशसर्वाभ्यां प्रभासते—प्रकर्षेण द्योतते २, विकरोति देशेन हस्तादिवैक्रियकरणेन, सर्वेण सर्वस्यैव कायस्येति ३, परियारेइ'त्ति मैथुनं सेवते देशेन मनोयोगादीनामन्यतमेन, सर्वेण योगत्रयेणापि ४, भाषां भाषते देशेन जिह्वाग्रादिना सर्वेण समस्तताल्वादिस्थानैः ५, आहारयति देशेन मुखमात्रेण सर्वेण ओजआहारापेक्षया ६, आहारमेव परिणमयति—परिणामं नयति खलरसविभागेनेति

भक्ताशयदेशस्य प्लीहादिना रुद्धत्वाद् देशतः अन्यथा तु सर्वतः ७, वेदयति-अनुभवति, देशेन हस्तादिना अवयवेन सर्वेण सर्वाव- यवैराहारमत्कान् परिणमितपुद्गलान् इष्टानिष्टपरिणामतः ८, निर्जरयति-त्यजत्याहारितान् परिणामितान् वेदितान् आहारपुद्गलान् देशेनापानादिना सर्वेण सर्वशरीरेणैव प्रस्वेदवदिति ९, अथवैतानि चतुर्दशापि सूत्राणि विवक्षितविषयवस्त्वपेक्षया नेयानि, तत्र देश- सर्वयोजना यथा 'देशेनापी'ति देशतोऽपि शृणोति विवक्षितशब्दानां मध्ये कांश्चिच्छृणोतीति, 'सर्वेणापी'ति सर्वतश्च सामस्त्येन, सर्वानेवेत्यर्थः, एवं रूपादीनपि, तथा विवक्षितस्य देशं सर्वं वा विवक्षितमवभासयत्येवं प्रभासयति एवं विकुर्वणीयं विकुरुते परिचा- रणीयं स्त्रीशरीरादि परिचारयति भाषणीयापेक्षया देशतो भाषां भाषते सर्वतो वेति अभ्यवहार्यमाहारयति आहृतं परिणमयति वेद्यं कर्म वेदयति देशतः सर्वतो वा, एवं निर्जरयत्यपि। देशसर्वाभ्यां सामान्यतः श्रवणाद्युक्तं विशेषविवक्षायां प्रधानत्वाद् देवानां तानाश्रित्य तदाह—'दोही'त्यादि, एतदपि विवक्षितशब्दादिविषयापेक्षया सूत्रचतुर्दशकं नेयमिति, देशतः सर्वतो वा। एतेऽनन्तरोक्ता भावाः शरीर एव सति सम्भवन्तीति देवानां च प्रधानत्वात् तेषामेव व्यक्तिनः शरीरनिरूपणायाह—'मरुए'त्यादि सूत्राष्टकं कण्ठ्यम्, नवरं, मरुतो देवा लोकान्तिकदेवविशेषाः, यत उक्तम्—"सारस्वता १ दित्य २ वह्न्य ३ रुण ४ गर्दतोय ५ तुषिता ६ व्याबाध ७ मरुतो ८ ऽरिष्टा ९ श्चेति' ( तत्त्वा अ० ४ सू० २६ ) ते चैकशरीरिणो विग्रहे कार्मणशरीरत्वात्, तदनन्तरं वैक्रियभावाद् द्विशरी- रिणः, द्वयोः शरीरयोः समाहारो द्विशरीरं तदस्ति येषां ते तथा, अथवा भवधारणीयमेव यदा तदैकशरीरः यदा तूत्तरवैक्रियमपि तदा द्विशरीराः, किन्नराद्यास्त्रयो व्यन्तराः, शेषा भवनपतय इति, परिगणितभेदग्रहणं च भेदान्तरोपलक्षणम्, न तु व्यवच्छेदार्थं, गर्भजीवानामपि विग्रहे एकशरीरत्वस्यान्यदा द्विशरीरत्वस्य चोपपद्यमानत्वादिति ८, अत एव सामान्यत आह—'देवा दुविहे'त्यादि

कण्ठयम् , द्विस्थानकस्य द्वितीय उद्देशको विवरणतः समाप्तः ॥

उक्तो द्वितीयोद्देशकः, अथ तृतीय आरभ्यते, अस्य चानन्तरेण सहायमभिसंबन्धः–अनन्तरोद्देशके जीवपदार्थोऽनेकधोक्तः, अत्र तु तदुपग्राहकपुद्गलजीवधर्मक्षेत्रद्रव्यलक्षणपदार्थप्ररूपणोच्यते इत्येवंसम्बन्धस्यास्येदमादिमसूत्राष्टकम्–

दुविहे सद्दे पं० तं–भासासद्दे चेव णोभासासद्दे चेव, भासासद्दे दुविहे पं० तं०–अक्खरसंबद्धे चेव नोअक्खरसंबद्धे चेव, णोभासासद्दे दुविहे पन्नत्ते तं०–आउज्जसद्दे चेव णोआउज्जसद्दे चेव, आउज्जसद्दे दुविहे पं० तं०–तते चेव वितते चेव, तते दुविहे पं० तं०–घणे चेव झुसिरे चेव, एवं विततेऽवि, णोआउज्जसद्दे दुविहे पं० तं०–भूसणसद्दे चेव नोभूसणसद्दे चेव, णोभूसणसद्दे दुविहे पं० तं०–तालसद्दे चेव लत्तिआसद्दे चेव, दोहिं ठाणेहिं सद्दुप्पाते सिया, तंजहा–साहन्नंताण चेव पुग्गलाणं सद्दुप्पाए सिया भिज्जंताण चेव पोग्गलाणं सद्दुप्पाए सिया (सू० ८१)

अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः–इहानन्तरोद्देशकान्त्यसूत्रे देवानां शरीरं निरूपितं तद्वांश्च शब्दादिग्राहको भवतीत्यत्र शब्दस्तावन्निरूप्यते, इत्येवंसम्बन्धस्यास्य व्याख्या, सा च सुकरैव, नवरं भाषाशब्दो भाषापर्याप्तिनामकर्मोदयापादितो जीवशब्दः, इतरस्तु नोभाषाशब्दः १, अक्षरसम्बद्धो–वर्णव्यक्तिमान् नोअक्षरसम्बद्धस्त्वितर इति २, आतोद्यं–पटहादि तस्य यः शब्दः स तथा, नोआतोद्यशब्दो वंशस्फोटादिरवः ३, ततं यत्तन्त्रीवर्ध्रादिबद्धमातोद्यं, ४ तच्च किञ्चिद् घनं यथा पिञ्जनिकादि, किञ्चिच्छुषिरं यथा

वीणापटहादिकं तज्जनितः शब्दस्ततो घनः शुषिरश्चेति व्यपदिश्यते ५, विततं ततविलक्षण तन्त्र्यादिरहितं तदपि घनं भाणकवत् शुषिरं काहलादिवत् तज्जः शब्दो विततो घनः शुषिरश्चेति, चतुःस्थानके पुनरिदमेवं भणिष्यते—ततं वीणादिकं ज्ञेयं, विततं पटहादिकम्। घनं तु कांस्यतालादि, वंशादि शुषिरं मतम् ॥१॥" इति, विवक्षाप्राधान्याच्च न विरोधो मन्तव्य इति ६, भूषणं नुपूरादि नोभूषणं भूषणादन्यत् ७, तालो—हस्ततालः, 'लत्तिय'त्ति कंसिकाः, ता हि आतोद्यत्वेन न विवक्षिता इति, अथवा 'लत्तियासद्दे'त्ति पार्ष्णिप्रहारशब्दः ८॥ उक्ताः शब्दभेदाः, इतस्तत्कारणनिरूपणायाह—'दोही'त्यादि, द्वाभ्यां 'स्थानाभ्यां' कारणाभ्यां शब्दोत्पादः स्यात्—भवेत् ८, 'संहन्यमानानां च' सङ्घातमापद्यमानानां सतां कार्यभूतः शब्दोत्पादः स्यात्, पञ्चम्यर्थे वा षष्ठीति संहन्यमानेभ्य इत्यर्थः, पुद्गलानां बादरपरिणामानां यथा घण्टालालयोः, एवं भिद्यमानानां—वियोज्यमानानां च यथा वंशदलानामिति।

पुद्गलसङ्घातभेदयोरेव कारणनिरूपणायाह—

दोहिं ठाणेहिं पोग्गला साहण्णंति, तं०—सइं वा पोग्गला साहन्नंति परेण वा पोग्गला साहन्नंति १। दोहिं ठाणेहिं पोग्गला भिज्जंति तं०—सइं वा पोग्गला भिज्जंति परेण वा पोग्गला भिज्जंति २। दोहिं ठाणेहिं पोग्गला परिसडंति, तं०—सइं वा पोग्गला परिसडंति परेण वा पोग्गला परिसाडिज्जंति ३ एवं परिवडंति ४ विद्धंसंति ५। दुविहा पोग्गला पं० तं०—भिन्ना चेव अभिन्ना चेव १, दुविहा पोग्गला पं० तं०—भेउरधम्मा चेव नोभेउरधम्मा चेव २, दुविहा पोग्गला पं० तं०—परमाणुपोग्गला चेव नोपरमाणुपोग्गला चेव ३, दुविहा पोग्गला पं० तं०—सुहुमा चेव बायरा चेव ४, दुविहा पोग्गला पं० तं०—बद्धपासपुट्ठा चेव नोबद्धपासपुट्ठा चेव

५, दुविहा पोग्गला पन्नत्ता, तं०—परियादितच्चेव अपरियादितच्चेव ६, दुविहा पोग्गला पन्नत्ता तं०—अत्ता चेव अणत्ता चेव ७, दुविहा पोग्गला पं० तं०—इट्ठा चेव अणिट्ठा चेव ८, एवं कंता ९ पिया १० मणुन्ना ११ मणामा १२, (सू० ८२)।

दुविहा सद्दा पन्नत्ता तं०—अत्ता चेव अणत्ता चेव, १ एवमिट्ठा जाव मणामा ६। दुविहा रूवा पं० तं०—अत्ता चेव अणत्ता चेव, जाव मणामा, एवं गंधा रसा फासा, एवमिक्किक्के छ आलावगा भाणियव्वा (सू० ८३)

'दोही'त्यादि सूत्रपञ्चकं कण्ठ्यम् , नवरं 'स्वयं वे'ति स्वभावेन वा अभ्रादिष्विव पुद्गलाः संहन्यन्ते–सम्बध्यन्ते, कर्मकर्तृप्रयोगोऽयं, परेण वा–पुरुषादिना वा संहन्यन्ते–संहताः क्रियन्ते, कर्म्मप्रयोगोऽयं,एवं भिद्यन्ते–विघटन्ते, तथा परिपतन्ति पर्वतशिखरादेरिवेति, परिशटन्ति कुष्ठादेर्निमित्तादङ्गुल्यादिवत् , विध्वस्यन्ते–विनश्यन्ति घनपटलवदिति ५॥ पुद्गलानेव द्वादशसूत्र्या निरूपयन्नाह–'दुविहे'त्यादि, भिन्नाः–विचटिता इतरे त्वभिन्नाः १ स्वयमेव भिद्यत इति भिदुरं भिदुरत्वं धर्मो येषां ते भिदुरधर्माणः अन्तर्भूतभावप्रत्ययोऽयं, प्रतिपक्षः प्रतीत एवेति २ परमाश्च ते अणवश्चेति परमाणवः नोपरमाणवः–स्कन्धाः, सूक्ष्माः येषां सूक्ष्मपरिणामः शीतोष्णस्निग्धरूक्षलक्षणाश्चत्वार एव च स्पर्शास्ते च भाषादयः, बादरास्तु येषां बादरः परिणामः पञ्चादयश्च स्पर्शास्ते चौदारिकादयः ४ पार्श्वेन स्पृष्टा देहत्वचा छुप्ता रेणुवत्पार्श्वस्पृष्टास्ततो बद्धाः–गाढतरं श्लिष्टाः तनौ तोयवत् पार्श्वस्पृष्टाश्च ते बद्धाश्चेति राजदन्तादित्वाद् बद्धपार्श्वस्पृष्टाः, आह च—'पुट्ठं रेणुं व तणुंमि बद्धमप्पीकयं पएसेहिं'ति, एते च घ्राणेन्द्रियादिग्रहणगोचराः, तथा नो बद्धाः

१ स्पृष्टं रेणुवत्तनौ बद्धमात्मीकृतं प्रदेशैः।

किन्तु पार्श्वस्पृष्टा इत्येकपदप्रतिषेधः श्रोत्रेन्द्रियग्रहणगोचराः, यत उक्तम्—"पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु। गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥१॥"त्ति, उभयपदनिषेधे श्रोत्राद्यविषयाश्चक्षुर्विषयाश्चेति, इयमिन्द्रियापेक्षया बद्धपार्श्वस्पृष्टता पुद्गलानां व्याख्याता, एवं जीवप्रदेशापेक्षया परस्परापेक्षया च व्याख्येयेति ५ 'परियाइय'त्ति विवक्षितं पर्यायमतीताः पर्यायातीताः पर्यात्ता वा-समस्तगृहीताः कर्मपुद्गलवत्, प्रतिषेधः सुज्ञानः ६ आत्ताः-गृहीताः स्वीकृता जीवेन परिग्रहमात्रतया शरीरादितया वा ७ इष्यन्ते स्म अर्थक्रियार्थिभिरितीष्टाः ८ कान्ताः-कमनीया विशिष्टवर्णादियुक्ताः ९ प्रियाः-प्रीतिकराः इन्द्रियाह्लादकाः १० मनसा ज्ञायन्ते शोभना एत इत्येवंविकल्पमुत्पादयन्तः शोभनत्वप्रकर्षाद्ये ते मनोज्ञाः ११ मनसो मता-वल्लभाः सर्वस्याप्युपभोक्तुः सर्वदा च शोभनत्वप्रकर्षादेव निरुक्तविधिना मणामा १२ इति, व्याख्यानान्तरं त्वेवं-इष्टाः-वल्लभाः सदैव जीवानां सामान्येन, कान्ताः-कमनीयाः सदैव तद्भावेन, प्रियाः-अद्वेष्याः सर्वेषामेव, मनोज्ञाः-मनोरमाः कथयापि, मनआमा-मनःप्रियाश्चिन्तयाऽपीति, विपक्षः सुज्ञानः सर्वत्रेति ॥ पुद्गलाधिकारादेव तद्धर्मान् शब्दादीन् अनन्तरोक्तसविपर्ययात्तादिविशेषणषट्कविशिष्टान् 'दुविहा सद्दे'त्यादिसूत्रत्रिंशताऽऽह-'दुविहे'त्यादि, कण्ठ्या चेयमिति।

उक्ताः पुद्गलधर्माः, संप्रति धर्माधिकाराज्जीवधर्मानाह—

दुविहे आयारे पं० तं०—णाणायारे चेव नोनाणायारे चेव १, णोनाणायारे दुविहे पं० तं०—दंसणायारे चेव नोदंसणायारे चेव २, नोदंसणायारे दुविहे पं० तं०—चरित्तायारे चेव नोचरित्तायारे चेव ३, णोचरित्तायारे

१ स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टं तु। गन्धं रसं च स्पर्शं च बद्धस्पृष्टं व्यागृणीयात् ॥१॥

दुविहे पं० तं०—तवायारे चेव वीरियायारे चेव ४। दो पडिमाओ पं० तं०—समाहिपडिमा चेव उवहाणपडिमा चेव १, दो पडिमाओ पं० तं० -विवेगपडिमा चेव विउसग्गपडिमा चेव २, दो पडिमाओ पं० तंजहा—भद्दा चेव सुभद्दा चेव ३, दो पडिमाओ पं० तं०—महाभद्दा चेव सव्वतोभद्दा चेव ४, दो पडिमाओ पं० तं०—खुड्डिया चेव मोयपडिमा महल्लिया चेव मोयपडिमा ५, दो पडिमाओ पं० तं०—जवमज्झे चेव चंदपडिमा वइरमज्झे चेव चंदपडिमा ६, दुविहे सामाइए पं० तं०—अगारसामाइए चेव अणगारसामाइए चेव (सू०८४)।

'दुविहे आयारे' इत्यादि सूत्रचतुष्टयं कण्ठ्यं, नवरं आचरणमाचारो—व्यवहारो ज्ञानं-श्रुतज्ञानं तद्विषय आचारः कालादिरष्टविधो ज्ञानाचारः, आह च—"[1]काले विणए बहुमाणे उवहाणे चेव तह अनिण्हवणे। वंजणमत्थ तदुभए अट्ठविहो नाणमायारो ॥१॥" त्ति, नोज्ञानाचारः—एतद्विलक्षणो दर्शनाद्याचार इति, दर्शनं—सम्यक्त्वं, तदाचारो निःशङ्कितादिरष्टविध एव, आह च—"[2]णिस्संकिय १ निक्कंखिय २ निव्वितिगिच्छा ३ अमूढदिट्ठी ४ य। उववूह ५ थिरीकरणे ६ वच्छल्ल ७ पभावणे ८ अट्ठ ॥२॥" त्ति, नोदर्शनाचारश्चारित्रादिरिति, चारित्राचारः समितिगुप्तिरूपोऽष्टधा, आह च—"[3]पणिहाणजोगजुत्तो पंचहिं समिईहिं तीहिं गुत्तीहिं। एस चरित्तायारो अट्ठविहो होइ नायव्वो ॥३॥" त्ति, नोचारित्राचारस्तपआचारप्रभृतिः, तत्र तपआचारो द्वादशधा, उक्तं च—"[4]बारसविहंमिवि

१ कालो विनयो बहुमान उपधानं चैव तथाऽनिह्नवनम्। व्यञ्जनं अर्थस्तदुभयमष्टविधो ज्ञानाचारः ॥१॥ २ निःशङ्कितो निष्काङ्क्षितो निर्विचिकित्सोऽमूढदृष्टिश्च। उपबृंहा स्थिरीकरणं वात्सल्यं प्रभावना अष्टौ ॥२॥ ३ प्रणिधानयोगयुक्तः पञ्चसु समितिषु तिसृषु गुप्तिषु। एष चारित्राचारोऽष्टविधो भवति ज्ञातव्यः ॥३॥ ४ द्वादशविधेऽपि तपसि साभ्यन्तरबाह्ये कुशलदृष्टे। अग्लान्याऽनाजीवी ज्ञातव्यः स तपआचारः ॥४॥

तवे सब्भितरबाहिरे कुसलदिट्ठे। अगिलाइ अणाजीवी नायव्वो सो तवायारो ॥४॥" त्ति, वीर्याचारस्तु ज्ञानादिष्वेव शक्तेरगोपनं तदनतिक्रमश्चेति, उक्तं च—"[1]अणिगूहियबलविरिओ परक्कमइ जो जहुत्तमाउत्तो। जुंजइ य जहाथामं नायव्वो वीरियायारो ॥५॥" त्ति ॥ अथ वीर्याचारस्यैव विशेषाभिधानाय पट्सूत्रीमाह—'दो पडिमे'त्यादि, प्रतिमा प्रतिपत्तिः प्रतिज्ञेतियावत्, समाधानं समाधिः—प्रशस्तभावलक्षणः तस्य प्रतिमा समाधिप्रतिमा दशाश्रुतस्कन्धोक्ता द्विभेदा—श्रुतसमाधिप्रतिमा सामायिकादिचारित्रसमाधिप्रतिमा च, उपधानं—तपस्तत्प्रतिमोपधानप्रतिमा द्वादश भिक्षुप्रतिमा एकादशोपासकप्रतिमाश्चेत्येवंरूपेति । विवेचनं विवेकः—त्यागः, स चान्तराणां कषायादीनां बाह्यानां गणशरीरभक्तपानादीनामनुचितानां तत्प्रतिपत्तिर्विवेकप्रतिमा, व्युत्सर्गप्रतिमा—कायोत्सर्गकरणमेवेति, भद्रा—पूर्वादिदिक्चतुष्टये प्रत्येकं प्रहरचतुष्टयकायोत्सर्गकरणरूपा अहोरात्रद्वयमानेति, सुभद्राऽप्येवंप्रकारैव सम्भाव्यते, अदृष्टत्वेन तु नोक्तेति, महाभद्रापि तथैव, नवरमहोरात्रकायोत्सर्गरूपा अहोरात्रचतुष्टयमाना, सर्वतोभद्रा तु दशसु दिक्षु प्रत्येकमहोरात्रकायोत्सर्गरूपा अहोरात्रदशकप्रमाणेति, मोकप्रतिमाप्रस्रवणप्रतिमा, सा च कालभेदेन क्षुद्रिका महती च भवतीति, यत उक्तं व्यवहारे—"खुड्डियं णं मोयपडिमं पडिवण्णस्से" त्यादि, इयं च द्रव्यतः प्रस्रवणविषया क्षेत्रतो ग्रामादेर्बहिः कालतः शरदि निदाघे वा प्रतिपद्यते, भुक्त्वा चेत् प्रतिपद्यते चतुर्दशभक्तेन समाप्यते, अभुक्त्वा तु षोडशभक्तेन, भावतस्तु दिव्याद्युपसर्गसहनमिति, एवं महत्यपि, नवरं भुक्त्वा चेत् प्रतिपद्यते षोडशभक्तेन समाप्यते, अन्यथा त्वष्टादशभक्तेनेति, यवस्येव मध्यं यस्याः सा यवमध्या, चन्द्र इव कलावृद्धिहानिभ्यां या प्रतिमा सा चन्द्रप्रतिमा, तथाहि—शुक्लप्रतिपदि एकं कवलमभ्यवहृत्य

[1] अनिगूहितबलवीर्यः पराक्रमते यो यथोक्तमायुक्तः । युनक्ति च यथास्थाम ज्ञातव्यो वीर्याचारः ॥५॥

ततः प्रतिदिनं कवलवृद्ध्या पञ्चदश पौर्णमास्यां कृष्णप्रतिपदि च पञ्चदश भुक्त्वा प्रतिदिनमेकैकहान्याऽमावास्यायामेकमेव यस्यां भुङ्क्ते सा यवमध्या चन्द्रप्रतिमेति, यस्यां तु कृष्णप्रतिपदि पञ्चदश भुक्त्वा एकैकहान्याऽमावास्यायामेकं शुक्लप्रतिपदि चैकमेव ततः पुनरेकैकवृद्ध्या पूर्णिमायां पञ्चदश भुङ्क्ते सा वज्रस्येव मध्यं यस्यां तन्वित्यर्थः सा वज्रमध्या चन्द्रप्रतिमेति, एवं भिक्षादावपि वाच्यमिति ॥ प्रतिमाश्च सामायिकवतामेव भवन्तीति सामायिकमाह—'दुविहे'इत्यादि, समानां–ज्ञानादीनामायो–लाभः समायः स एव सामायिकमिति, तद् द्विविधम्–अगारवदनगारस्वामिभेदाद् , देशसर्वविरती इत्यर्थः ॥

जीवधर्माधिकार एव तद्धर्मान्तराणि 'दोण्हं उववाए' इत्यादिभिश्चतुर्विंशत्या सूत्रैराह—

दोण्हं उववाए पं० तं०–देवाण चेव नेरइयाण चेव १ दोण्हं उव्वट्टणा पं० तं०–णेरइयाण चेव भवणवासीण चेव २ दोण्णं चयणे पं० तं०—जोइसियाण चेव वेमाणियाण चेव ३ दोण्हं गब्भवक्कंती पं० तं०—मणुस्साण चेव पंचेंदियतिरिक्खजोणियाण चेव ४ दोण्हं गब्भत्थाणं आहारे पं० तं०—मणुस्साण चेव पंचेंदियतिरिक्खजोणियाण चेव—५ दोण्हं गब्भत्थाणं वुड्ढी पं० तं०—मणुस्साण चेव पंचेंदियतिरिक्खजोणियाण चेव ६ एवं निव्वुड्ढी ७ विगुव्वणा ८ गतिपरियाए ९ समुग्घाते १० कालसंजोगे ११ आयाती १२ मरणे १३ दोण्हं छविपव्वा पं० तं०—मणुस्साण चेव पंचिंदियतिरिक्खजोणियाण चेव १४ दो सुक्कसोणितसंभवा पं० तं०—मणुस्सा चेव पंचिंदियतिरिक्खजोणिया चेव १५ दुविहा ठिती पं० तं०—कायट्ठिती चेव भवट्ठिती चेव १६ दोण्हं कायट्ठिती पं० तं०—मणुस्साणं चेव पंचिंदियतिरिक्खजोणियाण चेव १७ दोण्हं भवट्ठिती पं० तं०—देवाण चेव नेरइयाण

चेव १८ दुविहे आउए पं० तं०—अद्धाउए चेव भवाउए चेव १९ दोण्हं अद्धाउए पं० तं०—मणुस्साण चेव पंचेंदियतिरिक्खजोणियाण चेव २० दोण्हं भवाउए पं० तं०—देवाण चेव णेरइयाण चेव २१ दुविहे कम्मे पं० तं०—पदेसकम्मे चेव अणुभावकम्मे चेव २२ दो अहाउयं पालेंति तं० देवच्चेव नेरइयच्चेव २३ दोण्हं आउयसंवट्टए पं० तं०—मणुस्साण चेव पंचेंदियतिरिक्खजोणियाण चेव २४ (सू० ८५)

सुगमानि चैतानि नवरं 'दोण्हं'ति द्वयोर्जीवस्थानकयोरुपपतनमुपपातो—गर्भसंमूर्छनलक्षणजन्मप्रकारद्वयविलक्षणो जन्मविशेष इति, दीव्यन्ति इति देवाः—चतुर्निकायाः सुरा नैरयिकाः प्राग्वत्तेपाम् १, उद्वर्त्तनमुद्वर्त्तना तत्कायान्निर्गमो मरणमित्यर्थः, तच्च नैरयिकभवनवासिनामेवैवं व्यपदिश्यते, अन्येषां तु मरणमेवेति, नैरयिकाणां—नारकाणां तथा भवनेषु—अधोलोकदेवावासविशेषेषु वस्तुं शीलमेषामिति भवनवासिनस्तेषाम् २, च्युतिश्च्यवनं मरणमित्यर्थः, तच्च ज्योतिष्कवैमानिकानामेव व्यपदिश्यते, ज्योतिष्षु—नक्षत्रेषु भवाः ज्योतिष्काः, शब्दव्युत्पत्तिरेवेयं, प्रवृत्तिनिमित्ताश्रयणात्तु चन्द्रादयो ज्योतिष्का इति, विमानेषु—ऊर्द्ध्वलोकवर्त्तिषु भवाः वैमानिकाः—सौधर्मादिवासिनस्तेषां ३, गर्भे—गर्भाशये व्युत्क्रान्तिः—उत्पत्तिर्गर्भव्युत्क्रान्तिः, मनोरपत्यानि मनुष्यास्तेषां, तिरोऽञ्चन्ति—गच्छन्तीति तिर्यञ्चस्तेषां सम्बन्धिनी योनिः—उत्पत्तिस्थानं येषां ते तिर्यग्योनिकाः, ते चैकेन्द्रियादयोऽपि भवन्तीति विशिष्यन्ते—पञ्चेन्द्रियाश्च ते तिर्यग्योनिकाश्चेति पञ्चेन्द्रियतिर्यग्योनिकास्तेषाम् ४, तथा द्वयोरेव गर्भस्थयोराहारोऽन्येषां गर्भस्यैवाभावादिति ५, वृद्धिः—शरीरोपचयः ६, निवृद्धिर्हानिर्वातपित्तादिभिः, निशब्दस्याभावार्थत्वात्, निवरा कन्येत्यादिवत् ७, वैक्रियलब्धिमतां विकुर्वणा ८, गतिपर्यायः—चलनं मृत्वा वा गत्यन्तरगमनलक्षणः, यच्च वैक्रियलब्धिमान् गर्भान्निर्गत्य प्रदेशतो बहिः संग्रामयति स

वा गतिपर्यायः, उक्तं च भगवत्यां—"[1]जीवे णं भंते ! गब्भगए समाणे नेरइएसु उववज्जेज्जा ?, गोतमा !, अत्थेगइए उववज्जेज्जा अत्थेगइए नो उववज्जेज्जा, से केणट्ठेणं० ?, गोतमा ! से णं सन्नी पंचिंदिए सव्वाहिं पज्जत्तीहिं पज्जत्तए वीरियलद्धीए विउव्विअलद्धीए पराणीयं आगतं सोच्चा णिसम्म पएसे निच्छुब्भइ २ वेउव्वियसमुग्घाएणं समोहन्नइ २ चाउरंगिणिं सेणं विउव्वइ २ चाउरंगिणीए सेणाए पराणीएणं सद्धिं संगामं संगामेई"त्यादि ९, समुद्घातो मारणान्तिकादिः १०, कालसंयोगः—कालकृतावस्था ११, आयातिः—गर्भान्निर्गमो १२, मरणं—प्राणत्यागः १३, 'दोण्हं छविपव्व'त्ति द्वयानां—उभयेषां 'छवि'त्ति मतुब्लोपाच्छविमन्ति—त्वग्वन्ति 'पव्व'त्ति पर्वाणि सन्धिबन्धनानि छविपर्वाणि, क्वचित् 'छवियत्त' त्ति पाठस्तत्र छवियोगाच्छविः स एव छविकः स चासौ 'अत्त' त्ति आत्मा च शरीरं छविकात्मेति, 'छविपत्त' त्ति पाठान्तरे छविः प्राप्ता जातेत्यर्थः, गर्भस्थानामिति सर्वत्र सम्बन्धनीयम् १४, 'दो सुक्के'त्यादि, द्वयोः शुक्रं—रेतः शोणितम्—आर्त्तवं ताभ्यां सम्भवो येषां ते तथा १५, 'कायट्ठिति' त्ति काये—निकाये पृथिव्यादिसामान्यरूपेण स्थितिः कायस्थितिः असङ्ख्योत्सर्पिण्यादिका, भवे भवरूपा वा स्थितिः भवस्थितिर्भवकाल इत्यर्थः १६, 'दोण्हं'ति द्वयानामुभयेषामित्यर्थः, कायस्थितिः सप्ताष्टभवग्रहणरूपा, पृथिव्यादीनामपि साऽस्ति, न चानेन तद्व्यवच्छेदः, अयोगव्यवच्छेदपरत्वात् सूत्राणामिति १७, 'दोण्हे'त्यादि, देवनारकाणां भवस्थितिरेव, देवादेः पुनर्देवादित्वेनानुत्पत्तेरिति १८,

१ जीवो भदन्त ! गर्भगतः सन् नैरयिकेषूत्पद्येत ?, गौतम ! अस्त्येकक उत्पद्येत अस्त्येकको नोत्पद्येत, तत्केनार्थेन० ?, गौतम ! स संज्ञी पञ्चेन्द्रियः सर्वाभिः पर्याप्तिभिः पर्याप्तको वीर्यलब्ध्या वैक्रियलब्ध्या परानीकमागतं श्रुत्वा निशम्य प्रदेशान् निष्काशयति वैक्रियसमुद्घातेन समवहन्ति २ चतुरङ्गिणीं सेनां विकरोति २ चतुरङ्गिण्या सेनया परानीकेन सार्धं संग्रामं संग्रामयति.

'दुविहे' इत्यादि अद्धा-कालः तत्प्रधानमायुः-कर्मविशेषोऽद्धायुः, भवात्ययेऽपि कालान्तरानुगामीत्यर्थो, यथा मनुष्यायुः, कस्यापि भवात्यय एव नापगच्छत्यपि तु सप्ताष्टभवमात्रं कालमुत्कर्षतोऽनुवर्त्तत इति, तथा भवप्रधानमायुर्भवायुः, यद्भवात्यये अपगच्छत्येव न कालान्तरमनुगानि, यथा देवायुरिति, १९, 'दोणह' मित्यादि सूत्रद्वयं भावितार्थमेव २०-२१, 'दुविहे कम्मे' इत्यादि. प्रदेशा एव-पुद्गला एव यस्य वेद्यन्ते न यथा बद्धो रसस्तत्प्रदेशमात्रतया वेद्यं कर्म प्रदेशकर्म, यस्य त्वनुभावो यथाबद्धरसो वेद्यते तदनुभावतो वेद्यं कर्मानुभावकर्मेति २२, 'दो' इत्यादि, यथाबद्धमायुर्यथायुः पालयन्ति-अनुभवन्ति नोपक्रम्यते तदितियावदिति,-'देवा नेरइयावि य असंखवासाउया य तिरिमणुया। उत्तमपुरिसा य तहा चरमसरीरा य निरुवकमा ॥१॥' इति वचने सत्यपि देवनारकयोरेवेह भणनं द्विस्थानकानुरोधादिति । 'दोण्ह' मित्यादि, संवर्त्तनमपवर्त्तनं संवर्त्तः स एव संवर्त्तकः, उपक्रम इत्यर्थः, आयुषः संवर्त्तकः आयुःसंवर्त्तक इति २३।

पर्यायाधिकारादेव नियतक्षेत्राश्रितत्वात् क्षेत्रव्यपदेश्यान् पुद्गलपर्यायानभिधित्सुः 'जंबुद्दीवे' इत्यादिना क्षेत्रप्रकरणमाह—

जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरदाहिणेणं दो वासा [पं० तं०—]बहुसमतुल्ला अविसेसमणाणत्ता अन्नमन्नं णातिवट्टंति आयामविक्खंभसंठाणपरिणाहेणं तं०—भरहे चेव एरवए चेव, एवमेएणमहिलावेणं हिमवए चेव हेरन्नवते चेव, हरिवासे चेव रम्मयवासे चेव, जंबुद्दीवे दीवे मंदरस्स पव्वयस्स पुरच्छिमपचच्छिमेणं दो खित्ता [पं० तं०—]बहुसमतुल्ला अविसेस जाव पुव्वविदेहे चेव अवरविदेहे चेव, जंबूमंदरस्स पव्वयस्स उत्तर-

१ देवा नैरयिका अपि च असंख्यवर्षायुष्काश्च तिर्यग्मनुष्याः। उत्तमपुरुषाश्च तथा चरमशरीराश्च निरुपक्रमाः ॥१॥

दाहिणेणं दो कुराओ [पं० तं०—]बहुसमतुल्लाओ जाव देवकुरा चेव उत्तरकुरा चेव, तत्थ णं दो महतिमहालया महादुमा [पं० तं०—]बहुसमतुल्ला अविसेसमणाणत्ता अन्नमन्नं णाइवट्टंति आयामविक्खंभुच्चत्तोव्वेहसंठाणपरिणाहेणं तं०—कूडसामली चेव जंबू चेव सुदंसणा। तत्थ णं दो देवा महिड्डिया जाव महासोक्खा पलिओवमट्ठितीया परिवसन्ति, तं०—गरुले चेव वेणुदेवे अणाढिते चेव जंबूदीवाहिवती (सू० ८६)

सुगमं चैतत्, नवरमिह जम्बूद्वीपप्रकरणं परिपूर्णचन्द्रमण्डलाकारं जम्बूद्वीपं तन्मध्ये मेरुं उत्तरदक्षिणतः क्रमेण वर्षाणि च स्थापयित्वा, तद्यथा,—'[1]भरहं हेमवयंति य हरिवासंति य महाविदेहंति। रम्मय एरन्नवयं एरवयं चेव वासाइं ॥१॥' ति, तथा वर्षान्तरेषु वर्षधरपर्वतान् कल्पयित्वा, तद्यथा—'[2]हिमवंत १ महाहिमवंत २ पव्वया निसढ ३ नीलवंता य ४। रुप्पी ५ सिहरी ६ एए वासहरगिरी मुणेयव्वा ॥१॥' इति सर्वमवबोद्धव्यमिति। मन्दरस्य—मेरोः उत्तरा च दक्षिणा च उत्तरदक्षिणे तयोरुत्तरदक्षिणयोरिति वाक्ये उत्तरदक्षिणेनेति स्याद्, एनप्रत्ययविधानादिति, द्वे वर्षे—क्षेत्रे प्रज्ञप्ते जिनैः, समतुल्यशब्दः सदृशार्थः अत्यन्तं समतुल्ये बहुसमतुल्ये प्रमाणतः अविशेषे—अविलक्षणे नगनगरनद्यादिकृतविशेषरहिते अनानात्वे—अवसर्पिण्यादिकृतायुरादिभावभेदवर्जिते, किमुक्तं भवतीत्याह—'अन्योऽन्यं' परस्परं नातिवर्त्तेते, इतरेतरं न लङ्घयत इत्यर्थः, कैरित्याह—'आयामेन' दैर्घ्येण 'विष्कम्भेन' पृथुत्वेन 'संस्थानेन' आरोपितज्याधनुराकारेण 'परिणाहेन' परिधिनेति, इह च द्वन्द्वैकवद्भावः कार्य इति, अथवा बहुसमतुल्ये आयामतः, तथाहि—भरतपर्यन्तश्रेणीयं '[3]चोद्दस य सहस्साइं सयाइँ चत्तारि एगसयराइं। भरहध्धुत्तरजीवा छा य कला ऊणिया

१ भरतं हैमवतं हरिवर्षं महाविदेहमिति च। रम्यगैरण्यवतं ऐरवतं चैव वर्षाणि ॥१॥ २ हिमवदाद्या वर्षधरगिरय एते ३ चतुर्दश सहस्राणि चत्वारि

किंचि ॥१॥' कला च योजनस्यैकोनविंशतितमो भाग इति १४४७१ ११/१९. ऐरवतेऽप्येवं । तथा अविशेषे विष्कम्भतः, तथाहि—'पंच मए छव्वीसे छच कला वित्थडं भरहवासं'ति, ५२६ ६/१९ अयमेव चैरवतस्यापीति, अनानात्वे संस्थानतः अन्योऽन्यं नातिवर्त्तते, परिणाहतः परिणाहश्च ज्याधनुःपृष्ठयोर्यत्प्रमाणं, तत्र ज्याप्रमाणमुक्तं, धनुःपृष्ठप्रमाणं त्विदम्—'चोद्दस य सहस्साइं पंचेव सयाइं अट्ठवीसाइं । एक्कारस य कलाओ धणुपुट्ठं उत्तरद्धस्स ॥१॥' १४५२८ ११/१९ । यथा च भरतस्यैरवतस्यापि तथैवेति । एकार्थिकानि चैतानि पदानि, भृशार्थत्वाच्च न पुनरुक्ततेति, उक्तं च—"अनुवादादरवीप्साभृशार्थविनियोगहेत्वसूयासु । ईषत्सम्भ्रमविस्मयगणनास्मरणेष्वपुनरुक्तम् ॥१॥" इति, तद्यथा, 'भरहे चेवे'त्यादि, 'उत्तरदाहिणेणं'त्येतस्य पाठस्य यथासङ्ख्यन्यायानाश्रयणाद् यथासत्तिन्यायाश्रयणाच्च जम्बूद्वीपस्य दक्षिणे भागे भरतमाहिमवतः, तस्यैवोत्तरे भागे ऐरवतं शिखरिणः परत इति, 'एव'मिति भरतैरवतवत् 'एतेनाभिलापेन' जंबूद्दीवे दीवे मंदरस्से'त्यादिना उच्चारणेनापरं सूत्रद्वयं वाच्यं, तयोश्चायं विशेषः—'हेमवए चेवे'त्यादि, तत्र हैमवतं दक्षिणतो हिमवन्महाहिमवतोर्मध्ये हिरण्यवतमुत्तरतः रुक्मिशिखरिणोरन्तः हरिवर्षं दक्षिणतो महाहिमवन्निषधयोरन्तः रम्यकवर्षं चोत्तरतो नीलरुक्मिणोरन्तरेति, 'जंबूद्दीवे'इत्यादि, 'पुरत्थिमपचत्थिमेणं'ति पुरस्तात्—पूर्वस्यां दिशि पश्चात्—पश्चिमायामित्यर्थः, यथाक्रमं. पूर्वश्चासौ विदेहश्चेति पूर्वविदेहः, एवमपरविदेह इति, एतेषां चायामादि ग्रन्थान्तरादवसेयमिति । 'जंबू'इत्यादि, दक्षिणेन

शतानि षड्विंशत्यधिकानि भरतार्द्धोत्तरजीवा पञ्च कला ऊनाः किंचित् ॥१॥

१ पंच शतानि षड्विंशत्यधिकानि षट्कला विस्तारं भरतवर्षं. ५२६-६-विस्तारः २ चतुर्दश सहस्राणि पंचैव शतानि अष्टाविंशत्यधिकानि एकादश च कला धनुःपृष्ठं उत्तरार्द्धस्य. १४५२८-११ धनुःपृष्ठं ।

देवकुरवः उत्तरेण उत्तरकुरवः, तत्र आद्या विद्युत्प्रभसौमनसाभिधानवक्षस्कारपर्वताभ्यां गजदन्ताकाराभ्यामावृताः, इतरे तु गन्धमादन-माल्यवद्भ्यामावृताः, उभये चामी अर्द्धचन्द्राकाराः दक्षिणोत्तरतो विस्तृताः, तत्प्रमाणं चेदम्—'अट्ठसया बायाला एक्कारस सहस दो कलाओ य। विक्खंभो य कुरूणं तेवन्नसहस्स जीवा सिं ॥१॥" पूर्वापरायामाश्रैता इति, 'महइमहालय'त्ति महान्तौ गुरू 'अती'ति अत्यन्तं महसां—तेजसां महानां वा—उत्सवानामालयौ—आश्रयौ महातिमहआलयौ महातिमहालयौ वा समयभाषया महान्तावित्यर्थः, महाद्रुमौ प्रशस्ततया आयामो—दैर्घ्यं विष्कम्भो—विस्तारः उच्चत्वम्—उच्छ्रयः उद्वेधो- भुवि प्रवेशः संस्थानम्—आकारः परिणाहः—परिधिरिति, तत्रानयोः प्रमाणम्—"रयणमया पुप्फफला विक्खंभो अट्ठ अट्ठ उच्चतं। जोयणमद्धुव्वेहो खंधो दोजोयणुव्विद्धो ॥१॥ दो कोसे विच्छिन्नो विडिमा छज्जोयणाणि जंबूए। चाउद्दिसिंपि साला पुव्विल्ले तत्थ सालंमि ॥२॥ भवणं कोसपमाणं सयणिज्जं तत्थऽणाढियसुरस्स। तिसु पासाया सालेसु तेसु सीहासणा रम्मा ॥३॥" इति, शाल्मल्यामप्येवमेवेति, कूटाकारा—शिखराकारा शाल्मली कूटशाल्मलीति संज्ञा, सुष्ठु दर्शनमस्या इति सुदर्शनेतीयमपि संज्ञेति, 'तत्थ'त्ति तयोर्महाद्रुमयोः 'महे'त्यादि महती ऋद्धिः—आवासपरिवाररत्नादिका ययोस्तौ महर्द्धिकौ यावद्ग्रहणात् 'महज्जुइया महाणुभागा महायसा महाबल'त्ति, तत्र द्युतिः—

१ एकादश सहस्राणि अष्ट शतानि द्विचत्वारिंशदधिकानि द्वे कले च। विष्कम्भस्तु देवकुरूणा त्रिपंचाशत्सहस्राणि जीवाऽनयोः ॥१॥ ११८४२-२ विष्कम्भः ५३००० जीवा। २ रत्नमयानि पुष्पफलानि अष्ट विष्कम्भोऽष्ट उच्चत्वं। अर्द्धयोजनमुद्वेधः स्कन्धो द्वियोजनोद्वेधः ॥१॥ क्रोशद्वयं विस्तीर्णो विटपो जम्ब्वाः शाखाः षट् योजनाः। चतुर्दिशमपि शालाः पौरस्त्यां तत्र शालायां ॥२॥ भवनं क्रोशप्रमाणं शयनीयं तत्रानादृत-सुरस्य। तिसृषु प्रासादाः शालासु तासु सिंहासनानि रम्याणि ॥३॥

शरीरगमरत्नदीप्तिः अनुभागः-अचिन्त्या शक्तिर्वैक्रियकरणादिका यशः-ख्यातिः बलं-सामर्थ्यं शरीरस्य सौख्यम्-आनन्दात्मकं, 'महेसक्खा' इति क्वचित्पाठः, महेशौ-महेश्वरावित्याख्या ययोस्तौ महेशाख्याविति, पल्योपमं यावत् स्थितिः-आयुर्ययोस्तौ तथा। गरुडः-सुपर्णकुमारजातीयः वेणुदेवो नाम्ना, अणाढिउत्ति नाम्ना ॥

जंबूमंदरस्स पव्वयस्स य उत्तरदाहिणेणं दो वासहरपव्वया [ पं० तं०—] बहुसमतुल्ला अविसेसमणाणत्ता अन्नमन्नं णातिवट्टंति आयामविक्खंभुच्चत्तोव्वेहसंठाणपरिणाहेणं, तंजहा—चुल्लहिमवंते चेव सिहरिचेव, एवं महाहिमवंते चेव रुप्पिचेव, एवं णिसढे चेव णीलवंते चेव, जंबूमंदरस्स पव्वयस्स उत्तरदाहिणेणं हेमवंतेरण्णवतेसु वासेसु दो वट्टवेतड्ढपव्वता [पं० तं०—] बहुसमतुल्ला अविसेसमणाणत्ता जाव सद्दावाती चेव वियडावाती चेव, तत्थ णं दो देवा महिड्ढिया जाव पलिओवमट्ठितीया परिवसंति तं०—साती चेव पभासे चेव, जंबूमंदरस्स उत्तरदाहिणेणं हरिवासरम्मतेसु वासेसु दो वट्टवेयड्ढपव्वया [पं० तं०—] बहुसम० जाव गंधावाती चेव मालवंतपरियाए चेव, तत्थ णं दो देवा महिड्ढिया चेव जाव पलिओवमट्ठितीया परिवसंति, तं०—अरुणे चेव पउमे चेव, जंबूमंदरस्स पव्वयस्स दाहिणेणं देवकुराए पुव्वावरे पासे एत्थ णं आसक्खंधगसरिसा अद्धचंदसंठाणसंठिया दो वक्खारपव्वया पं० तं०—बहुसमा जाव सोमणसे चेव विज्जुप्पभे चेव, जंबूमंदर० उत्तरेणं उत्तरकुराए पुव्वावरे पासे एत्थ णं आसक्खंधगसरिसा अद्धचंदसंठाणसंठिया दो वक्खारपव्वया पं० तं०—बहु० जाव गंधमायणे चेव मालवंते चेव, जंबूमंदरस्स पव्वयस्स उत्तरदाहिणेणं दो दीहवेयड्ढपव्वया पं०

तं०—बहुसमतुल्ला जाव भारहे चेव दीहवेयड्ढे, एरावते चेव दीहवेयड्ढे, भारहए णं दीहवेयड्ढे, दो गुहाओ पं० तं०—बहुसमतुल्लाओ अविसेसमणाणत्ताओ अन्नमन्नं णातिवट्टंति आयामविक्खंभुच्चत्तसंठाणपरिणाहेणं, तं०—तिमिसगुहा चेव खंडगप्पवायगुहा चेव, तत्थ णं दो देवा महिड्ढिया जाव पलिओवमट्ठितीया परिवसंति, तं०—कयमालए चेव नट्टमालए चेव, एरावयए णं दीहवेयड्ढे दो गुहाओ पं० तं०—जाव कयमालए चेव नट्टमालए चेव। जंबूमंदरस्स पव्वयस्स दाहिणेणं चुल्लहिमवंते वासहरपव्वए दो कूडा पं० तं०—बहुसमतुल्ला जाव विक्खंभुच्चत्तसंठाणपरिणाहेणं, तं०—चुल्लहिमवंतकूडे चेव, वेसमणकूडे चेव, जंबूमंदरदाहिणेणं महाहिमवंते वासहरपव्वए दो कूडा पं० तं०—बहुसम० जाव महाहिमवन्तकूडे चेव वेरुलियकूडे चेव, एवं निसढे वासहरपव्वए दो कूडा पं० तं०—बहुसमा० जाव निसढकूडे चेव रुयगप्पभे चेव। जंबूमंदर० उत्तरेणं नीलवंते वासहरपव्वए दो कूडा पं० तं०—बहुसम० जाव तं०—नीलवंतकूडे चेव उवदंसणकूडे चेव, एवं रुप्पिंमि वासहरपव्वए दो कूडा पं० बहुसम० जाव तं०—रुप्पिकूडे चेव मणिकंचणकूडे चेव, एवं सिहरिंमि वासहरपव्वते दो कडा पं० तं०—बहुसम० जाव तं०—सिहरिकूडे चेव तिगिंछिकूडे चेव (सू० ८७)

'जंबू' इत्यादि, वर्षं-क्षेत्रविशेषं धारयतो-व्यवस्थापयत इति वर्षधरौ 'चुल्लो'त्ति महदपेक्षया लघुर्हिमवान् चुल्लहिमवान् भरतानन्तरः, शिखरी पुनर्यत्परमैरवतम्, तौ च पूर्वापरतो लवणसमुद्रावबद्धावायामतश्च '[1]चउवीस सहस्साइं णव य सए जोयणाण बत्तीसे।

[1] चतुर्विंशतिः सहस्राणि नव च शतानि द्वात्रिंशच्च योजनानां। क्षुल्लहिमवज्जीवाऽऽयामेन कलार्द्धं च. २४९३२$\frac{1}{3}$ हि० जीवा.

चुल्लहिमवंतजीवा आयामेणं कलद्धं च ॥९॥' २४९३२ $\frac{1}{2}$ $\frac{1}{19}$ एवं शिखरिणोऽपि, तथा भरतद्विगुणविस्तारौ योजनशतोच्छ्रायौ पञ्चविंशतियोजनावगाढौ आयतचतुरस्रसंस्थानसंस्थितौ, परिणाहस्तु तयोः 'पणयालीस सहस्सा सयमेगं नव य बारस कलाओ । अद्धं कलाए हिमवंतपरिरओ सिहरिणो चेव ॥१॥' त्ति, ४५१०९ $\frac{12}{19}$ $\frac{1}{38}$ 'एव'मिति यथा हिमवच्छिखरिणौ 'जंबुद्दीवे' त्यादिनाऽभिलापेनोक्तौ एवं महाहिमवदादयोऽपीति, तत्र महाहिमवाँल्लघ्वपेक्षया, स च दक्षिणतः रुक्मी चोत्तरतः, एवमेव निषधनीलवन्तौ, नवरं एतेषामायामादयो विशेषतः क्षेत्रसमासाद् अवसेयाः, किञ्चित्तु तद्गाथाभिरेवोच्यते—'पंचसए छव्वीसे छच्च कला वित्थडं भरहवासं । दसगसय बावन्नऽहिया बारस य कलाओ हिमवंते ॥१॥ हेमवए पंचहिया इगवीससया उ पंच य कलाओ । दसहियबायालसया दस य कलाओ महाहिमवे ॥२॥ हरिवासे इगवीसा चुलसीइ सया कला य एक्का य । सोलससहस्स अट्ठ य बायाला दो कला णिसढे ॥३॥ तेत्तीसं च सहस्सा छच्च सया जोयणाण चुलसीया । चउरो य कला सकला महाविदेहस्स विक्खंभो ॥४॥ जोयणसयमुव्विद्धा कणगमया सिहरिचुल्लहिमवंता । रुप्पिमहाहिमवंता दुसउच्चा रुप्पकणगमया ॥५॥ चत्तारि जोयणसए उव्विद्धा णिसढणीलवन्ता य ।

१ पञ्चचत्वारिंशत्सहस्राणि एकं शतं नवाधिकं द्वादश च कलाः । कलाया अर्द्धं च हिमवत्परिरयः शिखरिणश्चैव ॥१॥ हि० परि० ४५१०९-$\frac{12}{19}$-$\frac{1}{38}$. २ षड्विंशत्यधिकानि पंच शतानि षट् च कला विस्तृतं भरतक्षेत्रं । द्विपंचाशदधिकानि दश शतानि द्वादश च कला हिमवतः ॥१॥ हैमवते पंचाधिकान्येकविंशतिशतानि पंच च कलाः । दशाधिकानि द्विचत्वारिंशच्छतानि दश च कलाः महाहिमवति ॥२॥ हरिवर्षे एकविंशतिसहस्राणि चतुरशीतिः शतानि कला चैका । षोडशसहस्राणि अष्टशताधिकानि द्विचत्वारिंशत् द्वे च कले निषधे ॥३॥ त्रयस्त्रिंशत्सहस्राणि षट् च शतानि चतुरशीत्यधिकानि योजनानां । चतस्रश्च कलाः सकलाः महाविदेहस्य विष्कम्भः ॥४॥ शतयोजनोच्चौ कनकमयौ शिखरिक्षुल्लहिमवन्तौ ।

णिसहो तवणिज्जमओ वेरुलिओ नीलवंतगिरी ॥६॥ उस्सेहचउब्भागो ओगाहो पायसो नगवराणं । वट्टपरिही उ तिउणो किंचूणछभायजुत्तो य ॥७॥ त्ति, चतुरस्रपरिधिस्तु आयामविष्कम्भद्विगुण इति । 'जंबू'इत्यादि 'दो वट्टवेयड्ढपव्वय'त्ति, द्वौ वृत्तौ पल्याकारत्वाद् वैताढ्यौ नामतः तौ च तौ पर्वतौ चेति विग्रहः, सर्वतः सहस्रपरिमाणौ रजतमयौ, तत्र हैमवते शब्दापाति, उत्तरतस्तु ऐरण्यवते विकटापातीति, 'तत्थ'त्ति तयोर्वृत्तवैताढ्ययोः क्रमेण स्वातिप्रभासौ देवौ वसतः, तद्भवनभावादिति । एवं हरिवर्षे गन्धापाती रम्यग्वर्षे माल्यवत्पर्यायो देवौ च क्रमेणेवेति ॥ 'जंबू' इत्यादि 'पुव्वावरे पासे'त्ति, पार्श्वशब्दस्य प्रत्येकं सम्बन्धात् पूर्वपार्श्वेऽपरपार्श्वे च, किंभूते?–'एत्थ'त्ति प्रज्ञापकेनोपदर्श्यमाने क्रमेण सौमनसविद्युत्प्रभौ प्रज्ञप्तौ. किम्भूतौ ?–अश्वस्कन्धसदृशावादौ निम्नौ पर्यवसान उन्नतौ, यतो निषधसमीपे चतुःशतोच्छ्रितौ मेरुसमीपे तु पञ्चशतोच्छ्रिताविति, आह च—"वासहरगिरिंतेणं रुंदा पंचेव जोयणसयाइं। चत्तारिसउव्विद्धा ओगाढा जोयणाण सयं ॥१॥ पंचसए उव्विद्धा ओगाढा पंच गाउयसयाइं। अंगुलअसंखभागो विच्छिन्ना मंदरंतेणं ॥२॥ वक्खारपव्वयाणं आयामो तीस जोयणसहस्सा। दोन्नि य सया णवहिया छच्च कलाओ चउण्हं पि ॥३'॥ त्ति, 'अवड्ढचंद'त्ति अपकृष्टमर्द्धं चन्द्रस्यापार्द्धचन्द्रस्तस्य यत्संस्थानम्–आकारो गजदन्ताकृतिरित्यर्थः, तेन संस्थितावपार्द्धचन्द्रसंस्था-

---

रुक्मिमहाहिमवन्तौ द्विशतोच्चौ रूप्यकनकमयौ ॥५॥ योजनचतुःशतोच्चौ निषधनीलवन्तौ च। निषधस्तपनीयमयो वैडूर्यो नीलवान् गिरिः ॥६॥ उत्सेधचतुर्भागोऽवगाहः प्रायशो नगवराणां । वृत्तपरिरयस्त्रिगुणः किंचिदूनषड्भागयुक्तश्च ॥७॥

१ वर्षधरगिर्यन्ते विस्तृताः पंचैव योजनशतानि । चतुःशतोच्चाः योजनानां शतमवगाढाः ॥१॥ पंचशतोद्वेधाः पंचशतगव्यूतावगाढाः । अंगुलासंख्यभागविस्तीर्णा मन्दरसमीपे ॥२॥ वक्षस्कारपर्वतानामायामस्त्रिंशद्योजनसहस्राणि । द्वे शते नवाधिके षट् च कलाः चतुर्णामपि ॥३॥

नसंस्थितौ, अर्द्धचन्द्रसंस्थानसंस्थिताविति क्वचित्पाठः, तत्र अर्द्धशब्देन विभागमात्रं विवक्ष्यते, नतु समप्रविभागतेति, ताभ्यां चार्द्धचन्द्राकारा देवकुरवः कृताः, अत एव वक्षाराकारक्षेत्रकारिणौ पर्वतौ वक्षारपर्वताविति । 'जंबू'इत्यादि तथैव, नवरं अपरपार्श्वे गन्धमादनः पूर्वपार्श्वे माल्यवानिति । 'दो दीहवेयड्ढ'त्ति, वृत्तवैताढ्यव्यवच्छेदार्थं दीर्घग्रहणं, वैताढ्यौ विजयाढ्यौ वेति संस्कारः, तौ च भरतैरवतयोर्मध्यभागे पूर्वापरतो लवणोदधिं स्पृष्टवन्तौ पञ्चविंशतियोजनोच्छ्रितौ तत्पादावगाढौ पञ्चाशद्विस्तृतौ आयतसंस्थितौ सर्वराजतावुभयतो बहिः काञ्चनमण्डनाढ्याविति, आह च—"पणुवीसं उविद्धो पन्नासं जोयणाण विच्छिन्नो । वेयड्ढो रययमओ भारहखेत्तस्स मज्झम्मि ॥१॥" त्ति, 'भारहए ण'मित्यादि, वैताढ्येऽपरतस्तमिश्रागुहा गिरिविस्तारायामा द्वादशयोजनविस्ताराऽष्टयोजनोच्छ्रया आयतचतुरस्रसंस्थाना विजयद्वारप्रमाणद्वारा वज्रकपाटपिहिता बहुमध्ये द्वियोजनान्तराभ्यां त्रियोजनविस्ताराभ्यामुन्मग्नजलानिमग्नजलाभिधानाभ्यां नदीभ्यां युक्ता, तद्वत् पूर्वतः खण्डप्रपाता गुहेति । 'तत्थ णं'ति तयोः तमिस्रायां गुहायां कृतमाल्यक इतरस्यां नृत्तमालक इति । 'एरावए'इत्यादि तथैव । 'जंबू' इत्यादि, हिमवद्वर्षधरपर्वते ह्येकादश कूटानि सिद्धायतन १ क्षुल्लहिमवत् २ भरत ३ इला ४ गङ्गा ५ श्री ६ रोहितांशा ७ सिन्धु ८ सुरा ९ हैमवत १० वैश्रमण ११ कूटाभिधानानि भवन्ति, पूर्वदिशि सिद्धायतनकूटं ततः क्रमेणापरतोऽन्यानि सर्वरत्नमयानि स्वनामदेवतास्थानानि पञ्चयोजनशतोच्छ्रयाणि तावदेव मूले विस्तृतानि उपरि तदर्द्धविस्तृतानि, आद्ये सिद्धायतनं पञ्चाशद्योजनायामं तदर्द्धविष्कम्भं षट्त्रिंशदुच्चं अष्टयोजनायामैश्चतुर्योजनविष्कम्भप्रवेशैस्त्रिभिर्द्वारैरुपेतं जिनप्रतिमाष्टोत्तरशतसमन्वितं, शेषेषु प्रासादाः सार्द्धद्विषष्टियोजनोच्चास्तदर्द्धविस्तृतास्तन्निवासिदेवतासिंहासनवन्त इति । इह तु प्रकृतनग-

१ पर्वतो निरूपितः पंचाशद्योजनानां विस्तीर्णः । वैताढ्यो रजतमयो भरतक्षेत्रस्य मध्ये ॥१॥

णिसहो तवणिज्जमओ वेरुलिओ नीलवंतगिरी ॥६॥ उस्सेहचउब्भागो ओगाहो पायसो नगवराणं। वट्टपरिही उ तिउणो किंचूणछभायजुत्तो य ॥७॥ त्ति, चतुरस्रपरिधिस्तु आयामविष्कम्भद्विगुण इति। 'जंबू'इत्यादि 'दो वट्टवेयड्ढपव्वय'त्ति, द्वौ वृत्तौ पल्याकारत्वाद् वैताढ्यौ नामतः तौ च तौ पर्वतौ चेति विग्रहः, सर्वतः सहस्रपरिमाणौ रजतमयौ, तत्र हैमवते शब्दापाति, उत्तरतस्तु ऐरण्यवते विकटापातीति, 'तत्थ'त्ति तयोर्वृत्तवैताढ्ययोः क्रमेण स्वातिप्रभासौ देवौ वसतः, तद्भवनभावादिति। एवं हरिवर्षे गन्धापाती रम्यग्वर्षे माल्यवत्पर्यायो देवौ च क्रमेणेवेति ॥ 'जंबू' इत्यादि 'पुव्वावरे पासे'त्ति, पार्श्वशब्दस्य प्रत्येकं सम्बन्धात् पूर्वपार्श्वेऽपरपार्श्वे च, किंभूते?-'एत्थ'त्ति प्रज्ञापकेनोपदर्श्यमाने क्रमेण सौमनसविद्युत्प्रभौ प्रज्ञप्तौ. किम्भूतौ?-अश्वस्कन्धसदृशावादौ निम्नौ पर्यवसान उन्नतौ, यतो निषधसमीपे चतुःशतोच्छ्रितौ मेरुसमीपे तु पञ्चशतोच्छ्रिताविति, आह च—"वासहरगिरिंतेणं रुंदा पंचेव जोयणसयाइं। चत्तारिसउव्विद्धा ओगाढा जोयणाण सयं ॥१॥ पंचसए उव्विद्धा ओगाढा पंच गाउयसयाइं। अंगुलअसंखभागो विच्छिन्ना मंदरंतेणं ॥२॥ वक्खारपव्वयाणं आयामो तीस जोयणसहस्सा। दोन्नि य सया णवहिया छच्च कलाओ चउण्हं पि ॥३'॥ त्ति, 'अवड्ढचंद'त्ति अपकृष्टमर्द्धं चन्द्रस्यापार्द्धचन्द्रस्तस्य यत्संस्थानम्-आकारो गजदन्ताकृतिरित्यर्थः, तेन संस्थितावपार्द्धचन्द्रसंस्था-

रुक्मिमहाहिमवन्तौ द्विशतोच्चौ रूप्यकनकमयौ ॥५॥ योजनचतुःशतोच्चौ निषधनीलवन्तौ च। निषधस्तपनीयमयो वैडूर्यो नीलवान् गिरिः ॥६॥ उत्सेधचतुर्भागोऽवगाहः प्रायशो नगवराणां। वृत्तपरिरयस्त्रिगुणः किंचिदूनषड्भागयुक्तश्च ॥७॥

१ वर्षधरगिर्यन्ते विस्तृताः पंचैव योजनशतानि। चतुःशतोच्चाः योजनानां शतमवगाढाः ॥१॥ पंचशतोद्वेधाः पंचशतगव्यूतावगाढाः। अंगुलासंख्यभागविस्तीर्णा मन्दरसमीपे ॥२॥ वक्षस्कारपर्वतानामायामस्त्रिंशद्योजनसहस्राणि। द्वे शते नवाधिके षट् च कलाः चतुर्णामपि ॥३॥

नसंश्लिष्टौ, अर्द्धचन्द्रसंस्थानसंस्थिताविति क्वचित्पाठः, तत्र अर्द्धशब्देन विभागमात्रं विवक्ष्यते, नतु समप्रविभागतेति, ताभ्यां चार्द्धचन्द्राकारा देवकुरवः कृताः, अत एव वक्षाराकारक्षेत्रकारिणौ पर्वतौ वक्षारपर्वताविति। 'जंबू'इत्यादि तथैव, नवरं अपरपार्श्वे गन्धमादनः पूर्वपार्श्वे माल्यवानिति। 'दो दीहवेयड्ढ'त्ति, वृत्तवैताढ्यव्यवच्छेदार्थं दीर्घग्रहणं, वैताढ्यौ विजयाढ्यौ वेति संस्कारः, तौ च भरतैरवतयोर्मध्यभागे पूर्वापरतो लवणोदधिं स्पृष्टवन्तौ पञ्चविंशतियोजनोच्छ्रितौ तत्पादावगाढौ पञ्चाशद्विस्तृतौ आयतसंस्थितौ सर्वराजतावुभयतो बहिः काञ्चनमण्डनाङ्काविति, आह च—"पणुवीसं उव्विद्धो पन्नासं जोयणाण विच्छिन्नो। वेयड्ढो रययमओ भारहखेत्तस्स मज्झम्मि॥१॥" त्ति, 'भारहए णं'मित्यादि, वैताढ्येऽपरतस्तमिस्रागुहा गिरिविस्तारायामा द्वादशयोजनविस्ताराऽष्टयोजनोच्छ्रया आयतचतुरस्रसंस्थाना विजयद्वारप्रमाणद्वारा वज्रकपाटपिहिता बहुमध्ये द्वियोजनान्तराभ्यां त्रियोजनविस्ताराभ्यामुन्मग्नजलानिमग्नजलाभिधानाभ्यां नदीभ्यां युक्ता, तद्वत् पूर्वतः खण्डप्रपाता गुहेति। 'तत्थ णं'ति तयोः तमिस्रायां गुहायां कृतमाल्यक इतरस्यां नृत्तमालक इति। 'एरावए'इत्यादि तथैव। 'जंबू' इत्यादि, हिमवद्वर्षधरपर्वते ह्येकादश कूटानि सिद्धायतन १ क्षुल्लहिमवत् २ भरत ३ इला ४ गङ्गा ५ श्री ६ रोहितांशा ७ सिन्धु ८ सुरा ९ हैमवत १० वैश्रमण ११ कूटाभिधानानि भवन्ति, पूर्वदिशि सिद्धायतनकूटं ततः क्रमेणापरतोऽन्यानि सर्वरत्नमयानि स्वनामदेवतास्थानानि पञ्चयोजनशतोच्छ्रयाणि तावदेव मूले विस्तृतानि उपरि तदर्द्धविस्तृतानि, आद्ये सिद्धायतनं पञ्चाशद्योजनायामं तदर्द्धविष्कम्भं षट्त्रिंशदुच्चं अष्टयोजनायामैश्चतुर्योजनविष्कम्भप्रवेशैस्त्रिभिर्द्वारैरुपेतं जिनप्रतिमाष्टोत्तरशतसमन्वितं, शेषेषु प्रासादाः सार्द्धद्विषष्टियोजनोच्चास्तदर्द्धविस्तृतास्तन्निवासिदेवतासिंहासनवन्त इति। इह तु प्रकृतनग-

१ पंचविंशतिरुद्वेधः पंचाशद्योजनानां विस्तीर्णः। वैताढ्यो रजतमयो भरतक्षेत्रस्य मध्ये॥१॥

नायकनिवासभूतत्वाद्देवनिवासभूतानां तेषां मध्ये आद्यत्वाच्च हिमवत्कूटं गृहीतं सर्वान्तिमत्वाच्च वैश्रवणकूटं द्विस्थानकानुरोधेनेति, आह च—"कत्थइ देसग्गहणं कत्थइ घेप्पंति निरवसेसाइं। उक्कमकमजुत्ताइं कारणवसओ निउत्ताइं ॥१॥" ति कूटसंग्रहश्चायं—"वेयड्ढ ९ माल ते ९ विज्जुप्पह ९ निसह ९ णीलवंते य ९। णव णव कूडा भणिया एकारस सिहरि ११ हिमवंते ११ ॥१॥ रुप्पि ८ महाहिमवंते ८ सोमणसे ७ गंधमायणनगे य ७। अट्ठऽट्ठ सत्त सत्त य वक्खारगिरिसु चत्तारि ॥२॥" त्ति। 'जंबू' इत्यादि महाहिमवति ह्यष्टौ कूटानि, सिद्ध १ महाहिमवत् २ हैमवद् ३ रोहिता ४ ह्री ५ हरिकान्ता ६ हरि ७ वैडूर्यं ८ कूटाभिधानानि, द्वयग्रहणे च कारणमुक्तमिति। 'एव'मित्यादि, एवंकरणात् 'जंबू' इत्यादिरभिलापो दृश्यः, निषधवर्षधरपर्वते हि सिद्ध १ निषध २ हरिवर्ष ३ प्राग्विदेह ४ हरि ५ धृति ६ शीतोदा ७ अपरविदेह ८ रुचकाख्यानि ९ स्वनामदेवतानि नव कूटानि, इहापि द्वितीयान्त्ययोर्ग्रहणं प्राग्वद् व्याख्येयमिति। 'जंबू'इत्यादि, नीलवर्षधरपर्वते हि सिद्ध १ नील २ पूर्वविदेह ३ शीता ४ कीर्त्ति ५ नारीकान्ता ६ ऽपरविदेह ७ रम्यक ८ उपदर्शना ९ ख्यानि नव कूटानि, इहापि द्वितीयान्त्यग्रहणं प्राग्वदिति। 'एव'मित्यादि, रुक्मिवर्षधरे हि सिद्ध १ रुक्मि २ रम्यक ३ नरकान्ता ४ बुद्धि ५ रौप्यकूला ६ हैरण्यवत् ७ मणिकाञ्चनकूटा ८ ख्यानि अष्ट कूटानि, द्वयाभिधानं च प्राग्वदिति। 'एव'मित्यादि शिखरिणि हि वर्षधरे सिद्ध १ शिखरि २ हैरण्यवत ३ सुरादेवी ४ रक्ता ५ लक्ष्मी

---

१ कुत्रचिद्देशग्रहणं क्वापि गृह्यन्ते निरवशेषाणि। उत्क्रमक्रमयुक्तानि कारणवशतो नियुक्तानि ॥१॥

२ वैताढ्ये माल्यवति विद्युत्प्रभे निषधे नीलवति च। नव नव कूटानि भणितानि एकादश शिखरिहिमवतोः ॥१॥ रुक्मिमहाहिमवतोः सौमनसगन्धमादननगयोः। अष्टाष्ट सप्त सप्त च वक्षस्कारगिरिषु चत्वारि ॥२॥

६ सुवर्णकूला ७ रक्तोदा ८ गन्धापाति ९ ऐरावती १० तिगिञ्छिकूटा ११ एयानि एकादश कूटानि, इहापि द्वयोर्ग्रहणं तथैवेति ॥

जंबूमंदर० उत्तरदाहिणेणं चुल्लहिमवंतसिहरीसु वासहरपव्वयेसु दो महद्दहा पं० तं०—बहुसमतुल्ला अविसेसमणाणत्ता अण्णमण्णं णातिवट्टंति, आयामविक्खंभउव्वेहसंठाणपरिणाहेणं, तं०—पउमद्दहे चेव पुंडरीयद्दहे चेव, तत्थ णं दो देवयाओ महड्डियाओ जाव पलिओवमट्ठितीयाओ परिवसंति, तं०—सिरी चेव लच्छी चेव. एवं महाहिमवंतरुप्पीसु वासहरपव्वएसु दो महद्दहा पं० तं०—बहुसम० जाव तं०—महापउमद्दहे चेव महापोंडरीयद्दहे चेव, देवताओ हिरिच्चेव बुद्धिचेव, एवं निसढनीलवंतेसु तिगिंछिद्दहे चेव केसरिद्दहे चेव, देवताओ धिती चेव कित्तिचेव, जंबूमंदर० दाहिणेणं महाहिमवंताओ वासहरपव्वयाओ महापउमद्दहाओ दहाओ दो महानईओ पवहंति, तं०—रोहियच्चेव हरिकंतचेव, एवं निसढाओ वासहरपव्वताओ तिगिंछिद्दहाओ दो म० तं०—हरिच्चेव सीओअचेव, जंबूमंदर० उत्तरेणं नीलवंताओ वासहरपव्वताओ केसरिद्दहाओ दो महानईओ पवहंति, तं०—सीता चेव नारिकंता चेव, एवं रुप्पीओ वासहरपव्वताओ महापोंडरीयद्दहाओ दो महानईओ पवहंति, तं०—णरकंता चेव रुप्पकूला चेव, जंबूमंदरदाहिणेणं भरहे वासे दो पवायद्दहा पं० तं०—बहुसम० तं०—गंगप्पवातद्दहे चेव सिंधुप्पवायद्दहे चेव, । एवं हिमवए वासे दो पवायद्दहा पं० तं०—बहु० तं०—रोहियप्पवातद्दहे चेव रोहियंसप्पवातद्दहे चेव, जंबूमंदरदाहिणेणं हरिवासे वासे दो पवायद्दहा पं० बहुसम० तं—हरिपवातद्दहे चेव हरिकंतप्पवातद्दहे चेव, जंबूमंदरउत्तरदाहिणेणं महाविदेहवासे दो पवायद्दहा पं० बहुसम०

बहु० जाव नरकंतप्पवायद्दहे चेव, णारीकंतप्पवायद्दहे चेव, एवं हेरन्नवते वासे दो पवायद्दहा पं० तं—बहु० सुवन्नकूलप्पवायद्दहे चेव रुप्पकूलप्पवायद्दहे चेव, जंबूमंदरउत्तरेणं एरवए वासे दो पवायद्दहा पं० बहु० जाव रत्तप्पवायद्दहे चेव रत्तावइप्पवायद्दहे चेव, जंबूमंदरदाहिणेणं भरहे वासे दो महानईओ पं० बहु० जाव गंगा चेव सिंधू चेव, एवं जधा पवातद्दहा एवं णईओ भाणियव्वाओ, जाव एरवए वासे दो महानईओ पं०—बहुसमतुल्लाओ जाव रत्ता चेव रत्तवती चेव ॥ (सू० ८८)

'जंबू'इत्यादि, इह च हिमवदादिषु षट्सु वर्षधरेषु क्रमेणैते पद्मादयः षडेव ह्रदाः, तद्यथा—"[1]पउमे य १ महापउमे २ तिगिंछी ३ केसरी ४ दहे चेव। हरए महपुंडरिए ५ पुंडरीए चेव य ६ दहाओ ॥१॥" हिमवत उपरि बहुमध्यभागे पद्मह्रद इति पद्मह्रदनामा ह्रदः, एवं शिखरिणः[1] पौण्डरीकः, तौ च पूर्वापरायतौ सहस्रं पञ्चशतविस्तृतौ चतुष्कोणौ दशयोजनावगाढौ रजतकूलौ वज्रमयपाषाणौ तपनीयतलौ सुवर्णमध्यरजतमणिवालुकौ चतुर्दशमणिसोपानौ शुभावतारौ तोरणध्वजच्छत्रादिविभूषितौ नीलोत्पलपुण्डरीकादिचितौ विचित्रशकुनिमत्स्यविचरितौ षट्पदपटलोपभोग्याविति। 'तत्थ णं'ति, तयोः—महाह्रदयोर्द्वे देवते परिवसतः, पद्मह्रदे श्रीः पौण्डरीके लक्ष्मीः, ते च भवनपतिनिकायाभ्यन्तरभूते, पल्योपमस्थितिकत्वात्, व्यन्तरदेवीनां हि पल्योपमार्द्धमेवायुरुत्कर्षतोऽपि भवति,

१ पद्मो महापद्मश्च तिगिच्छी केशरी ह्रदश्चैव। ह्रदो महापुण्डरीकः पुण्डरीकश्चैव च ह्रदाः ॥१॥ [1]शिखरिपर्वतस्योपरि बहुमध्यभागे ह्रदः प्र० अधिकम्।

तयोः कर्णिके अर्द्धयोजनमाने तदर्द्धबाहल्ये तदुपरि देव्योर्भवने इति। 'एव'मित्यादि, महाहिमवति महापद्मो रुक्मिणि तु महापौण्डरीकः, तौ च द्विसहस्रायामौ तदर्द्धविष्कम्भौ द्वियोजनमानपद्मव्यासवन्तौ, तयोर्देवते परिवसतो महापद्मे ह्रीर्महापुण्डरीके बुद्धिरिति। 'एव'मित्यादि, निषधे तिगिंछह्रदे धृतिर्देवता नीलवति केसरिह्रदे कीर्त्तिर्देवता, तौ च ह्रदौ चतुर्द्विसहस्रायामविष्कम्भाविति, भवति चात्र गाथा—"एएसु सुरवहूओ वसंति पलिओवमट्ठितीयाओ। सिरिहिरिधितिकित्तीओ बुद्धीलच्छीसनामाओ ॥१॥" त्ति 'जंबू' इत्यादि, तत्र रोहिन्नदी महापद्मह्रदाद्दक्षिणतोरणेन निर्गत्य पोडश पञ्चोत्तराणि योजनशतानि सातिरेकाणि दक्षिणतो गिरिणा गत्वा हाराकारधारिणा सातिरेकयोजनद्विशतिकेन प्रपातेन मकरमुखप्रणालेन महाहिमवतो रोहिदभिधानकुण्डे निपतति, मकरमुखजिह्वा योजनमायामेन अर्द्धत्रयोदशयोजनानि विष्कम्भेन क्रोशं बाहल्येन, रोहित्प्रपातकुण्डाच्च दक्षिणतोरणेन निर्गत्य हैमवतवर्षमध्यभागवर्त्तिनं शब्दापातिवृत्तवैताढ्यमर्द्धयोजनेनाप्राप्याष्टाविंशत्या नदीसहस्रैः संयुज्याधो जगतीं विदार्य पूर्वतो लवणसमुद्रमतिगच्छतीति, रोहिन्नदी हि प्रवाहेऽर्द्धत्रयोदशयोजनविष्कम्भा क्रोशोद्वेधा ततः क्रमेण वर्द्धमाना मुखे पञ्चविंशत्यधिकयोजनशतविष्कम्भा सार्द्धद्वियोजनोद्वेधा,

*निर्मलकेवलालोकालोकितत्रिभुवनश्रीजिनराजपरिभाषितानि आ० प्र० अधिकम्। १ सार्धत्रयार्धपंचमपल्योपमानि असुरयुगलदेवीनां। शेषाणां नवदेवतानां देशोनमर्धपल्यमुत्कृष्टं ॥१॥ २ एतेषु (ह्रदेषु) सुरवध्वो वसन्ति पल्योपमस्थितिकाः। श्रीह्रीधृतिकीर्त्तिबुद्धिलक्ष्मीसनाम्न्यः ॥१॥

देवोत्तरतोरणेन निर्गत्य पञ्चोत्तराणि षोडश शतानि सातिरेकाणि उत्तराभिमुखी पर्वतेन गत्वा सातिरेकयोजनशतद्वयप्रमाणेन प्रपातेन हरिकान्ताकुण्डे तथैव प्रपतति, मकरमुखजिह्विकाप्रमाणं पूर्वोक्तद्विगुणं, ततः प्रपातकुण्डादुत्तरतोरणेन निर्गत्य हरिवर्षमध्यभागवर्त्तिनं गन्धापातिवृत्तवैताढ्यं योजनेनासम्प्राप्ता पश्चिमाभिमुखीभूता षट्पञ्चाशता सरित्सहस्रैः समग्रा समुद्रमभिगच्छति, इयं च हरिकान्ता प्रमाणतो रोहिन्नदीतो द्विगुणेति। 'एव'मित्यादि एवमिति 'जंबूद्दीवे'त्याद्यभिलापसूचनार्थः। हरिन्महानदी तिगिंछिह्रदस्य दक्षिणतोरणेन निर्गत्य सप्त योजनसहस्राणि चत्वारि चैकविंशत्यधिकानि योजनशतानि सातिरेकाणि दक्षिणाभिमुखी पर्वतेन गत्वा सातिरेकचतुर्योजनशतिकेन प्रपातेन हरिकुण्डे निपत्य पूर्वसमुद्रे प्रपतति, शेषं हरिकान्तासमानमिति। शीतोदामहानदी तिगिंछिह्रदस्योत्तरतोरणेन निर्गत्य तावन्त्येव योजनसहस्राणि गिरिणा उत्तराभिमुखी गत्वा सातिरेकचतुर्योजनशतिकेन प्रपातेन शीतोदाकुण्डे निपतीति, जिह्विका मकरमुखस्य चत्वारि योजनानि आयामेन पञ्चाशद्विष्कम्भेण योजनं बाहल्येन, कुण्डादुत्तरतोरणेन निर्गत्य देवकुरून् विभजन्ती चित्रविचित्रकूटौ पर्वतौ निषधह्रदादींश्च पञ्च ह्रदान् द्विधा कुर्वती चतुरशीत्या नदीसहस्रैरापूर्यमाणा भद्रशालवनमध्येन मेरुं योजनद्वयेनाप्राप्ता प्रत्यङ्मुखी आवर्त्तमाना अधो विद्युत्प्रभं वक्षारपर्वतं दारयित्वा मेरोरपरतोऽपरविदेहमध्यभागेन एकैकस्माद् विजयादष्टाविंशत्या अष्टाविंशत्या नदीसहस्रैरापूर्यमाणा अधो जयन्तद्वारस्य अपरसमुद्रं प्रविशतीति, शीतोदा हि प्रवाहे पञ्चाशद्योजनविष्कम्भा योजनोद्वेधा ततो मात्रया परिवर्द्धमाना मुखे पञ्चयोजनशतविष्कम्भा दशयोजनोद्वेधेति। 'जंबू' इत्यादि, शीता महानदी केसरिह्रदस्य दक्षिणतोरणेन विनिर्गत्य कुण्डे पतित्वा मेरोः पूर्वतः पूर्वविदेहमध्येन विजयद्वारस्याधः पूर्वसमुद्रं शीतोदासमानशेषवक्तव्या प्रविश-

रूप्यकूला तु तस्यैवोत्तरतोरणेन विनिर्गत्य ऐरण्यवद्वर्षं विभजन्ती रोहिन्नदीतुल्यवक्तव्या अपरसमुद्रं गच्छतीति । 'जंबू' इत्यादि, 'पवायद्दह'त्ति प्रपतनं प्रपातस्तदुपलक्षितौ ह्रदौ प्रपातह्रदौ, इह यत्र हिमवदादेर्नगात् गङ्गादिका महानदी प्रणालेनाधो निपतति स प्रपातह्रद इति, प्रपातकुण्डमित्यर्थः, 'गंगापवायद्दहे चेव'त्ति हिमवद्वर्षधरपर्वतोपरिवर्त्तिपद्मह्रदस्य पूर्वतोरणेन निर्गत्य पूर्वाभिमुखी पञ्च योजनशतानि गत्वा गङ्गावर्त्तनकूटे आवृत्ता सती पञ्च त्रयोविंशत्यधिकानि योजनशतानि साधिकानि दक्षिणाभिमुखी पर्वतेन गत्वा गङ्गामहानदी अर्द्धयोजनायामया सक्रोशषड्योजनविष्कम्भयाऽर्धक्रोशबाहल्यया जिह्विकया युक्तेन विवृतमहामकरमुखप्रणालेन सातिरेकयोजनशतिकेन च मुक्तावलीकल्पेन प्रपातेन यत्र प्रपतति यश्च षष्टियोजनायामविष्कम्भः किञ्चिन्न्यूननवत्युत्तरशतपरिक्षेपो दशयोजनोद्वेधो नानामणिनिबद्धः यस्य च पूर्वापरदक्षिणासु त्रयस्त्रिसोपानप्रतिरूपकाः सविचित्रतोरणाः मध्यभागे च गङ्गादेवीद्वीपोऽष्टयोजनायामविष्कम्भः सातिरेकपञ्चविंशतिपरिक्षेपः जलान्ताद् द्विक्रोशोच्छ्रितो वज्रमयो गङ्गादेवीभवनेन क्रोशायामेन तदर्द्धविष्कम्भेन किञ्चिदूनक्रोशोच्चेनानेकस्तम्भशतसन्निविष्टेनालङ्कृतोपरितनभागः, यतश्च दक्षिणतोरणेन विनिर्गत्य प्रवाहे सक्रोशषड्योजनविष्कम्भाऽर्द्धक्रोशोद्वेधा गङ्गा उत्तरभरतार्द्धं विभजन्ती सप्तभिः नदीसहस्रैरापूर्यमाणा अधः पूर्वतः खण्डप्रपातगुहाया वैताढ्यपर्वतं विदार्य दक्षिणार्द्धभरतं विभजन्ती तन्मध्यभागेन गत्वा पूर्वाभिमुखी आवृत्ता सती चतुर्दशभिर्नदीसहस्रैः समग्रा मुखे सार्द्धद्विषष्टियोजनविष्कम्भा सक्रोशयोजनोद्वेधा जगतीं विदार्य पूर्वलवणसमुद्रं प्रविशति स गङ्गाप्रपातह्रदः, एतदनुसारेण सिन्धुप्रपातह्रदोऽपि व्याख्यातव्यः, अत एव एतौ बहुस-

गादिविशेषणावायामविष्कम्भोद्वेधपरिणाहैर्भावनीयाविति, सर्वे एव प्रपातह्रदा दशयोजनोद्वेधा वक्तव्या इति । यच्चेह वर्षधरनद्यधिकारे गङ्गासिन्धुरोहितांशानां तथा सुवर्णकूलारक्तारक्तवतीनामनभिधानं तद् द्विस्थानकानुरोधात्, तासां हि एकैकस्मात् पर्वतात् त्रयं त्रयं प्रवहतीति द्विस्थानके नावतार इति । 'एव'मित्यादि, एवमिति प्राग्वत् 'रोहियप्पवायद्दहे चेव'त्ति रोहित्-उक्तस्वरूपा यत्र प्रपतति यश्च सविंशतिकं योजनशतमायामविष्कम्भाभ्यां किञ्चिन्न्यूनाशीत्यधिकानि त्रीणि शतानि परिक्षेपेण यस्य च मध्यभागे रोहिद्द्वीपः षोडशयोजनायामविष्कम्भः सातिरेकपञ्चाशद्योजनपरिक्षेपः जलान्ताद् द्विक्रोशोच्छ्रितो यश्च रोहिद्देवताभवनेन गङ्गादेवताभवनसमानेन विभूषितोपरितनभागः स रोहित्प्रपातह्रद इति । 'रोहियंसप्पवायद्दहे चेव' त्ति हिमवद्वर्षधरपर्वतोपरिवर्त्तिपद्मह्रदोत्तरतोरणेन निर्गत्य रोहितांशा महानदी द्वे षट्सप्तत्युत्तरे योजनशते सातिरेकं उत्तराभिमुखी पर्वतेन गत्वा योजनायामया अर्द्धत्रयोदशयोजनविष्कम्भया क्रोशबाहल्यया जिह्विकया विवृतमकरमुखप्रणालेन हाराकारेण च सातिरेकयोजनशतिकेन प्रपातेन यत्र प्रपतति यश्च रोहित्प्रपातकुण्डसमानमानः तस्य मध्ये रोहितांशद्वीपो रोहिद्द्वीपसमानमानः रोहितांशाभवनेन प्रागुक्तमानेनालङ्कृतः, यतश्च रोहितांशानदी रोहिन्नदीसमानमाना उत्तरतोरणेन निर्गत्य पश्चिमसमुद्रं प्रविशति स रोहितांशाप्रपातह्रद इति । 'जंबू' इत्यादि, 'हरिप्पवायद्दहे चेव'त्ति हरिन्नदी प्रागुक्तलक्षणा यत्र निपतति यश्च द्वे शते चत्वारिंशदधिके आयामविष्कम्भाभ्यां सप्त शतानि एकोनषष्ट्यधिकानि परिक्षेपेण यस्य च मध्यभागे हरिद्देवताद्वीपः द्वात्रिंशद्योजनायामविष्कम्भः एकोत्तरशतपरिक्षेपः जलान्ताद् द्विक्रोशोच्छ्रितो हरिद्देवताभवनभूषितोपरितनभागोऽसौ हरित्प्रपातह्रद इति । 'हरिकंतप्पवायद्दहे चेव' त्ति हरिकान्तोक्तरूपा महानदी यत्र निपतति यश्च हरित्कुण्डसमानो हरिद्द्वीपसमानेन हरिकान्तादेवीद्वीपेन सभवनेन भूषितमध्यभागः स हरिकान्ताप्रपातह्रद इति ।

'जंबू' इत्यादि, 'सीयप्पवायद्दहे चेव'त्ति यत्र नीलवतः शीता निपतति यश्च चत्वार्यशीत्यधिकानि योजनशतानि आयामविष्कम्भाभ्यां पञ्चदशाष्टादशोत्तराणि विशेषन्यूनानि परिक्षेपेण यस्य च मध्ये शीताद्वीपश्चतुःषष्टियोजनायामविष्कम्भो द्व्युत्तरयोजनशतद्वयपरिक्षेपः जलान्तात् द्विक्रोशोच्छ्रितः शीतादेवीभवनेन विभूषितोपरितनभागः स शीताप्रपातह्रद इति, 'सीतोदप्पवायद्दहे चेव'त्ति यत्र निषधाच्छीतोदा निपतति स शीतोदाप्रपातह्रदः शीताप्रपातह्रदसमानः स शीतादेवीद्वीपभवनसमानशीतोदादेवीद्वीपभवनश्चेति। 'जंबू' इत्यादि, नरकान्तानारीकान्ताप्रपातह्रदौ च हरिकान्ताहरित्प्रपातह्रदसमानौ स्वसमाननामद्वीपदेविकाविति। 'एव'मित्यादि, सुवर्णकूलारूप्यकूलाप्रपातह्रदौ रोहितांशारोहित्प्रपातह्रदसमानवक्तव्यौ, विशेषस्तूह्य इति। 'जंबू' इत्यादि रक्तारक्तवतीप्रपातह्रदौ गङ्गासिन्धुप्रपातह्रदसमानवक्तव्यौ, नवरं रक्ता पूर्वोदधिगामिनी रक्तवती तु पश्चिमोदधिगामिनीति। 'जंबू' इत्यादि 'जंबुद्दीवे २ मंदरस्स दाहिणेणं भरहे वासे दो महानदीओ' इत्यादि, 'एव'मिति अनन्तरक्रमेण 'जह'त्ति यथा पूर्वं वर्षे २ द्वौ द्वौ प्रपातह्रदावुक्तौ एवं नद्यो वाच्याः, ताश्चैवं—"गंगा १ सिंधू २ तह रोहियंस ३ रोहीणदी य ४ हरिकंता ५। हरिसलिला ६ सीओया ७ सत्तेया होंति दाहिणओ ॥१॥ सीया य १ नारिकांता २ नरकांता चेव ३ रुप्पकूला ४ य। सलिला सुवण्णकूला ५ रत्तवती रत्त ७ उत्तरओ ॥२॥" इति।

जम्बूद्वीपाधिकारात् क्षेत्रव्यपदेश्यपुद्गलधर्माधिकाराच्च जम्बूद्वीपसम्बन्धिभरतादिसत्ककाललक्षणपर्यायधर्माननेकधाऽष्टादश-

१ गंगासिन्धू तथा रोहितांशा रोहिन्नदी च हरिकान्ता। हरिसलिला शीतोदा सप्तैता भवन्ति दक्षिणस्यां ॥१॥ शीता च नारीकान्ता नरकान्ता ३। रूप्यकूला च। सलिला सुवर्णकूला रक्तवती रक्ता चोत्तरस्यां ॥२॥

सूत्र्याऽऽह—

जंबुद्दीवे २ भरहेरवएसु वासेसु तीताए उस्सप्पिणीए सुसमदूसमाए समाए दो सागरोवमकोडाकोडीओ काले होत्था १, एवमिमीसे ओसप्पिणीए जाव पन्नत्ते २, एवं आगमिस्साए उस्सप्पिणीए जाव भविस्सति ३, जंबूदीवे दीवे भरहेरवएसु वासेसु तीताए उस्सप्पिणीए सुसमाए समाए मणुया दो गाउयाइं उड्ढं उच्चत्तेणं होत्था ४, दोन्नि य पलिओवमाइं परमाउं पालइत्था ५, एवमिमीसे ओसप्पिणीए जाव पालयित्था ६, एवमाग मेस्साते उस्सप्पिणीए जाव पालिस्संति ७, जंबुद्दीवे दीवे भरहेरवएसु वासेसु एगसमये एगजुगे दो अरिहंतवंसा उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिस्संति वा ८, एवं चक्कवट्टिवंसा ९, दसारवंसा १०, जंबूभरहेरवएसु एगसमते दो अरहंता उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिस्संति वा ११, एवं चक्कवट्टिणो १२, एवं बलदेवा एवं वासुदेवा ( दसारवंसा ) जाव उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिस्संति वा १३, जंबू० दोसु कुरासु मणुआ सया सुसमसुसममुत्तमिड्ढिं पत्ता पच्चणुब्भवमाणा विहरंति, तं०—देवकुराए चेव उत्तरकुराए चेव १४, जंबुद्दीवे दीवे दोसु वासेसु मणुया सया सुसमुत्तमं इड्ढिं पत्ता पच्चणुब्भवमाणा विहरंति तं०—हरिवासे चेव रम्मगवासे चेव १५, जंबू० दोसु वासेसु मणुया सया सुसमदूसममुत्तमामिड्ढिं पत्ता पच्चणुब्भवमाणा विहरंति तं०—हेमवए चेव एरन्नवए चेव १६, जंबुद्दीवे दीवे दोसु खित्तेसु मणुया सया दूसमसुसममुत्तममिड्ढिं पत्ता पच्चणुब्भवमाणा विहरंति, तं०—पुव्वविदेहे चेव अवरविदेहे चेव १७, जंबूदीवे दीवे दोसु वासेसु मणुया छव्विहंपि कालं पच्चणुब्भवमाणा

विहरंति, तं०—भरहे चेव एरवते चेव १८, (सू० ८९)

सुगमानि चैतानि, नवरं 'तीताए'त्ति अतीता या उत्सर्पिणी प्राग्वत् तस्यां तस्या वा सुषमदुष्षमायाः–बहुसुषमायाः समायाः–कालविभागस्य चतुर्थारकलक्षणस्य 'कालो'त्ति स्थितिः प्रमाणं वा 'होत्थ'त्ति बभूवेति। 'एव'मिति जंबुद्दीवे २ इत्यादि उच्चारणीयम्, णवरं 'इमीसे'त्ति अस्यां प्रत्यक्षायां वर्त्तमानायामित्यर्थः, अवसर्प्पिण्यां–उक्तार्थायां, 'जाव'त्ति सुसमदूसमाए समाए–तृतीयारक इत्यर्थः, 'दो सागरोवमकोडाकोडीओ काले' 'पण्णत्ते' प्रज्ञप्त इति पूर्वसूत्राद्विशेषः, पूर्वसूत्रे हि होत्यत्ति भणितमिति। 'एव'मित्यादि, 'आगमिस्साए'त्ति आगमिष्यन्त्यामुत्सर्पिण्यामिति भविष्यतीति पूर्वसूत्राद्विशेषः, 'जम्बू' इत्यादि सुषमायां पञ्चमारके 'होत्थ' त्ति बभूवुः, 'पालयित्थ' त्ति पालितवन्तः पूर्वसूत्राद्विशेषः। 'जंबु' इत्यादि, 'एगजुगे'त्ति पञ्चाब्दिकः कालविशेषो युगं तत्रैकस्मिन् तस्याप्येकस्मिन् समये 'एगसमये एगजुगे' इत्येवं पाठेऽपि व्याख्योक्तक्रमेणैव, इत्थमेवार्थसम्बन्धादन्यथा वा भावनीयेति। द्वावर्हतां वंशौ–प्रवाहावेको भरतप्रभवोऽन्य ऐरवतप्रभव इति। 'दसार'त्ति दसाराः–समयभाषया वासुदेवाः। 'जंबू' इत्यादि, सदा–सर्वदा 'सुसमसुसमं'ति प्रथमारकानुभागः सुषमसुषमा तस्याः सम्बन्धिनी या सा सुषमसुषमैव तां उत्तमार्द्धि–प्रधानविभूतिं उच्चैस्त्वायुःकल्पवृक्षदत्तभोगोपभोगादिकां प्राप्ताः सन्तस्तामेव प्रत्यनुभवन्तो–वेदयन्तो न सत्तामात्रेणेत्यर्थः, अथवा सुषमसुषमां–कालविशेषं प्राप्ताः–अधिगता उत्तमामृद्धिं प्रत्यनुभवन्तो विहरन्ति–आसत इति, अभिधीयते च—"दोसुवि कुरासु मणुया

१ द्वयोरपि कुर्वोर्मनुष्यास्त्रिपल्यपरमायुषस्त्रिक्रोशोच्चाः। पृष्ठकरण्डानि द्वे शते षट्पंचाशदधिके मनुजानां ॥१॥ सुषमसुषमानुभावमनुभवतामपत्यपालनना। एकोनपंचाशद्दिनानि अष्टमभक्तेन आहारः ॥२॥

तिपल्लपरमाउणो तिकोसुच्चा। पिट्ठिकरंडसयाइं दो छप्पन्नाइं(तु) मणुयाणं ॥१॥ सुसमसुसमाणुभावं अणुभवमाणाणऽवच्चगोवणया। अउणापन्नदिणाइं अट्ठमभत्तस्स आहारो ॥२॥" इति। देवकुरवो दक्षिणाः उत्तरकुरव उत्तरास्तेष्विति। 'जंबू' इत्यादि, 'सुसमं'ति सुषमा द्वितीयारकानुभागः, शेषं तथैव, पठ्यते च—"[3]हरिवासरंमएसुं आउपमाणं सरीरउस्सेहो। पलिओवमाणि दोन्नि उ दोन्नि य कोसा समा भणिया ॥१॥ छट्ठस्स य आहारो चउसट्ठिदिणाणुपालणा तेसिं। पिट्ठिकरंडाण सयं अट्ठावीसं मुणेयव्वं ॥२॥" इति। 'जंबू' इत्यादि, 'सुसमदुस्समं'ति सुसमदुष्पमा-तृतीयारकानुभागस्तस्या या सा सुषमदुष्षमा ऋद्धिः, शेषं तथैव, उच्यते च—"[2]गाउयमुच्चा पलिओवमाउणो वज्जरिसहसंघयणा। हेमवएरन्नवए अहमिंदणरा मिहुणवासी ॥१॥ चउसट्ठी पिट्ठिकरंडयाण मणुयाण तेसिमाहारो। भत्तस्स चउत्थस्स य उणसीतिदिणाणुपालणया ॥२॥" इति। 'जंबू' इत्यादि, 'दूसमसुसमं'ति दुष्षमसुषमा चतुर्थारकप्रतिभागस्तत्सम्बन्धिनी ऋद्धिर्दुष्पमसुषमैव, शेषं तथैव, अधीयते च—"[3]मणुयाण पुव्वकोडी आउं पंचुस्सिया धणुसयाइं। दूसमसुसमाणुभावं अणुहोंति णरा निययकालं ॥१॥" इति। 'जंबूदीवे' इत्यादि, 'छव्विहंपि'त्ति सुषमसुषमादिकं उत्सर्पिण्यवसर्पिणीरूपमिति।

अनन्तरं जम्बूद्वीपे काललक्षणद्रव्यपर्यायविशेषा उक्ताः, अधुना तु जम्बूद्वीप एव कालपदार्थव्यञ्जकानां ज्योतिषां द्विस्थानका-

१. हरिवर्षरम्यकयोरायुषः प्रमाणं शरीरस्योच्छ्रयः। द्वे पल्योपमे च द्वौ क्रोशौ च समौ भणितौ ॥१॥ षष्ठेन आहारश्चतुःषष्टिदिनान्यनुपालना तेषां पृष्ठकरण्डानां अष्टाविंशत्यधिकं शतं ज्ञातव्यं ॥२॥ २ गा० १ प. १ वज्र. ६४ पृष्ठ: दि. अ० ६९ पालना ३ मनुजानां पूर्वकोट्यायुः पंचधनुःशतोच्छ्रितानि। दुष्षमसुषमानुभावमनुभवंति नरा नियतकालं ॥१॥

नुपातेन प्ररूपणामाह—

जंबुद्दीवे दीवे दो चंदा पभासिंसु वा पभासंति वा पभासिस्संति वा, दो सूरिआ तविंसु वा तवंति वा तविस्संति वा, दो कत्तिया, दो रोहिणीओ, दो मगसिराओ, दो अद्दाओ, एवं भाणियव्वं, "कत्तियं रोहिणि मगसिर अद्दा य पुणव्वसू अ पूसो य। तत्तोऽवि अस्सलेसा महा य दो फग्गुणीओ य ॥१॥ हत्थो चित्ता साई विसाहा तहय होंति अणुराहा। जेट्ठा मूलो पुव्वा य आसाढा उत्तरा चेव ॥२॥ अभिईसवणधणिट्ठा सयभिसगा दो य होंति भद्दवया। रेवंति अस्सिणि भरणी नेतव्वा आणुपुव्वीए ॥३॥ एवं गाहाणुसारेणं णेयव्वं जाव दो भरणीओ। दो अग्गी दो पयावती दो सोमा दो रुद्दा दो अदिती दो बहस्सती दो सप्पी दो पीती दो भगा दो अज्जमा दो सविता दो तट्ठा दो वाऊ दो इंदग्गी दो मित्ता दो इंदा दो निरती दो आऊ दो विस्सा दो बम्हा दो विण्हू दो वसू दो वरुणा दो अया दो विविद्धी दो पुस्सा दो अस्सा दो यमा। दो इंगालगा दो वियालगा दो लोहितक्खा दो सणिच्चरा दो आहुणिया दो पाहुणिया दो कणा दो कणगा दो कणकणगा दो कणगवितागगा दो कणगसंताणगा दो सोमा दो सहिया दो आसासणा दो कज्जोवगा दो कब्बडगा दो अयकरगा दो दुंदुभगा दो संखा दो संखवन्ना दो संखवन्नाभा दो कंसा दो कंसवन्ना दो कंसवन्नाभा दो रुप्पी दो रुप्पाभासा दो णीला दो णीलोभासा दो भासा दो भासरासी दो तिला दो तिलपुप्फवण्णा दो दगा दो दगपंचवन्ना दो काका दो कक्कंधा दो इंदग्गीवा दो धूमकेऊ दो हरी दो पिंगला दो बुद्धा दो सुक्का दो बहस्सती दो राहू दो अगत्थी

दो माणवगा दो कासा दो फासा दो धुरा दो पमुहा दो वियडा दो विसंधी दो नियल्ला दो पइल्ला दो जडियाइलगा दो अरुणा दो अग्गिल्ला दो काला दो महाकालगा दो सोत्थिया दो सोवत्थिया दो वद्धमाणगा दो पूसमाणगा दो अंकुसा दो पलंबा दो निच्चालोगा दो णिच्चुज्जोता दो सयंपभा दो ओभासा दो सेयंकरा दो खेमंकरा दो आभंकरा दो पभंकरा दो अपराजिता दो अरया दो असोगा दो विगतसोगा दो विमला दो वितत्ता दो वितत्था दो विसाला दो साला दो सुव्वता दो अणियट्टा दो एगजडी दो दुजडी दो करकरिगा दो रायग्गला दो पुप्फकेतू दो भावकेऊ । (सू० ९०)

'जंबुद्दीवे' इत्यादि सूत्रद्वयं, 'पभासिंसु व'त्ति प्रभासितवन्तौ वा प्रकाशनीयमेवं प्रभासयतः प्रभासयिष्यतः, चन्द्रयोश्च सौम्यदीप्तिकत्वात् प्रभासनमात्रमुक्तम्, आदित्ययोश्च खररश्मित्वात्तापितवन्तौ वा एवं तापयतस्तापयिष्यत इति वस्तुनस्तापनमुक्तम्, अनेन कालत्रयप्रकाशनभणनेन सर्वकालं चन्द्रादीनां भावानामस्तित्वमुक्तम्, अत एव चोच्यते—'न कदाचिदनीदृशं जगदि'ति, न वा विद्यमानस्य जगतः कर्त्ता कल्पयितुं युक्तः, अप्रमाणकत्वात्, अथ यत्सन्निवेशविशेषवत् तद्बुद्धिमत्कारणपूर्वकं दृष्टं, यथा घटः, सन्निवेशविशेषवन्तश्च भूभूधरादयः, यश्च बुद्धिमानसावीश्वरो जगत्कर्त्तेति, नैवम्, सन्निवेशविशेषवत्यपि वल्मीके बुद्धिमत्कारणत्वस्यादर्शनादित्यत्र बहु वक्तव्यं तच्च स्थानान्तरादवसेयमिति । द्विसङ्ख्यत्वाच्चन्द्रयोस्तत्परिवारस्यापि द्वित्वमाह—'दो कत्तिए' त्यादिना, 'दो भावकेऊ' इत्येतदवसानेन ग्रन्थेन, सुगमश्चायं, नवरं द्वे कृत्तिके नक्षत्रापेक्षया, न तु तारिकापेक्षयेत्येवं सर्वत्रेति, 'कत्तिए'त्या-



१ नेमे संख्यया तद्दर्शकपाठेन च संवदत इति नाङ्कनीये.

द्विगाथात्रयेण नक्षत्रसंग्रहः, कृत्तिकादीनामष्टाविंशतिनक्षत्राणां क्रमेणाग्न्यादयोऽष्टाविंशतिरेव देवता भवन्ति. आह–च द्वावग्नी १ एवं प्रजापती २ सोमौ ३ रुद्रौ ४ अदिती ५ बृहस्पती ६ सर्पौ ७ पितरौ ८ भगौ ९ अर्यमणौ १० सवितारौ ११ त्वष्टारौ १२ वायू १३ इन्द्राग्नी १४ मित्रौ १५ इन्द्रौ १६ निर्ऋती १७ आपः १८ विश्वौ १९ ब्रह्माणौ २० विष्णू २१ वसू २२ वरुणौ २३ अजौ २४ विवृद्धी २५ ग्रन्थान्तरे अहिर्बुध्नावुक्तौ, पूषणौ २६ अश्विनौ २७, यमाविति २८, ग्रन्थान्तरे पुनरश्विनीत आरभ्यैता एवमुक्ताः, "अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः । योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राख्याः ॥१॥ ऐन्द्रो निर्ऋतिस्तोयं विश्वो ब्रह्मा हरिर्वसुर्वरुणः । अजपादोऽहिर्बुध्नः पूषा चेतीश्वरा भानाम् ॥२॥" अङ्गारकादयोऽष्टाशीतिर्ग्रहाः सूत्रसिद्धाः, केवलमस्मद्दृष्टपुस्तकेषु केषुचिदेव यथोक्तसंख्या संवदतीति सूर्यप्रज्ञप्त्यनुसारेणासाविह संवादनीया, तथाहि तत्सूत्रम्—"तत्थ खलु इमे अट्ठासीई महागहा पन्नत्ता, तंजहा–इंगालए १ वियालए २ लोहियक्खे ३ सणिच्छरे ४ आहुणिए ५ पाहुणिए ६ कणे ७ कणए ८ कणकणए ९ कणवियाणए १० कणसंताणए ११ सोमे १२ सहिए १३ अस्सासणे १४ कज्जोयए १५ कब्बडए १६ अयकरए १७ दुंदुभए १८ संखे १९ संखवण्णे २० संखवन्नाभे २१ कंसे २२ कंसवण्णे २३ कंसवन्नाभे २४ णीले २५ णीलोभासे २६ रुप्पी २७ रुप्पोभासे २८ भासे २९ भासरासी ३० तिले ३१ तिलपुप्फवण्णे ३२ दगे ३३ दगपंचवण्णे ३४ काए ३५ काकंधे ३६ इंदग्गी ३७ धूमकेऊ ३८ हरी ३९ पिंगले ४० बुहे ४१ सुक्के ४२ वहस्सई ४३ राहू ४४ अगत्थी ४५ माणवगे ४६ कासे ४७ फासे ४८ धुरे ४९ पमुहे ५० वियडे ५१ विसंधी ५२ नियल्ले ५३ पयल्ले ५४ जडियाइल्लए ५५ अरुणे ५६ अग्गिल्लए ५७ काले ५८ महाकाले ५९ सोत्थिए ६० सोवत्थिए ६१ वद्धमाणगे ६२ पलंबे ६३ णिच्चालोए ६४ णिच्चुज्जोए ६५ सयंपभे ६६ ओभासे ६७ सेयंकरे ६८ खेमंकरे ६९ आभंकरे

७० पभंकरे ७१ अपराजिए ७२ अरए ७३ असोगे ७४ वीयसोगे ७५ विमले ७६ वियत्ते ७७ वितत्थे ७८ विसाले ७९ साले ८० सुव्वए ८१ अनियट्टी ८२ एगजडी ८३ दुजडी ८४ करकरिए ८५ रायग्गले ८६ पुप्फकेऊ ८७ भावकेऊ ८८, इदं तत्रैव संग्रहणीगाथाभिर्नियन्त्रितं, तथाहि—"इंगालए १ वियालए २, लोहियक्खे ३ सणिच्छरे चेव ४। आहुणिए ५ पाहुणिए ६ कणगसनामा उ पंचेव ११ ॥१॥ सोमे १ सहिए २ आसासणेय ३ कज्जोवए य ४ कब्बडए ५। अयकरए ६ दुंदुहए ७ संखसनामाओ तिन्नेव १० (२१) ॥२॥ तिन्नेव कंसनामा ३ णीला ५ रुप्पी य ७ होंति चत्तारि। भास ९ तिलपुप्फवन्ने ११ [दगे य] दग पण [पंच]वण्णे य १३ काय काकंधे १५ ॥ (२६) ॥३॥ इंदग्गि १ धूमकेऊ २ हरि ३ पिंगलए ४ बुहे य ५ सुक्के य ६। बहस्सइ ७ राहु ८ अगत्थी ९ माणवए १० कास ११ फासे य १२ (४८) ॥४॥ धूरे १ पमुहे २ वियडे ३ विसंधिणियले ५ तहा पयल्ले य ६। जडियाइलए ७ अरुणे ८ अग्गिल ९ काले १० महाकाले ११ (५९) ॥५॥ सोत्थिय १ सोवत्थि य २ वद्धमाणगे ३ तदा पलंबे य ४। निच्चालोए ५ णिच्चुज्जोए ६ सयंपभे ७ चेव ओभासे ८ (६७) ॥६॥ सेयंकर १ खेमंकर २ आभंकर ३ पभंकरे य ४ बोद्धव्वे। अरए ५ विरए य ६ तहा असोग ७ तह वीयसोगे य ८ (७५) ॥७॥ विमल १ वितत्त २ वितत्थे ३ विसाल ४ तह साल ५ सुव्वए ६ चेव। अनियट्टी ७ एगजडी ८ य होइ बिजडी य ९ बोद्धव्वे (८४) ॥८॥ करकरए १ रायग्गल २ बोद्धव्वे पुप्फ ३ भावकेऊ य ४। अट्ठासीई गहा खलु णेयव्वा आणुपुव्वीए ॥९॥" इति।

जम्बूद्वीपाधिकारादेवेदमपरमाह—

जंबुद्दीवस्स णं दीवस्स वेइआ दो गाउयाइं उद्धं उच्चत्तेणं पन्नत्ता। लवणे णं समुद्दे दो जोयणसयसहस्साइं

चक्कवालविक्खंभेणं पन्नत्ते। लवणस्स णं समुद्दस्स वेतिया दो गाउयाइं उद्धं उच्चत्तेणं पन्नत्ता। (सू० ९१) धायइसंडे दीवे पुरच्छिमद्धेणं मंदरस्स पव्वयस्स उत्तरदाहिणेणं दो वासा पन्नत्ता बहुसमतुल्ला जाव भरहे चेव एरवए चेव, एवं जहा जंबुद्दीवे तहा एत्थवि भाणियव्वं जाव दोसु वासेसु मणुया छव्विहंपि कालं पच्चणुभवमाणा विहरंति तं० भरहे चेव एरवते चेव, णवरं कूडसामली चेव धायइरुक्खे चेव, देवा गरुले चेव वेणुदेवे सुदंसणे चेव, धायतीसंडदीवपच्चच्छिमद्धे णं मंदरस्स पव्वयस्स उत्तरदाहिणेणं दो वासा पन्नत्ता बहु० जाव भरहे चेव एरवए चेव जाव छव्विहंपि कालं पच्चणुभवमाणा विहरंति भरहे चेव एरवए चेव, णवरं कूडसामली चेव महाधायतीरुक्खे चेव, देवा गरुले चेव वेणुदेवे पियदंसणे चेव, धायइसंडे णं दीवे दो भरहाइं दो एरवयाइं दो हेमवयाइं दो हेरन्नवयाइं दो हरिवासाइं दो रम्मगवासाइं दो पुव्वविदेहाइं दो अवरविदेहाइं दो देवकुराओ दो देवकुरुमहद्दुमा दो देवकुरुमहद्दुमवासी देवा दो उत्तरकुराओ दो उत्तरकुरुमहद्दुमा दो उत्तरकुरुमहद्दुमवासी देवा दो चुल्लहिमवंता दो महाहिमवंता दो निसहा दो नीलवंता दो रुप्पी दो सिहरी दो सद्दावाती दो सद्दावातवासी साती देवा दो वियडावाती दो वियडावातिवासी पभासा देवा दो गंधावाती दो गंधावातिवासी अरुणा देवा दो मालवंतपरियागा दो मालवंतपरियागावासी पउमा देवा दो मालवंता दो चित्तकूडा दो पम्हकूडा दो नलिणकूडा दो एगसेला दो तिकूडा दो वेसमणकूडा दो अंजणा दो मातंजणा दो सोमणसा दो विज्जुप्पभा दो अंकावती दो पम्हावती दो आसीविसा दो सुहावहा दो चंदपव्वता दो सूरपव्वता दो णागपव्वता दो देवपव्वया दो

गंधमायणा दो उसुगारपव्वया, दो चुल्लहिमवंतकूडा दो वेसमणकूडा दो महाहिमवंतकूडा दो वेरुलियकूडा दो निसहकूडा दो रुयगकूडा दो नीलवंतकूडा दो उवदंसणकूडा दो रुप्पिकूडा दो मणिकंचणकूडा दो सिहरिकूडा दो तिगिच्छिकूडा दो पउमद्दहा दो पउमद्दहवासिणीओ सिरीदेवीओ दो महापउमद्दहा दो महापउमद्दहवासिणीओ हिरीतो देवीओ एवं जाव दो पुंडरीयद्दहा दो पोंडरीयद्दहवासिणीओ लच्छीदेवीओ, दो गंगाप्पवायद्दहा जाव दो रत्तवतिपवातद्दहा दो रोहियाओ जाव दो रुप्पकूलातो दो गाहावतीओ दो दहवतीओ दो पंकवतीओ दो तत्तजलाओ दो मत्तजलाओ दो उम्मत्तजलाओ दो खीरोयाओ दो सीहसोताओ दो अंतोवाहिणीओ दो उम्मिमालिणीओ दो फेणमालिणीओ दो गंभीरमालिणीओ दो कच्छा दो सुकच्छा दो महाकच्छा दो कच्छगावती दो आवत्ता दो मंगलावत्ता दो पुक्खला दो पुक्खलावई दो वच्छा दो सुवच्छा दो महावच्छा दो वच्छगावती दो रम्मा दो रम्मगा दो रमणिज्जा दो मंगलावती दो पम्हा दो सुपम्हा दो महपम्हा दो पम्हगावती दो संखा दो णलिणा दो कुमुया दो स(ण)लिला(णा)वती दो वप्पा दो सुवप्पा दो महावप्पा दो वप्पगावती दो वग्गू दो सुवग्गू दो गंधिला दो गंधिलावती (३२) दो खेमाओ दो खेमपुरीओ दो रिट्ठाओ दो रिट्ठपुरीओ दो खग्गीतो दो मंजुसाओ दो ओसधीओ दो पोंडरिगिणीओ दो सुसीमाओ दो कुंडलाओ दो अपराजियाओ दो पभंकराओ दो अंकावईओ दो पम्हावईओ दो सुभाओ दो रयणसंचयाओ दो आसपुराओ दो सीहपुराओ दो महापुराओ दो विजयपुराओ दो अपराजिताओ दो अवराओ दो असोयाओ दो विगयसोगाओ दो विजयातो दो वेजयंतीओ दो जयंतीओ दो अप-

राजियाओ दो चक्कपुराओ दो खग्गपुराओ दो अवज्झाओ दो अउज्झाओ ३२ दो भद्दसालवणा दो णंदणवणा दो सोमणसवणा दो पंडगवणाइं दो पंडुकंबलसिलाओ दो अतिपंडुकंबलसिलाओ दो रत्तकंबलसिलाओ दो अइरत्तकंबलसिलाओ दो मंदरा दो मंदरचूलिताओ, धायतिसंडस्स णं दीवस्स वेदिया दो गाउयाइं उद्धमुच्चत्तेणं पन्नत्ता। (सू० ९२) कालोदस्स णं समुद्दस्स वेइया दो गाउयाइं उड्ढं उच्चत्तेणं पन्नत्ता। पुक्खरवरदीवड्ढपुरच्छिमद्धेणं मंदरस्स पव्वयस्स उत्तरदाहिणेणं दो वासा पं० बहुसमतुल्ला जाव भरहे चेव एरवए चेव तहेव जाव दो कुराओ पं० देवकुरा चेव उत्तरकुरा चेव, तत्थ णं दो महतिमहालता महद्दुमा पं० तं०—कूडसामली चेव पउमरुक्खे चेव, देवा गरुले चेव वेणुदेवे पउमे चेव, जाव छव्विहंपि कालं पच्चणुभवमाणा विहरंति। पुक्खरवरदीवड्ढपच्चच्छिमद्धे णं मंदरस्स पव्वयस्स उत्तरदाहिणेणं दो वासा पं० तं०—तहेव णाणत्तं कूडसामली चेव महापउमरुक्खे चेव, देवा गरुले चेव वेणुदेवे पुंडरीए चेव, पुक्खरवरदीवड्ढे णं दीवे दो भरहाइं दो एरवयाइं जाव दो मंदरा दो मंदरचूलियाओ, पुक्खरवरस्स णं दीवस्स वेइया दो गाउयाइं उड्ढमुच्चत्तेणं पन्नत्ता, सव्वेसिंपि णं दीवसमुद्दाणं वेदिगाओ दो गाउयाइं उड्ढमुच्चत्तेणं पण्णत्ताओ (सू० ९३)

'जंबू' इत्यादि कंठ्यं, नवरं, वज्रमय्याः अष्टयोजनोच्छ्रायायाश्चतुर्द्वादशोपर्यधोविस्तृताया जम्बूद्वीपनगरप्राकारकल्पाया जगत्या द्विगव्यूतोच्छ्रितेन पञ्चधनुःशतविस्तृतेन नानारत्नमयेन जालकटकेन परिक्षिप्ताया उपरि वेदिकेति पद्मवरवेदिकेत्यर्थः, पञ्चधनुःशतविस्तीर्णा गवाक्षहेमकिङ्किणीघण्टायुक्ता देवानामासनशयनमोहनविविधक्रीडास्थानमुभयतो वनखण्डवतीति॥ जम्बूद्वीपवक्तव्यतानन्तरं

तदनन्तरत्वादेव लवणसमुद्रवक्तव्यतामाह— 'लवणे ण'मित्यादि कण्ठ्यम्, नवरम्, चक्रवालस्य—मण्डलस्य विष्कम्भः—पृथुत्वं चक्रवालविष्कम्भस्तेनेति, समुद्रवेदिकासूत्रं जम्बूद्वीपवेदिकासूत्रवद्वाच्यमिति। क्षेत्रप्रस्तावाल्लवणसमुद्रवक्तव्यतानन्तरं धातकीखण्डवक्तव्यतां 'धायइ संडे दीवे' इत्यादिना वेदिकासूत्रान्तेन ग्रन्थेनाह—कण्ठ्यश्चायम्, नवरं धातकीखण्डप्रकरणमपि जम्बूद्वीपलवणसमुद्रमध्यं वलयाकृतिं धातकीखण्डमालिख्य हिमवदादिवर्षधरान् जम्बूद्वीपानुसारेणैवोभयतः पूर्वापरविभागेन भरतहैमवतादिवर्षाणि च व्यवस्थाप्य पूर्वापरदिशोर्वलयविष्कम्भमध्ये मेरुं च कल्पयित्वाऽवबोद्धव्यम्। अनेनैव च क्रमेण पुष्करवरद्वीपार्द्धप्रकरणमपीति। तत्र धातकीनां—वृक्षविशेषाणां खण्डो वनसमूह इत्यर्थो धातकीखण्डस्तद्युक्तो यो द्वीपः स धातकीखण्ड एवोच्यते, यथा दण्डयोगाद्दण्ड इति, धातकीखण्डश्चासौ द्वीपश्चेति धातकीखण्डद्वीपस्तस्य 'पुरच्छिमं'ति पौरस्त्यं पूर्वमित्यर्थो यदर्द्धं—विभागस्तद्धातकीखण्डद्वीपपौरस्त्यार्द्धं, पूर्वापरार्द्धता च लवणसमुद्रवेदिकातो दक्षिणत उत्तरतश्च धातकीखण्डवेदिकां यावद् गताभ्यामिषुकारपर्वताभ्यां धातकीखण्डस्य विभक्तत्वादिति, उक्तं च—"पंचसयजोयणुच्चा सहस्समेगं च होंति विच्छिन्ना। कालोययलवणजले पुट्ठा ते दाहिणुत्तरओ ॥१॥ दो इसुयारनगवरा धायइसंडस्स मज्झयारठिया। तेहि दुहा णिद्दिस्सइ पुव्वद्धं पच्छिमद्धं च ॥२॥" इति, तत्र णमिति वाक्यालङ्कारे, 'मन्दरस्य' मेरोरित्येवं धातकीखण्डपूर्वार्द्धपश्चिमार्द्धप्रकरणे प्रत्येकमेकोनसप्ततिसूत्रप्रमाणे जम्बूद्वीपप्रकरणवदध्येतव्ये व्याख्येये च, अत एवाह—'एवं जहा जंबुद्दीवे तहे'त्यादि, नवरं वर्षधरादिस्वरूपमायामादिसमता चैवं भावनीया—"पुव्वद्धस्स य मज्झे

१ पंचशतयोजनोच्चौ सहस्रमेकं च भवतो विस्तीर्णौ। कालोदकलवणजले स्पृष्टौ तौ दक्षिणोत्तरयोः ॥१॥ द्वौ इषुकारौ नगवरौ धातकीखंडस्य मध्ये स्थितौ। ताभ्यां द्विधा निर्दिश्यते पूर्वार्धं पश्चिमार्धं च ॥२॥ २ पूर्वार्धस्य च मध्ये

मेरू नस्स पुण दाहिणुत्तरओ । वासाइं तिन्नि तिन्निवि विदेहवासं च मज्झंमि ॥१॥ अरविवरसंठियाइं चउरो लक्खाइं ताइं खेत्ताइं (सीमंनगा)। अंतो संखिनाइं रुंदतराइं कमेण पुणो ॥२॥ भरहे मुहविक्खंभो छावट्ठिसयाइं चोद्दसहियाइं । अउणत्तीसं च सयं बारसहियदुसयभागाणं ॥३॥ ६६१४ $\frac{129}{212}$ । अट्ठारस य सहस्सा पंचेव सया हवंति सीयाला । पणपण्णं अंससयं बाहिरओ भरहविक्खंभो ॥४॥ १८५४७ $\frac{155}{212}$ । चउगुणिय भरहवासो [ व्यास इत्यर्थः ] हेमवए तं चउग्गुणं तइयं [ हरिवर्षमित्यर्थः ] । हरिवासं चउगुणितं महाविदेहस्स विक्खंभो ॥५॥ जह विक्खंभा दाहिणदिसाए तह उत्तरेऽवि वासतिए । जह पुव्वद्धे सत्त उ तह अवरद्धेऽवि वासाइं ॥६॥ सत्ताणउई सहस्सा सत्ताणउयाइं अट्ठ य सयाइं । तिन्नेव य लक्खाइं कुरूण भागा य बाणउई ॥७॥ [ विष्कम्भ इति ] ३९७८९७ $\frac{92}{212}$ । अउवण्णसयं तेवीस सहस्सा दो य लक्ख जीवाओ । दोण्ह गिरीणायामो संखित्तो तं धणू कुरूणं ॥८॥ वासहरगिरी १२ वक्खारपव्वया ३२ पुव्वपच्छिमद्धेसु । जंबुद्दीवगदुगुणा वित्थरओ उस्सए तुल्ला ॥९॥ कंचणगजमगसुरकुरुनगा य वेयड्ढ

१ मेरुः पुनस्तस्य दक्षिणोत्तरतः । वर्षाणि त्रीणि त्रीण्यपि विदेहवर्षं च मध्यभागे ॥१॥ अरनिवरसंस्थितानि चत्वारो लक्षा क्षेत्राणि तानि (सीमनगा)। अन्तः संक्षिप्तानि विस्तृतानि क्रमेण पुनः ॥२॥ भरते मुखविष्कंभः षट्षष्टिशतानि चतुर्दशाधिकानि । एकोनत्रिंशच्च शतं द्वादशाधिकद्विशतभागानां ॥३॥ अष्टादश सहस्राणि पंचैव च शतानि भवति सप्तचत्वारिंशदधिकानि । पंचपंचाशदधिकं अंशशतं बाह्यतो भरतविष्कम्भः ॥४॥ चतुर्गुणितो भरतव्यासो हैमवति तच्चतुर्गुणं तृतीयं । हरिवर्षचतुर्गुणो महाविदेहस्य विष्कम्भः ॥५॥ यथा विष्कम्भो दक्षिणस्यां दिशि तथोत्तरस्यामपि त्रिके । यथा पूर्वार्धे सप्तैव तथाऽपरार्धेऽपि वर्षाणि ॥६॥ सप्तनवतिः सहस्राणि सप्तनवत्यधिकाष्टशतानि । त्रय एव च लक्षाः कुरूणां द्विनवतिश्च भागाः ॥७॥ अष्टपंचाशदधिकं शतं त्रयोविंशतिसहस्राणि द्वे लक्षे जीवा तु । द्वयोर्गिर्योरायामः कुरूणां तत्संक्षिप्तं धनुः ॥८॥

वट्टदीहा य। विक्खंभोव्वेहसमुस्सएण जह जंबुदीविच्चा ॥१०॥ लक्खाइं तिन्नि दीहा विज्जुप्पभगंधमादणा दो वि। छप्पन्नं च सहस्सा दोन्नि सया सत्तवीसा य ॥११॥ अउणट्ठा दोन्नि सया उणसत्तरि सहस्स पंचलक्खा य। सोमणस मालवंता दीहा रुंदा दस सयाइं ॥१२॥ सव्वाओऽवि णईओ विक्खंभोव्वेहदुगुणमाणाओ। सीयासीयोयाणं वणाणि दुगुणाणि विक्खंभो ॥१३॥" [ विस्तरतो वनमुखानीत्यर्थः ] "वासहरकुरुसु दहा [ वर्षधरेषु कुरुषु च ये ह्रदा इत्यर्थः ] नदीण कुंडाइं तेसु जे दीवा। उव्वेहुस्सयतुल्ला विक्खंभायामओ दुगुणा ॥१४॥" [ जम्बूद्वीपकापेक्षयेति ] कियद्दूरं जम्बूद्वीपप्रकरणं धातकीखण्डपूर्वार्द्धाभिलापेन वाच्यमित्याह—'जाव दोसु वासेसु मणुए'त्यादि, एतस्माद्धि सूत्रात् परतो जम्बूद्वीपप्रकरणे चन्द्रादिज्योतिषां सूत्राण्यधीतानि तानि च धातकीखण्डपुष्करार्द्धपूर्वार्द्धादिप्रकरणेषु न सम्भवन्ति, द्विस्थानकत्वाद् अस्याध्ययनस्य, धातकीखण्डादौ च चन्द्रादीनां बहुत्वादिति, आह च—"[1]दो चंदा इह दीवे चत्तारि य सायरे लवणतोए। धायइसंडे दीवे बारस चंदा य सूरा य ॥१॥" इति चन्द्राणामद्वि-

---

वर्षधरगिरिवक्षस्कारपर्वताः पूर्वार्द्धपश्चिमार्द्धयोः। जंबुद्वीपद्विगुणा विस्तरत उच्छ्रयेन तुल्याः ॥९॥ कांचनयमकदेवकुरुनगाश्च वृत्तदीर्घवैताढयाश्च। विष्कंभोद्वेधसमुच्छ्रयैर्यथा जंबुद्वीपगताः ॥१०॥ लक्षान् दीर्घौ त्रीन् विद्युत्प्रभगंधमादनौ द्वावपि। षटंपचाशत्सहस्राणि सप्तविंशत्यधिके द्वे शते ॥११॥ एकोनषष्ट्यधिके द्वे शते एकोनसप्ततिः सहस्राणि पंच लक्षाश्च। सौमनसमाल्यवंतौ दीर्घौ रुंदौ दश शतानि ॥ १२ ॥ सर्वा अपि नद्यो विष्कंभोद्वेधद्विगुणमानाः। सीतासीतोदयोः वनमुखानि द्विगुणानि विस्तरतः ॥ १३ ॥ वषधरकुरुषु ह्रदा नदीनां कुंडानि तेषु ये द्वीपाः। उद्वेधोच्छ्रयाभ्यां तुल्याः विष्कंभायामतो द्विगुणाः ॥ १४ ॥

१ द्वौ चंद्राविह द्वीपे चत्वारश्च सागरे लवणतोये। धातकीखंडे द्वीपे द्वादश चंद्राश्च सूर्याश्च ॥१॥

न्येन नक्षत्रादीनामपि द्वित्वं न स्यात् ततो द्विस्थानकेऽनवतार इति । जम्बूद्वीपप्रकरणादस्य विशेषं दर्शयन्नाह—णवरमित्यादि, नवरं केवलमयं विशेष इत्यर्थः, कुलसूत्रानन्तरं तत्र 'कूडसामली चेव जंबू चेव सुदंसणे'ति उक्तमिह तु जम्बूस्थाने 'धायइरुक्खे चेव'त्ति वक्तव्यम्, प्रमाणं च तयोर्जम्बूद्वीपकशालमल्यादिवत्, तयोरेव देवसूत्रे 'अणाढिए चेव जंबुद्दीवाहिवई' त्यत्र वक्तव्ये 'सुदंसेण चेव'त्तीह वक्तव्यमिति। 'धायइसंडे दीवे'इत्यादि पश्चिमार्द्धप्रकरणं पूर्वार्द्धवदनुसर्त्तव्यम्, अत एवाह— 'जाव छव्विहंपि काल'मित्यादि, विशेषमाह—'णवरं कूडसामली'त्यादि, धातकीखण्डपूर्वार्द्धोत्तरकुरुषु धातकीवृक्ष उक्त इह तु महाधातकीवृक्षोऽध्येतव्यः, देवसूत्रे द्वितीयः सुदर्शनस्तत्राधीतः इह तु प्रियदर्शनोऽध्येतव्य इति, पूर्वार्द्धपश्चिमार्द्धमीलनेन धातकीखण्डद्वीपं सम्पूर्णमाश्रित्य द्विस्थानकं 'धायइसंडे ण'मित्यादिनाऽऽह–द्वे भरते पूर्वार्द्धपश्चार्द्धयोर्यद्दक्षिणदिग्भागे तयोर्भावादित्येवं सर्वत्र, भरतादीनां स्वरूपं प्रागुक्तम्, 'दो देवकुरुमहादुमे'ति द्वौ कूटशाल्मलीवृक्षावित्यर्थः द्वौ तद्वासिदेवौ वेणुदेवावित्यर्थः, 'दो उत्तरकुरुमहादुमे'ति धातकीवृक्षमहाधातकीवृक्षाविति, तद्देवौ सुदर्शनप्रियदर्शनाविति, चुल्लहिमवदादयः षड् वर्षधरपर्वताः शब्दापातिविकटापातिगन्धापातिमालवत्पर्यायाख्यवृत्तवैताढ्याश्च तन्निवासिस्वातिप्रभासारुणपद्मनाभदेवानां द्वयेन द्वयेन सहिताः क्रमेण द्वौ द्वावुक्तौ, 'दो मालवंत'त्ति मालवन्तावुत्तरकुरुतः पूर्वदिग्वर्त्तिनौ गजदन्तकौ स्तः, ततो भद्रशालवनतद्वेदिकाविजयेभ्यः परौ शीतोत्तरकूलवर्त्तिनौ दक्षिणोत्तरायतौ चित्रकूटौ वक्षस्कारपर्वतौ. ततो विजयेनान्तरनद्या विजयेन चान्तरितावन्यौ तथैवान्यौ पुनस्तथैवान्याविति पुनः पूर्ववनमुखवेदिकाविजयाभ्यामर्वाक् शीतादक्षिणकूलवर्त्तीनि तथैव त्रिकूटादीनां चत्वारि द्वयानि, ततः सौमनसौ देवकुरुपूर्वदिग्वर्त्तिनौ गजदन्तकौ, ततो गजदन्तकावेव देवकुरुप्रत्यग्भागवर्त्तिनौ विद्युत्प्रभौ, ततो भद्रशालवनतद्वेदिकाविजयेभ्यः परतः तथैवाङ्काव-

त्यादीनां चत्वारि द्वयानि शीतोदादक्षिणकूलवर्त्तीनि, पुनरन्यानि पश्चिमवनमुखवेदिकान्त्यविजयाभ्यां पूर्वतः क्रमेण तथैव चन्द्रपर्वतादीनां चत्वारि द्वयानि, ततो गन्धमादनावुत्तरकुरुपश्चिमभागवर्त्तिनौ गजदन्तकाविति, एते धातकीखण्डस्य पूर्वार्द्धे पश्चिमार्द्धे च भवन्तीति द्वौ द्वावुक्ताविति, इषुकारौ दक्षिणोत्तरयोर्दिशोर्धातकीखण्डविभागकारिणाविति, 'दो चुल्लहिमवंतकूडा' इत्यादि, हिमवदादयः षड् वर्षधरपर्वताः तेषु ये द्वे द्वे कूटे जम्बूद्वीपप्रकरणे अभिहिते ते पर्वतानां द्विगुणत्वाद् एकैकशो द्वे द्वे स्यातामिति, वर्षधराणां द्विगुणत्वात् पद्मादिह्रदा अपि द्विगुणास्तद्देव्योऽप्येवमिति। चतुर्दशानां गङ्गादिमहानदीनां पूर्वपश्चिमार्द्धापेक्षया द्विगुणत्वात् तत्प्रपातह्रदा अपि द्वौ द्वौ स्युरित्याह—'दो गंगापवायद्दहे'त्यादि, 'दो रोहियाओ' इत्यादौ नद्यधिकारे गङ्गादीनां सदपि द्वित्वं नोक्तं, जम्बूद्वीपप्रकरणोक्तस्य—"महाहिमवंताओ वासहरपव्वयाओ महापउमद्दहाओ दो महानदीओ पवहंती"त्यादिसूत्रक्रमस्याश्रयणात्, तत्र हि रोहिदादय एवाष्टौ श्रूयन्त इति, चित्रकूटपद्मकूटवक्षस्कारपर्वतयोरन्तरे नीलवद्वर्षधरपर्वतनितम्बव्यवस्थिताद् ग्राहवतीकुण्डाद्दक्षिणतोरणविनिर्गताऽष्टाविंशतिनदीसहस्रपरिवारा शीताभिगामिनी सुकच्छमहाकच्छविजययोर्विभागकारिणी ग्राहवती नदी, एवं यथायोगं द्वयोर्द्वयोः सवक्षस्कारपर्वतयोर्विजययोरन्तरे क्रमेण प्रदक्षिणया द्वादशाप्यन्तरनद्यो योज्याः, तद्द्वित्वं च पूर्ववदिति, पङ्कवतीत्यत्र वेगवतीति ग्रन्थान्तरे दृश्यते, क्षारोदेत्यत्र क्षीरोदेत्यन्यत्र, सिंहश्रोता इत्यत्र सीतश्रोता इत्यपरत्र, फेनमालिनी गम्भीरमालिनी चेतीह व्यत्ययश्च दृश्यते इति, माल्यवद्गजदन्तकभद्रशालवनाभ्यामारभ्य कच्छादीनि द्वात्रिंशद्विजयक्षेत्रयुगलानि प्रदक्षिणतोऽवगन्तव्यानीति, तथा कच्छादिषु क्रमेण क्षेमादिपुरीणां युगलानि द्वात्रिंशदवगन्तव्यानीति, भद्रशालादीनि मेरौ चत्वारि वनानि—"[1]भूमीए भद्दसालं

१ भूमौ भद्रशालं मेखलायुगले द्वे रम्ये। नन्दनसौमनसे पाण्डुकपरिमण्डितं शिखरम् ॥१॥

मेरुजुगलंमि दोन्नि रम्माइं। नंदणसोमणसाइं पंडगपरिमंडियं सिहरं ॥१॥" इति वचनात्, मेर्वोर्द्वित्वे च वनानां द्वित्वमिति, शिला-शतमो मेरौ पण्डकवनमध्ये चूलिकायाः क्रमेण पूर्वादिषु, अत्र गाथे—"पंडगवणम्मि चउरो सिलाउ चउसुवि दिसासु चूलाए। चउजोयणउस्सियाओ सव्वज्जुणकंचणमयाओ ॥१॥ पंचसयायामाओ मज्झे दीहत्तणद्धरुंदाओ। चंदद्धसंठियाओ कुमुओयरहारगो-राओ ॥२॥" इति, मन्दरे-मेरौ मेरुचूलिका-शिखरविशेषः, सरूपमस्याः—"मेरुस्स[3] उवरि चूला जिणभवणविहूसिया दुवी(४०)-सुचा। बारस अट्ठ य चउरो मूले मज्झुवरि रुंदा य ॥१॥ इति, वेदिकासूत्रं जम्बूद्वीपवत्, धातकीखण्डानन्तरं कालोदसमुद्रो भवतीति तद्वक्तव्यतामाह-'कालोदे'त्यादि कण्ठ्यम्, कालोदानन्तरमनन्तरत्वादेव पुष्करवरद्वीपस्य पूर्वार्द्धपश्चार्द्धतदुभयप्रकरणान्याह-पुक्ख-रे'त्यादि, त्रीण्यप्यतिदेशप्रधानानि, अतिदेशलभ्यश्चार्थः सुगम एव, नवरं पूर्वार्द्धापरार्द्धता धातकीखण्डवदिषुकाराभ्यामवगन्तव्या, भरतादीनां चायामादिगमतेदं भावनीया—"इगुयालीस सहस्सा पंचेव सया हवंति उणसीया। तेवत्तरमंससयं मुहविक्खंभो भरहवासे ४१५७९ 173/212 ॥२॥" पन्नट्ठि महस्साइं चत्तारि सया हवंति छायाला। तेरस चेव य अंसा बाहिरो भरहविक्खंभो ६५४४६ 13/212 ॥३॥" चउगुणिय भरहवासो [विस्तर इत्यर्थः] हेमवए तं चउग्गुणं तइयं [हरिवर्षमित्यर्थः]। हरिवासं चउगुणियं महाविदेहस्स वि-

१ पाण्डुकवने चतस्रः शिलाश्चतसृष्वपि दिक्षु चूलायाः। चतुर्योजनोच्छ्रिताः सर्वार्जुनकाञ्चनमय्यः ॥१॥ पञ्चशतायामा मध्ये दीर्घत्वार्धपृथुलाः। अर्धचन्द्रसंस्थिताः कुमुदोदरहारगौराः ॥२॥ २ कुम्मो०। कुसुमोय०। ३ मेरोरुपरि चूला जिनभवनभूषिता चत्वारिंशत् उच्चा। द्वादशाष्ट च चत्वारि मूले मध्ये उपरि विस्तीर्णा च ॥१॥ ४ एकचत्वारिंशत्सहस्राणि पञ्चैव शतानि भवन्त्येकोनाशीत्यधिकानि त्रिसप्तत्यधिकशतमंशाना मुखविष्कंभो भरते ॥१॥ पञ्चषष्टिसहस्राणि चत्वारि शतानि भवंति षट्चत्वारिंशदधिकानि। त्रयोदश एवांशा बाह्यो भरतविष्कम्भः ॥३॥ चतुर्गुणितभरतव्यासो हैमवते

क्खंभो ॥४॥" एवमैरवतादीनि मन्तव्यानि "सत्तत्तरिं सयाइं चोद्दस अहियाइं सत्तरस लक्खा। होइ कुरूविक्खंभो अट्ठ य भागा अपरिसेसा १७०७७१४२८/१२ ॥५॥" "चत्तारि लक्ख छत्तीस सहस्सा नव सया य सोलहिया। [एषा कुरुजीवा]। ४३६९१६ दोण्ह गिरीणायामो संखित्तो तं धणू कुरूणं ॥६॥ सोमणसमालवंता दीहा वीसं भवे सयसहस्सा ॥ तेयालीस सहस्सा अउणावीसा य दोन्नि सया ॥७॥ २०४३२१९ ॥ "सोलहियं सयमेगं छव्वीससहस्स सोलस य लक्खा। विज्जुप्पभो नगो गंधमायणा चेव दीहाओ ॥८॥" १६२६११६, महाद्रुमा जंबूद्वीपकमहाद्रुमतुल्याः, तथा—"धायइवरंमि दीवे जो विक्खंभो उ होइ उ णगाणं। सो दुगुणो णायव्वो पुक्खरद्धे णगाणं तु ॥९॥ वासहरा वक्खारा दहनइकुंडा वणा य सीयाई। दीवे दीवे दुगुणा वित्थरओ उस्सए तुल्ला ॥१०॥ उसुयार जमगकंचण चित्तविचित्ता य वट्टवेयड्ढा। दीवे दीवे तुल्ला दुमेहला जे य वेयड्ढा ॥११॥" इति। पुष्करवरद्वीपवेदिकाप्ररूपणानन्तरं शेषद्वीपसमुद्रवेदिकाप्ररूपणामाह—'सव्वेसिंपि ण'मित्यादि कण्ठ्यं।

---

तच्चतुर्गुणं तृतीय हरिवर्षं चतुर्गुणितं महाविदेहस्य विष्कम्भः ॥४॥ सप्तसप्ततिः शतानि चतुर्दशाधिकानि सप्तदश लक्षा भवति कुरुविष्कम्भः अष्टौ च भागा अपरिशेषाः ॥५॥ चतुर्लक्षषट्त्रिंशत्सहस्रषोडशाधिकनवशतानि द्वयोर्गिर्योरायामः तद्धनुः कुरूणां संक्षिप्तं ॥६॥ सौमनसमाल्यवंतौ दीर्घौ त्रिंशतिः भवतः शतसहस्राणि। त्रिचत्वारिंशत्सहस्राणि एकोनविंशत्यधिके द्वे शते ॥७॥ षोडशाधिकं शतं षड्विंशतिसहस्राणि षोडश च लक्षा। विद्युत्प्रभो नगो गन्धमादनश्चैव दीर्घौ ॥८॥ धातकीवरे द्वीपे यो विष्कम्भस्तु भवति तु नगानां। स द्विगुणो ज्ञातव्यः पुष्करार्धे नगानान्तु ॥९॥ वर्षधरा वक्षस्काराः ह्रदनदीकुंडानि वनानि च सीतादयः। द्वीपे द्वीपे द्विगुणा विस्तरत उच्छ्रयेण तुल्याः ॥१०॥ इषुकारयमककाञ्चनचित्रविचित्राश्च वृत्तवैताढ्याः द्वीपे द्वीपे तुल्या द्विमेखला ये च वैताढ्याः ॥११॥

एते च द्वीपसमुद्रा इन्द्राणामुत्पातपर्वताश्रया इतीन्द्रवक्तव्यतामाह—

दो असुरकुमारिंदा पन्नत्ता, तं०—चमरे चेव बली चेव, दो णागकुमारिंदा पण्णत्ता, तं०—धरणे चेव भूयाणंदे चेव २, दो सुवन्नकुमारिंदा पं० तं०—वेणुदेवे चेव वेणुदाली चेव, दो विज्जुकुमारिंदा पं० तं०—हरिचेव हरिस्सहे चेव, दो अग्गिकुमारिंदा पन्नत्ता तं०—अग्गिसिहे चेव अग्गिमाणवे चेव, दो दीवकुमारिंदा पं० तं०—पुन्न चेव विसिट्ठे चेव, दो उदहिकुमारिंदा पं० तं०—जलकंते चेव जलप्पभे चेव, दो दिसाकुमारिंदा पं० तं०—अमियगती चेव अमितवाहणे चेव, दो वातकुरिंदा पं० तं०—वेलंबे चेव पभंजणे चेव, दो थणियकुमारिंदा पण्णत्ता, तं०—घोसे चेव महाघोसे चेव, दो पिसाइंदा पन्नत्ता—तं०—काले चेव महाकाले चेव, दो भूइंदा पं० तं०—सुरूवे चेव पडिरूवे चेव, दो जक्खिंदा पन्नत्ता, तं०—पुन्नभद्दे चेव माणिभद्दे चेव, दो रक्खसिंदा पन्नत्ता, तं०—भीमे चेव महाभीमे चेव, दो किन्नरिंदा पन्नत्ता, तं—किन्नरे चेव किंपुरिसे चेव, दो किंपुरिसिंदा पं० तं०—सप्पुरिसे चेव महापुरिसे चेव, दो महोरगिंदा पं० तं०—अतिकाए चेव महाकाए चेव, दो गंधव्विंदा पं०, तं—गीतरती चेव गीयजसे चेव, दो अणपन्निंदा पं०, तं०—संनिहिए चेव सामण्णे चेव, दो पणपन्निंदा पं०, तं०—धाए चेव विहाए चेव, दो इसिवाइंदा पं०, तं०—इसिचेव इसिवालए चेव, दो भूतवाइंदा पन्नत्ता, तं०—इस्सरे चेव महिस्सरे चेव, दो कंदिंदा पं० तं०—सुवच्छे चेव विसाले चेव, दो महाकंदिंदा पन्नत्ता, तं०—हस्से चेव हस्सरती चेव, दो कुभंडिंदा पं० तं०—सेए चेव महासेए चेव, दो पतइंदा पं० तं०—पतए चेव पतयवई चेव, जोइसियाणं देवाणं दो इंदा पन्नत्ता

तं०—चंदे चेव सूरे चेव, सोहम्मीसाणेसु णं कप्पेसु दो इंदा पं०, तं०—सक्के चेव ईसाणे चेव, एवं सणंकुमार-माहिंदेसु कप्पेसु दो इंदा पं०, तं०—सणंकुमारे चेव माहिंदे चेव, बंभलोगलंतएसु णं कप्पेसु दो इंदा पं० तं०—बंभे चेव लंतए चेव, महासुक्कसहस्सारेसु णं कप्पेसु दो इंदा पन्नत्ता, तं०—महासुक्के चेव सहस्सारे चेव, आणयपाणतारणच्चुतेसु णं कप्पेसु दो इंदा पं० तं०—पाणते चेव अच्चुते चेव, महासुक्कसहस्सारेसु णं कप्पेसु विमाणा दुवण्णा पं०, तं०—हालिद्दा चेव सुक्किल्ला चेव, गेविज्जगाणं देवाणं दो रयणीओ उड्ढमुच्चत्तेणं पन्नत्ता (सू० ९४) द्वीतीयस्थाने तृतीयोद्देशकः समाप्तः। २–३।

असुरादीनां दशानां भवनपतिनिकायानां मेर्वपेक्षया दक्षिणोत्तरदिग्द्वयाश्रितत्वेन द्विविधत्वाद् विंशतिरिन्द्राः, तत्र चमरो दाक्षिणात्यो बली त्वौदीच्य इत्येवं सर्वत्र, एवं व्यन्तराणामष्टनिकायानां द्विगुणत्वात् षोडशेन्द्राः, तथा अणपण्णिकादीनामप्यष्टानामेव व्यन्तरविशेषरूपनिकायानां द्विगुणत्वात् षोडशेति ज्योतिष्कानां त्वसङ्ख्यातचन्द्रसूर्यत्वेऽपि जातिमात्राश्रयणाद् द्वावेव चन्द्रसूर्याख्या-विन्द्रावुक्तौ, सौधर्मादिकल्पानां तु दशेन्द्रा इत्येवं सर्वेऽपि चतुःषष्टिरिति। देवाधिकारात् तन्निवासभूतविमानवक्तव्यतामाह—'महासुक्के'त्यादि कण्ठ्यं, नवरं हारिद्राणि–पीतानि, क्रमश्चायं सौधर्मादिविमानवर्णविषयो यथा–सौधर्मेशानयोः पञ्चवर्णानि ततो द्वयोरकृष्णानि पुनर्द्वयोरकृष्णनीलानि ततो द्वयोः शुक्रसहस्राराभिधानयोः पीतशुक्लानि ततः शुक्लान्येवेति, आह च—"सोहम्मे पंचवन्ना एक्कगहाणी उ जा सहस्सारो। दो दो तुल्ला कप्पा तेण परं पुंडरीयाइं ॥१॥" इति। देवाधिकारादेव द्विस्थानकानुपातिनीं तदवगाहनामाह—'गेवेज्जगाण'मित्यादि, पूर्ववद् व्याख्येयमिति। द्विस्थानकस्य तृतीयोद्देशकः समाप्तः॥

उक्तस्तृतीयोद्देशकः, साम्प्रतं चतुर्थः समारभ्यते–अस्य च जीवाजीववक्तव्यताप्रतिबद्धस्य पूर्वेण सहायं सम्बन्धः–पूर्वस्मिन् हि पुद्गलजीवधर्मा उक्ताः इह तु सर्वं जीवाजीवात्मकमिति वाच्यम्, अनेन सम्बन्धेनायातस्यास्योद्देशकस्येमानि पञ्चविंशतिरादि- सूत्राणि समयेत्यादीनि,

समयाति वा आवलियाति वा जीवाति या अजीवाति या पवुच्चति १, आणापाणूति वा थोवेति वा जीवाति या अजीवाति या पवुच्चति २, खणाति वा लवाति वा जीवाति या अजीवाति या पवुच्चति ३, एवं मुहुत्ताति वा अहोरत्ताति वा ४, पक्खाति वा मासाति वा ५, उडूति वा अयणाति वा ६, संवच्छराति वा जुगाति वा ७, वाससयाति वा वाससहस्साइ वा ८, वाससतसहस्साइ वा वासकोडीइ वा ९, पुव्वंगाति वा पुव्वाति वा १०, तुडियंगाति वा तुडियाति वा ११, अडडंगाति वा अडडाति वा १२, अववंगाति वा अववाति वा १३, हूहूअं- गाति वा हूहूयाति वा १४, उप्पलंगाति वा उप्पलाति वा १५, पउमंगाइ वा पउमाति वा १६, णलिणंगाति वा णलिणाति वा १७, अच्छणिकुरंगाति वा अच्छणिउराति वा १८, अउअंगाति वा अउआति वा १९, णउअंगाति वा णउआति वा २०, पउतंगाति वा पउताति वा २१, चूलितंगाति वा चूलिताति वा २२, सीसपहेलियंगाति वा सीसपहेलियाति वा २३, पलिओवमाति वा सागरोवमाति वा २४, उस्सप्पिणीति वा ओसप्पिणीति वा जीवाति या अजीवाति या पवुच्चति २५। गामाति वा णगराति वा निगमाति वा रायहाणीति वा खेडाति वा कब्बडाति वा मडंबाति वा दोणमुहाति वा पट्टणाति वा आगराति वा आसमाति वा संवाहाति वा संनिवेसाइ वा घोसाइ

वा आरामाइ वा उज्जाणाति वा वणाति वा वणसंडाति वा वावीइ वा पुक्खरणीति वा सराति वा सरपंतीति वा अगडाति वा तलागाति वा दहाति वा णदीति वा पुढवीति वा उदहीति वा वातखंधाति वा उवासंतराति वा वलताति वा विग्गहाति वा दीवाति वा समुद्दाइ वा वेलाति वा वेतिताति वा दाराति वा तोरणाति वा णेरतिताति वा णेरतितावासाति वा जाव वेमाणियाइ वा वेमाणियावासाति वा कप्पाति वा कप्पविमाणावासाति वा वासाति वा वासधरपव्वताति वा कूडाति वा कूडगाराति वा विजयाति वा रायहाणीइ वा जीवाति या अजीवाति या पवुच्चति ४७। छाताति वा आतवाति वा दोसिणाति वा अंधगाराति वा ओमाणाति वा उम्माणाति वा अतिताणगिहाति वा उज्जाणगिहाति वा अवलिंबाति वा सणिप्पवाताति वा जीवाति या अजीवाति या पवुच्चइ। दो रासी पं० तं०—जीवरासी चेव अजीवरासी चेव (सूत्रं ९५)

एषां चानन्तरसूत्रेणायमभिसम्बन्धः—पूर्वत्र जीवविशेषाणामुच्चत्वलक्षणो धर्मोऽभिहितः, इह तु धर्माधिकारादेव समयादिस्थितिलक्षणो धर्मो जीवाजीवसम्बन्धी जीवाजीवतयैव धर्मधर्मिणोरभेदेनोच्यत इति, तत्र सर्वेषां कालप्रमाणानामाद्यः परमसूक्ष्मोऽभेद्यो निरवयव उत्पलपत्रशतव्यतिभेदाद्युदाहरणोपलक्षितः समयः, तस्य चातीतादिविवक्षया बहुत्वाद् बहुवचनमित्याह समयाइ वा' इत्यादि, इतिशब्द उपप्रदर्शने, वाशब्दो विकल्पे, तथा असंख्यातसमयसमुदयात्मिका आवलिका क्षुल्लकभवग्रहणकालस्य षट्पञ्चाशदुत्तरद्विशततमभागभूता इति, तत्र समया इति वा आवलिका इति वा यत्कालवस्तु तदविगानेन जीवा इति च, जीवपर्यायत्वात्, पर्यायपर्यायिणोश्च कथञ्चिदभेदात्, तथा अजीवानां—पुद्गलादीनां पर्यायत्वादजीवा इति च, चकारौ समुच्चयार्थौ, दीर्घता च प्राकृतत्वात्,

प्रोच्यते-अभिधीयत इति, न जीवादिव्यतिरेकिणः समयादयः, तथाहि-जीवाजीवानां सादिसपर्यवसानादिभेदा या स्थितिस्तद्भेदाः समयादयः सा च तद्धर्मो धर्मश्च धर्मिणो नात्यन्तं भेदवान्, अत्यन्तभेदे हि विप्रकृष्टधर्ममात्रोपलब्धौ प्रतिनियतधर्मिविषय एव संशयो न स्यात्, तदन्येभ्योऽपि तस्य भेदाविशेषाद्, दृश्यते च यदा कश्चिद्दूरिततरुतरुणशाखाविसरविवरान्तरतः किमपि शुक्लं पश्यति तदा किमियं पताका किं वा बलाकेत्येवं प्रतिनियतधर्मिविषयः संशय इति, अभेदेऽपि सर्वथा संशयानुत्पत्तिरेव, गुणग्रहणत एव तस्यापि गृहीतत्वादिति, इह स्वभेदनयाश्रयणाज्जीवाइ येत्याद्युक्तम्, इह च समयावलिकालक्षणार्थद्वयस्य जीवादिद्वयात्मकतया भणनाद् द्विस्थानकावतारो दृश्यः, एवमुत्तरसूत्राण्यपि नेयानि, विशेषं तु वक्ष्याम इति, 'आणापाणू' इत्यादि, 'आनप्राणा'विति-उच्छ्वासनिःश्वासकालाः संख्यातावलिकाप्रमाणाः, आह च -"हट्ठस्स अणवगल्लस्स, निरुवकिट्ठस्स जंतुणो। एगे ऊसासनीसासे, एस पाणुत्ति वुच्चई ॥१॥" तथा स्तोकाः सप्तोच्छ्वासनिःश्वासप्रमाणाः, क्षणाः संख्यातानप्राणलक्षणाः, सप्तस्तोकप्रमाणा लवाः, 'एव'मिति यथा प्राक्तने सूत्रत्रये जीवा इति च अजीवा इति च प्रोच्यते इत्यधीतमेवं सर्वेपूत्तरसूत्रेष्वित्यर्थः, मुहूर्त्ताः-सप्तसप्ततिलवप्रमाणाः, उक्तश्च—"सत्त पाणूणि से थोवे, सत्त थोवाणि से लवे। लवाणं सत्तहत्तरीए, एस मुहुत्ते वियाहिए ॥१॥ तिण्णि सहस्सा सत्त य सयाणि तेवत्तरिं च ऊसासा। एस मुहुत्तो भणिओ सव्वेहिं अणंतनाणीहिं ॥२॥" इति, अहोरात्राः त्रिंशन्मुहूर्त्तप्रमाणाः, पक्षाः पञ्चदशाहोरात्रप्रमाणाः,

---

१ हृष्टस्यानवग्लानस्य निरुपक्लिष्टस्य जन्तोः एक उच्छ्वासनिःश्वासः एष प्राण इति उच्यते ॥१॥ २ सप्त प्राणाः स स्तोकः सप्त स्तोकाः लवः लवानां सप्तसप्तत्या एष मुहूर्त्त इति व्याख्यातः ॥१॥ त्रीणि सहस्राणि सप्त च शतानि त्रिसप्ततिश्चोच्छ्वासाः एष मुहूर्त्तो भणितः सर्वैरनन्तज्ञानिभिः ॥२॥

मासा द्विपक्षाः, ऋतवो द्विमासमानाः वसन्ताद्याः, अयनानि ऋतुत्रयमानानि, संवत्सरा अयनद्वयमानाः, युगानि पञ्चसंवत्सराणि, वर्षशतादीनि प्रतीतानि, पूर्वाङ्गानि चतुरशीतिवर्षलक्षप्रमाणानि, पूर्वाणि पूर्वाङ्गान्येव चतुरशीतिलक्षगुणितानि, इदं चैषां मानम्—"पुव्वस्स उ परिमाणं सयरिं खलु होंति कोडिलक्खाओ। छप्पन्नं च सहस्सा बोद्धव्वा वासकोडीणं ॥१॥" इति, ७०५६००००००००००, पूर्वाणि चतुरशीतिलक्षगुणितानि त्रुटिताङ्गानि भवन्ति, एवं पूर्वस्य पूर्वस्य चतुरशीतिलक्षणगुणनेनोत्तरमुत्तरं सङ्ख्यानं भवति यावच्छीर्षप्रहेलिकेति, तस्यां चतुर्नवत्यधिकमङ्कस्थानशतं भवति, अत्र करणगाथा—"इच्छियठाणेण गुणं पणसुन्नं चउरसीतिगुणितं च। काऊणं तइवारे पुव्वंगाईण मुण संखं ॥१॥" शीर्षप्रहेलिकान्तः सांव्यवहारिकः संख्यातकालः, तेन च प्रथमपृथिवीनारकाणां भवनपतिव्यन्तराणां भरतैरवतेषु सुषमदुष्षमायाः पश्चिमे भागे नरतिरश्चां चायुर्मीयत इति, किञ्च—शीर्षप्रहेलिकायाः परतोऽप्यस्ति संख्यातः कालः, स चानतिशायिनां न व्यवहारविषय इतिकृत्वौपम्ये प्रक्षिप्तः, अत एव शीर्षप्रहेलिकायाः परतः पल्योपमाद्युपन्यासः, तत्र पल्येनोपमा येषु तानि पल्योपमानि—असङ्ख्यातवर्षकोटीकोटीप्रमाणानि वक्ष्यमाणलक्षणानि, सागरेणोपमा येषु तानि सागरोपमाणि—पल्योपमकोटीकोटीदशकमानानीति, दशसागरोपमकोटीकोट्य उत्सर्प्पिणी, एवमेवावसर्प्पिणीति। कालविशेषवत् ग्रामादिवस्तुविशेषा अपि जीवाजीवा एवेति द्विपदैः सप्तचत्वारिंशता सूत्रैराह—'गामे'त्यादि, इह च प्रत्येकं जीवाइ येत्यादिरालापोऽध्येतव्यो, ग्रामादीनां च जीवाजीवता प्रतीतैव, तत्र करादिगम्या ग्रामाः नैतेषु करोऽस्तीति नकराणि १, निगमाः—वणिग्निवासाः राजधान्यो—यासु राजानोऽभिषि-

१ पूर्वस्य तु परिमाणं सप्ततिः खलु भवन्ति कोटीलक्षाः। षट्पञ्चाशत्कोटीसहस्राणि च वर्षाणां बोद्धव्यानि ॥१॥ २ इच्छितस्थानेन गुण्यं शून्यपंचकं चतुरशीतिगुणितं च। पूर्वांगादीनां संख्यां ततिवारान् कृत्वा जानीहि ॥२॥

व्यन्ते २ खेटानि-धूलिप्राकारोपेतानि कर्बटानि-कुनगराणि ३, मडम्बानि सर्वतोऽर्द्धयोजनात् परतोऽवस्थितग्रामाणि द्रोणमुखानि येषां जलस्थलपथावुभावपि स्तः ४, पत्तनानि येषु जलस्थलपथयोरन्यतरेण पर्याहारप्रवेशः, आकरा-लोहाद्युत्पत्तिभूमयः ५, आश्रमाः-तीर्थस्थानानि संवाहाः-समभूमौ कृषिं कृत्वा येषु दुर्गभूमिभूतेषु धान्यानि कृषीवलाः संवहन्ति रक्षार्थमिति ६, सन्निवेशाः सार्थकटकादेः घोषा-गोष्ठानि ७, आरामा-विविधवृक्षलतोपशोभिताः कदल्यादिप्रच्छन्नगृहेषु स्त्रीसहितानां पुंसां रमणस्थानभूता इति, उद्यानानि पत्रपुष्पफलच्छायोपगादिवृक्षोपशोभितानि बहुजनस्य विविधवेषस्योन्नतमानस्य भोजनार्थं यानं-गमनं येष्विति ८, वनानीत्येकजातीयवृक्षाणि वनखण्डाः-अनेकजातीयोत्तमवृक्षाः ९, वापी चतुरस्रा पुष्करिणी वृत्ता पुष्करवती वेति १० सरांसि-जलाशयविशेषाः सरःपङ्क्तयः-सरसां पद्धतयः ११, 'अगड'त्ति अवटाः-कूपाः, तडागादीनि प्रतीतानि १२, पृथिवी- रत्नप्रभादिका उदधिः-तदधो घनोदधिः १४, वातस्कन्धाः-घनवाततनुवाता इतरे वा अवकाशान्तराणि-वातस्कन्धानामधस्तादाकाशानि, जीवता चैषां सूक्ष्मपृथिवीकायिकादिजीवव्याप्तत्वात् १५, वलयानि-पृथिवीनां वेष्टनानि घनोदधिघनवाततनुवातलक्षणानीति विग्रहा-लोकनाडीवक्राणि, जीवता चैषां पूर्ववत् १६, द्वीपाः समुद्राश्च प्रतीताः १७, वेला-समुद्रजलवृद्धिः, वेदिकाः प्रतीताः १८, द्वाराणि-विजयादीनि तोरणानि तेष्वेवेति १९, नैरयिकाः-क्लिष्टसत्त्वविशेषास्तेषां चाजीवता कर्मपुद्गलाद्यपेक्षया तदुत्पत्तिभूमयो नैरयिकावासास्तेषां च जीवता पृथिवीकायिकाद्यपेक्षया, इत्येवं चतुर्विंशतिदण्डकोऽभिधेयः ४३ अत एवाह-'याव'दित्यादि, कल्पाः-देवलोकास्तदंशाः कल्पविमानावासाः ४४, वर्षाणि-भरतादिक्षेत्राणि वर्षधरपर्वताः-हिमवदादयः ४५, कूटानि-हिमवत्कूटादीनि कूटागाराणि-तेष्वेव देवभवनानि ४६, विजयाः-चक्रवर्तिविजेतव्यानि कच्छादीनि क्षेत्रखण्डानि, राजधान्यः-क्षेमादिकाः. 'जीवे'त्यादि इहोक्तं सर्वत्र सम्बन्धनीयमिति

४७। येऽपि पुद्गलधर्मास्तेऽपि तथैवेत्याह—'छाये'त्यादि सूत्रपञ्चकं गतार्थम्, नवरं छाया वृक्षादीनामातपः आदित्यस्य, 'दोसिणाति व'त्ति ज्योत्स्ना, अन्धकाराणि-तमांसि, अवमानानि-क्षेत्रादीनां प्रमाणानि हस्तादीनि, उन्मानानि-तुलायाः कर्पादीनि, अतियानगृहाणि-नगरादिप्रवेशे यानि गृहाणि, उद्यानगृहाणि प्रतीतानि, अवलिंबा सणिप्पवाया य रूढितोऽवसेया इति, किमेतत् सर्वमित्याह—जीवा इति च, जीवव्याप्तत्वात् तदाश्रितत्वाद्वा, 'अजीवा इति च' पुद्गलाद्यजीवस्वरूपत्वात् तदाश्रितत्वाद्वेति, प्रोच्यते—जिनैः प्ररूप्यत इति। इह च जीवाइ येत्यादि सूत्रपञ्चकेऽपि प्रत्येकमध्येतव्यमिति। अथ समयादिवस्तु जीवाजीवरूपमेव कस्मादभिधीयते?, उच्यते, तद्विलक्षणराश्यन्तराभावाद्, अत एवाह—'दो रासी'त्यादि कण्ठ्यम्।

जीवराशिश्च द्विधा-बद्धमुक्तभेदात्, तत्र बद्धानां बन्धनिरूपणायाह—

**दुविहे बंधे पं०, तं०—पेज्जबंधे चेव दोसबंधे चेव, जीवाणं दोहिं ठाणेहिं पावं कम्मं बंधंति, तं०—रागेण चेव दोसेण चेव, जीवा णं दोहिं ठाणेहिं पावं कम्मं उदीरेंति, तं०—अब्भोवगमिताते चेव वेतणाते उवक्कमिताते चेव वेयणाते, एवं वेदेंति एवं णिज्जरेंति-अब्भोवगमिताते चेव वेयणाते उवक्कमिताते चेव वेयणाते (सू०९६)**

प्रेम-रागो मायालोभकषायलक्षणः, द्वेषस्तु क्रोधमानकषायलक्षणः, यदाह—"माया लोभकषायश्चेत्येतद् रागसंज्ञितं द्वन्द्वम्। क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्टः ॥१॥" इति, प्रेम्णः-प्रेमलक्षणचित्तविकारसम्पादकमोहनीयकर्मपुद्गलराशेर्बन्धनं-जीवप्रदेशेषु योगप्रत्ययतः प्रकृतिरूपतया प्रदेशरूपतया च सम्बन्धनम्, तथा कषायप्रत्ययतः स्थित्यनुभागविशेषापादनं च प्रेमबन्धः, एवं

द्वेषमोहनीयस्य बन्धो द्वेषबन्ध इति, उक्तं हि—“जोगा पयडिपदेसं ठितिअणुभागं कसायओ कुणइ”त्ति प्रेमद्वेषलक्षणाभ्यां कर्मभ्यामुदयगताभ्यां जीवानामशुभकर्मबन्धो भवतीत्याह—‘जीवाण’ मित्यादि, अथवा पूर्वसूत्रमन्यथा व्याख्याय सम्बन्धान्तरमस्य क्रियते—सामान्येन बन्धो द्वेधा—प्रेमतो द्वेषतश्चेति, स चानिवृत्तिसूक्ष्मसम्परायान्तान् गुणस्थानिनः प्रतीत्य द्रष्टव्यः, यस्तूपशान्तमोहक्षीणमोहसयोगिनां स योगप्रत्यय एव, स तु बन्धत्वेन न विवक्षितो, बन्धस्यापि तस्य शेषकर्मबन्धविलक्षणतयाऽबन्धकल्पत्वात्, यस्य हि कर्मणोऽसौ तदल्पस्थितिकादिविशेषणम्, उक्तं च—“अप्पं बायर मउयं बहुं च रुक्खं च सुक्किलं चेव । मंदं महव्वयं तिय मायाबहुलं च तं कम्मं ॥१॥” इति, अल्पं स्थित्या बादरं परिणामतः मृद्वनुभावतः बहु प्रदेशैः मन्दं लेपतो वालुकावत्, महाव्ययं सर्वापगमात् । एतदेव दर्शयन्नाह—‘जीवा ण, मित्यादि जीवाः—सत्त्वाः णं वाक्यालङ्कारे द्वाभ्यां ‘स्थानाभ्यां’ कारणाभ्यां पापम्—अशुभमशुभमयनिबन्धनत्वात्, न तु निरनुबन्धं द्विसमयस्थितिकमत्यन्तं शुभं, तस्य केवलयोगप्रत्ययत्वादिति, बध्नन्ति—स्पृष्टादिवस्थां कुर्वन्ति, रागेण चैव द्वेषेण चैव, कषायैरित्यर्थः, ननु मिथ्यात्वाविरतिकषाययोगा बन्धहेतवः तत्कथं कषाया एव इहोक्ता इति ?, उच्यते, कषायाणां पापकर्मबन्धं प्रति प्राधान्यख्यापनार्थं, प्राधान्यं च स्थित्यनुभागप्रकर्षकारणत्वात् तेषामिति, अथवा अत्यन्तमनर्थकारित्वात्, उक्तञ्च—“को दुक्खं पावेज्जा कस्स व सोक्खेहिं विम्हओ होज्जा ? । को वा न लहेज्ज मोक्खं ? रागदोसा जइ न होज्जा ॥१॥”, इति, अथवा बन्धहेतुदेशग्राहकमेवेदं सूत्रं द्विस्थानकानुरोधादिति न दोषः । उक्तस्थानद्वयबद्धपापकर्मणश्च यथोदीरणवेदनानि-

---

१ योगेभ्यः प्रकृतिप्रदेशबन्धं कषायेभ्यः स्थित्यनुभागबन्धं करोति ॥ २ तत्सयोगिकर्म अल्पं बादरं मृदु बहु रूक्षं शुभ्रं चैव । मंदं महाव्ययं सातबहुलमिति ॥१॥ ३ को दुःखं प्राप्नुयात् कस्य वा सुखैर्विस्मयो भूयात् को न लभेत मोक्षं रागद्वेषौ यदि न भवेतां ॥१॥

र्जराः कुर्वन्ति देहिनस्तथा सुत्रत्रयेणाह—'जीवे'त्यादि गतार्थम् , नवरं उदीरयन्ति–अप्राप्तावसरं सदुदये प्रवेशयन्ति, अभ्युपगमेन–अङ्गीकरणेन निर्वृत्ता तत्र वा भवा आभ्युपगमिकी तया–शिरोलोचतपश्चरणादिकया वेदनया–पीडया उपक्रमेण–कर्मोदीरणकारणेन निर्वृत्ता तत्र वा भवा औपक्रमिकी तया–ज्वरातीसारादिजन्यया, 'एव'मिति उक्तप्रकारत एव वेदयन्ति' विपाकतोऽनुभवन्त्युदीरितं सदिति, 'निर्जरयन्ति' प्रदेशेभ्यः शाटयन्तीति ।

निर्जरणे च कर्मणो देशतः सर्वथा वा भवान्तरे सिद्धौ वा गच्छतः शरीरान्निर्याणं भवतीति सूत्रपञ्चकेन तदाह—

दोहिं ठाणेहिं आता सरीरं फुसित्ताणं णिज्जाति, तं०—देसेणवि आता सरीरं फुसित्ताणं णिज्जाति सव्वेणवि आया भरीरगं फुसित्ताणं णिज्जाति, एवं फुरित्ताणं एवं फुडित्ता एवं संवट्टतित्ता एवं निव्वट्टतित्ता (सू०९७)

'दोही'त्यादिकं कण्ठ्यं, नवरं द्वाभ्यां प्रकाराभ्यां 'देसेणवि'त्ति देशेनापि–कतिपयप्रदेशलक्षणेन केषाञ्चित्प्रदेशानामिलिकागत्योत्पादस्थानं गच्छता जीवेन शरीराद्बहिः क्षिप्तत्वात् , 'आत्मा' जीवः, 'शरीरं' देहं 'स्पृष्ट्वा' श्लिष्ट्वा 'निर्याति' शरीरान्मरणकाले निःसरतीति, 'सव्वेणवि'त्ति सर्वेण–सर्वात्मना सर्वैर्जीवप्रदेशैः कन्दुकगत्योत्पादस्थानं गच्छता शरीराद् बहिः प्रदेशानामप्रक्षिप्तत्वादिति, अथवा देशेनापि–देशतोऽप्यपिशब्दः सर्वेणापीत्यपेक्षः, आत्मा, शरीरं, कोऽर्थः ?–शरीरदेशं पादादिकं स्पृष्ट्वाऽवयवान्तरेभ्यः प्रदेशसंहारान्निर्यातिति, स च संसारी, 'सर्वेणापि' सर्वतयाऽपि, अपिर्देशेनापीत्यपेक्षः, सर्वमपि शरीरं स्पृष्ट्वा निर्यातीति भावः, स च सिद्धो, वक्ष्यति च—"पायणिज्जाणा णिरएसु "उववज्जंती"त्यादि, यावत् "सव्वंगणिज्जाणा सिद्धेसु"त्ति । आत्मना शरीरस्य स्पर्शने सति स्फुरणं भवतीत्यत उच्यते—'एव'मित्यादि, 'एव'मिति 'दोहिं ठाणेही'त्याद्यभिलापसंसूचनार्थः, तत्र देशेनापि किय-

शुभिरष्यात्मप्रदेशैरिलिकागतिकाले 'सव्वेणवि'त्ति सर्व्वैरपि गेन्दुकगतिकाले शरीरं 'फुरित्ताणं'ति स्फोरयित्वा सस्पन्दं कृत्वा निर्याति, अथवा शरीरकं देशतः शरीरदेशमित्यर्थः स्फोरयित्वा पादादिनिर्याणकाले, सर्वतः—सर्वं शरीरं स्फोरयित्वा सर्वाङ्गनिर्याणाप्रसर इति । स्फोरणाच्च सात्मकत्वं स्फुटं भवतीत्याह—'एव'मित्यादि, 'एव'मिति तथैव देशेन—आत्मदेशेन शरीरकं 'फुडित्ताणं'ति सचेतनतया स्फुरणलिङ्गतः स्फुटं कृत्वा इलिकागतौ सर्वेण—सर्वात्मना स्फुटं कृत्वा गेन्दुकगताविति, अथवा शरीरकं देशतः—सात्मकतया स्फुटं कृत्वा पादादिना निर्याणकाले सर्वतः—सर्वाङ्गनिर्याणप्रस्ताव इति, अथवा फुडित्ता—स्फोटयित्वा विशीर्णं कृत्वा, तत्र देशतोऽक्ष्यादिविघातेन सर्वतः सर्वविशरणेन देवदीपादिजीववदिति । शरीरं सात्मकतया स्फुटीकुर्वंस्तत्संवर्त्तनमपि कश्चित्करोतीत्याह—'एव'मित्यादि, 'एव'मिति तथैव 'संवट्टइत्ताणं'त्ति संवर्त्य—सङ्कोच्य शरीरकं देशेनेलिकागतौ शरीरस्थितप्रदेशैः सर्वेण—सर्वात्मना गेन्दुकगतौ सर्वात्मप्रदेशानां शरीरस्थितत्वान्निर्यातीति, अथवा शरीरकं—शरीरिणमुपचाराद्, दण्डयोगाद्दण्डपुरुषवत् , तत्र देशतः संवर्त्तनं संसारिणो म्रियमाणस्य पादादिगतजीवप्रदेशसंहारात् सर्वतस्तु निर्वाणं गन्तुरिति, अथवा शरीरकं देशतः संवर्त्य—हस्तादिसङ्कोचनेन सर्वतः—सर्वशरीरसङ्कोचनेन पिपीलिकादिवदिति। आत्मनश्च संवर्त्तनं कुर्वन् शरीरस्य निवर्त्तनं करोतीत्याह—एवं 'निवट्टयित्ताणं'ति, तथैव निवर्त्य—जीवप्रदेशेभ्यः शरीरकं पृथक्कृत्येत्यर्थः, तत्र देशेनेलिकागतौ, सर्वेण गेन्दुकगतौ, अथवा देशतः शरीरं निर्वर्त्यात्मनः पादादिनिर्याणवान् सर्वतः सर्वाङ्गनिर्याणवानिति, अथवा पञ्चविधशरीरसमुदायापेक्षया देशतः शरीरम्—औदारिकादि निवर्त्य तैजसकार्मणे त्वादायैव, तथा सर्वेण—सर्वं शरीरसमुदायं निवर्त्य निर्याति, सिध्यतीत्यर्थः ।

अनन्तरं सर्वनिर्याणमुक्तम् , तच्च परम्परया धर्मश्रवणलाभादिषु, ते च यथा स्युस्तथा दर्शयन्नाह—

दोहिं ठाणेहिं आता केवलिपन्नत्तं धम्मं लभेज्जा सवणताते, तं०—खतेण चेव, उवसमेण चेव, एवं जाव मणपज्जवनाणं उप्पाडेज्जा तं०—खतेण चेव उवसमेण चेव (सूत्रं ९८)।

'दोही'त्यादि कण्ठ्यं, नवरं 'खएण चेव'त्ति ज्ञानावरणीयस्य दर्शनमोहनीयस्य च कर्मणः उदयप्राप्तस्य क्षयेण–निर्जरणेन अनुदितस्य चोपशमेन–विपाकाननुभवेन, क्षयोपशमेनेत्युक्तं भवति, यावत्करणात् केवलं बोहिं बुज्झेज्जा मुंडे भवित्ता अगाराओ अणगारियं पव्वएज्जा केवलं बंभचेरवासमावसेज्जा, केवलेणं संजमेणं संजमिज्जा, केवलेणं संवरेणं संवरेज्जा, केवलं आभिणिबोहियनाणमुप्पाडेज्जा इत्यादि दृश्यम्, एवं यावन्मनःपर्यवज्ञानमुत्पादयेदिति, केवलज्ञानं तु क्षयादेव भवतीति तन्नोक्तम्। इह च यद्यपि बोध्यादयः सम्यक्त्वचारित्ररूपत्वात् केवलेन क्षयेण उपशमेन च भवन्ति तथाऽप्येते क्षयोपशमेनापि भवन्ति, श्रवणाभिनिबोधिकादीनि तु क्षयोपशमेनैव भवन्तीति सर्वसाधारणः क्षयोपशम उक्तः पदद्वयेनातः स एव व्याख्यात इति।

बोध्याभिनिबोधिकश्रुतावधिज्ञानानि च षट्षष्टिसागरोपमस्थितिकान्युत्कर्षतो भवन्ति, सागरोपमाणि च पल्योपमाश्रितानीति तद्द्वितयप्ररूपणामाह—

दुविहे अद्धोवमिए पन्नत्ते तं०—पलिओवमे चेव सागरोवमे चेव, से किं तं पलिओवमे ?, पलिओवमे—जं जोयणविच्छिन्नं, पल्लं एगाहियपरूढाणं। होज्ज निरंतरणिचितं भरितं वालग्गकोडीणं ॥१॥ वाससए वाससए एक्केक्के अवहडंमि जो कालो। सो कालो बोद्धव्वो, उवमा एगस्स पल्लस्स ॥२॥ एएसिं पल्लाणं कोडाकोडी हवेज्ज

समगुणिना । तं सागरोवमस्स उ एगस्स भवे परीमाणं ॥२॥ (सू० ९९)

उपमा—औपम्यं, तया निर्वृत्तमौपमिकं अद्धा—कालस्तद्विषयमौपमिकमद्धौपमिकम्, उपमानमन्तरेण यत्कालप्रमाणमनतिशयिना ग्रहीतुं न शक्यते तदद्धौपमिकमिति भावः, तच्च द्विधा—पल्योपमं चैव सागरोपमं चैव, तत्र पल्यवत्पल्यस्तेनोपमा यस्मिंस्तत्पल्योपमम् तथा सागरेणोपमा यस्मिंस्तत्सागरोपमं, सागरवन्महापरिमाणमित्यर्थः, इदं च पल्योपमसागरोपमरूपमौपमिकं सामान्यत उद्धाराद्धा-क्षेत्रभेदात् त्रिधा, पुनरेकैकं संव्यवहारसूक्ष्मभेदाद् द्विधा, तत्र संव्यवहारपल्योपमं नाम यावता कालेन योजनायामविष्कम्भोच्चत्वः पल्यो मुण्डनानन्तरमेकादिसप्तान्ताहोरात्रप्ररूढानां वालाग्राणां भृतः प्रतिसमयं वालाग्रोद्धारे सति निर्लेपो भवति स कालो व्यावहारिकमुद्धारपल्योपममुच्यते, तेषां दशभिः कोटीकोटीभिः व्यावहारिकमुद्धारसागरोपममुच्यते, तेषामेव वालाग्राणां दृष्टिगोचरातिसूक्ष्म-द्रव्यासङ्ख्येयभागमात्रसूक्ष्मपनकावगाहनाऽसङ्ख्यातगुणरूपखण्डीकृतानां भृतः पल्यो येन कालेन निर्लेपो भवति तथैवोद्धारे तत्सूक्ष्म-मुद्धारपल्योपमं, तथैव च सूक्ष्ममुद्धारसागरोपमम्, अनेन च द्वीपसमुद्राः परिसङ्ख्यायन्ते, आह च—"उद्धारसागराणं अड्ढाइज्जाण जत्तिया समया। दुगुणादुगुणपवित्थर दीवोदहि रज्जु एवइया ॥१॥" इति, अद्धापल्योपमसागरोपमे अपि सूक्ष्मबादरभेदे एवमेव, नवरं वर्षशते २ वालस्य वालासङ्ख्येयखण्डस्य चोद्धार इति, अनेन नारकादिस्थितयो मीयन्ते, क्षेत्रतोऽपि ते द्विविधे एवमेव, नवरं प्रतिसमयमेकैकाकाशप्रदेशापहारे यावता कालेन वालाग्रस्पृष्टा एव प्रदेशा उद्ध्रियन्ते स कालो व्यावहारिक इति, यावता च वाला-ग्रासङ्ख्यातखण्डैः स्पृष्टा अस्पृष्टाश्चोद्ध्रियन्ते स कालः सूक्ष्म इति, एते च प्ररूपणामात्रविषये एव, आभ्यां च दृष्टिवादे स्पृष्टास्पृष्ट-

१ उद्धारसागरोपमयोः सार्धद्वययोः यावन्तः समयाः। एतावन्तो द्वीपोदधयो द्विगुणद्विगुणप्रविस्तरा रज्जुः ॥१॥

प्रदेशविभागेन द्रव्यमाने प्रयोजनमिति श्रूयते, बादरे च त्रिविधे अपि प्ररूपणामात्रविषये एवेति, तदेवमिह प्रक्रमे उद्धारक्षेत्रौपमिकयोर्निरुपयोगित्वादद्धौपमिकस्यैव चोपयोगित्वाद् अद्धेतिविशेषणं सूत्रे उपात्तमिति, अत एवाद्धापल्योपमलक्षणाभिधित्सयाऽऽह सूत्रकारः—'से किं त'मित्यादि, अथ किं तत् पल्योपमं ?, यदद्धौपमिकतया निर्दिष्टमिति प्रश्ने निर्वचनमेतदनुवादेनाह—'पलिओवमे'त्ति, पल्योपममेवं भवतीति वाक्यशेषः, 'जं' गाहा, किल यद्योजनविस्तीर्णमित्युपलक्षणत्वात्सर्वतो यद्योजनप्रमाणं पल्यं—धान्यस्थानविशेषः एकाह एव एकाहिकस्तेन प्ररूढानां—वृद्धानां मुण्डिते शिरसि एकेनाह्ना यावत्यो भवन्तीत्यर्थः, एतस्य चोपलक्षणत्वादुत्कर्षतः सप्ताहप्ररूढानां वालाग्राणां कोटचो—विभागाः सूक्ष्मपल्योपमापेक्षयाऽसंख्येयखण्डानि बादरपल्योपमापेक्षया तु कोटचः—सङ्ख्याविशेषाः तासां किं भवेत् ?—'भरितं' भृतं, कथमित्याह—'निरन्तरं' निचितं निबिडतया निचयवत्कृतमिति। 'वास' गाहा, एतस्मात्पल्याद्वर्षशते वर्षशतेऽतिक्रान्ते सति प्रतिवर्षशतमित्यर्थः, एकैकस्मिन् वालाग्रे असंख्येयखण्डे चापहृते—उद्धृते सति 'यः कालो' यावती अद्धा भवति प्रमाणतः स तावान् कालो बोद्धव्यः, किमित्याह—'उपमा'उपमेयः, कस्येत्याह—एकस्य पल्यस्य, इदमुक्तं भवति—स काल एकं पल्योपमं सूक्ष्मं व्यावहारिकं चोच्यत इति। 'एएसिं' गाहा, एतेषाम्—उक्तरूपाणां सूक्ष्मबादराणां 'पल्यानां' पल्योपमानां कोटीकोटी भवेद् दशगुणिता यदिति गम्यते, दश कोटीकोटच इत्यर्थः, तदेकस्य सूक्ष्मरूपस्य बादररूपस्य वा सागरोपमस्यैव भवेत्परिमाणमिति ॥

एतैश्च येषां क्रोधादीनां फलभूतकर्मस्थितिर्निरूप्यते तत्स्वरूपनिरूपणायाह—

**दुविहे कोहे पन्नत्ते तं०—आयपइट्ठिते चेव परपइट्ठिए चेव, एवं नेरइयाणं जाव वेमाणियाणं, एवं जाव मिच्छा**

दंमणसल्ले (सू० १००)। दुविहा संसारसमावन्नगा जीवा पं० तं०—तसा चेव थावरा चेव, दुविहा सव्वजीवा पं० तं०—सिद्धा चेव असिद्धा चेव, दुविहा सव्वजीवा पण्णत्ता तं०—सइंदिया चेव अणिंदिया चेव, एवं एसा गाहा फासेतव्वा जाव ससरीरी चेव असरीरी चेव—'सिद्धसइंदियकाए जोगे वेए कसाय लेसा य। णाणुवओगाहारे भासग चरिमे य ससरीरी ॥१॥' (सू० १०१)

आत्मापराधादैहिकापायदर्शनादात्मनि प्रतिष्ठितः—आत्मविषयो जातः आत्मना वा पराक्रोशादिना प्रतिष्ठितो—जनित आत्मप्रतिष्ठितः, परेणाक्रोशादिना प्रतिष्ठितः—उदीरितः परस्मिन् वा प्रतिष्ठितो—जातः परप्रतिष्ठित इति। 'एव'मिति यथा सामान्यतो द्विधा क्रोध उक्त एवं नारकादीनां चतुर्विंशतेर्वाच्यः, नवरं पृथिव्यादीनामसंज्ञिनामुक्तलक्षणमात्मप्रतिष्ठितत्वादि पूर्वभवसंस्कारात् क्रोधगतमवगन्तव्यमिति। एवं मानादीनि मिथ्यात्वान्तानि पापस्थानकान्यात्मपरप्रतिष्ठितविशेषणानि सामान्यपदपूर्वकं चतुर्विंशतिदण्डकेनाध्येतव्यानि, अत एवाह—'एवं जाव मिच्छादंसणसल्ले'त्ति, एतेषां च मानादीनां स्वविकल्पजातपरजनितत्वाभ्यां स्वात्मवर्त्तिपरात्मवर्त्तिभ्यां वा स्वपरप्रतिष्ठितत्वमवसेयम्। एवमेते पापस्थानाश्रितास्त्रयोदश दण्डका इति ॥ उक्तविशेषणानि च पापस्थानानि संसारिणामेव भवन्तीति तान् भेदत आह—'दुविहे'त्यादि कण्ठ्यमिति ॥ ननु संसारिण एव जीवा उतान्येऽपि सन्ति?, सन्तीति प्राय उभयदर्शनाय त्रयोदशसूत्रीमाह—'दुविहा सव्वे'त्यादिकं, कण्ठ्या चेयं, नवरं सेन्द्रियाः—संसारिणोऽनिन्द्रियाः—अपर्याप्तककेवलिसिद्धाः २ 'एवं एस'त्ति, 'एवं' सिद्धादिसूत्रोक्तक्रमेण 'दुविहा सव्वजीवे'त्यादिलक्षणेन एषा—वक्ष्यमाणा प्रस्तुतसूत्रसंग्रहगाथा स्पर्शनीया—अनुसरणीया, एतदनुसारेण त्रयोदशापि सूत्राण्यध्येतव्यानीत्यर्थः, अत एवाह—'जाव ससरीरी चेव

असरीरी चेव'त्ति । 'सिद्ध'गाहा, सिद्धाः सेन्द्रियाश्च सेतरा उक्ताः, एवं 'काए'त्ति, कायाः—पृथिव्यादयस्तानाश्रित्य सर्वे जीवाः सविपर्यया वाच्याः, एवं सर्वाणि व्याख्येयानि, वाचना चैवं—'सकायच्चेव अकायच्चेव' 'सकायाः' पृथिव्यादिषड्विधकायविशिष्टाः संसारिणः, अकायास्तद्विलक्षणाः सिद्धाः ३, सयोगाः—संसारिणः अयोगा—अयोगिनः सिद्धाश्च ४, 'वेदे'त्ति सवेदाः—संसारिणः अवेदाः—अनिवृत्तिबादरसम्परायविशेषादयः षट् सिद्धाश्च ५; 'कसाय'त्ति, सकषायाः—सूक्ष्मसम्परायान्ताः अकषायाः—उपशान्तमोहादयश्चत्वारः सिद्धाश्च ६, 'लेसा य'त्ति सलेश्याः—सयोग्यन्ताः संसारिणः अलेश्याः—अयोगिनः सिद्धाश्च ७, 'नाणे'त्ति ज्ञानिनः—सम्यग्दृष्टयोऽज्ञानिनो—मिथ्यादृष्टयः, आह च — "[1]अविसेसिया मइ च्चिय सम्मद्दिट्ठिस्स सा मइन्नाणं । मइअन्नाणं मिच्छादिट्ठिस्स सुयंपि एमेव ॥१॥" इति, अज्ञानता च मिथ्यादृष्टिबोधस्य सदसतोरविशेषणात्, तथाहि—सन्त्यर्थाः, इह तत्सत्त्वं कथञ्चिदिति विशेषितव्यं भवति, स्वरूपेणेत्यर्थः, मिथ्यादृष्टिस्तु मन्यते—सन्त एवेति, ततश्च पररूपेणापि तेषां सत्त्वप्रसङ्गः, तथा न सन्त्यर्थाः, इह तदसत्त्वं कथञ्चिदिति विशेषितव्यं भवति, पररूपेणेत्यर्थः, स तु न सन्त्येवेति मन्यते, तथा च तत्प्रतिषेधकवचनस्याप्यभावः प्रसजतीति, अथवा शशविषाणादयो न सन्तीत्येतत्कथञ्चिदिति विशेषणीयं, यतस्ते शशमस्तकादिसमवेततयैव न सन्ति, न तु शशश्च विषाणं च शशस्य वा विषाणं शृङ्गिपूर्वभवग्रहणापेक्षया शशविषाणं तद्रूपतयाऽपि (वा) न सन्तीति, तदेवं सदसतोः कथञ्चिदित्येतस्य विशेषणस्यानभ्युपगमात् तस्य ज्ञानमप्ययथार्थत्वेन कुत्सितत्वादज्ञानमेव, आह च—"[2]जह दुव्वयणमवयणं कुच्छियसीलं असीलमसतीए । भण्णइ तह णाणंपि

१ अविशेषिता मतिरेव सम्यग्दृष्टेः सा मतिज्ञानं मिथ्यादृष्टेर्मत्यज्ञानं श्रुतमप्येवमेव ॥१॥ २ यथा दुर्वचनमवचनं कुत्सितं शीलमशीलं असत्याः। भण्यते यथा तथा ज्ञानमपि मिथ्यादृष्टेरज्ञानमेव ॥१॥

द मिच्छदिट्ठिस्स अन्नाणं ॥१॥" इति, तथा मिथ्यादृष्टेरध्यवसायो न ज्ञानं, भवहेतुत्वात् , मिथ्यात्वादिवत् , तथा यदृच्छोपलब्धेरुन्मत्तवत् , तथा ज्ञानफलस्य सत्क्रियालक्षणस्याभावात् अन्धस्य स्वहस्तगतदीपप्रकाशवदिति, आह च—"सदसदविसेसणाओ भवहेउजदिच्छिओवलंभाओ । णाणफलाभावाओ मिच्छादिट्ठिस्स अन्नाणं ॥१॥" इति ८, 'उवओगि'त्ति, सागरोवउत्ते चेव अणगारोवउत्ते चेव त्ति सहाकारेण—विशेषांशग्रहणशक्तिलक्षणेन वर्त्तते य उपयोगः स साकारो, ज्ञानोपयोग इत्यर्थः, तेनोपयुक्ताः साकारोपयुक्ताः, अनाकारस्तु तद्विलक्षणो दर्शनोपयोग इत्यर्थः, अभिधीयते च—"जं सामन्नग्गहणं भावाणं नेव कट्टु आगारं । अविसेसिऊण अत्थे दंसणमिति वुच्चए समए ॥१॥"त्ति, तेनोपयुक्ता अनाकारोपयुक्ता इति ९, 'आहारे'त्ति आहारका—ओजोलोमकवलभेदभिन्नाहारविशेषग्राहिणः, आह च—"ओयाहारा जीवा सव्वे अपज्जत्तगा मुणेयव्वा । पज्जत्तगा य लोमे पक्खेवे होंति भइयव्वा ॥१॥ एगिंदिय देवाणं णेरइयाणं न नत्थि पक्खेवो । सेसाणं जीवाणं संसारत्थाण पक्खेवो ॥२॥" इति, अनाहारकास्तु "विग्गहगइमावण्णा १ केवलिणो समोहया २ अजोगी य ३ । सिद्धा य ४ अणाहारा सेसा आहारगा जीवा ॥३॥" इति, १० । 'भास'त्ति भाषकाः—भाषापर्याप्तिपर्याप्ताः अभाषकाः—तदपर्याप्तका अयोगिसिद्धाश्च ११ । 'चरम'त्ति चरमा येषां चरमो भवो भविष्यति, अचरमास्तु येषां भव्यत्वे

१ सदसदविशेषणाद्भवहेतुतो यादृच्छिकोपलंभात् । ज्ञानफलाभावाच्च मिथ्यादृष्टेरज्ञानं ॥१॥ २ यत्सामान्यग्रहणं पदार्थानां नैवाकारं कृत्वा । अविशिष्यार्थान् दर्शनमित्युच्यते समये ॥१॥ ३ ओजआहाराः सर्वे अपर्याप्तका जीवा ज्ञातव्याः । पर्याप्तकाश्च लोम्नि प्रक्षेपे भवन्ति भक्तव्याः ॥१॥ एकेन्द्रियाणां देवानां नैरयिकाणां न नास्ति प्रक्षेपः । शेषाणां संसारस्थानां जीवानां प्रक्षेपः ॥१॥ विग्रहगतिमापन्नाः केवलिनः समवहता अयोगिनः । सिद्धाश्चानाहाराः शेषा आहारका जीवाः ॥१॥

सत्यपि चरमो भवो न भविष्यति, न निर्वास्यन्तीत्यर्थः १२। 'ससरीरि'त्ति सह यथासम्भवं पञ्चविधशरीरेण ये ते इन्समासान्तविधेः सशरीरिणः–संसारिणो अशरीरिणस्तु–शरीरमेपामस्तीति शरीरिणस्तन्निपेधादशरीरिणः–सिद्धाः ॥१३॥

एते च संसारिणः सिद्धाश्च मरणामरणधर्मकाः, अप्रशस्तप्रशस्तमरणतश्चैते भवन्तीति प्रशस्ताप्रशस्तमरणनिरूपणाय नवसूत्रीमाह–

दो मरणाइं समणेणं भगवता महावीरेणं समणाणं णिग्गंथाणं णो णिच्चं वन्नियाइं णो णिच्चं कित्तियाइं णो णिच्चं वुइयाइं णो णिच्चं पसत्थाइं णो णिच्चं अब्भणुन्नायाइं भवंति, तंजहा—वलायमरणे चेव वसट्टमरणे चेव १ एवं णियाणमरणे चेव तब्भवमरणे चेव २ गिरिपडणे चेव तरुपडणे चेव ३ जलप्पवेसे चेव जलणप्पवेसे चेव ४ विसभक्खणे चेव सत्थोवाडणे चेव ५ दो मरणाइं जाव णो णिच्चं अब्भणुन्नायाइं भवंति, कारणेण पुण अप्पडिकुट्ठाइं तं०—वेहाणसे चेव गिद्धपट्ठे चेव ६ दो मरणाइं समणेणं भगवया महावीरेणं समणाणं निग्गंथाणं णिच्चं वन्नियाइं जाव अब्भणुन्नाताइं भवंति, तं०—पाओवगमणे चेव भत्तपच्चक्खाणे चेव ७ पाओवगमणे दुविहे पं० तं०—णीहारिमे चेव अनीहारिमे चेव णियमं अपडिक्कमे ८ भत्तपच्चक्खाणे दुविहे पं० तं०—णीहारिमे चेव अणीहारिमे चेव णियमं सपडिक्कमे ९ (सू० १०२)

'दो मरणाइ' मित्यादि, कण्ठ्या चेयम्, नवरं द्वे मरणे श्रमणेन भगवता महावीरेण श्राम्यन्ति- तपस्यन्तीति श्रमणास्तेषां, ते च शाक्यादयोऽपि स्युः, यथोक्तम्—"णिग्गंथ १ सक्क २ तावस ३ गेरुय ४ आजीव ५ पंचहा समणा"[1] इति तद्व्यवच्छेदार्थमाह–

१ निर्ग्रन्थाः शाक्यास्तापसा गैरिका आजीवकाः पंचधा श्रमणाः ॥

निर्गता ग्रन्थाद्-बाह्याभ्यन्तरादिति निर्ग्रन्थाः-साधवस्तेषां नो 'नित्यं' सदा 'वर्णिते' तांस्तयोः प्रवर्त्तयितुमुपादेयफलतया नाभिहिते कीर्त्तिते-नामतः संशब्दिते उपादेयधिया 'बुइयाइं'ति व्यक्तवाचा उक्ते उपादेयस्वरूपतः पाठान्तरेण 'पूजिते वा' तत्कारिपूजनतः 'प्रशस्ते' प्रशंसिते श्लाघिते, 'शंसु स्तुता'विति वचनात्, 'अभ्यनुज्ञाते' अनुमते यथा कुरुतेति, 'वलायमरणं'ति वलतां-संयमान्निवर्त्तमानानां परीषहादिबाधितत्वात् मरणं वलन्मरणं, 'वसट्टमरणं'ति इन्द्रियाणां वशम्-अधीनतामृतानां-गतानां स्निग्धदीपकलिकावलोकनाकुलितपतङ्गादीनामिव मरणं वशार्त्तमरणमिति, आह च—"संजमजोगविसन्ना मरंति जे तं वलायमरणं तु। इंदियविसयवसगया मरंति जे तं वसट्टं तु ॥१॥" इति, एवं 'णियाणे'त्यादि, 'एव'मिति दो मरणाइं समणेणमित्याद्यभिलापस्योच्चारणेऽप्यवि सूत्रनार्थः, ऋद्धिभोगादिप्रार्थना निदानं तत्पूर्वकं मरणं निदानमरणं, यस्मिन् भवे वर्त्तते जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनर्म्रियमाणस्य मरणं तद्भवमरणम्, एतच्च संख्यातायुष्कनरतिरश्चामेव, तेषामेव हि तद्भवायुर्बन्धो भवतीति, उक्तं च—"मोत्तुं अकम्मभूमगनरतिरिए सुरगणे य णेरइए। सेसाणं जीवाणं तब्भवमरणं तु केसिंचि ॥१॥" इति, 'सत्थोवाडणे'त्ति शस्त्रेण-क्षुरिकादिना अवपाटनं-विदारणं स्वशरीरस्य यस्मिंस्तच्छस्त्रावपाटनम्, 'कारणे पुणे'त्यादि, शीलभङ्गरक्षणादौ, पाठान्तरे तु कारणेन 'अप्रतिक्रुष्टे अनिवारिते भगवता, वृक्षशाखादावुद्बद्धत्वाद् विहायसि-नभसि भवं वैहायसं प्राकृतत्वेन तु वेहाणसमित्युक्तमिति, गृध्रैः स्पृष्टं-स्पर्शनं यस्मिंस्तद् गृध्रस्पृष्टम्, यदिवा गृध्राणां भक्ष्यं पृष्ठमुपलक्षणत्वादुदरादि च तद्भक्ष्यकरिकरभादिशरीरानुप्रवेशेन महासत्त्वस्य मुमूर्षोर्य-

१ संयमयोगविषण्णा म्रियन्ते तद्वलन्मरणं तु। इन्द्रियविषयवशगता म्रियन्ते ये तद्वशार्त्तमरणं तु ॥१॥ २ अकर्मभूमिकनरतिरश्चो मुक्त्वा सुरगणान्नैरयिकांश्च शेषाणां जीवानां केषाञ्चिदेव तद्भवमरणं ॥१॥

स्मिंस्तत् गृध्रपृष्ठमिति, गाथाऽत्र—"[1]गद्धादिभक्खणं गद्धपट्ठमुब्बंधणादि वेहासं। एते दोन्निऽवि मरणा कारणजाए अणुन्नाया ॥१॥" इति। अप्रशस्तमरणानन्तरं तत्प्रशस्तं भव्यानां भवतीति तदाह—दो मरणाइं' इत्यादि, पादपो—वृक्षः, तस्येव छिन्नपतितस्योपगमनम्—अत्यन्तनिश्चेष्टतयाऽवस्थानं यस्मिंस्तत्पादपोपगमनं भक्तं—भोजनं तस्यैव न चेष्टाया अपि पादपोपगमन इव प्रत्याख्यानं—वर्जनं यस्मिंस्तद्भक्तप्रत्याख्यानमिति, 'णीहारिमं'ति यद्वसतेरेकदेशे विधीयते तत्तः शरीरस्य निर्हरणात्—निस्सारणान्निर्हारिमं, यत्पुनर्गिरिकन्दरादौ तदनिर्हरणादनिर्हारिमं। 'णियमं'ति विभक्तिपरिणामान्नियमादप्रतिकर्म—शरीरप्रतिक्रियावर्जं पादपोपगमनमिति, भवति चात्र गाथा—"[2]सीहाइसु अभिभूओ पायवगमणं करेइ थिरचित्तो। आउंमि पहुप्पंते वियाणिउं नवरि गीयत्थो ॥१॥" इति, इदमस्य व्याघातवदुच्यते, निर्व्याघातं तु यत्सूत्रार्थनिष्ठितः उत्सर्गतो द्वादश समाः कृतपरिकर्मा सन् काल एव करोतीति, तद्विधिश्चायम्—"[3]चत्तारि विचित्ताइं विगतीनिज्जूहियाइं चत्तारि। संवच्छरे य दोन्नि उ एगंतरियं च आयामं ॥२॥ णाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं। अन्नेऽवि य छम्मासे होइ विगिट्ठं तवोकम्मं ॥३॥ वासं कोडिसहियं आयामं काउ आणुपुव्वीए। संघयणादणुरूवं एत्तो अद्धाइ नियमेणं ॥४॥ यतः—देहम्मि असंलिहिए सहसा धाऊहिं खिज्जमाणेहिं। जायइ अट्टज्झाणं सरीरिणो चरमकालम्मि

---

१ गृद्ध्रादिभक्षणं गृद्ध्रपृष्ठं उद्बन्धनादि वैहायसं। एते द्वे मरणे कारणजाते अनुज्ञाते अपि ॥१॥ २ सिंहादिनाभिभूतः पादपोपगमनं करोति स्थिरचित्तः। आयुषि प्रभवति विज्ञाय परं गीतार्थः ॥२॥ (१) वहुप्पंते प्र। ३ चत्वारि विचित्राणि विकृतिरहितानि चत्वारि। संवत्सरे च द्वे तु एकान्तरितं चाचाम्लं ॥३॥ नातिविकृष्टं च तपः षण्मासीं परिमितं चाचाम्लं। अन्यानपि षण्मासान् भवति विकृष्टं तपःकर्म ॥३॥ वर्षं कोटिसहितमाचाम्लं कृत्वानुपूर्व्या। संहननाद्यनुरूपमेतत्कालादि नियमेन ॥४॥

॥५॥ किञ्च–भावमवि संलिहेइ जिणप्पणीएण झाणजोगेणं । भूयत्थभावणाहि य परिवड्ढइ बोहिमूलाइं ॥६॥ भावेइ भावियप्पा विसेसओ नवरि तंमि कालम्मि । पयईय निग्गुणत्तं संसारमहासमुद्दस्स ॥७॥ जम्मजरामरणजलो अणाइमं वसणसावयाइण्णो । जीवाण दुक्खहेऊ कट्ठं रोद्दो भवसमुद्दो ॥८॥ धन्नोऽहं जेणमए अणोरपारम्मि नवरमेयंमि । भवसयसहस्सदुलहं लद्धं सद्धम्मजाणन्ति ॥९॥ एयस्स पभावेणं पालिज्जंतस्स सइ पयत्तेणं । जम्मंतरेऽवि जीवा पावंति न दुक्खदोगच्चं ॥१०॥ चिंतामणी अउव्वो एयमपुव्वो य कप्परुक्खोत्ति । एयं परमो मंतो एयं परमामयं एत्थं ॥११॥ एत्थं वेयावडियं गुरुमाईणं महाणुभावाणं । जेसिं पभावेणेयं पत्तं तह पालियं चेव ॥१२॥ तेसिं नमो तेसिं नमो भावेण पुणोवि तेसिं चेव णमो । अणुवकयपरहियरया जे एयं देंति जीवाणं ॥१३॥" इत्यादि, "संलिहिऊणऽप्पाणं एवं पच्चप्पिणेत्तु फलगाइं । गुरुमाइए य सम्मं खमाविउं भावसुद्धीए ॥१४॥ उववूहिऊण सेसे पडिवद्धे तम्मि

---

देहेऽपचिते सहसा धातुभिः क्षीयमाणैः । जायते आर्त्तध्यानं शरीरिणश्चरमकाले ॥५॥ भावमपि संलेखयति जिनप्रणीतेन ध्यानयोगेन । भूतार्थभावनाभिश्च परिवर्द्धते बोधिमूलानि ॥६॥ भावयति भावितात्मा विशेषतः परं तस्मिन् काले । प्रकृत्या निर्गुणत्वं संसारमहासमुद्रस्य ॥७॥ जन्मजरामरणजलोऽनादिमान् व्यसनश्वापदाकीर्णः । जीवानां दुःखहेतुः कष्टो रुद्रो भवसमुद्रः ॥८॥ १ धन्योऽहं येन मयाऽनर्वाक्पारे परमेतस्मिन् । भवशतसहस्रदुर्लभं लब्धं सद्धर्मयानमिति ॥९॥ (२) भवसमुद्दम्मि प्र । एतस्य प्रभावेन पाल्यमानस्य सकृत्प्रयत्नेन । जन्मान्तरेऽपि जीवाः प्राप्नुवन्ति न दुःखदौर्गत्यं ॥१०॥ चिन्तामणिरपूर्वः एषोऽपूर्वश्च कल्पवृक्ष इति । एषः परमो मंत्र एतत्परमममृतमत्र ॥११॥ (३) एस अपुव्वो प्र । गाथावृत्तौ । (४) इदं गाथावृत्तौ । अत्र वैयावृत्त्यं गुर्वादीनां महानुभावानां । येषां प्रभावेनैतत्प्राप्तं तथा पालितं चैव ॥१२॥ तेभ्यो नमस्तेभ्यो नमो भावेन पुनरपि तेभ्यश्चैव । नमः अनुपकृतपरहितरता ये एवं ददति जीवानां ॥१३॥ संलेखयित्वात्मानमेवं प्रत्यर्प्य फलकादि गुरुमादिकांश्च सम्यक् क्षामयित्वा भावशुद्ध्या॥१४॥

तह विसेसेणं । धम्मे उज्जमियव्वं संजोगा इह विओगंता ॥१५॥ अह वंदिऊण देवे जहाविहिं सेसए य गुरुमाई । पच्चक्खाइत्तु तओ तयंतिए सव्वमाहारं ॥१६॥ समभावंमि ठियप्पा सम्मं सिद्धंतभणितमग्गेणं । गिरिकंदरंमि गंतुं पायवगमणं अह करेइ ॥१७॥ सव्वत्थापडिबद्धो दंडाययमाइ ठाणमिह ठाउं । जावज्जीवं चिट्ठइ णिच्चेट्ठो पायवसमाणो ॥१८॥ पढमिल्लुयसंघयणे महाणुभावा करेंति एवमिणं । पायं सुहभावच्चिय णिच्चलपयकारणं परमं ॥१९॥ भत्तपरिन्नाणसणं तिचउव्विहाहारचायणिप्फन्नं । सप्पडिकम्मं नियमा जहासमाही विणिद्दिट्ठं ॥२०॥" ति, इङ्गितमरणं त्विह नोक्तं, द्विस्थानकानुरोधात्, तल्लक्षणं चेदम्—"इंगियदेसंमि सयं चउव्विहाहारचायनिप्फन्नं । उव्वत्तणाइजुत्तं नऽण्णेण उ इंगिणीमरणं ॥१॥" इति ।

इदं च मरणादिस्वरूपं भगवता लोके प्ररूपितमिति लोकस्वरूपप्ररूणाय प्रश्नं कारयन्नाह—

**के अयं लोगे ?, जीवच्चेव अजीवच्चेव, के अणंता लोए ?, जीवच्चेव अजीवच्चेव, के सासया लोगे ?, जीवच्चेव अजीवच्चेव (सू० १९३)। दुविहा बोधी पं० तं०—णाणबोधी चेव दंसणबोधी चेव, दुविहा बुद्धा पं० तं०—**

उपबृंहयित्वा शेषान् प्रतिबंधांस्तस्मिन् तथा विशेषेण। धर्मे उद्यतितव्यं संयोगा इह वियोगान्ता इति ॥१५॥ १ अथ वंदित्वा देवान् यथाविधि शेषांश्च गुर्वादींश्च । प्रत्याख्याय ततः तदन्तिके सर्वमाहारं ॥१६॥ समभावे स्थितात्मा सम्यक्सिद्धान्तभणितमार्गेण । गिरिकंदरायां गत्वा पादपोपगमनमथ करोति ॥१७॥ सर्वत्राप्रतिबद्धो दंडायतमादिस्थानमिह स्थित्वा । यावज्जीवं तिष्ठति निश्चेष्टः पादपसमानः ॥१८॥ प्रथमसंहनना महानुभावाः कुर्वन्त्येतदिदं । प्रायेण शुभभावा एव निश्चलपदकारणं परमं ॥१९॥ भक्तपरिज्ञानशनं त्रिचतुर्विधाहारत्यागनिष्पन्नं । सप्रतिकर्म्म नियमात् यथासमाधि विनिर्दिष्टम् ॥२०॥ इंगितदेशे स्वयं चतुर्विधाहारत्यागनिष्पन्नं । उद्वर्त्तनादियुक्तं नान्येन त्विंगितमरणं ॥१॥

णाणबुद्धा चेव दंसणबुद्धा चेव. एवं मोहे, मूढा (सू० १०४)।

'क' इति प्रश्नार्थः, 'अय'मिति देशतः प्रत्यक्ष आसन्नश्च यत्र भगवता मरणादि प्रशस्ताऽप्रशस्तसमस्तवस्तुस्तोमतत्त्वमभ्यधायि, लोक्यत इति लोक इति प्रश्नः, अस्य निर्वचनं-जीवाश्चाजीवाश्चेति, पञ्चास्तिकायमयत्वाल्लोकस्य, तेषां च जीवाजीवरूपत्वादिति, उक्तं च—"पंचत्थिकायमइयं लोगमणाइणिहणं जिणक्खायं" ति[1]। लोकस्वरूपभूतानां च जीवाजीवानां स्वरूपं प्रश्नपूर्वकेण सूत्रद्वयेनाह—'के अणंते' त्यादि, के अनन्ताः लोके ? इति प्रश्नः, अत्रोत्तरं-जीवा अजीवाश्चेति, एत एव च शाश्वता द्रव्यार्थतयेति ॥ ये चैतेऽनन्ताः शाश्वताश्च जीवास्ते बोधिमोहलक्षणधर्मयोगाद्बुद्धा मूढाश्च भवन्तीतिदर्शनाय द्विस्थानकानुपातेन सूत्रचतुष्टयमाह—'दुविहे' त्यादि. बोधनं बोधिः-जिनधर्मलाभः ज्ञानबोधिः-ज्ञानावरणक्षयोपशमसम्भूता ज्ञानप्राप्तिः, दर्शनबोधिः-दर्शनमोहनीयक्षयोपशमादिसम्पन्नः श्रद्धानलाभ इति, एतद्वन्तो द्विविधा बुद्धाः, एते च धर्मत एव भिन्ना न धर्मितया, ज्ञानदर्शनयोरन्योऽन्याविनाभूतत्वादिति, एवं 'मोहे मूढ'त्ति, यथा बोधिर्बुद्धाश्च द्विधोक्ताः तथा मोहो मूढाश्च वाच्या इति, तद्यथा-'मोहे दुविहे पन्नत्ते तं०-णाणमोहे चेव दंसणमोहे चेव ज्ञानं मोहयति-आच्छादयतीति ज्ञानमोहो-ज्ञानावरणोदयः, एवं 'दंसणमोहे चेव' सम्यग्दर्शनमोहोदय इति, 'दुविहा-मूढा पं०-तं०-णाणमूढा चेव', 'ज्ञानमूढा' उदितज्ञानावरणाः दंसणमूढा चेव' दर्शनमूढा मिथ्यादृष्टय इति ।

द्विविधोऽप्ययं मोहो ज्ञानावरणादिकर्मनिबन्धनमिति सम्बन्धेन ज्ञानावरणादिकर्मणामष्टाभिः सूत्रैर्द्वैविध्यमाह—

१ पंचास्तिकायमयो लोकोऽनादिनिधनो जिनाख्यातः ॥

णाणावरणिज्जे कम्मे दुविहे पं० तं०—देसनाणावरणिज्जे चेव सव्वणाणावरणिज्जे चेव, दरिसणावरणिज्जे कम्मे एवं चेव, वेयणिज्जे कम्मे दुविहे पं० तं०—सातावेयणिज्जे चेव असातावेयणिज्जे चेव, मोहणिज्जे कम्मे दुविहे पं० तं०—दंसणमोहणिज्जे चेव चरित्तमोहणिज्जे चेव, आउए कम्मे दुविहे पं० तं०—अद्धाउए चेव भवाउए चेव, णामे कम्मे दुविहे पन्नत्ते तं०—सुभणामे चेव असुभणामे चेव, गोत्ते कम्मे दुविहे पं० तं०—उच्चागोते चेव णीयागोते चेव, अंतराइए कम्मे दुविहे पं० तं०—पडुप्पन्नविणासिए चेव पिहितआगामिपहं (सू० १०५)।

'णाणे'त्यादि, सुगमानि चैतानि, नवरं ज्ञानमावृणोतीति ज्ञानावरणीयम्, आह च—"सरउंग्गयससिनिम्मलयरस्स जीवस्स छायणं जमिह। णाणावरणं कम्मं पडोवमं होइ एवं तु ॥१॥" देशं—ज्ञानस्याऽऽभिनिबोधिकादिमावृणोतीति देशज्ञानावरणीयम्, सर्वं ज्ञानं—केवलाख्यमावृणोतीति सर्वज्ञानावरणीयं, केवलावरणं हि आदित्यकल्पस्य केवलज्ञानरूपस्य जीवस्याच्छादकतया सान्द्रमेघवृन्दकल्पमिति तत्सर्वज्ञानावरणं, मत्याद्यावरणं तु घनातिच्छादितादित्येषत्प्रभाकल्पस्य केवलज्ञानदेशस्य कटकुटयादिरूपावरणतुल्यमिति देशावरणमिति, पठ्यते च—"केवेलणाणावरणं १ दंसण छक्कं च मोहबारसगं। [अनन्तानुबन्ध्यादीत्यर्थः] ता सव्वघाइसन्ना भवंति मिच्छत्तवीसइमं ॥१॥"ति, अथवा देशोपघातिसर्वोपघातिफड्डकापेक्षया देशसर्वावरणत्वमस्य, यदाह—"मतिसुयणाणावरणं दंसणमोहं च तदु

१ शरदुद्गतशशिनिर्मलतरस्य जीवस्याच्छादनं यदिह। ज्ञानावरणं कर्म पटोपमं भवत्येवमेव ॥१॥ २ केवलज्ञानावरणं दर्शनषट्कं च मोहद्वादशकं। ताः सर्वघातिसंज्ञाः भवंति मिथ्यात्वं विंशतितमं ॥१॥ ३ मतिश्रुतज्ञानावरणं दर्शनमोहश्च तदुपघातीनि। तत्स्पर्द्धकानि द्विविधानि देशसर्वो-

घगाईणि । तप्फड्गाइं दुविहाइं देससव्वोवघाईणि ॥१॥ सव्वेसु मव्वघाइसु हएसु देसोवघाइयाणं च । भागेहिं मुच्चमाणो समए समए अणंतेहिं ॥२॥ पढमं लहइ नगारं एक्केक्कं वन्नमेवमन्नंपि । कमसो विसुज्झमाणो लहइ समत्तं नमोकारं ॥३॥" इति, तथा दर्शनं—सामान्यार्थबोधरूपमावृणोतीति दर्शनावरणीयं, उक्तं च—"दंसणसीले जीवे दंसणघायं करेइ जं कम्मं । तं पडिहारसमाणं दंसणवरणं भवे जीवे ॥१॥" इति, एवं 'चेव' त्ति देशदर्शनावरणीयं चक्षुरचक्षुरवधिदर्शनावरणीयम्, सर्वदर्शनावरणीयं तु निद्रापञ्चकं केवलदर्शनावरणीयं चेत्यर्थः, भावना तु पूर्ववदिति, तथा वेद्यते—अनुभूयत इति वेदनीयं, सातं—सुखं तद्रूपतया वेद्यते यत्तत्तथा, दीर्घत्वं प्राकृतत्वात्, इतरद्—एतद्विपरीतम्, आह च—"महुलित्तनिसियकरवालधार जीहाएँ जारिसं लिहणं । तारिसयं सुहदुहउप्पायगं मुणह ॥१॥" इति, मोहयतीति मोहनीयं, तथाहि—"जह मज्जपाणमूढो लोए पुरिसो परव्वसो होइ । तह मोहेणवि मूढो जीवो उ परव्वसो होइ ॥१॥" इति, दर्शनं मोहयतीति दर्शनमोहनीयं—मिथ्यात्वमिश्रसम्यक्त्वभेदं, चारित्रं—सामायिकादि मोहयति यत्कषाय १६ नोकषाय ९ भेदं तत्तथा, एति च याति चेत्यायुः एतद्रूपं च "दुक्खं न देइ आउं नविय सुहं देइ चउसुवि गईसुं । दुक्खसुहाणाहारं धरेइ देहट्ठियं जीवं ॥१॥" इति । अद्धायुः—कायस्थितिरूपं, भावना तु प्राग्वत्, भवायुर्भवस्थितिरिति, विचित्रपर्यायैर्नमयति

---

घातीनि ॥१॥ सर्वेषु सर्वघातिषु हतेषु देशोपघातिनां च । भागैर्मुच्यमानः समये समयेऽनन्तैः ॥२॥ प्रथमं लभते नकारं एकैकं वर्णमेवमन्यमपि । क्रमशो विशुध्यमानो लभते सम्पूर्णं नमस्कारं ॥३॥ १ दर्शनशीले जीवे दर्शनघातं करोति यत्कर्म । तत्प्रतीहारसमानं दर्शनावरणं भवेज्जीवे ॥१॥ २ मधुलिप्तनिशितकरवालधाराया जिह्वया यादृशं लेहनं । तादृशं वेदनीयं सुखदुःखोत्पादकं जानीत ॥१॥ ३ यथा मद्यपानमूढो लोके पुरुषः परवशो भवति । तथा मोहेनापि मूढो जीवश्च परवशो भवति ॥१॥ ४ दुःखं न ददात्यायुः नापि च सुखं ददाति चतसृष्वपि गतिषु । दुःखसुखयोराधारं

–परिणमयति यज्जीवं तन्नाम, एतत्स्वरूपं च 'जह चित्तयरो निउणो अणेगरूवाइं कुणइ रूवाइं । सोहणमसोहणाइं चोक्खमचोक्खेहिं वण्णेहिं ॥१॥ तह नामंपि हु कम्मं अणेगरूवाइं कुणइ जीवस्स । सोहणमसोहणाइं इट्ठाणिट्ठाइं लोयस्स ॥२॥' इति, शुभं–तीर्थकरादि अशुभम्–अनादेयत्वादीति, पूज्योऽयमित्यादिव्यपदेशरूपां गां–वाचं त्रायत इति गोत्रं, स्वरूपं चास्येदम्—"जह[2] कुंभारो भंडाइं कुणइ पुज्जेयराइं लोयस्स । इय गोयं कुणइ जियं लोए पुज्जेयरावत्थं ॥१॥" इति, उच्चैर्गोत्रं पूज्यत्वनिबन्धनमितरत्तद्विपरीतं, जीवं चार्थसाधनं चान्तरा एति–पततीत्यन्तरायम्, इदं चैवं—"जह[3] राया दाणाइं ण कुणई भंडारिए विकूलंमि । एवं जेणं जीवो कम्मं तं अंतरायंति ॥१॥" 'पडुपन्नविणासिए चेव' त्ति प्रत्युत्पन्नं–वर्त्तमानलब्धं वस्त्वित्यर्थो विनाशितम्–उपहतं येन तत्तथा, पाठान्तरेण प्रत्युत्पन्नं विनाशयतीत्येवंशीलं प्रत्युत्पन्नविनाशि, चैवः समुच्चये, इत्येकम्, अन्यच्च पिधत्ते च–निरुणद्धि च आगामिनो–लब्धव्यस्य वस्तुनः पन्था आगामिपथस्तमिति, क्वचिदागामिपथानिति दृश्यते, क्वचिच्च आगमपहंति, तत्र च लाभमार्गमित्यर्थः ।

इदं चाष्टविधं कर्म मूर्च्छाजन्यमिति मूर्च्छास्वरूपमाह—

**दुविहा मुच्छा पं० तं०—पेज्जावत्तिता चेव दोसवत्तिता चेव, पेज्जवत्तिया मुच्छा दुविहा पं० तं०—माए चेव लोभे चेव, दोसवत्तिया मुच्छा दुविहा पं० तं०—कोहे चेव माणे चेव ( सू० १०६ ) दुविहा आराहणा पं०**

धारयति देहस्थितं जीवं॥१॥ १ यथा चित्रकारो निपुणोऽनेकरूपाणि करोति रूपाणि। शोभनान्यशोभनानि चोक्षाण्यचोक्षाणि वर्णैः ॥१॥ तथा नामान्येव कर्मानेकानि रूपाणि करोति जीवस्य । शोभनान्यशोभनानीष्टान्यनिष्टानि लोके ॥१॥ २ यथा कुम्भकारो भांडानि करोति पूज्येतराणि लोकस्य । एवं गोत्रं करोति जीवं लोके पूज्येतरावस्थं ॥१॥ ३ यथा राजा दानादि न करोति भांडागारिके विकूले । एवं येन जीवः क तदन्तरायमिति॥१॥

तं०—धम्मितारा॒हणा चेव केवलिआराहणा चेव, धम्मियाराहणा दुविहा पं० तं—सुयधम्माराहणा चेव, चरित्तधम्माराहणा चेव, केवलिआराहणा दुविहा पं०, तं०—अंतकिरिया चेव कप्पविमाणोववत्तिआ चेव ( सू० १०७ ) दो तित्थगरा नीलुप्पलसमा वन्नेणं पं० तं०—मुणिसुव्वए चेव अरिट्ठनेमी चेव, दो तित्थयरा पियंगुसमा वन्नेणं पं० तं०—मल्ली चेव पासे चेव, दो तित्थयरा पउमगोरा वन्नेणं पं० तं०—पउमप्पहे चेव वासुपज्जे चेव, दो तित्थगरा चंदगोरा वन्नेणं पं० तं०—चंदप्पभे चेव पुप्फदंते चेव ( सू० १०८ )

'दुविहे' त्यादि सूत्रत्रयं कण्ठ्यं, नवरं मूर्च्छा–मोहः सदसद्विवेकनाशः प्रेम–रागो वृत्तिः–वर्त्तनं रूपं प्रत्ययो वा–हेतुर्यस्याः सा प्रेमवृत्तिका प्रेमप्रत्यया वा, एवं द्वेषवृत्तिका द्वेषप्रत्यया वेति ॥ मूर्च्छोपात्तकर्मणश्च क्षय आराधनयेति तां सूत्रत्रयेणाह—'दुविहे' त्यादि, सूत्रत्रयं कण्ठ्यम्, नवरं आराधनमाराधना–ज्ञानादिवस्तुनोऽनुकूलवर्तित्वं निरतिचारज्ञानाद्यासेवेतियावत् धर्मेण–श्रुतचारित्ररूपेण चरन्तीति धार्मिकाः–साधवस्तेषामियं धार्मिकी सा चासावाराधना च धार्मिकाराधना, केवलिनां–श्रुतावधिमनःपर्यायकेवलज्ञानिनामियं केवलिकी सा चासावाराधना चेति केवलिक्याराधनेति । 'सुयधम्मे' त्यादौ विषयभेदेनाराधनाभेद उक्तः, 'केवलिआराहणे' त्यादौ तु फलभेदेनेति, तत्र अन्तो–भवान्तस्तस्य क्रिया अन्तक्रिया, भवच्छेद इत्यर्थः, तद्धेतुर्याऽऽराधना शैलेशीरूपा साऽन्तक्रियेति, उपचारात् , एषा च क्षायिकज्ञाने केवलिनामेव भवति । तथा 'कल्पेषु' देवलोकेषु, न तु ज्योतिश्चारे, विमानानि–देवावासविशेषाः अथवा कल्पाश्च–सौधर्मादयो विमानानि च–तदुपरिवर्त्तिग्रैवेयकादीनि कल्पविमानानि तेषूपपत्तिः–उपपातो जन्म यस्याः सकाशात् सा कल्पविमानोपपत्तिका ज्ञानाद्याराधना, एषा च श्रुतकेवल्यादीनां भवतीति, एवंफला चेयमनन्तरफलद्वारेणोक्ता परम्परया

-परिणमयति यज्जीवं तन्नाम, एतत्स्वरूपं च 'जह चित्तयरो निउणो अणेगरूवाइं कुणइ रूवाइं । सोहणमसोहणाइं चोक्खमचोक्खेहिं वण्णेहिं ॥१॥ तह नामंपि हु कम्मं अणेगरूवाइं कुणइ जीवस्स । सोहणमसोहणाइं इट्ठाणिट्ठाइं लोयस्स ॥२॥' इति, शुभं-तीर्थकरादि अशुभम्-अनादेयत्वादीति, पूज्योऽयमित्यादिव्यपदेशरूपां गां-वाचं त्रायत इति गोत्रं, स्वरूपं चास्येदम्—"जह[2] कुंभारो भंडाइं कुणइ पुज्जेयराइं लोयस्स । इय गोयं कुणइ जियं लोए पुज्जेयरावत्थं ॥१॥" इति, उच्चैर्गोत्रं पूज्यत्वनिबन्धनमितरत्तद्विपरीतं, जीवं चार्थसाधनं चान्तरा एति-पततीत्यन्तरायम्, इदं चैवं—"[3]जह राया दाणाइं ण कुणई भंडारिए विकूलंमि । एवं जेणं जीवो कम्मं तं अंतरायंति ॥१॥" 'पडुपन्नविणासिए चेव' त्ति प्रत्युत्पन्नं-वर्त्तमानलब्धं वस्त्वित्यर्थो विनाशितम्-उपहतं येन तत्तथा, पाठान्तरेण प्रत्युत्पन्नं विनाशयतीत्येवंशीलं प्रत्युत्पन्नविनाशि, चैवः समुच्चये, इत्येकम्, अन्यच्च पिधत्ते च-निरुणद्धि च आगामिनो-लब्धव्यस्य वस्तुनः पन्था आगामिपथस्तमिति, क्वचिदागामिपथानिति दृश्यते, क्वचिच्च आगमपहंति, तत्र च लाभमार्गमित्यर्थः ।

इदं चाष्टविधं कर्म मूर्च्छाजन्यमिति मूर्च्छास्वरूपमाह—

**दुविहा मुच्छा पं० तं०—पेज्जावत्तिता चेव दोसवत्तिता चेव, पेज्जवत्तिया मुच्छा दुविहा पं० तं०—माए चेव लोभे चेव, दोसवत्तिया मुच्छा दुविहा पं० तं०—कोहे चेव माणे चेव ( सू० १०६ ) दुविहा आराहणा पं०**

धारयति देहस्थितं जीवं॥१॥ १ यथा चित्रकारो निपुणोऽनेकरूपाणि करोति रूपाणि। शोभनान्यशोभनानि चोक्षाण्यचोक्षाणि वर्णैः ॥१॥ तथा नामाप्येव कर्मानेकानि रूपाणि करोति जीवस्य । शोभनान्यशोभनानीष्टान्यनिष्टानि लोके ॥१॥ २ यथा कुम्भकारो भांडानि करोति पूज्येतराणि लोकस्य । एवं गोत्रं करोति जीवं लोके पूज्येतरावस्थं ॥१॥ ३ यथा राजा दानादि न करोति भांडागारिके विकूले । एवं येन जीवः क[6] तदन्तरायमिति॥१॥

तं०—धम्मियाराहणा चेव केवलिआराहणा चेव, धम्मियाराहणा दुविहा पं० तं—सुयधम्माराहणा चेव, चरित्तधम्माराहणा चेव, केवलिआराहणा दुविहा पं०, तं०—अंतकिरिया चेव कप्पविमाणोववत्तिआ चेव (सू० १०७) दो तित्थगरा नीलुप्पलसमा वन्नेणं पं० तं०—मुणिसुव्वए चेव अरिट्ठनेमी चेव, दो तित्थयरा पियंगुसमा वन्नेणं पं० तं०—मल्ली चेव पासे चेव, दो तित्थयरा पउमगोरा वन्नेणं पं० तं०—पउमप्पहे चेव वासुपुज्जे चेव, दो तित्थगरा चंदगोरा वन्नेणं पं० तं०—चंदप्पभे चेव पुप्फदंते चेव (सू० १०८)

'दुविहे' त्यादि सूत्रत्रयं कण्ठ्यं, नवरं मूर्च्छा—मोहः सदसद्विवेकनाशः प्रेम—रागो वृत्तिः—वर्त्तनं रूपं प्रत्ययो वा—हेतुर्यस्याः सा प्रेमवृत्तिका प्रेमप्रत्यया वा, एवं द्वेषवृत्तिका द्वेषप्रत्यया वेति ॥ मूर्च्छोपात्तकर्मणश्च क्षय आराधनयेति तां सूत्रत्रयेणाह—'दुविहे' त्यादि, सूत्रत्रयं कण्ठ्यम्, नवरं आराधनमाराधना—ज्ञानादिवस्तुनोऽनुकूलवर्तित्वं निरतिचारज्ञानाद्यासेवेतियावत् धर्मेण—श्रुतचारित्ररूपेण चरन्तीति धार्मिकाः—साधवस्तेषामियं धार्मिकी सा चासावाराधना च धार्मिकाराधना, केवलिनां—श्रुतावधिमनःपर्यायकेवलज्ञानिनामियं केवलिकी सा चासावाराधना चेति केवलिक्याराधनेति । 'सुयधम्मे' त्यादौ विषयभेदेनाराधनाभेद उक्तः, 'केवलिआराहणे' त्यादौ तु फलभेदेनेति, तत्र अन्तो—भवान्तस्तस्य क्रिया अन्तक्रिया, भवच्छेद इत्यर्थः, तद्धेतुर्याऽऽराधना शैलेशीरूपा साऽन्तक्रियेति, उपचारात् , एषा च क्षायिकज्ञाने केवलिनामेव भवति । तथा 'कल्पेषु' देवलोकेषु, न तु ज्योतिश्चारे, विमानानि—देवावासविशेषाः अथवा कल्पाश्च—सौधर्मादयो विमानानि च—तदुपरिवर्त्तिग्रैवेयकादीनि कल्पविमानानि तेषूपपत्तिः—उपपातो जन्म यस्याः सकाशात् सा कल्पविमानोपपत्तिका ज्ञानाद्याराधना, एषा च श्रुतकेवल्यादीनां भवतीति, एवंफला चेयमनन्तरफलद्वारेणोक्ता परम्परया

तु भवान्तक्रियाऽनुपातिन्येवेति । ज्ञानाद्याराधनाऽनन्तरमुक्ता, तत्फलभूताश्च तीर्थंकरास्तैर्वा सा सम्यक्कृता देशिता वेति तीर्थंकरान् द्विस्थानकानुपातेनाह—दो तित्थयरे' त्यादि सूत्रचतुष्टयं कण्ठ्यम्, नवरं पद्मं-रक्तोत्पलं तद्वद् गौरौ पद्मगौरौ, रक्ताविन्यर्थः, तथा चन्द्रगौरौ चन्द्रशुक्लावित्यर्थः, गाथाऽत्र—"पउमाभवासुपुज्जा रत्ता ससिपुप्फदंत ससिगोरा । सुव्वयनेमी काला पासो मल्ली पियंगाभा ॥ १ ॥" इति ।

तीर्थंकरस्वरूपमनन्तरमुक्तम्, तीर्थंकर्तृत्वाच्च तीर्थंकराः, तीर्थं च प्रवचनमतः प्रवचनैकदेशस्य पूर्वविशेषस्य द्विस्थानकावतारायाह—

सच्चप्पवायपुव्वस्स णं दुवे वत्थू पं०, (सू० १०९) पुव्वाभद्दवयाणक्खत्ते दुतारे पन्नत्ते, उत्तरभद्दवयाणक्खत्ते दुतारे पण्णत्ते, एवं पुव्वफग्गुणी उत्तराफग्गुणी (सू० ११०) अंतो णं मणुस्सखेत्तस्स दो समुद्दा पं० तं०—लवणे चेव कालोदे चेव (सू० १११) दो चक्कवट्टी अपरिचत्तकामभोगा कालमासे कालं किच्चा अहेसत्तमाए पुढवीए अप्पतिट्ठाणे णरए नेरइयत्ताए उववन्ना तं०—सुभूमे चेव बंभदत्ते चेव (सू० ११२)

'सच्चप्पवाये'त्यादि, सद्भ्यो-जीवेभ्यो हितः सत्यः-संयमः सत्यवचनं वा स यत्र सभेदः सप्रतिपक्षश्च प्रकर्षेणोद्यते-अभिधीयते तत्सत्यप्रवादं तच्च तत्पूर्वं च सकलश्रुतात्पूर्वं क्रियमाणत्वादिति सत्यप्रवादपूर्वं, तच्च षष्ठं, तत्परिमाणं च एका पदकोटी षट्पदाधिका, तस्य द्वे वस्तुनी, वस्तु च-तद्विभागविशेषोऽध्ययनादिवदिति । अनन्तरं षष्ठपूर्वस्वरूपमुक्तमधुना पूर्वशब्दसाम्यात् पूर्वभाद्रपद-

१ पद्मप्रभवासुपूज्यौ रक्तौ चंद्रसुविधी शशिगौरौ । सुव्रतनेमी कृष्णौ पार्श्वमल्ली प्रियंग्वाभौ ॥१॥

नक्षत्रमन्तरमाह—'पुव्वे' त्यादि कण्ठ्यम्। नक्षत्रप्रस्तावान्नक्षत्रान्तरस्वरूपं सूत्रत्रयेणाह—'उत्तरे'त्यादि कण्ठ्यम्। नक्षत्रवन्तश्च द्वीपाः समुद्राश्चेति समुद्रद्विस्थानकमाह—'अंतो ण'मित्यादि, अन्तः-मध्ये 'मनुष्यक्षेत्रस्य' मनुष्योत्पत्त्यादिविशिष्टाकाशखण्डस्य पञ्चचत्वारिंशद्योजनलक्षप्रमाणस्य, शेषं कण्ठ्यमिति। मनुष्यक्षेत्रप्रस्तावाद्भरतक्षेत्रोत्पन्नोत्तमपुरुषाणां नरकगामितया द्विस्थानकावतारमाह—'दो चक्कवट्टी' त्यादि, द्वौ चक्रेण-रत्नभूतप्रहरणविशेषेण वर्त्तितुं शीलं ययोस्तौ चक्रवर्त्तिनौ, 'कामभोग'त्ति कामौ च-शब्दरूपे भोगाश्च-गन्धरसस्पर्शाः कामभोगाः, अथवा काम्यन्त इति कामा मनोज्ञा इत्यर्थः ते च ते भुज्यन्त इति भोगाश्च-शब्दादय इति कामभोगा न परित्यक्तास्ते याभ्यां तौ तथा 'कालमासे'त्ति कालस्य-मरणस्य मासः उपलक्षणं चैतत्पक्षाहोरात्रादेस्ततश्च कालमासे, मरणावसर इति भावः, 'कालं मरणं कृत्वा अधःसप्तम्यां पृथिव्यां, तमस्तमायामित्यर्थः अधोग्रहणं विना सप्तमी उपरिष्टाच्चिन्त्यमाना रत्नप्रभाऽपि स्यादित्यधोग्रहणं, अप्रतिष्ठाने नरके पञ्चानां मध्यमे नैरयिकत्वेनोत्पन्नौ, सुभूमोऽष्टमो ब्रह्मदत्तश्च द्वादशः, तत्र च तयोस्त्रयस्त्रिंशत्सागरोपमाणि स्थितिरिति।

नारकाणां चासङ्ख्येयकालाऽपि स्थितिर्भवतीति भवनपत्यादीनामपि तां दर्शयन् पञ्चसूत्रीमाह—

असुरिंदवज्जियाणं भवणवासीणं देवाणं देसूणाइं दो पलिओवमाइं ठिती पन्नत्ता, सोहम्मे कप्पे देवाणं उक्कोसेणं दो सागरोवमाइं ठिती पन्नत्ता, ईसाणे कप्पे देवाणं उक्कोसेणं सातिरेगाइं दो सागरोवमाइं ठिती पन्नत्ता, सणंकुमारे कप्पे देवाणं जहन्नेणं दो सागरोवमाइं ठिती पन्नत्ता, माहिंदे कप्पे देवाणं जहन्नेणं साइरेगाइं दो

सागरोवमाइं ठिती पन्नत्ता। (सू० ११३) दोसु कप्पेसु कप्पत्थियाओ पन्नत्ताओ, तं०—सोहम्मे चेव ईसाणे चेव (सू० ११४) दोसु कप्पेसु देवा तेउलेस्सा पन्नत्ता, तं०—सोहम्मे चेव ईसाणे चेव (सू० ११५) दोसु कप्पेसु देवा कायपरियारगा पं० तं०—सोहम्मे चेव ईसाणे चेव, दोसु कप्पेसु देवा फासपरियारगा पं० तं०—सणंकुमारे चेव माहिंदे चेव, दोसु कप्पेसु देवा रूवपरियारगा पं० तं०—बंभलोगे चेव लंतगे चेव, दोसु कप्पेसु देवा सद्दपरियारगा पं० तं०—महासुक्के चेव सहस्सारे चेव, दो इंदा मणपरियारगा पं० तं०—पाणए चेव अच्चुए चेव (सू० ११६) जीवा णं दुट्ठाणणिव्वत्तिए पोग्गले पावकम्मत्ताए चिणिंसु वा चिणंति वा चिणिस्संति वा, तं०—तसकायनिव्वत्तिए चेव थावरकायनिव्वत्तिए चेव, एवं उवचिणिंसु वा उवचिणंति वा उवचिणिस्संति वा, बंधिंसु वा बंधंति वा बंधिस्संति वा, उदीरिंसु वा उदीरेंति वा उदीरिस्संति वा, वेदेंसु वा वेदेंति वा वेदिस्संति वा, णिज्जरिंसु वा णिज्जरिंति वा णिज्जरिस्संति वा (सू० ११७) दुपएसिता खंधा अणंता पन्नत्ता दुपदेसोगाढा पोग्गला अणंता पन्नत्ता एवं जाव दुगुणलुक्खा पोग्गला अणंता पन्नत्ता (सू० ११८) उद्देशकः ४ ॥ दुट्ठाणं समत्तं ॥

'असुरे'त्यादि, असुरेन्द्रौ—चमरबली तद्वर्जितानां [ तत्सामानिकवर्जितानां च, सूत्रे इन्द्रग्रहणेन सामानिकानामपि ग्रहणाद् ,

१ चमरबली तद्वर्जितानामन्येषां भवनवासिनां देवानां असुरेन्द्रवर्जनात् नागकुमारादीन्द्राणामित्यर्थः उत्कर्षतो द्वे प० भवनेषु दक्षिणार्धपतीनामित्यादिवचनात् सम्यगेषोऽपि पाठः

अन्यथा सामानिकत्वमेव तेषां न स्यादिति, शेषाणां त्रायस्त्रिंशादीनामसुराणां तदन्येषां च ] भवनवासिनां देवानामुत्कर्षतो द्वे पल्योपमे किञ्चिदूने स्थितिः प्रज्ञप्ता, उक्तञ्च—"चमर १ बलि २ सार ३ महियं ४ सेसाण सुराण आउयं वोच्छं । दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं ॥१॥"ति, उत्कर्षत एतैतत् जघन्यतस्तु दशवर्षसहस्राणीति, आह च –"दस भवणवणयराणं वाससहस्सा ठिई जहन्नेणं । पलिओवममुक्कोसं वंतरियाणं वियाणिज्जा ॥१॥" इति, शेषं सुगमम् , नवरं सौधर्मादिष्वियं स्थितिः—"दो १ साहि २ सत्त ३ साही ४ दस ५ चोद्दस ६ सत्तरे व ७ अयराइं । सोहम्मा जा सुक्को तदुवरि एक्केकमारोवे ॥२॥" इति, इयमुत्कृष्टा, जघन्या तु "पलियं १ अहियं २ दो सार ३ साहिया ४ सत्त ५ दस य ६ चोद्दस य ७ । सत्तरस सहस्सारे ८ तदुवरि एक्केकमारोवे ॥३॥"इति । देवलोकप्रस्तावात् स्त्र्यादिद्वारेण देवलोकद्विस्थानकावतारं सप्तसूत्र्याऽऽह—'दोसु' इत्यादि, कल्पयोः–देवलोकयोः स्त्रियः कल्पस्त्रियो–देव्यः, परतो न सन्ति, शेषं कण्ठ्यमिति १, नवरं 'तेउलेस'त्ति तेजोरूपा लेश्या येषां ते तेजोलेश्याः, ते च सौधर्मेशानयोरेव न परतः, तयोस्तेजोलेश्या एव, नेतरे, आह च—"किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया । जोइस सोहम्मीसाण तेऊलेसा मुणेयव्वा ॥१॥" इति, 'कायपरियारग'त्ति परिचरन्ति–सेवन्ते स्त्रियमिति परिचारकाः कायतः परिचारकाः कायपरिचारकाः, एवमुत्तरत्रापि,

१ समाने विभवादिनि भवा सामानिका इत्युक्तेरीप्सितमेतत् , २ चमरबलिनोः सागरमधिकं च शेषाणां सुराणां आयुः वक्ष्ये । दाक्षिणात्यानां सार्धपल्यं देशोनं द्वे उत्तराणां ॥१॥ ३ भवनव्यन्तरयोर्दशवर्षसहस्राणि जघन्येन स्थितिः पल्योपममुत्कृष्टं व्यन्तराणां विजानीयात् ॥१॥ ४ द्वे साधिके सप्त साधिकानि दश चतुर्दश सप्तदश सागरोपमाणि । सौधर्माद्यावच्छुक्रः तदुपर्येकैकमारोपयेत् ॥१॥ ५ पल्यं अधिकं द्वे साधिके सागरे सप्त दश च चतुर्दश च । सप्तदश सहस्रारे तदुपर्येकैकमारोपयेत् ॥१॥ ६ कृष्णनीलकापोततेजोलेश्याश्च भवनव्यन्तराः । ज्योतिष्कसौधर्मेशानेषु

नवरं स्पर्शादिपरिचारकाः स्पर्शादेरेवोपशान्तवेदोपतापा भवन्तीत्यभिप्रायः, आनतादिषु चतुर्षु कल्पेषु मनःपरिचारका देवा भवन्तीति वक्तव्ये द्विस्थानकानुरोधाद् 'दो इंदा' इत्युक्तं, आनतादिषु हि द्वाविन्द्राविति, गाथाऽत्र—"दो[1] कायप्पवियारा कप्पा फरिसेण दोन्नि दो रूवे। सद्दे दो चउर मणे उवरिं परियारणा नत्थि ॥१॥" इयं च परिचारणा कर्मतः, कर्म च जीवाः स्वहेतुभिः कालत्रयेऽपि चिताद्यवस्थं कुर्वन्तीत्याह—'जीवाण'मित्यादि, सूत्राणि षट् सुगमानि, नवरं, जीवा—जन्तवो, णं वाक्यालङ्कारे, द्वयोः स्थानयोः—आश्रययोस्त्रसस्थावरकायलक्षणयोः समाहारो द्विस्थानम्, तत्र मिथ्यात्वादिभिय निर्वर्त्तिताः—सामान्येनोपार्जिताः वक्ष्यमाणावस्थाषट्कयोग्यीकृताः द्वयोर्वा स्थानयोः निर्वृत्तिर्येषां ते द्विस्थाननिर्वृत्तिकास्तान् पुद्गलान् कार्मणान् पापकर्म—घातिकर्म सर्वमेव वा ज्ञानावरणादि तद्भावस्तत्ता तया पापकर्मतया तद्रूपतयेत्यर्थः, चितवन्तो वा अतीतकाले चिन्वन्ति वा सम्प्रति चेष्यन्ति वा अनागतकाले केचिदिति गम्यते, चयनं च कषायादिपरिणतस्य कर्मपुद्गलोपादानमात्रं, उपचयनं तु चितस्याबाधाकालं मुक्त्वा ज्ञानावरणीयादितया निषेकः, स चैवं—प्रथमस्थितौ बहुतरं कर्मदलिकं निषिञ्चति ततो द्वितीयायां विशेषहीनमेवं "जावुक्कोसियाए विशेषहीणं णिसिंचइ" इति, बन्धनं तु तस्यैव ज्ञानावरणादितया निषिक्तस्य पुनरपि कषायपरिणतिविशेषान्निकाचनमिति, उदीरणं त्वनुदयप्राप्तस्य करणेनाकृष्योदये क्षेपणमिति, वेदनम्—अनुभवः, निर्जरा—कर्मणोऽकर्मताभवनमिति। कर्म च पुद्गलात्मकमिति पुद्गलान् द्रव्यक्षेत्रकालभावैर्द्विस्थानकावतारेण निरूपयन्नाह—'दुपएसी'त्यादि सूत्राणि त्रयोविंशतिः, सुगमा चेयं, नवरं यावत्करणात् 'दुसमयट्ठिइए'-

तेजोलेश्या ज्ञातव्या ॥१॥

१ द्वौ कायप्रविचारौ कल्पौ स्पर्शेन द्वौ द्वौ रूपेण। द्वौ शब्देन चत्वारो मनसोपरि परिचारणा नास्ति ॥१॥

न्यादि सूत्राण्येकविंशतिर्वाच्यानि, कालं पञ्चद्विपञ्चाष्टभेदान् वर्णगन्धरसस्पर्शांश्चाश्रित्येति, वाचना चैवं—'दुसमयट्ठिईया पोग्गले'त्यादि ॥ द्विस्थानकस्य चतुर्थ उद्देशकः समाप्तः । तत्समाप्तौ च श्रीमदभयदेवसूरिविरचिते स्थानाङ्गतृतीयाङ्गविवरणे द्वितीयमध्ययनं द्विस्थानकाभिधानं समाप्तमिति ॥

इति श्रीस्थानाङ्गाख्ये तृतीयेऽङ्गे द्विस्थानकाख्यं द्वितीयमध्ययनं समाप्तम् ।

द्विस्थानकानन्तरं त्रिस्थानकमेव भवति संख्याक्रमप्रामाण्यादित्यनेन सम्बन्धेनायातस्य चतुरनुयोगद्वारस्य चतुरुद्देशकस्यास्य तत्रापि द्वितीयाध्ययनान्त्योद्देशके जीवादिपर्याया उक्ता अस्याप्यध्ययनस्य प्रथमोद्देशके त एवाभिधीयन्त इत्येवंसम्बन्धस्यैतत् प्रथमोद्देशकस्य तत्राप्यनन्तरोद्देशकान्त्यसूत्रे पुद्गलधर्मा उक्ता एतत्प्रथमसूत्रे तु जीवधर्मा उच्यन्त इत्येवंसम्बन्धस्यैतदादिसूत्रस्य—

**तओ इंदा पण्णत्ता तं०—णामिंदे ठवणिंदे दव्विंदे, तओ इंदा पं० तं०—णाणिंदे दंसणिंदे चरित्तिंदे, तओ इंदा पं० तं०—देविंदे असुरिंदे मणुस्सिंदे ( सू० ११९ )**

'तओ इंदे'त्यादेर्व्याख्या, सा च सुकरैव, नवरमिन्दनाद्–ऐश्वर्याद् इन्द्रः नाम–संज्ञा तदेव यथार्थमिन्द्रेत्यक्षरात्मकमिन्द्रो नामेन्द्रः, अथवा सचेतनस्याचेतनस्य वा यस्येन्द्र इत्ययथार्थं नाम क्रियते स नामनामवतोरभेदोपचारान्नाम चासाविन्द्रश्चेति नामेन्द्रः, अथवा नाम्नैवेन्द्र इन्द्रार्थशून्यत्वान्नामेन्द्र इति, नामलक्षणं पुनरिदम्–"यद्वस्तुनोऽभिधानं स्थितमन्यार्थे तदर्थनिरपेक्षम्। पर्यायानभिधेयश्च नाम यादृच्छिकं च तथा ॥१॥" इति, अयमर्थः–यद्वस्त्वित्यादिना यथार्थमिन्द्र इत्याद्युक्तं, स्थितमित्यादिना त्वयथार्थं गोपालादाविन्द्रेत्यादि, यादृच्छिकमनर्थकं डित्थादीति ३, अथवा यदिन्दनाद्यर्थनिरपेक्षं गोपालादिवस्तुन इन्द्र इत्यादिकमभिधानं यथार्थतया शक्रादावन्यत्रार्थे स्थितं तन्नामेति, इन्द्रादिवस्तुनो वा अभिधानमिन्दनाद्यर्थनिरपेक्षं सद् गोपालादावन्यत्रार्थे स्थितं नामेति। तथा इन्द्राद्यभिप्रायेण स्थाप्यत इति स्थापना—लेप्यादिकर्म सैवेन्द्रः स्थापनेन्द्रः, इन्द्रप्रतिमा साकारस्थापनेन्द्रः अक्षादिन्यासस्त्वितर इति, स्थापनालक्षणमिदम्—"यत्तु तदर्थवियुक्तं तदभिप्रायेण यच्च तत्करणिः। लेप्यादिकर्म तत् स्थापनेति क्रियतेऽल्पकालञ्च ॥१॥"

इति, तथा, "[1]कट्ठगहत्थी हत्थित्ति एस सब्भाविया भवे ठवणा । होइ असब्भावे पुण हत्थित्ति निरागिई अक्खो ॥१॥" इति, द्रवति-गच्छति तांस्तान् पर्यायान् द्रूयते वा तैस्तैः पर्यायैर्द्रवो-सत्ताया अवयवो विकारो वा वर्णादिगुणानां वा द्राव:-समूह इति द्रव्यं, तच्च भूतभावं भाविभावं चेति, आह च—"[2]दवए १ दुयए २ दोरवयवो विगारो ३ गुणाण संदावो ४ । दव्वं भव्वं भावस्स भूयभावं च जं जोगं ॥१॥" ति, इति । तथा "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं गदितम् ॥१॥" तथा 'अनुपयोगो द्रव्यमप्रधानं चे'ति, तत्र द्रव्यं चासाविन्द्रश्चेति द्रव्येन्द्रः, स च द्विधा-आगमतो नोआगमतश्च, तत्र आगमतः-खल्वागममधिकृत्य ज्ञानापेक्षयेत्यर्थः, नोआगमतस्तु तद्विपर्ययमाश्रित्य, तत्रागमत इन्द्रशब्दाध्येताऽनुपयुक्तो द्रव्येन्द्रः 'अनुपयोगो द्रव्य'मिति वचनात्, अयमेवार्थो मङ्गलमाश्रित्य भाष्य उक्तः, तथाहि—"[3]आगमओऽणुवउत्तो मंगलसद्दाणुवासिओ वत्ता । तन्नाणलद्धिजुत्तोवि णोवउत्तोत्ति तो दव्वं ॥१॥"इति, तथा नोआगमतस्त्रिविधो द्रव्येन्द्रः, तद्यथा-ज्ञशरीरद्रव्येन्द्रो भव्यशरीरद्रव्येन्द्रो ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्येन्द्रश्चेति, तत्र ज्ञस्य शरीरं ज्ञशरीरं ज्ञशरीरमेव द्रव्येन्द्रः ज्ञशरीरद्रव्येन्द्रः, एतदुक्तं भवति—इन्द्रपदार्थज्ञस्य यच्छरीरमात्मरहितं तदतीतकालानुभूततद्भावानुवृत्त्या सिद्धशिलातलादिगतमपि घृतघटादिन्यायेन नोआगमतो द्रव्येन्द्र इति, इन्द्रकारणत्वात् इन्द्रज्ञानशून्यत्वाच्च तस्य, इह सर्वनिषेध एव नोशब्दः, तथा भव्यो-योग्य इन्द्रशब्दार्थं ज्ञास्यति यो न तावद्वि-

---

१ काष्ठकहस्ती हस्तीति एषा सद्भाविका स्थापना भवेत् । भवत्यसद्भावे पुनर्हस्तीति निराकृतिरक्षः ॥ १ ॥ २ द्रवति द्रूयते वा द्रोः (सत्तायाः) अवयवो विकारो वा गुणानां संद्रावो (भाजनं)। तद्द्रव्यं भव्यभावस्य भूतभावस्य च यद् योग्यमिति ॥१॥ ३ आगमतोऽनुपयुक्तो मंगलशब्दानुवासित (भावित) वक्ता। तज्ज्ञानलब्धियुक्तोऽप्यनुपयुक्त इति ततो द्रव्यं ॥१॥

जानाति स भव्य इति तस्य शरीरं भव्यशरीरं तदेव द्रव्येन्द्रो भव्यशरीरद्रव्येन्द्रः, अयमत्र भावार्थो—भाविनीं वृत्तिमङ्गीकृत्य इन्द्रोपयोगाधारत्वात् मधुघटादिन्यायेनैव तद्बालादिशरीरं भव्यशरीरद्रव्येन्द्र इति, नोशब्दः पूर्ववत्, उक्तश्च मङ्गलमधिकृत्य—"मंगलपयत्थजाणयदेहो भव्वस्स वा सजीवोवि । णोआगमओ दव्वं आगमरहिओत्ति जं भणितं ॥ १ ॥ इति, ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्येन्द्रो भावेन्द्रकार्येष्वव्यापृतः, आगमतोऽनुपयुक्तद्रव्येन्द्रवत्, तथा यच्छरीरमात्मद्रव्यं वाऽतीतभावेन्द्रपरिणामं तच्चोभयातिरिक्तद्रव्येन्द्रो, ज्ञशरीरद्रव्येन्द्रवत्, तथा यो भावीन्द्रपर्यायशरीरयोग्यः पुद्गलराशिर्यच्च भावीन्द्रपर्यायमात्मद्रव्यं तदप्युभयातिरिक्तो द्रव्येन्द्रः, भव्यशरीरद्रव्येन्द्रवत्, स चावस्थाभेदेन त्रिविधः, तद्यथा–एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्चेति, तत्र एकस्मिन् भवे तस्मिन्नेवातिक्रान्ते भावी एकभविको–योऽनन्तर एव भवे इन्द्रतयोत्पत्स्यत इति, स चोत्कर्षतस्त्रीणि पल्योपमानि भवन्ति, देवकुर्वादिमिथुनकस्य भवनपत्यादीन्द्रतयोत्पत्तिसम्भवादिति, तथा स एवेन्द्रायुर्बन्धानन्तरं बद्धमायुरनेनेति बद्धायुरुच्यते, स चोत्कर्षतः पूर्वकोटीत्रिभागं यावद्, अस्मात्परतः आयुष्कबन्धाभावात्, तथा अभिमुखे–संमुखे जघन्योत्कर्षाभ्यां समयान्तर्मुहूर्त्तानन्तरभावितया नामगोत्रे इन्द्रसम्बन्धिनी यस्य स तथा, तथा भावैश्वर्ययुक्ततीर्थंकरादिभावेन्द्रापेक्षया अप्रधानत्वाच्छक्रादिरपि द्रव्येन्द्र एव, द्रव्यशब्दस्याप्रधानार्थेऽपि प्रवृत्तेरिति, भावेन्द्रस्त्विह त्रिस्थानकानुरोधान्नोक्तः, तल्लक्षणं चेदम्–भावम्–इन्दनक्रियानुभवनलक्षणपरिणाममाश्रित्येन्द्र इन्दनपरिणामेन वा भवतीति भावः स चासाविन्द्रश्चेति भावेन्द्रः, यदाह—"भावो विवक्षितक्रियाऽनुभूतियुक्तो हि वै समाख्यातः । सर्वज्ञैरिन्द्रादिवदिहेन्दनादिक्रियानुभवात् ॥१॥" स च द्विधा–आगमतो नोआगमतश्च, तत्र

१ मंगलपदार्थज्ञातृदेहो भव्यस्य वा सजीवोऽपि (देहः)। नोआगमतो द्रव्यं आगमरहित इति यद्भणितं ॥१॥ २ सजीवोत्ति।

आगमत इन्द्रज्ञानोपयुक्तो जीवो भावेन्द्रः, कथमिन्द्रोपयोगमात्रात् तन्मयताऽवगम्यते ?, न ह्यग्निज्ञानोपयुक्तो माणवकोऽग्निरेव, दहनपचनप्रकाशनाद्यर्थक्रियाप्रसाधकत्वाभावादिति चेत्, न, अभिप्रायापरिज्ञानात्, संवित् ज्ञानमवगमो भाव इत्यनर्थान्तरम्, तत्र 'अर्थाभिधानप्रत्ययास्तुल्यनामधेया' इति सर्ववादिनामविसंवादस्थानं, यथा कोऽयं ?, घटः, किमयमाह ?, घटशब्दं, किमस्य ज्ञानं ?, घट इति, अग्निरिति च यत् ज्ञानं तदव्यतिरिक्तो ज्ञाता तल्लक्षणो गृह्यते, अन्यथा तज्ज्ञाने सत्यपि नोपलभेत, अतन्मयत्वात्, प्रदीपहस्तान्धवत् पुरुषान्तरवद्वा, न चानाकारं तत्, पदार्थान्तरवद्विवक्षितपदार्थापरिच्छेदप्रसङ्गात्, बन्धाद्यभावश्च ज्ञानाज्ञानसुखदुःखपरिणामान्यत्वाद्, आकाशवत्, न चानलः सर्व एव दहनाद्यर्थक्रियाप्रसाधको, भस्मच्छन्नाग्निना व्यभिचारादिति कृतं प्रसङ्गेन, नोआगमतो भावेन्द्र इन्द्रनामगोत्रे कर्मणी वेदयन् परमैश्वर्यभाजनं, सर्वनिषेधवचनत्वान्नोशब्दस्य, यतस्तत्र नेन्द्रपदार्थज्ञानमिन्द्रव्यपदेशनिबन्धनतया विवक्षितं इन्दनक्रियाया एव च विवक्षितत्वात्, अथवा तथाविधज्ञानक्रियारूपो यः परिणामः स नागम एव केवलो न चानागम इत्यतो मिश्रवचनत्वात् नोशब्दस्य नोआगमत इत्याख्यायत इति। ननु नामस्थापनाद्रव्येष्विन्द्राभिधानं विवक्षितभावशून्यत्वाद् द्रव्यत्वं च समानं वर्त्तते, ततश्च क एषां विशेषः ?, आह च—"[1]अभिहाणं दव्वत्तं तदत्थसुन्नत्तणं न तुल्लाइं। को भाववज्जियाणं नामाईणं पइविसेसो ? ॥१॥" इति, अत्रोच्यते, यथा हि स्थापनेन्द्रे खल्विन्द्राकारो लक्ष्यते तथा कर्त्तुः सद्भूतेन्द्राभिप्रायो भवति तथा द्रष्टुस्तदाकारदर्शनादिन्द्रप्रत्ययस्तथा प्रणतिकृतधियश्च फलार्थिनः स्तोतुं प्रवर्त्तन्ते फलं च प्राप्नुवन्ति केचिद्देवतानुग्रहात् न तथा नामद्रव्येन्द्रयोरिति, तस्मात् स्थापनायास्तावदित्थं भेद इति आह च—"[2]आगारोऽभिप्पाओ

१ अभिधानं द्रव्यत्वं तदर्थशून्यत्वं च तुल्यानि। को भाववर्जितानां नामादीनां प्रतिविशेषः ? ॥१॥ (येन भेदाल्लयस्ते)। २ आकारोऽभिप्रायो

वुद्धी किरियाफलं च पाएणं । जह दीसइ ठवणिंदे न तहा नामे न दव्विंदे ॥१॥" इति, यथा च द्रव्येन्द्रो भावेन्द्रकारणतां प्रतिपद्यते तथोपयोगापेक्षायामपि तदुपयोगतामासादयत्यवाप्तवांश्च न तथा नामस्थापनेन्द्रावित्ययं विशेष इति आह च—"भावस्स कारणं जह दव्व भावो य तस्स पज्जाओ । उवओगपरिणतिमओ न तहा नामं न वा ठवणा ॥१॥" इति ॥ उक्ता नामस्थापनाद्रव्येन्द्राः, इदानीं भावेन्द्रं त्रिस्थानकावतारेणाह—'तओ इंदे'त्यादि कण्ठ्यं, नवरं ज्ञानेन ज्ञानस्य ज्ञाने वा इन्द्रः—परमेश्वरो ज्ञानेन्द्रः—अतिशयवच्छ्रुताद्यन्यतरज्ञानवशविवेचितवस्तुविस्तरः केवली वा, एवं दर्शनेन्द्रः—क्षायिकसम्यग्दर्शनी, चरित्रेन्द्रो—यथाऽऽख्यातचारित्रः, एतेषां च भावेन—सकलभावप्रधानक्षायिकलक्षणेन विवक्षितक्षायोपशमिकलक्षणेन वा भावतः—परमार्थतो वेन्द्रत्वात्—सकलसंसार्यप्राप्तापूर्वगुणलक्ष्मीलक्षणपरमैश्वर्ययुक्तत्वाद् भावेन्द्रताऽवसेयेति । उक्तमाध्यात्मिकैश्वर्यापेक्षया भावेन्द्रत्रैविध्यमथ बाह्यैश्वर्यापेक्षया तदेवाह—'तओ इंदे'त्यादि, भावितार्थं, नवरं देवा—वैमानिका ज्योतिष्कवैमानिका वा रूढेः असुराः—भवनपतिविशेषा भवनपतिव्यन्तरा वा सुरपर्युदासात्, मनुजेन्द्रः—चक्रवर्त्यादिरिति ॥

त्रयाणामप्येषां वैक्रियकरणादिशक्तियुक्ततयेन्द्रत्वमिति विकुर्वणानिरूपणायाह—

**तिविहा विउव्वणा पं० तं०—बाहिरते पोग्गलए परियातित्ता एगा विकुव्वणा बाहिरए पोग्गले अपरिया**

३ स्थानाध्ययने उद्देशः १ वैक्रियविकुर्वणाप्रकाराः

---

वुद्धिः क्रियाफलं च यथा प्रायः स्थापनेन्द्रे दृश्यते न तथा नामेन्द्रे न द्रव्येन्द्रे ॥१॥ १ °सपूर्वश्च प्र। २ भावस्य कारणं यथा द्रव्यं भावश्च तस्य पर्यायः उपयोगपरिणतिमयो न तथा नाम न वा स्थापनेति ॥१॥

दित्ता एगा विकुव्वणा बाहिरए पोग्गले परियादित्तावि अपरियादित्तावि एगा विकुव्वणा, तिविहा विगुव्वणा पं० तं०—अब्भंतरए पोग्गले परियाइत्ता एगा विकुव्वणा अब्भंतरे पोग्गले अपरियादित्ता एगा विकुव्वणा अब्भंतरए पोग्गले परियादित्तावि अपरियादित्तावि एगा विकुव्वणा, तिविहा विकुव्वणा पं० तं०—बाहिरब्भंतरए पोग्गले परियाइत्ता एगा विकुव्वणा बाहिरब्भंतरए पोग्गले अपरियाइत्ता एगा विगुव्वणा बाहिरब्भंतरए पोग्गले परियाइत्तावि अपरियाइत्तावि एगा विउव्वणा। (सू० १२०) तिविहा नेरइया पन्नत्ता तं०—कतिसंचिता अकतिसंचिता अवत्तव्वगसंचिता, एवमेगिंदियवज्जा जाव वेमाणिया (सू० १२१)

'तिविहे'त्यादि सूत्रत्रयी कण्ठ्या, नवरं बाह्यान् पुद्गलान्—भवधारणीयशरीरानवगाढक्षेत्रप्रदेशवर्त्तिनो वैक्रियसमुद्घातेन पर्यादाय—गृहीत्वैका विकुर्वणा क्रियते इति शेषः, तानपर्यादाय, या तु भवधारणीयरूपैव साऽन्या, यत्पुनर्भवधारणीयस्यैव किञ्चिद्विशेषापादनं सा पर्यादायापि अपर्यादायापि इति तृतीया व्यपदिश्यते, अथवा विकुर्वणा—भूषाकरणं, तत्र बाह्यपुद्गलानादायाभरणादीन् अपर्यादाय केशनखसमारचनादिना उभयतस्तूभयथेति, अथवाऽपर्यादायेति कृकलाससर्प्पादीनां रक्तत्वफणादिकरणलक्षणेति। एवं द्वितीयसूत्रमपि, नवरमभ्यन्तरपुद्गला भवधारणीयेनौदारिकेण वा शरीरेण ये क्षेत्रप्रदेशा अवगाढास्तेष्वेव ये वर्त्तन्ते तेऽवसेयाः, विभूषापक्षे तु निष्ठीवनादयोऽभ्यन्तरपुद्गला इति। तृतीयं तु बाह्याभ्यन्तरपुद्गलयोगेन वाच्यमिति, तथाहि—उभयेषामुपादानाद् भवधारणीयनिष्पादनं तदनन्तरं तस्यैव केशादिरचनं च, अनादानाच्चिरविकुर्वितस्यैव मुखादिविकारकरणं, उभयतस्तु बाह्याभ्यन्तराणामनभिमतानामादानतोऽन्येषां नानादानतोऽनिष्टरूपभवधारणीयेतररचनमिति॥ अनन्तरं विकुर्वणोक्ता, सा च नारकाणामप्यस्तीति नारकान्निरूपयन्नाह—

'तिविहे'त्यादि कण्ठ्यम् , नवरं 'कती'त्यनेन संख्यावाचिना द्व्यादयः संख्यावन्तोऽभिधीयन्ते ,अयं चान्यत्र प्रश्नविशिष्टसंख्यावाचकतया रूढोऽपीह संख्यामात्रे द्रष्टव्यः, तत्र नारकाः कति—कतिसंख्याताः संख्याता एकैकसमये ये उत्पन्नाः सन्तः सञ्चिताः—कत्युत्पत्तिसाधर्म्याद् बुद्ध्या राशीकृतास्ते कतिसञ्चिताः, तथा न कति—न संख्याता इत्यकति—असंख्याता अनन्ता वा, तत्र ये अकति—अकतिसंख्याताः असंख्याता एकैकसमये उत्पन्ना सन्तस्तथैव सञ्चितास्ते अकतिसञ्चिताः, तथा यः परिमाणविशेषो न कति नाप्यकतीति शक्यते वक्तुं सोऽवक्तव्यकः स चैक इति तत्सञ्चिता अवक्तव्यकसञ्चिताः, समये समये एकतयोत्पन्ना इत्यर्थः, उत्पद्यन्ते हि नारका एकसमये एकादयोऽसंख्येयान्ताः, उक्तं च—"एगो[1] व दो व तिन्नि व संखमसंखा व एगसमएणं। उववज्जंतेवइया उव्वट्टंता वि एमेव ॥१॥" इति, एतदेवपरिमाणमेतदेव नारकाणामपि यत उक्तम्—"सखा[2] पुण सुरवरतुल्ल"त्ति, कतिसञ्चितादिकमर्थमसुरादीनां दण्डकोक्तानामतिदिशन्नाह—'एव'मित्यादि, 'एव'मिति नारकवच्छेषाश्चतुर्विंशतिदण्डकोक्ता वाच्या एकेन्द्रियवर्जाः, यतस्तेषु प्रतिसमयमसंख्याता अनन्ता वा अकतिशब्दवाच्या एवोत्पद्यन्ते, न त्वेकः संख्याता वा इति, आह च—"अणु[3]समयमसंखेज्जा संखेज्जाऊयतिरियमणुया य। एगिंदिएसु गच्छे आरा ईसाणदेवा य ॥१॥ एगो असङ्खभागो वट्टइ उव्वट्टणोववायम्मि। एगनिगोए निच्चं एवं सेसेसुवि स एव ॥२॥" इति।

---

१ एको वा द्वौ वा त्रयो वा संख्याता असंख्याता वैकसमयेन। उत्पद्यन्ते एतावन्तः उद्वर्त्तन्तेऽप्येवमेव (देवाः) ॥१॥ २ संख्या पुनः सुरवरतुल्या (नारकाणां)। ३ अनुसमयमसंख्याताः संख्येयायुषस्तु तिर्यञ्चो मनुष्याश्च। एकेन्द्रियेषु गच्छेयुः आरादीशानाद्देवाश्च ॥१॥ एकोऽसंख्यभागो वर्त्तते उद्वर्त्तनोपपाते। एकस्मिन्निगोदे नित्यं एवं शेषेष्वपि स एव ॥२॥

अनन्तरसूत्र कतिसंचितादिको धर्मो वैमानिकानां देवानामुक्तः, अधुना देवानां सामान्येन परिचारणाधर्मनिरूपणायाह—

तिविहा परियारणा पं० तं०—एगे देवे अन्ने देवे अन्नेसिं देवाणं देवीओ अ अभिजुंजिय २ परियारेति, अप्पणिज्जिआओ देवीओ अभिजुंजिय २ परियारेति, अप्पाणमेव अप्पणा विउव्विय २ परियारेति १ एगे देवे णो अन्ने देवा णो अण्णेसिं देवाणं देवीओ अभिजुंजिय २ परियारेति अत्तणिज्जिआओ देवीओ अभिजुंजिय २ परियारेइ अप्पाणमेव अप्पणा विउव्विय २ परियारेति २ एगे देवे णो अन्ने देवा णो अण्णेसिं देवाणं देवीओ अभिजुंजिय २ परियारेति णो अप्पणिज्जिताओ देवीओ अभिजुंजिय २ परियारेति अप्पाणमेव अप्पाणं विउव्विय २ परियारेति ३ (सू० १२२)। तिविहे मेहुणे पं० तं०—दिव्वे माणुस्सते तिरिक्खजोणीते, तओ मेहुणं गच्छन्ति तं०—देवा मणुस्सा तिरिक्खजोणिता, ततो मेहुणं सेवंति तं०—इत्थी पुरिसा णपुंसगा (सू० १२३)

'तिविहा परी'त्यादि, कण्ठ्यम्, नवरं परिचारणा-देवमैथुनसेवेति, एकः कश्चिद्देवो न सर्वोऽप्येवमिति, किम्?—'अण्णे देवे'त्ति अन्यान् देवान्-अल्पर्द्धिकान् तथाऽन्येषां देवानां सत्का देवीश्चाभियुज्याभियुज्य-आश्लिष्याश्लिष्य वशीकृत्य वा परिचारयति-परिभुङ्क्ते वेदबाधोपशमायेति, न च न सम्भवति देवस्य देवसेवा पुंस्त्वेनेत्याशङ्कनीयम्, मनुष्येष्वपि तथा श्रवणात्, न चात्रार्थे नरामरयोः प्रायो विशेषोऽस्तीति, एक एवायं प्रकारो देवदेवीनामन्यत्वसामान्यादत एव द्वयोरपि पदयोरेकः क्रियाभिसम्बन्ध इति, एवमात्मीया देवीः परिचारयतीति द्वितीयः, तथाऽऽत्मनमेव परिचारयति कथं?—आत्मना विकृत्य विकृत्य परिचारणायोग्यं त्रिधा-

येति तृतीयं, एवं प्रकारत्रयरूपाप्येकेयं परिचारणा, प्रभविष्णूत्कटकामैकपरिचारकत्वशादिति, अथान्यो देव आद्यप्रकारपरिहारेणान्त्यप्रकारद्वयेन परिचारयतीति द्वितीयेयमप्रभविष्णूचितकामपरिचारकदेवविशेषात्, तथाऽन्यो देव आद्यप्रकारद्वयवर्जनेनान्त्यप्रकारेण परिचारयतीति तृतीयाऽनुत्कटकामाल्पर्द्धिकदेवविशेषस्वामिकत्वादिति। परिचारणेति मैथुनविशेष उक्तोऽधुना तदेव मैथुनं सामान्यतः प्ररूपयन्नाह—'तिविहे मेहुणे' इत्यादि कण्ठ्यं, नवरं मिथुनं–स्त्रीपुंसयुग्मं तत्कर्म मैथुनं, नारकाणां तन्न सम्भवति द्रव्यत इति चतुर्थं नास्त्येवेति नोक्तम् ॥ मिथुनकर्मण एव कारकानाह—'तओ' इत्यादि कण्ठ्यं, तेषामेव भेदानाह—'तओ मेहुण'मित्यादि, कण्ठ्यं, नवरं स्त्र्यादिलक्षणमिदमाचक्षते विचक्षणाः—"योनि १ र्मृदुत्व २ मस्थैर्यं ३, मुग्धत्वं ४ क्लीबता ५ स्तनौ ६। पुंस्कामितेति ७ लिङ्गानि, सप्त स्त्रीत्वे प्रचक्षते ॥१॥ मेहनं १ खरता २ दार्ढ्यं ३, शौण्डीर्यं ४ श्मश्रु ५ धृष्टता ६। स्त्रीकामिते ७ ति लिङ्गानि, सप्त पुंस्त्वे प्रचक्षते ॥२॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम्। नपुंसकं बुधाः प्राहुर्मोहानलसुदीपितम् ॥३॥ तथाऽन्यत्राप्युक्तम्—"स्तनकेशवती स्त्री स्याद्, रोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च, तदभावे नपुंसकम् ॥१॥" इत्यादि ॥

एते च योगवन्तो भवन्तीति योगप्ररूपणायाह—

तिविहे जोगे पं० तं०—मणजोगे वतिजोगे कायजोगे, एवं णेरतिताणं विगलिंदियवज्जाणं जाव वेमाणियाणं, तिविहे पओगे पं० तं०—मणपओगे वतिपओगे कायपओगे, जहा जोगो विगलिंदियवज्जाणं तधा पओगोऽवि, तिविहे करणे पं०, तं०—मणकरणे वतिकरणे, कायकरणे एवं बिगलिंदियवज्जं जाव वेमाणियाणं, तिविहे करणे पं० तं०—आरंभकरणे संरंभकरणे समारंभकरणे, निरंतरं जाव वेमाणियाणं (सू० १२४)

'निविहे जोए' इत्यादि, इह वीर्यान्तरायक्षयक्षयोपशमसमुत्थलब्धिविशेषप्रत्ययमभिसन्ध्यनभिसन्धिपूर्वमात्मनो वीर्यं योगः, आह च—"जोगो वीरियं थामो उच्छाह परक्कमो तहा चेट्ठा। सत्ती सामत्थन्ति य जोगस्स हवंति पज्जाया ॥१॥" इति, स च द्विधा-सकरणोऽकरणश्च, तत्रालेश्यस्य केवलिनः कृत्स्नयोर्ज्ञेयदृश्ययोरर्थयोः केवलं ज्ञानं दर्शनं चोपयुञ्जानस्य योऽसावपरिस्पन्दोऽप्रतिघो वीर्यविशेषः सोऽकरणः, स च नेहाधिक्रियते, सकरणस्यैव त्रिस्थानकावतारित्वाद्, अतस्तत्रैव व्युत्पत्तिस्तमेव चाश्रित्य सूत्रव्याख्या, युज्यते जीवः कर्मभिर्येन 'कम्मं जोगनिमित्तं बज्झइ'त्ति वचनात् युङ्क्ते प्रयुङ्क्ते यं पर्यायं स योगो-वीर्यान्तरायक्षयोपशमजनितो जीवपरिणामविशेष इति, आह च—"मणसा वयसा काएण वावि जुत्तस्स विरियपरिणामो। जीवस्स अप्पणिज्जो स जोगसन्नो जिणक्खाओ ॥१॥ तेओजोगेण जहा रत्तत्ताई घडस्स परिणामो। जीवकरणप्पओए विरियमवि तहप्पपरिणामो ॥२॥" इति, मनसा करणेन युक्तस्य जीवस्य योगो-वीर्यपर्यायो दुर्बलस्य यष्टिकाद्रव्यवदुपष्टम्भकरो मनोयोग इति, स च चतुर्विधः-सत्यमनोयोगो मृषामनोयोगः सत्यमृषामनोयोगो असत्यामृषामनोयोगश्चेति, मनसो वा योगः-करणकारणानुमतिरूपो व्यापारो मनोयोगः, एवं वाग्योगोऽपि, एवं काययोगोऽपि, नवरं स सप्तविधः-औदारिको १ दारिकमिश्र २ वैक्रिय ३ विक्रियमिश्रो ४ हारका ५ हारकमिश्र ६ कार्मणकाययोग ७ भेदादिति, तत्रौदारिकादयः शुद्धाः सुबोधाः, औदारिकमिश्रस्तु औदारिक एवापरिपूर्णो मिश्र उच्यते, यथा गुडमिश्रं दधि न गुडतया

१ योगो वीर्यं स्थाम उत्साहः पराक्रमस्तथा चेष्टा। शक्तिः सामर्थ्यमिति च योगस्य भवन्ति पर्यायाः ॥१॥ २ कर्म योगनिमित्तं बध्यते ३ मनसा वचसा कायेन वापि युक्तस्य वीर्यपरिणामः। जीवस्यात्मीयः स योगसंज्ञो जिनाख्यातः ॥१॥ तेजोयोगेन यथा रक्तत्वादिर्घटस्य परिणामः। जीवकरणप्रयोगे वीर्यमपि तथाऽऽत्मपरिणामः ॥२॥

नापि दधितया व्यपदिश्यते तत्ताभ्यामपरिपूर्णत्वात्, एवमौदारिकं मिश्रं कार्मणेन नौदारिकतया नापि कार्मणतया व्यपदेष्टुं शक्यम् अपरिपूर्णत्वादिति तस्यौदारिकमिश्रव्यपदेशः, एवं वैक्रियाहारकमिश्रावपीति शतकटीकालेशः, प्रज्ञापनाव्याख्यानांशस्त्वेवम्— औदारिकाद्याः शुद्धास्तत्पर्याप्तकस्य मिश्रास्त्वपर्याप्तकस्येति, तत्रोत्पत्तावौदारिककायः कार्मणेन औदारिकशरीरिणश्च वैक्रियाहारककरणकाले वैक्रियाहारकाभ्यां मिश्रो भवति इत्येवमौदारिकमिश्रः, तथा वैक्रियमिश्रो देवाद्युत्पत्तौ कार्मणेन कृतवैक्रियस्य चौदारिकप्रवेशाद्वायामौदारिकेण, आहारकमिश्रस्तु साधिताहारककायप्रयोजनः पुनरौदारिकप्रवेशे औदारिकेणेति, कार्मणस्तु विग्रहे केवलिसमुद्घाते वेति, सर्व एवायं योगः पञ्चदशधेति, संग्रहोऽस्य—"सच्चं[1] १ मोसं २ मीसं ३ असच्चमोसं ४ मणो वती चेवं ८। काओ उराल १ विक्किय २ आहारग ३ मीस ६ कम्मइगो ७ ॥१॥" इति ॥ सामान्येन योगं प्ररूप्य विशेषतो नारकादिषु चतुर्विंशतौ पदेषु तमतिदिशन्नाह—'एव'मित्यादि, कण्ठ्यं नवरमतिप्रसङ्गपरिहारायेदमुक्तं—"विगलिंदियवज्जाणं"ति तत्र विकलेन्द्रियाः—अपञ्चेन्द्रियाः, तेषां ह्येकेन्द्रियाणां काययोग एव, द्वित्रिचतुरिन्द्रियाणां तु काययोगवाग्योगाविति ॥ मनःप्रभृतिसम्बन्धेनैवेदमाह—'तिविहे पओगे' इत्यादि, कण्ठ्यं, नवरं मनःप्रभृतीनां व्याप्रियमाणानां जीवेन हेतुकर्तृभूतेन यद् व्यापारणं—प्रयोजनं स प्रयोगः मनसः प्रयोगो मनःप्रयोगः, एवमितरावपि, 'जहे'त्याद्यतिदेशसूत्रं पूर्ववज्ज्ञातव्यमिति। मनःप्रभृतिसम्बन्धेनैवेदमपरमाह—'तिविहे करणे' इत्यादि कण्ठ्यं, नवरं क्रियते येन तत्करणं—मननादिक्रियासु प्रवर्त्तमानस्यात्मन उपकरणभूतस्तथा तथापरिणामवत्पुद्गलसङ्घात इति भावः, तत्र मन एव करणं मनःकरणमेवम् इतरे अपि, 'एव'मित्याद्यतिदेशसूत्रं पूर्ववदेव भावनीयमिति, अथवा योगप्रयोगकरणशब्दानां मनःप्रभृ-

१ सत्यं मृषा मिश्रं असत्यामृषा मनो वचोऽपि चैवं। काय औदारिकवैक्रियाहारकमिश्राः कार्मण इति ॥१॥

त्रिकमभिधेयवशा योगप्रयोगकरणसूत्रेष्वभिहितमिति नार्थभेदोऽन्वेषणीयः, त्रयाणामप्येषामेकार्थतया आगमे बहुशः प्रवृत्तिदर्शनात्, तथाहि—योगः पञ्चदशविधः शतकादिषु व्याख्यातः, प्रज्ञापनायां त्वेवमेवायं प्रयोगशब्देनोक्तः, तथाहि—"कतिविहे णं भंते ! पओगे पन्नत्ते, गोयमा ! पन्नरसविहे" इत्यादि, तथा आवश्यकेऽयमेव करणतयोक्तः, तथाहि—"जुंजणकरणं तिविहं मणवतिकाए य मणसि सच्चाइ। सट्ठाणे तेसि भेओ चउ चउहा सत्तहा चेव ॥१॥" इति ॥ प्रकारान्तरेण करणत्रैविध्यमाह—'तिविहे' इत्यादि, आरम्भणमारम्भः—पृथिव्याद्युपमर्द्दनं तस्य कृतिः—करणं स एव वा करणमित्यारम्भकरणमेवमितरे अपि वाच्ये, नवरमयं विशेषः—संरम्भकरणं पृथिव्यादिविषयमेव मनसंक्लेशकरणं, समारम्भकरणं—तेषामेव सन्तापकरणमिति, आह च—"संकप्पो संरंभो परितावकरो भवे समारंभो। आरंभो उद्दवओ सुद्धनयाणं तु सव्वेसिं।।१॥" इति ॥ इदमारम्भादिकरणत्रयं नारकादीनां वैमानिकान्तानां भवतीत्यतिदिशन्नाह—'निरन्तर'मित्यादि, सुगमं, केवलं संरंभकरणमसंज्ञिनां पूर्वभवसंस्कारानुवृत्तिमात्रतया भावनीयमिति ॥

आरम्भादिकरणस्य क्रियान्तरस्य च फलमुपदर्शयन्नाह—

**तिहिं ठाणेहिं जीवा अप्पाउअत्ताते कम्मं पगरेंति, तं०—पाणे अतिवातित्ता भवति मुसं वइत्ता भवइ तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभित्ता भवइ, इच्चेतेहिं**

१ युगपत्त्रयं त्रिभिः मनोवाक्कायैः मनसि सत्यादि । स्वस्थाने तेषां भेदः चतुर्धा चतुर्धा सप्तधा चैव ॥१॥ २ संकल्पः संरंभः परितापकरो भवेत्समारम्भः । आरम्भ उपद्रवतः शुद्धनयानान्तु सर्वेषां ॥१॥

तिहिं ठाणेहिं जीवा अप्पाउअत्ताते कम्मं पगरेंति। तिहिं ठाणेहिं जीवा दीहाउअत्ताते कम्मं पगरेंति, तं०—णो पाणे अतिवातित्ता भवइ णो मुसं वतित्ता भवति तथारूवं समणं वा माहणं वा फासुएसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेत्ता भवइ, इच्चेतेहिं तिहिं ठाणेहिं जीवा दीहाउयत्ताए कम्मं पगरेंति। तिहिं ठाणेहिं जीवा असुभदीहाउयत्ताए कम्मं पगरेंति, तंजहा—पाणे अतिवातित्ता भवइ मुसं वइत्ता भवइ तहारूवं समणं वा माहणं वा हीलेत्ता णिंदित्ता खिंसेत्ता गरहित्ता अवमाणित्ता अन्नयरेणं अमणुन्नेणं अपीतिकारतेणं असण० पडिलाभेत्ता भवइ, इचेतेहिं तिहिं ठाणेहिं जीवा असुभदीहाउअत्ताए कम्मं पगरेंति। तिहिं ठाणेहिं जीवा सुभदीहाउअत्ताते कम्मं पगरेंति, तं०—णो पाणे अतिवातित्ता भवइ णो मुसं वदित्ता भवइ तहारूवं समणं वा माहणं वा वंदित्ता नमंसित्ता सक्कारित्ता समाणेत्ता कल्लाणं मंगलं देवत्तं चेतितं पज्जुवासेत्ता मणुन्नेणं पीतिकारएणं असणपाणखाइमसाइमेणं पडिलाभित्ता भवइ, इच्चेतेहिं तिहिं ठाणेहिं जीवा सुहदीहाउतत्ताते कम्मं पगरेंति। (सू० १२५)

'तिहिं ठाणेहिं' इत्यादि, त्रिभिः 'स्थानैः' कारणैः 'जीवाः' प्राणिनः 'अप्पाउयत्ताए'त्ति अल्पं—स्तोकमायुः—जीवितं यस्य सोऽल्पायुस्तद्भावस्तत्ता तस्यै अल्पायुष्टायै तदर्थं तन्निबन्धनमित्यर्थः, कर्म—आयुष्कादि, अथवा अल्पमायुः—जीवितं यत आयुषस्तदल्पायुः तद्भावस्तत्ता तया कर्म—आयुर्लक्षणं 'प्रकुर्वन्ति' बध्नन्तीत्यर्थः, तद्यथा—'प्राणान्' प्राणिनोऽतिपातयितेति 'शीलार्थंतृन्नन्त'मिति कर्मणि द्वितीयेति, प्राणिनां विनाशनशील इत्यर्थः, एवंभूतो यो भवति एवं मृषावादं वक्ता यश्च भवति, तथा—तत्प्रकारं

रूपं-नेपथ्यादि वा यस्य स तथारूपः दानोचित इत्यर्थः तं, श्राम्यति-तपस्यतीति श्रमणः-तपोयुक्तस्तं मा हन इत्याचष्टे यः परं स्वयं हननिवृत्तः सन्निति स माहनो मूलगुणधरस्तं, वाशब्दौ विशेषणसमुच्चयार्थौ, प्रगता असवः-असुमन्तः प्राणिनो यस्मात् तत्प्रासुकं तन्निषेधादप्रासुकं सचेतनमित्यर्थः तेन, एष्यते-गवेष्यते उद्गमादिदोषविकलतया साधुभिर्यत्तदेषणीयं-कल्प्यं तन्निषेधादनेषणीयं तेन, अश्यते-भुज्यते इत्यशनं च-ओदनादि पीयत इति पानं च-सौवीरकादि खादनं खादस्तेन निर्वृत्तं खादनार्थं तस्य निर्वर्त्तमानत्वादिति खादिमं च—भक्तौदि स्वादनं स्वादः तेन निर्वृत्तं स्वादिमं दन्तपवनादीति समाहारद्वन्द्वस्तेन, गाथाश्चात्र—"असणं ओदणसत्तुगमुग्गजगाराइ खज्जगविही य । खीराइ सूरणादी मंडगपभिती य विन्नेयं ॥१॥ पाणं सोवीरजवोदगाइ चित्तं सुराइयं चेव । आउक्काओ सव्वो कक्कडगजलाइयं च तहा ॥२॥ भत्तोसं दंताइं खज्जूरं नालिकेरदक्खाइं । कक्कडिगंबगफणसादि बहुविहं खाइमं नेयं ॥३॥ दंतवणं तंबोलं चित्तं अज्जगकुहेडगाइं य । महुपिप्पलिसुंठादी अणेगहा साइमं होइ ॥३॥" इति, प्रतिलम्भयिता-लाभवन्तं करोतीत्येवंशीलो यश्च भवति, ते अल्पायुष्कतया कर्म कुर्वन्तीति प्रक्रमः, 'इच्चेएहिं'ति इत्येतैः प्राणातिपातादिभिरुक्तप्रकारैस्त्रिभिः स्थानैः जीवा अल्पायुष्टया कर्म प्रकुर्वन्तीति निगमनमिति । इह च प्राणातिपातयित्रादिपुरुषनिर्देशेऽपि प्राणातिपातादीनामेवाल्पायुर्बन्धनिबन्धनत्वेन तत्कारणत्वमुक्तं द्रष्टव्यमिति, इयं चास्य सूत्रस्य भावना-अध्यवसायविशेषेणैतत्त्रयं यथोक्तफलं भवतीति, अथवा यो हि जीवो जिनादिगुणपक्षपातितया तत्पूजाद्यर्थं पृथिव्याद्यारम्भेण न्यासापहारादिना च प्राणातिपातादिषु वर्त्तते तस्य सरागसंयमनिरवद्यदाननिमित्तायुष्कापेक्षयेयमल्पायुष्टा समवसेया, अथ नैतदेवं, निर्विशेषणत्वात् सूत्रस्य, अल्पायुष्कस्य क्षुल्लकभवग्रहणरूपस्यापि प्राणातिपातादिहेतुतो युज्यमानत्वाद्, अतः कथमभिधीयते-सविशेषणप्राणातिपातादिवर्त्ती जीव आपेक्षिकी चाल्पा-

युष्कतेति ? उच्यते, अविशेषणत्वेऽपि सूत्रस्य प्राणातिपातादेर्विशेषणमवश्यं वाच्यं, यत इतस्तृतीयसूत्रे प्राणातिपातादित एव अशुभदीर्घायुष्टां वक्ष्यति, न हि समानहेतोः कार्यवैषम्यं प्रयुज्यते, सर्वत्रानाश्वासप्रसङ्गात्, तथा 'समणोवासगस्स[2] णं भंते ! तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ ?, गोयमा !, बहुतरिया से निज्जरा कज्जइ, अप्पतराए से पावे कम्मे कज्जइ'त्ति भगवतीवचनश्रवणादवसीयते–नैवेयं क्षुल्लकभवग्रहणरूपाऽल्पायुष्टा, न हि स्वल्पपापबहुनिर्जरानिबन्धनस्यानुष्ठानस्य क्षुल्लकभवग्रहणनिमित्तता सम्भाव्यते, जिनपूजनाद्यनुष्ठानस्यापि तथाप्रसङ्गात्, अथाप्रासुकदानस्य भवतूक्ताऽल्पायुष्टा, प्राणातिपातमृषावादयोस्तु क्षुल्लकभवग्रहणमेव फलमिति, नैतदेवम्, एकयोगप्रवृत्तत्वाद् अविरुद्धत्वाच्चेति, अथ मिथ्यादृष्टिश्रमणब्राह्मणानां यदप्रासुकदानं ततो निरुपचरितैवाल्पायुष्टा युज्यते, इतराभ्यां तु को विचार इति ?, नैवम्, अप्रासुकेनेति तत्र विशेषणस्यानर्थकत्वात्, प्रासुकदानस्यापि अल्पायुष्कफलत्वाविरोधाद्, उक्तं च भगवत्याम्—"समणोवासयस्स[3] णं भंते ! तहारूवं असंजतअविरयअपडिहयअपच्चक्खायपावकम्मं फासुएण वा अफासुएण वा एसणिज्जेण वा अणेसणिज्जेण वा असण० ४ पडिलाभेमाणस्स किं कज्जइ ?, गोयमा ?, एगंतसो पावेकम्मे कज्जइ, नो से काइ निज्जरा कज्जइ"त्ति, यच्च पापकर्मण[4] एव कारणं

१ युज्यते. २ श्रमणोपासकेन भदन्त ! तथारूवं श्रमणं वा माहनं वाऽप्रासुकेनानेषणीयेनाशनपानखादिमस्वादिमेन प्रतिलम्भयता किं क्रियते ?, गौतम ! बहुतरा तेन निर्जरा क्रियतेऽल्पतरं तेन पापकर्म क्रियते ३ श्रमणोपासकेन भदन्त ! तथारुपं असंयताविरताप्रतिहताप्रत्याख्यातपापकर्माणं प्रासुकेन वाऽप्रासुकेन वा एषणीयेनानेषणीयेन वा अशनादिना प्रतिलम्भयता किं क्रियते ?, गौतम ! एकान्ततः पापकर्म क्रियते न तेन काचिन्निर्जरा क्रियते ॥ ४ बहुनिर्जरासाधनत्वेऽपि अल्पस्य.

[illegible] अपि कारणमिति, नन्वेवं प्राणातिपातमृषावादावप्रासुकदानं च कर्त्तव्यमापन्नमिति ?, उच्यते, आपद्यतां नाम भूमिकापेक्षया को दोषः ?, यतः—"अधिकारिवशाच्छास्त्रे, धर्मसाधनसंस्थितिः । व्याधिप्रतिक्रियातुल्या, विज्ञेया गुणदोषयोः ॥१॥" तथा च गृहिणं प्रति जिनभवनकारणफलमुक्तम्—"एतदिह भावयज्ञः सद्गृहिणो जन्मफलमिदं परमम् । अभ्युदयाव्युच्छित्त्या नियमादपवर्गाज्ञमिति ॥१॥" तथा "भण्णइ जिणपूयाए कायवहो जइवि होइ उ कहिंचि । तहवि तई परिसुद्धा गिहीण कूवाहरणजोगा ॥१॥ असदारंभपवत्ता जं च गिही तेण तेसिं विन्नेया । तन्निवित्तिफलच्चिय एसा परिभावणीयमिदं ॥२॥" इति, दानाधिकारे तु श्रूयते द्विविधाः श्रमणोपासकाः—संविग्नभाविता लुब्धकदृष्टान्तभाविताश्चेति, यथोक्तम्—"संविग्गभावियाणं लोद्धयदिट्ठंतभावियाणं च । मोत्तूण खेत्तकाले भावं च कहिंति सुद्धुञ्छं ॥१॥" इति, तत्र लुब्धकदृष्टान्तभाविता यथाकथञ्चिद्ददति, संविग्नभावितास्त्वौचित्येनेति, तथेदम् —"संथरणंमि असुद्धं दोण्हवि गेण्हन्तदेंतयाणऽहियं । आउरदिट्ठंतेणं तं चेव हियं असंथरणे ॥१॥" इति, तथा "णायागयाणं कप्पणिज्जाणं अन्नपाणाईणं दव्वाणं देसकालसद्धासक्कारकमजुयं" इत्यादि, क्वचित् "पाणे अतिवायित्ता मुसं वयित्ते"त्येवं भवनिग्रन्थवर्जा भावना, तत्रापि स एवार्थः, क्त्वाप्रत्ययान्तता वा व्याख्येया, प्राणानतिपात्य मृषोक्त्वा श्रमणं प्रतिलम्भ्य अल्पायुष्टया

१ [illegible] ग्लानाद्यपेक्षया । २ अप्रासुकादिदानं । ३ भण्यते जिनपूजायां यद्यपि कथंचित्कायवधो भवति तथापि सा परिशुद्धा गृहिणां कूपोदाहरणयोगात् ॥१॥ असदारंभप्रवृत्ता यत्र गृहिणस्तेन तेषां विज्ञेया तन्निवृत्तिफलैव एषा परिभावनीयमेतत् ॥२॥ ४ संविग्नभावितानां लुब्धकदृष्टान्तभावितानां च क्षेत्रकालौ भावं च मुक्त्वा शुद्धमुञ्छं कथयन्ति ( देशयन्ति ) ॥१॥ ५ संस्तरणे द्वयोरपि गृह्णद्ददतोरहितमशुद्धं आतुरदृष्टान्तेन [illegible] हितं । ( देशादिभेदात् )॥१॥ ६ न्यायागतानां कल्पनीयानां अन्नपानादीनां द्रव्याणां देशकालश्रद्धासत्कारक्रमयुतं (दानं).

कर्म बन्धन्तीति प्रक्रमः, शेषं तथैव, अथवा प्रतिलम्भनस्थानकस्यैवेतरे विशेषणे, तथाहि—प्राणानतिपात्याधाकर्मादिकरणतो मृषोक्त्वा यथा—अहो साधो! स्वार्थसिद्धमिदं भक्तादि कल्पनीयं वो न शङ्का कार्येत्यादि, ततः प्रतिलम्भ्य तथा कर्म कुर्वन्तीति प्रक्रमः, इह च द्वयस्य विशेषणत्वेन एकस्य विशेष्यत्वेन त्रिस्थानकत्वमवगन्तव्यम्, गम्भीरार्थं चेदं सूत्रमतोऽन्यथाऽपि भावनीयमिति॥ अल्पायुष्कताकारणान्युक्तान्यधुनैतद्विपर्ययस्यैतान्येव विपर्यस्ततया कारणान्याह—'तिही'त्यादि प्राग्वदवसेयम्, नवरं 'दीहाउयत्ताए'त्ति शुभदीर्घायुष्टायै शुभदीर्घायुष्टया वेति प्रतिपत्तव्यं, प्राणातिपातविरत्यादीनां दीर्घायुषः शुभस्यैव निमित्तत्वाद्, उक्तं च—"महव्वय अणुव्वएहि य बालतवोऽकामनिज्जराए य। देवाउयं निबंधइ सम्मद्दिट्ठी य जो जीवो॥१॥" तथा, "पयईएँ तणुकसाओ दाणरओ सीलसंजमविहूणो। मज्झिमगुणेहिं जुत्तो मणुयाउं बंधए जीवो॥२॥" देवमनुष्यायुषी च शुभे इति। तथा भगवत्यां दानमुद्दिश्योक्तं—"समणोवासयस्स णं भंते! तहारूवं समणं वा २ फासुएसणिज्जेणं असण० ४ पडिलाभेमाणस्स किं कज्जइ?, गोयमा!, एगंतसो निज्जरा कज्जइ, णो से केइ पावे कम्मे कज्जइ २"इति, यच्च निर्जराकारणं तच्छुभदीर्घायुःकारणतया न विरुद्धं, महाव्रतवदिति। अनन्तरमायुषो दीर्घताकारणान्युक्तानि, तच्च शुभाशुभमिति तत्रादौ तावदशुभायुर्दीर्घताकारणान्याह'तिही'त्यादि प्राग्वत्, नवरं अशुभदीर्घायुष्टायै इति नारकायुष्कायेति भावः, तथाहि—अशुभं च तत्पापप्रकृतिरूपत्वात् दीर्घं च तस्य जघन्यतोऽपि दशवर्षसहस्रस्थितिकत्वादुत्कृष्टतस्तु त्रयस्त्रिंश-

---

१ महाव्रतैरणुव्रतैश्च बालतपोऽकामनिर्जरया च देवायुर्निबध्नाति सम्यग्दृष्टिश्च यो जीवः॥१॥ प्रकृत्या तनुकषायो दानरतिः शीलसंयमविहीनः मध्यमगुणैर्युक्तो मनुजायुर्बध्नाति जीवः॥१॥ २ श्रमणोपासकेन भदन्त! तथारुपं श्रमणं वा माहनं वा प्रासुकैषणीयेनाशनादिना ४ प्रतिलम्भयता किं क्रियते?, गौतम! एकान्ततो निर्जरा क्रियते न तेन किंचिदपि पापकर्म क्रियते॥

न्सागरोपमरूपत्वादशुभदीर्घं, तदेवंभूतमायुः–जीवितं यस्मात्कर्मणस्तदशुभदीर्घायुस्तद्भावस्तत्ता तस्यै तया वेति, प्राणान्–प्राणिन इत्यर्थोऽतिपातयिता भवति मृषावादं वक्ता भवति तथा श्रमणमशनादिना हीलनादि कृत्वा प्रतिलम्भयिता भवतीत्यक्षरघटना, हीलना तु जात्याद्युद्घट्टनतो निन्दनं मनसा खिंसनं जनसमक्षं गर्हणं तत्समक्षं अपमाननमनभ्युत्थानादिभिः, 'अन्यतरेण' बहूनां मध्ये एकतरेण, क्वचिदन्यतरेणेति न दृश्यते, 'अमनोज्ञेन' स्वरूपतोऽशोभनेन कदन्नादिनाऽत एवाप्रीतिकारकेण, भक्तिमतस्त्वमनोज्ञमपि मनोज्ञमेव, तत्फलत्वात्, आर्यचन्दनाया इव, आर्यचन्दनया हि कुल्माषाः सूर्पकोणकृता भगवते महावीराय पञ्चदिनोनपाण्मासिकक्षपणपारणके दत्ताः, तदेव च तस्या लोहनिगडानि हेममयनूपुरौ सम्पन्नौ केशाः पूर्ववदेव जाताः पञ्चवर्णविविधरत्नराशिभिर्गृहं भृतं देवेन्द्रदेवदानवनरनाथकैरभिनन्दिता कालेनावाप्तचारित्रा च सिद्धिसौधशिखरमुपगतेति, इह च सूत्रेऽशनादि प्रासुकाप्रासुकत्वादिना न विशेषितं, हीलनादिकर्त्तुः प्रासुकादिविशेषणस्य फलविशेषं प्रत्यकारणत्वात्, मत्सरजनितहीलनादिविशेषणानामेव प्रधानतया तत्कारणत्वादिति। प्राणातिपातमृषावादयोर्दानविशेषणपक्षव्याख्यानमपि घटत एव, अवज्ञादानेऽपि प्राणातिपातादेर्दृश्यमानत्वादिति, भवति च प्राणातिपातादेर्नरकायुः, यदाह—"मिच्छादिट्ठी महारंभपरिग्गहो तिव्वलोहनिस्सीलो। नरयाउयं निबंधइ पावमती रोद्दपरिणामो ॥१॥" इति ॥ उक्तविपर्ययेणायुर्नेतरदाह—'तिहिं ठाणेहीं'त्यादि पूर्ववत्, नवरं 'वन्दित्वा' स्तुत्वा 'नमस्यित्वा' प्रणम्य सत्कारयित्वा वस्त्रादिना सन्मानयित्वा प्रतिपत्तिविशेषेण कल्याणं–समृद्धिः तद्धेतुत्वात् साधुरपि कल्याणमेवं मंगलं विघ्नक्षयस्तद्धेतुत्वान्मङ्गलं दैवतमिव[दैवतेव] दैवतं चैत्यमिव–जिनादिप्रतिमेव चैत्यं श्रमणं 'पर्युपास्य' उपसेव्येति, इहापि प्रासुकाप्रासुकतया दानं न

१ मिथ्यादृष्टिर्महारम्भपरिग्रहस्तीव्रलोभनिःशीलः। निरयायुर्निबध्नाति पापमती रुद्रपरिणामः ॥१॥

विशेषितं, पूर्वसूत्रविपर्ययत्वादस्य, पूर्वसूत्रस्य चाविशेषणतया प्रवृत्तत्वादिति, न च प्रासुकाप्रासुकदानयोः फलं प्रति न विशेषोऽस्ति, पूर्वसूत्रयोस्तस्य प्रतिपादितत्वात् , तस्मादिह प्रासुकैषणीयस्य कल्पप्राप्तावितरस्य चेदं फलमवसेयं अथवा भावप्रकर्षविशेषादनेषणीयस्यापीदं फलं न विरुध्यते, अचिन्त्यत्वाच्चित्तपरिणतेः, सा हि बाह्यस्यानुगुणतयैव न फलानि साधयति, 'भरतादीनामिवेति, इह च प्रथममल्पायुःसूत्रं द्वितीयं तद्विपक्षः तृतीयमशुभदीर्घायुःसूत्रं चतुर्थं तद्विपक्ष इति न पुनरुक्ततेति ॥

प्राणानतिपातनादि च गुप्तिसद्भावे भवतीति गुप्तीराह—

ततो गुत्तीतो पन्नत्ताओ, तं०—मणगुत्ती वतिगुत्ती कायगुत्ती, संजयमणुस्साणं ततो गुत्तीओ पं० तं०—मण० वइ० काय०, तओ अगुत्तीओ पं० तं—मणअगुत्ती वइअगुत्ती कायअगुत्ती, एवं नेरइताणं जाव थणियकुमाराणं, पंचिंदियतिरिक्खजोणियाणं असंजतमणुस्साणं वाणमंतराणं जोइसियाणं वेमाणियाणं। ततो दंडा पं० तं०—मणदंडे वयदंडे कायदंडे, नेरइयाणं तओ दंडा पण्णत्ता, तं०—मणदंडे वइदंडे कायदंडे, विगलिंदियवज्जं जाव वेमाणियाणं (सू० १२६)

'तओ' इत्यादि कण्ठ्यं, नवरं गोपनं गुप्तिः–मनःप्रभृतीनां कुशलानां प्रवर्त्तनमकुशलानां च निवर्त्तनमिति, आह च—"मण-

१ प्रति वि. प्र. २ यथाभद्रकापेक्षया प्रवृत्तौ मनुष्यापेक्षया स्यात्तत्, चतुर्थं तु परिणतापेक्षया अत एव सत्कारयित्वेत्यादि, तथा देवायुष्कायपेक्षमेतत्.

गुत्तिगाहगाओ गुत्तीओ तिन्नि समयकेऊहिं । पवियारेयररूवा णिद्दिट्ठाओ जओ भणियं ॥१॥ समिओ णियमा गुत्तो गुत्तो समियत्तणंमि भइयव्वो । कुसलवइमुईरंतो जं वइगुत्तोऽवि समिओऽवि ॥२॥" इति, एताश्चतुर्विंशतिदण्डके चिन्त्यमाना मनुष्याणामेव, तत्रापि संयतानां, न तु नारकादीनामित्यत आह—'संजयमणुस्साण' मित्यादि, कण्ठयम् ॥ उक्ता गुप्तयस्तद्विपर्ययभूता अथागुप्तीराह—'तओ' इत्यादि कण्ठ्यं, विशेषतश्चतुर्विंशतिदण्डके एता अतिदिशन्नाह—'एव, मित्यादि, 'एव' मिति सामान्यसूत्रवन्नारकादीनां तिस्रोऽगुप्तयो वाच्याः, शेषं कण्ठ्यं, नवरमिहैकेन्द्रियविकलेन्द्रिया नोक्ताः, वाङ्मनसोस्तेषां यथायोगमसम्भवात् , संयतमनुष्या अपि नोक्ताः, तेषां गुप्तिप्रतिपादनादिति ॥ अगुप्तयश्चात्मनः परेषां च दण्डनानि भवन्तीति दण्डान्निरूपयन्नाह—'तओ दण्डे' त्यादि, कण्ठ्यं, नवरं मनसा दण्डनमात्मनः परेषां चेति मनोदण्डः, अथवा दण्ड्यते अनेनेति दण्डो मन एव दण्डो मनोदण्ड इति, एवमितरावपि, विशेषचिन्तायां चतुर्विंशतिदण्डके 'नेरइयाणं तओ दंडा' इत्यादि यावद्वैमानिकानामिति सूत्रं वाच्यं, नवरं 'विगलिंदियवज्जं' ति एकद्वित्रिचतुरिन्द्रियान् वर्जयित्वेत्यर्थः, तेषां हि दण्डत्रयं न सम्भवति, यथायोगं वाङ्मनसोरभावादिति ॥

दण्डश्च गर्हणीयो भवतीति गर्हां सूत्राभ्यामाह—

तिविहा गरहा पं० तं०—मणसा वेगे गरहति, वयसा वेगे गरहति, कायसा वेगे गरहति पावाणं कम्माणं

१ मनोगुप्त्यादिका गुप्तयस्तिस्रः समयकेतुभिः प्रविचारेतररूपा निर्दिष्टा यतो भणितं ॥१॥ समितो नियमाद् गुप्तो गुप्तः समितत्वे भक्तव्यः कुशलां वाचमुदीरयन् यद्वाग्गुप्तोऽपि समितोऽपि ॥२॥

अकरणयाए, अथवा गरहा तिविहा, पं० तं०—दीहंपेगे अद्धं गरहति, रहस्संपेगे अद्धं गरहति, कायंपेगे पडिसाहरति पावाणं कम्माणं अकरणयाए, तिविहे पच्चक्खाणे पं० तं—मणसा वेगे पच्चक्खाति वयसा वेगे पच्चक्खाति कायसा वेगे पच्चक्खाइ, एवं जहा गरहा तहा पच्चक्खाणेवि दो आलावगा भाणियव्वा (सू०१२७)

'तिविहे' त्यादि सूत्रद्वयं गतार्थं, नवरं, गर्हते–जुगुप्सते दण्डं स्वकीयं परकीयं आत्मानं वा 'कायसावि' त्ति सकारस्यागमिकत्वात् कायेनाप्येकः, कथमित्याह–पापानां कर्म्मणामकरणतया हेतुभूतया, हिंसाद्यकरणेनेत्यर्थः, कायगर्हा हि पापकर्माप्रवृत्त्यैव भवतीति भावः, उक्तं च—"पापजुगुप्सा तु तथा सम्यक्परिशुद्धचेतसा सततम् । पापोद्वेगोऽकरणं तदचिन्ता चेत्यनुक्रमतः ॥१॥" इति, अथवा पापकर्मणामकरणतायै–तदकरणार्थं त्रिधाऽपि गर्हते, अथवा चतुर्थ्यर्थे षष्ठी ततः पापेभ्यः कर्म्मभ्यो गर्हते, तानि जुगुप्सत इत्यर्थः, किमर्थम् ?–अकरणतायै–मा कार्षमहमेतानीति, 'दीहंऽपेगे अद्धं' ति दीर्घं कालं यावत्, तथा कायमप्येकः प्रतिसंहरति–निरुणद्धि, कया ?–पापानां कर्म्मणामकरणतया हेतुभूतया, तदकरणेन तदकरणतायै वा तेभ्यो वा गर्हते, कायं वा प्रतिसंहरति तेभ्यः, अकरणतायै तेपामेवेति ॥ अतीते दण्डे गर्हा भवति, सा चोक्ता, भविष्यति च प्रत्याख्यानमिति सूत्रद्वयेन तदाह—'तिविहे' त्यादि गतार्थं, नवरं ' 'गरिह' त्ति गर्हायां, आलापकौ चेमौ 'मणसे' त्यादि, 'कायसा वेगे पच्चक्खाइ पावाणं कम्माणं अकरणयाए' इत्येतदन्त एकः, 'अहवा' पच्चक्खाणे तिविहे पं०–तं०–दीहंपेगे अद्धं पच्चक्खाइ रहस्संपेगे अद्धं पच्चक्खाइ कायंपेगे पडिसाहरइ पावाणं कम्माणं अकरणयाए इति द्वितीयः, तत्र कायमप्येकः प्रतिसंहरति पापकर्म्माकरणाय अथवा कायं प्रतिसंहरति पापकर्म्मभ्योऽकरणाय तेपामेवेति ॥

पापकर्मग्रन्थव्याख्यातारश्च परोपकारिणो भवन्तीति तदुपदर्शनाय दृष्टान्तभूतवृक्षाणां तदार्ष्टान्तिकानां च पुरुषाणां प्ररूपणार्थमाह—

तओ रुक्खा पं० तं०——पत्तोवते फलोवते पुप्फोवते १ एवामेव तओ पुरिसजाता पं० तं०—पत्तोवारुक्खसामाणा पुप्फोवारुक्खसामाणा फलोवारुक्खसामाणा २, ततो पुरिसज्जाया पं० तं०—नामपुरिसे ठवणपुरिसे दव्वपुरिसे ३, तओ पुरिसज्जाया पं०, तं—नाणपुरिसे दंसणपुरिसे चरित्तपुरिसे ४, तओ पुरिसज्जाया पं० तं०—वेदपुरिसे चिंधपुरिसे अभिलावपुरिसे ५, तिविहा पुरिसजाया पं० तं०—उत्तमपुरिसा मज्झिमपुरिसा जहन्नपुरिसा ६, उत्तमपुरिसा तिविहा पं० तं०—धम्मपुरिसा भोगपुरिसा कम्मपुरिसा, धम्मपुरिसा अरिहंता भोगपुरिसा चक्कवट्टी कम्मपुरिसा वासुदेवा ७, मज्झिमपुरिसा तिविहा पं० तं०—उग्गा भोगा रायन्ना ८, जहन्नपुरिसा तिविहा पं० तं०—दासा भयगा भातिल्लगा ९. (सू० १२८)

तओ रुक्खे'त्यादि सूत्रद्वयं, पत्राण्युपगच्छति—प्राप्नोति पत्रोपगः, एवमितरौ 'एवमेवे'ति दार्ष्टान्तिकोपनयनार्थः, पुरुषजातानि—पुरुषप्रकारा यथा पत्रादियुक्तत्वेनोपकारमात्रविशिष्टविशिष्टतरोपकारकारिणोऽर्थिषु वृक्षाः तथा लोकोत्तरपुरुषाः सूत्रार्थोभयदानादिना यथोत्तरमुपकारविशेषकारित्वात् तत्समाना मन्तव्याः, एवं लौकिका अपीति, इह च 'पत्तोवग' इत्यादिवाच्ये पत्तोवा इत्यादिकं प्राकृतलक्षणवशादुक्तं, 'समाणे' इत्यत्रापि च 'सामाणे' इति ॥ अथ पुरुषप्रस्तावात् पुरुषान् सप्तसूत्र्या निरूपयन्नाह—'तओ'इत्यादि कण्ठ्यं, नवरं नामपुरुषः पुरुष इति नामैव, स्थापनापुरुषः पुरुषप्रतिमादि, द्रव्यपुरुषः पुरुषत्वेन य उत्पत्स्यते उत्पन्नपूर्वो

वेति, विशेषोऽत्रेन्द्रसूत्राद् द्रष्टव्यो भवति, अत्र भाष्यगाथा—"आगमओऽणुवउत्तो इयरो दव्वपुरिसो तिहा तइओ। एगभवियाइ तिविहो मूलुत्तरनिम्मिओ वावि ॥१॥' मूलगुणनिर्मितः पुरुषप्रायोग्याणि द्रव्याणि, उत्तरगुणनिर्मितस्तु तदाकारवन्ति तान्येवेति, भावपुरुषभेदाः पुनर्ज्ञानपुरुषादयः। ज्ञानलक्षणभावप्रधानपुरुषो ज्ञानपुरुषः एवमितरावपि। वेदः पुरुषवेदः तदनुभवनप्रधानः पुरुषो वेदपुरुषः, स च स्त्रीपुंनपुंसकसम्बन्धिषु त्रिष्वपि लिङ्गेषु भवतीति, तथा पुरुषचिह्नैः—श्मश्रुप्रभृतिभिरुपलक्षितः पुरुषश्चिह्नपुरुषो, यथा नपुंसकं श्मश्रुचिह्नमिति, पुरुषवेदो वा चिह्नपुरुषस्तेन चिह्नयते पुरुष इतिकृत्वेति, पुरुषवेषधारी वा स्त्र्यादिरिति, अभिलप्यतेऽनेनेति अभिलापः—शब्दः स एव पुरुषः पुल्लिङ्गतया अभिधानात् यथा घटः कुटो वेति, आह च—"[1]अभिलावो पुल्लिंगाभिहाणमेत्तं घडो व चिंधे उ। पुरिसाकिई नपुंसो वेओ वा पुरिसवेसो वा ॥२॥ वेयपुरिसो तिलिंगोऽवि पुरिसवेदाणुभूइकालम्मि" ॥ इति, 'धम्मपुरिस'त्ति—धर्म्मः क्षायिकचारित्रादिस्तदर्जनपराः पुरुषाः धर्म्मपुरुषाः, उक्तं च—"[3]धम्मपुरिसो तयज्जणवावारपरो जह सुसाहू" इति, भोगाः—मनोज्ञाः शब्दादयस्तत्पराः पुरुषा भोगपुरुषाः १, आह च—"भोगपुरिसो समज्जियविसयसुहो चक्कवट्टिव्व" इति, कर्माणि—महारम्भादिसम्पाद्यानि नरकायुष्कादीनीति, उग्रा—भगवतो नाभेयस्य राज्यकाले ये आरक्षका आसन्, भोगास्तत्रैव गुरवः, राजन्यास्तत्रैव वयस्याः, तदुक्तम्—"[5]उग्गा भोगा रायन्ना खत्तिय संगहो भवे चउहा। आरक्खि गुरु वयंसा सेसा जे खत्तिया ते उ ॥१॥"

१ आगमतोऽनुपयुक्तो नोआगमतो द्रव्यपुरुषस्त्रिधा तृतीयः। एकभविकादिस्त्रिविधः मूलोत्तरनिर्मितो वाऽपि (योग्यानि द्रव्याणि आकारवन्ति वा) ॥१॥ २ अभिलापः पुंलिङ्गाभिधानमात्रं घट इव चिह्ने तु। पुरुषाकृतिर्नपुंसको वेदो वा पुरुषवेषो वा ॥२॥ वेदपुरुषस्त्रिलिंगोऽपि पुरुषवेदानुभूतिकाले ३ धर्म्मपुरुषस्तदर्जनव्यापारपरो यथा सुसाधुरिति ॥ ४ भोगपुरुषः समर्जितविषयसुखश्चक्रवर्त्तीव। ५ उग्रा भोगा राजन्याः क्षत्रियाः संग्रहो

इति, तद्भजा अपि तत्तद्व्यपदेशा इति, एषां च मध्यमत्वमनुत्कृष्टत्वाजघन्यत्वाभ्यामिति, दासा–दासीपुत्रादयः भृतकाः–मूल्यतः कर्मकराः 'भाइल्ल'त्ति भागो विद्यते येषां ते भागवन्तः शुद्रचातुर्थिकादय इति॥

उक्तं मनुष्यपुरुषाणां त्रैविध्यमधुना सामान्यतस्तिरश्चां जलचरस्थलचरखचरविशेषाणां, 'तिविहा मच्छे'त्यादि सूत्रैर्द्वादशतिमाह—

तिविहा मच्छा पं० तं०—अंडया पोअया संमुच्छिमा १, अंडगा मच्छा तिविहा पं० तं०—इत्थी पुरिसा णपुंसगा २, पोतया मच्छा तिविहा पं० तं०—इत्थी पुरिसा णपुंसगा ३, तिविहा पक्खी पं० तं०—अंडया पोअया संमुच्छिमा १, अंडया पक्खी तिविहा पं० तं०—इत्थी पुरिसा णपुंसगा २, पोतजा पक्खी तिविहा पं० तं०—इत्थी पुरिसा णपुंसगा ३ एवमेतेणं अभिलावेणं उरपरिसप्पावि ३ भाणियव्वा, भुजपरिसप्पावि ३ भाणियव्वा ९. (सू० १२९) एवं चेव तिविहा इत्थीओ पं० तं०—तिरिक्खजोणित्थीओ मणुस्सित्थीओ देवित्थीओ १, तिरिक्खजोणीओ इत्थीओ तिविहाओ पं० तं०—जलचरीओ थलचरीओ खहचरीओ २, मणुस्सित्थीओ तिविहाओ पं० तं०-कम्मभूमिआओ अकम्मभूमियाओ अंतरदीविगाओ ३, तिविहा पुरिसा पं० तं०—तिरिक्खजोणीपुरिसा मणुस्सपुरिसा देवपुरिसा १, तिरिक्खजोणिपुरिसा तिविहा पं० तं०—जलचरा थलचरा खेचरा २,

[illegible] आत्मस्पृत[illegible]. शेषा ये अभियास्ते तु ॥१॥

मणुस्सपुरिसा तिविहा पं० तं०—कम्मभूमिगा अकम्मभूमिगा अंतरदीवगा ३/६, तिविहा नपुंसगा पं० तं०—णेरतियनपुंसगा तिरिक्खजोणियनपुंसगा मणुस्सनपुंसगा १, तिरिक्खजोणियनपुंसगा तिविहा पं० तं०—जलयरा थलयरा खहयरा २, मणुस्सनपुंसगा तिविधा पं० तं०—कम्मभूमिगा अकम्मभूमिगा अंतरदीवगा ३/६। (सू० १३०) तिविहा तिरिक्खजोणिया पं० तं०—इत्थी पुरिसा नपुंसगा। (सू० १३१)

सुगमानि चैतानि, नवरं अण्डाज्जाता अण्डजाः, पोतं—वस्त्रं तद्वज्जरायुवर्ज्जितत्वाज्जाताः, पोतादिव वा—बोहित्थाज्जाताः पोतजाः, सम्मूर्च्छिमा अगर्भजा इत्यर्थः, सम्मूर्च्छिमानां स्त्र्यादिभेदो नास्ति नपुंसकत्वात्तेषामिति स सूत्रे न दर्शित इति। पक्षिणोऽण्डजाः हंसादयः, पोतजा वल्गुलीप्रभृतयः, सम्मूर्च्छिमाः खञ्जनकादयः, उद्भिज्जत्वेऽपि तेषां सम्मूर्छजत्वव्यपदेशो भवत्येव, उद्भिज्जादीनां सम्मूर्च्छनजविशेषत्वादिति' 'एव'मिति पक्षिवत्, एतेन प्रत्यक्षेणाभिलापेन 'तिविहा उरपरिसप्पे'त्यादिसूत्रत्रयलक्षणेन, उरसा—वक्षसा परिसर्प्पन्तीति उरःपरिसर्प्पाः—सर्पादयस्तेऽपि भणितव्याः, तथा भुजाभ्यां—बाहुभ्यां परिसर्प्पन्ति ये ते तथा नकुलादयस्तेऽपि भणितव्याः, 'एवं चेव'त्ति, एवमेव यथा पक्षिणस्तथैवेत्यर्थः, इहापि सूत्रत्रयमध्येतव्यमिति भावः॥ उक्तं तिर्यग्विशेषाणां त्रैविध्यमिदानीं स्त्रीपुरुषनपुंसकानां तदाह—'तिविहे'त्यादि नवसूत्री सुगमा, नवरं 'खहं'ति प्राकृतत्वेन खम्—आकाशमिति, कृष्यादिकर्म्मप्रधाना भूमिः कर्म्मभूमिः—भरतादिका पञ्चदशधा तत्र जाताः कर्मभूमिजाः, एवमकर्मभूमिजाः, नवरमकर्मभूमिः भोगभूमिरित्यर्थः देवकुर्वादिका त्रिंशद्विधा, अन्तरे—मध्ये समुद्रस्य द्वीपा ये ते तथा तेषु जाता आन्तरद्वीपास्त एवान्तरद्वीपिकाः। विशेष(तः)त्रैविध्यमुक्त्वा सामान्यतस्तिरश्चां तदाह—'तिविहे'त्यादि, कण्ठ्यम्॥

कषायादिपरिणतिश्च जीवानां लेश्यावशतो भव[ती]ति तन्निबन्धनकर्मकारणत्वात् तासामिति नारकादिपदेषु लेश्याः त्रिस्थानकावतारेण निरूपयन्नाह—

नेरइयाणं तओ लेसाओ पं० तं०—कण्हलेसा नीललेसा काउलेसा १, असुरकुमाराणं तओ लेसाओ संकिलिट्ठाओ पं० तं०—कण्हलेसा नीललेसा काउलेसा २, एवं जाव थणियकुमाराणं ११, एवं पुढविकाइयाणं १२ आउवणस्सतिकाइयाणवि १३-१४ तेउकाइयाणं १५ वाउकाइयाणं १६ बेंदियाणं १७ तेंदियाणं १८ चउरिंदियाणवि १९, तओ लेस्सा जहा नेरइयाणं, पंचिंदियतिरिक्खजोणियाणं तओ लेसाओ संकिलिट्ठाओ पं० तं०—कण्हलेसा नीललेसा काउलेसा २०, पंचिंदियतिरिक्खजोणियाणं तओ लेसाओ असंकिलिट्ठाओ पं० तं०—तेउलेसा पम्हलेसा सुक्कलेसा २१, एवं मणुस्साणवि २२, वाणमंतराणं जहा असुरकुमाराणं २३, वेमाणियाणं तओ लेस्साओ पं० तं०—तेउलेसा पम्हलेसा सुक्कलेसा २४ (सू० १३२)

'नेरइयाण'मित्यादिदण्डकसूत्रं कण्ठयं, नवरं 'नेरइयाणं तओ लेस्साओ'त्ति एतासामेव तिसृणां सद्भावादविशेषणो निर्देशः, असुरकुमाराणां तु चतसृणां भावात् संक्लिष्टा इति विशेषितं, चतुर्थी हि तेषां तेजोलेश्याऽस्ति, किन्तु सा न संक्लिष्टेति, पृथिव्यादिष्वसुरकुमारसूत्रार्थमतिदिशन्नाह—'एवं पुढवी'त्यादि, पृथिव्यब्वनस्पतिषु देवोत्पादसम्भवाच्चतुर्थी तेजोलेश्याऽस्तीति सविशेषणो लेश्यानिर्देशोऽतिदिष्टः, तेजोवायुद्वित्रिचतुरिन्द्रियेषु तु देवानुत्पत्त्या तदभावान्निर्विशेषण इत्यत एवाह—'तओ' इत्यादि, पञ्चेन्द्रिय-

तिरश्चां मनुष्याणां च षडपीति संक्लिष्टासंक्लिष्टविशेषणतश्चतुःसूत्री, नवरं मनुष्यसूत्रे अतिदेशेनोक्ते इति व्यन्तरसूत्रे संक्लिष्टा वाच्याः, अत एवोक्तं—'वाणमंतरे'त्यादि, वैमानिकसूत्रं निर्विशेषणमेव, असंक्लिष्टस्यैव त्रयस्य सद्भावात्, व्यवच्छेद्याभावेन विशेषणायोगादिति। ज्योतिष्कसूत्रं नोक्तं, तेषां तेजोलेश्याया एव भावेन त्रिस्थानकानवतारादिति॥

अनन्तरं वैमानिकानां लेश्याद्वारेणेहावतार उक्तो, ज्योतिष्काणां तु तथा तदसम्भवाच्चलनधर्म्मेण तमाह—

तिहिं ठाणेहिं तारारूवे चलिज्जा तं०—विकुव्वमाणे वा परियारेमाणे वा ठाणाओ वा ठाणं संकममाणे तारारूवे चलेज्जा, तिहिं ठाणेहिं देवे विज्जुतारं करेज्जा तं०—विकुव्वमाणे वा परियारेमाणे वा तहारूवस्स समणस्स वा माहणस्स वा इड्ढिं जुतिं जसं बलं वीरियं पुरिसक्कारपरक्कमं उवदंसेमाणे देवे विज्जुतारं करेज्जा। तिहिं ठाणेहिं देवे थणियसद्दं करेज्जा तं०—विकुव्वमाणे, एवं जहा विज्जुतारं तहेव थणियसद्दंपि (सू० १३३)

'तारारूवे'त्ति तारकमात्रं 'चलेज्जा' स्वस्थानं त्यजेत्, वैक्रियं कुर्वद्वा परिचारयमाणं वा, मैथुनार्थं संरम्भयुक्तमित्यर्थः, स्थानाद्वैकस्माद् स्थानान्तरं संक्रामत् गच्छदित्यर्थः यथा धातकीखण्डादिमेरुं परिहरेदिति, अथवा क्वचिन्महर्द्धिके देवादौ चमरवद्वैक्रियादि कुर्वति सति तन्मार्गदानार्थं चलेदिति, उक्तं च—"तत्थ णं जे से वाघाइए अंतरे से जहन्नेणं दोन्नि छावट्ठे जोयणसए, उक्कोसेणं

१ तत्र व्याघातिकं यदिदमन्तरं तज्जघन्येन द्विषष्ट्यधिके द्वे शते योजनानां उत्कृष्टं तु द्वादश सहस्राणि, उत्पातोऽत्राभूतभावार्थोऽनिष्टार्थश्च, यतोऽत्राद्यानि त्रीणि सूत्राण्यनिष्टार्थसूचकान्यपराणि तु दशेष्टार्थशंसीनि, संगता चोत्पत्तिवदुत्पातस्याप्युद्भवतार्थता।

शाम जोयणसहस्साइं,ति, तत्र व्याघातिकमन्तरं महर्द्धिकदेवस्य मार्गदानादिति ॥ अनन्तरं तारकदेवचलनक्रियाकारणान्युक्तान्यथ देवस्यैव विद्युत्स्तनितक्रिययोः कारणानि सूत्रद्वयेनाह—'तिही' त्यादि, कण्ठ्यं, नवरं 'विज्जुयारं'ति विद्युत्–तडित्तस्या क्रियत इति कारः–कारं विद्युतो वा करणं कारः–क्रिया विद्युत्कारस्तं, विद्युतं कुर्यादित्यर्थः, वैक्रियकरणादीनि हि सदर्पस्य भवन्ति, तत्प्रगुणस्य च दर्पोल्लासवनभ्रलनविद्युद्गर्जनादीन्यपि भवन्तीति चलनविद्युत्कारादीनां वैक्रियादिकं कारणतयोक्तमिति, 'ऋद्धिं' विमानपरिवारादिकां द्युतिं–शरीराभरणादीनां 'यशः' प्रख्यातिं बलं शारीरं वीर्यं–जीवप्रभवं पुरुषकारश्च–अभिमानविशेषः स एव निष्पादितस्वप्रयोजनः पराक्रमस्तथा पुरुषकारपराक्रमं समाहारद्वन्द्वः तदेतत्सर्वमुपदर्शयमान इति । तथा स्तनितशब्दो मेघगर्जितं 'एव' मित्यादि गमनं 'परियारेमाणे वा तहारूवस्से' त्याद्यालापकसूचनार्थमिति ॥

विद्युत्कारस्तनितशब्दावुत्पातरूपावनन्तरमुक्तावथोत्पातरूपाण्येव लोकान्धकारादीनि पञ्चदशसूत्र्या—'तिहीं ठाणेहीं' त्यादिकया प्राह—

तिहिं ठाणेहिं लोगंधयारे सिया तं०—अरिहंतेहिं वोच्छिज्जमाणेहिं अरिहंतपन्नत्ते धम्मे वोच्छिज्जमाणे पुव्वगते वोच्छिज्जमाणे १, तिहिं ठाणेहिं लोगुज्जोते सिया तं०—अरहंतेहिं जायमाणेहिं अरहंतेसु पव्वयमाणेसु अरहंताणं णाणुप्पायमहिमासु २, तिहिं ठाणेहिं देवंधकारे सिया तं०—अरहंतेहिं वोच्छिज्जमाणेहिं अरहंतप-

१ मेरोरपगेनि यच्छ्रणोऽुसिः, तादानिरामन्तरं तु त्रयोजनान्यपि चमरायागम इत्र.

न्ने धम्मे वोच्छिज्जमाणे पुव्वगते वोच्छिज्जमाणे ३, तिहिं ठाणेहिं देवुज्जोते सिया तं०—अरहंतेहिं जायमाणेहिं अरहंतेहिं पव्वयमाणेहिं अरहंताणं णाणुप्पायमहिमासु ४, तिहिं ठाणेहिं देवसंनिवाए सिया तं०—अरिहंतेहिं जायमाणेहिं अरिहंतेहिं पव्वयमाणेहिं अरिहंताणं नाणुप्पायमहिमासु ५, एवं देवुक्कलिया ६ देवकहकहए ७। तिहिं ठाणेहिं देविंदा माणुसं लोगं हव्वमागच्छंति तं०—अरहंतेहिं जायमाणेहिं अरहंतेहिं पव्वयमाणेहिं अरहंताणं णाणुप्पायमहिमासु ८, एवं सामाणिया ९ तायत्तीसगा १० लोगपाला देवा ११ अग्गमहिसीओ देवीओ १२ परिसोववन्नगा देवा १३ अणियाहिवई देवा १४ आयरक्खा देवा १५ माणुसं लोगं हव्वमागच्छन्ति। तिहिं ठाणेहिं देवा अब्भुट्ठिज्जा, तं०—अरहंतेहिं जायमाणेहिं जाव तं चेव १, एवमासणाइं चलेज्जा २, सीहणातं करेज्जा ३, चेलुक्खेवं करेज्जा ४, तिहिं ठाणेहिं देवाणं चेइयरुक्खा चलेज्जा तं०—अरहंतेहिं तं चेव ५। तिहिं ठाणेहिं लोगंतिया देवा माणुसं लोगं हव्वमागच्छिज्जा, तं०—अरहंतेहिं जायमाणेहिं अरहंतेहिं पव्वयमाणेहिं अरहंताणं णाणुप्पायणहिमासु (सू० १३४)

कण्ठ्या चेयं, नवरं, 'लोके' क्षेत्रलोकेऽन्धकारं—तमो लोकान्धकारं स्याद्—भवेत् द्रव्यतो लोकानुभावाद्भावतो वा प्रकाशकस्वभावज्ञानाभावादिति, तद्यथा—अर्हन्ति अशोकाद्यष्टप्रकारां परमभक्तिपरसुरासुरविसरविरचितां जन्मान्तरमहालवालविरूढानवद्यवासनाजलाभिषिक्तपुण्यमहातरुकल्याणफलकल्पां महाप्रातिहार्यरूपां पूजां निखिलप्रतिपन्थिप्रक्षयात् सिद्धिसौधशिखरारोहणं चेत्यर्हन्तः, उक्तं च—

अरिहंति वंदणनमंसणाणि अरिहंति पूयसक्कारं। सिद्धिगमणं च अरिहा अरिहंता तेण वुच्चंति ॥१॥" त्ति, तेसु 'व्यवच्छिद्यमाणेसु' विनश्यत्सु, तथार्हत्प्रज्ञप्ते धर्मे व्यवच्छिद्यमाने तीर्थव्यवच्छेदकाले, तथा 'पूर्वाणि' दृष्टिवादाङ्गभागभूतानि तेषु गतं—आदि तदभ्यन्तरीभूतं तत्स्वरूपं यच्छ्रुतं तत्पूर्वगतं तत्र व्यवच्छिद्यमाने, इह च राजमरणदेशनगरभङ्गावपि दृश्यते दिशामन्धकारतां न भवन्तीति यत्पुनर्भगवत्स्वर्हदादिषु निखिलभुवनजनानवद्यनयनसमानेषु विगच्छत्सु लोकान्धकारं भवति तत्किमद्भुतमिति?। लोकोद्योतो लोकानुभावान्मनुष्यलोके देवागमाद्वा, 'नाणुप्पायमहिमासु' केवलज्ञानोत्पादे देवकृतमहोत्सवेष्विति, देवानां भवनादिष्वन्धकारं देवान्धकारं लोकानुभावादेवेति, लोकान्धकारे उक्तेऽपि यद्देवान्धकारमुक्तं, तत्सर्वत्रान्धकारसद्भावप्रतिपादनार्थमिति। एवं देवोद्योतोऽपि, देवसन्निपातो—भुवि तत्समवतारो, देवोत्कलिका—तत्समवायविशेषः 'एव'मिति त्रिभिरेव स्थानैः, 'देवकहकहे'त्ति देवकृतः प्रमोदकलकलध्वनिरेवेति, 'हव्व'न्ति शीघ्रं 'सामाणिय'त्ति इन्द्रसमानर्द्धयः, 'तायत्तीसग'त्ति महत्तरकल्पाः पूज्याः 'लोकपालाः' सोमादयो दिग्नियुक्तकाः 'अग्रमहिष्यः' प्रधानभार्याः 'परिषत्' परिवारस्तत्रोपपन्नका ये ते तथा 'अनीकाधिपतयो' गजादिसैन्यप्रधाना ऐरावतादयः 'आत्मरक्षा' अङ्गरक्षा राज्ञामिवेति, 'माणुस्सं लोयं हव्वमागच्छन्ती'ति प्रतिपदं सम्बन्धनीयं १५ ॥ मनुष्यलोकागमने देवानां यानि कारणान्युक्तानि तान्येव देवाभ्युत्थानादीनां कारणतया सूत्रपञ्चकेनाह— 'तिहिं' इत्यादि कण्ठ्यं, नवरं 'अब्भुट्ठिज्ज'त्ति सिंहासनादभ्युत्तिष्ठेयुरिति, 'आसनानि' शक्रादीनां सिंहासनानि, तच्चलनं लोकानुभावादेवेति, सिंहनादचेलोत्क्षेपौ प्रमोदकार्यौ जनप्रतीतौ, चैत्यवृक्षा ये सुधर्मादिसभानां प्रतिद्वारं पुरतो मुखमण्डपप्रेक्षामण्डपचैत्यस्तूप

१ वन्दननमस्करणमर्हन्ति पूजासत्कारावर्हन्ति सिद्धिगमनं चार्हन्ति तेनार्हन्त उच्यन्ते ॥१॥

चैत्यवृक्षमहाध्वजादिक्रमतः श्रूयन्ते, लोकान्तिकानां प्रधानतरत्वेन भेदेन मनुष्यक्षेत्रागमनकारणान्याह—'तिही'त्यादि कण्ठ्यं, नवरं लोकस्य–ब्रह्मलोकस्यान्तः–समीपं कृष्णराजीलक्षणं क्षेत्रं निवासो येषां ते लोकान्ते वा–औदयिकभावलोकावसाने भवा अनन्तरभवे मुक्तिगमनादिति लोकान्तिकाः–सारस्वतादयोऽष्टधा वक्ष्यमाणरूपा इति ॥

अथ किमर्थं भदन्त! ते इहागच्छन्तीति? उच्यते, अर्हतां धर्माचार्यतया महोपकारित्वात् पूजाद्यर्थम्, अशक्यप्रत्युपकाराश्च भगवन्तो धर्म्माचार्याः, यतः—

तिण्हं दुप्पडियारं समणाउसो! तं०—अम्मापिउणो १ भट्टिस्स २ धम्मायरियस्स ३, संपातोऽवि य णं केइ पुरिसे अम्मापियरं सयपागसहस्सपागेहिं तिल्लेहिं अब्भंगेत्ता सुरभिणा गंधट्टएणं उव्वट्टित्ता तिहिं उदगेहिं मज्जावित्ता सव्वालङ्कारविभूसियं करेत्ता मणुन्नं थालीपागसुद्धं अट्ठारसवंजणाउलं भोयणं भोयावेत्ता जावज्जीवं पिट्ठिवडेंसियाए परिवहेज्जा, तेणावि तस्स अम्मापिउस्स दुप्पडियारं भवइ, अहे णं से तं अम्मापियरं केवलिपन्नत्ते धम्मे आघवइत्ता पन्नवित्ता परूवित्ता ठावित्ता भवति, तेणामेव तस्स अम्मापिउस्स सुप्पडितारं भवति समणाउसो! १, केइ महच्चे दरिद्दं समुक्कसेज्जा, तए णं से दरिद्दे समुक्किट्ठे समाणे पच्छा पुरं च णं विउलभोगसमितिसमन्नागते यावि विहरेज्जा, तए णं से महच्चे अन्नया कयाइ दरिद्दीहूए समाणे तस्स दरिद्दस्स अंतिए हव्वमागच्छेज्जा, तए णं से दरिद्दे तस्स भट्टिस्स सव्वस्समवि दलयमाणे तेणावि तस्स दुप्पडियारं भवति, अहे

णं से तं भट्टिं केवलिपन्नत्ते धम्मे आघवइत्ता पन्नवइत्ता परूवइत्ता ठावइत्ता भवति, तेणामेव तस्स भट्टिस्स सुप्पडियारं भवति २, केति तहारूवस्स समणस्स वा माहणस्स वा अंतिए एगमवि आयरियं धम्मियं सुवयणं सोगा निसम्म कालमासे कालं किचा अन्नयरेसु देवलोएसु देवत्ताए उववन्ने, तए णं से देवे तं धम्मायरियं दुब्भिक्खातो वा देसातो सुभिक्खं देसं साहरेज्जा, कंताराओ वा णिक्कंतारं करेज्जा, दीहकालिएणं वा रोगातंकेणं अभिभूतं समाणं विमोएज्जा, तेणावि तस्स धम्मायरियस्स दुप्पडियारं भवति, अहे णं से तं धम्मायरियं केवलिपन्नत्ताओ धम्माओ भट्ठं समाणं भुज्जोवि केवलिपन्नत्ते धम्मे आघवतित्ता जाव ठावतित्ता भवति, तेणामेव तस्स धम्मायरियस्स सुप्पडियारं भवति ३ (सू० १३५)

'तिण्हं' त्रयाणां दुःखेन-कृच्छ्रेण प्रतिक्रियते-कृतोपकारेण पुंसा प्रत्युपक्रियत इति खल्प्रत्यये सति दुष्प्रतिकरं प्रत्युपकर्त्तुमशक्यमितियावत्, हे श्रमण! हे आयुष्मन्! समस्तनिर्देशो वा हे श्रमणायुष्मन्निति भगवता शिष्यः संबोधितः, अम्बया-मात्रा सह पिता-जनकः अम्बापिता तस्येत्येकं स्थानं, जनकत्वेनैकत्वविवक्षणात्, तथा 'भट्टिस्स'त्ति भर्त्तुः-पोषकस्य स्वामिन इत्यर्थ इति द्वितीयं, धर्मदाता आचार्यः धर्माचार्यः तस्येति तृतीयम्, आह च—"दुष्प्रतिकारौ मातापितरौ स्वामी गुरुश्च लोकेऽस्मिन्। तत्र गुरुरिहामुत्र च सुदुष्करतरप्रतीकारः ॥१॥" इति, तत्र जनकदुष्प्रतिकार्यतामाह—'संपाओ'त्ति प्रातः-प्रभातं तेन समं सम्प्रातः संप्रातरपि च-प्रभातसमकालमपि च, यदैव प्रातः संवृत्तं तदैवेत्यर्थः, अनेन कार्यान्तराव्यग्रतां दर्शयति, संशब्दस्यातिशयार्थत्वाद्वा अतिप्रभाते, प्रतिशब्दार्थत्वाद्वाऽस्य प्रतिप्रभातमित्यर्थः, 'कश्चिदि'ति कुलीन एव, न तु सर्वोऽपि 'पुरुषो' मानवो देवतिरश्चोरेवंविधव्यति-

करासम्भवात्, शतं पाकानाम्–ओषधिक्वाथानां पाके यस्य १ ओषधिशतेन वा सह पच्यते यत् २ शतकृत्वो वा पाको यस्य ३ शतेन वा रूपकाणां मूल्यतः पच्यते ४ यत्तच्छतपाकम्, एवं सहस्रपाकमपि, ताभ्यां तैलाभ्याम्, 'अब्भंगेत्ता' अभ्यङ्गं कृत्वा 'गन्धवट्टएणं' ति गन्धाट्टकेन–गन्धद्रव्यक्षोदेन 'उद्वर्त्य' उद्वलनं कृत्वा त्रिभिरुदकैः गन्धोदकोष्णोदकशीतोदकैः 'मज्जयित्वा' स्ना(स्न)पयित्वा मनोज्ञं–कलमौदनादि 'स्थाली' पिठरी तस्यां पाको यस्य तत्तथा, अन्यत्र हि पक्वमपक्वं वा न तथाविधं स्यादितीदं विशेषणमिति 'शुद्धं' भक्तदोषवर्जितं स्थालीपाकं च तच्छुद्धं च स्थालीपाकेन वा शुद्धमिति विग्रहः, अष्टादशभिर्लोकप्रतीतैर्व्यञ्जनैः–शालनकैस्तक्रादिभिर्वा आकुलं–संकीर्णं यत्तत्तथा, अथवाऽष्टादशभेदं च तद् व्यञ्जनाकुलं चेति, अत्र भेदपदलोपेन समासः, भोजनं भोजयित्वा, एते चाष्टादश भेदाः–'सूओ १ दणो २ जवन्नं ३ तिन्नि य मंसाइं ६ गोरसो ७ जूसो ८। भक्खा ९, गुललावणिया १० मूलफला ११ हरियगं १२ सागो १३ ॥१॥ होइ रसालू य तहा १४ पाणं १५ पाणीय १६ पाणगं चेव १७। अट्ठारसमो सागो १८ निरुवहओ लोइओ पिंडो ॥२॥" मांसत्रयं जलजादिसत्कं जूषो–मुद्गतन्दुलजीरककटुभाण्डादिरसः, भक्ष्याणि–खण्डखाद्यादीनि गुललावणिका–गुडपर्पटिका लोकप्रसिद्धा गुडधाना वा मूलफलान्येक एव पदं, हरितकं–जीरकादि शाको–वस्तुलादिभर्जिका, रसालू–मज्जिका, तल्लक्षणमिदम्—'दो घयपला महूपलं दहिस्स अद्धाढयं मिरिय वीसा। दस खण्डगुलपलाइं एस रसालू णिवइजोग्गो ॥१॥'त्ति, पानं–सुरादि,

१ १ प्र ओदनो यवान्नं त्रीणि च मांसानि गोरसो मुद्गादिरसो। भक्ष्याणि गुलपर्पटिका मूलफलानि जीरकादि वत्थुलादिः ॥१॥ भवति मज्जिका च तथा सुरादि कर्कटिजलं सौवीरादि चैव। अष्टादशः शाको निरुपहतो लौकिकः पिण्डः ॥१॥ २ द्वे घृतपले मधु पलं दध्नोऽर्धाढकं मरीचा विंशतिः। दश गुडखण्डयोः पलानि एष रसालुर्नृपतियोग्यः ॥२॥

पानीयं-जलं, पानकं-द्राक्षापानकादि, शाकः-तक्रसिद्ध इति, यावान् जीवो यावज्जीवं-यावत्प्राणधारणं पृष्ठे-स्कन्धे अवतंस इवावतंसः-शेखरस्तस्य करणमवतंसिका पृष्ठयवतंसिका तया पृष्ठयवतंसिकया परिवहेत्, पृष्ठयारोपितमित्यर्थः, तेनापि परिवाहकेन परिवहनेन वा तस्य-अम्बापितुर्दुष्प्रतीकारम्, अशक्यः प्रतीकार इत्यर्थः, अनुभूतोपकारतया तस्य प्रत्युपकारकारित्वाद्, आह च—"कयंउवयारो जो होइ सज्जणो होइ को गुणो तस्स ?। उवयारबाहिरा जे हवंति ते सुंदरा सुयणा ॥१॥" इति, 'अहे णं से'त्ति अथ चेत् णमित्यलङ्कारे स पुत्रादिस्तम्-अम्बापितरं धर्मे 'स्थापयिता' स्थापनशीलो भवति, अनुष्ठानतः स्थापयतीत्यर्थः, किं कृत्वेत्याह—'आघवइत्ता' धर्ममाख्याय 'पन्नाप्य' बोधयित्वा 'प्ररूप्य' प्रभेदत इति, अथवा आख्याय सामान्यतो यथा कार्यो धर्म्मः, प्रज्ञाप्य विशेषतो यथाऽप्राणिहिंसादिलक्षणः, प्ररूप्य प्रभेदतो यथा (अष्टादश) शीलाङ्गसहस्ररूप इति, शीलार्थवृत्तन्तानि वैतानीति, 'तेणामेव'त्ति तेनैव धर्मस्थापनेनैव न परिवहनेन अथवा तेनैव धर्मस्थापकपुरुषेण न परिवाहिना 'तस्य' प्रत्युपकरणीयस्याम्बापितुः 'सुप्पडियारं'ति सुखेन प्रतिक्रियते-प्रत्युपक्रियत इति सुप्रतिकारं, भावसाधनोऽयं, तद्भवति-प्रत्युपकारः कृतो भवतीत्यर्थः, धर्मस्थापनस्य महोपकारत्वाद्, आह च—"संमत्तदायगाणं दुप्पडियारं भवेसु बहुएसुं। सव्वगुणमेलियाहिवि उपगारसहस्सकोडीहिं ॥१॥" इति २

अथ भर्तुः दुष्प्रतिकार्यतामाह—'केइ महच्चे'त्ति कश्चित्-कोऽपि महती ऐश्वर्यलक्षणाऽर्चा-ज्वाला पूजा वा यस्य अथवा महांश्चासावर्चनीयो [illegible] इति महार्चो महार्च्यो वा माहत्यं-महत्त्वं तद्योगान्माहत्यो वा, ईश्वर इत्यर्थः, दरिद्रम्-अनीश्वरं कञ्चन

१ [illegible] यो [illegible] सज्जनो भवति को गुणस्तस्य ?। उपकारबाह्या ये भवन्ति ते सुन्दराः सज्जनाः ॥१॥ २ सम्यक्त्वदायकानां [illegible] भवेषु [illegible]। सर्वगुणमीलिताभिरपि उपकारसहस्रकोटीभिः ॥१॥

पुरुषमतिदुःस्थं 'समुत्कर्षयेत्' धनदानादिनोत्कृष्टं कुर्यात्, 'ततः' समुत्कर्षणानन्तरं स दरिद्रः समुत्कृष्टो धनादिभिः 'समाणे'त्ति सन् 'पच्छ'त्ति पश्चात्काले 'पुरं च णं'ति पूर्वकाले च समुत्कर्षणकाल एवेत्यर्थः अथवा पश्चाद्–भर्त्तुरसमक्षं पुरश्च–भर्त्तुः समक्षं च विपुलया 'भोगसमित्या' भोगसमुदयेन 'समन्वागतो' युक्तो यः स तथा स चापि 'विहरेत्' वर्त्तेत, ततोऽनन्तरं 'स'महार्चो भर्त्ता 'अन्यदा' लाभान्तरायोदये 'कदाचिद्' तथाविधायामसहायायामापदि दरिद्रीभूतः सन् 'तस्य' पूर्वसमुत्कृष्टस्य 'अन्तिके'–पार्श्वे 'हव्वं'ति अनन्यत्राणतया शीघ्रं त्राणस्य तत्र शक्यत्वाभिसन्धेः आगच्छेत् तदा स पूर्वावस्थया दरिद्रः पूर्वोपकारिणे भर्त्रे 'सव्वस्सं'ति सव्वं च तत् स्वं च–द्रव्यं चेति सर्वस्वं तदपि, आस्तामल्पमिति, 'दलयमाणे'त्ति ददत् न कृतप्रत्युपकारो भवेदिति शेषः, अतस्तेनापि–सर्वस्वदानेन सर्वस्वदायकेनापि वा दुष्प्रतिकारमेवेति २। अथ धर्माचार्यदुष्प्रतिकार्यतामाह—'केई'त्यादि, 'आयरियं'ति पापकर्मभ्य आराद्यातमित्यार्यमत एव धार्मिकमत एव सुवचनं श्रुत्वा श्रोत्रेण 'निशम्य' मनसाऽवधार्य अन्यतरेषु देवलोकेष्वन्यतरदेवानां मध्ये इत्यर्थो देवत्वेनोत्पन्न इति, दुर्लभा भिक्षा यस्मिन् देशे स दुर्भिक्षस्तस्मात् 'संहरेत्' नयेत्, कान्तारम्–अरण्यं निर्गतः कान्ताराभिष्कान्तारस्तन्निष्क्रमितारं वा, दीर्घः कालो विद्यते यस्य स दीर्घकालिकस्तेन रोगः–कालसहः कुष्ठादिरातङ्कः–कृच्छ्रजीवितकारी सद्योघातीत्यर्थः शूलादिरनयोर्द्वन्द्वैकत्वे रोगातङ्कं तेनेति, धर्मस्थापनेन तु भवति कृतोपकारो, यदाह—"[1]जो जेण जंमि ठाणम्मि ठाविओ दंसणे व चरणे वा। सो तं तओ चुयं तंमि चेव काउं भवे निरिणो ॥१॥" त्ति, शेषं सुगमत्वान्न स्पृष्टमिति।

धर्म्मस्थापनेन चास्य भवच्छेदलक्षणः प्रत्युपकारः कृतः स्यादिति धर्मस्य स्थानत्रयावतारणेन भवच्छेदकारणतामाह—

१. यो येन यस्मिन् स्थाने स्थापितो दर्शने वा चरणे वा। स तं ततश्च्युतं तस्मिन्नेव कृत्वा भवेन्निरृणः ॥१॥

तिहिं ठाणेहिं संपण्णे अणगारे अणादीयं अणवदग्गं दीहमद्धं चाउरंतं संसारकंतारं वीईवएज्जा, तं०—अणिदाणयाए दिट्ठिसंपन्नयाए जोगवाहियाए (सू० १३६) तिविहा ओसप्पिणी पं० तं०—उक्कोसा मज्झिमा जहन्ना १, एवं छप्पि समाओ भाणियव्वाओ, जाव दूसमदूसमा ७, तिविहा उस्सप्पिणी पं० तं०—उक्कोसा मज्झिमा जहन्ना ८ एवं छप्पि समाओ भाणियव्वाओ, जाव सुसमसुसमा १४ (सू० १३७) तिहिं ठाणेहिं अच्छिन्ने पोग्गले चलेज्जा तं०—आहारिज्जमाणे वा पोग्गले चलेज्जा विकुव्वमाणे वा पोग्गले चलेज्जा ठाणातो वा ठाणं संकामिज्जमाणे पोग्गले चलेज्जा, तिविहे उवधी पं० तं०—कम्मोवही सरीरोवही· बाहिरभंडमत्तोवही, एवं असुरकुमाराणं भाणियव्वं, एवं एगिंदियनेरइयवज्जं जाव वेमाणियाणं १, अहवा तिविहे उवधी पं० तं०—सचित्ते अचित्ते मीसए, एवं णेरइयाणं निरंतरं जाव वेमाणियाणं, तिविहे परिग्गहे पं० तं०—कम्मपरिग्गहे सरीरपरिग्गहे बाहिरभंडमत्तपरिग्गहे, एवं असुरकुमाराणं, एवं एगिंदियनेरतियवज्जं जाव वेमाणियाणं ३, अहवा तिविहे परिग्गहे पं० तं०—सचित्ते अचित्ते मीसए, एवं नेरतियाणं निरंतरं जाव वेमाणियाणं ४ (सू० ॥१३८॥)

'तिही'त्यादि कण्ठ्यं, नवरं अनादिकम्–आदिरहितमनवदग्रम्–अनन्तं दीर्घाध्वं–दीर्घमार्गं चत्वारोऽन्ता–विभागा नरकगत्यादयो यस्य तच्चतुरन्तं, दीर्घत्वं प्राकृतत्वात्, संसार एव कान्तारम्–अरण्यं संसारकान्तारं तद् 'व्यतिव्रजेत्' व्यतिक्रामेदिति, अनादिकत्वादीनि विशेषणानि कान्तारपक्षेऽपि विवक्षया योजनीयानि, तथाहि–अनाद्यनन्तमरण्यमतिमहत्वाच्चतुरन्तं दिग्भेदादिति, निदानं–भोगर्द्धिप्रार्थनास्वभावमार्त्तध्यानं तद्विवर्जितता अनिदानता तया 'दृष्टिसम्पन्नता' सम्यग्दृष्टिता तया 'योगवाहिता'

श्रुतोपधानकारित्वं समाधिस्थायिता वा तयेति॥ भवव्यतिव्रजनं च कालविशेष एव स्यादिति कालविशेषनिरूपणायाह—'तिविहे'-त्यादि सूत्राणि चतुर्दश कण्ठ्यानि, नवरम् अवसर्पिणीप्रथमेऽरके उत्कृष्टा, चतुर्षु मध्यमा, पश्चिमे जघन्या, एवं सुषमसुषमादिषु प्रत्येकं त्रयं त्रयं कल्पनीयम्, तथा उत्सर्प्पिण्याः दुष्षमदुष्षमादि तद्भेदानां चोक्तविपर्ययेणोत्कृष्टत्वं प्राग्वद्योज्यमिति॥ काललक्षणा अचेतनद्रव्यधर्म्मा अनन्तरमुक्तास्तत्साधर्म्यात्पुद्गलधर्म्मान्निरूपयन् सूत्राणि पञ्च चतुरश्च दण्डकानाह—'तिही'त्यादि, छिन्नः खड्गादिना पुद्गलः समुदायाच्चलत्येवेत्यत आह—'अच्छिन्नपुद्गल' इति, 'आहारेज्जमाणे'त्ति आहारतया जीवेन गृह्यमाणः स्वस्थानाच्चलति, जीवेनाकर्षणात्, एवं वैक्रियमाणो वैक्रियकरणवशवर्त्तितयेति, स्थानात्स्थानान्तरं संक्रम्यमाणो हस्तादिनेति। उपधीयते—पोष्यते जीवोऽनेनेत्युपधिः, कर्म्मैवोपधिः कर्म्मोपधिः, एवं शरीरोपधिः, बाह्यः—शरीरबहिर्वर्त्ती भाण्डानि च—भाजनानि मृन्मयानि मात्राणि च—मात्रायुक्तानि कांस्यादिभाजनानि भाजनोपकरणमित्यर्थः, भाण्डमात्राणि तान्येवोपधिः भाण्डमात्रोपधिः, अथवा भाण्डं—वस्त्राभरणादि तदेव मात्रा—परिच्छदः [च्छेदः] सैवोपधिरिति, ततो बाह्यशब्दस्य कर्म्मधारय इति, चतुर्विंशतिदण्डकचिन्तायामसुरादीनां त्रयोऽपि वाच्याः, नारकैकेन्द्रियवर्जाः, तेषामुपकरणस्याभावाद्, द्वीन्द्रियादीनां तूपकरणं दृश्यत एव केषाञ्चिदित्यत एवाह—'एव' मित्यादि, 'अहवे'त्यादि, सचित्तोपधिर्यथा शैलं भाजनम्, अचित्तो—वस्त्रादिः, मिश्रः—परिणतप्रायं शैलभाजनमेवेति, दण्डकचिन्ता सुगमा, नवरं सचित्तोपधिर्नारकाणां शरीरं अचेतनः—उत्पत्तिस्थानं मिश्रः—शरीरमेवोच्छ्वासादिपुद्गलयुक्तं तेषां सचेतनाचेतनत्वेन मिश्रत्वस्य विवक्षणादिति, एवमेव शेषाणामप्ययमूह्य इति। 'तिविहे परिग्गहे' इत्यादि सूत्राणि उपधिवन्नेयानि, नवरं परिगृह्यते-स्वीक्रियते इति परिग्रहो—मूर्च्छाविषय इति, इह च एषामयमिति व्यपदेशभागेव ग्राह्यः, स च नारकैकेन्द्रियाणां कर्म्मादिरेव सम्भवति, न भाण्डादिरिति॥

पुद्गलधर्म्माणां त्रित्वं निरूप्य जीवधर्म्माणां 'तिविहे' इत्यादिभिस्त्रिभिः सदण्डकैः सूत्रैस्तदाह—

तिविहे पणिहाणे पं० तं०—मणपणिहाणे वयपणिहाणे, कायपणिहाणे, एवं पंचिंदियाणं जाव वेमाणियाणं, तिविहे सुप्पणिहाणे पं० तं०—मणसुप्पणिहाणे वयसुप्पणिहाणे कायसुप्पणिहाणे, संजयमणुस्साणं तिविहे सुप्पणिहाणे पन्नत्ते तं०—मणसुप्पणिहाणे वइसुप्पणिहाणे कायसुप्पणिहाणे, तिविहे दुप्पणिहाणे पं० तं०—मणदुप्पणिहाणे वइदुप्पणिहाणे कायदुप्पणिहाणे, एवं पंचिंदियाणं जाव वेमाणियाणं (सू० १३९)। तिविहा जोणी पं० तं०—सीता उसिणा सीओसिणा, एवं एगिंदियाणं विगलिंदियाणं तेउकाइयवज्जाणं संमुच्छिमपंचिंदियतिरिक्खजोणियाणं संमुच्छिममणुस्साण य। तिविहा जोणी पं० तं०—सचित्ता अचित्ता मीसिया, एवं एगिंदियाणं विगलिंदियाणं संमुच्छिमपंचिंदियतिरिक्खजोणियाणं संमुच्छिममणुस्साण य। तिविधा जोणी पं० तं०—संवुडा वियडा संवुडवियडा। तिविहा जोणी पं० तं०—कुम्मुन्नया संखावत्ता वंसीपत्तिया, कुम्मुन्नया णं जोणी उत्तमपुरिसमाऊणं, कुम्मुन्नयाते णं जोणीए तिविहा उत्तमपुरिसा गब्भं वक्कमंति, तं०—अरहंता चक्कवट्टी बलदेववासुदेवा, संखावत्ता जोणी इत्थीरयणस्स, संखावत्ताए णं जोणीए बहवे जीवा य पोग्गला य वक्कमंति विउक्कमंति चयंति उववज्जंति नो चेव णं निप्फज्जंति, वंसीपत्तिता णं जोणी पिहज्जणस्स, वंसीपत्तिताए णं जोणीए बहवे पिहज्जणे गब्भं वक्कमंति (सू० १४०)

कण्ठयानि चैतानि, नवरं प्रणिहितिः प्रणिधानम्–एकाग्रता, तच्च मनःप्रभृतिसम्बन्धिभेदात्त्रिधेति, तत्र मनसः प्रणिधानं मनःप्रणिधानमेवमितरे, तच्च चतुर्विंशतिदण्डके सर्वेषां पञ्चेन्द्रियाणां भवति, तदन्येषां तु नास्ति, योगानां सामस्त्येनाभावादित्यत एवोक्तम्––'एवं' पञ्चेंदिये' त्यादीति । प्रणिधानं हि शुभाशुभभेदमथ शुभमाह–तिविहे' इत्यादि सामान्यसूत्रं १, विशेषमाश्रित्य तु चतुर्विंशतिदण्डकचिन्तायां मनुष्याणामेव तत्रापि संयतानामेवेदं भवति, चारित्रपरिणामरूपत्वादस्येति, अत एवाह–संजये'त्यादि २, (दुष्टं) प्रणिधानं दुष्प्रणिधानम्–अशुभमनःप्रवृत्त्यादिरूपं सामान्यप्रणिधानवत् व्याख्येयमिति ३। जीवपर्यायाधिकारात् 'तिविहेत्यादिना गब्भं वक्कमंती'त्येतदन्तेन ग्रन्थेन योनिसरूपमाह, तत्र युवन्ति–तैजसकार्मणशरीरवन्तः सन्त औदारिकादिशरीरेण मिश्रीभवन्त्यस्यामिति योनिः–जीवस्योत्पत्तिस्थानं शीतादिस्पर्शवदिति, 'एवं'ति यथा सामान्यतस्त्रिविधा तथा चतुर्विंशतिदण्डकचिन्तायामेकेन्द्रियविकलेन्द्रियाणां तेजोवर्जानां. तेजसामुष्णयोनित्वात्, पञ्चेन्द्रियतिर्यक्पदे मनुष्यपदे च सम्मूर्च्छनजानां त्रिविधा, शेषाणां त्वन्यथेति, यत आह––"[1]सीओसिणजोणीया सव्वे देवा य गब्भवक्कंती । उसिणा य तेउकाए दुह णिरए तिविह सेसाणं ॥१॥" इति ॥ अन्यथा योनित्रैविध्यमाह–'तिविहे'त्यादि कण्ठ्यं, नवरं दण्डकचिन्तायामेकेन्द्रियादीनां सचित्तादिस्त्रिविधा योनिरन्येषां त्वन्यथा, यत उक्तम्––"[2]अचित्ता खलु जोणी नेरइयाणं तहेव देवाणं । मीसा य गब्भवसही तिविहा जोणी य सेसाणं ॥१॥" इति, पुनरन्यथा तामाह––'तिविहे'त्यादि, संवृता–सङ्कटा घटिकालयवत् विवृता–विपरीता संवृतविवृता तूभयरूपेति, एतद्विभागोऽयं––

१ शीतोष्णयोनिकाः सर्वे देवाश्च गर्भव्युत्क्रान्तिकाः । उष्णा च तेजस्काये द्विधा नरके त्रिविधा शेषाणाम् ॥१॥ २ अचित्तैव योनिर्नैरयिकाणां तथैव देवानाम्। मिश्रा च गर्भवसतीनां त्रिविधा योनिश्च शेषाणाम् ॥१॥

"एगिंदियनेरइया संवुडजोणी हवंति देवा य। विगलिंदियाण विगडा संवुडवियडा य गब्भंमि ॥१॥" त्ति" 'कुम्मुन्नये'त्यादि कण्ठ्यं, नवरं कूर्मः—कच्छपः तद्वदुन्नता कूर्मोन्नता, शङ्खस्येवावर्त्तो यस्यां सा शङ्खावर्त्ता, वंश्या—वंशजाल्याः पत्रकमिव या सा वंशीपत्रिका, 'गब्भं वक्कमंति'त्ति गर्भे उत्पद्यन्ते, बलदेववासुदेवानां सहचरत्वेनैकत्वविवक्षयोत्तमपुरुषत्रैविध्यमिति, 'तहचे'इत्यादि, योनिन्याश्रिताः पुद्गलाश्च तद्ग्रहणप्रायोग्याः, किं?—'व्युत्क्रामन्ति' उत्पद्यन्ते, 'व्यवक्रामन्ति' विनश्यन्ति, एतदेव व्याख्याति—'चिउक्कमंति'त्ति, कोऽर्थः?—च्यवन्ते, 'वक्कमन्ति'त्ति, किमुक्तं भवति?—उत्पद्यन्ते इति, 'पिहज्जणस्स'त्ति पृथग्जनस्य—सामान्यजनस्योत्पत्तिकारणं भवतीति।

अनन्तरं योनितो मनुष्याः प्ररूपिताः, अधुना मनुष्यस्य सधर्मणो बादरवनस्पतिकायिकान् प्ररूपयन्नाह—

तिविहा तणवणस्सइकाइया पं० तं०—संखेज्जजीविता असंखेज्जजीविता अणंतजीविया सू० (१४१)। जंबुद्दीवे दीवे भारहे वासे तओ तित्था पं० तं०—मागहे वरदामे पभासे, एवं एरवएवि, जंबुद्दीवे दीवे महाविदेहे वासे एगमेगे चक्कवट्टिविजये ततो तित्था पं० तं०—मागहे वरदामे पभासे ३, एवं धायइसंडे दीवे पुरच्छिमद्धेवि ३, पचत्थिमद्धेवि ०, पुक्खरवरदीवद्धपुरच्छिमद्धेवि १२ पचत्थिमद्धेवि १५ (सू० १४२)

'तिविहे'त्यादि, तृणवनस्पतयो बादरा इत्यर्थः, सङ्ख्यातजीविकाः—सङ्ख्यातजीवाः, यथा नालिकाबद्धकुसुमानि जात्यादीनी-

१ एकेन्द्रियनैरयिकाः संवृतयोनयो भवन्ति देवाश्च। विकलेन्द्रियाणां विवृता संवृतविवृता च गर्भे ॥१॥

त्यर्थः, असंख्यातजीविका यथा निम्बाम्रादीनां मूलकन्दस्कन्धत्वक्शाखाप्रवालाः, अनन्तजीविकाः—पनकादय इति, इह प्रज्ञापनासूत्राण्यपीत्थं—"जे केऽवि नालियाबद्धा, पुप्फा संखेज्जजीविया। णीहुआ अणंतजीवा, जे यावन्ने तहाविहा ॥१॥ पउमुप्पलनलिणाणं, सुभगसोगंधियाण य। अरविंदकोंकणाणं, सयवत्तसहस्सवत्ताणं ॥२॥ बिंटं बाहिरपत्ता य कन्निया चेव एगजीवस्स। अब्भिंतरगा पत्ता पत्तेयं केसरं मिंजा ॥३॥" इति ॥ तथा—लिंबंबजंबुकोसंबसालअंकुल्लपीलुमल्लूया। सल्लइमोयइमालु[मोत्थ]य बउलपवासे करंजे य ॥४॥, इत्यादि, "एएसिं मूलावि असंखेज्जजीविया कंदावि खंधावि तयावि सालावि, पवालावि, पत्ता पत्तेयजीविया, पुप्फा अणेगजीविया, फला एगट्ठिया" इति ॥ अनन्तरं वनस्पतय उक्तास्ते च जलाश्रया बहवो भवन्तीति सम्बन्धाज्जलाश्रयाणां तीर्थानां निरूपणायाह—'जंबुद्दीवे' इत्यादि पञ्चदशसूत्री साक्षादतिदेशतश्च, सुगमा च, केवलं तीर्थानि—चक्रवर्त्तिनः समुद्रशीतादिमहानद्यवतारलक्षणानि तन्नामकदेवनिवासभूतानि, तत्र भरतैरावतयोस्तानि पूर्वदक्षिणापरसमुद्रेषु क्रमेणेति, विजयेषु तु शीताशीतोदामहानद्योः पूर्वादिक्रमेणैवेति ॥

जम्बूद्वीपादौ मनुष्यक्षेत्रे सन्ति तीर्थानि प्ररूपितानि, अधुना तत्रैव सन्तं काल त्रिस्थानोपयोगिनं सूत्रपञ्चदशकेन साक्षादति-

१ यानि कान्यपि नालिकाबद्धानि पुष्पाणि संख्येयजीविकानि। स्निहूरनन्तजीवा ये चाप्यन्ये तथाविधाः ॥१॥ पद्मोत्पलनलिनानां सुभगसौगन्धिकयोश्च। अरविन्दकोकनदयोः शतपत्रसहस्रपत्रयोः ॥२॥ वृन्तं बाह्यपत्राणि कर्णिका एकजीवस्य। अभ्यन्तराणि पत्राणि प्रत्येकं केशराणि मिञ्जाश्च ॥३॥ निम्बाम्रजम्बूकोशाम्ब्रशालांकोल्लपीलुशाल्लूकाः सल्लकीमोचकीमालुका बकुलपलाशकरञ्जाश्च ॥४॥ एतेषां मूलान्यप्यसंख्येयजीविकानि कन्दान्यपि स्कन्धा अपि त्वगपि शाला अपि प्रवाला अपि, पत्राणि प्रत्येकजीविकानि पुष्पाण्यनेकजीविकानि फलान्येकास्थिकानि.

देशाभ्यां निरूपयन्नाह—

जंबुद्दीवे २ भरहेरवएसु वासेसु तीताए उस्सप्पिणीते सुसमाए समाए तिन्नि सागरोवमकोडाकोडीओ कालो हुत्था १. एवं ओसप्पिणीए नवरं पन्नत्ते २, आगमिस्साते उस्सप्पिणीए भविस्सति ३, एवं धायइसंडे पुरच्छिमद्धे पच्चत्थिमद्धेवि ९, एवं पुक्खरवरदीवद्धपुरच्छिमद्धे पच्चत्थिमद्धेवि कालो भाणियव्वो १५। जंबुद्दीवे दीवे भरहेरवएसु वासेसु तीताते उस्सप्पिणीते सुसमसुसमाते समाए मणुया तिण्णि गाउयाइं उद्धं उच्चत्तेणं तिन्नि पलिओवमाइं परमाउं पालइत्था १. एवं इमीसे ओसप्पिणीते २ आगमिस्साए उस्सप्पिणीए ३, जंबुद्दीवे दीवे देवकुरुउत्तरकुरासु मणुया तिण्णि गाउआइं उद्धं उच्चत्तेणं पं०, तिन्नि पलिओवमाइं परमाउं पालयंति ४, एवं जाव पुक्खरवरदीवद्धपच्चत्थिमद्धे २०। जंबुद्दीवे दीवे भरहेरवएसु वासेसु एगमेगाते ओसप्पिणिउस्सप्पिणीए तओ वंसाओ उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिसंति वा तं०—अरहंतवंसे चक्कवट्टिवंसे दसारवंसे २१, एवं जाव पुक्खरवरदीवद्धपच्चत्थिमद्धे २५। जंबूदीवे दीवे भरहेरवएसु वासेसु एगमेगाए ओसप्पिणीउस्सप्पिणीए तओ उत्तमपुरिसा उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिस्संति वा तं०—अरहंता चक्कवट्टी बलदेववासुदेवा २६, एवं जावपुक्खरवरदीवद्धपच्चत्थिमद्धे ३०, तओ अहाउयं पालयंति तं०—अरहंता चक्कवट्टी बलदेववासुदेवा ३१, तओ मज्झिममाउगं पालयंति, तं०—अरहंता चक्कवट्टी बलदेववासुदेवा ३२ (सू० १४३)

'जंबूदीवे'इत्यादि सुबोधं, किंतु, 'पन्नत्ते'इति अवसर्पिणीकालस्य वर्त्तमानत्वेनातीतोत्सर्पिणीवत् 'होत्थ'त्ति न व्यपदेशः कार्यः अपि तु पन्नत्तेत्ति कार्य इत्यर्थः, 'जंबूदीवेत्यादिना वासुदेवे'त्येतदन्तेन ग्रन्थेन कालधर्म्मानेवाह–सुगमश्चायं, किन्तु अहाउयं पालयंति'त्ति निरुपक्रमायुष्कत्वात्, मध्यमायुः पालयन्ति वृद्धत्वाभावात् ।

आयुष्काधिरादिदं सूत्रद्वयमाह—

बायरतेउकाइयाणं उक्कोसेणं तिन्नि राइंदियाइं ठिती पन्नत्ता । बायरवाउकाइयाणं उक्कोसेणं तिन्नि वाससहस्साइं ठिती पं० । (सू० १४४) । अह भंते ! सालीणं वीहीणं गोधूमाणं जवाणं जवजवाणं एतेसि णं धन्नाणं कोट्ठाउत्ताणं पल्लाउत्ताणं मंचाउत्ताणं मालाउत्ताणं ओलित्ताणं लित्ताणं लंछियाणं मुद्दियाणं पिहिताणं केवइयं कालं जोणी संचिट्ठति ?, गोयमा ! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं तिण्णि संवच्छराइं, तेण परं जोणी पमिलायति, तेण परं जोणी पविद्धंसति, तेण परं जोणी विद्धंसति, तेण परं बीए अबीए भवति, तेण परं जोणीवोच्छेदो पं० (सू० १४६) । दोचाए णं सक्करप्पभाए पुढवीए णेरइयाणं उक्कोसेणं तिण्णि सागरोवमाइं ठिती पं० १, तच्चाए णं वालुयप्पभाए पुढवीए जहन्नेणं णेरइयाणं तिन्नि सागरोवमाइं ठिती पण्णत्ता २ (सू० १४६)

स्पष्टम् ॥ स्थित्यधिकारादेवेदमपरमाह—'अहे'त्यादि, 'अह भंते'त्ति 'अथ'परिप्रश्नार्थः, 'भदन्ते'ति भदन्तः–कल्याणस

सुखस्य च हेतुत्वात् कल्याणः सुखश्चेति, आह च—"भदि कल्लाणसुहत्थो धाऊ तस्स य भदंतसद्दोऽयं । स भदंतो कल्लाणं सुहो य कल्लं किलारोग्गं ॥१॥" इत्यादि, अथवा भजते–सेवते सिद्धान् सिद्धिमार्गं वा अथवा भज्यते–सेव्यते शिवा [सिद्धस]र्थिभिरिति भदन्तः, आह च—"अहवा भज सेवाए तस्स भयंतोत्ति सेवए जम्हा । सिवगइगो सिवमग्गं सेव्वो य जओ तदत्थीणं ॥१॥" अथवा भाति–दीप्यते भ्राजते वा–दीप्यते वा दीप्यते एव ज्ञानतपोगुणदीप्त्येति भान्तो भ्राजन्तो वेति, आह च—"अहवा[3] भा भाजो वा दित्तीए होइ तस्स भंतोत्ति । भाजंतो वाऽऽयरिओ सो णाणतवोगुणजुईए ॥१॥" इति, अथवा भ्रान्तः–अपेतो मिथ्यात्वादेः, तत्रानवस्थित इत्यर्थः, इति भ्रान्तः, अथवा भगवान्–ऐश्वर्ययुक्त इति, आह च—"अहवा भंतोऽपेओ जं मिच्छत्ताइबंधहेऊओ । अहवेसरियाइ भगो विज्जइ सो तेण भगवंतो ॥१॥" इति, भवस्य वा–संसारस्य भयस्य वा–त्रासस्यान्तहेतुत्वात्–नाशकारणत्वाद् भवान्तो भयान्तो वेति, उक्तं च—"नेरइयाइभवस्स व अंतो जं तेण सो भवंतोत्ति । अहवा भयस्स अंतो होइ भवं(यं) तो भयं तासो ॥१॥" ति, इह च भदन्तादीनां शब्दानां स्थाने प्राकृतत्वादामन्त्रणार्थं भंतेत्ति पदं साधनीयमिति, अतो 'भंते'त्ति महावीरमामन्त्रयन्नुक्तवान् गौतमादिः 'शालीनां' कलमादिकानामिति विशेषः, शेषाणां व्रीहीणामिति सामान्यं, 'यवयवा' यवविशेषा एव, 'एतेषाम्'

१ भदिः कल्याणसुखार्थो धातुस्तस्य च भदंतशब्दोऽयं । स भदत: कल्याणं सुखश्च कल्यं किलारोग्यम् ॥१॥ २ अथवा भज सेवायां तस्य भदंत इति सेवते यस्मात्सिद्धिगामिनः शिवमार्गं सेव्यश्च यतस्तदर्थिभिः ॥१॥ ३ अथवा भा भ्राजो वा दीप्तौ तस्य भवति भान्त इति । भाजन्तो वाऽऽचार्यः स ज्ञानतपोगुणद्युत्या ॥१॥ ४ अथवा भ्रान्तोऽपेतो यन्मिथ्यात्वादिबन्धहेतुतः । अथवैश्वर्यादिः भगो विद्यते तस्य तेन भगवान् ॥१॥ ५ नैरयिकादिभवस्यान्तो यतोऽनेन स भवान्त इति । अथवा भयस्यान्तो भवति भयान्तः भयं त्रासः ॥१॥

अभिहितत्वेन प्रत्यक्षाणां कोष्ठे–कुशूले आगुप्तानि–प्रक्षेपणेन संरक्षितानि कोष्ठागुप्तानि तेषामेवं सर्वत्र, नवरं पल्यं–वंशकटकादिकृतो धान्याधारविशेषः, मञ्चः–स्थूणानामुपरि स्थापितवंशकटकादिमयो जनप्रतीतः मालको–गृहस्योपरितनभागः, अभिहितं च—"अकुड्डो[1] होइ मंचो मालो य घरोवरिं होइ"त्ति, 'ओलित्ताणं'ति द्वारदेशे पिधानेन सह गोमयादिना अवलिप्तानां 'लित्ताणं'ति सर्वतः 'लंछियाणं'ति रेखादिभिः कृतलाञ्छनानां 'मुद्दियाणं'ति मृत्तिकादिमुद्रावतां 'पिहियाणं'ति स्थगितानां, 'केवतियं'ति कियन्तं कालं योनिर्यस्यामङ्कुर उत्पद्यते ?, ततः परं योनिः प्रम्लायति–वर्णादिना हीयते प्रविध्वस्यते–विध्वंसाभिमुखा भवति 'विध्वस्यते' क्षीयते, एवं च तद्बीजमबीजं भवति–उप्तमपि नाङ्कुरमुत्पादयति, किमुक्तं भवति ?–ततः परं योनिव्यवच्छेदः प्रज्ञप्तो मयाऽन्यैश्च केवलिभिरिति, शेषं स्पष्टम् ॥ स्थित्यधिकारादेवेदमपरं सूत्रद्वयमाह—'दोच्चे' त्यादि स्फुटं, नवरं द्वितीयायां पृथिव्यां, किंनामिकायामित्याह–शर्कराप्रभायामित्येवं योजनीयं, सर्वपृथिवीषु चेयं स्थितिः—"सागरमेगं[2] तिय सत्त दस य सत्तरस तह य बावीसा । तेत्तीसं जाव ठिई सत्तसु पुढवीसु उक्कोसा ॥१॥ जा पढमाए जेट्ठा सा बिइयाए कणिट्ठिया भणिया । तरतमजोगो एसो दसवाससहस्स रयणाए ॥२॥" इति ॥

नरकपृथिव्यधिकारान्नरकनारकविशेषस्वरूपप्ररूपणाय सूत्रत्रयमाह—

---

१ अकुड्यो भवति मंचो मालश्च गृहोपरि भवति. २ एकं सागरं त्रीणि सप्त दश च सप्तदश तथा च द्वाविंशतिः । त्रयस्त्रिंशद्यावत् स्थितिः सप्तसु पृथ्वीषूत्कृष्टा ॥१॥ या प्रथमायां ज्येष्ठा सा द्वितीयायां कनिष्ठिका भणिता । तरतमयोग एष दशवर्षसहस्राणि रत्नायां ॥१॥

पंचमाए णं धूमप्पभाए पुढवीए तिन्नि निरयावाससयसहस्सा पं०, तिसु णं पुढवीसु णेरइयाणं उसिणवेयणा पन्नत्ता तं०—पढमाए दोच्चाए तच्चाए, तिसुणं पुढवीसु णेरइया उसिणवेयणं पच्चणुभवमाणा विहरंति—पढमाए दोच्चाए तच्चाए (सू० १४७)। ततो लोगे समा सपक्खिं सपडिदिसिं पं० तं०—अप्पइट्ठाणे णरए जंबुद्दीवे दीवे सव्वट्ठसिद्धे महाविमाणे, तओ लोगे समा सपक्खिं सपडिदिसिं पं० तं०—सीमंतए णं णरए समयक्खेत्ते ईसीपब्भारा पुढवी (सू० १४८)। तओ समुद्दा पगईए उदगरसेणं पं० तं०—कालोदे पुक्खरोदे सयंभुरमणे ३, तओ समुद्दा बहुमच्छकच्छभाइण्णा पं० तं०——लवणे कालोदे सयंभुरमणे (सू० १४९)

'पंचमाए'इत्यादि, सुबोधं केवलं 'उसिणवेयण'त्ति तिसृणामुष्णस्वभावत्वात्, तिसृषु नारका उष्णवेदना इत्युक्त्वापि यदुक्तं नैरयिका उष्णवेदनां प्रत्यनुभवन्तो विहरन्तीति तत्तद्वेदनासातत्यप्रदर्शनार्थम् ॥ नरकपृथिवीनां क्षेत्रस्वभावानां प्रागुक्तस्वरूपमुक्तमथ क्षेत्राधिकारात् क्षेत्रविशेषस्वरूपस्य त्रिस्थानकावतारिणो निरूपणाय सूत्रचतुष्टयमाह—'तओ' इत्यादि, त्रीणि लोके समानि—तुल्यानि योजनलक्षप्रमाणत्वात् न च प्रमाणत एवात्र समत्वमपि तु औत्तराधर्यव्यवस्थिततया समश्रेणितयाऽपीत्यत आह—'सपक्खिं'मित्यादि, पक्षाणां—दक्षिणवामादिपार्श्वानां सदृशता—समता सपक्षमित्यव्ययीभावस्तेन समपार्श्वतया समानीत्यर्थः, इकारस्तु प्राकृतत्वात्, तथा प्रतिदिशां—विदिशां सदृशता सप्रतिदिक् तेन समप्रतिदिक्तयेत्यर्थः, अप्रतिष्ठानः सप्तम्यां पञ्चानां नरकावासानां मध्यमः, तथा जम्बूद्वीपः सकलद्वीपमध्यमः, सर्वार्थसिद्धं विमानं पञ्चानामनुत्तराणां मध्यममिति। सीमन्तकः प्रथमपृथिव्यां प्रथमप्रस्तटे

नरकेन्द्रकः पञ्चचत्वारिंशद्योजनलक्षाणि, समयः–कालः तत्सत्तोपलक्षितं क्षेत्रं समयक्षेत्रं मनुष्यलोक इत्यर्थः, ईषद्–अल्पो योजनाष्टकबाहल्यपञ्चचत्वारिंशल्लक्षविष्कम्भात् प्राग्भारः–पुद्गलनिचयो यस्याः–सेषत्प्राग्भाराऽष्टमपृथिवी, शेषपृथिव्यो हि रत्नप्रभाद्या महाप्राग्भाराः, अशीत्यादिसहस्राधिकयोजनलक्षबाहल्यत्वात्, तथाहि—"[1]पढमाऽसीइसहस्सा बत्तीसा अट्ठवीस वीसा य। अट्ठार सोलस य अट्ठ सहस्स लक्खोवरिं कुज्जा ॥१॥" इति, विष्कम्भस्तु तासां क्रमेणैकाद्याः सप्तान्ता रज्जव इति, अथवेषत्प्राग्भारा मनागवनतत्वादिति ॥ प्रकृत्या—स्वभावेनोदकरसेन युक्ता इति, क्रमेण चैते द्वितीयतृतीयान्तिमाः। प्रथमद्वितीयान्तिमाः समुद्रा बहुजलचराः अन्ये त्वल्पजलचरा इति, उक्तं च—'[2]लवणे उदगरसेसु य महोरया मच्छकच्छहा भणिया। अप्पा सेसेसु भवे न य ते णिम्मच्छया भणिया ॥१॥" अन्यच्च—"[3]लवणे कालसमुद्दे सयंभूरमणे य होंति मच्छा उ। अवसेससमुद्देसुं न हुंति मच्छा व मयरा वा ॥२॥ नत्थित्ति पउरभावं पडुच्च न उ सव्वमच्छपडिसेहो। अप्पा सेसेसु भवे नय ते निम्मच्छया भणिया ॥३॥" इति ॥

क्षेत्राधिकारादेवाप्रतिष्ठाने नरकक्षेत्रे ये उत्पद्यन्ते तानाह—

---

१ प्रथमाऽशीतिः सहस्राणि द्वात्रिंशदष्टाविंशतिर्विंशतिश्चाष्टादश षोडश चाष्ट सहस्राणि लक्षोपरि कुर्यात् ॥१॥ २ लवणे उदकरसेषु च महोरगा मत्स्यकच्छपा भणिताः। अल्पाः शेषेषु भवेयुर्न च ते निर्मत्स्यका भणिताः ॥१॥ ३ लवणे कालसमुद्रे स्वयंभूरमणे च भवंति मत्स्यास्तु। अवशेषसमुद्रेषु न भवंति मत्स्या वा मकरा वा ॥१॥ न सन्तीति प्रचुरभावं प्रतीत्य नैव सर्वथा मत्स्यप्रतिषेधः। अल्पाः शेषेषु भवेयुर्नैव ते निर्मत्स्यका भणिताः ॥१॥

तओ लोगे णिस्सीला णिव्वता णिग्गुणा निम्मेरा णिप्पच्चक्खाणपोसहोववासा कालमासे कालं किच्चा अहे सत्तमाए पुढवीए अप्पतिट्ठाणे णरए णेरइयत्ताए उववज्जंति, तं०—रायाणो मंडलीया जे य महारंभा कोडुंबी। तओ लोए सुसीला सुव्वया सग्गुणा समेरा सपच्चक्खाणपोसहोववासा कालमासे कालं किच्चा सव्वट्ठसिद्धे महाविमाणे देवत्ताए उववत्तारो भवंति, तं०—रायाणो परिचत्तकामभोगा सेणावती पसत्थारो (सू० १५०)। बंभलोगलंतएसु णं कप्पेसु विमाणा तिवण्णा पं० तं०—किण्हा नीला लोहिया, आणयपाणयारणच्चुतेसु णं कप्पेसु देवाणं भवधारणिज्जसरीरा उक्कोसेणं तिण्णि रयणीओ उद्धं उच्चतेणं पण्णत्ता (सू० १५१)। तओ पन्नत्तीओ कालेणं अहिज्जंति, तं०—चंदपन्नत्ती सूरपन्नत्ती दीवसागरपन्नत्ती (सू० १५२)। तिट्ठाणस्स पढमो उद्देसो समत्तो ॥

'तओ' इत्यादि, 'निःशीला' निर्गतशुभस्वभावाः दुःशीला इत्यर्थः, एतदेव प्रपञ्चयते—'निर्व्रताः' अविरताः प्राणातिपातादिभ्यो 'निर्गुणा' उत्तरगुणाभावात् 'निम्मेर'त्ति निर्मर्यादाः प्रतिपन्नापरिपालनादिना, तथा प्रत्याख्यानं च-नमस्कारसहितादि पौषधः-पर्वदिनमष्टम्यादि तत्रोपवासः-अभक्तार्थकरणं स च तौ निर्गतौ येषां ते निष्प्रत्याख्यानपौषधोपवासाः 'कालमासे' मरणमासे 'कालं' मरणमिति, 'णेरइयत्ताए'त्ति पृथिव्यादित्वव्यवच्छेदार्थं, तत्र ह्येकेन्द्रियतया तदन्येऽप्युत्पद्यन्त इति, तत्र राजानः-चक्रवर्तिवासुदेवाः माण्डलिकाः-शेषा राजानः, ये च महारम्भाः-पञ्चेन्द्रियादिव्यपरोपणप्रधानकर्मकारिणः कुटुम्बिन इति, शेषं कण्ठ्य-

म् ॥ अप्रतिष्ठानस्य स्थित्यादिभिः समाने सर्वार्थे ये उत्पद्यन्ते तानाह—'तओ' इत्यादि सुगमं, केवलं राजानः-प्रतीताः परित्यक्तकामभोगाः-सर्वविरताः, एतच्चोत्तरपदयोरपि सम्बन्धनीयं, सेनापतयः-सैन्यनायकाः प्रशास्तारो-लेखाचार्यादयः, धर्मशास्त्रपाठका इति क्वचित् ॥ अनन्तरोक्तसर्वार्थसिद्धविमानसाधर्म्याद्विमानान्तरनिरूपणायाह—'बंभे'त्यादि, इह च "किण्हा नीला लोहिय"त्ति, पुस्तकेष्वेवं त्रैविध्यं दृश्यते, स्थानान्तरे च लोहितपीतशुक्लत्वेनेति, यत उक्तम्—"सोहम्मे पंचवन्ना एक्कगहाणी य जा सहस्सारो। दो दो तुल्ला कप्पा तेण परं पुंडरीयाइं ॥१॥" इति, अनन्तरं विमानान्युक्तानि तानि च देवशरीराश्रया इति देवशरीरमानं त्रिस्थानकानुपात्याह—'आणये'त्यादि, भवं-जन्मापि यावद्धार्यन्ते भवं वा-देवगतिलक्षणं धारयन्तीति भवधारणीयानि तानि च तानि शरीराणि चेति भवधारणीयशरीराणीति, उत्तरवैक्रियव्यवच्छेदार्थं चेदं, तस्य लक्षप्रमाणत्वात्, 'उक्कोसेणं'ति उत्कर्षेण, न तु जघन्यत्वादिना, जघन्येन तस्योत्पत्तिसमयेऽङ्गुलासंख्येयभागमात्रत्वादिति, शेषं कण्ठ्यमिति। अनन्तरं देवशरीराश्रयवक्तव्यतोक्ता तत्प्रतिबद्धाश्च प्रायस्त्रयो ग्रन्था इति तत्स्वरूपाभिधानायाह—'तओ' इत्यादि, कालेन-प्रथमपश्चिमपोरुषीलक्षणेन हेतुभूतेनाधीयन्ते, व्याख्याप्रज्ञप्तिर्जम्बूद्वीपप्रज्ञप्तिश्च न विवक्षिता, त्रिस्थानकानुरोधादिति, शेषं स्पष्टम् ॥

इति त्रिस्थानकस्य प्रथम उद्देशको विवरणतः समाप्तः ॥

---

१ सौधर्मे पंचवर्णानि एकैकहानिश्च यावत्सहस्रारः। द्वौ द्वौ कल्पौ तुल्यौ ततः परं पुण्डरीकाणि ॥१॥

व्याख्यातः प्रथम उद्देशकः, तदनन्तरं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः, प्रथमोद्देशके जीवधर्माः प्राय उक्ताः, इहापि प्रायस्त एवेत्यनेन सम्बन्धस्यास्येदमादिसूत्रम्—

तिविहे लोगे पं० तं०—णामलोगे ठवणलोगे दव्वलोगे, तिविधे लोगे पं० तं०—णाणलोगे दंसणलोगे चरित्तलोगे तिविहे लोगे पं० तं०—उड्ढलोगे अहोलोगे तिरियलोगे (सू० १५३)

अस्य चायमभिसम्बन्धः—अनन्तरसूत्रेण चन्द्रप्रज्ञप्त्यादिग्रन्थस्वरूपमुक्तमिह तु चन्द्रादीनामेवार्थानामाधारभूतस्य लोकस्य स्वरूपमभिधीयत इत्येवंसम्बन्धस्यास्य सूत्रस्य व्याख्या-लोक्यते-अवलोक्यते केवलावलोकेनेति लोको, नामस्थापने इन्द्रसूत्रवत्, द्रव्यलोकोऽपि तथैव, नवरं ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यलोको धर्मास्तिकायादीनि जीवाजीवरूपाणि रूप्यरूपीणि सप्रदेशाप्रदेशानि द्रव्याण्येव, द्रव्याणि च तानि लोकश्चेति विग्रहः, उक्तं च—"जीवमजीवे रूवमरूवी सपएसअप्पएसे य। जाणाहि दव्वलोयं णिच्चमणिच्चं च जं दव्वं ॥१॥" इति, भावलोकं त्रिधाऽऽह—'तिविहे' इत्यादि, भावलोको द्विविधः—आगमतो नोआगमतश्च, तत्रागमतो लोकपर्यालोचनोपयोगः तदुपयोगानन्यत्वात् पुरुषो वा, नोआगमतस्तु सूत्रोक्तो ज्ञानादिः, नोशब्दस्य मिश्रवचनत्वात्, इदं हि त्रयं प्रत्येकमितरेतरसव्यपेक्षं नागम एव केवलो नाप्यनागम इति, तत्र ज्ञानं चासौ लोकश्चेति ज्ञानलोकः, भावलोकता चास्य क्षायिकक्षायोपशमिकभावरूपत्वात्, क्षायिकादिभावानां च भावलोकत्वेनाभिहितत्वात्, उक्तं च—"ओदइय उवसमिए य खइए य तहा खओव-

१ जीवा अजीवा रूपिणोऽरूपिणः सप्रदेशा अप्रदेशाश्च। जानीहि द्रव्यलोकं नित्यमनित्यं च यद्द्रव्यं ॥१॥ २ औदयिक औपशमिकः क्षायिकः क्षायोपशमिकश्च। तथा परिणामः सन्निपातश्च षड्विधो भावलोक इति ॥१॥

समिए य। परिणाम सन्निवाए य छव्विहो भावलोगो उ। ॥१॥" त्ति, एवं दर्शनचारित्रलोकावपीति ॥ अथ क्षेत्रलोकं त्रिधाऽऽह— 'तिविहे' इत्यादि, इह च बहुसमभूमिभागे रत्नप्रभाभागे मेरुमध्ये अष्टप्रदेशो रुचको भवति, तस्योपरितनप्रतरस्योपरिष्टान्नव योजन शतानि यावज्ज्योतिश्चक्रस्योपरितलस्तावत् तिर्यग्लोकस्ततः परत उद्र्ध्वभागस्थितत्वात् उद्र्ध्वलोको देशोनसप्तरज्जुप्रमाणो रुचकस्याधस्तनप्रतरस्याधो नव योजनशतानि यावत्तावत्तिर्यग्लोकः, ततः परतोऽधोभागस्थितत्वादधोलोकः सातिरेकसप्तरज्जुप्रमाणः, अधोलोकोद्र्ध्वलोकयोर्मध्ये अष्टादशयोजनशतप्रमाणस्तिर्यग्भागस्थितत्वात् तिर्यग्लोक इति, प्रकारान्तरेण चायं गाथाभिर्व्याख्यायते— "[1]अहवा अहपरिणामो खेत्तणुभावेण जेण ओसन्नं। असुहो अहोत्ति भणिओ दव्वाणं तेणऽहोलोगो ॥१॥ उड्ढं उवरिं जं ठिय सुहखेत्तं खेत्तओ य दव्वगुणा। उप्पज्जंति सुभा वा तेण तओ उड्ढलोगोत्ति ॥२॥ मज्झणुभावं खेत्तं जं तं तिरियंति वयणपज्जवओ। भण्णइ तिरिय विसालं अओ य तं तिरियलोगोत्ति ॥३॥"

लोकस्वरूपनिरूपणानन्तरं तदाधेयानां चमरादीनां चमरस्सेत्यादिना अच्चुयलोगवालाण' मित्येतदन्तेन ग्रन्थेन पर्षदो निरूपयति—

**चमरस्स णं असुरिंदस्स असुरकुमाररन्नो ततो परिसातो पं० तं०—समिता चंडा जाया, अब्भिंतरिता**

१ अथवा अधः परिणामः क्षेत्रानुभावेन येन प्रायेण। अशुभोऽध इति भणितो द्रव्याणां तेनाधोलोकः ॥१॥ ऊर्ध्वमुपरि यत्स्थितं शुभक्षेत्रं क्षेत्रतश्च शुभा वा द्रव्यगुणाः। उत्पद्यन्ते तेन स ऊर्ध्वलोक इति ॥१॥ मध्यमानुभावं क्षेत्रं यत्तत्तिर्यगिति वचनपर्यायतः। भण्यते तिर्यग्विशालं अतश्च तत्तिर्यग्लोक इति ॥१॥

समिता मज्झिमता चंडा बाहिरता जाया, चमरस्स णं असुरिंदस्स असुरकुमाररन्नो सामाणिताणं देवाणं ततो परिसातो पं० तं०—समिता जहेव चमरस्स, एवं तायत्तीसगाणवि, लोगपालाणं तुंबा तुडिया पव्वा, एवं अग्गमहिसीणवि, बलिस्सवि एवं चेव, जाव अग्गमहिसीणं, धरणस्स य सामाणियतायत्तीसगाणं च समिता चंडा जाता, लोगपालाणं अग्गमहिसीणं ईसा तुडिया दढरहा, जहा धरणस्स तहा सेसाणं भवणवासीणं, कालस्स णं पिसाइंदस्स पिसायरण्णो तओ परिसाओ पं० तं०—ईसा तुडिया दढरहा, एवं सामाणियअग्गमहिसीणं, एवं जाव गीयरतिगीयजसाणं, चंदस्स णं जोतिसिंदस्स जोतिसरन्नो ततो परिसातो पं०, तं०—तुंबा तुडिया पव्वा, एवं सामाणियअग्गमहिसीणं एवं सूरस्सवि, सक्कस्स णं देविंदस्स देवरन्नो ततो परिसाओ पं० तं०—समिता चंडा जाया, एवं जहा चमरस्स जाव अग्गमहिसीणं, एवं जाव अच्चुतस्स लोगपालाणं (सू० १५४)

सुगमश्चायं, नवरं 'असुरिंदस्से' त्यादौ इन्द्र ऐश्वर्ययोगात् राजा तु राजनादिति 'परिषत्' परिवारः, सा च त्रिधा प्रत्यासत्तिभेदेन, तत्र ये परिवारभूता देवा देव्यश्चातिगौरव्यत्वात् प्रयोजनेऽप्याहूता एवागच्छन्ति सा अभ्यन्तरा परिषत् ये त्वाहूता अनाहूताश्चागच्छन्ति सा मध्यमा ये त्वनाहूता अप्यागच्छन्ति सा बाह्येति, तथा यया सह प्रयोजनं पर्यालोचयति साऽऽद्या यया तु तदेव पर्यालोचितं सत् प्रपञ्चयति सा द्वितीया यस्यास्तु तत्प्रवर्णयति साऽन्त्येति ॥

अनन्तरं परिषदुत्पन्नदेवाः प्ररूपिताः, देवत्वं च कुतोऽपि धर्म्मात् , तत्प्रतिपत्तिश्च कालविशेषे भवतीति कालविशेषनिरूपणपूर्वं

तत्रैव धर्मविशेषाणां प्रतिपत्तीराह—

ततो जामा पं० तं०—पढमे जामे मज्झिमे जामे पच्छिमे जामे, तिहिं जामेहिं आता केवलिपन्नत्तं धम्मं लभेज्ज सवणताते—पढमे जामे मज्झिमे जामे पच्छिमे जामे, एवं जाव केवलनाणं उप्पाडेज्जा पढमे जामे मज्झिमे जामे पच्छिमे जामे। ततो वया पं० तं०—पढमे वते मज्झिमे वते पच्छिमे वए, तिहिं वतेहिं आया केवलिपन्नत्तं धम्मं लभेज्ज सवणयाए, तं०—पढमे वते मज्झिमे वते पच्छिमे वते, एसो चेव गमो णेयव्वो, जाव केवलनाणंति ( सू० १५५)

'तओ जामे'त्यादि स्पष्टं, केवलं यामो–रात्रेर्दिनस्य च चतुर्थभागो यद्यपि प्रसिद्धस्तथाऽपीह त्रिभाग एव विवक्षितः, पूर्वरात्रमध्यरात्रापररात्रलक्षणो यमाश्रित्य रात्रिस्त्रियामेत्युच्यते, एवं दिनस्यापि, अथवा चतुर्थभाग एव सः, किन्त्विह चतुर्थो न विवक्षितः, त्रिस्थानकानुरोधादित्येवमपि त्रयो यामा इत्यभिहितम् , एवं 'जाव' त्तिकरणादिदं दृश्यं—'केवलं' बोहिं बुज्झेज्जा। मुंडे भवित्ता अगाराओ अणगारियं पव्वएज्जा, केवलं बंभचेरवासमावसेज्जा, एवं संजमेणं संजमेज्जा, संवरेणं संवरेज्जा, आभिणिबोहियनाणं उप्पाडेज्जे' त्यादि। यथा कालविशेषे धर्मप्रतिपत्तिरेवं वयोविशेषेऽपीति तन्निरूपणतस्तत्र धर्मविशेषप्रतिपत्तीराह—'तओ वये'त्यादि स्फुटं, किन्तु प्राणिनां कालकृतावस्था वय उच्यते, तत् त्रिधा–बालमध्यमवृद्धत्वभेदादिति, वयोलक्षणं चेदम्—"आषोडशाद्भवेद्बालो, यावत्क्षीरान्नवर्त्तकः। मध्यमः सप्ततिं यावत् , परतो वृद्ध उच्यते ॥१॥" शेषं प्राग्वत् ॥

नाभिनवं ... ॥१॥" शेषं प्राग्वत् ॥

उक्तानेव धर्मविशेषांस्त्रिधा बोधिशब्दाभिधेयान् १ बोधिमतो २ बोधिविपक्षभूतं मोहं ३ तद्वतश्च ४ सूत्रचतुष्टयेनाह—

तिविहा बोधी पं० तं०—णाणबोधी दंसणबोधी चरित्तबोधी १ तिविहा बुद्धा पं० तं०—णाणबुद्धा दंसणबुद्धा चरित्तबुद्धा २ एवं मोहे ३ मूढा ४ (सू० १५६), तिविहा पव्वज्जा, पं० तं०—इहलोगपडिबद्धा परलोगपडिबद्धा दुहओपडिबद्धा, तिविहा पव्वज्जा, पं० तं०—पुरतो पडिबद्धा मग्गतो पडिबद्धा दुहओ पडिबद्धा, तिविहा पव्वज्जा, पं० तं०—तुयावइत्ता पुयावइत्ता बुआवइत्ता, तिविहा पव्वज्जा पं० तं०—उवातपव्वज्जा अक्खातपव्वज्जा संगारपव्वज्जा (सू० १५७)

सुबोधं, किन्तु बोधिः—सम्यग्बोधः, इह च चारित्रं बोधिफलत्वात् बोधिरुच्यते, जीवोपयोगरूपत्वाद्वा, बोधिविशिष्टाः पुरुषास्त्रिधा ज्ञानबुद्धादय इति, 'एवं मोहे मूढ'त्ति बोधिवद्बुद्धवच्च मोहो मूढाश्च त्रिविधा वाच्याः, तथाहि—'तिविहे मोहे पण्णत्ते, तंजहा—णाणमोहे' इत्यादि, 'तिविहा मूढा पन्नत्ता, तंजहा—णाणमूढे इत्यादि ॥ चारित्रबुद्धाः प्रागभिहिताः, ते च प्रव्रज्यायां सत्यामतस्तां भेदतो निरूपयन्नाह—'तिविहे'त्यादि. सूत्रचतुष्टयं सुगमं. केवलं प्रव्रजनं—गमनं पापाचरणव्यापारेष्विति प्रव्रज्या, एतच्च चरणयोगमलं मोक्षगमनमेव. कारणे कार्योपचारात् . तन्दुलान् वर्षति पर्जन्य इत्यादिवदिति, उक्तं च—"पव्वयणं पव्वज्जा पावाओ सुद्धचरणजोगेसु । इय मोक्खं पइ गमणं कारणे कज्जोवयाराओ ॥१॥" इति, इहलोकप्रतिबद्धा—ऐहलौकिकभोजनादिकार्यार्थिना परलोक-

१ प्रव्रजनं गमनं पापाच्छुद्धचरणयोगेषु । एवं मोक्षं प्रति गमनं (प्रव्रज्या) कारणे कार्योपचारात् ॥१॥

प्रतिबद्धा-जन्मान्तरकामाद्यर्थिनां द्विधाप्रतिबद्धा-इहलोकपरलोकप्रतिबद्धा सा चोभयार्थिनामिति, पुरतः-अग्रतः प्रतिबद्धा प्रव्रज्या-पर्यायभाविषु शिष्यादिष्वाशंसनतः प्रतिबन्धात् मार्गतः-पृष्ठतः स्वजनादिषु स्नेहाच्छेदात् तृतीया द्विधाऽपीति । 'तुयावइत्त'त्ति तुद व्यथने' इति वचनात् तोदयित्वा-तोदं कृत्वा व्यथामुत्पाद्य या प्रव्रज्या दीयते मुनिचन्द्रपुत्रस्य सागरचन्द्रेणेव सा तथोच्यते, 'पुयावइत्त'त्ति, 'प्लुङ्गता' त्रिति वचनात् 'प्लावयित्वा-अन्यत्र नीत्वा आर्यरक्षितवद् या दीयते सा तथेति, 'बुयावइत्ता' संभाष्य गौतमेन कर्षकवदिति । अवपातः-सेवा सद्गुरूणां ततो या सा अवपातप्रव्रज्या, तथा आख्यातेन-धर्मदेशनेन आख्यातस्य वा-प्रव्रजेत्यभिहितस्य गुरुभिर्या साऽऽख्यातप्रव्रज्या फल्गुरक्षितस्येवेति, 'संगार'त्ति सङ्केतस्तस्माद् या सा सङ्गारप्रव्रज्या मेतार्यादीनामिवेति, अथवा यदि त्वं प्रव्रजसि तदा मया प्रव्रजितव्यमित्येवं या सा तथा ॥

उक्तप्रव्रज्यावन्तो निर्ग्रन्था भवन्तीति निर्ग्रन्थस्वरूपं सूत्रद्वयेनाह—

**तओ णियंठा णोसंण्णोवउत्ता पं० तं०—पुलाए णियंठे सियाए। ततो णियंठा सन्नणोसंण्णोवउत्ता पं० तं०—बउसे पडिसेवणाकुसीले कसायकुसीले २ (सू० १५८)। तओ सेहभूमीओ पं० तं०—उक्कोसा मज्झिमा जहन्ना, उक्कोसा छम्मासा, मज्झिमा चउमासा, जहन्ना सत्तराइंदिया। ततो थेरभूमीओ पं० तं०—जाइथेरे सुत्तथेरे परियायथेरे, सट्ठिवासजाए समणे णिग्गंथे जातिथेरे, ठाणंगसमवायधरे णं समणे णिग्गंथे सुयथेरे, वीसवासपरियाए णं समणे णिग्गंथे परियायथेरे (सू० १५९)**

'तओ' इत्यादि, निर्गता ग्रन्थात् सबाह्याभ्यन्तरादिति निर्ग्रन्थाः-संयता 'नो' नैव संज्ञायाम्-आहाराद्यभिलापरूपायां पूर्वानुभूतस्मरणानागतचिन्ताद्वारेणोपयुक्ता ये ते नोसंज्ञोपयुक्ताः, तत्र पुलाको-लब्ध्युपजीवनादिना संयमासारताकारको वक्ष्यमाणलक्षणः, निर्ग्रन्थः-उपशान्तमोहः क्षीणमोहो वेति, स्नातको-घातिकर्ममलक्षालनावाप्तशुद्धज्ञानस्वरूपः ॥ तथा त्रय एव संज्ञोपयुक्ता नोसंज्ञोपयुक्ताश्च मङ्कीर्णस्वरूपाः, तथास्वरूपत्वात्, तथा चाह—"सन्ननोसन्नोवउत्त"त्ति, संज्ञा च-आहारादिविषया नोसंज्ञा च-तदभावलक्षणा संज्ञानोसंज्ञे तयोरुपयुक्ता इति विग्रहः, पूर्वह्रस्वता प्राकृतत्वादिति, तत्र बकुशः-शरीरोपकरणविभूषादिना शबलचारित्रपटः प्रतिषेवणया मूलगुणादिविषयया, कुत्सितं शीलं यस्य स तथा, एवं कषायकुशील इति ॥ निर्ग्रन्थाश्चारोपितव्रताः केचित् भवन्तीति व्रतारोपणकालविशेषानाह 'तओ सेहे'त्यादि सुगमं, किन्तु 'सेहे'ति 'षिधू संराद्धा'विति वचनात् सेध्यते-निष्पाद्यते यः स सेधः शिक्षां वाऽर्हति इति शैक्षः तस्य भूमयो-महाव्रतारोपणकाललक्षणाः अवस्थापदव्य इति सेधभूमयः शैक्षभूमयो वेति, अयमभिप्रायः-उत्कृष्टतः षड्भिर्मासैरुत्थाप्यते न तानतिक्राम्यते, जघन्यतः सप्तभिरेव रात्रिन्दिवैर्गृहीतशिक्षत्वादिति, उक्तं च—"सेहस्स तिन्नि भूमी जहन्न तह मज्झिमा य उक्कोसा। राइंदिसत्त चउमासिगा य छम्मासिआ चेव ॥१॥" इति, आसु चायं व्यवहारोक्तो विभागः—"पुव्वोवट्ठपुराणे करणजयट्ठा जहन्निया भूमी। उक्कोसा दुम्मेहं पडुच्च अस्सद्दहाणं च ॥१॥ एमेव य मज्झिमगा अणहिज्जंते असद्दहंते य।

१ शैक्षस्य तिस्रो भूमयो जघन्या तथा मध्यमा चोत्कृष्टा। रात्रिंदिवसप्तकं चतुर्मासिका षाण्मासिका चैव ॥१॥ २ पूर्वोपस्थे पुराणे करणजयार्थं जघन्या भूमिः। उत्कृष्टा दुर्मेधसं प्रतीत्याश्रद्दधानं च ॥१॥ एवमेव च मध्यमा अनधीयाने चाश्रद्दधाने च। भावितमेधाविनोऽपि करणजयार्थं च मध्यमा ॥१॥

भाविंयमेहाविस्सत्ति, करणजयट्ठा य मज्झिमगा ॥२॥" इति ॥ शैक्षस्य च विपर्यस्तः स्थविरो भवतीति तद्भूमिनिरूपणायाह—'तओ थेरे' इत्यादि कण्ठ्यं, नवरं स्थविरो–वृद्धस्तस्य भूमयः–पदव्यः स्थविरभूमय इति, जातिः–जन्म श्रुतम्–आगमः पर्यायः–प्रव्रज्या तैः स्थविरा–वृद्धा ये ते तथोक्ता इति, इह च भूमिकाभूमिकावतोरभेदादेवमुपन्यासः, अन्यथा भूमिका उद्दिष्टा इति ता एव वाच्याः स्युरिति, एतेषां च त्रयाणां क्रमेणानुकम्पापूजावन्दनानि विधेयानि, यत उक्तं व्यवहारे—"आहारे उवही सेज्जा, संथारे खेत्तसंकमे। किइच्छंदाणुवत्तीहिं, अणुकंपइ थेरगं ॥१॥ उट्ठाणासणदाणाइं, जोगाहारप्पसंसणा। नीयसेज्जाइ निदेसवत्तित्ते पूयए सुयं ॥२॥ उट्ठाणं वंदणं चेव, गहणं दंडगस्स य। अगुरुणोऽविय णिद्देसे, तईयाए पवत्तए ॥१॥" इति ॥

स्थविरा इति पुरुषप्रकारा उक्ताः, तदधिकारात् पुरुषप्रकारानेवाह—

**ततो पुरिसजाया पं० तं०—सुमणे दुम्मणे णोसुमणेणोदुम्मणे १ ततो पुरिसजाया पं० तं०—गंता णामेगे सुमणे भवति, गंता णामेगे दुम्मणे भवति, गंता णामेगे णोसुमणेणोदुम्मणे भवति २, तओ पुरिसजाया पं० तं०—जामीतेगे सुमणे भवति, जामीतेगे दुम्मणे भवति, जामीतेगे णोसुमणेणोदुम्मणे भवति ३, एवं जाइस्सामीतेगे सुमणे भवति ३.४, ततो पुरिसजाया पं० तं०—अगंता णामेगे सुमणे भवति ३५, ततो पुरिसजाता पं०**

१ आहारे उपधौ शय्यायां संस्तारे क्षेत्रसंक्रमे। कृतिच्छन्दोऽनुवृत्तिभिरनुकंपते स्थविरं ॥१॥ उत्थानासनदानयोः योग्याहारशंसनायां। नीचैःशय्यादौ निदेशवर्त्तित्वे पूज्यते श्रुतं ॥२॥ उत्थानं वन्दनं चैव ग्रहणं दण्डकस्य च। अगुरोरपि च निर्देशे तदा प्रवर्त्तते तस्य तृतीयस्य ॥१॥

तं०--ण जामि एगे सुमणे भवति ३६, ततो पुरिसजाया पं० तं०--ण जाइस्सामि एगे सुमणे भवति, ३७, एवं आगंता णामेगे सुमणे भवति ३८, एतिमेगे सु० ३ एस्सामीति एगे सुमणे भवति ३ एवं एएणं अभिलावेणं--
गंता य अगंता(य) १ आगंता खलु तथा अणागंता २। चिट्ठित्तमचिट्ठित्ता ३, णिसितित्ता चेव नो चेव ॥४॥१॥
हंता य अहंता य ५ छिंदित्ता खलु तहा अछिंदित्ता ६। बूतित्ता अबूतित्ता ७ भासित्ता चेव णो चेव ॥८॥२॥
दच्चा य अदच्चा य ९ भुंजित्ता खलु तधा अभुंजित्ता १०। लंभित्ता अलंभित्ता ११ पिइत्ता चेव नो चेव ॥१२॥३॥
सुतित्ता असुतित्ता १३ जुज्झित्ता खलु तहा अजुज्झित्ता १४॥ जतित्ता अजयित्ता य १५ पराजिणित्ता य [चेव] नो चेव ॥१६॥४॥ सद्दा १७ रूवा १८ गंधा १९ रसा य २० फासा २१ (२१×६=१२६-१-१२७) तहेव ठाणा य। निस्सीलस्स गरहिता पसत्था पुण सीलवंतस्स ॥५॥ एवमिक्केक्के तिन्नि उ तिन्नि उ आलावगा भाणियव्वा, सद्दं सुणेत्ता णामेगे सुमणे भवति ३ एवं सुणेमीति ३ सुणिस्सामीति ३, एवं असुणेत्ता णामेगे सुमणे भवति ३ न सुणेमीति ३ ण सुणिस्सामीति ३, एवं रूवाइं गंधाइं रसाइं फासाइं, एक्केक्के छ छ आलावगा भाणियव्वा १२७ आलावगा भवन्ति (सू० १६०) तओ ठाणा णिस्सीलस्स निव्वयस्स णिग्गुणस्स णिम्मेरस्स णिप्पचक्खाणपोसहोववासस्स गरहिता भवन्ति तं०--अस्सिं लोगे गरहिते भवइ उववाते गरहिए भवइ आयाती गरहिता भवति, ततो ठाणा सुसीलस्स सुव्वयस्स सगुणस्स सुमेरस्स सपचक्खाणपोसहोववासस्स पसत्था भवन्ति, तं०--अस्सिं लोगे पसत्थे भवति उववाए पसत्थे भवति आजाती पसत्था भवति (सू० १६१)

भावियमेहाविस्सवि, करणजयट्ठा य मज्झिमगा ॥२॥'' इति ॥ शैक्षस्य च विपर्यस्तः स्थविरो भवतीति तद्भूमिनिरूपणायाह—'तओ थेरे' इत्यादि कण्ठ्यं, नवरं स्थविरो—वृद्धस्तस्य भूमयः—पदव्यः स्थविरभूमय इति, जातिः—जन्म श्रुतम्—आगमः पर्यायः—प्रव्रज्या तैः स्थविरा—वृद्धा ये ते तथोक्ता इति, इह च भूमिकाभूमिकावतोरभेदादेवमुपन्यासः, अन्यथा भूमिका उद्दिष्टा इति ता एव वाच्याः स्युरिति, एतेषां च त्रयाणां क्रमेणानुकम्पापूजावन्दनानि विधेयानि, यत उक्तं व्यवहारे—''आहारे उवही सेज्जा, संथारे खेत्तसंकमे। किइच्छंदाणुवत्तीहिं, अणुकंपइ थेरगं ॥१॥ उट्ठाणासणदाणाइं, जोगाहारप्पसंसणा। नीयसेज्जाइ निद्दसवत्तित्ते पूयए सुयं ॥२॥ उट्ठाणं वंदणं चेव, गहणं दंडगस्स य। अगुरुणोऽविय णिद्देसे, तईयाए पवत्तए ॥१॥'' इति ॥

स्थविरा इति पुरुषप्रकारा उक्ताः, तदधिकारात् पुरुषप्रकारानेवाह—

तओ पुरिसजाया पं० तं०—सुमणे दुम्मणे णोसुमणेणोदुम्मणे १ ततो पुरिसजाया पं० तं०—गंता णामेगे सुमणे भवति, गंता णामेगे दुम्मणे भवति, गंता णामेगे णोसुमणेणोदुम्मणे भवति २, तओ पुरिसजाया पं० तं०—जामीतेगे सुमणे भवति, जामीतेगे दुम्मणे भवति, जामीतेगे णोसुमणेणोदुम्मणे भवति ३, एवं जाइस्सामीतेगे सुमणे भवति ३४, ततो पुरिसजाया पं० तं०—अगंता णामेगे सुमणे भवति ३५, ततो पुरिसजाता पं०

१ आहारे उपधौ शय्यायां संस्तारे क्षेत्रसंक्रमे। कृतिच्छन्दोऽनुवृत्तिभिरनुकंपते स्थविरं ॥१॥ उत्थानासनदानयोः योग्याहारशंसनायां। नीचैःशय्यादौ निर्देशवर्त्तित्वे पूज्यते श्रुतं ॥२॥ उत्थानं वन्दनं चैव ग्रहणं दण्डकस्य च। अगुरोरपि च निर्देशे तदा प्रवर्त्तते तस्य तृतीयस्य ॥१॥

तं०--ण जामि एगे सुमणे भवति ३६, ततो पुरिसजाया पं० तं०--ण जाइस्सामि एगे सुमणे भवति, ३७, एवं आगंता णामेगे सुमणे भवति ३८, एतिमेगे सु० ३ एस्सामीति एगे सुमणे भवति ३ एवं एएणं अभिलावेणं--
'गंता य अगंता(य) १ आगंता खलु तधा अणागंता २। चिट्ठित्तमचिट्ठित्ता ३, णिसितित्ता चेव नो चेव ॥४॥१॥
हंता य अहंता य ५ छिंदित्ता खलु तहा अछिंदित्ता ६। बूतित्ता अबूतित्ता ७ भासित्ता चेव णो चेव ॥८॥२॥
दच्चा य अदच्चा य ९ भुंजित्ता खलु तधा अभुंजित्ता १०। लंभित्ता अलंभित्ता ११ पिइत्ता चेव नो चेव ॥१२॥३॥
सुतित्ता असुतित्ता १३ जुज्झित्ता खलु तहा अजुज्झित्ता १४॥ जतित्ता अजयित्ता य १५ पराजिणित्ता य [चेव] नो चेव ॥१६॥४॥ सद्दा १७ रूवा १८ गंधा १९ रसा य २० फासा २१ (२१×६=१२६-१-१२७) तहेव ठाणा य।
निस्सीलस्स गरहिता पसत्था पुण सीलवंतस्स ॥५॥ एवमिक्केक्के तिन्नि उ तिन्नि उ आलावगा भाणियव्वा, सद्दं सुणेत्ता णामेगे सुमणे भवति ३ एवं सुणेमीति ३ सुणिस्सामीति ३, एवं असुणेत्ता णामेगे सुमणे भवति ३ न सुणेमीति ३ ण सुणिस्सामीति ३, एवं रूवाइं गंधाइं रसाइं फासाइं, एक्केक्के छ छ आलावगा भाणियव्वा १२७ आलावगा भवन्ति (सू० १६०) तओ ठाणा णिस्सीलस्स निव्वयस्स णिग्गुणस्स णिम्मेरस्स णिप्पचक्खाणपोसहोववासस्स गरहिता भवन्ति तं०--अस्सिं लोगे गरहिते भवइ उववाते गरहिए भवइ आयाती गरहिता भवति, ततो ठाणा सुसीलस्स सुव्वयस्स सगुणस्स सुमेरस्स सपच्चक्खाणपोसहोववासस्स पसत्था भवन्ति, तं०--
अस्सिं लोगे पसत्थे भवति उववाए पसत्थे भवति आजाती पसत्था भवति (सू० १६१)

-'तओ पुरिसे'त्यादि, पुरुषजातानि–पुरुषप्रकाराः सुष्ठु मनो यस्यासौ सुमनाः–हर्षवान् रक्त इत्यर्थः, एवं दुर्म्मना–दैन्यादिमान् द्विष्ट इत्यर्थः, नोसुमनानोदुर्म्मनाः–मध्यस्थः, सामायिकवानित्यर्थः। सामान्यतः पुरुषप्रकारा उक्ताः, एतानेव विशेषतो गत्यादिक्रियापेक्षया तओ इत्यादिभिः सूत्रैराह–तत्र 'गत्वा' यात्वा क्वचिद्विहारक्षेत्रादौ नामेति सम्भावनायामेकः कश्चित् सुमना भवति–हृष्यति, तथैवान्यो दुर्म्मनाः–शोचति, अन्यः सम एवेति, अतीतकालसूत्रमिव वर्त्तमानभविष्यत्कालसूत्रे नवरं 'जामीतेगे' इत्यादिषु इतिशब्दो हेत्वर्थः,। 'एवमगंते'त्यादिप्रतिषेधसूत्राणि आगमनसूत्राणि च सुगमानि, 'एवम्' एतेनानन्तरोक्तेनाभिलापेन शेषसूत्राण्यपि वक्तव्यानि। अथोक्तान्यनुक्तानि च सूत्राणि संगृह्णन् गाथापञ्चकमाह—'गंते'त्यादि, गंता अगंता आगन्तेत्युक्तम्, अणागंतत्ति–अणागंता नामेगे सुमणे भवइ, अणागंता नामेगे दुम्मणे भवइ, अणागंता नामेगे नोसुमणेनोदुम्मणे भवइ ३, एवं न आगच्छामीति ३, एवं न आगमिस्सामीति ३, 'चिट्ठित्त'त्ति स्थित्वा उद्ध्वंस्थानेन सुमना दुर्म्मना अनुभयं च भवति, एवं—'चिट्ठामीति, चिट्ठिस्सामीति अचिट्ठित्ता' इहापि कालतः सूत्रत्रयम्, एवं सर्वत्र नवरं 'निषद्य' उपविश्य नो चेवत्ति–अनिषद्य–अनुपविश्य ३, हत्वा–विनाश्य किञ्चित् ३, अहत्वा–अविनाश्य ३, छित्त्वा–द्विधा कृत्वा ३, अच्छित्त्वा–प्रतीतं ३, 'वुइत्त'त्ति उक्त्वा–भणित्वा पदवाक्यादिकं ३, 'अवुइत्त'त्ति अनुक्त्वा ३, 'भासित्ते'ति भाषित्वा संभाष्य कञ्चन सम्भाषणीयं ३, 'नो चेव'त्ति अभासित्ता असंभाष्य कञ्चन ३, 'दच्च'त्ति दत्त्वा ३ अदत्त्वा ३ भुक्त्वा ३ अभुक्त्वा ३ लब्ध्वा ३ अलब्ध्वा ३ पीत्वा ३ 'नो चेव'त्ति अपीत्वा ३ सुप्त्वा ३ असुप्त्वा ३ युद्ध्वा ३ अयुद्ध्वा ३ 'जइत्त'त्ति जित्वा परं ३ अजित्त्वा परमेव ३ 'पराजिणित्ता' भृशं जित्वा ३ परिभङ्गं वा प्राप्य सुमना भवति, वर्द्धनकभाविमहावित्तव्ययविनिर्मुक्तत्वात्, पराजितान्–प्रतिवादिनः, सम्भावितानर्थविनिर्मुक्तत्वाद्वा, 'नो

चेव'त्ति आलापकत्रय ३। सद्देत्यादि गाथा सूत्रत एव बोद्धव्या, अपश्चिमत्वात् तत्रैवास्या इति। 'एवमिक्के'इत्यादि, 'एव'मिति गत्वा-दिप्रोक्तक्रमेण एकैकस्मिन् शब्दादौ विषये विधिप्रतिषेधाभ्यां प्रत्येकं त्रयस्त्रय आलापकाः-सूत्राणि कालविशेषाश्रयाः सुमनाः दुर्म्मना नोसुमनानोदुर्म्मना इत्येतत्पदत्रयवन्तो भणितव्याः, एतदेव दर्शयन्नाह—'सद्द'मित्यादि, भावितार्थम्, 'एवं रूवाइं गंधाइं इत्यादि, यथा शब्दे विधिनिषेधाभ्यां त्रयस्त्रय आलापका भणिता एवं 'रूवाइं पासित्ते'त्यादयः त्रयस्त्रय एव दर्शनीयाः, एवञ्च यद्भवति तदाह—'एक्के'इत्यादि, एकैकस्मिन् विषये षडालापका भणितव्या भवन्तीति, तत्र शब्दे दर्शिता एव, रूपादिषु पुनरेवं-रूपाणि दृष्ट्वा सुमना दुर्म्मना अनुभयं १ एवं पश्यामीति २ एवं द्रक्ष्यामीति ३ एवं अदृष्ट्वा ४ न पश्यामीति ५ न द्रक्ष्यामीति ६ षट्, एवं गन्धान् घ्रात्वा ६ रसानास्वाद्य ६ स्पर्शान् स्पृष्ट्वेति ६। 'तहेव ठाणा य'त्ति यत्संग्रहगाथायामुक्तं तद् भावयन्नाह—'तओ ठाणा'इत्यादि, त्रीणि स्थानानि निःशीलस्य-सामान्येन शुभस्वभाववर्जितस्य विशेषतः पुनः निर्व्रतस्य-प्राणातिपाताद्यनिवृत्तस्य निर्गुणस्योत्तरगुणापेक्षया निर्म्मर्यादस्य लोककुलाद्यपेक्षया निष्प्रत्याख्यानपौषधोपवासस्य-पौरुष्यादिनियमपर्वोपवासरहितस्य गर्हितानि-जुगुप्सितानि भवन्ति, तद्यथा—'अस्सिं'ति विभक्तिपरिणामादयं लोकः-इदं जन्म गर्हितो भवति, पापप्रवृत्त्या विद्वज्जनजुगुप्सितत्वात्, तथा उपपातः-अकामनिर्जरादिजनितः किल्बिषिकादिदेवभवो नारकभवो वा, 'उपपातो देवनारकाणा'मिति (नारकदेवानामुपपातः तत्त्वा० अ० २ सू० ३५) वचनात्, स गर्हितो भवति किल्बिषिकाभियोग्यादिरूपतयेति, आजातिः-तस्माच्च्युतस्योद्वृत्तस्य वा कुमानुषत्वतिर्यक्त्वरूपा गर्हिता, कुमानुषादित्वादेवेति। उक्तविपर्ययमाह—'तओ' इत्यादि, निगदसिद्धम् ॥

एतानि च गर्हितप्रशस्तस्थानानि संसारिणामेव भवन्तीति संसारिजीवनिरूपणायाह—

तिविधा संसारसमावन्नगा जीवा पं० तं०—इत्थी पुरिसा नपुंसगा, तिविहा सव्वजीवा पं० तं०—सम्मदिट्ठी मिच्छादिट्ठी सम्माभिच्छदिट्ठी य, अहवा तिविहा सव्वजीवा पं० तं०—पज्जत्तगा अपज्जत्तगा णोपज्जत्तगाणोऽपज्जत्तगा। एवं—सम्मदिट्ठिपरित्तापज्जत्तगसुहुमसन्निभविया य (सू० १६२)

'तिविहे'त्यादि सूत्रसिद्धं ॥ जीवाधिकारात् सर्वजीवांस्त्रिस्थानकावतारेण षड्भिः सूत्रैराह—'तिविहे'त्यादि, सुबोधं नवरं 'नोपज्जत्त'त्ति नोपर्याप्तकानोअपर्याप्तकाः—सिद्धाः, 'एव'मिति पूर्वक्रमेण सम्मदिट्ठीत्यादिगाथार्द्धमुक्तानुक्तसूत्रसंग्रहार्थमिति। 'तिविहा सव्वजीवा पं० तं०—परित्ता १ अपरित्ता २ नोपरित्तानोअपरित्ता ३' तत्र परित्ताः—प्रत्येकशरीराः अपरित्ताः—साधारणशरीराः, परीत्तशब्दस्य छन्दोऽर्थं व्यत्यय इति, 'सुहुम'त्ति तिविहा सव्वजीवा पं० तं०—सुहुमा बायरा नोसुहुमानोबायरा, एवं संज्ञिनो भव्याश्च भावनीयाः, सर्वत्र च तृतीयपदे सिद्धा वाच्या इति ॥

सर्व एव चैते लोके व्यवस्थिता इति लोकस्थितिनिरूपणायाह—

तिविधा लोगठिती पं० तं०—आगासपइट्ठिए वाते वातपतिट्ठिए उदही उदहिपतिट्ठिया पुढवी, तओ दिसाओ पं० तं०- उद्धा अहा तिरिया १, तिहिं दिसाहिं जीवाणं गती पवत्तति, उड्ढाए अहाते तिरियाते २, एवं आगती ३ वक्कंती ४ आहारे ५ वुड्ढी ६ णिवुड्ढी ७ गतिपरियाते ८ समुग्घाते ९ कालसंजोगे १० दंसणाभिगमे ११, णाणाभिगमे १२, जीवाभिगमे १३, तिहिं दिसाहिं जीवाणं अजीवाभिगमे पं० तं०—उड्ढाते अहाते तिरियाते १४,

एवं पंचिंदियतिरिक्खजोणियाणं, एवं मणुस्साणवि (सू० १६३)

तिविहे'त्यादि कण्ठ्यं, किन्तु लोकस्थितिः-लोकव्यवस्था आकाशं-व्योम तत्र प्रतिष्ठितो-व्यवस्थित आकाशप्रतिष्ठितो वातो-घनवाततनुवातलक्षणः सर्वद्रव्याणामाकाशप्रतिष्ठितत्वात् उदधिः-घनोदधिः पृथिवी-तमस्तमःप्रभादिकेति ॥ उक्तस्थितिके च लोके जीवानां दिशोऽधिकृत्य गत्यादि भवतीति दिग्निरूपणपूर्वकं तासु गत्यादि निरूपयन् 'तओ दिसे'त्यादि सूत्राणि चतुर्दशाह-सुगमानि च, नवरं दिश्यते-व्यपदिश्यते पूर्वादितया वस्त्वनयेति दिक्, सा च नामादिभेदेन सप्तधा, आह च—"नामं १ ठवणा २ दविए ३ खेत्तदिसा ४ तावखेत्त ५ पन्नवए ६ । सत्तमिया भावदिसा ७ सा होअट्ठारसविहा उ ॥१॥" तत्र द्रव्यस्य-पुद्गलस्कन्धादेर्दिक् द्रव्यदिक्, क्षेत्रस्य-आकाशस्य दिक् क्षेत्रदिक्, सा चैवं—"अट्ठपएसो रुयगो तिरियंलोयस्स मज्झयारंमि । एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥२॥" तत्र पूर्वाद्या महादिशश्चतस्रोऽपि द्विप्रदेशादिका द्व्युत्तराः, अनुदिशस्तु एकप्रदेशा अनुत्तराः, उर्द्ध्वाधोदिशौ तु चतुरादी अनुत्तरे, यतोऽभ्यधायि—"दुपएसादि दुरुत्तर ४ एगपएसा अणुत्तरा चेव । चउरो ४ चउरो य दिसा चउरादि अणुत्तरा दुन्नि २ ॥१॥ सगडुद्धिसंठिआओ महादिसाओ हवंति चत्तारि । मुत्तावलीउ चउरो दो चेव य हुंति रुयगनिभा ॥२॥" नामानि चासाम्—"इंदे १ ग्गेयी २ जम्मा य ३ नेरई ४ वारुणी य ५ वायव्वा ६ । सोमा ७ ईसाणावि य ७ विमला य ९ तमा १० य बोद्धव्वा

१ नाम स्थापना द्रव्यक्षेत्रदिशः तापक्षेत्रप्रज्ञापकाः । सप्तमीका भावदिक् सा भवत्यष्टादशविधा एव ॥१॥ २ अष्टप्रदेशो रुचको मध्ये तिर्यग्लोकस्य एष प्रभवो दिशामेव एवानुदिशामपि ॥१॥ ३ द्व्युत्तरा द्विप्रदेशादिका अनुत्तरैकप्रदेशा चैव । चतस्रश्चतस्रश्च दिशः चतुरादी अनुत्तरे द्वे ॥१॥ ४ शकटोर्द्धिसंस्थिता महादिशो भवंति चतस्रः । मुक्तावलीव चतस्रो द्वे एव च भवतो रुचकनिभे ॥१॥ ५ ऐन्द्री आग्नेयी यमा च नैर्ऋतिर्वारुणी

**तिविधा संसारसमावन्नगा जीवा पं० तं०—इत्थी पुरिसा नपुंसगा, तिविहा सव्वजीवा पं० तं०—सम्मदिट्ठी मिच्छादिट्ठी सम्मामिच्छदिट्ठी य, अहवा तिविहा सव्वजीवा पं० तं०—पज्जत्तगा अपज्जत्तगा णोपज्जत्तगाणोऽपज्जत्तगा। एवं—सम्मदिट्ठिपरित्तापज्जत्तगसुहुमसन्निभविया य (सू० १६२)**

'तिविहे'त्यादि सूत्रसिद्धं॥ जीवाधिकारात् सर्वजीवांस्त्रिस्थानकावतारेण षड्भिः सूत्रैराह—'तिविहे'त्यादि, सुबोधं नवरं 'नोपज्जत्त'त्ति नोपर्याप्तकानोअपर्याप्तकाः—सिद्धाः, 'एव'मिति पूर्वक्रमेण सम्मदिट्ठीत्यादिगाथार्द्धमुक्तानुक्तसूत्रसंग्रहार्थमिति। 'तिविहा सव्वजीवा पं० तं०—परित्ता १ अपरित्ता २ नोपरित्तानोअपरित्ता ३' तत्र परित्ताः—प्रत्येकशरीराः अपरित्ताः—साधारणशरीराः, परीत्तशब्दस्य छन्दोऽर्थं व्यत्यय इति, 'सुहुम'त्ति तिविहा सव्वजीवा पं० तं०—सुहुमा बायरा नोसुहुमानोबायरा, एवं संज्ञिनो भव्याश्च भावनीयाः, सर्वत्र च तृतीयपदे सिद्धा वाच्या इति॥

सर्व एव चैते लोके व्यवस्थिता इति लोकस्थितिनिरूपणायाह—

**तिविधा लोगठिती पं० तं०—आगासपइट्ठिए वाते वातपतिट्ठिए उदही उदहिपतिट्ठिया पुढवी, तओ दिसाओ पं० तं०- उड्ढा अहा तिरिया १, तिहिं दिसाहिं जीवाणं गती पवत्तति, उड्ढाए अहाते तिरियाते २, एवं आगती ३ वक्कंती ४ आहारे ५ वुड्ढी ६ णिवुड्ढी ७ गतिपरियाते ८ समुग्घाते ९ कालसंजोगे १० दंसणाभिगमे ११, णाणाभिगमे १२, जीवाभिगमे १३, तिहिं दिसाहिं जीवाणं अजीवाभिगमे पं० तं०—उड्ढाते अहाते तिरियाते १४,**

गतिरागतिश्चलनं जीवस्य एव, समुद्घातो-वेदनादिलक्षणः, कालसंयोगो-वर्त्तनादिकाललक्षणानुभूतिः मरणयोगो वा, दर्शनेन-अवध्यादिना प्रत्यक्षप्रमाणभूतेनाभिगमो-बोधो दर्शनाभिगमः, एवं ज्ञानाभिगमः, जीवानां ज्ञेयानां अवध्यादिनैवाभिगमो जीवाभिगम इति। 'तिविहे दिसाहिं जीवाणं अजीवाभिगमे पन्नत्ते, तं०-उड्ढाए ३' एवं सर्वत्राभिलपनीयमिति दर्शनार्थं परिपूर्णान्त्यसूत्राभिधानमिति। एतान्यपि जीवाभिगमान्तानि सामान्यजीवसूत्राणि चतुर्विंशतिदण्डकचिन्तायां तु नारकादिपदेषु दिक्त्रये गत्यादीना त्रयोदशानामपि पदानां सामस्त्येनासम्भवात् पञ्चेन्द्रियतिर्यक्षु मनुष्येषु च तत्सम्भवात् तदतिदेशमाह-'एव'मित्यादि, यथा सामान्यसूत्रेषु गत्यादीनि त्रयोदश पदानि दिक्त्रये अभिहितान्येवं पञ्चेन्द्रियतिर्यग्मनुष्येष्विति भावः, एवं चैतानि षड्विंशतिः सूत्राणि भवन्तीति ॥ शेषाणां नारकादिषु कथमसम्भव इति?, उच्यते, नारकादीनां द्वाविंशतेर्जीवविशेषाणां नारकदेवेषूत्पादाभावादूर्ध्वाधोदिशोर्विवक्षया गत्यागत्योरभावः, तथा दर्शनज्ञानजीवाजीवाभिगमा गुणप्रत्यया अवध्यादिप्रत्यक्षरूपा दिक्त्रये न सन्त्येव, भवप्रत्ययावधिपक्षे तु नारकज्योतिष्काणां तिर्यगवधयो भवनपतिव्यन्तरा ऊर्ध्वविषयः वैमानिका अधोऽवधय एकेन्द्रियविकलेन्द्रियाणां त्ववधिर्नास्त्येवेति।

यथोक्तानि च गत्यादिपदानि त्रसानामेव सम्भवन्तीति सम्बन्धात्त्रसान्निरूपयन्नाह—

तिविहा तसा पं० तं०—तेउकाइया वाउकाइया उराला तसा पाणा, तिविधा थावरा, पं० तं०—पुढविकाइया आउकाइया वणस्सइकाइया (सू० १६४)

'तिविहे'त्यादि स्पष्टं, किन्तु त्रसन्तीति त्रसाः-चलनधर्म्माणः, तत्र तेजोवायवो गतियोगात् त्रसाः, उदाराः-स्थूलाः 'त्रसा'

॥१॥" तापः–सविता तदुपलक्षिता क्षेत्रदिक् तापक्षेत्रदिक्, सा च अनियता, यत उक्तम्––"जेसिं जत्तो सूरो उदेइ तेसिं तई हवइ पुव्वा। तावक्खेत्तदिसाओ पयाहिणं सेसियाओ सिं ॥१॥" तथा प्रज्ञापकस्य–आचार्यादेर्दिक् प्रज्ञापकदिक्, सा चैवम्––"पन्नवेओ जयभिमुहो सा पुव्वा सेसिया पयाहिणओ। तस्सेवऽणुगंतव्वा अग्गेयाई दिसा नियमा ॥१॥" भावदिक् चाष्टादशविधा––"पुढवि १ जल२जलण३वाया४मूला५खंध६ग्गा७पोरबीया य ८। वि९ति१०चउ११पंचिंदियतिरिय १२ नारगा १३ देवसंघाया १४ ॥१॥ संमुच्छिम १६ कम्मा १६ कम्मभूमगनरा १७ तहंतरदीवा १८। भावदिसा दिस्सइ जं संसारी नियममेयाहिं ॥२॥" इति, इह च क्षेत्रतापप्रज्ञापकदिग्भिरेवाधिकारः, तत्र च तिर्यग्ग्रहणेन पूर्वाद्याश्चतस्र एव दिशो गृह्यन्ते, विदिक्षु जीवानामनुश्रेणिगामितया वक्ष्यमाणगत्यागतिव्युत्क्रान्तीनामयुज्यमानत्वात्, शेषपदेषु च विदिशामविवक्षितत्वात्, यतोऽत्रैव वक्ष्यति,––"छहिं दिसाहिं जीवाणं गई पवत्तई'त्यादि, तथा ग्रन्थान्तरेऽप्याहारमाश्रित्योक्तम्––"निव्वाघाएण नियमा छद्दिसिंति" तत्र 'तिहिं दिसाहिं'ति सप्तमी तृतीया पञ्चमी वा यथायोगं व्याख्येयेति, गतिः–प्रज्ञापकस्थानापेक्षया मृत्वाऽन्यत्र गमनम्, 'एव'मिति पूर्वोक्ताभिलापसूचनार्थः, आगतिः–प्रज्ञापकप्रत्यासन्नस्थाने आगमनमिति, व्युत्क्रान्तिः–उत्पत्तिः, आहारः प्रतीतः, वृद्धिः–शरीरस्य वर्द्धनं, निर्वृद्धिः–शरीरस्यैव हानिः,

---

च वायव्या। सोमा ईशानी अपि च विमला च तमा च बोद्धव्या ॥१॥ १ येषां यतः सूर्य उदयते तेषां सा भवति पूर्वा। तापक्षेत्रदिक् प्रदक्षिणं शेषा अस्याः ॥१॥ २ प्रज्ञापको यदभिमुखस्तिष्ठति सा पूर्वा प्रदक्षिणतः शेषाः। तस्या एवानुगंतव्याः आग्नेय्याद्या दिशो नियमात् ॥१॥ ३ पृथ्वीजलज्वलनवाता मूलस्कंधाग्रपर्वबीजाश्च। द्वित्रिचतुःपंचेंद्रियतिर्यग्नारका देवसंघाताः ॥१॥ संमूर्च्छिमकर्माकर्मभूमिगनरास्तथान्तरद्वीपगाः भावदिशो व्यपदिश्यते यत्संसारी नियतमेताभिः ॥१॥

विशेषः प्रदेशो-धर्माधर्माकाशजीवपुद्गलानां निरवयवोंऽशः परमाणुः-अस्कन्धः पुद्गल इति, उक्तं च—"सत्थेण सुतिक्खेणवि छेत्तुं भेत्तुं च जं किर न सक्का। तं परमाणुं सिद्धा वयंति आइं पमाणाणं ॥१॥"ति, 'एव'मिति पूर्वसूत्राभिलापसूचनार्थ इति, अभेद्याः शस्त्रादिना अदाह्या अग्न्यादिना अग्राह्या हस्तादिना न विद्यतेऽर्द्धं येषामित्यनर्द्धा विभागद्वयाभावात्, अमध्या विभागत्रयाभावात् अत एवाह—'अप्रदेशा' निरवयवाः, अत एवाविभाज्या-विभक्तुमशक्याः, अथवा विभागेन निर्वृत्ता विभागिमास्तन्निषेधादविभागिमाः। एते च पूर्वतरसूत्रोक्ताः त्रसस्थावराख्याः प्राणिनो दुःखभीरव इत्येतत् संविधानकद्वारेणाह—'अज्जो' इत्यादि, सुगमं, केवलम्, 'अज्जो'त्ति'त्ति आरात् पापकर्मभ्यो याता आर्यास्तदामन्त्रणं हे आर्या! 'इति' एवमभिलापेनामन्त्र्येतिसम्बन्धः, श्रमणो भगवान् महावीरः गौतमादीन् श्रमणान् निर्ग्रन्थानेवं-वक्ष्यमाणन्यायेनावादीदिति, कस्माद् भयं येषां ते किंभयाः, कुतो विभ्यतीत्यर्थः, 'प्राणाः' प्राणिनः 'समणाउसो'त्ति हे श्रमणाः! हे आयुष्मन्त इति गौतमादीनामेवामन्त्रणमिति, अयं च भगवतः प्रश्नः शिष्याणां व्युत्पादनार्थ एव, अनेन चापृच्छतोऽपि शिष्यस्य हिताय तत्त्वमाख्येयमिति ज्ञापयति, उच्यते च—"कत्थइ पुच्छइ सीसो कहिंचऽपुट्ठा वयंति आयरिया। सीसाणं तु हियट्ठा विउलतरागं तु पुच्छाए ॥१॥" इति, ततश्च 'उवसंकमंति'त्ति उपसंक्रामन्ति-उपसङ्गच्छन्ति तस्य समीपवर्त्तिनो भवन्ति, इह च तत्कालापेक्षया क्रियाया वर्त्तमानत्वमिति वर्त्तमाननिर्देशो न दुष्टः, उपसंक्रम्य वन्दन्ते स्तुत्या नमस्यन्ति प्रणामतः, 'एवम्' अनेन प्रकारेण 'वयासि'त्ति छान्दसत्वात् बहुवचनार्थे एकवचनमिति अवादिषुः-उक्तवन्तो नो जानीमो

१ शस्त्रेणापि तीक्ष्णेन छेत्तुं भेत्तुं च यः किल न शक्यते तं वदन्ति परमाणुं ज्ञानसिद्धाः प्रमाणानामादि ॥१॥ २ क्वचित्पृच्छति शिष्यः कुत्रचिदपृष्टा वदन्त्याचार्याः। शिष्याणां हितार्थं विपुलतरं तु पृच्छायां ॥२॥

इति त्रसनामकर्मोदयवर्त्तित्वात्, 'प्राणा'इति व्यक्तोच्छ्वासादिप्राणयोगात् द्वीन्द्रियादयस्तेऽपि गतियोगादेव त्रसा इति। उक्तास्त्रसाः, तद्विपर्ययमाह–'तिविहे'त्यादि, स्थानशीलत्वात् स्थावरनामकर्मोदयाच्च स्थावराः, शेषं व्यक्तमेवेति।

इह च पृथिव्यादयः प्रायोऽङ्गुलासंख्येयभागमात्रावगाहनत्वात् अच्छेद्यादिस्वभावा व्यवहारतो भवन्तीति तत्प्रस्तावान्निश्चयाच्छेद्यादीनष्टभिः सूत्रैराह—

ततो अच्छेज्जा पं० तं०—समये पदेसे परमाणू १, एवमभेज्जा २ अडज्झा ३ अगिज्झा ४ अणड्ढा ५ अमज्झा ६ अपएसा ७ ततो अविभातिमा पं० तं०—समते पएसे परमाणू ८ (सू० १६५) अज्जोति समणे भगवं महावीरे गोतमादी समणे णिग्गंथे आमंतेत्ता एवं वयासी—किंभया पाणा? समणाउसो!, गोयमाती समणा णिग्गंथा समणं भगवं महावीरं उवसंकमंति उवसंकमित्ता वंदंति नमंसंति वंदित्ता नमंसित्ता एवं वयासी—णो खलु वयं देवाणुप्पिया! एयमट्ठं जाणामो वा पासामो वा, तं जदि णं देवाणुप्पिया एयमट्ठं णो गिलायंति परिकहित्तते तमिच्छामो णं देवाणुप्पियाणं अंतिए एयमट्ठं जाणित्तए, अज्जोत्ति समणे भगवं महावीरे गोयमाती समणे निग्गंथे आमंतेत्ता एवं वयासी—दुक्खभया पाणा समणाउसो!, से णं भंते! दुक्खे केण कडे?, जीवेणं कडे पमादेण २, से णं भंते! दुक्खे कहं वेइज्जति?, अप्पमाएणं ३ (सू० १६६)

'तओ अच्छेज्जे'त्यादि, छेत्तुमशक्या बुद्ध्या क्षुरिकादिशस्त्रेण वेत्यच्छेद्याः, छेद्यत्वे समयादित्वायोगादिति, समयः–काल-

अकिच्चं दुक्खं अफुसं दुक्खं अकज्जमाणकडं दुक्खं अकट्टु अकट्टु पाणा भूया जीवा सत्ता वेयणं वेदेंतित्ति वत्तव्वं, जे ते एवमाहंसु मिच्छा ते एवमाहंसु, अहं पुण एवमाइक्खामि एवं भासामि एवं पन्नवेमि एवं परूवेमि —किच्चं दुक्खं फुस्सं दुक्खं कज्जमाणकडं दुक्खं कट्टु २ पाणा भूया जीवा सत्ता वेयणं वेयंतित्ति वत्तव्वं सिया (सू० १६७) तइयट्ठाणस्स बीओ उद्देसओ समत्तो ॥

'अन्नउत्थी'त्यादि प्रायः स्पष्टं, किन्तु अन्ययूथिकाः—अन्यतीर्थिका इह तापसा विभङ्गज्ञानवन्तः, 'एवं' वक्ष्यमाणप्रकारमाख्यान्ति सामान्यतो भाषन्ते विशेषतः क्रमेणैतदेव प्रज्ञापयन्ति प्ररूपयन्तीति पर्यायरूपपदद्वयेन उक्तमिति, अथवा आख्यान्ति ईषद् भाषन्ते व्यक्तवाचा प्रज्ञापयन्ति उपपत्तिभिर्बोधयन्ति प्ररूपयन्ति प्रभेदादिकथनत इति, किं तदित्याह—'कथं' केन प्रकारेण 'श्रमणानां' निर्ग्रन्थानां मते इति शेषः क्रियते इति क्रिया—कर्म सा 'क्रियते' भवति दुःखायेति विवक्षयेति प्रश्नः, इह तु चत्वारो भङ्गाः, तद्यथा-कृता क्रियते—विहितं सत्कर्म दुःखाय भवतीत्यर्थः १, एवं कृता न क्रियते २ अकृता क्रियते ३ अकृता न क्रियते ४ इति, एतेषामनेन प्रश्नेन यो भङ्गः प्रष्टुमिष्टस्तं शेषभङ्गनिराकरणपूर्वकमभिधातुमाह—'तत्थ'त्ति तेषु चतुर्षु भङ्गकेषु मध्ये प्रथमं द्वितीयं चतुर्थं च न पृच्छन्ति, एतद्वयस्यात्यन्तं रुचेरविषयतया तत्प्रश्नस्याप्यप्रवृत्तेरिति, तथाहि—'याऽसौ कृता क्रियते' यत्तत्कर्म कृतं भवति नो तं पृच्छन्ति, पूर्वकालकृतत्वस्याप्रत्यक्षतया असत्त्वेन निर्ग्रन्थमतत्वेन चासंमतत्वादिति, 'तत्र याऽसौ कृता नो क्रियते, इति तेषु-भङ्गकेषु मध्ये यत्तत्कर्म कृतं न भवति नो तत्पृच्छन्ति, अत्यन्तविरोधेनासम्भवात्, तथाहि—कृतं चेत् कर्म कथं न भवतीत्युच्यते ?, न भवति चेत् कथं कृतं तदिति, कृतस्य कर्मणोऽभवनाभावात्, 'तत्र' तेषु 'याऽसावकृता' यत्तदकृतं कर्म 'नो

विशेषतः नो पश्यामः सामान्यतो, वाशब्दौ विकल्पार्थौ, 'तदि'ति तस्मादेतमर्थं–किंभयाः प्राणा इत्येवंलक्षणं, 'नो गिलायंति'त्ति न ग्लायन्ति–न श्राम्यन्ति परिकथयितुं परिकथनेन 'तं'ति ततः, 'दुक्खभय'त्ति दुःखात्–मरणादिरूपात् भयमेषामिति दुःखभयाः, 'से णं'ति तद् दुखं 'जीवेणं कडे'त्ति दुःखकारणकर्मकरणात् जीवेन कृतमित्युच्यते, कथमित्याह—'पमाएणं'ति प्रमादेनाज्ञानादिना बन्धहेतुना करणभूतेनेति, उक्तं च—"पमाओ य मुणिंदेहिं, भणिओ अट्ठभेयओ। अन्नाणं संसओ चेव, मिच्छाणाणं तहेव य ॥१॥ रागो दोसो मइब्भंसो, धम्मंमि य अणायरो। जोगाणं दुप्पणीहाणं, अट्ठहा वज्जियव्वओ ॥२॥" इति। तच्च वेद्यते–क्षिप्यते अप्रमादेन, बन्धहेतुप्रतिपक्षभूतत्वादिति। अस्य च सूत्रस्य दुःखभया पाणा १ जीवेणं कडे दुक्खे पमाएणं २ अपमाएणं वेइज्जई ३ त्येवंरूपप्रश्नोत्तरत्रयोपेतत्वात् त्रिस्थानकावतारो द्रष्टव्य इति ॥

जीवेन कृतं दुःखमित्युक्तमधुना परमतं निरस्यैतदेव समर्थयन्नाह—

**अन्नउत्थिता णं भंते! एवं आतिक्खंति एवं भासंति एवं पन्नवेंति एवं परूवंति कहन्नं समणाणं निग्गंथाणं किरिया कज्जति?, तत्थ जा सा कडा कज्जइ नो तं पुच्छंति, तत्थ जा सा कडा नो कज्जति, नो तं पुच्छंति, तत्थ जा सा अकडा नो कज्जति नो तं पुच्छंति, तत्थ जा सा अकडा कज्जति तं पुच्छंति, से एवं वत्तव्वं सिता?—**

१ प्रमादश्च मुनीन्द्रैर्भणितोऽष्टभेदः। अज्ञानं संशयश्चैव, मिथ्याज्ञानं तथैव च। रागो द्वेषो मतिभ्रंशो धर्मे चानादरः योगानां दुष्प्रणिधानं अष्टधा वर्जयितव्यः ॥१॥

अनभ्यस्त ने अन्यतीर्थिका एवमुक्तवन्तः, 'आहंमु'त्ति उक्तवन्तः, अकृतायाः क्रियात्वानुपपत्तेः, क्रियत इति हि क्रिया, यस्यास्तु कथञ्चनापि करणं नास्ति सा कथं क्रियेति, अकृतकर्मानुभवने हि बद्धमुक्तसुखितदुःखितादिनियतव्यवहाराभावप्रसङ्ग इति, स्वमतमाविष्कुर्वन्नाह–'अहं मित्यादि 'अहं'ति अहमेव नान्यतीर्थिकाः, पुनःशब्दो विशेषणार्थः स च पूर्ववाक्यादुत्तरवाक्यार्थस्य विलक्षणतामाह, 'एवमाइक्खामी' त्यादि पूर्ववत्, कृत्यं–करणीयमनागतकाले दुःखं, तद्धेतुकत्वात् कर्म्म, स्पृश्यं–स्पृष्टलक्षणबन्धावस्थायोग्यं क्रियमाणं वर्त्तमानकाले कृतमतीते, अकरणं नास्ति कर्म्मणः कथञ्चनापीति भावः, स्वमतसर्वस्वमाह–कृत्वा कृत्वा कर्म्मेति गम्यते, प्राणादयो वेदनां–कर्म्मकृतशुभाशुभानुभूतिं वेदयन्ति–अनुभवन्तीति वक्तव्यं स्यात् सम्यग्वादिनामिति ।

त्रिस्थानकस्य द्वितीय उद्देशको विवरणतः समाप्तः ॥



उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरोद्देशके विचित्रा जीवधर्म्माः प्ररूपिताः इहापि त एव प्ररूप्यन्त इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रत्रयम्—

तिहिं ठाणेहिं मायी मायं कट्टु णो आलोतेज्जा णो पडिक्कमेज्जा णो णिंदिज्जा णो गरहिज्जा णो विउट्टेज्जा णो विसोहेज्जा णो अकरणाते अब्भुट्ठेज्जा णो अहारिहं पायच्छित्तं तवोकम्मं पडिवजेज्जा, तं०—अकरिंसु वाऽहं करेमि वाऽहं करिस्सामि वाऽहं १ । तिहिं ठाणेहिं मायी मायं कट्टु णो आलोतेज्जा णो पडिक्कमिज्जा जाव णो

क्रियते' न भवति नो तां पृच्छन्ति, अकृतस्यासतश्च कर्म्मणः खरविषाणकल्पत्वादिति, अमुमेव च भङ्गकत्रयनिषेधमाश्रित्यास्य सूत्रस्य त्रिस्थानकावतार इति सम्भाव्यते, तृतीयभङ्गकस्तु तत्संमत इति तं पृच्छन्ति, अत एवाह–तत्र 'याऽसावकृता क्रियते' यत्तदकृतं–पूर्वमविहितं कर्म्म भवति–दुःखाय सम्पद्यते तां पृच्छन्ति, पूर्वकालकृतत्वस्याप्रत्यक्षतया असत्त्वेन दुःखानुभूतेश्च प्रत्यक्षतया सत्त्वेनाकृतकर्मभवनपक्षस्य सम्मतत्वादिति, पृच्छतां चायमभिप्रायो–यदि निर्ग्रन्था अपि अकृतमेव कर्म्म दुःखाय देहिनां भवतीति प्रतिपद्यन्ते ततः सुष्ठु–शोभनं अस्मत्समानबोधत्वादिति शेषानपृच्छन्तः तृतीयमेव पृच्छन्तीति भावः, 'से'त्ति अथ तेषामकृतकर्म्माभ्युपगमवतामेवं–वक्ष्यमाणप्रकारं वक्तव्यम्–उल्लापः स्यात् , त एव वा एवमाख्यान्ति परान् प्रति, यदुत–अथैवं वक्तव्यं–प्ररूपणीयं तत्त्ववादिनां स्यात्–भवेद् , अकृते सति कर्म्मणि दुःखभावात् अकृत्यम्–अकरणीयमवन्धनीयम्–अप्राप्तव्यमनागते काले जीवानामित्यर्थः, किं ?—'दुक्खं' दुःखहेतुत्वात् कर्म, 'अफुस्सं'ति अस्पृश्यं कर्म अकृतत्वादेव, तथा क्रियमाणं च–वर्त्तमानकाले वध्यमानं कृतं चातीतकाले बद्धं क्रियमाणकृतं द्वन्द्वैकत्वं कर्म्मधारयो वा न क्रियमाणकृतमक्रियमाणकृतं, किं तत् ?–दुःखं–कर्म्म 'अकिच्चं दुक्खं'मित्यादिपदत्रयं, 'तत्थ जा सा अकडा कज्जइ तं पुच्छं'त्यन्यतीर्थिकमताश्रितं कालत्रयालम्बनमाश्रित्य त्रिस्थानकावतारोऽस्य द्रष्टव्यः, किमुक्तं भवतीत्याह–अकृत्वा अकृत्वा कर्म्म प्राणा–द्वीन्द्रियादयः भूताः–तरवो जीवाः–पञ्चेन्द्रियाः सत्त्वाः–पृथिव्यादयो, यथोक्तम्—"प्राणा द्वित्रिचतुः प्रोक्ता, भूतास्तु तरवः स्मृताः । जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वाः प्रकीर्त्तिताः ॥१॥" इति, वेदना–पीडां वेदयन्तीति वक्तव्यमित्ययं तेषामुल्लापः, एतद्वा ते अज्ञानोपहतबुद्धयो भाषन्ते परान् प्रति, यदुत–एवं वक्तव्यं स्यादिति प्रक्रमः ॥ एवमन्यतीर्थिकमतमुपदर्श्य निराकुर्वन्नाह—'जे ते' इत्यादि, य एते अन्यतीर्थिका एवम्–उक्तपकारमाहंसुत्ति–उक्तवन्तः 'मिच्छा'

पर्यायत्वादस्य, अथवा दानपुण्यफला कीर्तिः पराक्रमकृतं यशः, तत्र वर्ण इति तयोः प्रतिषेधोऽकीर्तिः अवर्णश्चेति, अविनयः साधुकृतो मे स्यादिति. इदं न सूत्रमप्राप्तप्रसिद्धिपुरुषापेक्षं. 'मायं कट्टु'त्ति मायां कृत्वा–मायां पुरस्कृत्य माययेत्यर्थः, 'परिहास्यति' हीना भविष्यति पूजा पुष्पादिभिः सत्कारो वस्त्रादिभिः, इदमेकमेव विवक्षितमेकरूपत्वादिति, इदं तु प्राप्तप्रसिद्धपुरुषापेक्षं, शेषं सुगमम् ॥ उक्तविपर्ययमाह—'निर्ही'त्यादि सूत्रत्रयं स्पष्टं, किन्तु 'मायी मायं कट्टु आलोएज्ज'त्ति इह मायी अकृत्यकरणकाल एव आलोचनादिकाले त्वमायैव आलोचनाद्यन्यथानुपपत्तेरिति, 'अस्सिं'ति अयं, यतो मायिन इहलोकाद्या गर्हिता भवन्ति यतश्चामायिन इहलोकाद्याः प्रशस्ता भवन्ति यतश्चामायिन आलोचनादिना निरतिचारीभूतस्य ज्ञानादीनि स्वस्वभावं लभन्ते अतोऽहममायी भूत्वाऽऽलोचनादि करोमीति भावना ॥

अनन्तरं शुद्धिरुक्ता, इदानीं तत्कारिणोऽभ्यन्तरसम्पदा त्रिधा कुर्वन्नाह—

ततो पुरिसजाया पं० तं०—सुत्तधरे अत्थधरे तदुभयधरे (सू० १६९) कप्पति णिग्गंथाण वा णिग्गंथीण वा ततो वत्थाइं धारित्तए वा परिहरित्तते वा, तं०—जंगिते भंगिते खोमिते १, कप्पइ णिग्गंथाण वा णिग्गंथीण वा २ ततो पायाइं धारित्तते वा परिहरित्तते वा, तं०—लाउयपादे वा दारुपादे वा मट्टियापादे वा (सू० १७०) तिहिं ठाणेहिं वत्थं धरेज्जा, तं०—हिरिपत्तितं दुगुंछापत्तियं परीसहवत्तियं (सू० १७१) तओ आयरक्खा पं० तं०—धम्मियाते पडिचोयणाते पडिचोएत्ता भवति तुसिणीतो वा सिता उट्ठित्ता वा आताते एगंतमंतमव-

पडिवज्जेज्जा अकित्ती वा मे सिता अवण्णे वा मे सिया अविणते वा मे सिता २। तिहिं ठाणेहिं मायी मायं कट्टु णो आलोएज्जा जाव नो पडिवज्जेज्जा तं०—कित्ती वा मे परिहातिस्सति जसो वा मे परिहातिस्सति पूयासक्कारे वा मे परिहातिस्सति ३। तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा पडिक्कमेज्जा जाव पडिवज्जेज्जा तं०—मायिस्स णं अंसिं लोगे गरहिते भवति उववाए गरहिए भवति आयाती गरहिया भवति ४। तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा तं०—अमायिस्स णं अंसिं लोगे पसत्थे भवति उववाते पसत्थे भवइ आयाई पसत्था भवति ५। तिहिं ठाणेहिं मायी मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा, तं—णाणट्ठताते दंसणट्ठयाते चरित्तट्ठयाते ६। (सू० १६८)

'तिहिं ठाणेही'त्यादि, अस्य च पूर्वसूत्रेण सहायं सम्बन्धः—पूर्वसूत्रे मिथ्यादर्शनवतामसमञ्जसतोक्ता, इह तु कषायवतां तामाहेत्येवंसम्बन्धस्यास्य व्याख्या—'मायी' मायावान् 'मायां' मायाविषयं गोपनीयं प्रच्छन्नमकार्यं कृत्वा नो आलोचयेत् मायामेवेति, शेषं सुगमं, नवरं आलोचनं—गुरुनिवेदनं प्रतिक्रमणं—मिथ्यादुष्कृतदानं निन्दा—आत्मसाक्षिका गर्हा गुरुसाक्षिका वित्रोटनं—तदध्यवसायविच्छेदनं विशोधनम्—आत्मनः चारित्रस्य वा अतीचारमलक्षालनं अकरणताभ्युत्थानं—पुनर्नैतत् करिष्यामीत्यभ्युपगमः 'अहारिहं' यथोचितं 'पायच्छित्तं'ति पापच्छेदकं प्रायश्चित्तविशोधकं वा तपःकर्म्म—निर्विकृतिकादि प्रतिपद्येत, तद्यथा—अकार्यमहमिदमतः कथं निन्द्यमित्यालोचयिष्यामि स्वमाहात्म्यहानिप्राप्तेरित्येवमभिमानात् १ तथा करोमि चाहमिदानीमेव कथमसाध्विति भणामि २ करिष्यामीति चाहमेतदकृत्यमनागतकालेऽपि कथं प्रायश्चित्तं प्रतिपद्य इति। कीर्तिः—एकदिग्गामिनी प्रसिद्धिः सर्वदिग्गामिनी सैव वर्णो यशः-

कृतगो। आहारणोग्गहालद्धिकारणा पायगहणं तु ॥१॥" (अनरंतत्ति–ग्लाना आदेशाः–प्राघूर्णकाः, 'असहु'त्ति सुकुमारो राजपुत्रादिप्रव्रजितः 'साधारणावग्रहात्' सामान्योपष्टम्भार्थं अलब्धिकार्थं चेति)। निर्ग्रन्थप्रस्तावान्निर्ग्रन्थानेवानुष्ठानतः सप्तसूत्र्याऽऽह–'तओ आए'त्यादि सुगमा, नवरम् आत्मानं रागद्वेषादेरकृत्याद् भवकूपाद्वा रक्षन्तीत्यात्मरक्षाः 'धम्मियाए पडिचोयणाए'त्ति धार्मिकेणोपदेशेन–नेदं भवादृशां विधातुमुचितमित्यादिना प्रेरयिता–उपदेष्टा भवति अनुकूलेतरोपसर्गकारिणः, ततोऽसावुपसर्गकरणान्निवर्तते ततोऽकृत्यासेवा न भवतीत्यतः आत्मा रक्षितो भवतीति, तूष्णीको वा वाचंयम उपेक्षक इत्यर्थः स्यादिति २, प्रेरणाया अविषये उपेक्षणासामर्थ्ये च ततः स्थानादुत्थाय 'आय(आए)'त्ति आत्मना एकान्तं–विजनं अन्तं–भूविभागमवक्रामेत्–गच्छेत्। निर्ग्रन्थस्य ग्लायतः–अशक्नुवतः, तृड्वेदनादिना अभिभूयमानस्येत्यर्थः, आहारग्रहणं हि वेदनादिभिरेव कारणैरनुज्ञातं। 'तओ'त्ति तिस्रः 'वियड'त्ति पानकाहारः, तस्य दत्तयः–एकप्रक्षेपप्रदानरूपाः प्रतिग्रहीतुम्–आश्रयितुं वेदनोपशमायेति, उत्कर्षः–प्रकर्षः तद्योगादुत्कर्षा उत्कर्षतीति वोत्कर्षा उत्कृष्टेत्यर्थः, प्रचुरपानकलक्षणा, यया दिनमपि यापयति, मध्यमा ततो हीना, जघन्या यया सकृदेव वितृष्णो भवति वासनामात्रं वा लभते, अथवा पानकविशेषादुत्कृष्टाद्या वाच्याः, तथाहि–कलमकाञ्जिकावश्रावणादेः द्राक्षापानकादेर्वा प्रथमा १ षष्टिका[दि]काञ्जिकादेर्मध्यमा २ तृणधान्यकाञ्जिकादेरुष्णोदकस्य वा जघन्येति, देशकालस्वरुचिविशेषाद्वोत्कर्षादि नेयमिति।

तिहिं ठाणेहिं समणे निग्गंथे साहम्मियं संभोगियं करेमाणे णातिक्कमति, तं०—सतं वा दट्ठुं, सड्ढस्स वा निसम्म, तच्चं मोसं आउट्टति चउत्थं नो आउट्टति (सू० १७२) तिविधा अणुन्ना पं० तं०—आयरियत्ताए उव-

कमेज्जा णिग्गंथस्स णं गिलायमाणस्स कप्पंति ततो वियडदत्तीओ पडिग्गाहित्तते, तं०—उक्कोसा मज्झिमा जहन्ना (सू० १७२)

'तओ पुरी'त्यादि सुबोधं, नवरमेते यथोत्तरं प्रधाना इति। तेषामेव बाह्यं सम्पदं सूत्रद्वयेनाह—'कप्पती'त्ति 'कल्पते' युज्यते युक्तमित्यर्थः, 'धारित्तए'त्ति धर्त्तुं परिग्रहे 'परिहर्त्तुं' परिभोक्तुमिति, अथवा 'धारणया[1] उवभोगो, परिहरणे होइ परिभोग' त्ति। 'जंगियं' जंगमजमौर्णिकादि 'भंगियं' अतसीमयं 'खोम्मियं' कार्प्पासिकमिति। अलाबुपात्रकं–तुम्बकं, दारुपात्रं–काष्ठमयं मृत्तिकापात्रं–मृन्मयं शरावघार्घटिकादि, शेषं सुगमं। वस्त्रग्रहणकारणान्याह—'तिही'त्यादि, ह्री–लज्जा संयमो वा प्रत्ययो–निमित्तं यस्य धारणस्य तत्तथा, जुगुप्सा–प्रवचनखिंसा विकृताङ्गदर्शनेन मा भूदित्येवं प्रत्ययो यत्र तत्तथा, एवं परीषहाः–शीतोष्णदंशमशकादयः प्रत्ययो यत्र तत्तथा, आह च—"वेउव्वि[2] वाउडे वाइए य हीरिखद्धपजणणे चेव। एसिं अणुग्गहट्ठा लिंगुदयट्ठा य पट्टो उ ॥१॥" (वेउव्वि'त्ति विकृते तथा 'अप्रावृते' वस्त्राभावे सति 'वातिके' च उच्छूनत्वभाजने ह्रियां सत्यां 'खद्धे' बृहत्प्रमाणे 'प्रजनने' मेहने 'लिङ्गोदयट्ठ'त्ति स्त्रीदर्शने लिङ्गोदयरक्षार्थमित्यर्थः,) तथा, "तणगहणा[3]नलसेवानिवारणा धम्मसुक्कझाणट्ठा। दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव ॥१॥" इति, वस्त्रस्य ग्रहणकारणप्रसङ्गात् पात्रस्यापि तान्याख्यायन्ते,—"अंतरंत[4]बालवुड्ढा सेहाऽऽदेसा गुरू अस-

---

१ धारणतोपभोगः परिहरणं भवति परिभोगः। २ विकृतेऽप्रावृते उच्छ्रिते वातिके च ह्रीः महन्मेहने चैव एषां चानुग्रहार्थं लिंगोदये रक्षार्थं पट्टः ॥१॥ ३ तृणग्रहणानलसेवानिवारणाय धर्मशुक्लध्यानाय ग्लानाय मरणार्थाय चैव दृष्टं कल्पग्रहणं ॥१॥ ४ ग्लानबालवृद्धानुपस्थापितप्राघूर्णकाचार्यराजपुत्रादीना साधारणोपग्रहार्थं अलब्धिकार्थं च पात्रग्रहणम् ॥१॥

र्थीयवाराणवि, एवं तइयवाराणवि, तइयवाराओ परओ चउत्थवाराए तमेवाइयारं सेविऊण आउट्टंतस्सवि विसंभोगो' इति, इह चाद्यं स्थानद्वयं गुरुतरदोषाश्रयं, यतस्तत्र ज्ञातमात्रे श्रुतमात्रे च विसंभोगः क्रियते, तृतीयं त्वल्पतरदोषाश्रयं, तत्र हि चतुर्थवेलायां स विधीयत इति। 'अणुन्न'त्ति, अनुज्ञानमनुज्ञा-अधिकारदानं, आचर्यते-मर्यादावृत्तितया सेव्यत इत्याचार्यः, आचारे वा पञ्चप्रकारे साधुरित्याचार्यः, आह च—"पंचविहं आयारं आयरमाणा तहा पयासंता। आयारं दंसेन्ता आयरिया तेण वुच्चंति ॥१॥" तथा "सुत्तत्थविऊ लक्खणजुत्तो गच्छस्स मेढिभूओ य। गणतत्तिविप्पमुक्को अत्थं वाएइ आयरिओ ॥२॥" तद्भावस्तत्ता तया. उत्तरत्र गणाचार्यग्रहणादनुयोगाचार्यतयेत्यर्थः. तथा उपेत्याधीयतेऽस्मादित्युपाध्यायः, आह च—"समत्तनाणदंसणजुत्तो सुत्तत्थतदुभयविहिन्नू। आयरियठाणजोगो सुत्तं वाएइ उवज्झाओ ॥१॥" इति॥ तद्भाव उपाध्यायता तया, तथा गणः—साधुसमुदायो यस्यास्ति स्वस्वामिसम्बन्धेनासौ गणी—गणनायकस्तद्भावस्तत्ता तया, गणनायकतयेति भाव इति, तथा समिति—सङ्गता औत्सर्गिकगुणयुक्तत्वेनोचिता आचार्यादितया अनुज्ञा समनुज्ञा, तथाहि—अनुयोगाचार्यस्यौत्सर्गिकगुणाः "तम्हा वयसंपन्ना कालोचियगहियसयलसुत्तत्था। अणुजोगाणुण्णाए जोगा भणिया जिणिंदेहिं ॥१॥ इहरा (रहा) मोसावाओ पवयणखिंसा य होइ लोयंमि। सेसाणवि गुणहाणी तित्थुच्छेओ य भावेणं ॥२॥"इति, गणा-

---

१ द्वितीयवारायामपि, एवं तृतीयवारायामपि, तृतीयवारायाः परतश्चतुर्थवारायां तमेवातिचारं सेवयित्वा आवर्त्तमानस्यापि विसंभोगः। ॥१॥ १ पञ्चविधमाचारं आचरन्तस्तथा प्रकाशयन्तः आचारं दर्शयन्त आचार्यास्तेन उच्यन्ते ॥१॥ सूत्रार्थविल्लक्षणयुक्तो गच्छस्याधारभूतश्च। गणतप्तिविप्रमुक्तोऽर्थं वाचयत्याचार्यः ॥२॥ २ सम्यक्त्वज्ञानदर्शनयुक्तः सूत्रार्थतदुभयविधिज्ञः। आचार्यस्थानयोग्यः सूत्रं वाचयत्युपाध्यायः ॥१॥ ३ तस्माद्व्रतसंपन्नाः कालोचितगृहीतसकलसूत्रार्थाः। अनुयोगानुज्ञाया योग्या भणिता जिनेन्द्रैः ॥१॥ इतरथा तु मृषावादः प्रवचननिन्दा च भवति लोके। शेषाणामपि

ज्झायत्ताए गणित्ताते। तिविधा समणुन्ना पं० तं०—आयरियत्ताते उवज्झायत्ताते गणित्ताते, एवं उवसंपया, एवं विजहणा (सू० १७४)

'साहंमियं'ति समानेन धर्मेण चरतीति साधर्मिकस्तं सम्–एकत्र भोगो–भोजनं सम्भोगः–साधूनां समानसामाचारीकतया परस्परमुपध्यादिदानग्रहणसंव्यवहारलक्षणः स विद्यते यस्य स साम्भोगिकः तं विसम्भोगो–दानादिभिरसंव्यवहारः स यस्यास्ति स विसम्भोगिकस्तं कुर्वन् नातिक्रामति–न लङ्घयत्याज्ञां सामायिकं वा विहितकारित्वादिति, स्वयमात्मना साक्षात् दृष्ट्वा सम्भोगिकेन क्रियमाणामसंभोगिकदानग्रहणादिकामसमाचारीं, तथा 'सड्ढस्स'त्ति श्रद्धा–श्रद्धानं यस्मिन् अस्ति स श्राद्धः–श्रद्धेयवचनः कोऽप्यन्यः साधुस्तस्य वचनमिति गम्यते 'निशम्य' अवधार्य, तथा 'तच्चं'ति एकं द्वितीयं यावत् तृतीयं 'मोसं'ति मृषावादं अकल्पग्रहणपार्श्वस्थदानादिना सावद्यविषयप्रतिज्ञाभङ्गलक्षणमाश्रित्येति गम्यते, 'आवर्त्तते' निवर्त्तते तमालोचयतीत्यर्थः, अनाभोगतस्तस्य भावात् प्रायश्चित्तं चास्योचितं दीयते, चतुर्थं त्वाश्रित्य प्रायो नो आवर्त्तते–तं नालोचयति, तस्य दर्पत एव भावादिति, आलोचनेऽपि प्रायश्चित्तस्यादानमस्येति, अतश्चतुर्थासम्भोगकारणकारिणं विसम्भोगिकं कुर्वन्नातिक्रामतीति प्रकृतम्, उक्तं च "[1]एगं व दो व तिन्नि व आउट्टंतस्स होइ पच्छित्तं। आउट्टंतेऽवि तओ परिणे तिण्हं विसंभोगो॥१॥" इति, एतच्चूर्णिः–[2]सं संभोइओ असुद्धं गिण्हन्तो चोइओ भणइ–संता पडिचोयणा, मिच्छामि दुक्कडं, ण पुणो एवं करिस्सामो, एवमाउट्टो जमावन्नो तं पायच्छित्तं दाउं सम्भोगो। एवं

१ एकशो वा द्विकृत्वस्त्रिकृत्वो वा आवर्त्तमानस्य भवति प्रायश्चित्तं आवर्त्तमानस्यापि ततस्त्रयाणां परतः विसंभोगः ॥१॥ २ स सांभोगिकोऽशुद्धं गृण्हंश्चोदितो भणति सती प्रतिचोदना मिथ्या मे दुष्कृतं न पुनरेवं करिष्यामि। एवमावृत्ते यदापन्नस्तत् प्रायश्चित्तं दत्त्वा संभोगः ॥२॥

गणिगच्छाए ॥१॥" इति, सेयमाचार्योपसम्पद्, एवमुपाध्यायगणिनोरपीति, 'एवं विजहण'त्ति 'एव'मित्याचार्यत्वादिभेदेन त्रिधैव विहानं—परित्यागः, तत्र आचार्यादेः स्वकीयस्य प्रमाददोषमाश्रित्य वैयावृत्त्यक्षपणार्थमाचार्यान्तरोपसम्पत्त्या भवतीति, आह च—निययगच्छादन्नंमि उ सीयणदोसाइणा होइ"त्ति, अथवा आचार्यो ज्ञानाद्यर्थमुपसम्पन्नं यतिं तमर्थमननुतिष्ठन्तं सिद्धप्रयोजनं वा परित्यजति यत् साऽऽचार्यविहानिः उक्तं च—"उवसंपन्नो जं कारणं तु तं कारणं अपूरिंतो। अहवा समाणियम्मी सारणया वा विसग्गो वा ॥१॥" इति, एवमुपाध्यायगणिनोरपीति ॥

इयमनन्तरं विशिष्टा साधुकायचेष्टा त्रिस्थानकेऽवतारिता, अधुना तु वचनमनसी तत्पर्युदासौ च तत्रावतारयन्नाह—

तिविहे वयणे पं० तं०—तव्वयणे तदन्नवयणे णोअवयणे, तिविहे अवयणे पं० तं०—णोतव्वयणे णो तदन्नवयणे अवयणे। तिविहे मणे पं० तं०—तम्मणे तयन्नमणे णोअमणे, तिविहे अमणे पं० तं०—णोतंमणे णोतयन्नमणे, अमणे (सू० १७५)

सूत्रमिदं सुगमम्, अस्य गमनिका—तस्य—विवक्षितार्थस्य घटादेर्वचनं—भणनं तद्वचनं, घटार्थापेक्षया घटवचनवत्, तस्माद्—विवक्षितार्थादन्यः—पटादिस्तस्य वचनं तदन्यवचनम्, घटापेक्षया पटवचनवत्, नोअवचनम्—अभणननिवृत्तिर्वचनमात्रं डित्थादिवदिति,

१ [illegible] भाति ॥१॥ २ यत्कारणमाश्रित्योपसंपन्नस्तत्कारणमपूरयन् अथवा समानिते (संपूर्णे) सारणता च विसर्गो वा ॥२॥

चार्योऽप्यौत्सर्गिक एवं—"सुत्तत्थे निम्माओ पियदढधम्मोऽणुवत्तणाकुसलो। जाईकुलसंपन्नो गंभीरो लद्धिमंतो य॥१॥ संगहुवग्गहनिरओ कयकरणो पवयणाणुरागी य॥ एवंविहो उ भणिओ गणसामी जिणरिंदेहिं॥२॥" अथैवंविधगुणाभावे अनुज्ञाया अप्यभावात् कथमन्या समनुज्ञा भविष्यतीति?, अत्रोच्यते, उक्तगुणानां मध्यात् अन्यतमगुणाभावेऽपि कारणविशेषात् सम्भवत्येवासौ, कथमन्यथाऽभिधीयते—"जे यावि मंदित्ति गुरुं विइत्ता, डहरे इमे अप्पसुएत्ति नच्चा। हीलंति मिच्छं पडिवज्जमाणा, करेंति आसायण ते गुरूणं॥१॥" इति, अतः केषाञ्चित् गुणानामभावेऽप्यनुज्ञा समग्रगुणभावे तु समनुज्ञेति स्थितम्, अथवा स्वस्य मनोज्ञाः—समानसामाचारीकतया अभिरुचिताः स्वमनोज्ञाः सह वा मनोज्ञैर्ज्ञानादिभिरिति समनोज्ञाः—एकसाम्भोगिकाः साधवः, कथं त्रिविधा इत्याह—'आचार्यतये' त्यादि, भिक्षुक्षुल्लकादिभेदाः सन्तोऽपि न विवक्षिताः, त्रिस्थानकाधिकारादिति। 'एवं उवसंपय'त्ति, 'एव'मित्याचार्यत्वादिभिस्त्रिधा समनुज्ञावत्। उपसंपत्तिरुपसंपत्—ज्ञानाद्यर्थं भवदीयोऽहमित्यभ्युपगमः, तथाहि—कश्चित् स्वाचार्यादिसन्दिष्टः सम्यक्श्रुतग्रन्थानां दर्शनप्रभावकशास्त्राणां वा सूत्रार्थयोर्ग्रहणस्थिरीकरणविस्मृतसन्धानार्थं तथा चारित्रविशेषभूताय वैयावृत्त्याय क्षपणाय वा सन्दिष्टमाचार्यान्तरं यदुपसम्पद्यते, उक्तं च—"उवसंपया य तिविहा णाणे तह दंसणे चरित्ते य। दंसणणाणे तिविहा दुविहा य

---

गुणहानिस्तीर्थोच्छेदश्चावश्यंतया॥२॥ १ सूत्रार्थयोर्निर्मातः प्रियदृढधर्मानुवर्त्तनाकुशलः। जातिकुलसंपन्नो गंभीरो लब्धिमांश्च॥१॥ संग्रहोपग्रहनिरतः कृतकरणः प्रवचनानुरागी च। एवंविध एव भणितो गणस्वामी जिनवरेन्द्रैः॥२॥ २ ये चापि गुरुं मंद इति विदित्वा बालोऽसावल्पश्रुत इति च ज्ञात्वा मिथ्यात्वं प्रतिपद्यमाना हीलयन्ति ते गुरूणामाशातनां कुर्वन्ति॥१॥ ३ उपसंपच्च त्रिविधा ज्ञाने तथा दर्शने चारित्रे च दर्शनज्ञाने त्रिविधा द्विविधा च चारित्रार्थं॥१॥

वक्कमंति विउक्कमंति चयंति उववज्जंति, देवा जक्खा नागा भूता सम्ममाराहिता भवंति, अन्नत्थ समुट्ठितं उदगपोग्गलं परिणयं वासिउकामं तं देसं साहरंति अब्भवद्दलगं च णं समुट्ठितं परिणयं वासितुकामं णो वाउआओ विधुणति, इच्चेतेहिं तिहिं ठाणेहिं महावुट्ठिकाए सिआ २। (सू० १७६)

गुणमानि चैतानि, किन्तु 'अप्पवुट्ठिकाए'त्ति, अल्पः—स्तोकः अविद्यमानो वा वर्षणं वृष्टिः—अधः पतनं वृष्टिप्रधानः कायो—जीवनिकायो व्योमनिपतदप्काय इत्यर्थः, वर्षणधर्मयुक्तं वोदकं वृष्टिः, तस्याः कायो—राशिर्वृष्टिकायः, अल्पश्चासौ वृष्टिकायश्च अल्पवृष्टिकायः स 'स्यात्'भवेत् तस्मिन्नत्र—मगधादौ, चशब्दोऽल्पवृष्टिताकारणान्तरसमुच्चयार्थः, णमित्यलङ्कारे, 'देशे' जनपदे प्रदेशे—तस्यैवैकदेशरूपे, वाशब्दो विकल्पार्थो, उदकस्य योनयः—परिणामकारणभूता उदकयोनयस्त एवोदकयोनिका—उदकजननस्वभावा 'व्युत्क्रामन्ति' उत्पद्यन्ते 'व्यपक्रामन्ति' च्यवन्ते, एतदेव यथायोगं पर्यायत आचष्टे—च्यवन्ते उत्पद्यन्ते क्षेत्रस्वभावादित्येकं, तथा 'देवा' वैमानिकज्योतिष्काः 'नागा'नागकुमारा भवनपत्युपलक्षणमेतत्, यक्षा भूता इति व्यन्तरोपलक्षणम्, अथवा देवा इति सामान्यं नागादयस्तु विशेषः, एतद्ग्रहणं च प्राय एषामेवंविधे कर्म्मणि प्रवृत्तिरिति ज्ञापनाय, विचित्रत्वाद्वा सूत्रगतेरिति, नोसम्यगाराधिता भवन्ति अविनयकरणाज्जनपदैरिति गम्यते, ततश्च तत्र—मगधादौ देशे प्रदेशे वा तस्यैव समुत्थितम्—उत्पन्नं उदकप्रधानं पौद्गलं—पुद्गलसमूहो मेघ इत्यर्थः, उदकपौद्गलं, तथा 'परिणतं' उदकदायकावस्थाप्राप्तम्, अत एव विद्युदादिकरणाद्वर्षितुकामं सदन्यं देशमटव्यादिकं संहरन्ति—नयन्तीति द्वितीयं, अभ्राणि—मेघास्तैर्वर्द्दलकं—दुर्दिनं अभ्रवर्द्दलकं 'वाउआए'त्ति वायुकायः प्रचण्डवातो 'विधुनाति' विध्वंसयतीति तृतीयम् 'इच्चे'इत्यादि निगमनमिति, एतद्विपर्यासादनन्तरसूत्रम्।

अथवा सः-शब्दव्युत्पत्तिनिमित्तधर्मविशिष्टोऽर्थोऽनेनोच्यत इति तद्वचनं यथार्थनामेत्यर्थः, ज्वलनतपनादिवत्, तथा तस्मात्-शब्दव्युत्पत्तिनिमित्तधर्म्मविशिष्टादन्यः-शब्दप्रवृत्तिनिमित्तधर्म्मविशिष्टोऽर्थ उच्यते अनेनेति तदन्यवचनमयथार्थमित्यर्थः, मण्डपादिवत्, उभयव्यतिरिक्तं नोअवचनं, निरर्थकमित्यर्थो, डित्थादिवत्, अथवा तस्य-आचार्यादेर्वचनं तद्वचनं तद्व्यतिरिक्तवचनं तदन्यवचनं-अविवक्षितप्रणेतृविशेषं नोअवचनं वचनमात्रमित्यर्थः, त्रिविधवचनप्रतिषेधस्त्ववचनं, तथाहि-नोतद्वचनं घटापेक्षया पटवचनवत्, नोतदन्यवचनं घटे घटवचनवत्, अवचनं वचननिवृत्तिमात्रमिति, एवं व्याख्यान्तरापेक्षयाऽपि नेयम्, तस्य-देवदत्तादेस्तस्मिन् वा घटादौ मनस्तन्मनः ततो-देवदत्ताद् अन्यस्य-यज्ञदत्तादेर्घटापेक्षया पटादौ वा मनस्तदन्यमनः, अविवक्षितसम्बन्धिविशेषं तु मनोमात्रं नोअमन इति, एतदनुसारेणामनोऽप्यूह्यमिति ॥

अनन्तरं संयतमनुष्यादिव्यापारा उक्ताः, इदानीं तु प्रायो देवव्यापारान् 'तिही'त्यादिभिरष्टाभिः सूत्रैराह—

तिहिं ठाणेहिं अप्पवुट्ठीकाते सिता, तं०—तस्सिं च णं देसंसि वा पदेसंसि वा णो बहवे उदगजोणिया जीवा य पोग्गला य उदगत्ताते वक्कमंति विउक्कमंति चयंति उववज्जंति, देवा णागा जक्खा भूता णो सम्ममाराहिता भवंति, तत्थ समुट्ठियं उदगपोग्गलं परिणतं वासितुकामं अन्नं देसं साहरंति अब्भवद्दलगं च णं समुट्ठितं परिणतं वासितुकामं वाउकाए विधुणाति, इच्चेतेहिं तिहिं ठाणेहिं अप्पवुट्ठिगाते सिता १। तिहिं ठाणेहिं महावुट्ठीकाते सिता, तंजहा-तंसि च णं देसंसि वा पतेसंसि वा बहवे उदगजोणिता जीवा य पोग्गला य उद-

म्हकालने नं गच्छामि णं भगवंतं वंदामि णमंसामि जाव पज्जुवासामि, अहुणोववन्ने देवे देवलोगेसु जाव अणज्झोववन्ने, तस्स णमेवं भवति-अत्थि णं मम माणुस्सते भवे मातोति वा जाव सुण्हाति वा तं गच्छामि णं तेसिमंतियं पाउब्भवामि पासंतु ता मे इमं एतारूवं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं देवाणुभावं लद्धं पत्तं अभिसमन्नागयं, इच्चेतेहिं तिहिं ठाणेहिं अहुणोववन्ने देवे देवलोगेसु इच्छेज्ज माणूसं लोगं हव्वमागच्छित्तते संचातेति हव्वमागच्छित्तते, ४ (सू० १७७)

अधुनोपपन्नो देवः, क्वेत्याह-देवलोकेष्विति, इह च बहुवचनमेकस्यैकदा अनेकेषूत्पादासम्भवादेकार्थे द्रश्यं वचनव्यत्ययादेवलोकानेकत्वोपदर्शनार्थं वा अथवा देवलोकेषु मध्ये क्वचिद्देवलोक इति, 'इच्छेद्' अभिलषेत्, पूर्वसङ्गतिकदर्शनाद्यर्थं मानुषाणामयं मानुषस्तं 'हव्वं' शीघ्रं 'संचाएइ'त्ति शक्नोति, दिवि-देवलोके भवा दिव्यास्तेषु कामौ च-शब्दरूपलक्षणौ भोगाश्च-गन्धरसस्पर्शाः कामभोगास्तेषु, अथवा काम्यन्त इति कामाः-मनोज्ञास्ते च ते भुज्यन्त इति भोगाः-शब्दादयस्ते च कामभोगास्तेषु मूर्च्छित इव मूर्च्छितो-मूढः, तत्स्वरूपस्यानित्यत्वादेर्विबोधाक्षमत्वात्, गृद्धः-तदाकाङ्क्षावान् अतृप्त इत्यर्थः, ग्रथित इव ग्रथितस्तद्विषयस्नेहरज्जुभिः सन्दर्भित इत्यर्थः, अध्युपपन्नः-आधिक्येनासक्तोऽत्यन्ततन्मना इत्यर्थः, 'नो आद्रियते' न तेष्वादरवान् भवति 'नो परिजानाति' एतेऽपि वस्तुभूता इत्येवं न मन्यते, तथा तेष्विति गम्यते, नो अर्थं बध्नाति-एतैरिदं प्रयोजनमिति न निश्चयं करोति, तथा तेषु नो निदानं प्रकरोति-एते मे भूयासुरित्येवमिति, तथा तेष्वेव नो स्थितिप्रकल्पम्-अवस्थानविकल्पनमेतेष्वहं तिष्ठेयमिति एते वा मम तिष्ठन्तु-स्थिरीभवन्त्वित्येवंरूपं स्थित्या वा-मर्यादया विशिष्टः प्रकल्पः-आचार आसेवेत्यर्थस्तं 'प्रकरोति' कर्तुमारभते, प्रशब्दस्यादि-

तिहिं ठाणेहिं अहुणोववन्ने देवे देवलोगेसु इच्छेज्ज माणुस्सं लोगं हव्वमागच्छित्तते, णो चेव णं संचातेति हव्वमागच्छित्तए, तं०—अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते गिद्धे गढिते अज्झोववन्ने से णं माणुस्सते कामभोगे णो आढाति णो परियाणाति णो अट्ठं बंधति णो नियाणं पगरेति णो ठिइपकप्पं पकरेति, अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते गिद्धे गढिते अज्झोववन्ने तस्स णं माणुस्सए पेम्मे वोच्छिण्णे दिव्वे संकंते भवति, अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते जाव अज्झोववन्ने तस्स णं एवं भवति—इयण्हिं न गच्छं मुहुत्तं गच्छं, तेणं कालेणमप्पाउया मणुस्सा कालधम्मुणा संजुत्ता भवंति, इच्चेतेहिं तिहिं ठाणेहिं अहुणोववन्ने देवे देवलोगेसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तए णो चेव णं संचातेति हव्वमागच्छित्तते ३। तिहिं ठाणेहिं देवे अहुणोववन्ने देवलोगेसु इच्छेज्जा माणूसं लोगं हव्वमागच्छित्तए, संचातेइ हव्वमागच्छित्तते—अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु अमुच्छिते अगिद्धे अगढिते अणज्झोववन्ने तस्स णमेवं भवति—अत्थि णं मम माणुस्सते भवे आयरितेति वा उवज्झातेति वा पवत्तीति वा थेरेति वा गणीति वा गणधरेत्ति वा गणावच्छेदेति वा, जेसिं पभावेणं मते इमा एतारूवा दिव्वा देविड्ढी दिव्वा देवजुती दिव्वे देवाणुभावे लद्धे पत्ते अभिसमन्नागते तं गच्छामि णं ते भगवंते वंदामि णमंसामि सक्कारेमि सम्माणेमि कल्लाणं मंगलं देवयं चेइयं पज्जुवासामि, अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु अमुच्छिए जाव अणज्झोववन्ने तस्स णं एवं भवति—एस णं माणुस्सते भवे णाणीति वा तवस्सीति वा अतिदुक्करदु-

कारणे नं गच्छामि णं भगवंतं वंदामि णमंसामि जाव पज्जुवासामि, अहुणोववन्ने देवे देवलोगेसु जाव अणज्झोववन्ने. तस्स णमेवं भवति-अत्थि णं मम माणुस्सते भवे माताति वा जाव सुण्हाति वा तं गच्छामि णं तेसिमंतियं पाउब्भवामि पासंतु ता मे इमं एतारूवं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं देवाणुभावं लद्धं पत्तं अभिसमन्नागयं, इच्चेतेहिं तिहिं ठाणेहिं अहुणोववन्ने देवे देवलोगेसु इच्छेज्ज माणूसं लोगं हव्वमागच्छित्तते संचातेति हव्वमागच्छित्तते, ४ (सू० १७७)

अधुनोपपन्नो देवः, क्वेत्याह-देवलोकेष्विति, इह च बहुवचनमेकस्यैकदा अनेकेषूत्पादासम्भवादेकार्थे दृश्यं वचनव्यत्ययादेवलोकानेकत्वोपदर्शनार्थं वा अथवा देवलोकेषु मध्ये क्वचिद्देवलोक इति, 'इच्छेद्' अभिलषेत्, पूर्वसङ्गतिकदर्शनाद्यर्थं मानुषाणामयं मानुष्यं 'हव्वं' शीघ्रं 'संचाएइ'त्ति शक्नोति, दिवि-देवलोके भवा दिव्यास्तेषु कामौ च-शब्दरूपलक्षणौ भोगाश्च-गन्धरसस्पर्शाः कामभोगास्तेषु, अथवा काम्यन्त इति कामाः-मनोज्ञास्ते च ते भुज्यन्त इति भोगाः-शब्दादयस्ते च कामभोगास्तेषु मूर्च्छित इव मूर्च्छितो-मूढः, तत्स्वरूपस्यानित्यत्वादेर्विबोधाक्षमत्वात्, गृद्धः-तदाकाङ्क्षावान् अतृप्त इत्यर्थः, ग्रथित इव ग्रथितस्तद्विषयस्नेहरज्जूभिः सन्दर्भित इत्यर्थः, अभ्युपपन्नः-आधिक्येनासक्तोऽत्यन्ततन्मना इत्यर्थः, 'नो आद्रियते' न तेष्वादरवान् भवति 'नो परिजानाति' एतेऽपि वस्तुभूता इत्येवं न मन्यते, तथा तेष्विति गम्यते, नो अर्थं बध्नाति-एतैरिदं प्रयोजनमिति न निश्चयं करोति, तथा तेषु नो निदानं प्रकरोति-एते मे भूयासुरित्येवमिति. तथा तेष्वेव नो स्थितिमकल्पम्-अवस्थानविकल्पनमेतेष्वहं तिष्ठेयमिति एते वा मम तिष्ठन्तु-स्थिरीभवन्त्वित्येवंरूपं स्थित्या वा-मर्यादया विशिष्टः प्रकल्पः-आचार आसेवेत्यर्थस्तं 'प्रकरोति' कर्तुमारभते, प्रशब्दस्यादि-

कर्मार्थत्वादिति, एवं दिव्यविषयप्रसक्तिरित्येकं कारणं १, तथा यतोऽसावधुनोपपन्नो देवो दिव्येषु कामभोगेषु मूर्च्छितादिविशेषणो भवति ततस्तस्य मानुष्यकं-मनुष्यविषयं प्रेम-स्नेहो येन मनुष्यलोके आगम्यते तद् व्यवच्छिन्नं, दिवि भवं दिव्यं-स्वर्गगतवस्तुविषयं संक्रान्तं-तत्र देवे प्रविष्टं भवतीति दिव्यप्रेमसंक्रान्तिरिति द्वितीयम् २, तथाऽसौ देवो यतो दिव्यकामभोगेषु मूर्च्छितादिविशेषणो भवति ततस्तत्प्रतिबन्धात् 'तस्स णं'ति तस्य-देवस्य 'एवं'ति एवंप्रकारं चित्तं भवति, यथा 'इयण्हिं'ति इत इदानीं न गच्छामि, 'मुहुत्तं'ति मुहूर्तेन गच्छामि कृत्यसमाप्तावित्यर्थः, 'तेणं कालेणं'ति येन तत्कृत्यं समाप्यते स च कृतकृत्यत्वादागमनशक्तो भवति तेन कालेन गतेनेति शेषः, तस्मिन् वा काले गते, णंशब्दो वाक्यालङ्कारार्थः, अल्पायुषः स्वभावादेव मनुष्या मात्रादयो यद्दर्शनार्थमाजिगमिषति ते कालधर्म्मेण-मरणेन संयुक्ता भवन्ति, कस्यासौ दर्शनार्थमागच्छत्विति असमाप्तकर्त्तव्यता नाम तृतीयमिति ३, 'इच्चेएहिं'त्यादिनिगमनं ३॥ देवकामेषु कश्चिदमूर्च्छितादिविशेषणो भवति, तस्य च मन इति गम्यते, एवंभूतं भवति—'आचार्यः' प्रतिबोधकप्रव्राजकादिः अनुयोगाचार्यो वा 'इतिः' एवंप्रकारार्थो वाशब्दो विकल्पार्थः, प्रयोगस्त्वेवं-मनुष्यभवे ममाचार्योऽस्तीति वा, उपाध्यायः-सूत्रदाता सोऽस्तीति वा, एवं सर्वत्र, नवरं प्रवर्त्तयति साधूनाचार्यादिष्टेषु वैयावृत्त्यादिष्विति प्रवर्ती, उक्तं च—"तवसंजमजोगेसुं जो जोगो तत्थ तं पयट्टेइ। असहुं च नियत्तेई गणतत्तिल्लो पवत्ती उ ॥१॥" इति, प्रवर्त्तिव्यापारितान् साधून् संयमयोगेषु सीदतः स्थिरीकरोतीति स्थविरः, उक्तं च—"थिरकरणा पुण थेरो पवत्तिवावारिएसु अत्थेसु। जो जत्थ सीयइ जई संतबलो

१ तप्र.संयमयोगेषु यो योग्यस्तत्र तं प्रवर्त्तयति। असहं च निवर्त्तयति गणततिकरः प्रवर्त्ती तु ॥१॥ २ स्थिरकरणात्पुनः स्थविरः प्रवर्त्तकव्यापारितेष्वर्थेषु। यो यत्र सीदति यतिस्सद्बलस्तं स्थिरं करोति ॥१॥

तस्मात् तेषामन्तिके-समीपे 'प्रादुर्भवामि' प्रकटीभवामि, 'ता मे'त्ति तावत् मे-ममेति तृतीयं ॥

ततो ठाणाइं देवे पीहेज्जा तं०—माणुसं भवं १ आरिते खेत्ते जम्मं २ सुकुलपच्चायातिं ३,५। तिहिं ठाणेहिं देवे परितप्पेज्जा, तं०—अहो णं मते संते बले संते वीरिए संते पुरिसक्कारपरक्कमे खेमंसि सुभिक्खंसि आयरियउवज्झातेहिं विज्जमाणेहिं कल्लसरीरेणं णो बहुते सुते अहीते १, अहो णं मते इहलोगपडिबद्धेणं परलोगपरंमुहेणं विसयतिसितेणं णो दीहे सामन्नपरिताते अणुपालिते २, अहो णं मते इड्ढिरससायगरुएणं भोगामिसगिद्धेणं णो विसुद्धे चरित्ते फासिते ३, इच्चेतेहिं० ६(सू० १७८)। तिहिं ठाणेहिं देवे चतिस्सामित्ति जाणाइ, तंजहा—विमाणाभरणाइं णिप्पभाइं पासित्ता कप्परुक्खगं मिलायमाणं पासित्ता अप्पणो तेयलेस्सं परिहायमाणिं जाणित्ता, इच्चेएहिं ३, ७। तिहिं ठाणेहिं देवे उव्वेगमागच्छेज्जा, तं०—अहो णं मए इमातो एतारूवातो दिव्वातो देविड्ढीओ दिव्वाओ देवजुतीतो दिव्वाओ देवाणुभावाओ पत्तातो लद्धातो अभिसमण्णागतातो चतियव्वं भविस्सति १, अहो णं मते माउओयं पिउसुक्कं तं तदुभयसंसट्ठं तप्पढमयाते आहारो आहारेयव्वो भविस्सति २, अहो णं मते कलमलजंबालाते असुतीते उव्वेयणिताते भीमाते गब्भवसहीते वसियव्वं भविस्सइ, इच्चेएहिं तिहिं ३, ८ (सू० १७९)। तिसंठिया विमाणा पं० तं०—वट्टा तंसा चउरंसा ३, तत्थ णं जे ते वट्टा विमाणा ते णं पुक्खरकन्नियासंठाणसंठिता सव्वओ समंता पागारपरिक्खित्ता एगदुवारा पन्नत्ता, तत्थ णं जे ते तंसा विमाणा ते णं सिंघाडगसंठाणसंठिता दुहतो पागारपरिक्खित्ता, एगतो वेतिता परिक्खित्ता तिदुवारा पन्नत्ता,

तत्थ णं जे ते चउरंसविमाणा ते णं अक्खाडगसंठाणसंठिता, सव्वतो समंता वेतितापरिक्खित्ता, चउदुवारा पं० । तिपतिट्ठिया विमाणा पं० तं०—घणोदधिपतिट्ठिता घणवातपइट्ठिया ओवासंतरपइट्ठिता, तिविधा विमाणा पं० तं०—अवट्ठिता वेउव्विता परिजाणिता (सू० १८०)।

'पीहेज्ज'त्ति स्पृहयेत्–अभिलषेदार्यक्षेत्रम्–अर्द्धषड्विंशतिजनपदानामन्यतरत् मगधादि सुकुले–इक्ष्वाकादौ देवलोकात् प्रतिनिवृत्तस्माज्जातिः–जन्म आयातिर्वा–आगतिः सुकुलप्रत्याजातिः सुकुलप्रत्यायातिर्वा तामिति । 'परितप्पेज्ज'त्ति पश्चात्तापं करोति, अहो विमले 'सति' विद्यमाने बले शारीरे वीर्ये जीवाश्रिते पुरुषकारे अभिमानविशेषे पराक्रमे अभिमान एव च निष्पादितस्वविषये इत्यर्थः, 'क्षेमे' उपद्रवाभावे सति 'सुभिक्षे' सुकाले सति 'कल्यशरीरेण' नीरोगदेहेनेति सामग्रीसद्भावेऽपि नो बहुश्रुतमधीतमित्येकं, 'विसयतिसिएणं'ति विषयतृषितत्वादिहलोकप्रतिबन्धादिना दीर्घश्रामण्यपर्यायापालनं इति द्वितीयं, तथा ऋद्धिः–आचार्यत्वादौ नरेन्द्रादिपूजा रसा–मधुरादयो मनोज्ञाः सातं–सुखमेतानि गुरुणि–आदरविषया यस्य सोऽयमृद्धिरससातगुरुकस्तेन अथवा एभिर्गुरुकस्तेषां प्राप्तावभिमानतोऽप्राप्तौ च प्रार्थनातोऽशुभभावोपात्तकर्म्मभारतयाऽलघुकस्तेन भोगेषु–कामेषु आशंसा च–अप्राप्तप्रार्थनं गृद्धं च–प्राप्तार्थविषयेण स भोगाशंसागृद्धः, इह चानुस्वारलोपह्रस्वत्वे प्राकृतत्वेति, पाठान्तरेण भोगामिषगृद्धेनेति, नो विशुद्धम्–अनतिचारं चरित्रं स्पृष्टमिति तृतीयम्, इत्येतैरित्यादि निगमनम् । विमानाभरणानां निष्प्रभत्वमौत्पातिकं तच्चक्षुर्विभ्रमरूपं वा, 'कल्पकक्खगं'ति कल्पवृक्षं, 'तेयलेस्सं'ति शरीरदीप्तिं सुखासिकां वा, 'इच्चेतेहिं'त्यादिनिगमनं, भवन्ति चैवंविधानि लिङ्गानि देवानां च्यवनकाले, उक्तं च—''माल्यम्लानिः कल्पवृक्षप्रकम्पः, श्रीह्रीनाशो वाससां चोपरागः । दैन्यं तन्द्रा कामरागाङ्गभङ्गौ, दृष्टिभ्रान्तिर्वेपथुश्चारतिश्च

॥१॥" इति, 'उव्वेगं'ति उद्वेगं-शोकं मयेतश्च्यवनीयं भविष्यतीत्येकं, तथा मातुरोजः-आर्तवं पितुः शुक्रं तत्तथाविधं किमपि त्रिलीनानामतिविलीनं तयोः-ओजःशुक्रयोरुभयं-द्वयं तदुभयं तच्च तत्संसृष्टं च, संश्लिष्टं चेति वा, परस्परमेकीभूतमित्यर्थः, तदुभयसंसृष्टं तदुभयसंश्लिष्टं वा एवंलक्षणो य आहारस्तस्य-गर्भवासकालस्य प्रथमता तत्प्रथमता तस्यां, प्रथमसमये एवेत्यर्थः, स आहर्त्तव्यः-अभ्यवहार्यो भविष्यतीति द्वितीयं, तथा कलमलो-जठरद्रव्यसमूहः स एव जम्बालः-कर्दमो यस्यां सा तथा तस्याम् अत एवाशुचिकायां उद्वेजनीयायां-उद्वेगकारिण्यां भीमायां-भयानिकायां गर्भ एव वसतिर्गर्भवसतिस्तस्यां वस्तव्यमिति तृतीयः, अत्र गाथे भवतः—"देवावि देवलोए दिव्वाभरणाणुरंजियसरीरा। जं परिवडंति तत्तो तं दुक्खं दारुणं तेसिं ॥१॥ तं सुरविमाणविभवं चिंतिय च यणं च देवलोगाओ। अइबलियं चिय जं नवि फुट्टइ सयसक्करं हिययं ॥२॥" इति, 'इच्चेएही'त्यादि निगमनम् ॥ अथ देववक्तव्यतानन्तरं तदाश्रयविमानवक्तव्यतामाह-'तिसंठिए'त्यादि, सूत्रत्रयं स्फुटमेव, केवलं त्रीणि संस्थितानि-संस्थानानि येषां तानि त्रिभिर्वा प्रकारैः संस्थितानि त्रिसंस्थितानि, 'तत्थ णं'ति तेषु मध्ये 'पुक्खरकण्णिए'ति पुष्करकर्णिका-पद्ममध्यभागः, सा हि वृत्ता समोपरिभागा च भवति, 'सव्वंत'इति दिक्षु 'समन्ता'दिति विदिक्षु 'सिंघाडगं'ति त्रिकोणो जलजफलविशेषः 'एकत' एकस्यां दिशि यस्यां वृत्तविमानमित्यर्थः 'अक्खाडगो' चतुरस्रः प्रतीत एव, वेदिका-मुण्डप्राकारलक्षणा, एतानि चैवंक्रमाण्येवावलिकाप्रविष्टानि भवन्ति पुष्पावकीर्णानि त्वन्यथाऽपीति, भवन्ति चात्र गाथाः—"सव्वेसु पत्थडेसुं मज्झे वट्टं अणंतरे तंसं। एयंतरचतुरंसं पुणोवि वट्टं पुणो

१ देवा अपि देवलोके दिव्याभरणानुरञ्जितशरीराः। यत्परिपतन्ति ततस्तद्दुःखं दारुणं तेषाम् ॥१॥ तं सुरविमानविभवं चिंतयित्वा च्यवनं च देवलोकात्। अतिबलिष्ठं चैव हृदयं यच्छतशर्करं न स्फुटति। २ सर्वेषु प्रस्तटेषु मध्ये वृत्तं अनन्तरं त्र्यस्रं। एतदनन्तरं चतुरस्रं पुनरपि वृत्तं

संगं ॥१॥ वट्टं वट्टस्सुवरिं तंसं तंसस्स उप्परिं होइ। चउरंसे चउरंसं उड्ढं तु विमाणसेढीओ ॥२॥ वट्टं च वलयगंपि व तंसं सिंघाडगंपिव विमाणं। चउरंसविमाणंपि य अक्खाडगसंठियं भणियं ॥३॥ सव्वे वट्टविमाणा एगदुवारा हवंति विन्नेया। तिन्नि य तंसविमाणे चत्तारि य होंति चउरंसे ॥४॥ पागारपरिक्खित्ता वट्टविमाणा हवंति सव्वेवि। चउरंसविमाणाणं चउद्दिसिं वेइया होइ ॥५॥ जत्तो वट्टविमाणं तत्तो तंसस्स वेइया होइ। पागारो बोद्धव्वो अवसेसेहिं तु पासेहिं ॥६॥ आवलियासु विमाणा वट्टा तंसा तहेव चउरंसा। पुप्फावगिन्नया पुण अणेगविहरूवसंठाणा ॥७॥" इति। प्रतिष्ठानसूत्रस्येयं विभजना—"घणउदहिपइट्ठाणा सुरभवणा होंति दोसु कप्पेसु। तिसु वाउपइट्ठाणा तदुभयसुपइट्ठिया तीसु ॥१॥ तेण परं उवरिमगा आगासंतरपइट्ठिया सव्वे"त्ति। अवस्थितानि—शाश्वतानि वैक्रियाणि—भोगाद्यर्थं निष्पादितानि, यतोऽभिहितं भगवत्यां—"जाहे णं भंते! सक्के देविंदे देवराया दिव्वाइं भोगभोगाइं भुंजिउकामे भवइ से कहमियाणिं पकरेति?, गोयमा! ताहे चेव णं से सक्के देविंदे देवराया एगं महं नेमिपडिरूवगं विउव्वइ

---

वृत्तमध्यं ॥१॥ १ वृत्तं वृत्तस्योपरि त्र्यस्रं त्र्यस्रस्योपरि भवति। चतुरस्रस्य चतुरस्रं ऊर्द्ध्वन्तु विमानश्रेणयः॥२॥ वृत्तं च वलयमिव त्र्यस्रं शृंगाटकमिव विमानं। चतुरस्रविमानमपि नाक्षाटकसंस्थितं भणितं ॥३॥ सर्वाणि वृत्तविमानान्येकद्वाराणि भवन्ति विज्ञेयानि। त्रीणि च त्र्यस्रविमाने चत्वारि च भवन्ति चतुरस्रे ॥४॥ प्राकारपरिक्षिप्तानि वृत्तविमानानि भवन्ति सर्वाण्यपि। चतुरस्रविमानानां चतसृषु दिक्षु वेदिका भवति ॥५॥ यतो वृत्तविमानं ततस्त्र्यस्रस्य वेदिका भवति। प्राकारो बोद्धव्योऽवशेषेषु तु पार्श्वेषु ॥६॥ आवलिकासु विमानानि वृत्तानि त्र्यस्राणि तथैव चतुरस्राणि। पुष्पावकीर्णकानि पुनरनेकविधरूपसंस्थानानि ॥७॥ २ घनोदधिप्रतिष्ठानानि सुरभवनानि भवंति द्वयोः कल्पयोः। त्रिषु वायुप्रतिष्ठानानि तदुभयसुप्रतिष्ठितानि त्रिषु॥१॥ ततः परमुपरितनानि आकाशान्तरप्रतिष्ठितानि सर्वाणि॥ ३ यदा भदन्त! शक्रो देवेन्द्रो देवराजो दिव्यान् भोगभोगान् भोक्तुकामो

णज्ज, तत्थ ण सक्क दावद दवराया अट्ठहिं अग्गमहिसीहिं सपरिवाराहिं दोहि य अणिएहिं णट्टाणीएण य गंधव्वाणीएण य सद्धिं महया नट्ट जाव दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ''त्ति, परियानं–तिर्यग्लोकावतरणादि तत्प्रयोजनं येषां तानि पारियानिकानि–पालकपुष्पकादीनि वक्ष्यमाणानीति ॥

पूर्वतरसूत्रेषु देवा उक्ताः, अधुना वैक्रियादिसाधर्म्यान्नारकान्निरूपयन्नाह—

**तिविधा नेरइया पं० तं०—सम्मादिट्ठी मिच्छादिट्ठी सम्मामिच्छादिट्ठी, एवं विगलिंदियवज्जं जाव वेमाणियाणं २७। ततो दुग्गतीतो पं० तं०–णेरइयदुग्गती तिरिक्खजोणीयदुग्गती मणुयदुग्गती १, ततो सुगतीतो पं० तं०—सिद्धिसोगती देवसोगती मणुस्ससोगती २। ततो दुग्गता पं० तं०—णेरतितदुग्गता तिरिक्खजोणितदुग्गया मणुस्सदुग्गता ३। ततो सुगता पं० तं०—सिद्धसोगता देवसोग्गता मणुस्ससुग्गता ४ (सू० १८१)**

'तिविधे' त्यादि स्पष्टं, नारका दर्शनतो निरूपिताः, शेषा अपि जीवा एवंविधा एवेत्यतिदेशतः शेषानाह–'एव–मित्यादि

भवति स कथमिदानीं प्रकरोति? गौतम! तदैव च शक्रो देवेन्द्रो देवराज एकं महन्नेमिप्रतिरूपकं विकुर्वति, एकं योजनशतसहस्रं आयामविष्कंभाभ्यां. १ प्रासादावतंसकः शयनीयं, तत्र स शक्रो देवेन्द्रो देवराजः अष्टाभिरग्रमहीषिभिः सपरिवाराभिर्द्वाभ्यामनीकाभ्यां नृत्यानीकेन च सार्द्धं महता नृत्यं यावद्दिव्यान् भोगभोगान् भुंजन् विहरति॥



*गतार्थं नवरं. 'विगलेंदियवज्जं'ति नारकवत् दण्डकसिधा वाच्यः एकेन्द्रियविकलेन्द्रियान् विना, यतः पृथिव्यादीनां मिथ्यात्वमेव द्वित्रिचतुरिन्द्रियाणां तु न मिश्रमिति। त्रिविधदर्शनाश्च दुर्गतिसुगतिगोगात् दुर्गताः सुगताश्च भवन्तीति दुर्गत्यादिदर्शनाय सूत्रचतुष्टयमाह–'तओ' इत्यादि, व्यक्तं. परं दृष्टा गतिर्दुर्गतिर्मनुष्याणां दुर्गतिर्निक्षयैव. [illegible]*

गतार्थं नवरं. विगलिंदियवज्जं'ति नारकवत् दण्डकस्त्रिधा वाच्यः एकेन्द्रियविकलेन्द्रियान् विना, यतः पृथिव्यादीनां मिथ्यात्वमेव द्वित्रिचतुरिन्द्रियाणां तु न मिश्रमिति। त्रिविधदर्शनाश्च दुर्गतिसुगतियोगात् दुर्गताः सुगताश्च भवन्तीति दुर्गत्यादिदर्शनाय सूत्रचतुष्टयमाह–'तओ' इत्यादि, व्यक्तं, परं दुष्टा गतिर्दुर्गतिर्मनुष्याणां दुर्गतिर्विवक्षयैव, तत्सुगतेरप्यभिधास्यमानत्वादिति, दुर्गताः–दुःस्थाः सुगताः–सुस्थाः।

सिद्धादिसुगतास्तु [श्र] तपस्विनः सन्तो भवन्तीति तत्कर्त्तव्यपरिहर्त्तव्य विशेषमाह—

चउत्थभत्तितस्स णं भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए, तं०—उस्सेतिमे संसेतिमे चाउलधोवणे १, छट्ठभत्तितस्स णं भिक्खुस्स कप्पंति तओ पाणगाइं पडिगाहित्तए तं०—तिलोदए तुसोदए जवोदए २, अट्ठमभत्तियस्स णं भिक्खुस्स कप्पंति ततो पाणगाइं पडिगाहित्तए, तं०—आयामते सोवीरते सुद्धवियडे ३, तिविहे उवहडे पं० तं०—फलिओवहडे सुद्धोवहडे संसट्ठोवहडे ४, तिविहे उग्गहिते पं० तं०—जं च ओगिण्हति जं च साहरति जं च आसगंसि पक्खिवति ५, तिविधा ओमोयरिया पं० तं०—उवगरणोमोयरिया भत्तपाणोमोदरिता भावोमोदरिता ६, उवगरणोमोदरिता तिविहा पं० तं०—एगे वत्थे एगे पाते चियत्तोवहिमातिज्जणता ७, ततो ठाणा णिग्गंथाण वा णिग्गंथीण वा अहियाते असुभाते अक्खमाते अणिस्सेयसाए अणाणुगामियत्ताए भवंति, तं०–कूअणता कक्करणता अवज्झाणता ८, ततो ठाणा णिग्गंथाण वा णिग्गंथीण वा हिताते

लेस्से भवति, तं—आयावणताते १ खंतिखमाते २ अपाणगेणं तवो कम्मेणं ३, ११। तिमासितं णं भिक्खूपडिमं पडिवन्नस्स अणगारस्स कप्पंति ततो दत्तीओ भोअणस्स पडिगाहेत्तए ततो पाणगस्स १२, एगरातियं भिक्खुपडिमं सम्मं अणणुपालेमाणस्स अणगारस्स इमे ततो ठाणा अहिताते असुभाते अखमाते अणिस्सेयसाते अणाणुगामित्ताते भवंति, तं—उम्मायं वा लभिज्जा १ दीहकालियं वा रोगायंकं पाउणेज्जा २ केवलिपन्नत्तातो वा धम्मातो भंसेज्जा ३, १३, एगरातियं भिक्खुपडिमं सम्मं अणुपालेमाणस्स अणगारस्स ततो ठाणा हिताते सुभाते खमाते णिस्सेसाते आणुगामितत्ताए भवंति, तं०—ओहिणाणे वा से समुप्पज्जेज्जा १ मणपज्जवनाणे वा से समुप्पज्जेज्जा २ केवलणाणे वा से समुप्पज्जेज्जा ३, १४। (सू० १८२)

'चउत्थे' त्यादि सूत्राणि चतुर्दश व्यक्तानि, केवलं एकं पूर्वदिने द्वे उपवासदिने चतुर्थं पारणकदिने भक्तं-भोजनं परिहरति यत्र तपसि तत् चतुर्थभक्तं तद्यस्यास्ति स चतुर्थभक्तिकस्तस्य, एवमन्यत्रापि, शब्दव्युत्पत्तिमात्रमेतत्, प्रवृत्तिस्तु चतुर्थभक्तादिशब्दानामेकाद्युपवासादिष्विति, भिक्षणं शीलं धर्म्मः तत्साधुकारिता वा यस्य स भिक्षुर्भिनत्ति वा क्षुधमिति भिक्षुस्तस्य पानकानि-पानाहाराः, उत्स्वेदेन निर्वृत्तमुत्स्वेदिमं-येन व्रीह्यादिपिष्टं सुराद्यर्थं उत्स्वेद्यते, तथा संसेकेन निर्वृत्तमिति संसेकिमं-अरणिकादिपत्रशाकमुत्काल्य येन शीतलजलेन संसिच्यते तदिति, तन्दुलधावनं प्रतीतमेव, तिलोदकादि तत्तत्प्रक्षालनजलं, नवरं तुषोदकं-व्रीह्युदकम् २, आयामक-

म्-अवश्रावणं सौवीरकं-काञ्जिकं शुद्धविकटम्-उष्णोदकं २, उपहृतमुपहितम्, भोजनस्थाने ढौकितं भक्तमिति भावः, फलिकं-प्रहेणकादि, तच्च तदुपहृतं चेति फलिकोपहृतं अवगृहीताभिधानपञ्चमपिण्डैषणाविषयभूतमिति यदाह व्यवहारभाष्ये—"फेलियं पहेणगाई वंजणभक्खेहिं वाऽविरहियं जं। भोत्तुमणस्सोवहियं पंचमपिंडेसणा एस ॥१॥" इति, तथा शुद्धम्-अलेपकृतं शुद्धौदनं च, तच्च तदुपहृतं चेति शुद्धोपहृतं, एतच्चाल्पलेपाभिधानचतुर्थैषणाविषयभूतमिति, तथा संसृष्टं नाम-भोक्तुकामेन गृहीतकूरादौ क्षिप्तो हस्तः क्षिप्तो न तावत् मुखे क्षिपति तच्च लेपालेपकरणस्वभावमिति,

म्-अवश्रावणं सौवीरकं-काञ्जिकं शुद्धविकटम्-उष्णोदकं ३, उपहृतमुपहितम्, भोजनस्थाने ढौकितं भक्तमिति भावः, फलिकं-प्रहेणकादि, तच्च तदुपहृतं चेति फलिकोपहृतं अवगृहीताभिधानपञ्चमपिण्डैषणाविषयभूतमिति यदाह व्यवहारभाष्ये—"फलियं पहेणगाई वंजणभक्खेहिं वाऽविरहियं जं। भोत्तुमणस्सोवहियं पंचमपिंडेसणा एस ॥१॥" इति, तथा शुद्धम्-अलेपकृतं शुद्धौदनं च, तच्च तदुपहृतं चेति शुद्धोपहृतं, एतच्चाल्पलेपाभिधानचतुर्थैषणाविषयभूतमिति, तथा संसृष्टं नाम-भोक्तुकामेन गृहीतकूरादौ क्षिप्तो हस्तः क्षिप्तो न तावत् मुखे क्षिपति तच्च लेपालेपकरणस्वभावमिति, तदेवंभूतमुपहृतं संसृष्टोपहृतं, इदं चतुर्थैषणात्वेन भजनीयं, लेपालेपकृतादिरूपत्वादस्येति, अत्र गाथा—"सुद्धं च अलेवकडं अहव ण सुद्धोदणो भवे सुद्धं। संसट्ठं आउत्तं [भोक्तुमारब्धमित्यर्थः] लेवाडमलेवडं वावि ॥१॥" इति इह च त्रये एकद्वित्रिसंयोगैः सप्ताभिग्रहवन्तः साधवो भवन्तीति ४। अवगृहीतं-नाम केनचित् प्रकारेण दायकेनात्तं भक्तादि 'य'दिति भक्तम्, चकारः समुच्चयार्थः अवगृह्णाति-आदत्ते हस्तेन दायकस्तदवगृहीतम्, एतच्च षष्ठी पिण्डैषणेति, एवं च वृद्धव्याख्यापरिवेषकः पिढिकायाः कूरं गृहीत्वा यस्मै दातुकामस्तद्भाजने क्षेप्तुमुपस्थितस्तेन च भणितं-मा देहि, अत्रावसरे प्राप्तेन साधुना धर्मलाभितं, ततः परिवेषको भणति-प्रसारय साधो! पात्रं, ततः साधुना प्रसारिते पात्रे क्षिप्तमोदनम्, इह च संयतप्रयोजने गृहस्थेन हस्त एव परिवर्त्तितो नान्यत् गमनादि कृतमिति जघन्यमाहृतजातमिति, इह च व्यवहारभाष्यश्लोकः—"भुंजमाणस्स उक्खित्तं, पडिसिद्धं तं च तेण उ। जहन्नोवहडं तं तु, हत्थस्स परियत्तणा ॥१॥" इति, तथा यच्च परिवेषकः स्थाना-

१ फलिकं प्रहेणकादि यद् व्यञ्जनभक्ष्यैर्वाविरहितं। भोक्तुमनस उपहृतं पंचमी पिंडैषणैषा ॥१॥ २ शुद्धं चालेपकृतं अथवा शुद्धौदनः शुद्धं संसृष्टं आयुक्तं (भोक्तुमारब्धं) लेपकृतमलेपकृतं वापि ॥१॥ ३ भुंजमानस्य उत्क्षिप्तं प्रतिषिद्धं तच्च तेन तु। जघन्योपहृतं तत्तु हस्तस्य

दविचलन् संहरति–भक्तभाजनात् भोजनभाजनेषु क्षिपति तच्चावगृहीतमिति प्रक्रमः, श्लोकोऽत्र—"अह साहीरमाणं तु, वट्टंतो [परिवेषयन्नित्यर्थः] जो उ दायओ। दलेज्जाविचलिओ तत्तो, छट्ठी एसावि एसणा ॥१॥" इति, तथा यच्च भक्तमास्यके–पिठरादिमुखे क्षिपति तच्चावगृहीतमिति, एवं चात्र वृद्धव्याख्या–कूरमत्राह्लादननिमित्तं कलिंजादिभाजने विशालोत्तानरूपे क्षिप्तं ततो भाक्तिकेभ्यो दत्तं ततो भुक्तशेषं यद्भूयः पिठरके प्रकाशमुखे क्षिपन्ती दद्यात् परिवेषयन्ती वा प्रकाशमुखे भाजने तत् तृतीयमवगृहीतं, श्लोकोऽत्र—"भुत्तसेसं तु जं भूओ, छुब्भंती पिठरे दये। संवट्टंती व अन्नस्स, आसगंमि पगासए ॥१॥" इति, ननु आस्ये–मुखे यत् प्रक्षिपतीति मुख्यार्थे सति किं पिठरकादिमुखे इति व्याख्यायत इति?, उच्यते आस्यप्रक्षेपव्याख्यानमयुक्तं, जुगुप्साभावादिति, आह च–"पक्खेवए दुगुंछा, आएसो कुडमुहाईसु"न्ति ५। अवमम्–ऊनमुदरं–जठरं यस्य सोऽवमोदरः, अवमं वोदरं अवमोदरं तद्भावोऽवमोदरता प्राकृतत्वादोमोयरियत्ति, अवमोदरस्य वा करणमवमोदरिका, व्युत्पत्तिरेवेयमस्य, प्रवृत्तिस्तूनतामात्रे, तत्र प्रथमा जिनकल्पिकादीनामेव न पुनरन्येषां, शास्त्रीयोपध्यभावे हि समग्रसंयमाभावादिति, अतिरिक्ताग्रहणतो वोनोदरतेति, उक्तं च–जं वट्टइ उवगारे उवकरणं तंसि (तेसि) होइ उवगरणं। अइरेगं अहिगरणं अजओ अजयं परिहरंतो ॥१॥" [अयतश्च यत्तत् भुञ्जानो भवतीत्यर्थः] भक्तपानावमोदरता पुनरात्मीयाहारमानपरित्यागतो वेदितव्या, उक्तं च—"बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए अट्ठावीसं

---

परिवर्त्तनात् ॥१॥ १ अथ संह्रियमाणमेव वेषकः यो वेषयन् दद्यादचलितस्ततः षष्ठ्येषाऽप्येषणा ॥१॥ २ भुक्तशेषन्तु यद् भूयः क्षिपन्ती पिठरे दद्यात्। परिवेषयन्ती वान्यस्य आस्ये प्रकाशे ॥१॥ ३ (मुखे) प्रक्षेपे जुगुप्सा पिठरादिमुखेष्वादेशः (जुगुप्सायाः अभावात्)। ४ यद्वर्त्तते उपकारे तत्तेषां उपकरणं भवति उपकरणं। अतिरेकमधिकरणमयतोऽयतं धारयन् ॥१॥ ५ किल द्वात्रिंशत्कवला आहारः कुक्षिपूरको भणितः। पुरुषस्य

मवे कवला ॥१॥ कवलाण य परिमाणं कुक्कुडिअंडगपमाणमेत्तं तु। जो वा अविगिअवयणो वयणंमि छुहेज वीसत्थो ॥२॥" इति, द्वयं चाष्ट १ द्वादश २ षोडश ३ चतुर्विंशत्ये ४ कत्रिंशदन्तैः कवलैः ५ क्रमेणाल्पाहारादिसंज्ञिता पञ्चधा भवति, उक्तं च—"अप्पाहार १ अवड्ढा २ दुभाग ३ पत्ता ४ तहेव किंचूणा ५। अट्ठ १ दुवालस २ सोलस ३ चउवीस ४ तहेक्कतीसा य ५ ॥१॥" इति, 'एवम्' अनेनानुसारेण पानेऽपि वाच्या, भगवत्यामप्युक्तम्—"बत्तीसं कुक्कुडिअंडगपमाणमेत्ते कवले आहारमाहारेमाणे पमाणपत्तेत्ति वत्तव्वं सिया, एत्तो एक्केणवि कवलेण ऊणगं आहारमाहारेमाणे समणे णिग्गंथे नो पगामरसभोइत्ति वत्तव्वं सिय" त्ति, भावोनोदरता पुनः क्रोधादित्यागः, उक्तं च—कोहाईणमणुदिणं चाओ जिणवयणभावणाओ उ। भावेणोमोदरिया पन्नत्ता वीयरागेहिं ॥१॥ उपकरणावमोदरिकाया भेदानाह—'उपकरणे'त्यादि एकं वस्त्रं जिनकल्पिकादेरेव, एवं पात्रमपि एगं पायं जिणकप्पियाणमिति वचनादिति, तथा 'चियत्तेणं' संयमोपकारकोऽयमिति प्रीत्या मलिनादावप्रीत्यकरणेन वा 'चियत्तस्स वा' संयमिनां संमतस्य उपधेः—रजोहरणादिकस्य 'साइज्जणय'त्ति सेवा 'चियत्तोवहीसाइज्जणय'त्ति ७। 'चियत्तेणे'ति प्रागुक्तमेतद्विपर्ययभेदान् सकलानाह—'तओ' इत्यादि स्पष्टं, किन्तु अहिताय—अपथ्याय असुखाय—दुःखाय अक्षमाय—अयुक्तत्वाय अनिःश्रेयसाय—अमोक्षाय अनानुगामि-

मत्तिलाया अष्टाविंशतिर्भवेयुः कवलाः ॥१॥ कवलानां परिमाणं कुक्कुटयंडकप्रमाणमात्रं। यो वाऽविकृतवदनः वदने क्षिपेद्विश्वस्तः॥२॥ १ अल्पाहारार्धा द्विभागा प्राप्ता तथैव किञ्चिदूना अष्टद्वादशषोडशचतुर्विंशत्येकत्रिंशत्कवलैस्तथा ॥१॥ २ द्वात्रिंशतं कुक्कुटयण्डकप्रमाणमात्रान्कवलानाहारत्वेनाहारयन् प्रमाणप्राप्त इति वक्तव्यः स्यादित एकेनापि कवलेनोनं आहारमाहारायन् श्रमणो निर्ग्रन्थो नो प्रकामरसभोजीति वक्तव्यः स्यात् ॥ ३ क्रोधादीनामनुदिनं त्यागो जिनवचनभावनाश्च भावेनावमोदरता प्रज्ञप्ता वीतरागैः ॥१॥ ४ एकं पात्रं जिनकल्पिकानाम्.

कत्वाय–न शुभानुबन्धायेति, कूजनता–आर्त्तस्वरकरणं कर्करणता–शय्योपध्यादिदोषोद्भावनगर्भं प्रलपनं अपध्यानता–आर्त्तरौद्रध्यायित्वमिति ८, उक्तविपर्ययसूत्रं व्यक्तं ९, निर्ग्रन्थानामेव परिहर्त्तव्यं त्रयमाह –'तओ' इत्यादि, शल्यते–बाध्यते अनेनेति शल्यं, द्रव्यतस्तोमरादि भावतस्तु इदं त्रिविधं–माया–निकृतिः सैव शल्यं मायाशल्यं १, एवं सर्वत्र, नवरं नितरां दीयते–लूयते मोक्षफलमनिन्द्यब्रह्मचर्यादिसाध्यं कुशलकर्मकल्पतरुवनमनेन देवर्द्ध्यादिप्रार्थनपरिणामनिशितासिनेति निदानं मिथ्या–विपरीतं दर्शनं मिथ्यादर्शनमिति १०। निर्ग्रन्थानामेव लब्धिविशेषस्य कारणत्रयमाह–'तिही'त्यादि, सङ्क्षिप्ता–लघूकृता विपुलापि–विस्तीर्णाऽपि सती अन्यथाऽऽदित्यबिम्बवत् दुर्दर्शः स्यादिति तेजोलेश्या–तपोविभूतिजं तेजस्वित्वं तैजसशरीरपरिणतिरूपं महाज्वालाकल्पं येन स सङ्क्षिप्तविपुलतेजोलेश्यः आतापनानां–शीतादिभिः शरीरस्य सन्तापनानां भाव आतापनता शीतातपादिसहनमित्यर्थस्तया 'क्षान्त्या' क्रोधनिग्रहेण क्षमा–मर्षणं न त्वशक्ततयेति क्षान्तिक्षमा तया, अपानकेन पारणककालादन्यत्र 'तपःकर्म्मणा' षष्ठादिनेति, अभिधीयते च भगवत्याम्—"जे णं गोसाला! एगाए सनहाए कुम्मासपिंडियाए एगेण य वियडासणेणं छट्ठं छट्ठेणं अणिक्खित्तेणं तवोकम्मेणं उड्ढं बाहाओ पगिज्झिय २ सूराभिमुहे आयावणभूमीए आयावेमाणे विहरइ से णं अंतो छण्हं मासाणं संखित्तविपुलतेयलेस्से भवइ"त्ति ११, 'तेमासिय'मित्यादि, भिक्षुप्रतिमाः–साधोरभिग्रहविशेषाः, ताश्च द्वादश, तत्रैकमासिक्यादयो मासोत्तराः सप्त तिस्रः सप्तरात्रिन्दिवप्रमाणाः प्रत्येकं एका अहोरात्रिकी एका एकरात्रिकीति, उक्तं च—"मासाई सत्तंता ७ पढमा १ बिइ २ तइय ३ सत्त राइदिणा १०। अहराइ ११ एगराई १२ भिक्खूपडिमाण बारसगं ॥१॥" ति, अयमत्र भावार्थः—"पडिवज्जइ एयाओ संघयणधिइजुओ

१ मासाद्याः सप्तमासान्ताः सप्त प्रथमा द्वितीया तृतीया सप्तरात्रिंदिवा। अहोरात्रा एकरात्रा भिक्षुप्रतिमानां द्वादशकं ॥१॥ प्रतिपद्यत एताः

महासत्तो। पडिमाओ भावियप्पा सम्मं गुरुणा अणुन्नाओ ॥१॥" गच्छे चिय निम्माओ जा पुव्वा दस भवे असंपुन्ना। नवमस्स तइयवत्थू होइ जहन्नो सुयाभिगमो ॥२॥ वोसट्ठचत्तदेहो उवसग्गसहो जहेव जिणकप्पी। एसण अभिग्गहीया भत्तं च अलेवडं तस्स ॥३॥ गच्छा विणिक्खमित्ता पडिवज्जइ मासियं महापडिमं। दत्तेग भोयणस्सा पाणस्सवि एग जा मासं ॥४॥ पच्छा गच्छमुवेति एव दुमासी तिमासि जा सत्त। नवरं दत्तिविवड्ढी जा सत्त उ सत्तमासीए ॥५॥ तत्तो अ अट्ठमी खलु हवइ इहं पढमसत्तराइंदी। तीए चउत्थएणं अपाणएणं अह विसेसो ॥६॥ तथा चागमः—"पढमसत्तराइंदियं णं भिक्खुपडिमं पडिवन्नस्स अणगारस्स कप्पइ से चउत्थेणं भत्तेणं अपाणएणं बहिया गामस्स वे" त्यादि, "उत्ताणगपासल्ली नेसज्जी वावि ठाण ठाइत्ता। अह उवसग्गे घोरे दिव्वाई सहइ अविकंपो ॥१॥ दोच्चा वि एरिसि च्चिय बहिया गामादियाण नवरं तु। उक्कुडुलगंडसाई डंडायतिउव्व ठाइत्ता ॥२॥ तच्चाएवी एवं नवरं ठाणं तु तस्स गोदोही। वीरासणमहवावी ठाएज्ज व अंबखुज्जो य ॥३॥ एमेव अहोराई छट्ठं भत्तं अपाणगं नवरं। गाम-नगराण बहिया वग्घारियपाणिए ठाणं ॥४॥ एमेव एगराई अट्ठमभत्तेण ठाण बाहिरओ। ईसिं पब्भारगए अणिमिसणयणेगदिट्ठीउ

---

संहननधृतियुतो महासत्त्वः प्रतिमा भावितात्मा सम्यग्गुरुणाऽनुज्ञातः ॥१॥ गच्छे निर्मात एव यावत्पूर्वाणि दश भवेयुरसंपूर्णानि। नवमस्य तृतीयवस्तु भवति जघन्यः श्रुताभिगमः ॥२॥ व्युत्सृष्टत्यक्तदेह उपसर्गसहो यथैव जिनकल्पी। एषणाऽभिगृहिता भक्तं चालेपकृतस्य ॥३॥ गच्छाद्विनिष्क्रम्य प्रतिपद्यते मासिकीं महाप्रतिमां। दत्त्येका भोजनस्य पानस्याप्येका यावन्मासं ॥४॥ पश्चाद्गच्छमत्येति एवं द्विमासिकी त्रिमासिकी यावत्सप्तमासिकी। परं दत्तिविवृद्धिर्यावत् सप्त सप्तमासिक्यां ॥५॥ ततश्चाष्टमीह भवति प्रथमा सप्तरात्रिंदिवैव। तस्यां चतुर्थेनापानकेनाथ विशेषः ॥६॥

१ प्रथमां सप्तरात्रिंदिवां भिक्षुप्रतिमां प्रतिपन्नस्य अनगारस्य कल्पते चतुर्थेन भक्तेनापानकेन ग्रामस्य बहिः ॥ २ उत्तानकः पार्श्वलीनो नैषद्यी वापि

॥५॥ साहट्टु दोन्नि पाए वग्घारियपाणिठायई ठाणं। वग्घारिलंबियभुओ सेस दसासु जहा भणियं ॥६॥" इति, तत्र त्रिमासिकी तृतीया तां प्रतिपन्नस्य–आश्रितस्य 'दत्तिः' सत्कृतप्रक्षेपलक्षणेति १२, एकरात्रिकी द्वादशी तां सम्यगननुपालयतः उन्मादः–चित्तविभ्रमो, रोगः– कुष्ठादिः आतङ्कः–शूलविशूचिकादिः सद्योघाती स च स चेति रोगातङ्कं, 'पाउणेज्जे'त्ति प्राप्नुयात् 'धम्मात्'–श्रुतचारित्रलक्षणात् भ्रश्येत्, सम्यक्त्वस्यापि हान्येति, उन्मादरोगधर्म्मभ्रंशाः प्रतिमायाः सम्यगननुपालनाजन्या 'अहिताद्यर्थाः' दुःखार्थी भवन्तीति हृदयम् १३, विपर्ययसूत्रमेतदनुसारतो बोद्धव्यमिति १४ ॥

उक्तरूपाणि च साध्वनुष्ठानानि कर्म्मभूमिष्वेव भवन्तीति तन्निरूपणायाह—

**जंबुद्दिवे २ ततो कम्मभूमीओ पं० तं—भरहे एरवते महाविदेहे, एवं धायइसंडे दीवे पुरच्छिमद्धे जाव पुक्खरवरदीवड्ढपचत्थिमद्धे ५। (सू० १८३) तिविहे दंसणे पं० तं०—सम्मदंसणे मिच्छदंसणे सम्मामिच्छदंसणे १, तिविधा रुती पं० तं०—सम्मरुती मिच्छरुती सम्मामिच्छरुई २, तिविधे पओगे पं० तं—सम्मपओगे**

स्थानं स्थित्वा। अथोपसर्गान् घोरान् दिव्यादीन् सहतेऽविकपः ॥१॥ द्वितीयाऽपि इदृश्येव ग्रामादीना बहिः परन्तूत्कटुकलकुटशायी दंडायत इव वा स्थित्वा ॥२॥ तृतीयायामप्येवं परं तस्य स्थानं गोदोहिकैव। वीरासन अथवा तिष्ठेत् वापि आम्रकुब्जश्च ॥३॥ एवमेवाहोरात्रिकी परं षष्ठं भक्तमपानकं। ग्रामनगरात् बहिरवलंबितपाणिना स्थानं ॥४॥ एवमेवैकरात्रिकी अष्टमभक्तेन स्थानं बहिः। ईषत्प्राग्भारगतः अनिमेषनयनैकदृष्टिः ॥५॥ संहृत्य द्वावपि पादौ अवलंबितपाणिः तिष्ठति स्थानं। अवलंबितभुजः शेषं दशासु यथा भणितं ॥६॥

मिच्छपओगे सम्मामिच्छपओगे ३ (सू० १८४) तिविहे ववसाए पं० तं०—धम्मिते ववसाते अधम्मिए ववसाते धम्मियाधम्मिए ववसाते ४, अथवा तिविधे ववसाते, पं० तं०—पचक्खे पच्चतिते आणुगामिए ५, अहवा तिविधे ववसाते पं०तं०—इहलोइए परलोइए इहलोगितपरलोगिते ६, इहलोगिते ववसाते तिविहे पं०तं०–लोगिते वेतिते सामतिते ७, लोगिते ववसाते तिविधे पं० तं०—अत्थे धम्मे कामे ८, वेतिगे ववसाते तिविधे पं० तं०—रिउव्वेदे जउव्वेदे सामवेदे ९, सामइते ववसाते तिविधे पं०, तं०—णाणे दंसणे चरित्ते १०, तिविधा अत्थजोणी पं० तं०—सामे दंडे भेदे ११ (सू० १८५)

'जंबुद्दीवे' त्यादि सूत्राणि साक्षादतिदेशाभ्यां पञ्च सुगमानि चेति। उक्ताः कर्मभूमयः, अथ तद्गतजनधर्म्मनिरूपणायाह–'तिविहे'त्यादि सूत्राण्येकादश कण्ठयानि, किन्तु त्रिविधं दर्शनं–शुद्धाशुद्धमिश्रपुञ्जत्रयरूपं मिथ्यात्वमोहनीयं, तथाविधदर्शनहेतुत्वादिति १, रुचिस्तु तदुदयसम्पाद्यं तत्त्वानां श्रद्धानं, 'प्रयोगः' सम्यक्त्वादिपूर्वो मनःप्रभृतिव्यापार इति अथवा सम्यगादिप्रयोगः–उचितानुचितोभयात्मक औषधादिव्यापार इति ३, 'व्यवसायो' वस्तुनिर्णयः पुरुषार्थसिद्ध्यर्थमनुष्ठानं वा, स च व्यवसायिनां 'धार्मिका१धार्म्मिक२धार्मिकाधार्म्मिकाणां' संयतासंयतदेशसंयतलक्षणानां सम्बन्धित्वादभेदेनोच्यमानस्त्रिधा भवतीति, संयमासंयमदेशसंयमलक्षणविषयभेदाद्वा ४, व्यवसायो–निश्चयः, स च प्रत्यक्षोऽवधिमनःपर्यायकेवलाख्यः, प्रत्ययात्–इन्द्रियानिन्द्रियलक्षणान्निमित्ताज्जातः प्रात्ययिकः साध्यम्–अग्न्यादिकमनुगच्छति साध्याभावे न भवति यो धूमादिहेतुः सोऽनुगामी ततो जातमानुगामिकम्–अनुमानं तद्रूपो व्यवसाय आनुगामिक एवेति, अथवा प्रत्यक्षः–स्वयंदर्शनलक्षणः प्रात्ययिकः–आप्तवचनप्रभवः, तृतीयस्तथैवेति

५, इहलोके भव ऐहलौकिको-य इह भवे वर्त्तमानस्य निश्चयोऽनुष्ठानं वा स ऐहलौकिको व्यवसाय इति भावः, यस्तु परलोके भविष्यति स पारलौकिकः, यस्त्विह परत्र च स ऐहलौकिकपारलौकिक इति ६, लौकिकः सामान्यलोकाश्रयो निश्चयोऽनुष्ठानं वा, वेदाश्रितो वैदिकः, समयः-साङ्ख्यादीनां सिद्धान्तस्तदाश्रितस्तु सामयिकः, लौकिकादयो व्यवसायाः प्रत्येकं त्रिविधास्ते च प्रतीता एव, नवरं अर्थधर्मकामविषयो निर्णयो यथा-"अर्थस्य मूलं निकृतिः क्षमा च, धर्मस्य दानं च दया दमश्च। कामस्य वित्तं च वपुर्वयश्च, मोक्षस्य सर्वोपरमः क्रियासु ॥१॥" इत्यादिरूपः तदर्थमनुष्ठानं वा अर्थादिरेव व्यवसाय उच्यते इति ८, ऋग्वेदाद्याहितो निर्णयो व्यापारो वा ऋग्वेदादिरेवेति ९, ज्ञानादीनि सामा(म)यिको व्यवसायः, तत्र ज्ञानं व्यवसाय एव, पर्यायशब्दत्वात्, दर्शनमपि श्रद्धानलक्षणं व्यवसायो, व्यवसायांशत्वात्तस्येति प्रतिपादितमेव, चारित्रमपि समभावलक्षणो व्यवसाय एव, बोधस्वभावस्यात्मनः परिणतिविशेषत्वात्, यच्चोच्यते, "संचरणमणुट्ठाणं विहिपडिसेहाणुगं तत्थ" त्ति तत्र तद्बाह्यचारित्रापेक्षमवगन्तव्यमिति, अथवा ज्ञानादौ विषये यो व्यवसायो-बोधोऽनुष्ठानं वा स विषयभेदात् त्रिविध इति, सामा(म)यिकता चास्य सम्यग्मिथ्याशब्दलाञ्छितस्य ज्ञानादित्रयस्य सर्वसमयेष्वपि भावादिति १०, अर्थस्य-राजलक्ष्म्यादेर्योनिः-उपायोऽर्थयोनिः साम-प्रियवचनादि दण्डो-वधादिरूपः परनिग्रहः भेदो-जिगीषितशत्रुपरिवर्गस्य स्वाम्यादिस्नेहापनयनादिः, क्वचित्तु दण्डपदत्यागेन प्रदानेन सह तिस्रोऽर्थयोनयः पठ्यन्ते, भवन्ति चात्र श्लोकाः—"परस्परोपकाराणां, दर्शनं १ गुणकीर्त्तनम् २। सम्बन्धस्य समाख्यान३मायत्याः संप्रकाशनम् ४ ॥१॥" अस्मिन्नेवं कृते इदमावयोर्भविष्यतीत्याशाजननमायतिसंप्रकाशनमिति, "वाचा पेशलया साधु तवाहमिति चार्पणम् ५। इति सामप्र-

१ तत्र विधिप्रतिषेधानुगमनुष्ठानं सच्चारित्रं.

योगतः, साम पञ्चविधं स्मृतम् ॥१॥" वधश्च १ परिक्लेशो २, धनस्य हरणं तथा ३। इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः ॥२॥ स्नेहरागापनयनं १, संहर्षोत्पादनं तदा २। सन्तर्जनं च ३ भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः ॥३॥" संहर्षः-स्पर्द्धा सन्तर्जनं च-अस्यात्मन्मित्रविग्रहस्य परित्राणं मत्तो भविष्यतीत्यादिकरूपमिति, प्रदानलक्षणमिदम्—"यः सम्प्राप्तो धनोत्सर्गः, उत्तमाधममध्यमः। प्रतिदानं तथा तस्य, गृहीतस्यानुमोदनम् ॥१॥ द्रव्यदानमपूर्वं च ३, स्वयंग्राहप्रवर्त्तनम् ४। देयस्य प्रतिमोक्षश्च ५, दानं पञ्चविधं स्मृतम् ॥१॥ धनोत्सर्गो-धनसम्पत् स्वयंग्राहप्रवर्त्तनम्-परस्वेषु देयप्रतिमोक्ष-ऋणमोक्ष इति, प्रयोगश्चासामेवम्—उत्तमं प्रणिपातेन, शूरं भेदेन योजयेत्। नीचमल्पप्रदानेन, समं तुल्यपराक्रमैः ॥१॥"" इति।

अनन्तरं जीवा धर्मतः प्ररुपिताः, इदानीं पुद्गलांस्तथैव प्ररूपयन्नाह—

**तिविहा पोग्गला पं० तं०—पओगपरिणता मीसापरिणता वीससापरिणता, तिपतिट्ठिया णरगा पं० तं०—पुढविपतिट्ठिता आगासपतिट्ठिता आयपइट्ठिआ, णेगमसंगहववहाराणं पुढविपइट्ठिया उज्जुसुतस्स आगासपतिट्ठिया तिण्हं सद्दणताणं आयपतिट्ठिया ॥ ( सू० १८६ )**

प्रयोगपरिणताः-जीवव्यापारेण तथाविधपरिणतिमुपनीताः, यथा पटादिषु कर्म्मादिषु वा, 'मीस'त्ति प्रयोगविस्रसाभ्यां परिणताः, यथा पटपुद्गला एव प्रयोगेण पटतया विस्रसापरिणामेन चाभोगेऽपि पुराणतयेति, विस्रसा-स्वभावः तत्परिणता अभ्रेन्द्रधनुरादिवदिति। पुद्गलप्रस्तावाद्विस्रसापरिणतपुद्गलरूपाणां नरकावासानां प्रतिष्ठाननिरूपणायाह—'तिपइट्ठिए'त्यादि, स्फुटं केवलं

नरका-नारकावासा आत्मप्रतिष्ठिताः-स्वरूपप्रतिष्ठिताः । तत्प्रतिष्ठानं नयैराह—'णेगमे'त्यादि, नैकेन-सामान्यविशेषग्राहकत्वात् तस्या-नेकेन ज्ञानेन मिनोति-परिच्छिनत्तीति नैकमः, अथवा निगमाः-निश्चितार्थबोधास्तेषु कुशलो भवो वा नैगमः, अथवा नैको गमः-अर्थमार्गो यस्य स प्राकृतत्वेन नैगमः १, संग्रहणं भेदानां संगृह्णाति वा तान् संगृह्यन्ते वा ते येन स संग्रहो-महासामान्यमात्राभ्युपगमपर इति २, व्यवहरणं व्यवह्रियते वा स व्यवह्रियते वा तेन विशेषेण वा सामान्यमवह्रियते-निराक्रियतेऽनेनेति लोकव्यवहारपरो वा व्यवहारो-विशेषमात्राभ्युपगमपरः ३, एतेषां नयानां मतेनेति गम्यं, ऋजु-अवक्रमभिमुखं श्रुतं-श्रुतज्ञानं यस्येति ऋजुश्रुतः, ऋजु वा-अतीतानागतवक्रपरित्यागाद्वर्त्तमानं वस्तु सूत्रयति-गमयतीति ऋजुसूत्रः-स्वकीयं साम्प्रतं च वस्तु नान्यदित्यभ्युपगमपरः, शब्द्यते-अभिधीयतेऽभिधेयमनेनेति शब्दो-वाचको ध्वनिः, नयन्ति-परिच्छिन्दन्त्यनेकधर्मात्मकं सद्वस्तु सा(अन)वधारणतयैकेन धर्मेणेति नयाः शब्दप्रधाना नयाः शब्दनयाः, ते च त्रयः-शब्दसमभिरूढैवंभूताख्याः, तत्र शब्दनमभिधानं शब्द्यते वा यः शब्द्यते वा येन वस्तु स शब्दः, तदभिधेयविमर्शपरो नयोऽपि शब्द एवेति, स च भावनिक्षेपरूपं वर्त्तमानमभिन्नलिङ्गवाचकं बहुपर्यायमपि च वस्त्वभ्युपगच्छतीति, वाचकं वाचकं प्रति वाच्यभेदं समभिरोहयति-आश्रयति यः स समभिरूढः, स ह्यनन्तरोक्तविशेषणस्यापि वस्तुनः शक्रपुरन्दरादिवाचकभेदेन भेदमभ्युपगच्छति घटपटादिवदिति, यथा शब्दार्थो घटते-चेष्टत इति घट इत्यादिलक्षणः 'एव'-मिति तथाभूतः सत्यो घटादिरर्थो नान्यथेत्येवमभ्युपगमपर एवंभूतो नयः, अयं हि भावनिक्षेपादिविशेषणोपेतं व्युत्पत्त्यर्थाविष्टमेवार्थ-मिच्छति, जलाहरणादिचेष्टावन्तं घटमिवेति ७, तत्राद्यत्रयस्याशुद्धत्वाद् प्रायो लोकव्यवहारपरत्वाच्च पृथिवीप्रतिष्ठितत्वं नरकाणामिति मतं, चतुर्थस्य शुद्धत्वात् आकाशस्य च गच्छतां तिष्ठतां वा सर्वभावानामैकान्तिकाधारत्वात् शुद्धोऽनकान्तिकत्वाच्चाकाशप्रतिष्ठितत्वमिति,

त्रयाणां तु शुद्धतरत्वात् सर्वभावानां स्वभावलक्षणाधिकरणस्यान्तरङ्गत्वादव्यभिचारित्वाच्च आत्मप्रतिष्ठितत्वमिति, न हि स्वस्वभावं विहाय परस्वभावाधिकरणा भावाः कदाचनापि भवन्तीति, यत आह—"वत्थुं वसइ सहावे सत्ताओ चेयणव्व जीवम्मि। न विलक्खणत्तणाओ भिन्ने [अन्यत्र] छायातवे चेव ॥१॥" इति, नरकेषु च मिथ्यात्वाद् गतिर्जन्तूनां भवतीति अथवा नया मिथ्यादृश इति सम्बन्धान्मिथ्यात्वस्वरूपमाह—

तिविधे मिच्छत्ते पं० तं०—अकिरिता अविणते अन्नाणे १, अकिरिया तिविधा, पं० तं०—पओगकिरिया समुदाणकिरिया अन्नाणकिरिया २, पओगकिरिया तिविधा, पं० तं०—मणपओगकिरिया वइपओगकिरिया कायपओगकिरिया ३, समुदाणकिरिया तिविधा पं० तं०—अणंतरसमुदाणकिरिया परंपरसमुदाणकिरिया तदुभयसमुदाणकिरिता ४, अन्नाणकिरिता तिविधा पं० तं०—मतिअन्नाणकिरिया सुतअन्नाणकिरिया विभंगअन्नाणकिरिया ५, अविणते तिविहे पं० तं०—देसचाती निरालंबणता नाणापेज्जदोसे ६, अन्नाणे तिविधे पं० तं०—देसण्णाणे सव्वण्णाणे भावन्नाणे ७ (सू० १८७)

'तिविधे मिच्छत्ते' इत्यादि, सूत्राणि सप्त सुगमानि, नवरं मिथ्यात्वं विपर्यस्तश्रद्धानमिह न विवक्षितं, प्रयोगक्रियादीनां वक्ष्यमाणतद्भेदानां असम्भवद्यमानत्वात्, ततोऽत्र मिथ्यात्वं क्रियादीनामसम्यग्रूपता मिथ्यादर्शनानाभोगादिजनितो विपर्यासो दुष्ट-

१ नीति नैतनेत्र वस्तु स्वभावे वसति सत्त्वात् छायातपाविवावैलक्षण्यादन्यत्र न.

त्वमशोभनत्वमिति भावः, 'अकिरिय'त्ति नञिह दुःशब्दार्थो यथा अशीला दुःशीलेत्यर्थः, ततश्चाक्रिया–दुष्टक्रिया मिथ्यात्वाद्युपहतस्यामोक्षसाधकमनुष्ठानं, यथा मिथ्यादृष्टेर्ज्ञानमप्यज्ञानमिति, एवमविनयोऽपि, अज्ञानम्–असम्यग्ज्ञानमिति, अक्रिया हि अशोभना क्रियैवातोऽक्रिया त्रिविधेत्यभिधायापि प्रयोगेत्यादिना क्रियैवोक्तेति, तत्र वीर्यान्तरायक्षयोपशमाविर्भूतवीर्येणात्मना प्रयुज्यते–व्यापार्यत इति प्रयोगो–मनोवाक्कायलक्षणस्तस्य क्रिया–करणं व्यापृतिरिति प्रयोगक्रिया, अथवा प्रयोगैः–मनःप्रभृतिभिः क्रियते–बध्यत इति प्रयोगक्रिया कर्म्मेत्यर्थः, सा च दुष्टत्वादक्रिया, अक्रिया च मिथ्यात्वमिति सर्वत्र प्रक्रमः, 'समुदाणं'ति प्रयोगक्रिययैकरूपतया गृहीतानां कर्म्मवर्ग्गणानां समिति–सम्यक् प्रकृतिबन्धादिभेदेन देशसर्वोपघातिरूपतया च आदानं–स्वीकरणं समुदान निपातनात्तदेव क्रिया–कर्म्मेति समुदानक्रियेति, अज्ञानात् वा चेष्टा कर्म्म वा सा अज्ञानक्रियेति २, प्रयोगक्रिया त्रिविधा व्याख्यातार्था ३, नास्त्यन्तरं–व्यवधानं यस्याः साऽनन्तरा सा चासौ समुदानक्रिया चेति विग्रहः, प्रथमसमयवर्त्तिनीत्यर्थः, द्वितीयादिसमयवर्त्तिनी तु परम्परसमुदानक्रियेति, प्रथमाप्रथमसमयापेक्षया तु तदुभयसमुदानक्रियेति, 'मइअन्नाणकिरिय'त्ति "अविसेसिया मइच्चिय सम्मद्दिट्ठिस्स सा मइन्नाणं । मइअन्नाणं मिच्छादिट्ठिस्स सुयंपि एमेव ॥१॥ त्ति [अविशेषिता मतिरेव सम्यग्दृष्टेः सा मतिज्ञानम् । मत्यज्ञानं मिथ्यादृष्टेः श्रुतमप्येवमेव ॥१॥] मत्यज्ञानात् क्रिया–अनुष्ठानं मत्यज्ञानक्रिया, एवमितरे अपि, नवरं विभङ्गो–मिथ्यादृष्टेरवधिः स एवाज्ञानं विभङ्गाज्ञानमिति । व्याख्यातमक्रियामिथ्यात्वं, अविनयमिथ्यात्वव्याख्यानायाह—'अविणये'त्यादि, विशिष्टो नयो विनयः–प्रतिपत्तिविशेषः तत्प्रतिषेधादविनयः, देशस्य–जन्मक्षेत्रादेस्त्यागो देशत्यागः स यस्मिन्नविनये प्रभुगालीप्रदानादावस्ति स देशत्यागी, निर्गत आलम्बनाद्–आश्रयणीयात् गच्छकुटुम्बकादेरिति निरालम्बनस्तद्भावो निरालम्बनता–आश्रयणीयानपेक्षत्वमिति भावः, पुष्टा-

लम्बनाभावेन वोचितप्रतिपत्तिभ्रंशः, प्रेम च द्वेषश्च प्रेमद्वेषं नानाप्रकारं प्रेमद्वेषं नानाप्रेमद्वेषमविनयः, इयमत्र भावना–आराध्यविषयमाराध्यसंमतविषयं वा प्रेम तथाऽऽराध्यासम्मतविषयो द्वेष इत्येवं नियतावेतौ विनयः स्यात्, उक्तं च—"सत्यपि नतिः स्तुतिवचनं तदभिमते प्रेम तद्द्विषि द्वेषः। दानमुपकारकीर्त्तनममन्त्रमूलं वशीकरणम् ॥१॥" इति, नानाप्रकारौ च तावाराध्यतत्संमतेतरलक्षणविशेषानपेक्षत्वेनानियतविषयादविनय इति, अज्ञानमिथ्यात्वमित उच्यते—'अन्नाणे'त्यादि, ज्ञानं हि द्रव्यपर्यायविषयो बोधस्तन्निषेधोऽज्ञानं तत्र विवक्षितद्रव्यं देशतो यदा न जानाति तदा देशाज्ञानमकारप्रश्लेषात्, यदा च सर्वतस्तदा सर्वाज्ञानं, यदा विवक्षितपर्यायतो न जानाति तदा भावाज्ञानमिति, अथवा देशादिज्ञानमपि मिथ्यात्वविशिष्टमज्ञानमेवेति अकारप्रश्लेषं विनापि न दोष इति।

उक्तं मिथ्यात्वं, तच्चाधर्म्म इति तद्विपर्ययमधुना धर्म्ममाह—

तिविहे धम्मे पं० तं०—सुयधम्मे चरित्तधम्मे अत्थिकायधम्मे, तिविधे उवक्कमे पं० तं०—धम्मिते उवक्कमे अधम्मिते उवक्कमे धम्मिताधम्मिते उवक्कमे १, अहवा तिविधे उवक्कमे पं० तं०—आओवक्कमे परोवक्कमे तदुभयोवक्कमे २, एवं वेयावच्चे ३, अणुग्गहे ४, अणुसट्ठी ५, उवालंभे ६, एवमेक्केके तिन्नि २ आलावगा जहेव उवक्कमे (सू० १८८)

'तिविहे धम्मे' इत्यादि श्रुतमेव धर्म्मः श्रुतधर्म्मः–स्वाध्यायः, एवं चरित्रधर्म्मः–क्षान्त्यादिश्रमणधर्म्मः, अयं च द्विविधोऽपि–

द्रव्यभावभेदे धर्म्मे भावधर्म्म उक्तः, यदाह—"दुविहो उ भावधम्मो सुयधम्मो खलु चरित्तधम्मो य। सुयधम्मो सज्झाओ चरित्तधम्मो समणधम्मो ॥१॥" इति, अस्तिशब्देन प्रदेशा उच्यन्ते तेषां कायो–राशिरस्तिकायः स चासौ संज्ञया धर्म्मश्चेत्यस्तिकायधर्म्मो, गत्युपष्टम्भलक्षणो धर्म्मास्तिकाय इत्यर्थः, अयं च द्रव्यधर्म्म इति। अनन्तरं श्रुतधर्म्मचारित्रधर्म्मावुक्तौ अधुना तद्विशेषानाह—'तिविहे उवक्कमे' इत्यादि, सूत्राणि अष्टौ सुगमानि, परं उपक्रमणमुपक्रमः–उपायपूर्वक आरम्भः, धर्म्मे–श्रुतचारित्रात्मके भवः स वा प्रयोजनमस्येति धार्म्मिकः, श्रुतचारित्रार्थ आरम्भ इत्यर्थः, तथा न धार्मिकः अधार्मिकः–असंयमार्थः, तथा धार्मिकश्चासौ देशतः संयमरूपत्वात् अधार्मिकश्च तथैवासंयमरूपत्वात् धार्मिकाधार्म्मिकः, देशविरत्यारम्भ इत्यर्थः, अथवा नामस्थापनाद्रव्यक्षेत्रकालभावभेदात् षड्विध उपक्रमः, तत्र नामस्थापने सुज्ञाने, द्रव्योपक्रमस्तु ज्ञशरीरभव्यशरीरव्यतिरिक्तस्त्रिधा–सचित्ताचित्तमिश्रद्रव्यभेदात्, तत्र सचित्तद्रव्योपक्रमो द्विपदचतुष्पदापदभेदभिन्नः, पुनरेकैको द्विविधः–परिकर्म्मणि वस्तुविनाशे च, तत्र परिकर्म्मणि–द्रव्यस्य गुणविशेषकरणं तस्मिन् सति, तद्यथा–घृताद्युपयोगेन पुरुषस्य वर्णादिकरणम्, एवं शुकसारिकादीनां शिक्षागुणविशेषकरणं, तथा चतुष्पदानां हस्त्यादीनामपदानां च वृक्षादीनां वृक्षायुर्वेदोपदेशाद्वार्द्धक्यादिगुणापादनमिति, तथा वस्तुविनाशे च पुरुषादीनां खड्गादिभिर्विनाश एवोपक्रम इति, एवमचित्तद्रव्योपक्रमः पद्मरागादिमणेः क्षारमृत्पुटपाकादिना वैमल्यापादनं विनाशश्चेति, मिश्रद्रव्योपक्रमस्तु कटकादिविभूषितपुरुषादिद्रव्यस्यैवेति, तथा क्षेत्रस्य–शालिक्षेत्रादेः परिकर्म्म विनाशो वा क्षेत्रोपक्रमः, तथा कालस्य–चन्द्रोपरागादिलक्षणस्योपक्रमः–उपायेन परिज्ञानं कालोपक्रमः, तथा भावस्य प्रशस्ताप्रशस्तरूपस्योपायतः परिज्ञानमेव भावोपक्रमः, स चाप्रशस्तो डोड्डिनी-

१ द्विविधस्तु भावधर्मः श्रुतधर्मः खलु चारित्रधर्मश्च। श्रुतधर्मः स्वाध्यायश्चारित्रधर्मः श्रमणधर्म्मः ॥१॥

गणिकाऽमात्यदृष्टान्तावसेयः, प्रशस्तश्च श्रुतादिनिमित्तमाचार्यादिभावोपक्रम इति, एवं च धार्मिकस्य–संयतस्य यश्चारित्राद्यर्थं द्रव्यक्षेत्रकालभावानामुपक्रम उक्तस्वरूपः स धार्मिक एवोपक्रमः, तथा अधार्मिकस्य–असंयतस्यासंयमार्थं यः सोऽधार्म्मिक एव, तथा धार्म्मिकाधार्म्मिकस्य–देशविरतस्य यः स धार्मिकाधार्म्मिक इति, अथ स्वाम्यन्तरभेदेनोपक्रममेव त्रिधाऽऽह–तत्रात्मनोऽनुकूलोपसर्गादौ शीलरक्षणनिमित्तमुपक्रमो–वैहानसादिना विनाशः परिकर्म्म वा आत्मार्थं वा उपक्रमोऽन्यस्य वस्तुनः आत्मोपक्रम इति, तथा परस्य परार्थं वोपक्रमः परोपक्रम इति, तदुभयस्य–आत्मपरलक्षणस्य तदुभयार्थं वोपक्रमस्तदुभयोपक्रम इति, 'एव' मिति उपक्रमसूत्रवत् आत्मपरोभयभेदेन वैयावृत्त्यादयो वाच्याः, व्यावृत्तस्य भावः कर्म्म वा वैयावृत्त्यं–भक्तादिभिरुपष्टम्भः, तत्रात्मवैयावृत्त्यं गच्छनिर्गतस्यैव, परवैयावृत्त्यं ग्लानादिप्रतिजागरकस्य, तदुभयवैयावृत्त्यं गच्छवासिन इति. अनुग्रहो–ज्ञानाद्युपकारः, तत्र आत्माऽनुग्रहोऽध्ययनादिप्रवृत्तस्य परानुग्रहो वाचनादिप्रवृत्तस्य तदुभयानुग्रहः शास्त्रव्याख्यानशिष्यसंग्रहादिप्रवृत्तस्येति, अनुशिष्टिः–अनुशासनम् , तत्र आत्मनो यथा—"[1]बायालीसेसणसंकडंमि गहणंमि जीव ! न हु छलिओ । इण्हिं जह न छलिज्जसि भुंजंतो रागदोसेहिं ॥१॥" इति, (तथा विधेयमिति शेष इति), परानुशिष्टिर्यथा—"[2]तं तंसि भाववेज्जो भवदुक्खनिपीडिया तुहं एते । हंदि सरणं पवन्ना मोएयव्वा पयत्तेणं ॥२॥" इति, तदुभयानुशिष्टिर्यथा "[3]कहकहऽवि माणुसत्ताइ पावियं चरण पवररयणं च। ता भो एत्थ पमाओ कइयावि

१ द्विचत्वारिंशदेषणासङ्कटे गहने जीव ! नैव छलितः । इदानीं यथा न छल्यसे भुंजानो रागद्वेषाभ्याम् ॥१॥ २ तत्त्वं तेषां भाववैद्यो (ऽसि) भवदुःखनिपीडिता एते त्वां शरणं प्रपन्ना मोचयितव्या (दुःखात्) प्रयत्नेन ॥२॥ ३ कथं कथमपि मनुष्यत्वादि प्राप्तं प्रवरं चारित्ररत्नं च। तद् भो अत्र प्रमादो न कदापि युज्यतेऽस्माकम् ॥३॥

न जुज्जए अम्हं ॥१॥" इति, उपालम्भः–इयमेवानौचित्यप्रवृत्तिप्रतिपादनगर्भा, स चात्मनो यथा—"चोल्लगदिट्ठंतेणं दुलहं लहिऊण माणुसं जम्मं। जं न कुणसि जिणधम्मं अप्पा किं वेरिओ तुज्झ ? ॥१॥" इति, परोपालम्भो यथा—"उत्तमकुलसंभूओ उत्तमगुरुदिक्खिओ तुमं वच्छ ! । उत्तमनाणगुणड्ढो कह सहसा ववसिओ एवं ? ॥१॥" इति, तदुभयोपालम्भो यथा–"एगस्स कए नियजीवियस्स बहुयाओ जीवकोडीओ। दुक्खे ठवंति जे केवि ताण किं सासयं जीयं ? ॥२॥" ति, 'एव' मित्यादिना पूर्वोक्तोऽतिदेशो व्याख्यातः, एवं चात्राक्षरघटना–यथैवोपक्रमे आत्मपरतदुभयैस्त्रय आलापका उक्ताः एवमेकैकस्मिन् वैयावृत्त्यादिसूत्रे ते त्रयस्त्रयो वाच्या इति।

अथ श्रुतधर्मभेदाः उच्यन्ते–

**तिविहा कहा, पं० तं०—अत्थकहा धम्मकहा कामकहा ७, तिविहे विणिच्छते पं० तं०—अत्थविणिच्छते धम्मविणिच्छते कामविणिच्छते ८, (सू० १८९)**

अर्थस्य–लक्ष्म्याः कथा–उपायप्रतिपादनपरो वाक्यप्रबन्धोऽर्थकथा, उक्तं च—"सामादिधातुवादादिकृष्यादिप्रतिपादिका। अर्थो-

---

१ भोजनादिदृष्टान्तैर्दुर्लभं मानुषं जन्म लब्ध्वा यज्जिनधर्मं न करोषि किं आत्मंस्त्वमेव वैरी तव ॥१॥ २ वत्स ! त्वं उत्तमकुलसंभूत उत्तमगुरुदीक्षित उत्तमज्ञानगुणाढ्यः कथमेवं सहसा व्यवसितोऽसि ॥२॥ ३ एकस्य निजजीवितस्य कृते बहुका जीवकोटीः दुःखे। स्थापयंति ये केचित् तेषां किं शाश्वतं जीवितं ॥३॥

पादानपरमा, कथाऽर्थस्य प्रकीर्त्तिता ॥१॥" तथा—"अर्थाख्यः पुरुपार्थोऽयं, प्रधानः प्रतिभासते। तृणादपि लघुं लोके, धिगर्थरहितं नरम् ॥१॥" इति, इयं च कामन्दकादिशास्त्ररूपा, एवं धर्मोपायकथा धर्म्मकथा, उक्तं च—"दयादानक्षमाद्येषु, धर्माङ्गेषु प्रतिष्ठिता। धर्म्मोपादेयतागर्भा, बुधैर्धर्म्मकथोच्यते ॥१॥" तथा—"धर्माख्यः पुरुपार्थोऽयं, प्रधान इति गीयते। पापसक्तं पशोस्तुल्यं, धिग्धर्मरहितं नरम् ॥२॥" इति, इयं चोत्तराध्ययनादिरूपाऽवसेयेति, एवं कामकथाऽपि, यदाह—"कामोपादानगर्भा च, वयोदाक्षिण्यसूचिका। अनुरागेङ्गितादुत्था, कथा कामस्य वर्णिता ॥१॥" तथा—"स्मितं न लक्षेण वचो न कोटिभिर्न कोटिलक्षैः सविलासमीक्षितम्। अवाप्यतेऽन्यैर्हृदयोपगूहनं, न कोटिकोट्याऽपि तदस्ति कामिनाम् ॥१॥" इति, इयमपि वात्स्यायनादिरूपाऽवसेयेति, प्रकीर्णा वा तत्तदर्था वचनपद्धतिः कथा चरित्रवर्णनरूपा वा, अर्थादिविनिश्चयाः—अर्थादिस्वरूपपरिज्ञानानि, तानि च—"अर्थानामर्जने दुःखमर्जितानां च रक्षणे। नाशे दुःखं व्यये दुःखं, धिगर्थं दुःखकारणम् ॥१॥" तथा—"धनदो धनार्थिनां धर्मः, कामदः सर्वकामिनाम्। धर्म एवापवर्गस्य, पारम्पर्येण साधकः ॥२॥" तथा—"शल्यं कामा विषं कामाः, कामा आशीविषोपमाः। कामानभिलषन्तोऽपि, निष्कामा यान्ति दुर्गतिम् ॥३॥" इत्यादीनि ॥

अनन्तरमर्थादिविनिश्चय उक्त इति तत्कारणफलपरम्परां त्रिस्थानकानवतारिणीमपि प्रसङ्गतो भगवत्प्रश्नद्वारेण निरूपयन्नाह—

तहारूवं णं भंते! समणं वा माहणं वा पज्जुवासमाणस्स किंफला पज्जुवासणता?, सवणफला, से णं भंते! सवणे किंफले?, णाणफले, से णं भंते! णाणे किंफले?, विण्णाणफले, एवमेतेणं अभिलावेणं इमा गाधा अणु-

गंतव्या—सवणे णाणे य विन्नाणे पच्चक्खाणे य संजमे। अणण्हते तवे चेव वोदाणे अकिरिय निव्वाणे ॥१॥ जाव से णं भंते! अकिरिया किंफला?, निव्वाणफला, से णं भंते! निव्वाणे किंफले?, सिद्धिगइगमणपज्जवसाणफले पन्नत्ते, समणाउसो! ॥ (सू० १९०) तृतीयस्य तृतीय उद्देशकः ॥

'तहारूवे' त्यादि पाठसिद्धं, केवलं पर्युपासना—सेवा, श्रवणं फलं यस्याः सा तथा, साधवो हि धर्म्मकथादिकं स्वाध्यायं कुर्वन्तीति श्रवणं तत्सेवायां भवतीति, ज्ञानं—श्रुतज्ञानं, विज्ञानम्—अर्थादीनां हेयोपादेयत्वविनिश्चयः, 'एव'मिति पूर्वोक्तेनाभिलापेन 'से णं भंते! विन्नाणे किंफले?, पच्चक्खाणफले'इत्यादिना, इयं गाथा अनुगन्तव्या—अनुसरणीया, एतद्गाथोक्तानि पदान्यध्येतव्यानीत्यर्थः, 'सवणे'इत्यादि, भावितार्था, नवरम् प्रत्याख्यानं—निवृत्तिद्वारेण प्रतिज्ञाकरणं संयमः—प्राणातिपाताद्यकरणम्, उक्तं च—"पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः। दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥१॥" इति, अनाश्रवो—नवकर्म्मानुपादानम्, अनाश्रवणाल्लघुकर्म्मत्वेन तपोऽनशनादिभेदं भवति, व्यवदानं—पूर्वकृतकर्म्मवनलवनं 'दाप् लवने' इति वचनात् कर्म्मकचवरशोधनं वा 'दैप् शोधने' इति वचनादिति, अक्रिया—योगनिरोधः, निर्वाणं—कर्मकृतविकाररहितत्वं सिद्ध्यन्ति—कृतार्था भवन्ति यस्यां सा सिद्धिः—लोकाग्रं सैव गम्यमानत्वाद् गतिस्तस्यां गमनं तदेव पर्यवसानफलं—सर्वान्तिमप्रयोजनं यस्य निर्वाणस्य तत्सिद्धिगतिगमनपर्यवसानफलं प्रज्ञप्तं मया अन्यैश्च केवलिभिः, हे श्रमणायुष्मन्निति गौतमादिकं शिष्यं भगवानामन्त्रयन्निदमुवाचेति।
त्रिस्थानकस्य तृतीयोद्देशको विवरणतः समाप्तः ॥

व्याख्यातः तृतीय उद्देशकः, अधुना चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः-पूर्वस्मिन् उद्देशके पुद्गलजीवधर्मास्तित्वेनोक्ता इहापि त एव तथैवोच्यन्त इत्यनेन सम्बन्धेनायातस्यास्येदमादिसूत्रपट्कं 'पडिमे'त्यादि, अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः-पूर्वसूत्रे श्रमणमाहनस्य पर्युपासनायाः फलपरम्परोक्ता इह तु तद्विशेषस्य कल्पविधिरुच्यत इत्येवंसम्बन्धितस्यास्य व्याख्या—

**पडिमापडिवन्नस्स अणगारस्स कप्पंति तओ उवस्सया पडिलेहित्तए, तं—अहे आगमणगिहंसि वा अहे वियडगिहंसि वा अहे रुक्खमूलगिहंसि वा, एवमणुन्नवित्तते, उवातिणित्तते, पडिमापडिवन्नस्स अणगारस्स कप्पंति तओ संथारगा पडिलेहित्तते, तं०—पुढविसिला कट्ठसिला अहासंथडमेव, एवं अणुण्णवित्तए उवाइणित्तए (सू०१९१)**

'प्रतिमां' मासिक्यादिकां भिक्षुप्रतिज्ञाविशेषलक्षणां प्रतिपन्नः-अभ्युपगतवान् यः स तथा तस्यानगारस्य 'कल्पन्ते' युज्यन्ते त्रय उपाश्रीयन्ते-भज्यन्ते शीतादित्राणार्थं ये ते उपाश्रयाः-वसतयः प्रत्युपेक्षितुम्-अवस्थानार्थं निरीक्षितुमिति, 'अहे'त्ति अथार्थः, अथशब्दश्चेह पदत्रयेऽपि त्रयाणामप्याश्रयाणां प्रतिमाप्रतिपन्नस्य साधोः कल्पनीयतया तुल्यताप्रतिपादनार्थो, वा विकल्पार्थः, पथिकादीनामागमनेनोपेतं तदर्थं वा गृहमागमनगृहं-सभाप्रपादि, यदाह—"[1]आगन्तु गारत्थजणो जहिं तु, संठाइ जं वाऽऽगमणंमि तेसिं। तं आगमो किं तु विदू वयंति, सभापवादेउलमाइयं च ॥१॥" इति, तस्मिन् उपाश्रयः-तदेकदेशभूतः प्रत्युपेक्षितुं कल्पत इति

१ गृहस्थजन आगत्य यत्र तु संतिष्ठते यद्वागमने तेषां। तदागन्तुकागारं विद्वांसो वदन्ति सभाप्रपादेवकुलादिकम् ॥१॥

प्रक्रम इति, तथा 'वियडं'त्ति विवृतम् अनावृतं, तच्च द्वेधा-अध ऊद्‌र्ध्वं च, तत्र पार्श्वत एकादिदिक्षु अनावृतमधोविवृतं अनाच्छादितममालगृहं चोद्‌र्ध्वविवृतं तदेव गृहं विवृतगृहम्, उक्तं च—"अवाउडं[1] जं तु चउदिसिंपि, दिसामहो तिन्नि दुवे य एक्का। अहे भवे तं वियडं गिहं तु, उड्ढं अमालं च अतिच्छदं च ॥१॥" त्ति, तस्मिन् वा, तथा वृक्षस्य-करीरादेर्निर्गलस्य मूलम्-अधोभागस्तदेव गृहं वृक्षमूलगृहं तस्मिन् वेति। प्रत्युपेक्षया चोपाश्रये शुद्धे गृहस्थं प्रति तदनुज्ञापनं भवतीत्यनुज्ञापनासूत्रम्-'एव'मिति, एतदेव 'पडिमापडिवन्ने' त्याद्युच्चारणीयं, नवरं प्रत्युपेक्षणास्थाने अनुज्ञापनं वाच्यमिति। अनुज्ञाते च गृहिणा तस्योपादानमित्युपादानसूत्रं, तदप्येवमेवेति, 'ओवाइणित्तए'त्ति उपादातुं ग्रहीतुं प्रवेष्टुमित्यर्थः, एवं संस्तारकसूत्रत्रयमपि, नवरं पृथिवीशिला उड्डगो [उवट्ठगो]त्ति यः प्रसिद्धः, काष्ठं चासौ शिलेवायतिविस्तराभ्यां शिला [सा] चेति काष्ठशिला 'यथासंस्तृतमेवे'ति यत्तृणादि यथोपभोगार्हं भवति तथैव यल्लभ्यत इति।

प्रतिमाश्च नियतकाला भवन्तीति कालं त्रिधाऽऽह—

**तिविहे काले पण्णत्ते तं०—तीए पडुप्पण्णे अणागए, तिविहे समए पं० तं०—तीते पडुप्पन्ने अणागए, एवं आवलिया आणापाणू थोवे लवे मुहुत्ते अहोरत्ते जाव वाससतसहस्से पुव्वंगे पुव्वे जाव ओसप्पिणी, तिविधे पोग्गलपरियट्टे पं० तं०—तीते पडुप्पन्ने अणागते। (सू० १९२) तिविहे वयणे पं० तं०—एगवयणे दुवयणे बहु-**

१ अप्रावृतं यत्तु चतसृषु दिक्षु अथवा तिसृषु दिक्षु द्वयोः पार्श्वयोरधश्च तदधोविवृतं अच्छादितममालं चोद्‌र्ध्वविवृतं ॥१॥

वयणे, अहवा तिविहे वयणे पं० तं०—इत्थिवयणे पुंवयणे नपुंसगवयणे, अहवा तिविहे वयणे पं० तं०—तीतवयणे पडुप्पन्नवयणे अणागयवयणे (सू० १९३)

अति—अतिशयेनेतो—गतोऽतीतः, पिधानवदकारलोपे तीतो, वर्त्तमानत्वमतिक्रान्त इत्यर्थः, साम्प्रतमुत्पन्नः प्रत्युत्पन्नो वर्त्तमान इत्यर्थः, न आगतोऽनागतो वर्त्तमानत्वमप्राप्तो, भविष्यन्नित्यर्थः, उक्तं च—"भवति स नामातीतः प्राप्तो यो नाम वर्त्तमानत्वम्। एष्यंश्च नाम स भवति यः प्राप्स्यति वर्त्तमानत्वम् ॥१॥" इति। कालसामान्यं त्रिधा विभज्य तद्विशेषांस्त्रिधा विभजयन्नाह—'तिविहे समये' इत्यादि कालसूत्राणि, समयादयो द्विस्थानकाद्योद्देशकवत् व्याख्येयाः, नवरं 'पोग्गलपरियट्टे'त्ति पुद्गलानां—रूपिद्रव्याणामाहारकवर्जितानां औदारिकादिप्रकारेण ग्रहणतः एकजीवापेक्षया परिवर्त्तनं—सामस्त्येन स्पर्शः पुद्गलपरिवर्त्तः, स च यावता कालेन भवति स कालोऽपि पुद्गलपरिवर्तः, स चानन्तोत्सर्पिण्यवसर्पिणीरूप इति, स चेत्थं भगवत्यामुक्तः—"[1]कतिविहे णं भंते! पोग्गलपरियट्टे पन्नत्ते ?, गोयमा! सत्तविहे पन्नत्ते, तंजहा—ओरालियपोग्गलपरियट्टे वेउव्वियपोग्गलपरियट्टे एवं तेयाकम्मामणवइआणापाणूपोग्गलपरियट्टे" तथा '[2]से केणट्ठेणं भंते! एवं वुच्चइ—ओरालियपोग्गलपरियट्टे २ ?, गोयमा! जेणं जीवेणं ओरालियसरीरे वट्टमाणेणं ओरालियसरीरपाउग्गाइं दव्वाइं ओरालियसरीरत्ताए गहियाइं जाव णिसट्ठाइं भवंति, से तेणऽट्ठेणं गोयमा! एवं वुच्चइ—ओरालिय-

---

१ कतिविधो भदन्त! पुद्गलपरावर्त्तः प्रज्ञप्तः ?, गौतम! सप्तविधः प्रज्ञप्तः, तद्यथा—औदारिकपुद्गलपरिवर्त्तः वैक्रियपुद्गलपरिवर्त्तः एवं तेजः-कर्ममनोवागानप्राणपुद्गलपरावर्त्तः ॥ २ अथ केनार्थेन भदन्त! एवमुच्यते औदारिकपुद्गलपरावर्त्तः २ ?, गौतम! येन जीवेन औदारिकशरीरे वर्तमानेनौदारिकप्रायोग्याणि द्रव्याणि औदारिकशरीरतया गृहीतानि यावन्निसृष्टानि भवन्ति, अथ तेनार्थेन गौतमैवमुच्यते औदारिकपुद्गलपरावर्तः २।

पोग्गलपरियट्टे ओ० २"। एवं शेषा अपि वाच्याः, तथा ओरालियपोग्गलपरियट्टे णं भंते! केवइकालस्स णिव्वट्टिज्जइ?, गोयमा! अणंताहिं उस्सप्पिणीओसप्पिणीहिं"ति, एवं शेषा अपीति, अन्यत्र त्वेवमुच्यते—"ओराल १ विउव्वा २ तेय ३ कम्म ४ भासा ५ऽऽणुपाणु ६ मणगेहिं ७। फासेवि सव्वपोग्गल मुक्का अह बायरपरट्टो ॥१॥ दव्वे सुहुमपरट्टो जाहे एगेण अह सरीरेणं। लोगंमि सव्वपोग्गल परिणामेऊण तो मुक्का ॥१॥" इति, द्रव्यपुद्गलपरिवर्त्तसदृशा येऽन्ये क्षेत्रकालभावपरिवर्त्तास्तेऽन्यतोऽवसेया इति। एते च समयादयः पुद्गलपरिवर्त्तान्ताः स्वरूपेण बहवोऽपि तत्सामान्यलक्षणमेकं अर्थमाश्रित्यैकवचनान्ततयोक्ताः भवन्ति चैकादिष्वर्थेष्वेकवचनादीनीत्येकवचनादिप्ररूपणायाह—'तिविहे'इत्यादि, एकोऽर्थ उच्यतेऽनेनोक्तिर्वेति वचनमेकस्यार्थस्य वचनमेकवचनमेवमितरे अपि, अत्र क्रमेणोदाहरणानि–देवो देवौ देवाः। वचनाधिकारे अहवेत्यादि सूत्रद्वयं सुबोधम्, उदाहरणानि तु स्त्रीवचनादीनां नदी नदः कुण्डं, तीतादीनां कृतवान् करोति करिष्यति।

वचनं हि जीवपर्यायस्तदधिकारात् तत्पर्यायान्तराणि त्रिस्थानकेऽवतारयन्नाह—

**तिविहा पन्नवणा पं० तं०—णाणपन्नवणा दंसणपन्नवणा चरित्तपन्नवणा १, तिविधे सम्मे पं० तं०—नाणसम्मे दंसणसम्मे चरित्तसम्मे २, तिविधे उवघाते पं० तं०—उग्गमोवघाते उप्पायणोवघाते एसणोवघाते ३,**

१ औदारिकपुद्गलपरावर्त्तः भदन्त! कियता कालेन निर्वर्त्यते?, गौतमानन्ताभिरुत्सर्पिण्यवसर्पिणीभिः ॥ २ औदारिकवैक्रियतेजःकर्मभाषानप्राणमनोभिः सर्वे पुद्गलाः संस्पृश्य मुक्ता अथासौ बादरपरिवर्त्तः ॥ द्रव्ये सूक्ष्मपरावर्त्तो यदैकेन शरीरेणाथ लोके सर्वेपुद्गलाः परिणमय्य मुक्ताः स्युस्तदा ॥१॥

एवं विसोही ४ (सू० १९४) तिविहा आराहणा पं० तं०—णाणाराहणा दंसणाराहणा चरित्ताराहणा ५, णाणाराहणा तिविहा पं० तं०—उक्कोसा मज्झिमा जहन्ना ६, एवं दंसणाराहणावि ७, चरित्ताराहणावि ८, तिविधे संकिलेसे पं० तं०—नाणसंकिलेसे दंसणसंकिलेसे चरित्तसंकिलेसे ९, एवं असंकिलेसेवि १०, एवमतिक्कमेऽवि ११, वइक्कमेऽवि १२, अइयारेऽवि १३, अणायारेवि १४। तिण्हमतिक्कमाणं आलोएज्जा पडिक्कमेज्जा निंदिज्जा गरहिज्जा जाव पडिवज्जिज्जा, तं०—णाणातिक्कमस्स दंसणातिक्कमस्स चरित्तातिक्कमस्स १५, एवं वइक्कमाणवि १६, अतिचाराणं १७, अणायाराणं १८ (सू० १९५) तिविधे पायच्छित्ते पं० तं०—आलोयणारिहे पडिक्कमणारिहे तदुभयारिहे १९ (सू० १९६)

'तिविहे'त्यादि सूत्राणामेकोनविंशतिः, स्पष्टा चेयं, परं प्रज्ञापना-भेदाद्यभिधानं, तत्र ज्ञानप्रज्ञापना-आभिनिबोधिकादि पञ्चधा ज्ञानम्, एवं दर्शनं क्षायिकादि त्रिधा, चारित्रं सामायिकादि पञ्चधेति, समञ्चतीति सम्यक्-अविपरीतं मोक्षसिद्धिं प्रतीत्यानुगुणमित्यर्थः, तत्र ज्ञानादीनि, उपहननमुपघातः, पिण्डशय्यादेरकल्प्यतेत्यर्थः, तत्र उद्गमनमुद्गमः पिण्डादेः प्रभव इत्यर्थः, तस्य चाधाकर्मादयः षोडश दोषाः, उक्तं च—"तत्थुग्गमो पसूई पभवो एमादि होंति एगट्ठा। सो पिंडस्सिह पगओ तस्स य दोसा इमे होंति ॥१॥ आहाकम्म १ देसिय २ पूइकम्मे य ३ मीसजाए य ४। ठवणा ५ पाहुडियाए ६ पाओयर ७ कीय ८ पामिच्चे ९ ॥२॥ परियट्टिए

१ तत्रोद्गमः प्रसूतिः प्रभव इत्यादीन्येकार्थानि भवन्ति स पिंडस्येह प्रकृतः तस्य च दोषा इमे भवन्ति ॥१॥ आधाकर्म औद्देशिकं पूतिकर्म च मिश्रजातश्च स्थापना प्राभृतिका प्रादुष्कृतं क्रीतं प्रामित्यं ॥२॥

१० अभिहडे ११ उब्भिन्ने १२ मालोहडे इय १३। अच्छेज्जे १४ अनिसट्ठे १५ अज्झोयरए य १६ सोलसमे ॥१॥" इति, इह चाभेदविवक्षया उद्गमदोषा एवोद्गमः अतस्तेनोद्गमेनोपघातः–पिण्डादेरकल्पनीयताकरणं चरणस्य वा शबलीकरणमुद्गमोपघातः, उद्गमस्य वा–पिण्डादिप्रसूतेरुपघातः–आधाकर्म्मत्वादिभिर्दुष्टता उद्गमोपघातः, एवमितरावपि, केवलमुत्पादना–संपादनं गृहस्थात्पिण्डादेरुपार्जनमित्यर्थः, तद्दोषा धात्रीत्वादयः षोडश, यदाह—"[1]उप्पायण संपायण णिव्वत्तणमो य होंति एगट्ठा। आहारस्सिह पगया तीय य दोसा इमे होंति ॥१॥ धाई १ दूइ २ निमित्ते ३ आजीव ४ वणीमगे ५ तिगिच्छा य ६। कोहे ७ माणे ८ माया ९ लोभे य १० हवंति दस एए ॥२॥ पुव्विं पच्छा संथव ११ विज्जा १२ मंते य १३ चुन्न १४ जोगे य १५। उप्पायणाय दोसा सोलसमे मूलकम्मे य ॥३॥" इति, तथा एषणा–गृहिणा दीयमानपिण्डादेर्ग्रहणं तद्दोषाः शङ्कितादयो दशेति, आह च—"[2]एसणगवेसणन्नेसणा य गहणं च होंति एगट्ठा। आहारस्सिह पगया तीय य दोसा इमे होंति ॥४॥ संकिय १ मक्खिय २ निक्खित्त ३ पिहिय ४ साहरिय ५ दायगु ६ म्मीसे ७। अपरिणय ८ लित्त ९ छड्डिय १० एसणदोसा दस हवंति ॥५॥" इह च 'सोलस उग्गमदोसा गिहि-

परिवर्त्तितः अभ्याहृतः उद्भिन्नः मालाहृतः आच्छेद्यः अनिसृष्टः अध्यवपूरकश्च षोडशः ॥१॥ १ उत्पादना सम्पादना निर्वर्त्तना च भवंति एकार्थानि आहारस्येह प्रकृता तस्यां च दोषा इमे भवन्ति ॥१॥ धात्री दूती निमित्तं आजीविका वनीपकः चिकित्सा च क्रोधः मानः माया लोभश्च भवन्ति दशैते ॥२॥ पूर्वं पश्चाद्वा संस्तवः विद्या मन्त्रश्च चूर्णयोगश्च। उत्पादनायां दोषाः षोडशो मूलकर्म च ॥२॥ २ एषणा गवेषणाऽन्वेषणा च ग्रहणं च भवन्त्येकार्थानि आहारस्येह प्रकृता तस्यां च दोषा इमे भवन्ति ॥३॥ शंकितः म्रक्षितः निक्षिप्तः पिहितः संहृतः दायक उन्मिश्रः। अपरिणतः लिप्तः छर्दितः एषणादोषा दश भवन्ति ॥४॥ षोडशोद्गमदोषान् गृहिणः समुत्थितान् विजानीहि ॥

याओ समुट्ठिए वियाणाहि। उप्पायणाय दोसा साहूओ समुट्ठिए जाण ॥१॥" एषणादोषास्तूभयसमुत्था इति, एवमुद्गमादिभिर्दोषैरविद्यमानतया वा विशुद्धिः-पिण्डचरणादीनां निर्दोषता सा उद्गमादिविशुद्धिरुद्गमादीनां वा विशुद्धिर्या सा तथेति, इदमेवातिदिशन्नाह—'एवं विसोही'। ज्ञानस्य-श्रुतस्याराधना-कालाध्ययनादिष्वष्टस्वाचारेषु प्रवृत्त्या निरतिचारपरिपालना ज्ञानाराधना, एवं दर्शनस्य निःशङ्कितादिषु चारित्रस्य समितिगुप्तिषु, सा चोत्कृष्टादिभेदा भावभेदात् कालभेदाद्वेति, ज्ञानादिप्रतिपतनलक्षणः संक्लिश्यमानपरिणामनिबन्धनो ज्ञानादिसंक्लेशः, ज्ञानादिशुद्धिलक्षणो विशुद्ध्यमानपरिणामहेतुकस्तदसंक्लेशः। 'एव'मिति, ज्ञानादिविषया एवातिक्रमादयश्चत्वारः, तत्राधाकर्माश्रित्य चतुर्णामपि निदर्शनम्—"आहाकम्मामंतण पडिसुणमाणे अइक्कमो होइ १। पयभेयादि वइक्कम २ गहिए तइउण्यरो गिलिए ॥१॥" इति, इत्थमेवोत्तरगुणरूपचारित्रस्य चत्वारोऽपि, एतदुद्देशेन ज्ञानदर्शनयोस्तदुपग्रहकारिद्रव्याणां च पुस्तकचैत्यादीनामुपघाताय मिथ्यादृशामुपबृंहणार्थं वा निमन्त्रणप्रतिश्रवणादिभिर्ज्ञानदर्शनातिक्रमादयोऽप्यायोज्या इति। 'तिण्हं अइक्कमाणं'ति षष्ठ्या द्वितीयार्थत्वात् त्रीनतिक्रमानालोचयेत्-गुरवे निवेदयेदित्यादि प्राग्वत्, नवरं यावत्करणात् 'विसोहेज्जा विउट्टेज्जा अकरणयाए अब्भुट्ठेज्जा आहारिहं तवोकम्मं पायच्छित्त'मित्यध्येतव्यमिति, पापच्छेदकत्वात् प्रायश्चित्तविशोधकत्वाद्वा प्राकृते पायच्छित्तमिति शुद्धिरुच्यते तद्विषयः शोधनीयातिचारोऽपि प्रायश्चित्तमिति, तच्च त्रिधा, दशविधत्वेऽपि तस्य त्रिस्थानकानुरोधादिति, तत्रालोचनमालोचना-गुरवे निवेदनं तां शुद्धिभूतामर्हति तथैव शुद्ध्यति यदतिचारजातं भिक्षाचर्यादि तदालोचनार्हमिति, एवं प्रति-

उत्पादनाया दोषान् साधोः समुत्थितान् जानीहि ॥१॥ १ आधाकर्मामंत्रणप्रतिश्रवणे अतिक्रमो भवति। पदभेदादौ व्यतिक्रमो गृहीते तृतीय इतरो गिलिते ॥१॥

क्रमणं–मिथ्यादुष्कृतं तदर्हं सहसा असमितत्वमगुप्तत्वं चेति, उभयम्–आलोचनाप्रतिक्रमणलक्षणमर्हति यत्तत्तथा, मनसा रागद्वेषगमनादि, सार्द्धगाथेह–"भिक्खायरियाइ सुज्झइ अइयारो कोवि वियडणाए ऊ। बीओ य असमिओमित्ति कीस सहसा अगुत्तो वा ? ॥१॥ सद्दाइएसु रागं दोसं च मणो गओ तइयगंसि"त्ति।

एते च प्रज्ञापनादयो धर्म्माः प्रायो मनुष्यक्षेत्र एव स्युरिति तद्वक्तव्यतामाह—

जंबूदीवे २ मंदरस्स पव्वयस्स दाहिणेणं ततो अकम्मभूमिओ पं० तं०—हेमवते हरिवासे देवकुरा, जंबूदीवे २ मंदरस्स पव्वयस्स उत्तरेणं तओ अकम्मभूमीओ पं० तं०—उत्तरकुरा रम्मगवासे एरण्णवए, जंबूमंदरस्स दाहिणेणं ततो वासा पं० तं०—भरहे हेमवए हरिवासे, जंबूमंदरस्स उत्तरेणं ततो वासा पं० तं०—रम्मगवासे हेरन्नवते एरवए, जंबूमंदरदाहिणेणं ततो वासहरपव्वता पं० तं०—चुल्लहिमवंते महाहिमवंते णिसढे, जंबूमंदरउत्तरेणं तओ वासहरपव्वता पं० तं०—णीलवंते रूप्पी सिहरी, जंबूमंदरदाहिणेणं तओ महादहा पं० तं०—पउमदहे महापउमदहे तिगिंछदहे, तत्थ णं ततो देवताओ महिड्डियातो जाव पलिओवमट्ठितीताओ परिवसंति, तं०—सिरी हिरी धिती, एवं उत्तरेणवि, णवरं—केसरिदहे महापोंडरीयदहे पोंडरियदहे, देवतातो कित्ती वुद्धी लच्छी, जंबूमंदरदाहिणेणं चुल्लहिमवंतातो वासधरपव्वतातो पउमदहाओ महादहातो ततो महाणतीओ

१ भिक्षाचर्यायां कोऽपि अतिचारः स विकटनया शुद्ध्यति। कथं सहसाऽसमितोऽगुप्तो वाऽस्मीति द्वितीयः ? ॥१॥ (प्रतिक्रमणं) शब्दादिकेषु मनो रागं द्वेषं वा गतं तृतीयं (मिश्रं)।

पवहंति, तं०—गंगा सिंधू रोहितंसा, जंबूमंदरउत्तरेणं सिहरीओ वासहरपव्वतातो पोंडरीयद्दहाओ महादहाओ तओ महानदीओ पवहंति तं०—सुवन्नकूला रत्ता रत्तवती, जंबूमंदरपुरच्छिमेणं सीताए महाणतीते उत्तरेणं ततो अंतरणतीतो पं० तं०—गाहावती दहवती पंकवती, जंबूमंदरपुरच्छिमेणं सीताते महाणतीते दाहिणेणं ततो अंतरणतीतो पं० तं०— तत्तजला मत्तजला उम्मत्तजला, जंबूमंदरपचत्थिमेणं सीओदाते महाणईए दाहिणेणं ततो अंतरणतीतो पं० तं०—खीरोदा सीतसोता अन्तोवाहिणी, जंबूमंदरपचत्थिमेणं सीतोदाए महाणदीए उत्तरेणं तओ अंतरणदीतो पं० तं०—उम्मिमालिणी फेणमालिणी गम्भीरमालिनी। एवं धायइसंडे दीवे पुरच्छिमद्धेवि अकम्मभूमीतो आढवेत्ता जाव अंतरनदीओत्ति णिरवसेसं भाणियव्वं, जाव पुक्खरवरदीवड्ढपचत्थिमद्धे तहेव निरवसेसं भाणियव्वं (सू० १९७)।

'जंबूद्दीवे'इत्यादि, इदं च प्रकरणं द्विस्थानकानुसारेण जम्बूद्वीपपटानुसारेण चावसेयमिति, नवरमन्तरनदीनां विष्कम्भः पञ्चविंशत्यधिकं योजनशतमिति।

अनन्तरं मनुष्यक्षेत्रलक्षणक्षितिखण्डवक्तव्यतोक्तेत्यधुना भङ्गयन्तरेण सामान्यपृथ्वीदेशवक्तव्यतामाह—

तिहिं ठाणेहिं देसे पुढवीए चलेज्जा, तं०—अधे णमिमीसे रयणप्पभाते पुढवीते उराला पोग्गला णिवतेज्जा, तते णं ते उराला पोग्गला णिवतमाणा देसं पुढवीए चलेज्जा १, महोरते वा महिड्ढीए जाव महेसक्खे इमीसे रयण-

प्पभाते पुढवीते अहे उम्मज्जणिमज्जियं करेमाणे देसं पुढवीते चलेज्जा २, णागसुवन्नाण वा संगामंसि वट्टमाणंसि देसं पुढवीते चलेज्जा ३, इच्चेतेहिं तिहिं० । तिहिं ठाणेहिं केवलकप्पा पुढवी चलेज्जा, तं०—अधे णं इमीसे रतणप्पभाते पुढवीते घणवाते गुप्पेज्जा, तए णं से घणवाते गुविते समाणे घणोदहिमेएज्जा, तए णं से घणोदही एइए समाणे केवलकप्पं पुढविं चालेज्जा, देवे वा महिड्ढिते जाव महेसक्खे तहारूवस्स समणस्स माहणस्स वा इड्ढिं जुतिं जसं बलं वीरितं पुरिसक्कारपरक्कमं उवदंसेमाणे केवलकप्पं पुढविं चालिज्जा, देवासुरसंगामंसि वा वट्टमाणंसि केवलकप्पा पुढवी चलेज्जा, इच्चेतेहिं तिहिं० । (सू० १९८)

'तिही'त्यादि स्पष्टं, केवलं देश इति भागः, पृथिव्याः–रत्नप्रभाभिधानाया इति, 'अहे'त्ति अधः 'ओरालि'त्ति उदारा–बादरा निपतेयुः–विस्रसापरिणामात् ततो विचटेयुरन्यतो वाऽऽगत्य तत्र लगेयुर्यन्त्रमुक्तमहोपलवत् , 'तए णं'ति ततस्ते निपतन्तो देशं पृथिव्याश्चलयेयुरिति पृथिवीदेशश्चलेदिति, महोरगो–व्यन्तरविशेषः, 'महिड्ढीए' परिवारादिना यावत्करणात् 'महज्जुइए' शरीरादिदीप्त्या 'महाबले' प्राणतः 'महाणुभागे' वैक्रियादिकरणतः 'महेसक्खे' महेश इत्याख्या यस्येति, उन्मग्ननिमग्निकाम्–उत्पतनिपतां कुतोऽपि दर्पादेः कारणात् कुर्वन् देशं पृथिव्याश्चलयेत्, स च चलेदिति, नागकुमाराणां सुपर्णकुमाराणां च भवनपतिविशेषाणां परस्परं संग्रामे वर्त्तमाने–जायमाने सति 'देसं'ति देशश्चलेदिति, 'इच्चेएहिं'ति निगमनमिति । पृथिव्या देशतश्चलनमुक्तम् , अधुना समस्तायास्तदाह—'तिही'त्यादि, स्पष्टं, किन्तु केवलैव केवलकल्पा, ईषदूनता चेह न विवक्ष्यते, अतः परिपूर्णेत्यर्थः परिपूर्णप्राया वेति, पृथिवी–भूः, 'अहे'त्ति अधो घनवातः–तथाविधपरिणामो वातविशेषो 'गुप्येत' व्याकुलो भवेत् क्षुभ्येदित्यर्थः ततः स गुप्तः सन् घनोदधिं–तथाविधपरिणा-

मजल्पमूहलक्षणमेजयेत्–कम्पयेत्, 'तए णं'ति ततोऽनन्तरं स घनोदधिरेजितः–कम्पितः सन् केवलकल्पां पृथिवीं चालयेत्, सा च चलेदिति, देवो वा ऋद्धिं–परिवारादिरूपां द्युतिं शरीरादेः यशः–पराक्रमकृतां ख्यातिं बलं–शारीरं वीर्यं–जीवप्रभवं पुरुषकारं–साभिमानं व्यवसायं निष्पन्नफलं तमेव पराक्रममिति, बलवीर्याद्युपदर्शनं हि पृथिव्यादिचलनं विना न भवतीति तद्दर्शयंस्तां चलयेदिति, देवाश्च–वैमानिका असुराः–भवनपतयस्तेषां भवप्रत्ययं वैरं भवति, अभिधीयते च भगवत्याम्—"किं पत्तियण्णं भंते! असुरकुमारा देवा सोहम्मं कप्पं गया य गमिस्संति य?, गोयमा! तेसि णं देवाणं भवपच्चइए वेराणुबंधे"त्ति, ततश्च संग्रामः स्यात्, तत्र वर्त्तमाने पृथिवी चलेत्, तत्र तेषां महाव्यायामत उत्पातनिपातसम्भवादिति, 'इच्चेएहिं' त्यादि निगमनमिति। देवासुराः संग्रामकारितयाऽनन्तरमुक्ताः, ते च दशविधाः 'इन्द्रसामानिकत्रायस्त्रिंशपार्षद्यात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकश' (तत्त्वा० अ० ४ सू० ४) इति वचनात्, तन्मध्यवर्त्तिनः त्रिस्थानकावतारित्वात् किल्बिषिकानभिधातुमाह—

तिविधा देवकिब्बिसिया पं० तं०—तिपलिओवमट्ठितीता १ तिसागरोवमट्ठितीता २ तेरससागरोवमट्ठितीया ३, कहि णं भंते! तिपलितोवमट्ठितीता देवकिब्बिसिया परिवसंति?, उप्पिं जोइसियाणं हिट्ठिं सोहम्मीसाणेसु कप्पेसु एत्थ णं तिपलिओवमट्ठितीया देवा किब्बिसिया परिवसंति १, कहि णं भंते! तिसागरोवमट्ठितीता देवा किब्बिसिया परिवसंति?, उप्पिं सोहम्मीसाणाणं कप्पाणं हेट्ठिं सणंकुमारमाहिंदे कप्पे एत्थ णं तिसागरोवमट्ठितीया देवकिब्बिसिया परिवसंति २, कहि णं भंते! तेरससागरोवमट्ठितीया देवकिब्बिसिता परिवसंति?, उप्पिं बंभलोगस्स कप्पस्स हिट्ठिं लंतगे कप्पे एत्थ णं तेरससागरोवमट्ठितीता देवकिब्बिसिया

परिवसंति ३ (सू०१९९)। सक्कस्स णं देविंदस्स देवरण्णो बाहिरपरिसाते देवाणं तिन्नि पलिओवमाइं ठिई पन्नत्ता, सक्कस्स णं देविंदस्स देवरन्नो अब्भिंतरपरिसाते देवीणं तिन्नि पलिओवमाइं ठिती पं०, ईसाणस्स णं देविंदस्स देवरन्नो बाहिरपरिसाते देवीणं तिन्नि पलिओवमाइं ठिती पं० (सू०२००)। तिविहे पायच्छित्ते पं० तं०—णाणपायच्छित्ते दंसणपायच्छित्ते चरित्तपायच्छित्ते, ततो अणुग्घातिमा पं० तं०—हत्थकम्मं करेमाणे मेहुणं सेवेमाणे राईभोयणं भुंजमाणे, तओ पारंचिता पं० तं०—दुट्ठपारंचिते पमत्तपारंचिते अन्नमन्नं करेमाणे पारंचिते, ततो अणवट्ठप्पा पं० तं०-साहंमियाणं तेणं करेमाणे अन्नधम्मियाणं तेणं करेमाणे हत्थातालं दलयमाणे (सू० २०१)।

तिविहे'त्यादि स्फुटं, केवलं, किब्बिसियत्ति—"[1]नाणस्स केवलीणं धम्मायरियस्स संघसाहूणं। माई अवन्नवाई किब्बिसियं भावणं कुणइ ॥१॥" त्ति एवंविधभावनोपात्तं किल्बिषं -पं उदये विद्यते येषां ते किल्बिषिका देवानां मध्ये किल्बिषिकाः-पापा अथवा देवाश्च ते किल्बिषिकाश्चेति देवकिल्बिषिकाः-मनुष्ये चण्डाला इवास्पृश्याः, 'उप्पिं' उपरि 'हिट्ठिं' अधस्तात् 'सोहम्मीसाणेसु' त्ति षष्ठ्यर्थे सप्तमी। देवाधिकारायातं 'सक्के'त्यादि सूत्रत्रयं सुगममिति। देवीनामनन्तरं स्थितिरुक्ता, देवीत्वं च पूर्वभवे सप्रायश्चित्तानुष्ठानाद्भवतीति प्रायश्चित्तस्य तद्वतां च प्ररूपणायाह—'तिविहे'त्यादि सूत्रचतुष्टयं सुगमं, केवलं 'नाणे'त्यादि, ज्ञानाद्यतिचारशुद्ध्यर्थं यदालोचनादि ज्ञानादीनां वा योऽतिचारस्तत् ज्ञानप्रायश्चित्तादि, तत्राकालाविनयाध्ययनादयोऽष्टावतिचारा ज्ञानस्य शङ्कितादयोऽष्टौ दर्शनस्य मूलगुणोत्तरगुणविराधनारूपा विचित्राः चारित्रस्येति। 'अणुग्घाइम'त्ति उद्घातो—भागपातस्तेन निर्वृत्तमुद्घातितं, लघ्व-

१ ज्ञानस्य केवलिनां धर्माचार्यस्य सङ्घसाधूना। अवर्णवादी मायी किल्बिषिकीं भावनां करोति ॥१॥

त्यर्थः, यत उक्तम्—"अद्धेण छिन्नसेसं पुव्वद्धेणं तु संजुयं काउं । देज्जाहि लहुयदाणं गुरुदाणं तत्तियं चेव ॥१॥" इति, भावना—मासोऽर्द्धेन छिन्नो जातानि पञ्चदश दिनानि, ततो मासापेक्षया पूर्वं तपः पञ्चविंशतितमं तदर्द्धं सार्द्धद्वादशकं तेन संयुतं मासार्द्धं, जातानि सप्तविंशतिर्दिनानि सार्द्धानीत्येवं कृत्वा यद् दीयते तल्लघुमासदानम्, एवमन्यान्यपि, एतन्निषेधादनुद्घातिमं तपो, गुर्विन्त्यर्थः, तद्योगात्साधवोऽपि वा तथोच्यन्ते, 'हत्थकम्मं' हस्तेन शुक्रपुद्गलनिघातनक्रिया आगमप्रसिद्धं तत्कुर्वन्, सप्तमी चेयं षष्ठ्यर्था. तेन कुर्वत इति व्याख्येयम्, एतेषां च हस्तकर्मादीनां यत्र विशेषे योऽनुद्घातिमविशेषो दीयते स कल्पादितोऽवसेयः, 'पारंचिय' त्ति पारं—तीरं तपसा अपराधस्याञ्चति—गच्छति ततो दीक्ष्यते यः स पाराञ्ची स एव पाराञ्चिकः तस्य यदनुष्ठानं तच्च पाराञ्चिकमिति दशमं प्रायश्चित्तं, लिङ्गक्षेत्रकालतपोभिर्बहिःकरणमिति भावः, इह च सूत्रे कल्पभाष्य इदमभिधीयते—"आसायण पडिसेवी दुविहो पारंचिओ समासेणं । एक्केक्कंमि य भयणा सचरित्ते चेव अचरित्ते ॥ १ ॥ सव्वचरित्तं भस्सइ केणवि पडिसेविएण उ पएणं । कत्थइ चिट्ठइ देसो परिणामवराहमासज्ज ॥२॥ तुल्लंमिवि अवराहे परिणामवसेण होइ नाणत्तं । कत्थइ परिणामंमिवि तुल्ले अवराहनाणत्तं ॥३॥" तत्र आशातकपाराञ्चिकः—'तित्थयरपवयणसुए आयरिए गणहरे

---

१ अर्धेन छिन्ने शेषं पूर्वतपोऽर्धेन संयुक्तं कृत्वा । लघुकदानं दद्याद् गुरुदानं तावदेव ॥१॥ २ समासेन पाराञ्चिको द्विविधः आशातनायां प्रतिसेवायां च । एकैकस्मिन् भजना च सचारित्रे अचारित्रे एव ॥१॥ ३ सर्वं चारित्रं भ्रश्यति केनापि प्रतिसेवितेन पदेन कुत्रचित्तिष्ठति देशः परिणामापराधावासाद्य ॥२॥ तुल्येऽप्यपराधे परिणामवशेन भवति नानात्वम्। कुत्रचित् परिणामे तुल्येऽपि अपराधनानात्वम् ॥३॥ ४ तीर्थकरप्रवचनश्रुतानि आचार्यान् गणधरान् महर्द्धिकान् । एतानाशातयति प्रायश्चित्ते मार्गगा भवति ॥१॥

महिड्डीए। एते आसायंते पच्छित्ते मग्गणा होइ ॥१॥" त्ति तत्र-"सव्वे आसायंते पावति पारंचियं ठाणं"ति, इह च सूत्रे प्रतिसेवकपाराञ्चिक एव त्रिविध उक्तः, तदुक्तम्—"पडिसेवणपारंची तिविहो सो होइ आणुपुव्वीए। दुट्ठे य पमत्ते या नायव्वो अन्नमन्ने य ॥१॥" तत्र दुष्टो-दोषवान् कषायतो विषयतश्च, पुनरेकैको द्वेधा, सपक्षविपक्षभेदात्, उक्तं च—"दुविहो य होइ दुट्ठो कसायदुट्ठो य विसयदुट्ठो य। दुविहो कसायदुट्ठो सपक्खपरपक्ख चउभंगो ॥१॥" तत्र स्वपक्षे कषायदुष्टो यथा सर्षपनालिकाभिधानशाकभर्जिकाग्रहणकुपितो मृताचार्यदन्तभञ्जकः साधुः, विषयदुष्टस्तु साध्वीकामुकः, तत्र चोक्तम्—"लिंगेण लिंगिणीए संपत्तिं जो णिगच्छई पावो। सव्वजिणाणऽज्जाओ संघो वाऽऽसाइतो तेणं ॥१॥ पावाणं पावयरो दिट्ठिप्फासेवि सो न कप्पति तु। जो जिणपुंगवमुद्दं नमिऊण तमेव धरिसेइ ॥२॥" त्ति, "संसारमणवयग्गं जाइजरामरणवेयणापउरं। पावमलपडलछन्ना भमंति मुद्दाधरिसणेणं ॥३॥" इति, परपक्षकषायदुष्टस्तु राजवधको द्वितीयो राजाग्रमहिष्यधिगन्तेति, उक्तं च—"जो य सलिंगे दुट्ठो कसाय विसएहिं रायवहगो य। रायग्गमहिसिपरिसेवओ य बहुसो पयासो य ॥१॥" प्रमत्तः-पञ्चमनिद्राप्रमादवान्, मांसाशिप्रव्रजितसाधुवदिति, अयं च सद्गुणो-

१ सर्वानाशातयन् प्राप्नोति पाराञ्चिकं स्थानम्। २ प्रतिषेवणापाराञ्चिकस्त्रिविधः स आनुपूर्व्या दुष्टश्च प्रमत्तश्च ज्ञातव्योऽन्योऽन्यश्च ॥१॥ ३ द्विविधश्च भवति दुष्टः कषायदुष्टश्च विषयदुष्टश्च। द्विविधः कषायदुष्टः स्वपक्षपरपक्षयोः चतुर्भङ्गः ॥१॥ ४ लिंगेन लिंगिन्याः संप्राप्तिं यो गच्छति पापः। सर्वजिनानामार्याः संघश्चाशातितस्तेन ॥ १ ॥ ५ पापानां पापतरो दृष्टिस्पर्शोऽपि कर्तुं तस्य नैव कल्पते यो जिनवरमुद्रां नत्वा तामेव धर्षयति ॥२॥ ६ संसारमनवदग्रं जन्ममरणजरावेदनाप्रचुरं। पापमलपटलच्छन्ना भ्राम्यन्ति मुद्राधर्षणेन ॥३॥ ७ यश्च स्वलिंगे कषायविषयैर्दुष्टः राजवधकश्च राजाग्रमहिषीपरिषेवकश्च बहुशः प्रकाशश्च ॥१॥

ऽपि त्याज्य इति, आह च—"अवि केवलमुप्पाडे णय लिंगं देइ अणइसेसी से। देसवयदंसणं वा गेण्ह अणिच्छे पलायंति ॥१॥" तथा, अन्योऽन्यं-परस्परं मुखपायुप्रयोगतो मैथुनं कुर्वन्, पुरुषयुगमिति शेषः, उच्यते च—"आसयपोसयसेवी केवि मणूसा दुवेयगा होंति। तेसिं लिंगविवेगो"त्ति, आसेवितातिचारविशेषः सन्ननाचरिततपोविशेषस्तद्दोषोपरतोऽपि महाव्रतेषु नावस्थाप्यते-नाधिक्रियते इत्यनवस्थाप्यः तदतिचारजातं तच्छुद्धिरपि वाऽनवस्थाप्यमुच्यत इति नवमं प्रायश्चित्तमिति, तत्र साधर्मिकाः-साधवस्तेषां सत्कस्योत्कृष्टोपधि(धेः)शिष्यादेर्वा बहुशो वा प्रद्विष्टचित्तो वा, 'तेणं'ति स्तेयं-चौर्यं कुर्वन्, तथा अन्यधार्म्मिकाः-शाक्यादयो गृहस्था वा तेषां सत्कस्योपध्यादेः स्तेयं कुर्वन्निति ण तथा हस्तेनाऽऽताडनं हस्ततालस्तं 'दलमाणे' ददत्, यष्टिमुष्टिलकुटादिभिर्म्मर्णादिनिरपेक्ष आत्मनः परस्य वा प्रहरन्निति भावः, उक्तं च—"उक्कोसं बहुसो वा पदुट्ठचित्तो व तेणियं कुणइ। पहरइ जो य सपक्खे निरवेक्खो घोरपरिणामो ॥१॥" अथवा अत्थायाणं दलमाणो'त्ति पाठस्तत्र अर्थादानं-द्रव्योपादानकारणमष्टाङ्गनिमित्तं तद्ददत् प्रयुञ्जान इत्यर्थः, अथवा 'हत्थालंबं दलमाणे'त्ति पाठः तत्र हस्तालम्ब इव हस्तालम्बस्तं हस्तालम्बं ददद्, अशिवपुररोधादौ तत्प्रशमनार्थमभिचारकमन्त्रविद्यादि प्रयुञ्जान इत्यर्थः।

पूर्वोक्तप्रायश्चित्तं प्रव्राजनादियुक्तस्य भवति, तानि चायोग्यनिरासेन योग्यानां विधेयानीति तदयोग्यान्निरूपयन् सूत्रषट्कमाह—

**तओ णो कप्पंति पव्वावेत्तए, तं०—पंडए वातिते कीवे १, एवं मुंडावित्तए २, सिक्खावित्तए ३, उवट्ठावि-**

१ अपि केवलमुत्पादयेन्न च लिंगं तस्यानतिशयी ददाति। देशव्रतं सम्यक्त्वं वा गृहाण अनिच्छति पलायन्ते॥१॥ २ आस्यपोष्यसेविनः केऽपि मनुष्याः द्विवेदा भवन्ति तेषां लिङ्गविवेकः॥ ३ उत्कृष्टं बहुशो वा प्रद्विष्टचित्तश्च स्तैन्यं करोति। प्रहरति यः स्वपक्षे निरपेक्षः घोरपरिणामः॥१॥

त्तए ४, संभुंजित्तते ५, संवासित्तते ६, (सू० २०२)

'तओ' इत्यादि कण्ठ्यं, किन्तु 'पण्डकं' नपुंसकं, तच्च लक्षणादिना विज्ञाय परिहर्त्तव्यं, लक्षणानि चास्य—"[1]महिलासहावो सरवन्नभेओ, मेंढं महंतं मउई य वाया। ससद्दगं मुत्तमफेणगं च, एयाणि छप्पंडगलक्खणाणि ॥१॥" त्ति, तथा वातोऽस्यास्तीति वातिकः, यदा स्वनिमित्ततोऽन्यथा वा मेहनं कषायितं भवति तदा न शक्नोति यो वेदं धारयितुं यावन्न प्रतिसेवा कृता स वातिक इति, अयं च निरुद्धवेदो नपुंसकतया परिणमति, क्वचित्तु 'वाहिय'त्ति पाठः, तत्र व्याधितो रोगीत्यर्थः, तथा क्लीबः—असमर्थः, स च चतुर्द्धा—दृष्टिक्लीबशब्दक्लीबादिग्धक्लीबनिमन्त्रणक्लीबभेदात्, तत्र यस्यानुरागतो विवस्त्राद्यवस्थं विपक्षं पश्यतो मेहनं गलति स दृष्टिक्लीबः, यस्य तु सुरतादिशब्दं शृण्वतः स द्वितीयो, यस्तु विपक्षेणावगूढो निमन्त्रितो वा व्रतं रक्षितुं न शक्नोति स आदिग्धक्लीबो निमन्त्रितक्लीबश्चेति, चतुर्विधोऽप्ययं निरोधे नपुंसकतया परिणमतीति, वातिकक्लीबयोस्तु परिज्ञानं तयोस्तन्मित्रादीनां वा कथनादेरिति, विस्तरश्चात्र कल्पादवसेयः, एते चोत्कटवेदतया व्रतपालनासहिष्णव इति न कल्पन्ते प्रव्राजयितुं, प्रव्राजकस्याप्याज्ञाभङ्गेन दोषप्रसङ्गादिति, उक्तं च—[2]जिणवयणे पडिकुट्ठं जो पव्वावेइ लोभदोसेणं। चरणट्ठिओ तवस्सी लोवेइ तमेव उ चरित्तं ॥१॥" इति, इह त्रयोऽप्रव्राज्या उक्ताः त्रिस्थानकानुरोधाद्, अन्यथा अन्येऽपि ते सन्ति, यदाह—"[3]बाले वुड्ढे नपुंसे य, जड्डे कीवे य वाहिए।

१ महिलास्वभावः स्वरवर्णभेदः मेहनं महन्मृद्वी च वाणी। सशब्दकं मूत्रमफेनं च एतानि षट् पंडकलक्षणानि ॥१॥ २ जिनवचने प्रतिकुष्टं यः प्रव्राजयति लोभदोषेण। चरणस्थितस्तपस्वी लोपयति तदेव चारित्रं ॥१॥ ३ बालो वृद्धो नपुंसक जडः क्लीबश्च व्याधितः। स्तेनो राजापकारी च उन्मत्तश्चादर्शनः ॥१॥

तेणे रायावगारी य, उम्मत्ते य अदंसणे ॥१॥ दासे दुट्ठे (य) मूढे (य), अणत्त जुंगिए इय। ओवद्धए य भयए, सेहनिप्फेडिया इय ॥२॥ गुव्विणी बालवच्छा य, पव्वावेउं न कप्पइ''त्ति, अदंसणो–अन्धः अणत्तो–ऋणपीडितः जुंगिओ–जात्यङ्गहीनः ओवद्धओ–विद्यादायकादिप्रतिजागरकः सेहणिप्फेडिआ–अपहृत इति, 'एव'मित्यादि, यथैते प्रव्राजयितुं न कल्पन्ते एवमेत एव कथञ्चिच्छलिनेन प्रव्राजिता अपि सन्तो मुण्डयितुं शिरोलोचेन न कल्पन्ते, उक्तं च—''पव्वाविओ सियत्ति, [यः स्यादित्यर्थः] मुंडावेउं अणायरणजोगो। अहवा मुंडाविन्ते दोसा अणिवारिया पुरिमा ॥१॥'' इति, एवं शिक्षयितुं–प्रत्युपेक्षणादिसमाचारीं ग्राहयितुं, तथा उपस्थापयितुं–महाव्रतेषु व्यवस्थापयितुं, तथा सम्भोक्तुम्–उपध्यादिना, एवमनाभोगात् संभुक्ताश्च संवासयितुम्–आत्मसमीपे आसयितुं न कल्पन्त इति प्रक्रम इति।

कथञ्चित् संवासिता अपि वाचनाया अयोग्याः–न वाचनीया इति, तानाह—

**तओ अवायणिज्जा पं० तं—अविणीए विगतीपडिबद्धे अविओसितपाहुडे, तओ कप्पंति वातित्तते, तं०—विणीए अविरानीपडिबद्धे विउसियपाहुडे। तओ दुसन्नप्पा पं० तं०–दुट्ठे मूढे वुग्गाहिते, तओ सुसन्नप्पा पं० तं०—अदुट्ठे अमूढे अवुग्गाहिते** (सू० २०३)

---

१ दासो दुष्टश्च मूढश्च ऋणार्तो जुंगित इति अवबद्धको भृतकः शिष्यनिष्फेटिकेति ॥२॥ गर्भिणी बालवत्सा च प्रव्राजयितुं न कल्पते॥ २ स्यात्प्रव्राजितः मुण्डयितुं अनाचरणयोग्यः अथवा मुंडिते पौरस्त्या दोषा अनिवारिताः ॥१॥

'तओ' इत्यादि सुगमं, नवरे न वाचनीयाः–सूत्रं न पाठनीयाः, अत एवार्थमप्यश्रावणीयाः, सूत्रादर्थस्य गुरुत्वात्, तत्राविनीतः सूत्रार्थदातुर्वन्दनादिविनयरहितः, तद्वाचने हि दोषः, यत उक्तम्—"इहरहवि ताव थब्भइ अविणीओ लंभिओ किमु सुएणं १। मा णट्ठो नासिहिई खए व खारोवसेगो उ ॥१॥ गोजूहस्स पडागा सयं पलायस्स वद्धइ य वेगं। दोसोदए य समणं न होइ न नियाणतुल्लं च ॥२॥" निदानतुल्यमेव भवतीत्यर्थः, "विणयाहीया विज्जा देइ फलं इह परे य लोयंमि। न फलंतऽविणयगहिया सस्साणिव तोयहीणाइं ॥३॥" इति, तथा विकृतिप्रतिबद्धो–घृतादिरसविशेषगृद्धः अनुपधानकारीति भावः, इहापि दोष एव, यदाह—"अतवो न होइ जोगो न य फलए इच्छियं फलं विज्जा। अवि फलति विउलमगुणं साहणहीणा जहा विज्जा ॥१॥" इति, अव्यवसितम्–अनुपशान्तं प्राभृतमिव प्राभृतं नरकपालकौशलिकं परमक्रोधो यस्य सोऽव्यवसितप्राभृतः, उक्तं च—"अप्पेवि पारमाणिं अवराहे वयइ खामियं तं च। बहुसो उदीरयंतो अविओसियपाहुडो स खलु ॥१॥" इति, 'पारमाणिं' परमक्रोधसमुद्घातं व्रजतीति भावः, एतस्य वाचने इहलोकतस्त्यागोऽस्य प्रेरणायां कलहनात् प्रान्तदेवताछलनाच्च, परलोकतोऽपि त्यागः, तत्र श्रुतस्य दत्तस्य निष्फलत्वात्, ऊषरक्षिप्तबीजवदिति, आह च—"दुविहो उ परिच्चाओ इह चोयण कलह १ देवयाछलणं २। परलोगंमि अ अफलं खित्तंपि व ऊसरे

१ इतरथाऽपि तावत् स्तभ्नाति अविनीतो लंभितः किं श्रुतेन मा नश्यन्नाशयिष्यति क्षते क्षारावसेकादिव ॥१॥ गोयूथस्य पताका स्वयं पलायमानस्य वर्द्धयति वेगं दोषोदये च शमनं न भवति न च निदानतुल्यं ॥२॥ २ विनयाधीता विद्या इह परस्मिश्च लोके ददाति फलं न फलन्त्यविनयगृहीताः शस्यानीव तोयहीनानि ॥१॥ ३ अतपो न भवति योगो न च फलतीच्छितं फलं विद्या। विपुलमगुणं साधनहीना फलति यथा विद्या ॥१॥ ४ अल्पेऽपि अपराधे क्रोधं व्रजति क्षामितं च बहुश उदीरयति सोऽव्युषितप्राभृतः खलु ॥१॥ ५ द्विविधस्तु परित्यागः इह चोदने कलहः

र्यं ॥१॥" इति, एतद्विपर्ययसूत्रं सुगमं। श्रुतदानस्यायोग्या उक्ताः, इदानीं सम्यक्त्वस्याप्ययोग्यानाह—'तओ' इत्यादि कण्ठ्यं, किन्तु दुःखेन-कृच्छ्रेण संज्ञाप्यन्ते-प्रज्ञाप्यन्ते बोध्यन्त इति दुःसंज्ञाप्याः, तत्र दुष्टो-द्विष्टः तत्त्वं प्रज्ञापकं वा प्रति, स चाप्रज्ञापनीयो, द्वेषेणोपदेशाप्रतिपत्तेः, एवं मूढो-गुणदोषानभिज्ञः, व्युद्ग्राहितः-कुप्रज्ञापकदृढीकृतविपर्यासः, सोऽप्युपदेशं न प्रतिपद्यते, उक्तं च "पुव्वं कुग्गाहिया केई, बाला पंडियमाणिणो। नेच्छंति कारणं सोउं, दीवजाए जहा णरे ॥१॥"इति, एतेषां स्वरूपं कल्पात् कथाकोशाद्वावसेयमिति। एतद्विपर्ययस्तान् सुसंज्ञाप्यतयाऽऽह—'तओ' इत्यादि, स्फुटमिति, उक्ताः प्रज्ञापनार्हाः पुरुषाः, अधुना तत्प्रज्ञापनीयवस्तूनि त्रिस्थानकावतारीण्याह –

तओ मंडलिया पव्वता पं० तं०—माणुसुत्तरे कुंडलवरे रुअगवरे (सू० २०४) ततो महतिमहालया पं० तं०—जंबुद्दीवे मंदरे मंदरेसु सयंभूरमणे समुद्दे समुद्देसु बंभलोए कप्पे कप्पेसु (सू० २०५)

'तओ मंडलिए' त्यादि, मण्डल-चक्रवालं तदस्ति येषां ते मण्डलिकाः-प्राकारवलयवदवस्थिता मानुषेभ्यो मानुषक्षेत्राद्वोत्तरः-परतोवर्ती मानुषोत्तर इति, तत्स्वरूपं चेदम्—"पुक्खरवरदीवड्ढं परिखिवइ माणुसुत्तरो सेलो। पायारसरिसरूवो विभयंतो माणुसं लोगं ॥१॥ सत्तरस एगवीसाइ जोयणसयाइ सो समुव्विद्धो। चत्तारि य तीसाइं मूले कोसं च ओगाढो ॥२॥ दस बावीसाइ अहे

देसाणाइं। पणोके चाऊं उवरि क्षेत्रे बीजगित ॥१॥ १ पूर्वं कुग्राहिताः केचिद्बालाः पंडितमानिनः। नेच्छन्ति कारणं श्रोतुं द्वीपजाता यथा नराः ॥१॥ (कुग्गाहियेति गाथावृत्तिः). २ पुष्करवरद्वीपार्द्धं परिक्षिपति मानुषोत्तरः शैलः प्राकारसदृशरूपः विभजन् मानुषं लोकं ॥१॥ एकविंश-

विच्छिन्नो होइ जोयणसयाइं। सत्त य तेवीसाइं विच्छिन्नो होइ मज्झंमि ॥३॥ चत्तारि य चउवीसे वित्थारो होइ उवरि सेलस्स। अड्ढाइज्जे दीवे दो य समुद्दे अणुपरीइ ॥४॥" इति। तथा—जंबूद्दीवो[1] धायइ[2] पुक्खरदीवो[3] य वारुणिवरो[4] य। खीरवरोऽवि य दीवो[5] घयवरदीवो[6] य खोयवरो ॥५॥ नंदीसरो[2] य अरुणो अरुणोवाओ य कुंडलवरो[11] य। तह संखे[12] रुयग[13] भुयवर[14] कुसे[15] कुंचवरो[16] तओ दीवो ॥६॥" इति क्रमापेक्षया एकादशे कुण्डलवराख्ये द्वीपे प्राकारकुण्डलाकृतिः कुण्डलवर इति, तद्रूपमिदम्—"कुंडलवरस्स[3] मज्झे णगुत्तमो होति कुण्डलो सेलो। पागारसरिसरूवो विभयंतो कुण्डलं दीवं ॥१॥ बायालीससहस्से उव्विद्धो कुण्डलो हवइ सेलो। एगं चेव सहस्सं धरणियलमहे समोगाढो ॥२॥ दस चेव जोयणसए बावीसे वित्थडो य मूलंमि। सत्तेव जोयणसए बावीसे वित्थडो मज्झे ॥३॥ चत्तारि जोयणसये चउवीसे वित्थडो उ सिहरतले"त्ति, तथा त्रयोदशे रुचकवराख्ये द्वीपे कुण्डलाकृती रुचक इति, एतस्य त्विदं स्वरूपं—"रुयगवरस्स[4] उ मज्झे नगुत्तमो होति पव्वओ रुअगो। पागारसरिसरूवो रुअगं दीवं विभयमाणो ॥१॥ रुयगस्स उ उस्सेहो

---

त्यधिकसप्तदशयोजनशतानि स समुच्चः त्रिदशाधिकचतुःशतानि कोशं चावगाढः ॥२॥ द्वाविंशत्यधिकदशयोजनशतानि अधो विस्तीर्णो भवति त्रयोविंशत्यधिकसप्तशतानि मध्ये विस्तीर्णो भवति ॥३॥ चतुर्विंशत्यधिकचतुःशतानि शैलस्योपरि विस्तारो भवति सार्द्धद्वयद्वीपान् द्वौ समुद्रावनुपर्येति ॥४॥
१ जंबूद्वीपो धातकी पुष्करद्वीपश्च वारुणीवरश्च क्षीरवरोऽपि च द्वीपो घृतवरद्वीपश्च क्षोदवरः ॥५॥ २ नंदीश्वरश्चारुणोऽरुणावपातश्च कुंडलवरश्च तथा शंखः रुचकः भुजवरः कुशः क्रौंचवरश्च तपो द्वीपः ॥६॥ ३ कुंडलवरस्य मध्ये नगोत्तमो भवति कुंडलः शैलः प्राकारसदृशरूपो विभजन् कुंडलं द्वीपं ॥१॥ द्विचत्वारिंशत्सहस्राण्युद्विद्धः कुंडलो भवति शैलः अधो धरणीतले एकमेव सहस्रं समवगाढः ॥२॥ दशयोजनशतानि द्वाविंशत्यधिकानि मूले विस्तृतो द्वाविंशत्यधिकसप्तयोजनशतानि मध्ये विस्तृतः ॥३॥ चतुर्विंशत्यधिकचतुर्योजनशतानि शिखरतले विस्तृतः ॥४॥ ४ रुचकवरस्य मध्ये नगोत्तमो भवति पर्वतो रुचकः प्राकारसदृशरूपः रुचकं द्वीपं विभजन् ॥१॥ रुचकस्योत्सेधः

चउरासीतिं भवे सहस्साइं। एगं चेव सहस्सं धरणियलमहे समोगाढो ॥२॥ दस चेव सहस्सा खलु बावीसा जोयणाण बोद्धव्वा। मूलंमि उ विक्खंभो साहीओ रुयगसेलस्स ॥३॥" तथा मध्यविस्तारोऽस्य सप्त सहस्राणि द्वाविंशत्यधिकानि, शिरोविस्तारस्तु चत्वारि सहस्राणि चतुर्विंशत्यधिकानीति। मानुषोत्तरादयो महान्त उक्ता इति महदधिकारादतिमहत आह—'तओ महई' त्यादि व्यक्तं, केवलमतिमहान्तश्च ते आलयाश्च—आश्रयाः अतिमहालया महान्तश्च तेऽतिमहालयाश्चेति महातिमहालयाः, अथवा लय इत्येतस्य स्वार्थिकत्वात् महातिमहान्त इत्यर्थः, द्विरुच्चारणं च महच्छब्दस्य मन्दरादीनां सर्वगुरुत्वख्यापनार्थम्, अव्युत्पन्नो वाऽयमतिमहदर्थे वर्त्तत इति, 'मंदरेसु'त्ति मेरूणां मध्ये जम्बूद्वीपकस्य सातिरेकलक्षयोजनप्रमाणत्वाच्छेषाणां चतुर्णां सातिरेकपञ्चाशीतियोजनसहस्रप्रमाणत्वादिति, स्वयम्भूरमणो महान् सुमेरोरारभ्य तस्य शेषसर्वद्वीपसमुद्रेभ्यः समधिकप्रमाणत्वात्, तेषां तस्य च क्रमेण किञ्चिन्न्यूनाधिकरज्जुपादप्रमाणत्वादिति, ब्रह्मलोकस्तु महान्, तत्प्रदेशे पञ्चरज्जुप्रमाणत्वात् लोकविस्तरस्य, तत्प्रमाणतया च विवक्षितत्वात् ब्रह्मलोकस्येति।

अनन्तरं ब्रह्मलोककल्प उक्त इति कल्पशब्दसाधर्म्यात् कल्पस्थितिं त्रिधाऽऽह—

**तिविधा कप्पठिती पं०, तं०—सामाइयकप्पठिती छेदोवट्ठावणियकप्पट्ठिती निव्विसमाणकप्पट्ठिती १, अहवा तिविहा कप्पट्ठिती पं० तं०—णिव्विट्ठकप्पट्ठिती जिणकप्पठिती थेरकप्पठिती ३ (सू० २०६)।**

---

चतुरशीतिर्भवेत् सहस्राणि धरणितले एकमेव सहस्रमधः समवगाढः ॥२॥ द्वाविंशत्यधिकदशसहस्रयोजनानि बोद्धव्यः मूले तु विष्कम्भः साधिकः रुचकशैलस्य ॥३॥

सूत्रद्वयं व्यक्तं, केवलं समानि–ज्ञानादीनि तेषामायो–लाभः समायः स एव सामायिकं–संयमविशेषस्तस्य तदेव वा कल्पः–करणमाचारः, यथोक्तम्—"सामर्थ्ये वर्णनायां च, करणे छेदने तथा। औपम्ये चाधिवासे च, कल्पशब्दं विदुर्बुधाः ॥१॥" इति सामायिककल्पः, स च प्रथमचरमतीर्थयोः साधूनामल्पकालः, छेदोपस्थापनीयस्य सद्भावात्, मध्यतीर्थेषु महाविदेहेषु च यावत्कथिकः, छेदोपस्थापनीयाभावात्, तदेवं तस्य तत्र वा स्थितिः–मर्यादा सामायिककल्पस्थितिः, सा च शय्यातरपिण्डपरिहारे चतुर्यामपालने पुरुषज्येष्ठत्वे बृहत्पर्यायस्येतरेण वन्दनकदाने च नियमलक्षणा शुक्लप्रमाणोपेतवस्त्रापेक्षया यदचेलत्वं तत्र १ तथा आधाकर्म्मिकभक्ताद्यग्रहणे २ राजपिण्डाग्रहणे २ प्रतिक्रमणकरणे ४ मासकल्पकरणे ५ पर्युषणकल्पकरणे ६ चानियमलक्षणा चेति, अत्रोक्तम्—"सिज्जायरपिंडे या १ चाउज्जामे य २ पुरिसजेट्ठे य २। किइकम्मस्स य करणे ४ चत्तारि अवट्ठिया कप्पा ॥१॥ आचेलु १ कुद्देसिय २ सपडिक्कमणे य ३ रायपिंडे य ४। मासं ५ पज्जोसवणा ६ छप्पेअणवट्ठिया कप्पा ॥२॥" तत्राचेलकत्वमेवम्—"दुविहो[३] होइ अचेलो असंतचेलो य संतचेलो य। तत्थ असंतेहिं जिणा संताऽचेला भवे सेसा ॥१॥ सीसावेढियपोत्तं नइउत्तरणंमि नग्गयं बेंति। जुन्नेहिं नग्गियम्हि तुर सालिय! देहि मे पोत्तिं ॥२॥ जुन्नेहिं खंडिएहिं असव्वतणुयाउएहिं ण य णिच्चं। संतेहिवि णिग्गंथा अचेलया होंति चेलेहिं ॥३॥" इत्यादि, तथा पूर्वपर्य्यायच्छेदेनोपस्थापनीयम्–आरोपणीयं छेदोपस्थापनीयं, व्यक्तितो महाव्रतारोपणमि-

१ शय्यातरपिंडश्च चतुर्यामश्च पुरुषज्येष्ठश्च कृतिकर्मणश्च करणे चत्वारोऽवस्थिताः कल्पाः ॥१॥ आचेलक्यमौद्देशिकं सप्रतिक्रमणश्च राजपिंडश्च मासः पर्युषणा षडप्येतेऽनवस्थिताः कल्पाः ॥२॥ २ द्विविधो भवत्यचेलोऽसच्चेलश्च सच्चेलश्च तत्रासत्सु जिना अचेलाः शेषाः सत्स्वपि चेलेषु ॥१॥ शीर्षवेष्टितपोतं नद्युत्तरणे नग्नं ब्रुवन्ति जीर्णेषु नग्नोऽस्मि शालिक! त्वर मे पोतं देहि ॥२॥ जीर्णेषु खंडितेषु असर्वतनुप्रावृतेषु नच नित्यं चेलेषु

त्यर्थः, तत्र प्रथमपश्चिमतीर्थयोरेवेति, शेषा व्युत्पत्तिस्तथैव, ततिस्थतिश्चोक्तलक्षणेष्वेव दशसु स्थानकेष्ववश्यंपालनलक्षणेति, तथाहि—"[1]दसठाणठिओ कप्पो पुरिमस्स य पच्छिमस्स जिणस्स। एसो धुयरय कप्पो दसठाणपइट्ठिओ होइ ॥१॥ इति "[2]अंचेल १ कुद्देसिय २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५। वय ६ जेट्ठ ७ पडिकमणे ८ मासं ९ पज्जोसवणकप्पे १० ॥२॥" इति, निर्विशमाना ये परिहारविशुद्धितपोऽनुचरन्ति परिहारिका इत्यर्थः, तेषां कल्पे स्थितिर्यथा—ग्रीष्मशीतवर्षाकालेषु क्रमेण तपो जघन्यं चतुर्थषष्ठाष्टमानि मध्यमं षष्ठादीनि उत्कृष्टमष्टमादीनीति, पारणं चायाममेव, पिण्डैषणासप्तके चाद्ययोरभिग्रह एव, पञ्चसु पुनरेकया भक्तमेकया च पानकमित्येवं द्वयोरभिग्रह इति, उक्तं च—"[3]बारस १ दस २ अट्ठ ३ दस १ इट्ठ २ छट्ठ ३ अट्ठेव १ छट्ठ २ चउरो य २। उक्कोसमज्झिमजहन्नगा उ वासासिसिरगिम्हे ॥१॥ पारणगे आयामं पंचसु गहो दोसऽभिग्गहो भिक्खे"ति, निर्विष्टा—आसेवितविवक्षितचारित्रा अनुपरिहारिका इत्यर्थः, तत्कल्पस्थितिर्यथा प्रतिदिनमायाममात्रं तपो भिक्षा तथैवेति, उक्तं च—"[4]कप्पट्ठियावि पइदिणं करेंति एमेव चायामं"ति, एते च निर्विशमानका निर्विष्टाश्च परिहारविशुद्धिका उच्यन्ते, तेषां च नवको गणो भवति, ते च एवंविधाः—"[5]सव्वे चरित्तवंतो उ, दंसणे परिनिट्ठिया। नवपुव्विया जहन्नेणं, उक्कोसा दसपुव्विया ॥१॥ पंचविहे ववहारे, कप्पंमि दुविहंमि य

---

मन्त्यपि निर्ग्रन्था अचेलका भवन्ति ॥३॥ १ दशस्थानस्थितः कल्पः पूर्वस्य पश्चिमस्य च जिनस्य एष धूतरजाः कल्पः दशस्थानप्रतिष्ठितो भवति ॥१॥ २ आचेलक्यमौद्देशिकं शय्यातरपिंडः राजपिंडः कृतिकर्म व्रतानि ज्येष्ठः प्रतिक्रमणं मासः पर्युषणाकल्पः ॥१॥ ३ द्वादशमं दशमं अष्टमं षष्ठं। अष्टमं षष्ठं चतुर्थं चोत्कृष्टमध्यमजघन्यतो वर्षाशिशिरग्रीष्मेषु ॥१॥ पारणके आचाम्लं पंचसु ग्रहो द्वयोरभिग्रहो भिक्षायां ॥ ४ कल्पस्थिता अपि प्रतिदिनमेवमेवाचाम्लं कुर्वन्ति ॥४॥ ५ सर्वे चारित्रवन्त एव दर्शने परिनिष्ठिताः जघन्येन नवपूर्विण उत्कृष्टतो दशपूर्विणः ॥१॥

दसविहे य पच्छित्ते, सव्वे ते परिनिट्ठिया ॥२॥ इत्यादि, जिना-गच्छनिर्गतसाधुविशेषास्तेषां कल्पस्थितिर्जिनकल्पस्थितिः, सा चैवम्-जिनकल्पं हि प्रतिपद्यते जघन्यतोऽपि नवमपूर्वस्य तृतीयवस्तुनि सति उत्कृष्टतस्तु दशसु भिन्नेषु प्रथमे संहनने, दिव्याद्युपसर्गरोगवेदनाश्चासौ सहते, एकाक्येव भवति, दशगुणोपेतस्थण्डिल एवोच्चारादि जीर्णवस्त्राणि च त्यजति, वसतिः सर्वोपाधिविशुद्धास्य, भिक्षाचर्या तृतीयपौरुष्यां, पिण्डैषणोत्तरासां पञ्चानामेकतरैव, विहारो मासकल्पेन, तस्यामेव वीथ्यां षष्ठदिने भिक्षाटनमिति, एवंप्रकारा चेयं 'सुयसंघयणे'त्यादिकाद् गाथासमूहात् कल्पोक्तादवगन्तव्येति, भणितं च—"गच्छंमि य निम्माया धीरा जाहे य गहियपरमत्था । अग्गहि जोग अभिग्गहि, उवेंति जिणकप्पियचरित्तं ॥१॥" अग्रहे आद्ययोरभिग्रहे-पञ्चानां पिण्डैषणानां द्वयोर्योगे-द्वयोर्मध्ये एकतरस्या गृहीतपरमार्थाः, "धिइबलिया तवसूरा निंती गच्छाउ ते पुरिससीहा । बलवीरियसंघयणा उवसग्गसहा अभीरुया ॥१॥" इति, स्थविराः-आचार्यादयो गच्छप्रतिबद्धास्तेषां कल्पस्थितिः स्थविरकल्पस्थितिः, सा च "पव्वज्जा सिक्खावयमत्थगहणं च अनियओ वासो । निप्फत्ती य विहारो सामायारी ठिई चेव ॥१॥" इत्यादिकेति, इह च सामायिके सति छेदोपस्थापनीयं तत्र च परिहारविशुद्धिकभेदरूपं निर्विशमानकं तदनन्तरं निर्विष्टकायिकं तदनन्तरं जिनकल्पः स्थविरकल्पो वा भवतीति सामायिककल्पस्थित्यादिकः सूत्रयोः क्रमोपन्यास इति ।

---

पंचविधे व्यवहारे द्विविधे कल्पे च दशविधे च प्रायश्चित्ते सर्वे एते परिनिष्ठिताः ॥२॥ १ गच्छे च निर्माता धीरा यदा गृहीतपरमार्थाः अग्राह्याभिग्रहयोगे चोपयन्ति जिनकल्पिकचरित्रं ॥१॥ २ धृतिबलिकाः तपःशूरास्ते पुरुषसिंहा गच्छान्निर्गच्छन्ति बलवीर्यसंहननयुता उपसर्गसहा अभीरवः ॥१॥ ३ प्रव्रज्या-शिक्षा व्रतानि अर्थग्रहणं चानियतो वासः- शिष्याणां निष्पत्तिश्च विहारः सामाचारी-स्थितिश्च ॥१॥

उक्तकल्पस्थितिव्यतिक्रामिणो नारकादिशरीरिणो भवन्तीति तच्छरीरनिरूपणायाह—

नेरइयाणं तनो सरीरगा पं० तं०—वेउव्विते तेयए कम्मए, असुरकुमाराणं तनो सरीरगा पं० तं०—एवं चेव, एवं सव्वेसिं देवाणं, पुढविकाइयाणं ततो सरीरगा पं० तं०—ओरालिते तेयए कम्मते, एवं वाउकाइयवज्जाणं जाव चउरिंदियाणं (सू०२०७)। गुरुं पडुच ततो पडिणीता पं० तं०—आयरियपडिणीते उवज्झायपडिणीते थेरपडिणीते १, गतिं पडुच ततो पडिणीया पं० तं०—इहलोगपडिणीए परलोगपडिणीए दुहओ लोगपडिणीए २, समूहं पडुच ततो पडिणीता पं० तं०—कुलपडिणीए गणपडिणीए संघपडिणीते ३, अणुकंपं पडुच ततो पडिणीया पं० तं०—तवस्सिपडिणीए गिलाणपडिणीए सेहपडिणीए ४, भावं पडुच ततो पडिणीता पं० तं०—णाणपडिणीए दंसणपडिणीए चरित्तपडिणीए ५, सुयं पडुच ततो पडिणीता पं० तं०—सुत्तपडिणीते अत्थपडिणीते तदुभयपडिणीए ६ (सू० २०८)।

'नेरइयाण'मित्यादि, दण्डकः कण्ठ्यः, किन्तु 'एवं सव्वदेवाणं'ति यथा असुराणां त्रीणि शरीराणि एवं नागकुमारादिभवनपतिव्यन्तरज्योतिष्कवैमानिकानाम्, एवं 'वाउकाइयवज्जाणं'ति, वायूनां हि आहारकवर्जानि चत्वारि शरीराणीति तद्वर्जनमेवं पञ्चेन्द्रियतिरश्चामपि चत्वारि मनुष्याणां तु पञ्चापीति ते इह न दर्शिताः। कल्पस्थितिव्यतिक्रामिणश्च प्रत्यनीका अपि भवन्तीति तानाह—'गुरु'मित्यादि सूत्राणि षड् व्यक्तानि, किन्तु गृणाति—अभिधत्ते तत्त्वमिति गुरुस्तं प्रतीत्य—आश्रित्य प्रत्यनीकाः—प्रतिकूलाः,

स्थविरो जात्यादिभिः, एतत्प्रत्यनीकता चैवम्—"[1]जच्चाईहि अवन्नं विभासइ वट्टइ नयावि उववाए। अहिओ छिद्दप्पेही पगासवादी अणणुलोमो ॥१॥" अहवावि वए एवं उवएसं परस्स देंति एवं तु। दसविहवेयावच्चे कायव्वं सयं न कुव्वंति ॥२॥" इति, गतिः—मानुषत्वादिका तत्रेहलोकस्य—प्रत्यक्षस्य मानुषत्वलक्षणपर्यायस्य प्रत्यनीक इन्द्रियार्थप्रतिकूलकारित्वात् पञ्चाग्नितपस्विवदिहलोकप्रत्यनीकः, परलोको—जन्मान्तरं तत्प्रत्यनीकः इन्द्रियार्थतत्परो, द्विधालोकप्रत्यनीकश्चौर्यादिभिरिन्द्रियार्थसाधनपरः, यद्वा इहलोकप्रत्यनीक इहलोकोपकारिणां भोगसाधनादीनामुपद्रवकारीहलोकप्रत्यनीकः, एवं ज्ञानादीनामुपद्रवकारी परलोकप्रत्यनीकः, उभयेषां तु द्विधालोकप्रत्यनीक इति, अथवेहलोको—मनुष्यलोकः परलोको—नारकादिरुभयमेतदेव द्वितयं, प्रत्यनीकता तु तद्वितथप्ररूपणेति, कुलं चान्द्रादिकं तत्समूहो गणः कोटिकादिस्तत्समूहः सङ्घ इति, प्रत्यनीकता चैतेषां अवर्णवादादिभिरिति, कुलादिलक्षणं चेदम्—'[2]एत्थ कुलं विन्नेयं एगायरियस्स संतई जा उ। तिण्ह कुलाण मिहो पुण सावेक्खाणं गणो होइ ॥१॥ सव्वोऽवि नाणदंसणचरणगुणविभूसियाण समणाणं। समुदायो पुण सङ्घो गुणसमुदाओत्तिकाऊणं ॥२॥' अनुकम्पाम्—उपष्टम्भं प्रतीत्य—आश्रित्य तपस्वी—क्षपकः, ग्लानो—रोगादिभिरसमर्थः, शैक्षः—अभिनवप्रव्रजितः, एते ह्यनुकम्पनीया भवन्ति, तदकरणाकारणाभ्यां च प्रत्यनीकतेति, भावः—पर्यायः, स च जीवाजीवगतः, तत्र जीवस्य प्रशस्तोऽप्रशस्तश्च, तत्र प्रशस्तः क्षायिकादिः, अप्रशस्तो विवक्षयौदयिकः, क्षायिकादिश्च ज्ञानादिरूपः,

---

१ जात्यादिभिरवर्णं विभाषते नोपपातेऽपि वर्त्तते अहितः छिद्रप्रेक्षी प्रकटवादी अननुलोमः ॥१॥ अथवाऽपि वदेदेवं परस्योपदेशं ददति एवमेव दशविधं वैयावृत्त्यं कर्त्तव्यं परं स्वयं न कुर्वन्ति ॥२॥ २ अत्र कुलं विज्ञेयमेकाचार्यस्य या तु संततिः। त्रयाणां कुलानां मिथः सापेक्षाणां गणो भवति ॥१॥ सर्वोऽपि ज्ञानदर्शनचरणगुणविभूषितानां श्रमणानां। समुदायः पुनः संघः गुणसमुदाय इतिकृत्वा ॥२॥

तनो भावं-ज्ञानादि प्रतीत्य प्रत्यनीकस्तेषां वितथप्ररूपणतो दूषणतो वा, यथा-"पाययसुत्तनिबद्धं को वा जाणइ पणीय केणेयं ?। किं वा चरणेणं तु दाणेण विणा उ किं हवइ ॥१॥" इति, सूत्रं-व्याख्येयमर्थः-तद् व्याख्यानं निर्युक्त्यादिस्तदुभयं-द्वितयमिति तत्प्रत्यनीकता-"कांया वया य ते चिय ते चेव पमाय अप्पमाया य। मोक्खाहिगारियाणं जोइसजोणीहि किं कज्जं ?॥१॥" इत्यादिदूषणोद्भावनमिति।

उक्ता कल्पस्थितिर्गर्भजमनुजानामेव तच्छरीरं च मातापितृहेतुकमिति तयोस्तदङ्गेषु हेतुत्वे विभागमाह—

**ततो पितियंगा पं० तं०—अट्ठी अट्ठिमिंजा केसमंसुरोमनहे। तओ माउयंगा पं० तं०—मंसे सोणिते मत्थुलिंगे (सू० २०९)**

सूत्रद्वयं कण्ठ्यं, केवलं पितुः-जनकस्याङ्गानि-अवयवाः पित्रङ्गानि प्रायः शुक्रपरिणतिरूपाणीत्यर्थः, अस्थि प्रतीतं १ अस्थिमिंजा-अस्थिमध्यरसः २ केशाश्च-शिरोजाः श्मश्रु च-कूर्चः रोमाणि च-कक्षादिजातानि नखाश्च-प्रतीताः केशश्मश्रुरोमनखमित्येकमेव प्रायः समानत्वादिति। मात्रङ्गानि आर्त्तवपरिणतिप्रायाणीत्यर्थः, मांसं प्रतितं, शोणितं-रक्तं, मस्तुलिङ्ग-शेषं मेदःफिप्फिसादि, कपालमध्यवर्ति भेज्जकमित्येके।

---

१ प्राकृतभाषानिबद्धमेतच्छ्रुतं को वा जानाति केनेदं प्रणीतं ?। किंवा दानेन विना चारित्रेण भवति इति ॥१॥ २ काया व्रतानि च तान्येव प्रमादा अप्रमादाश्च त एव। मोक्षाधिकारिणां ज्योतिर्योनिभिः किं कार्यम् ॥२॥

पूर्वोक्तस्थविरकल्पस्थितिप्रतिपन्नस्य विशिष्टनिर्ज्जराकारणान्यभिधातुमाह—

तिहिं ठाणेहिं समणे णिग्गंथे महानिज्जरे महापज्जवसाणे भवति, तं०—कया णं अहं अप्पं वा बहुयं वा सुयं अहिज्जिस्सामि, कया णमहमेकल्लविहारपडिमं उवसंपज्जित्ता णं विहरिस्सामि, कया णमहमपच्छिममारणंतितसंलेहणाझूसणाझूसिते भत्तपाणपडियाइक्खिते पाओवगते कालं अणवकंखमाणे विहरिस्सामि, एवं स मणसा स वयसा स कायसा पागडेमाणे (पहारेमाणे) निग्गंथे महानिज्जरे महापज्जवसाणे भवति। तिहिं ठाणेहिं समणोवासते महानिज्जरे महापज्जवसाणे भवति, तं०—कया णमहमप्पं वा बहुयं वा परिग्गहं परिचइस्सामि १ कया णं अहं मुंडे भवित्ता आगारातो अणगारितं पव्वइस्सामि २ कया णं अहं अपच्छिममारणंतियसंलेहणाझूसणाझूसिते भत्तपाणपडियातिक्खिते पाओवगते कालं अणवकंखमाणे विहरिस्सामि ३, एवं स मणसा स वयसा स कायसा पागडेमाणे [जागरमाणे] समणोवासते महानिज्जरे महापज्जवसाणे भवति (सू० २१०)

'तिही'त्यादि सुगमं, नवरं महती निर्जरा–कर्म्मक्षपणा यस्य स तथा महत्–प्रशस्तमात्यन्तिकं वा पर्यवसानं–पर्यन्तं समाधिमरणतोऽपुनर्मरणतो वा जीवितस्य यस्य स तथा, अत्यन्तं शुभाशयत्वादिति, 'एवं समणस' त्ति एवमुक्तलक्षणं त्रयं, स इति–साधुः 'मणस'त्ति मनसा ह्रस्वत्वं प्राकृतत्वात्, एवं स वयसत्ति वचसा स 'कायस'त्ति कायेनेत्यर्थः, सकारागमः प्राकृतत्वादेव, त्रिभिरपि करणैरित्यर्थः, अथवा स्वमनसेत्यादि, प्रधारयन्–पर्यालोचयन् क्वचित्तु पागडेमाणेत्ति पाठस्तत्र प्रकटयन् व्यक्तीकुर्वन्नि-

त्यर्थः। यथा श्रमणस्य तथा श्रमणोपासकस्यापि त्रीणि निर्ज्जरादिकारणानीति दर्शयन्नाह—'तिही'त्यादि, कण्ठ्यं।

अनन्तरं कर्म्मनिर्ज्जरोक्ता, सा च पुद्गलपरिणामविशेषरूपेति पुद्गलपरिणामविशेषमभिधातुमाह—

तिविहे पोग्गलपडिघाते, पं० तं—परमाणुपोग्गले परमाणुपोग्गलं पप्प पडिहन्निज्जा लुक्खत्ताते वा पडिहन्निज्जा लोगंते वा पडिहन्निज्जा (सू० २११)। तिविहे चक्खू पं० तं०—एगचक्खू बिचक्खू तिचक्खू, छउमत्थे णं मणुस्से एगचक्खू देवे बिचक्खू तहारूवे समणे वा माहणे वा उप्पन्ननाणदंसणधरे से णं तिचक्खूत्ति वत्तव्वं सिया (सू० २१२)। तिविधे अभिसमागमे पं० तं०—उड्ढं अहं तिरियं, जया णं तहारूवस्स समणस्स वा माहणस्स वा अतिसेसे नाणदंसणे समुप्पज्जति से णं तप्पढमताते उड्ढमभिसमेति ततो तिरितं ततो पच्छा अहे, अहोलोगे णं दुरभिगमे पन्नत्ते समणाउसो! (सू० २१३)।

'तिविहे'इत्यादि, पुद्गलानाम्—अण्वादीनां प्रतिघातो—गतिस्खलनं पुद्गलप्रतिघातः, परमाणुश्चासौ पुद्गलश्च परमाणुपुद्गलः स तदन्तरं प्राप्य प्रतिहन्येत—गतेः प्रतिघातमापद्येत, रूक्षतया वा तथाविधपरिणामान्तरात् गतितः प्रतिहन्येत, लोकान्ते वा, परतो धर्म्मास्तिकायाभावादिति। पुद्गलप्रतिघातं च सचक्षुरेव जानातीति तन्निरूपणायाह—'तिविहे'इत्यादि प्रायः, कण्ठ्यं, चक्षुः—लोचनं तद् द्रव्यतोऽक्षि भावतो ज्ञानं तद्यस्यास्ति स तद्योगाच्चक्षुरेव, चक्षुष्मानित्यर्थः, स च त्रिविधः—चक्षुःसङ्ख्याभेदात्, तत्रैकं चक्षुरस्येत्येकचक्षुरेवमितरावपि, छादयतीति छद्म—ज्ञानावरणादि तत्र तिष्ठतीति छद्मस्थः, स च यद्यप्यनुत्पन्नकेवलज्ञानः सर्व एवोच्यते तथापी-

हातिशयवत्श्रुतज्ञानादिवर्जितो विवक्षित इति एकचक्षुः चक्षुरिन्द्रियापेक्षया, देवो द्विचक्षुः चक्षुरिन्द्रियावधिभ्याम्, उत्पन्नमावरणक्षयोपशमेन ज्ञानं च श्रुतावधिरूपं दर्शनं च-अवधिदर्शनरूपं यो धारयति-वहति स तथा य एवंभूतः स त्रिचक्षुः, चक्षुरिन्द्रियपरमश्रुतावधिभिरिति वक्तव्यं स्यात्, स हि साक्षादिवावलोकयति हेयोपादेयानि समस्तवस्तूनि, केवली त्विह न व्याख्यातः, केवलज्ञानदर्शनलक्षणचक्षुर्द्वयकल्पनासंभवेऽपि चक्षुरिन्द्रियलक्षणचक्षुष उपयोगाभावेनासत्कल्पतया तस्य चक्षुस्त्रयं न विद्यत इतिकृत्वेति, द्रव्येन्द्रियापेक्षया तु सोऽपि न विरुध्यत इति। चक्षुष्माननन्तरमुक्तः, तस्य चाभिसमागमो भवतीति तं दिग्भेदेन विभजयन्नाह-'तिविहे' इत्यादि, अभीत्यर्थाभिमुख्येन न तु विपर्यासरूपतया समिति-सम्यक् न संशयतया तथा आ-मर्यादया गमनमभिसमागमो-वस्तुपरिच्छेदः। इहैव ज्ञानभेदमाह—'जया ण'मित्यादि, 'अइसेस'त्ति शेषाणि-छद्मस्थज्ञानान्यतिक्रान्तमतिशेषं-ज्ञानदर्शनं तच्च परमावधिरूपमिति संभाव्यते, केवलस्य न क्रमेणोपयोगो येन तत्प्रथमतयेत्यादि सूत्रमनवद्यं स्यादिति, तस्य-ज्ञानादेरुत्पादस्य प्रथमता तत्प्रथमता तस्यां 'उड्ढंति'ऊर्ध्वलोकमभिसमेति-समवगच्छमि जानाति ततस्तिर्यगिति-तिर्यग्लोकं ततस्तृतीये स्थानेऽध इत्यधोलोकमभिसमेति, एवं च सामर्थ्यात् प्राप्तमधोलोको दुरभिगमः, क्रमेण पर्यन्ताधिगम्यत्वादिति, हे श्रमणायुष्मन्निति शिष्यामन्त्रणमिति।

अनन्तरमभिसमागम उक्तः, स च ज्ञानं तच्चर्द्धिरिहैव वक्ष्यमाणत्वादिति ऋद्धिसाधर्म्यात् तद्भेदानाह—

तिविधा इड्ढी पं० तं०—देविड्ढी राइड्ढी गणिड्ढी १, देविड्ढी तिविहा पं० तं०—विमाणिड्ढी विगुव्वणिड्ढी परियारणिड्ढी २, अहवा देविड्ढी तिविहा पं० तं०—सचित्ता अचित्ता मीसिता ३, राइड्ढी तिविधा पं० तं०—रन्नो

अनियाणिड्ढी रन्नो निज्जाणिड्ढी रण्णो बलवाहणकोसकोट्ठागारिड्ढी ४, अहवा रातिड्ढी तिविहा पं० तं०—सचित्ता अचित्ता मीसिता ५, गणिड्ढी तिविहा पं० तं०—णाणिड्ढी दंसणिड्ढी चरित्तिड्ढी ६, अहवा गणिड्ढी तिविहा पं० तं०—सचित्ता अचित्ता मीसिया ७, (सू० २१४)।

'तिविहा इड्ढी'इत्यादि सूत्राणि सप्त सुगमानि, नवरं देवस्य–इन्द्रादेर्ऋद्धिः ऐश्वर्यं देवर्द्धिरेवं राज्ञः–चक्रवर्त्यादेर्गणिनो–गणाधिपतेराचार्यस्येति १। विमानानां विमानलक्षणा वा ऋद्धिः–समृद्धिः, द्वात्रिंशल्लक्षादिकं बाहुल्यं महत्त्वं रत्नादिरमणीयत्वं चेति विमानर्द्धिः, भवति च द्वात्रिंशल्लक्षादिकं सौधर्मादिषु विमानबाहुल्यम्, यथोक्तम्—"बत्तीस अट्ठवीसा बारस अट्ठ चउरो सयसहस्सा। आरेण बंभलोगा विमाणसंखा भवे एसा ॥१॥ पंचास चत्त छच्चेव सहस्सा लंतसुक्कसहसारे। सयचउरो आणयपाणएसु तिन्नारणच्चुयए ॥२॥ एक्कारसुत्तरं हेट्ठिमेसु सत्तुत्तरं च मज्झिमए। सयमेगं उवरिमए पंचेव अणुत्तरविमाणा ॥३॥" इति, उपलक्षणं चैतत् भवननगराणामिति, वैक्रियकरणलक्षणा ऋद्धिर्वैक्रियर्द्धिः, वैक्रियशरीरैर्हि जम्बूद्वीपद्वयमसङ्ख्यातान् वा द्वीपसमुद्रान् पूरयन्तीति, उक्तं च भगवत्याम्—"चमरे णं भंते! केमहिड्ढिए जाव केवतियं च णं पभू विउव्वित्तए?, गोयमा! चमरे णं जाव पभू णं केवलकप्पं जंबुद्दीवं दीवं बहूहिं असुर-

१ द्वात्रिंशदष्टाविंशतिर्द्वादशाष्ट च चत्वारि शतसहस्राणि। आराद्ब्रह्मलोकात् विमानसंख्यैषा भवेत् ॥१॥ पंचाशच्चत्वारिंशत् षट् सहस्राणि लान्तकशुक्रसहस्रारेषु चत्वारि शतान्यानतप्राणतयोस्त्रीण्यारणाच्युतयोः ॥२॥ अधस्तने एकादशाधिकं मध्यमे सप्तोत्तरं शतं उपरितने एकं शतं अनुत्तरविमानानि पंचैव ॥३॥ २ चमरो भदन्त! कीदृशो महर्द्धिको यावत्कियद्विकुर्वयितुं प्रभुः? गौतम! चमरो यावत्समर्थः केवलकल्पं जंबूद्वीपं बहुभिरसुरकुमारनिकायैः

कुमारेहिं देवेहि य देवीहि य आइन्नं जाव करेत्तए, अदुत्तरं च णं गोयमा! पभू चमरे जाव तिरियमसंखेज्जे दीवसमुद्दे बहूहिं असुरकुमारेहिं आइन्ने जाव करित्तए, एस णं गोयमा! चमरस्स ३ अयमेयारूवे विसयमेत्ते बुइए, नो चेव णं संपत्तीए विउव्विंसु ३, एवं सक्केऽवि दो केवलकप्पे जंबुद्दीवे दीवे जाव आइन्ने करेज्ज"त्ति, परिचारणा–कामासेवा तदृद्धिः अन्यान् देवानन्यसत्का देवीः स्वकीया देवीरभियुज्यात्मानं च विकृत्य परिचारयतीत्येवमुक्तलक्षणेति २। सचित्ता–स्वशरीराग्रमहिष्यादिसचेतनवस्तुसंपत् अचेतना–वस्त्राभरणादिविषया मिश्रा–अलङ्कृतदेव्यादिरूपा ३। अतियानं–नगरप्रवेशः, तत्र ऋद्धि–तोरणहट्टशोभाजनसम्मर्दादिलक्षणा निर्यानं–नगरान्निर्गमः तत्र ऋद्धिः–हस्तिकल्पनसामन्तपरिवारादिका बलं–चतुरङ्गं वाहनानि–वेगसरादीनि कोशो–भाण्डागारं कोष्ठा–धान्यभाजनानि तेषामगारं–गेहं कोष्ठागारं धान्यगृहमित्यर्थः तेषां तान्येव वा ऋद्धिर्या सा तथा ४। सचित्तादिका पूर्ववद् भावनीयेति ५। ज्ञानर्द्धिर्विशिष्टश्रुतसम्पत्, दर्शनर्द्धिः–प्रवचने निःशङ्कितादित्वं प्रवचनप्रभावकशास्त्रसम्पद्वा चारित्रर्द्धिर्निरतिचारता ६। सचित्ता शिष्यादिका अचित्ता वस्त्रादिका मिश्रा तथैवेति ७। इह च विकुर्वणादिऋद्धयोऽन्येषामपि भवन्ति, केवलं देवादीनां विशेषवत्यस्ता इति तेषामेवोक्ता इति।

ऋद्धिसद्भावे च गौरवं भवतीति तद्भेदानाह—

देवैः देवीभिश्च आकीर्णं यावत् कर्त्तुं, अथ च गौतम! प्रभुश्चमरो यावत्तिर्यगसंख्येयद्वीपसमुद्रान् बहुभिरसुरकुमारनिकायैराकीर्णान् यावत्कर्त्तुं, एष गौतम! चमरस्य एतादृशस्वरूपः विषयमात्र उक्तः। न चैव संपत्त्या व्यकार्षीत् विकरोति विकरिष्यति। एवं शक्रोऽपि द्वौ केवलकल्पौ जंबूद्वीपौ द्वीपौ आकीर्णौ यावत्कुर्यात्॥

तओ गारवा पं० तं०—इड्ढीगारवे रसगारवे सातागारवे (सू० २१५) तिविधे करणे पं० तं०—धम्मिते करणे अधम्मिए करणे धम्मिताधम्मिए करणे (सू० २१६) तिविहे भगवता धम्मे पं० तं०—सुअधिज्झिते सुज्झातिते सुतवस्सिते, जया सुअधिज्झितं भवति तदा सुज्झातियं भवति जया सुज्झातियं भवति तदा सुतवस्सियं भवति, से सुअधिज्झिते सुज्झातिते सुतवस्सिते सुतक्खाते णं भगवता धम्मे पण्णत्ते (सू० २१७)।

'तओ गारवे'त्यादि व्यक्तं, परं गुरोर्भावः कर्म्म वेति गौरवं, तच्च द्वेधा–द्रव्यतो वज्रादेर्भावतोऽभिमानलोभलक्षणाशुभभाववत आत्मनः, तत्र भावगौरवं त्रिधा, तत्र ऋद्ध्या–नरेन्द्रादिपूजालक्षणया आचार्यत्वादिलक्षणया वा अभिमानादिद्वारेण गौरवं ऋद्धिगौरवं, ऋद्धिप्राप्त्यभिमानाप्राप्तप्रार्थनाद्वारेणात्मनोऽशुभभावो भावगौरवमित्यर्थः, एवमन्यत्रापि, नवरं रसो–रसनेन्द्रियार्थो मधुरादिः सातं–सुखमिति, अथवा ऋद्ध्यादिषु गौरवमादर इति। अनन्तरं चारित्रर्द्धिरुक्ता, चारित्रं च करणमिति तद्भेदानाह—'तिविहे'इत्यादि, कृतिः करणमनुष्ठानं, तच्च धार्म्मिकादिस्वामिभेदेन त्रिविधं, तत्र धार्म्मिकस्य–संयतस्येदं धार्म्मिकमेवमितरे, नवरमधार्म्मिकः–असंयतस्तृतीयो देशसंयतः, अथवा धर्म्मे भवं धर्म्मो वा प्रयोजनमस्येति धार्मिकं, विपर्यस्तमितरत्, एवं तृतीयमपीति। धार्म्मिककरणमनन्तरमुक्तं, तच्च धर्म एवेति तद्भेदानाह—'तिविहे'इत्यादि स्पष्टं, केवलं भगवता महावीरेणेत्येवं जगाद सुधर्म्मस्वामी जम्बूस्वामिनं प्रतीति, सुष्ठु–कालविनयाद्याराधनेनाधीतं–गुरुसकाशात् सूत्रतः पठितं स्वधीतं, तथा सुष्ठु–विधिना तत एव व्याख्यानेनार्थतः श्रुत्वा ध्यातम्–अनुप्रेक्षितं, श्रुतमिति गम्यं सुध्यातम् , अनुप्रेक्षणाऽभावे तत्त्वानवगमेनाध्ययनश्रवणयोः प्रायोऽकृतार्थत्वादिति, अनेन भेदद्वयेन श्रुतधर्म्म उक्तः, तथा सुष्ठु–इहलोकाद्याशंसारहितत्वेन तपस्यितं–तपसानुष्ठानं, सुतपस्यितमिति च चारित्रधर्म्म उक्त इति,

त्रयाणामप्येषामुत्तरोत्तरतोऽविनाभावं दर्शयति-'जया'इत्यादि व्यक्तं, परं निर्दोषाध्ययनं विना श्रुतार्थाप्रतीतेः सुध्यातं न भवति तदभावे ज्ञानविकलतया सुतपस्यितं न भवतीति भावः, यदेतत् स्वधीतादित्रयं भगवता वर्द्धमानस्वामिना धर्म्मः प्रज्ञप्तः 'से'त्ति स स्वाख्यातः-सुष्ठूक्तः सम्यग्ज्ञानक्रियारूपत्वात्, तयोश्चैकान्तिकात्यन्तिकसुखावन्ध्योपायत्वेन निरुपचरितधर्म्मत्वात्, सुगतिधारणाद्धि धर्म्म इति, उक्तं च—"नाणं पयासयं सोहओ तवो संजमो य गुत्तिकरो। तिण्हंपि समाओगे मोक्खो जिणसासणे भणिओ ॥१॥" इति, [ज्ञानं प्रकाशकं शोधकं तपः संयमस्तु गुप्तिकरः। त्रयाणामपि समायोगो मोक्षो जिनशासने भणितः ॥१॥] णमिति वाक्यालङ्कारे।

सुतपस्यितमिति चारित्रमुक्तं, तच्च प्राणातिपातादिविनिवृत्तिस्वरूपमिति तस्या भेदानाह—

तिविधा वावत्ती पं० तं०—जाणू अजाणू वितिगिच्छा, एवमज्झोववज्जणा परियावज्जणा (सू० २१८) तिविधे अंते पं० तं०—लोगंते वेयंते समयंते (सू० २१९) ततो जिणा पं० तं०—ओहिणाणजिणे मणपज्जवणाणजिणे केवलणाणजिणे १, ततो केवली पं० तं०—ओहिनाणकेवली मणपज्जवनाणकेवली केवलनाणकेवली २, तओ अरहा, पं० तं०—ओहिनाणअरहा मणपज्जवनाणअरहा केवलनाणअरहा ३ (सू० २२०)

'तिविहे'त्यादि, व्यावर्त्तनं व्यावृत्तिः, कुतोऽपि हिंसाद्यवधेर्निवृत्तिरित्यर्थः, सा च या ज्ञस्य-हिंसादेर्हेतुस्वरूपफलविदुषो ज्ञानपूर्विका व्यावृत्तिः, सा तदभेदात् जाणुत्ति गदिता, या त्वज्ञस्याज्ञानात् सा अजाणू इत्यभिहिता, या तु विचिकित्सातः-संशयात् सा निमित्तनिमित्तिनोरभेदाद्विचिकित्सेत्यभिहिता। व्यावृत्तिरित्यनेनानन्तरं चारित्रमुक्तं तद्विपक्षश्चाशुभाध्यवसायानुष्ठाने इति तयोरधुना

भेदानतिदिशन्नाह—'एवं'मित्यादि सूत्रे, 'एवं'मिति व्यावृत्तिरिव त्रिधा, 'अज्झोववज्जण'त्ति अध्युपपादनं क्वचिदिन्द्रियार्थे अध्युपपत्तिरभिष्वङ्ग इत्यर्थः तत्र जानतो विषयजन्यमनर्थं या तत्राध्युपपत्तिः सा जाणू या त्वजानतः सा अजाणू या तु संशयवतः सा विचिकित्सेति, 'परियावज्जण'त्ति पर्यापदनं पर्यापत्तिरासेवेतियावत्, साऽप्येवमेवेति। 'जाणु'त्ति ज्ञः, स च ज्ञानात् स्यादित्युक्तं, ज्ञानं चातीन्द्रियार्थेषु प्रायः शास्त्रादिति शास्त्रभेदेन तद्भेदानाह—'तिविहे अंते'इत्यादि, अमनमधिगमनमन्तः-परिच्छेदः, तत्र लोको-लोकशास्त्रं तत्कृतत्वात् तदध्येयत्वाच्चार्थशास्त्रादिः तस्मादन्तो-निर्णयस्तस्य वा परमरहस्यं पर्यन्तो वेति लोकान्तः, एवमितरावपि, नवरं वेदा ऋगादयः ४ समया जैनादिसिद्धान्ता इति। अनन्तरं समयान्त उक्तः, समयश्च जिनकेवल्यर्हच्छब्दवाच्यैरुक्तः सम्यग्भवतीति जिनादिशब्दवाच्यभेदानभिधातुं त्रिसूत्रीमाह—'तओ जिणे' त्यादि, सुगमा, नवरं रागद्वेषमोहान् जयन्तीति जिनाः-सर्वज्ञाः, उक्तं च—"रागो द्वेषस्तथा मोहो, जितो येन जिनो ह्यसौ। अस्त्रीशस्त्राक्षमालत्वादर्हन्नेवानुमीयते ॥१॥" इति, तथा जिना इव ये वर्त्तन्ते निश्चयप्रत्यक्षज्ञानतया तेऽपि जिनास्तत्रावधिज्ञानप्रधानो जिनोऽवधिजिनः एवमितरावपि, नवरमाद्यावुपचरिताविन्तरो निरुपचारः, उपचारकारणं तु प्रत्यक्षज्ञानित्वमिति, केवलम्-एकमनन्तं पूर्णं वा ज्ञानादि येषामस्ति ते केवलिनः, उक्तं च—"कसिणं केवलकप्पं लोगं जाणंति तह य पासंति। केवलचरित्तणाणी तम्हा ते केवली होंति ॥१॥" इति इहापि जिनवद् व्याख्या, अर्हन्ति देवादिकृतां पूजामित्यर्हन्तः, अथवा नास्ति रहः-प्रच्छन्नं किञ्चिदपि येषां प्रत्यक्षज्ञानित्वात्ते अरहसः, शेषं प्राग्वत्।

एते च सलेश्या अपि भवन्तीति लेश्याप्रकरणमाह—

१ कृत्स्नं केवलकल्पं लोकं जानाति पश्यति च। केवलचारित्रज्ञानी तस्मात्स केवली भवति ॥१॥

ततो लेसाओ दुब्भिगंधाओ पं० तं०—कण्हलेसा णीललेसा काउलेसा १, तओ लेसाओ सुब्भिगंधातो पं० तं०—तेऊ० पम्ह० सुक्कलेसा २ एवं दोग्गतिगामिणीओ ३ सोगतिगामिणीओ ४ संकिलिट्ठाओ ५ असंकिलिट्ठाओ ६ अमणुन्नाओ ७ मणुन्नाओ ८ अविसुद्धाओ ९ विसुद्धाओ १० अप्पसत्थाओ ११ पसत्थाओ १२ सीतलुक्खाओ १३ णिध्धुण्हाओ १४ (सू० २२१)। तिविहे मरणे पं० तं०—बालमरणे पंडियमरणे, बालपंडियमरणे, बालमरणे तिविहे पं० तं०—ठितलेसे संकिलिट्ठलेसे पज्जवजातलेसे, पंडियमरणे तिविहे पं० तं०—ठितलेसे असंकिलिट्ठलेसे पज्जवजातलेसे ३, बालपंडितमरणे तिविधे पं० तं०—ठितलेस्से असंकिलिट्ठलेसे अपज्जवजातलेसे ४ (सू० २२२)।

'तओ'इत्यादि सुगमं, नवरं 'दुब्भिगंधाओ'त्ति दुरभिगन्धा दुर्गन्धाः, दुरभिगन्धत्वं च तासां पुद्गलात्मकत्वात्, पुद्गलानां च गन्धादीनां अवश्यंभावादिति, आह च–"[1]जह गोमडस्स गंधो सुणगमडस्स व जहा अहिमडस्स। एत्तोवि अणंतगुणो लेसाणं अप्पसत्थाणं ॥१॥" इति, नामानुसारी चासां वर्णः, कपोतवर्णा लेश्या कपोतलेश्या, धूम्रवर्णेत्यर्थः, 'सुब्भिगंधाओ'त्ति सुरभिगन्धयः, आह च–"[2]जह सुरभिकुसुमगंधो गंधो वासाण पिस्समाणाणं। एत्तोवि अणंतगुणो पसत्थलेसाण तिण्हंपि ॥१॥" इति, तेजो–वह्निस्तद्वर्णा लेश्या लोहितवर्णेत्यर्थः, तेजोलेश्येति, पद्मगर्भवर्णा लेश्या पीतवर्णेत्यर्थः पद्मलेश्या, शुक्ला प्रतीता, एवंकरणात्प्रथमसूत्र-



१ यथा गोशवस्य गन्धो श्वशवस्याहिशवस्य वा गन्धः इतोऽप्यनन्तगुणोऽप्रशस्तानां लेश्यानां गन्धः ॥१॥ २ यथा सुरभिकुसुमगन्धो गन्धो वासानां पिष्यमाणानां। इतोऽप्यनन्तगुणः प्रशस्तानां तिसृणामपि लेश्यानाम् ॥१॥

वन् । 'त्रओ' इत्याद्यभिलापेन शेषसूत्राण्यध्येयानीति, तत्र दुर्गति–नरकतिर्यग्रूपां गमयन्ति प्राणिनमिति दुर्गतिगामिन्यः, सुगतिः–मनुष्यदेवगतिरूपा, संक्लिष्टाः संक्लेशहेतुत्वादिति, विपर्ययः सर्वत्र सुज्ञानः, अमनोज्ञाः अमनोज्ञरसोपेतपुद्गलमयत्वात्, अविशुद्धा वर्णतः, अप्रशस्ताः–अश्रेयस्योऽनादेया इत्यर्थः, शीतरूक्षाः स्पर्शतः आद्याः, द्वितीयास्तु स्निग्धोष्णाः स्पर्शत एवेति । अनन्तरं लेश्या उक्ता, अधुना तद्विशेषितमरणनिरूपणायाह—'तिविहे' इत्यादि सूत्रचतुष्टयं, बालः–अज्ञस्तद्वद् यो वर्त्तते विरतिसाधकविवेकविकलत्वात् स बालः–असंयतस्तस्य मरणं बालमरणम्, एवमितरे, केवलं–पडिधातोर्गत्यर्थत्वेन ज्ञानार्थत्वाद्विरतिफलेन फलवद्विज्ञानसंयुक्तत्वात् पण्डितो–बुद्धतत्त्वः संयत इत्यर्थः, तथा अविरतत्वेन बालत्वाद्विरतत्वेन च पण्डितत्वाद् बालपण्डितः–संयतासंयत इति, स्थिता–अवस्थिता अविशुध्यन्त्यसंक्लिश्यमाना च लेश्या कृष्णादिर्यस्मिन् तत्स्थितलेश्यः, संक्लिष्टा–संक्लिश्यमाना संक्लेशमागच्छन्तीत्यर्थः, सा लेश्या यस्मिंस्तत्तथा, तथा पर्यवाः–पारिशेष्याद्विशुद्धिविशेषाः प्रतिसमयं जाता यस्यां सा तथा, विशुद्ध्या वर्द्धमानेत्यर्थः, सा लेश्या यस्मिंस्तत्तथेति, अत्र प्रथमं कृष्णादिलेश्यः सन् यदा कृष्णादिलेश्येष्वेव नारकादिषूत्पद्यते तदा प्रथमं भवति, यदा तु नीलादिलेश्यः सन् कृष्णादिलेश्येषूत्पद्यते तदा द्वितीयं, यदा पुनः कृष्णलेश्यादिः सन् नीलकापोतलेश्येषूत्पद्यते तदा तृतीयम्, उक्तं चान्त्यद्वयसंवादि भगवत्याम् यदुत—"[1]से णूणं भंते ! कण्हलेसे नीललेसे जाव सुक्कलेसे भवित्ता काउलेसेसु नेरइएसु उववज्जइ ?, हंता, गोयमा !, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! लेसाठाणेसु संकिलिस्समाणेसु वा विसुज्झमाणेसु वा काउलेस्सं परिण-

१ अथ नूनं भदन्त ! कृष्णलेश्यो नीललेश्यो यावच्छुक्ललेश्यो भूत्वा कापोतलेश्येषु नैरयिकेषूत्पद्यते ? गौतमैव, अथ केनार्थेन भदन्तैवमुच्यते गौतम ! लेश्यास्थानेषु संक्लिश्यमानेषु विशुद्ध्यमानेषु वा कापोतलेश्यां परिणमते, परिणम्य च कापोतलेश्येषु नैरयिकेषूत्पद्यते ।

मइ २ काउलेसेसु नेरइएसु उववज्जइ"त्ति, एतदनुसारेणोत्तरसूत्रयोरपि स्थितलेश्यादिविभागो नेय इति । पण्डितमरणे संक्लिश्यमानता लेश्याया नास्ति, संयतत्वादेवेत्ययं बालमरणाद्विशेषः, बालपण्डितमरणे तु संक्लिश्यमानता विशुद्ध्यमानता च लेश्याया नास्ति, मिश्रत्वादेवेत्ययं विशेष इति । एवं च पण्डितमरणं वस्तुतो द्विविधमेव, संक्लिश्यमानलेश्यानिषेधे अवस्थितवर्द्धमानलेश्यत्वात् तस्य, त्रिविधत्वं तु व्यपदेशमात्रादेव, बालपण्डितमरणं त्वेकविधमेव, संक्लिश्यमानपर्यवजातलेश्यानिषेधे अवस्थितलेश्यत्वात् तस्येति, त्रैविध्यं त्वस्येतरव्यावृत्तितो व्यपदेशत्रयप्रवृत्तेरिति ।

मरणमनन्तरमुक्तं, मृतस्य तु जन्मान्तरे यथाविधस्य यद्वस्तुत्रयं यस्मै सम्पद्यते तस्य तत्तस्मै दर्शयितुमाह—

ततो ठाणा अव्ववसितस्स अहिताते असुभाते अखमाते अणिस्सेसाते अणाणुगामियत्ताते भवंति, तं०—से णं मुंडे भवित्ता अगारातो अणगारियं पव्वतिते णिग्गंथे पावयणे संकिते कंखिते वितिगिच्छिते भेदसमावन्ने कलुससमावन्ने निग्गंथं पावयणं णो सद्दहति णो पत्तियति णो रोएति तं परिस्सहा अभिजुंजिय २ अभिभवंति, णो से परिस्सहे अभिजुंजिय २ अभिभवइ १, से णं मुंडे भवित्ता अगारातो अणगारितं पव्वतिते पंचहिं महव्वएहिं संकिते जाव कलुससमावन्ने पंच महव्वताइं नो सद्दहति जाव णो से परिस्सहे अभिजुंजिय २ अभिभवति, से णं मुंडे भवित्ता अगारातो अणगारियं पव्वतिते छहिं जीवनिकाएहिं जाव अभिभवइ ३ । ततो ठाणा ववसियस्स हिताते जाव आणुगामितत्ताते भवंति, तं०—से णं मुंडे भवित्ता अगारातो अणगारियं

पव्वनिते णिग्गंथे पावयणे णिस्संकिते णिक्कंखिते जाव नो कलुससमावन्ने णिग्गंथं पावयणं सद्दहति पत्तियति रोतेति से परिस्सहे अभिजुंजिय २ अभिभवति, नो तं परिस्सहा अभिजुंजिय २ अभिभवंति १, से णं मुंडे भवित्ता अगारातो अणगारियं पव्वनिते समाणे पंचहिं महव्वएहिं णिस्संकिए णिक्कंखिए जाव परिस्सहे अभिजुंजिय २ अभिभवइ, नो तं परिस्सहा अभिजुंजिय २ अभिभवंति २, से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वइए छहिं जीवनिकाएहिं णिस्संकिते जाव परिस्सहे अभिजुंजिय २ अभिभवति, नो तं परिस्सहा अभिजुंजिअ २ अभिभवंति ३ (सू० २२३)।

'तओ ठाणे'त्यादि, त्रीणि स्थानानि—प्रवचनमहाव्रतजीवनिकायलक्षणानि अव्यवसितस्य—अनिश्चयवतोऽपराक्रमवतो वाऽहिताय—अपथ्यायासुखाय—दुःखाय अक्षमाय—असङ्गतत्वाय अनिःश्रेयसाय—अमोक्षायाननुगामिकत्वाय—अशुभानुबन्धाय भवन्ति, 'से णं' ति यस्य त्रीणि स्थानान्यहितादित्वाय भवन्ति स शङ्कितो—देशतः सर्वतो वा संशयवान्, कांक्षितस्तथैव मतान्तरस्यापि साधुत्वेन मन्ता विचिकित्सितः—फलं प्रति शङ्कोपेतः अत एव भेदसमापन्नो—द्वैधीभावमापन्नः—एवमिदं न चैवमितिमतिकः कलुषसमापन्नो—नैतदेवमितिप्रतिपत्तिकः, ततश्च निर्ग्रन्थानामिदं नैर्ग्रन्थं प्रशस्तं प्रगतं प्रथमं वा वचनमिति प्रवचनम्—आगमो दीर्घत्वं प्राकृतत्वात्, न श्रद्धत्ते सामान्यतो न प्रत्येति—न प्रीतिविषयीकरोति नो रोचयति—न चिकीर्षाविषयीकरोति 'त'मिति य एवभूतस्तं प्रव्रजिताभासं परिगच्छन्त इति परीषहाः—क्षुदादयः अभियुज्य २—सम्बन्धमुपगत्य प्रतिस्पर्द्धय वा अभिभवन्ति—न्यक्कुर्वन्तीति, शेषं सुगमम्। उक्तविपर्ययसूत्रं प्राग्वत्, किन्तु हितम्—अदोषकरमिह परत्र चात्मनः परेषां च पथ्यान्नभोजनवत्, सुखम्—आनन्दस्तृषितस्य शीतलजलपान

इव क्षमम्–उचितं तथाविधव्याधिव्याघातकौषधपानमिव निःश्रेयसं–निश्चितं श्रेयः–प्रशस्यं भावतः पञ्चनमस्कारकरणमिव अनुगामिकम्–अनुगमनशीलं भास्वरद्रव्यजनितच्छायेवेति ।

अयं चैवंविधः साधुरिहैव पृथिव्यां भवतीत्यर्थेन सम्बन्धेन पृथिवीस्वरूपमाह—

**एगमेगा णं पुढवी तिहिं वलएहिं सव्वओ समंता संपरिक्खित्ता, तं०—घणोदधिवलएणं घणवातवलएणं तणुवायवलएणं (सू० २२४)। णेरइया णं उक्कोसेणं तिसमतितेणं विग्गहेणं उववज्जंति, एगिंदियवज्जं जाव वेमाणियाणं (सू० २२५)।**

'एवमेगे'त्यादि, एकैका पृथ्वी रत्नप्रभादिका सर्व्वतः, किमुक्तं भवति ?–समन्तादथवा दिक्षु विदिक्षु चेत्यर्थः 'सम्परिक्षिप्ता' वेष्टिता आभ्यन्तरं घनोदधिवलयं ततः क्रमेणेतरे, तत्र घनः–स्त्यानो हिमशिलावत् उदधिः–जलनिचयः स चासौ स चेति घनोदधिः स एव वलयमिव वलयं–कटकं घनोदधिवलयं तेन, एवमितरे अपि, नवरं घनश्चासौ वातश्च तथाविधपरिणामोपेतो घनवातः, एवं तनुवातोऽपि तथाविधपरिणाम एवेति, भवन्त्यत्र गाथाः—"[1]नवि अ फुसंति अलोगं चउसुंपि दिसासु सव्वपुढवीओ । संगहिया वलएहिं विक्खंभं तेसि वोच्छामि ॥१॥ छच्चेव १ अद्धपंचम २ जोयण सद्धं च होइ रयणाए । उदही १ घण २ तणुवाया ३

१ नैव च स्पृशंति अलोकं चतुसृष्वपि दिक्षु सर्वा पृथ्व्यः संगृहीता वलयैर्विष्कंभं तेषां वक्ष्ये ॥१॥ षट् चैवार्द्धपञ्चमानि योजनं सार्द्धं च भवति रत्नायां उदधिघनतनुवाताः

जाहासंगेण निद्दिट्ठा ॥२॥ तिभागो १ (योजनस्य) गाउयं चेव २ तिभागो गाउयस्स य ३। आइधुवे पक्खेवो अहो अहो जाव सत्तमिअं ॥३॥" इति, एतासु च पृथिवीषु नारका एव उत्पद्यन्त इति तदुत्पत्तिविधिमभिधातुमाह–'नेरइया ण'मित्यादि, त्रयः समयास्त्रिसमयं तद्यत्रास्ति स त्रिसामयिकस्तेन विग्रहेण–वक्रगमनेन, 'उक्कोसेणं'ति त्रसानां हि त्रसनाडयन्तरुत्पादात् वक्रद्वयं भवति, तत्र च त्रय एव समयाः, तथाहि–आग्नेयदिशो नैर्ऋतदिशमेकेन समयेन गच्छति, ततो द्वितीयेन समश्रेण्याऽधस्ततस्तृतीयेन वायव्यदिशि समश्रेण्यैवेति, त्रसानामेव त्रसोत्पत्तावेवंविध उत्कर्षेण विग्रह इत्याह–'एगिंदिये'त्यादि, एकेन्द्रियास्त्वेकेन्द्रियेषु पञ्चसामयिकेनाप्युत्पद्यन्ते, यतस्ते बहिस्तात् त्रसनाडीतो बहिरप्युत्पद्यन्ते, तथाहि—"विदिसाउ दिसं पढमे वीए पइसरइ लोयनाडीए। तइए उप्पि धावइ चउत्थए नीइ बाहिं तु ॥१॥ पंचमए विदिसीए गंतुं उप्पज्जए उ एगिंदि"त्ति सम्भव एवायं, भवति तु चतुःसामयिक एव, भगवत्यां तथोक्तत्वादिति, तथाहि—"अपज्जत्तगसुहुमपुढविकाइए णं भंते ! अहेलोगखेत्तनालीए बाहिरिल्ले खेत्ते समोहए समोहणित्ता जे भविए उड्ढलोयखेत्तनालीए बाहिरिल्ले खेत्ते अपज्जत्तसुहुमपुढविकाइयत्ताए उववज्जित्तए से णं भंते ! कतिसमइएणं विग्गहेणं उववज्जेज्जा ?, गो० ! तिसमइएण वा चउसमइएण वा विग्गहेण उववज्जेज्जा" इत्यादि, विशेषणवत्यामप्युक्तम्—"सुत्ते चउ-

---

दशाभागेन निर्दिष्टाः ॥२॥ योजनत्रिभागः गव्यूतं गव्यूतत्रिभागश्च आदिध्रुवे प्रक्षेपः अधः अधः यावत्सप्तम्याम् ॥३॥ १ विदिशो दिशि प्रथमे द्वितीये प्रविशति लोकनाड्यां तृतीये उपरि धावति चतुर्थे नाड्या बहिर्निर्गच्छति ॥१॥ विदिशि पंचमे गत्वा उत्पद्यते एकेन्द्रियत्वेन। २ अपर्याप्तसूक्ष्मपृथ्वीकायिको भदन्ताधोलोकक्षेत्रनाड्या बाह्ये क्षेत्रे समवहतः समवहत्य यो भव्य ऊर्ध्वलोकक्षेत्रनाड्या बाह्ये क्षेत्रेऽपर्याप्तसूक्ष्मपृथ्वीकायतया उत्पत्तुं स भदन्त ! कतिसामयिकेन विग्रहेण उत्पद्यते ?, गौतम ! त्रिसामयिकेन वा चतुःसामयिकेन वापि विग्रहेणोत्पद्यते ॥ ३ सूत्रे चतुः

समयाओ नत्थि गई उ परा विणिद्दिट्ठा। जुज्जइ य पंचसमया जीवस्स इमा गई लोए ॥१॥ जो तमतमविदिसाए समोहओ बंभलोगविदिसाए। उववज्जई गईए सो नियमा पंचसमयाए ॥२॥ उववायाभावाओ न पंचसमयाहवा न संतावि। भणिया जह चउसमया महल्लबंधे न सन्तावि ॥३॥" इति, अत उक्तम्—'एगिंदियवज्जं'ति, यावद्वैमानिकानामिति–वैमानिकान्तानां जीवानां त्रिसामयिक उत्कर्षेण विग्रहो भवतीति भावः।

मोहवतां त्रिस्थानकमभिधायाधुना क्षीणमोहस्य तदाह—

खीणमोहस्स णं अरहओ ततो कम्मंसा जुगवं खिज्जंति, तं०—नाणावरणिज्जं दंसणावरणिज्जं अंतरातियं (सू०२२६)। अभितीणक्खत्ते तितारे पं० १ एवं सवणो २ अस्सिणी ३ भरणी ४ मगसिरे ५ पूसे ६ जेट्ठा ७ (सू० २२७)। धम्मातो णं अरहाओ संती अरहा तिहिं सागरोवमेहिं तिचउब्भागपलिओवमऊणएहिं वीतिक्कंतेहिं समुप्पन्ने (सू० २२८) समणस्स णं भगवओ महावीरस्स जाव तच्चाओ पुरिसजुगाओ जुगंतकरभूमी, मल्ली णं अरहा तिहिं पुरिससएहिं सद्धिं मुंडे भवित्ता जाव पव्वतिते, एवं पासेवि (सू० २२९)। समणस्स णं भगवतो महावीरस्स तिन्नि सया चउद्दसपुव्वीणं अजिणाणं जिणसंकासाणं सव्वक्खरसन्निवातीणं जिण इव अवि-

समयाया गत्याः परा गतिर्न निर्दिष्टा युज्यते च पंचसमया जीवस्यैषा गतिर्लोके ॥१॥ यस्तमस्तमोविदिशि समवहतो ब्रह्मलोकविदिशि उत्पद्यते स नियमात् पंचसमयया गत्या ॥२॥ उत्पादाभावान्न पंचसमया अथवा सत्यपि न भणिता यथा चतुःसमया महत्प्रबन्धे सत्यपि ॥३॥

तद्वागरमाणाणं उक्कोसिया चउद्दसपुव्विसंपया हुत्था (सू० २३०)। तओ तित्थयरा चक्कवट्टी होत्था तं०—संती कुंथू अरो ३ (सू० २३१)।

खीणे'त्यादि 'क्षीणमोहस्य' क्षीणमोहनीयकर्म्मणोऽर्हतो-जिनस्य त्रयः कर्मांशाः-कर्म्मप्रकृतय इति, उक्तं च-"चरमे नाणावरणं पंचविहं दंसणं चउविगप्पं। पंचविहमंतरायं खवइत्ता केवली होइ ॥१॥" इति, शेषं कण्ठ्यम्। अनन्तरमशाश्वतानां त्रिस्थानकमुक्तम्, अधुना शाश्वतानां तदाह—'अभी'त्यादि सूत्राणि सप्त कण्ठ्यानीति। परम्परसूत्रे क्षीणमोहस्य त्रिस्थानकमुक्तमधुना तद्विशेषाणां तीर्थकृतां तदाह—'धम्मे'त्यादि प्रकरणं, 'तिचउब्भाग'त्ति त्रिभिश्चतुर्भागैः-पादैः पल्योपमस्य सत्कैरूनानि त्रिचतुर्भागपल्योपमोनानि तैर्व्यतिक्रान्तैरिति, उक्तं च-"धम्मजिणाओ संती तिहि उ तिचउभागपलियऊणेहिं। अयरेहिं समुप्पन्नो"त्ति। 'समगस्से'त्यादि, युगानि पञ्चवर्षमानानि कालविशेषा लोकप्रसिद्धानि वा कृतयुगादीनि तानि च क्रमव्यवस्थितानि ततश्च पुरुषा गुरुशिष्यक्रमिणः पितापुत्रक्रमवन्तो वा युगानीव पुरुषयुगानि, पुरुषसिंहवत्समासः, ततश्च पञ्चम्या द्वितीयार्थत्वात् तृतीयं पुरुषयुगं यावत्, जम्बूस्वामिनं यावदित्यर्थः, 'युग'त्ति पुरुषयुगं तदपेक्षयाऽन्तकराणां-भवान्तकारिणां निर्वाणगामिनामित्यर्थः, भूमिः-कालो युगान्तकरभूमिः, इदमुक्तं भवति-भगवतो वर्द्धमानस्वामीनस्तीर्थे तस्मादेवावधेस्तृतीयं पुरुषं जम्बूस्वामिनं यावन्निर्वाणमभूत्, तत उत्तरं तद्व्यवच्छेद इति। 'मल्ली'त्यादि सूत्रद्वयं, तत्र संवादः—"एगो भगवं वीरो पासो मल्ली य तिहिं तिहिं सएहिं"ति मल्लिजिनः स्त्रीश-

१ चरमसमये पंचविधं ज्ञानावरणं चतुर्विकल्पं दर्शनावरणं अंतरायं पंचविधं क्षपयित्वा केवली भवति ॥१॥ २ धर्मजिनाच्छान्तिः चतुर्भागोनपल्योपमैः पञ्चः त्रिभिरतरैः समुत्पन्नः॥

तैरपि त्रिभिः। 'समणे'त्यादि, 'अजिणाणं'ति असर्वज्ञत्वेन जिनसंकाशानां सकलसंशयच्छेदकत्वेन सर्व्वे–सकला अक्षरसन्निपाताः–अकारादिसंयोगा विद्यन्ते येषां ते तथा स्वार्थिकेनप्रत्ययोपादानात् तेषां, विदितसकलवाङ्मयानामित्यर्थः, 'वागरमाणाण'न्ति व्यागृणतां व्याकुर्वतामित्यर्थः। 'तओ' इत्यादि, अत्रोक्तम्—"[१]संती कुंथू अ अरो अरहंता चेव चक्कवट्टी य। अवसेसा तित्थयरा मंडलिआ आसि रायाणो ॥१॥" इति।

तीर्थकराश्चैते विमानेभ्योऽवतीर्णा इति विमानत्रिस्थानकमाह—

ततो गेविज्जविमाणपत्थडा पन्नत्ता तं०—हिट्ठिमगेविज्जविमाणपत्थडे मज्झिमगेविज्जविमाणपत्थडे उपरिमगेविज्जविमाणपत्थडे, हिट्ठिमगेविज्जविमाणपत्थडे तिविहे पं० तं०—हेट्ठिम २ गेविज्जविमाणपत्थडे हेट्ठिममज्झिमगेविज्जविमाणपत्थडे, हेट्ठिमउवरिमगेविज्जविमाणपत्थडे, मज्झिमगेविज्जविमाणपत्थडे तिविहे पं० तं०—मज्झिमहेट्ठिमगेवेज्जविमाणपत्थडे मज्झिम २—गेविज्ज० मज्झिमउवरिमगेविज्ज०, उवरिमगेविज्जविमाणपत्थडे तिविहे पं० तं०—उवरिमहेट्ठिमगेविज्ज० उवरिममज्झिमगेविज्ज० उवरिम २ गेविज्जविमाणपत्थडे (सू० २३२)। जीवाणं तिट्ठाणणिव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा चिणिंति वा चिणिस्संति वा, तं०—इत्थिणिव्वत्तिते पुरिसनिव्वत्तिए णपुंसगनिव्वत्तिते, एवं चिणउवचिणबंधउदीरवेद तह णिज्जरा चेव (सू० २३३)। तिपते-

१ शान्तिः कुन्थुश्चारश्च अर्हन्तश्चैव चक्रवर्त्तिनश्च। अत्रशेषास्तीर्थंकरा माडलिकराजा आसन्'॥१॥

सिना खधा अणंता पण्णत्ता, एवं जाव तिगुणलुक्खा पोग्गला अणंता पन्नत्ता (सू० २३४)। तिट्ठाणं समत्तं तत्तियं अज्झयणं समत्तं ॥

'तओ' इत्यादि, लोकपुरुषस्य ग्रीवास्थाने भवानि ग्रैवेयकानि तानि च तानि विमानानि च तेषां प्रस्तटा-रचनाविशेषवन्तः समूहाः। इयं च ग्रैवेयकादिविमानवासिता कर्म्मणः सकाशात् भवतीति कर्म्मणः त्रिस्थानकमाह —'जीवाण'मित्यादि, सूत्राणि षट्, तत्र त्रिभिः स्थानैः-स्त्रीवेदादिभिर्निर्वर्त्तितान्-अर्जितान् पुद्गलान् पापकर्म्मतया अशुभकर्म्मत्वेनोत्तरोत्तराशुभाध्यवसायतश्चितवन्तः-आसंकलनत एवमुपचितवन्तः-परिपोषणत एव बद्धवन्तो-निर्मापणतः उदीरितवन्तः-अध्यवसायवशेनानुदीर्णोदयप्रवेशनतः वेदितवन्तः अनुभवनतः निर्जरितवन्तः प्रदेशपरिशाटनतः, संग्रहणीगाथार्द्धमत्र—'एवं चिणउवचिणबंधउदीरवेय तह निज्जरा चेव'त्ति 'एव'-मिति यथैकं कालत्रयाभिलापेनोक्तं तथा सर्वाण्यपीति। कर्म्म च पुद्गलात्मकमिति पुद्गलस्कन्धान् प्रति त्रिस्थानकमाह—'तिपएसिए'त्यादि, स्पष्टमिति, सर्वसूत्रेषु व्याख्यातशेषं कण्ठ्यमिति॥ त्रिस्थानकस्य चतुर्थोद्देशकः समाप्तः॥ तत्समाप्तौ च श्रीमदभयदेवसूरिविरचितस्थानाङ्गविवरणे तृतीयं त्रिस्थानकाख्यमध्ययनं समाप्तमिति। समाप्तं तृतीयमध्ययनम् ॥

इति श्रीमदभयदेवसूरिवरविहितविवरणयुतं त्रिस्थानकाख्यं तृतीयमध्ययनं समाप्तम् ।

व्याख्यातं तृतीयमध्ययनम्, अधुना संख्याक्रमसंबद्धमेव चतुःस्थानकाख्यं चतुर्थमारभ्यते, अस्य चायं पूर्वेण सह विशेषसम्बन्धः- अनन्तराध्ययने विचित्रा जीवाजीवद्रव्यपर्याया उक्ता इहापि त एवोच्यन्ते, इत्यनेन सम्बन्धेनायातस्यास्य चतुरुद्देशकस्य चतुरनुयोगद्वारस्य सूत्रानुगमे प्रथमोद्देशकादिसूत्रमेतत्–

चत्तारि अंतकिरियातो पं० तं०—तत्थ खलु पढमा इमा अंतकिरिया–अप्पकम्मपचायाते यावि भवति, से णं मुंडे भवित्ता अगारातो अणगारियं पव्वतिते संजमबहुले संवरबहुले समाहिबहुले लूहे तीरट्ठी उवहाणवं दुक्खक्खवे तवस्सी तस्स णं णो तहप्पगारे तवे भवति णो तहप्पगारा वेयणा भवति तहप्पगारे पुरिसज्जाते दीहेणं परितातेणं सिज्झति बुज्झति मुचति परिणिव्वाति सव्वदुक्खाणमंतं करेइ, जहा से भरहे राया चाउरंतचक्कवट्टी, पढमा अंतकिरिया १, अहावरा दोचा अंतकिरिया, महाकम्मे पचाजाते यावि भवति, से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वतिते, संजमबहुले संवरबहुले जाव उवहाणवं दुक्खक्खवे तवस्सी, तस्स णं तहप्पगारे तवे भवति तहप्पगारा वेयणा भवति, तहप्पगारे पुरिसजाते निरुद्धेणं परितातेणं सिज्झति जाव अंतं करेति जहा से गतसूमाले अणगारे, दोचा अंतकिरिया २, अहावरा तचा अंतकिरिया, महाकम्मे पचायाते यावि भवति, से णं मुंडे भवित्ता अगारातो अणगारियं पव्वतिते, जहा दोचा, नवरं दीहेणं परितातेणं सिज्झति जाव सव्वदुक्खाणमंतं करेति, जहा से सणंकुमारे राया चाउरंतचक्कवट्टी, तचा अंतकिरिया ३, अहावरा चउत्था अंतकिरिया अप्पकम्मपचायाते यावि भवति, से णं मुंडे भवित्ता जाव पव्वतिते संजमबहुले जाव

तस्स णं णो तहप्पगारे तवे भवति णो तहप्पगारा वेयणा भवति, तहप्पगारे पुरिसजाए णिरुद्धेणं परितालेण सिज्झति जाव सव्वदुक्खाणमन्तं करेति, जहा सा मरुदेवा भगवती, चउत्था अंतकिरिया ४ (सू०२३५)।

अस्य चायमभिसम्बन्धः–अनन्तरोद्देशकस्योपान्त्यसूत्रे कर्म्मणश्चयाद्युक्तमिह तु कर्म्मणस्तत्कार्यस्य वा भवस्यान्तक्रियोच्यत इति, अथवा श्रुतं मयाऽऽयुष्मता भगवतैवमाख्यातमित्यभिधाय यत्तदाख्यातं तदभिहितं तथेदमपरं तेनैवाख्यातं यत्तदुच्यत इत्येवंसम्बन्धस्यास्य व्याख्या–अन्तक्रिया–भवस्यान्तकरणम् तत्र यस्य न तथाविधं तपो नापि परीषहादिजनिता तथाविधा वेदना दीर्घेण च प्रव्रज्यापर्यायेण सिद्धिर्भवति तस्यैका १ यस्य तु तथाविधे तपोवेदने अल्पेनैव च प्रव्रज्यापर्यायेण सिद्धिः स्यात् तस्य द्वितीया २ यस्य च प्रकृष्टे तपोवेदने दीर्घेण च पर्यायेण सिद्धिस्तस्य तृतीया ३ यस्य पुनरविद्यमानतथाविधतपोवेदनस्य ह्रस्वपर्यायेण सिद्धिस्तस्य चतुर्थीति, अन्तक्रियाया एकस्वरूपत्वेऽपि सामग्रीभेदात् चातुर्विध्यमिति समुदायार्थः, अवयवार्थस्त्वयं–चतस्रोऽन्तक्रियाः प्रज्ञप्ता भगवतेति गम्यते, 'तत्रे'ति सप्तमी निर्द्धारणे तासु चतसृषु मध्ये इत्यर्थः, खलुर्वाक्यालङ्कारे, इयमनन्तरं वक्ष्यमाणत्वेन प्रत्यक्षासन्ना प्रथमा, इतरापेक्षया आद्या अन्तक्रिया, इह कश्चित्पुरुषः देवलोकादौ यात्वा ततोऽल्पैः–स्तोकैः कर्म्मभिः करणभूतैः प्रत्यायातः–प्रत्यागतो मानुषत्वं इति अल्पकर्मप्रत्यायातो य इति गम्यते, अथवा एकत्र जनित्वा ततोऽल्पकर्मा सन् यः प्रत्यायातः स तथा, लघुकर्मतयोत्पन्न इत्यर्थः, चकारो वक्ष्यमाणमहाकर्म्मापेक्षया समुच्चयार्थः, अपि सम्भावने, सम्भाव्यतेऽयमपि पक्ष इत्यर्थः, भवति–स्यात्, स इति असौ, णं वाक्यालङ्कारे, मुण्डो भूत्वा द्रव्यतः शिरोलोचेन भावतो रागाद्यपनयनेन अगाराद्–द्रव्यतो गेहाद्भावतः संसाराभिनन्दिदेहिनामावासभूतादविवेकगेहान्निष्क्रम्येति गम्यते अनगारितां–अगारी–गृही असंयतः तत्प्रतिषेधादनगारी–संयतस्तद्भावस्तत्ता तां

साधुतामित्यर्थः, प्रव्रजितः-प्रगतः प्राप्त इत्यर्थः, अथवा विभक्तिपरिणामादनगारितया-निर्ग्रन्थतया 'प्रव्रजितः' प्रव्रज्यां प्रतिपन्नः, किंभूत इत्याह-'संजमबहुले'त्ति संयमेन-पृथिव्यादिसंरक्षणलक्षणेन बहुलः-प्रचुरो यः स तथा, संयमो वा बहुलो यस्य स तथा, एवं संवरबहुलोऽपि, नवरमाश्रवनिरोधः संवरः, अथवा इन्द्रियकषायनिग्रहादिभेदः, एवं च संयमबहुलग्रहणं प्राणातिपातविरतेः प्राधान्यख्यापनार्थं, यतः—"एक्कं चिय एत्थ वयं निद्दिट्ठं जिणवरेहिं सव्वेहिं। पाणाइवायविरमणमवसेसा तस्स रक्खट्ठा ॥१॥" इति, एतच्च द्वितयमपि रागाद्युपशमयुक्तचित्तवृत्तेर्भवति, अत आह-समाधिबहुलः, समाधिस्तु-प्रशमवाहिता ज्ञानादिर्वा, समाधिः पुनर्निःस्नेहस्यैव भवतीत्याह-'लूहे' रुक्षः-शरीरे मनसि च द्रव्यभावस्नेहवर्जितत्वेन परुषः, लूषयति वा कर्म्ममलमपनयतीति लूषः, कथमसावेवं संवृत्त इत्याह-यतः "तीरट्ठी" तीरं-पारं भवार्णवस्यार्थयत इत्येवंशीलस्तीरार्थी तीरस्थायी वा तीरस्थितिरिति वा प्राकृतत्वात् तीरट्ठेत्ति, अत एव 'उवहाणवं'ति उपधीयते-उपष्टभ्यते श्रुतमनेनेति उपधानं श्रुतविषयस्तपउपचार इत्यर्थः तद्वान्, अत एव—'दुक्खक्खवे'त्ति दुःखम्-असुखं तत्कारणत्वाद्वा कर्म्म तत् क्षपयतीति दुःखक्षपः, कर्म्मक्षपणं च तपोहेतुकमित्यत आह-'तवस्सी'ति तपोऽभ्यन्तरं कर्म्मेन्धनदहनज्वलनकल्पमनवरतशुभध्यानलक्षणमस्ति यस्य स तपस्वी, 'तस्स णं'ति यश्चैवंविधस्तस्य णं वाक्यालङ्कारे नो तथाप्रकारम्-अत्यन्तघोरं वर्द्धमानजिनस्येव तपः-अनशनादि भवति, तथा नो तथाप्रकारा-अतिघोरैवोपसर्गादिसम्पाद्या वेदना-दुःखासिका भवति, अल्पकर्म्मप्रत्यायातत्वादिति, ततश्च तत्तथाप्रकारमल्पकर्म्मप्रत्यायातादिविशेषणकलापोपेतं पुरुषजातं-पुरुषप्रकारो 'दीर्घेण' बहुकालेन 'पर्यायेण' प्रव्रज्यालक्षणेन करणभूतेन सिद्ध्यति-अणिमादियोगेन निष्ठितार्थो वा विशेषतः सिद्धिगमनयो-

१ अत्र—एकमेवात्र व्रतं सर्वैर्जिनवरैर्निर्दिष्टम्। प्राणातिपातविरमणमवशेषाणि तस्य रक्षार्थं ॥१॥

ग्यो वा भवति, सकलकर्म्मनायकमोहनीयघातात्, ततो घातिचतुष्टयघातेन बुध्यते केवलज्ञानभावात् समस्तवस्तूनि, ततो मुच्यते भवोपग्राहिकर्मभिः, ततः परिनिर्व्वाति-सकलकर्म्मकृतविकारव्यतिकरनिराकरणेन शीतीभवतीति, किमुक्तं भवतीत्याह-सर्वदुःखानामन्तं करोति, शारीरमानसानामित्यर्थः, अतथाविधतपोवेदनो दीर्घेणापि पर्यायेण किं कोऽपि सिद्धः ? इति शङ्कापनोदार्थमाह-'जहा से' इत्यादि, यथाऽसौ यः प्रथमजिनप्रथमनन्दनो नन्दनशताग्रजन्मा भरतो राजा चत्वारोऽन्ताः-पर्यन्ताः पूर्वदक्षिणपश्चिमसमुद्रहिमवल्लक्षणा यस्याः पृथिव्याः सा चतुरन्ता तस्या अयं स्वामित्वेनेति चातुरन्तः स चासौ चक्रवर्त्ती चेति स तथा, स हि प्राग्भवे लघूकृतकर्म्मा सर्वार्थसिद्धविमानाच्च्युत्वा चक्रवर्त्तितयोत्पद्य राज्यावस्थ एव केवलमुत्पाद्य कृतपूर्वलक्षप्रव्रज्यः अतथाविधतपोवेदन एव सिद्धिमुपगत इति प्रथमान्तक्रियेति १, 'अहावरे'ति 'अथ' अनन्तरमपरा पूर्वापेक्षयाऽन्या द्वितीयस्थानेऽभिधानात् द्वितीया महाकर्म्मभिः-गुरुकर्म्मभिर्महाकर्मा सन् प्रत्यायातः प्रत्याजातो वा यः स तथा, 'तस्स णं'मिति, तस्य-महाकर्म्मप्रत्यायातत्वेन तत्क्षपणाय तथाप्रकारं घोरं तपो भवति, एवं वेदनाऽपि, कर्मोदयसम्पाद्यत्वादुपसर्गादीनामिति, 'निरुद्धेने'ति अल्पेन यथाऽसौ गजसुकुमारो विष्णुलघुभ्राता, स हि भगवतोऽरिष्टनेमिजिननाथस्यान्तिके प्रव्रज्यां प्रतिपद्य श्मशाने कृतकायोत्सर्गलक्षणमहातपाः शिरोनिहितजाज्वल्यमानाङ्गारजनितात्यन्तवेदनोऽल्पेनैव पर्यायेण सिद्धवानिति, शेषं कण्ठ्यम् २, 'अहावरे'त्यादि कण्ठ्यं, यथाऽसौ सनत्कुमार इति चतुर्थचक्रवर्त्ती, स हि महातपा महावेदनश्च सरोगत्वात् दीर्घतरपर्यायेण सिद्धः, तद्भवे सिद्ध्यभावेन भवान्तरे सेत्स्यमानत्वादिति ३, 'अहावरे' त्यादि कण्ठ्यं, यथाऽसौ मरुदेवी प्रथमजिनजननी, सा हि स्थावरत्वेऽपि क्षीणप्रायकर्म्मत्वेनाल्पकर्मा अविद्यमानतपोवेदना च सिद्धा, गजवराहढाया एवायुःसमाप्तौ सिद्धत्वादिति ४, एतेषां च दृष्टान्तदार्ष्टान्तिकानामर्थानां न सर्वथा साधर्म्यमन्वेष-

णीयम्, देशदृष्टान्तत्वादेषां, यतो मरुदेव्या 'मुण्डे भवित्ते'त्यादिविशेषणानि कानिचिन्न घटन्ते, अथवा फलतः सर्वसाधर्म्यमपि मुण्डनादिकार्यस्य सिद्धस्य सिद्धत्वादिति।

पुरुषविशेषाणामन्तक्रियोक्ता, अधुना तेषामेव स्वरूपनिरूपणाय दृष्टान्तदार्ष्टान्तिकसूत्राणि षड्विंशतिमाह—

चत्तारि रुक्खा पं० तं०—उन्नए नामेगे उन्नए १ उन्नते नाममेगे पणते २ पणते नाममेगे उन्नते ३ पणते नाममेगे पणते ४, १। एवामेव चत्तारि पुरिसजाता पं० तं०—उन्नते नामेगे उन्नते, तहेव जाव पणते नामेगे पणते २। चत्तारि रुक्खा पं० तं०—उन्नते नाममेगे उन्नतपरिणए १ उण्णए नाममेगे पणतपरिणते २ पणते णाममेगे उन्नतपरिणते ३ पणए नाममेगे पणयपरिणए ४, ३। एवामेव चत्तारि पुरिसजाया पं० तं०—उन्नते नाममेगे उन्नयपरिणते चउभंगो ४, ४। चत्तारि रुक्खा पं० तं०—उन्नते नामेगे उन्नतरूवे तहेव चउभंगो ४, ५। एवामेव चत्तारि पुरिसजाया पं० तं०—उन्नए नामं० ४, ६। चत्तारि पुरिसजाया पं० तं०—उन्नते नाममेगे उन्नतमणे उन्न० ४, ७। एवं संकप्पे ८ पन्ने ९ दिट्ठी १० सीलायारे ११ ववहारे १२ परक्कमे १३ एगे पुरिसजाए पडिवक्खो नत्थि। चत्तारि रुक्खा पं० तं०—उज्जू नाममेगे उज्जू उज्जू नाममेगे वंके, चउभंगो ४, एवामेव चत्तारि पुरिसजाता पं० तं०—उज्जू नाममेगे ४, एवं जहा उन्नतपणतेहिं गमो तहा उज्जुवंकेहिवि भाणियव्वो, जाव परक्कमे। २६ (सू० २३६)।

कण्ठ्यं, किन्तु वृश्चन्ते-छिद्यन्ते इति वृक्षाः, ते विवक्षया चत्वारः प्रज्ञप्ता भगवता, तत्र उन्नतः-उच्चो द्रव्यतया 'नामे'ति सम्भावने वाक्यालङ्कारे वा 'एकः' कश्चिद्वृक्षविशेषः, स एव पुनरुन्नतो-जात्यादिभावतोऽशोकादिरित्येको भङ्गः, उन्नतो नाम द्रव्यत एव एकः अन्यः प्रणतो-जात्यादिभावैर्हीनो निम्बादिरित्यर्थः इति द्वितीयः, प्रणतो नामैको द्रव्यतः खर्व्व इत्यर्थः स एव उन्नतो जात्यादिना भावेनाशोकादिरिति तृतीयः, प्रणतो द्रव्यत एव खर्व्वः स एव प्रणतो जात्यादिहीनो निम्बादिरिति चतुर्थः, अथवा पूर्वमुन्नतः-तुङ्गः अधुनाऽप्युन्नतस्तुङ्ग एवेत्येवं कालापेक्षया चतुर्भङ्गीति १, 'एव'मित्यादि, एवमेव वृक्षवच्चत्वारि पुरुषजातानि-पुरुषप्रकारा अनगारा अगारिणो वा, उन्नतः पुरुषः कुलैश्वर्यादिभिर्लौकिकगुणैः शरीरेण वा गृहस्थपर्याये पुनरुन्नतो लोकोत्तरैर्ज्ञानादिभिः प्रव्रज्यापर्याये अथवा उन्नत उत्तमभवत्वेन पुनरुन्नतः शुभगतित्वेन कामदेवादिवदित्येकः 'तहेव'त्ति वृक्षसूत्रमिवेदं, 'जाव'त्ति यावत् 'पणए नामं एगे पणए'त्ति चतुर्थभङ्गकस्तावद् वाच्यं, तत्र उन्नतस्तथैव प्रणतस्तु ज्ञानविहारादिहीनतया दुर्गतिगमनाद्वा शिथिलत्वे शैलकराजर्षिवत् ब्रह्मदत्तवद्वेति द्वितीयः, तृतीयः पुनरागतसंवेगः शैलकवत् मेतार्यवद्वा, चतुर्थ उदायिनृपमारकवत्कालशौकरिकवद्वेति २, एवं दृष्टान्तदार्ष्टान्तिकसूत्रे सामान्यतोऽभिधाय तद्विशेषसूत्राण्याह-उन्नतः तुङ्गतया एको वृक्षः उन्नतपरिणतः अशुभरसादिरूपमनुन्नतत्वमपहाय शुभरसादिरूपोन्नततया परिणत इत्येकः, द्वितीये भङ्गे प्रणतपरिणत उक्तलक्षणोन्नतत्वत्यागात्, एतदनुसारेण तृतीयचतुर्थौ वाच्यौ, विशेषसूत्रता चास्य पूर्वमुन्नतत्वप्रणतत्वे सामान्येनाभिहिते इह तु पूर्वावस्थातोऽवस्थान्तरगमनेन विशेषिते इति, एवं दार्ष्टान्तिकेऽपि परिणतसूत्रमवगन्तव्यमिति ४, परिणामश्चाकारबोधक्रियाभेदात् त्रिधा, तत्राकारमाश्रित्य रूपसूत्रं, तत्र उन्नतरूपः संस्थानावयवादिसौन्दर्यात् ५, गृहस्थपुरुषोऽप्येवं, प्रव्रजितस्तु संविग्नसाधुनेपथ्यधारीति ६, बोधपरिणामापेक्षाणि चत्वारि सूत्राणि, तत्र

उन्नतो जात्यादिगुणैरुच्चतया वा उन्नतमनाः–प्रकृत्या औदार्यादियुक्तमनाः, एवमन्येऽपि त्रयः, 'एव'मिति सङ्कल्पादिसूत्रेपु चतुर्भङ्गिकातिदेशोऽकारि लाघवार्थं, सङ्कल्पो–विकल्पो मनोविशेप एव विमर्श इत्यर्थः, उन्नतत्वं चास्यौदार्यादियुक्ततया सदर्थविपयतया वा ८, प्रकृष्टं ज्ञानं प्रज्ञा, सूक्ष्मार्थविवेचकत्वमित्यर्थः, तस्यांश्चोन्नतत्वमविसंवादितया ९, तथा दर्शनं दृष्टिः–चक्षुर्ज्ञानं नयमतं वा, तदुन्नतत्वमप्यसंवादितयैवेति १०, क्रियापरिणामापेक्षमतः सूत्रत्रयम्, तत्र शीलाचारः, शीलं–समाधिस्तत्प्रधानस्तस्य वाऽऽचारः–अनुष्ठानं शीलेन वा–स्वभावेनाचार इति, उन्नतत्वं चास्यादूषणतया, वाचनान्तरे तु शीलसूत्रमाचारसूत्रं च भेदेनाधीयत इति ११, व्यवहारः–अन्योऽन्यदानग्रहणादिर्विवादो वा, उन्नतत्वमस्य श्लाघ्यत्वेनेति १३, पराक्रमः–पुरुपकारविशेपः परेपां वा–शत्रूणामाक्रमणं, तस्योन्नतत्वमप्रतिहतत्वेन शोभनविपयत्वेन चेति १२, उन्नतविपर्ययः सर्वत्र प्रणतत्वं भावनीयमिति, 'एगे पुरी'त्यादि, एतेपु मनःप्रभृतिपु सप्तसु चतुर्भङ्गिकासूत्रेपु एक एव पुरुपजातालापकोऽध्येतव्यः, प्रतिपक्षो–द्वितीयपक्षो दृष्टान्तभूतः वृक्षसूत्रं नास्ति, नाध्येतव्यमितियावत् , इह मनःप्रभृतीनां दार्ष्टान्तिकपुरुपधर्माणां दृष्टान्तभूतवृक्षेष्वसम्भवादिति। 'उज्जु' त्ति ऋजुः–अवक्रो नामेति पूर्ववदेकः कश्चिद्वृक्षः तथा ऋजुः अविपरीतस्वभाव औचित्येन फलादिसम्पादनादित्येकः, द्वितीये द्वितीयं पदं वङ्क इति–वक्रः, फलादौ विपरीतः, तृतीये प्रथमपदं वक्रः–कुटिलः चतुर्थः सुज्ञानः, अथवा पूर्वं ऋजुरवक्रः, पश्चादपि ऋजुः–अवक्रोऽथवा मूले ऋजुरन्ते च ऋजुरित्येवं चतुर्भङ्गी कार्येत्येप दृष्टान्तः १, पुरुपस्तु ऋजुः–अवक्रो वहिस्तात् शरीरगतिवाक्चेष्टादिभिस्तथा ऋजुरन्तर्निर्म्मायत्वेन सुसाधुवदित्येकः, तथा ऋजुस्तथैव 'वङ्क' इति तु वक्रः अन्तर्मायित्वेन कारणवशप्रयुक्तार्जवभावदुःसाधुवदिति द्वितीयः, तृतीयस्तु कारणवशाद्दर्शितवहिरनार्जवोऽन्तर्निर्माय इति प्रवचनगुप्तिरक्षाप्रवृत्तसाधुवदिति, चतुर्थ उभयतो वक्रः, तथाविधशठवदिति, काल-

भेदेन वा व्याख्येयम् २। अथ ऋजु ऋजुपरिणत इत्यादिका एकादश चतुर्भङ्गिका लाघवार्थमतिदेशेनाह—'एव'मित्यनेन ऋजुर्नाम ऋजुरित्यादिनोपदर्शितक्रममङ्गकक्रमेण 'यथे'ति येन प्रकारेण परिणतरूपादिविशेषणनवकविशेषिततयेत्यर्थः, उन्नतप्रणताभ्यां परस्परं प्रतिपक्षभूताभ्यां गमः-सदृशपाठः कृतः, 'तथा' तेन प्रकारेण परिणतरूपादिविशेषिताभ्यामित्यर्थः, ऋजुवक्राभ्यामपि भणितव्यः, कियान् स इत्याह-'जाव परक्कमे'त्ति, ऋजुवक्रवृक्षसूत्रात्त्रयोदशसूत्रं यावदित्यर्थः, तत्र च ऋजु २ ऋजुपरिणत २ ऋजुरूप २ लक्षणानि षट् सूत्राणि वृक्षदृष्टान्तपुरुषदार्ष्टान्तिकस्वरूपाणि, शेषाणि तु मनःप्रभृतीनि सप्त अदृष्टान्तानीति १३।

पुरुषविचार एवेदमाह—

पडिमापडिवन्नस्स णं अणगारस्स कप्पंति चत्तारि भासातो भासित्तए, तं०—जायणी पुच्छणी अणुन्नवणी पुट्ठस्स वागरणी (सू० २३७) चत्तारि भासाजाता पं०तं०—सच्चमेगं भासज्जायं बीयं मोसं तइयं सच्चमोसं चउत्थं असच्चमोसं ४ (सू० २३८) चत्तारि वत्था, पं० तं०—सुद्धे णामं एगे सुद्धे १ सुद्धे णामं एगे असुद्धे २ असुद्धे णामं एगे सुद्धे ३ असुद्धे णामं एगे असुद्धे ४, एवामेव चत्तारि पुरिसजाता पं० तं०—सुद्धे णामं एगे सुद्धे चउभंगो ४, एवं परिणतरूवे वत्था सपडिवक्खा, चत्तारि पुरिसजाता पं० तं०—सुद्धे णामं एगे सुद्धमणे चउभंगो ४, एवं संकप्पे जाव परक्कमे (सू०२३९)।

स्फुटं, परं प्रतिमा-भिक्षुप्रतिमा द्वादश समयप्रसिद्धास्ताः प्रतिपन्नः-अभ्युपगतवान् यस्तस्य, याच्यतेऽनयेति याचनी पानकादेः

दाहिसि मे एत्तो अन्नतरं पाणगजायमित्यादिसमयप्रसिद्धक्रमेण, तथा प्रच्छनी मार्गादेः कथञ्चित्सूत्रार्थयोर्वा, तथा अनुज्ञापनी अवग्रहस्य तथा पृष्टस्य केनाप्यर्थादेर्व्याकरणी—प्रतिपादनीति ॥ भाषाप्रस्तावाद्भाषाभेदानाह—'चत्तारि भासे'त्यादि, जातम्—उत्पत्तिधर्म्मकं तच्च व्यक्तिवस्तु, अतो भाषाया जातानि—व्यक्तिवस्तूनि भेदाः—प्रकाराः भाषाजातानि, तत्र सन्तो मुनयो गुणाः पदार्था वा तेभ्यो हितं सत्यमेकं—प्रथमं सूत्रक्रमापेक्षया भाष्यते सा तया वा भाषणं वा भाषा—काययोगगृहीतवाग्योगनिसृष्टभाषाद्रव्यसंहतिः तस्या जातं—प्रकारो भाषाजातं अस्त्यात्मेत्यादिवत्, द्वितीयं सूत्रक्रमादेव 'मोसं'ति प्राकृतत्वान्मृषा—अनृतं नास्त्यात्मेत्यादिवत्, तृतीयं सत्यमृषा—तदुभयस्वभावं आत्माऽस्त्यकर्त्तेत्यादिवत्, चतुर्थमसत्यामृषा—अनुभयस्वभावं देहीत्यादिवदिति, भवतश्चात्र गाथे—"[1]सच्चा हिया सतामिह संतो मुणओ गुणा पयत्था वा। तव्विवरीया मोसा मीसा जा तदुभयसहावा ॥१॥ अणहिगया जा तीसुवि सद्दो च्चिय केवलो असच्चमुसा। एया सभेयलक्खण सोदाहरणा जहा सुत्ते ॥२॥" इति, पुरुषभेदनिरूपणायैवेयं त्रयोदशसूत्री—'चत्तारि वत्थे'-त्यादि, स्पष्टा, नवरं शुद्धं वस्त्रं निर्मलतन्त्वादिकारणारब्धत्वात् पुनः शुद्धमागन्तुकमलाभावादिति, अथवा पूर्वं शुद्धमासीदिदानीमपि शुद्धमेव, विपक्षौ सुज्ञानावेवेति, अथ दार्ष्टान्तिकयोजना 'एवमेवे'त्यादि, शुद्धो जात्यादिना पुनः शुद्धो निर्म्मलज्ञानादिगुणतया कालापेक्षया वेति 'चउभंगो'त्ति चत्वारो भङ्गाः समाहृताः चतुर्भङ्गी चतुर्भङ्गं वा, पुंल्लिङ्गता चात्र प्राकृतत्वात्, तदयमर्थो—वस्त्रवच्चत्वारो भङ्गाः पुरुषेऽपि वाच्या इति। 'एव'मिति यथा शुद्धात् शुद्धपदे परे चतुर्भङ्गं सदार्ष्टान्तिकं वस्त्रमुक्तमेवं शुद्धपदप्राक्पदे परिण-

१ सत्या हिता सतामिह सन्तो मुनयो गुणाः पदार्था वा। तद्विपरीता मृषा मिश्रा सा या तदुभयस्वभावा ॥१॥ या तिसृष्वपि अनधिकृता केवलः शब्द एव साऽसत्यमृषा॥ एताः सभेदलक्षणाः सोदाहरणा यथा सूत्रे ॥२॥

तपदे रूपपदे च चतुर्भङ्गानि वस्त्राणि 'सपडिवक्ख'त्ति सप्रतिपक्षाणि सदार्ष्टान्तिकानि वाच्यानीति, तथाहि—चत्तारि वत्था पन्नत्ता, तंजहा—सुद्धे नामं एगे सुद्धपरिणए चतुर्भङ्गी, 'एवमेवे'त्यादि पुरुषजातसूत्रचतुर्भङ्गी, एवं सुद्धे नामं एगे सुद्धरूवे चतुर्भङ्गी, एवं पुरुषेणापि, व्याख्या तु पूर्ववत्। 'चत्तारी'त्यादि, शुद्धो बहिः शुद्धमना अन्तः एवं शुद्धसङ्कल्पः शुद्धप्रज्ञः शुद्धदृष्टिः शुद्धशीलाचारः शुद्धव्यवहारः शुद्धपराक्रम इति वस्त्रवर्जाः पुरुषा एव चतुर्भङ्गवन्तो वाच्याः, व्याख्या च प्रागिवेति, अत एवाह—'एव'मित्यादि।

पुरुषभेदाधिकार एवेदमाह—

चत्तारि सुता पं० तं०—अतिजाते अणुजाते अवजाते कुलिंगाले (सू० २४०) चत्तारि पुरिसजाता पं० तं०—सच्चे नामं एगे सच्चे, सच्चे नामं एगे असच्चे ४, एवं परिणते जाव परक्कमे, चत्तारि वत्था पं० तं०—सुतीनामं एगे सुती, सुईनामं एगे असुई, चउभंगो ४, एवामेव चत्तारि पुरिसजाता, पं० तं०—सुतीणामं एगे सुती, चउभंगो, एवं जहेव सुद्धेणं वत्थेणं भणितं तहेव सुतिणावि, जाव परक्कमे (सू० २४१) चत्तारि कोरवा पं० तं०—अंबपलंबकोरवे तालपलंबकोरवे वल्लिपलंबकोरवे मेंढविसाणकोरवे, एवामेव चत्तारि पुरिसजाता पं० तं०—अंबपलंबकोरवसमाणे तालपलंबकोरवसमाणे वल्लिपलंबकोरवसमाणे मेंढविसाणकोरवसमाणे (सू० २४२)।

सुताः—पुत्राः 'अइजाए'त्ति पितुः सम्पदमतिलङ्घ्य जातः—संवृत्तोऽतिक्रम्य वा तां यातः—प्राप्तो विशिष्टतरसम्पदं समृद्धतर इत्यर्थः इत्यतिजातोऽतियातो वा, ऋषभवत्, तथा 'अणुजाए'त्ति अनुरूपः, सम्पदा पितुस्तुल्यो जातोऽनुजातः अनुगतो वा पितृ-

विभूत्याऽनुयातः, पितृसम इत्यर्थः, महायशोवत्, आदित्ययशसा पित्रा तुल्यत्वात्तस्य, तथा 'अवजाए'त्ति अप इत्यपसदो हीनः पितुः सम्पदो जातोऽपजातः पितुः सकाशादीषद्धीनगुण इत्यर्थः, आदित्ययशोवत्, भरतापेक्षया तस्य हीनत्वात्, तथा 'कुलिङ्गाले'त्ति कुलस्य-स्वगोत्रस्याङ्गार इवाङ्गारो दूषकत्वादुपतापकत्वाद्वेति कण्डरीकवत्, एवं शिष्यचातुर्विध्यमप्यवसेयं, सुतशब्दस्य शिष्येष्वपि प्रवृत्तिदर्शनात् तत्रातिजातः सिंहगिर्यपेक्षया वैरस्वामिवत्, अनुजातः शय्यंभवापेक्षया यशोभद्रवत्, अपजातो भद्रबाहुस्वाम्यपेक्षया स्थूलभद्रवत्, कुलाङ्गारः कूलवालकवदुदायिनृपमारकवद्वेति। यथा 'चत्तारी'त्यादि, सत्यो यथावद्वस्तुभणनाद् यथाप्रतिज्ञातकरणाच्च, पुनः सत्यः संयमित्वेन सद्भ्यो हितत्वाद्, अथवा पूर्वं सत्य आसीदिदानीमपि सत्य एवेति चतुर्भङ्गी। एवंप्रकारसूत्राण्यतिदिशन्नाह—'एव'मित्यादि, व्यक्तं, नवरमेवं सूत्राणि—'चत्तारि पुरिसजाया पं० तं०-सच्चे नामं एगे सच्चपरिणए ४, एवं सच्चरूवे ४ सच्चमणे ४ सच्चसंकप्पे ४ सच्चपन्ने ४ सच्चदिट्ठी ४ सच्चसीलायारे ४ सच्चववहारे ४ सच्चपरक्कमेत्ति ४, पुरुषाधिकार एवेदमपरमाह—'चत्तारि वत्थे'त्यादि शुचि-पवित्रं स्वभावेन पुनः शुचि संस्कारेण कालभेदेन वेति, पुरुषचतुर्भङ्ग्यां शुचिः पुरुषोऽपूतिशरीरतया पुनः शुचिः स्वभावेनेति, सुइपरिणए सुइरूवे इत्येतत्सूत्रद्वयं दृष्टान्तदार्ष्टान्तिकोपेतम्, 'सुइमणे' इत्यादि च पुरुषमात्राश्रितमेव सूत्रसप्तकमतिदिशन्नाह-'एव'मित्यादि कण्ठ्यं। पुरुषाधिकार एवेदमपरमाह—'चत्तारि कोरवे'इत्यादि, तत्र आम्रः-चूतः तस्य प्रलम्बः-फलं तस्य कोरकं-तन्निष्पादकं मुकुलं आम्रप्रलम्बकोरकम्, एवमन्येऽपि, नवरम्-तालो वृक्षविशेषः, वल्ली-कालिङ्ग्यादिका, मेंढविषाणा-मेषशृङ्गसमानफला वनस्पतिजातिः, आउलिविशेष इत्यर्थः, तस्याः कोरकमिति विग्रहः, एतान्येव चत्वारि दृष्टान्ततयोपात्तानीति चत्वारीत्युक्तम्, न तु चत्वार्येव लोके कोरकाणि, बहुतरोपालम्भादिति, 'एवे'त्यादि सुगमं, नवरमुपनय एवं-

—यः पुरुषः सेव्यमान उचितकाले उचितमुपकारफलं जनयत्यसावाम्रप्रलम्बकोरकसमानः, यस्त्वतिचिरेण सेवकस्य कष्टेन महदुपकारफलं करोति स तालप्रलम्बकोरकसमानः, यस्तु अक्लेशेनाचिरेण च ददाति स वल्लीप्रलम्बकोरकसमानः, यस्तु सेव्यमानोऽपि शोभनवचनान्येव ब्रूते उपकारं तु न कञ्चन करोति स मेण्ढविषाणकोरकसमानः, तत्कोरकस्य सुवर्णवर्णत्वादखाद्यफलदायकत्वाच्चेति ॥

पुरुषाधिकार एव घुणसूत्रं—

चत्तारि घुणा पं० तं०—तयक्खाते छल्लिक्खाते कट्ठक्खाते सारक्खाते, एवामेव चत्तारि भिक्खागा पं० तं०—तयक्खायसमाणे जाव सारक्खायसमाणे, तयक्खातसमाणस्स णं भिक्खागस्स सारक्खातसमाणे तवे पण्णत्ते, सारक्खायसमाणस्स णं भिक्खागस्स तयक्खातसमाणे तवे पण्णत्ते, छल्लिक्खायसमाणस्स णं भिक्खागस्स कट्ठक्खायसमाणे तवे पण्णत्ते, कट्ठक्खायसमाणस्स णं भिक्खागस्स छल्लिक्खायसमाणे तवे पण्णत्ते (सू० २४३)।

त्वचं—बाह्यवल्कं खादतीति त्वक्खादः, एवं शेषा अपि, नवरं 'छल्लि'त्ति अभ्यन्तरं वल्कं काष्ठं—प्रतीतं सारः—काष्ठमध्यमिति दृष्टान्तः, 'एवमेवे'त्याद्युपनयसूत्रं, भिक्षणशीला भिक्षणधर्माणो भिक्षणे साधवो वा भिक्षाकाः, त्वक्खादेन घुणेन समानोऽत्यन्तं रूक्षतया आयामाम्लादिप्रान्ताहारभक्षकत्वात् त्वक्खादसमानः, एवं छल्लीखादसमानोऽलेपाहारकत्वात् काष्ठखादसमानो निर्विकृतिकाहारतया सारखादसमानः सर्वकामगुणाहारत्वादिति, एतेषां चतुर्णामपि भिक्षाकाणां तपोविशेषाभिधानसूत्रं 'तयक्खाये'त्यादि,

सुगमं, केवलमयं भावार्थः-त्वक्कल्पासाराहाराभ्यवहर्तुर्निरभिष्वङ्गत्वात् कर्म्मभेदमङ्गीकृत्य वज्रसारं तपो भवतीत्यतोऽपदिश्यते— 'सारक्खायसमाणे तवे'त्ति सारखादघुणस्य सारखादत्वादेव समर्थत्वात् वज्रतुण्डत्वाच्चेति, सारखादसमानस्योक्तलक्षणस्य साभिष्वङ्गतया त्वक्खादसमानं कर्म्मसारभेदं प्रत्यसमर्थं तपः स्यात्, त्वक्खादकघुणस्य हि तत्त्वादेव सारभेदनं प्रत्यसमर्थत्वादिति, तथा छल्लीखादघुणसमानस्य भिक्षाकस्य त्वक्खादघुणसमानापेक्षया किञ्चिद्विशिष्टभोजित्वेन किञ्चित्साभिष्वङ्गत्वात् सारखादकाष्ठखादघुणसमानापेक्षया त्वसारभोजित्वेन निरभिष्वङ्गित्वाच्च कर्मभेदं प्रति काष्ठखादघुणसमानं तपः प्रज्ञप्तं, नातितीव्रं, सारखादघुणवत्, नाप्यतिमन्दादि, त्वक्छल्लीखादघुणवदिति भावः, तथा काष्ठखादघुणसमानस्य साधोः सारखादघुणसमानापेक्षया असारभोजित्वेन निरभिष्वङ्गत्वात्, त्वक्छल्लीखादघुणसमानापेक्षया सारतरभोजित्वेन साभिष्वङ्गत्वाच्च छल्लीखादघुणसमानं तपः प्रज्ञप्तं, कर्म्मभेदं प्रति न सारखादकाष्ठखादघुणवदतिसमर्थादि नापि त्वक्खादघुणवदतिमन्दमिति भावः, प्रथमविकल्पे प्रधानतरं तपो द्वितीयेऽप्रधानतरं, तृतीये प्रधानं, चतुर्थेऽप्रधानमिति ॥

अनन्तरं वनस्पत्यवयवखादका घुणाः प्ररूपिता इति वनस्पतिमेव प्ररूपयन्नाह—

चउव्विहा तणवणस्सतिकातिता पं० तं०—अग्गबीया मूलबीया पोरबीया खंधबीया (सू २४४) चउहिं ठाणेहिं अहुणोववण्णे णेरइए णेरइयलोगंसि इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तते, णो चेव णं संचातेइ हव्वमागच्छित्तते, अहुणोववण्णे नेरइए णिरयलोगंसि समुब्भूयं वेयणं वेयमाणे इच्छेज्जा माणुसं लोगं हव्वमा- ॥१७५॥

गच्छित्तने णो चेव णं संचातेति हव्वमागच्छित्तते १, अहुणोववन्ने णेरइए निरतलोगंसि णिरयपालेहिं भुज्जो २ अहिट्ठिज्जमाणे इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तते, णो चेव णं संचातेति हव्वमागच्छित्तते २, अहुणोववन्ने णेरइए णिरयवेयणिज्जंसि कम्मंसि अक्खीणंसि अवेतितंसि अणिज्जिन्नंसि इच्छेज्जा०, नो चेव णं संचाएइ ३, एवं णिरयाउअंमि कम्मंसि अक्खीणंसि जाव णो चेव णं संचातेति हव्वमागच्छित्तते ४, इच्चेतेहिं चउहिं ठाणेहिं अहुणोववन्ने नेरतिते जाव नो चेव णं संचातेति हव्वमागच्छित्तए ४ (सू०२४५)। कप्पंति णिग्गंथीणं चत्तारि संघाडीओ धारित्तए वा परिहरित्तते वा, तं०–एगं दुहत्थवित्थारं, दो तिहत्थवित्थारा एगं चउहत्थवित्थारं (सू०२४६)।

'चउव्विहे'त्यादि, वनस्पतिः प्रतीतः स एव कायः–शरीरं येषां ते वनस्पतिकायाः त एव वनस्पतिकायिकाः तृणप्रकारा वनस्पतिकायिकास्तृणवनस्पतिकायिका बादरा इत्यर्थः अग्रे बीजं येषां ते अग्रबीजाः–कोरिण्टकादयः, अग्रे वा बीजं येषां तेऽग्रबीजाः–व्रीह्यादयः, मूलमेव बीजं येषां ते मूलबीजाः–उत्पलकन्दादयः, एवं पर्वबीजा–इक्ष्वादयः, स्कन्धबीजाः–सल्लक्यादयः, स्कन्धः थुडमिति, एतानि च सूत्राणि नान्यव्यवच्छेदनपराणि, तेन बीजरुहसम्मूर्च्छनजादीनां नाभावो मन्तव्यः सूत्रान्तरविरोधादिति। अनन्तरं वनस्पतिजीवानां चतुःस्थानकमुक्तम्, अधुना जीवसाधर्म्यान्नारकजीवानाश्रित्य तदाह—'चउही'त्यादि सुगमं, केवलं 'ठाणेहिं'ति कारणैः 'अहुणोववन्ने'त्ति अधुनोपपन्नः–अचिरोपपन्नः, निर्गतमयं–शुभमस्मादिति निरयो–नरकस्तत्र भवो नैरयिकः, तस्य चानन्योपजिस्थानतां दर्शयितुमाह–निरयलोके, तस्मादिच्छेन्मानुषाणामयं मानुषस्तं लोकं–क्षेत्रविशेषं 'हव्वं' शीघ्रमागन्तुं, 'नो चेव'त्ति

नैव, णं वाक्यालङ्कारे, 'संचाएइ' सम्यक् शक्नोति आगन्तुं, 'समुब्भूयं'ति समुद्भूताम्-अतिप्रबलतयोत्पन्नां पाठान्तरेण 'सम्मुखभूताम्' एकहेलोत्पन्नां पाठान्तरेणामहतो महतो भवनं महद्भूतम् तेन सह या सा समहद्भूता तां समहद्भूतां वा वेदनां-दुःखरूपां वेदयमानः-अनुभवन् इच्छेदिति मनुष्यलोकागमनेच्छायाः कारणम् १, एतदेव चाशकनेस्य, तीव्रवेदनाभिभूतो हि न शक्त आगन्तुमिति, तथा निरयपालैः-अम्बादिभिः भूयो भूयः-पुनः पुनरधिष्ठीयमानः-समाक्रम्यमाणः आगन्तुमिच्छेदित्यागमनेच्छाकारणमेतदेव चागमनाशक्तिकारणं, तैरत्यन्ताक्रान्तस्यागन्तुमशक्तत्वादिति २, तथा निरये वेद्यने-अनुभूयते यत् निरययोग्यं वा यद्वेदनीयं तन्निरयवेदनीयं-अत्यन्ताशुभनामकर्म्मादि असातवेदनीयं वा तत्र कर्म्मणि अक्षीणे स्थित्या अवेदिते अननुभूतानुभागतया अनिर्जीर्णे-जीवप्रदेशेभ्योऽपरिशटिते इच्छेत् मानुषं लोकमागन्तुं न च शक्नोति, अवश्यवेद्यकर्म्मनिगडनियन्त्रितत्वादित्यागमनाशकन एव कारणमिति ३, तथा 'एव'मिति 'अहुणोववन्ने' इत्याद्यभिलापसंसूचनार्थं निरयायुष्के कर्म्मणि अक्षीणे यावत्करणात् अवेइए इत्यादि दृश्यमिति ४, निगमयन्नाह—'इच्चेएहिं'ति, इति एवंप्रकारैरेतैः-प्रत्यक्षैरनन्तरोक्तत्वादिति। अनन्तरं नारकस्वरूपमुक्तं, ते चासंयमोपष्टम्भकपरिग्रहादुत्पद्यन्त इति तद्विपक्षभूतं परिग्रहविशेषं चतुःस्थानकेऽवतारयन्नाह-'कप्पंती'त्यादि, कल्पन्ते-युज्यन्ते निर्गता ग्रन्थाद्-बन्धहेतोर्हिरण्यादेर्मिथ्यात्वादेश्चेति निर्ग्रन्थ्यः-साध्व्यस्तासां सङ्घाट्यः-उत्तरीयविशेषरूपा धारयितुं वा परिग्रहे परिहर्तुं वा परिभोक्तुमिति, द्वौ हस्तौ विस्तारः-पृथुत्वं यस्याः सा तथा, कल्पन्त इति क्रियापेक्षया कतृत्वाद् संघाटीनां, 'एगं दुहत्थवित्थारं, एगं चउहत्थवित्थारं' ति प्रथमा स्यात्तदर्थे च प्राकृतत्वात् द्वितीयोक्ता, धारयन्ति परिभुञ्जते चेति, प्रत्ययपरिणामेन वेति (वा) क्रियानुस्मृतेः द्वितीयैव, तत्र प्रथमा उपाश्रये भोग्या त्रिहस्तविस्तारयोरेका भिक्षागमने द्वितीया विचारभूमिगमने चतुर्थी समव-

सरणे, उक्तं च—"संघाडीओ चउरो तत्थ दुहत्था उवसयंमि॥ दुन्नि तिहत्थायामा भिक्खट्ठा एग एग उच्चारे । ओसरणे चउहत्था निसन्नपच्छायणी मसिणा ॥१॥" इति

नारकत्वं ध्यानविशेषाद्, ध्यानविशेषार्थमेव च संघाटयादिपरिग्रह इति ध्यानं प्रकरणत आह—

चत्तारि झाणा पं० तं०—अट्टे झाणे रोद्दे झाणे धम्मे झाणे सुक्के झाणे, अट्टे झाणे चउव्विहे पं० तं०—अमणुन्नसंपओगसंपउत्ते तस्स विप्पओगसतिसमण्णागते यावि भवति १, मणुन्नसंपओगसंपउत्ते तस्स अविप्पओगसतिसमण्णागते यावि भवति २ आयंकसंपओगसंपउत्ते तस्स विप्पओगसतिसमण्णागए यावि भवति ३, परिजुसितकामभोगसंपओगसंपउत्ते तस्स अविप्पओगसतिसमण्णागते यावि भवइ ४, अट्टस्स णं झाणस्स चत्तारि लक्खणा पं०, तं०—कंदणता सोतणता तिप्पणता परिदेवणता । रोद्दे झाणे चउव्विहे पं० तं०—हिंसाणुबंधि मोसाणुबंधि तेणाणुबंधि सारक्खणाणुबंधि, रुद्दस्सणं झाणस्स चत्तारि लक्खणा पं०, तं०—ओसण्णदोसे बहुदोसे अन्नाणदोसे आमरणंतदोसे । धम्मे झाणे चउव्विहे चउप्पडोयारे पं० तं०—आणाविजते अवायविजते विवागविजते संठाणविजते, धम्मस्स णं झाणस्स चत्तारि लक्खणा पं० तं०—आणारुइ णिसग्गरुई सुत्तरुई ओगाढरुची, धम्मस्स णं झाणस्स चत्तारि आलंबणा पं० तं०—वायणा पडिपुच्छणा परियट्टणा अणुप्पेहा, धम्मस्स णं झाणस्स चत्तारि अणुप्पेहाओ पं० तं०—एगाणुप्पेहा अणिच्चाणुप्पेहा असरणाणुप्पेहा संसाराणुप्पेहा,

१ संघाट्यश्चतस्रस्तत्र द्विहस्ता उपाश्रये ॥ द्वे त्रिहस्तायामे भिक्षार्थं एका उच्चारे चैका अवसरणे चतुर्हस्ता निषण्णप्रच्छादनी मसृणा ॥१॥

सुक्के झाणे चउव्विहे चउप्पडोआरे पं० तं०—पुहुत्तवितक्के सवियारी १, एगत्तवितक्के अवियारी २, सुहुमकिरिते अणियट्टी ३, समुच्छिन्नकिरिए अप्पडिवाती ४, सुक्कस्स णं झाणस्स चत्तारि लक्खणा पं० तं०—अव्वहे असम्मोहे विवेगे विउस्सग्गे, सुक्कस्स णं झाणस्स चत्तारि आलंबणा पं० तं०—खंती मुत्ती मद्दवे अज्जवे, सुक्कस्स णं झाणस्स चत्तारि अणुप्पेहाओ पं० तं०—अणंतवत्तियाणुप्पेहा विप्परिणामाणुप्पेहा असुभाणुप्पेहा अवायाणुप्पेहा ( सू० २४७ )।

सुगमं चैतन्नवरं–ध्यातयो ध्यानानि, अन्तर्मुहूर्त्तमात्रं कालं चित्तस्थिरतालक्षणानि, उक्तं च—"[१]अंतोमुहुत्तमित्तं चित्तावत्थाणमेगवत्थुम्मि । छउमत्थाणं झाणं जोगनिरोहो जिणाणं तु ॥१॥" इति, तत्र ऋतं–दुःखं तस्य निमित्तं तत्र वा भवं ऋते वा–पीडिते भवमार्त्तं ध्यानं–दृढोऽध्यवसायः हिंसाद्यतिक्रौर्यानुगत रौद्रं, श्रुतचरणधर्म्मादनपेतं धर्म्यं शोधयत्यष्टप्रकारं कर्म्ममलं शुचं वा क्लमयतीति शुक्लं, 'चउव्विहे'त्ति चतस्रो विधा–भेदा यस्य तत्तथा, अमनोज्ञस्य–अनिष्टस्य, असमणुन्नस्सत्ति पाठान्तरे अस्वमनोज्ञस्य–अनात्मप्रियस्य शब्दादिविषयस्य तत्साधनवस्तुनो वा सम्प्रयोगः–सम्बन्धस्तेन सम्प्रयुक्तः–सम्बद्धः अमनोज्ञसम्प्रयोगसम्प्रयुक्तो अस्वमनोज्ञसम्प्रयोगसम्प्रयुक्तो वा य इति गम्यते 'तस्ये'ति अमनोज्ञशब्दादेर्विप्रयोगाय–विप्रयोगार्थं स्मृतिः–चिन्ता तां समन्वागतः–समनुप्राप्तो भवति यः प्राणी सोऽभेदोपचारादार्त्तमिति, चापीतिशब्द उत्तरविकल्पापेक्षया समुच्चयार्थः, अथवा अमनोज्ञसम्प्रयोगसम्प्रयुक्तो यः प्राणी तस्य प्राणिनः विप्रयोगे–प्रक्रमादमनोज्ञशब्दादिवस्तूनां वियोजने स्मृतिः–चिन्तनं तस्याः समन्वागतं–

१ अन्तर्मुहूर्त्तमात्रं एकत्र वस्तुनि मनोऽवस्थानं । ध्यानं छद्मस्थानां जिनानां तु योगनिरोधः ॥१॥

समागमनं समन्वाहारो विप्रयोगस्मृतिसमन्वागतं, चापीति तथैव, भवति आर्त्तध्यानमिति प्रक्रमः, अथवा अमनोज्ञसम्प्रयोगसम्प्रयुक्ते प्राणिनि 'तस्ये'ति अमनोज्ञशब्दादेर्विप्रयोगस्मृतिसमन्वागतमार्त्तध्यानमिति, उक्तं च—"आर्त्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः" (तत्त्वार्थ० अ० ९ सू० ३१) इति प्रथममेवमुत्तरत्रापि, नवरं मनोज्ञं—वल्लभं धनधान्यादि अविप्रयोगः—अवियोग इति द्वितीयमार्त्तमिति, तथा आतङ्को—रोग इति तृतीयं, तथा 'परिजुसिय'त्ति निषेविताः ये कामाः—कमनीयाः भोगाः—शब्दादयोऽथवा कामौ—शब्दरूपे भोगाः—गन्धरसस्पर्शाः कामभोगाः कामानां वा—शब्दादीनां यो भोगस्तैस्तेन वा सम्प्रयुक्तः, पाठान्तरे तु तेषां तस्य वा सम्प्रयोगस्तेन सम्प्रयुक्तो यः स तथा, अथवा 'परिझुसिय'त्ति परिक्षीणो जरादिना स चासौ कामभोगसम्प्रयुक्तश्च यस्तस्य तेषामेवाविप्रयोगस्मृतेः समन्वागतं—समन्वाहारः, तदपि भवत्यार्त्तध्यानमिति चतुर्थं, द्वितीयं वल्लभधनादिविषयं चतुर्थं तत्सम्पाद्यशब्दादिभोगविषयमिति भेदोऽनयोर्भावनीयः, शास्त्रान्तरे तु द्वितीयचतुर्थयोरेकत्वेन तृतीयत्वम्, चतुर्थं तु तत्र निदानमुक्तं, उक्तं च—"अमणुन्नाणं सद्दाइविसयवत्थूण दोसमइलस्स । (वस्तूनि—शब्दादिसाधनानि दोसोत्ति द्वेषः) धणियं वियोगचिंतणमसंपओगाणुसरणं च ॥१॥ तह सूलसीसरोगाइवेयणाए विओगपणिहाणं । तयसंपओगचिंता तप्पडियाराउलमणस्स ॥२॥ इट्ठाणं विसयाईण वेयणाए य रागरत्तस्स । अविओगज्झवसाणं तह संजोगाभिलासो य ॥३॥ देविंदचक्कवट्टित्तणाइगुणरिद्धिपत्थणामइअं । अहमं नियाण-

---

१ शब्दादिविषयवस्तूनामनोज्ञानां द्वेषमलिनस्य वियोगचिंतनं बाढं असंप्रयोगानुस्मरणं च ॥१॥ तथा शूलशिरोरोगादिवेदनाया वियोगप्रणिधानं तदसम्प्रयोगचिन्ता तत्प्रतीकाराकुलमनसः ॥२॥ इष्टानां विषयादीनामनुभवे रागरक्तस्यावियोगाध्यवसानं तथा संयोगाभिलाषश्च ॥३॥ देवेन्द्रचक्रवर्त्तित्वादिगुणर्द्धिप्रार्थनामयं । अधमं निदानचिन्तनमज्ञानानुगतमत्यन्तम् ॥४॥

चिंतणमन्नाणाणुगयमचंतं ॥४॥" इति, आर्त्तध्यानलक्षणान्याह-लक्ष्यते-निर्णीयते परोक्षमपि चित्तवृत्तिरूपत्वादार्त्तध्यानमेभिरिति लक्षणानि, तत्र क्रन्दनता-महता शब्देन विरवणं शोचनता-दीनता तेपनता-तिपेः क्षरणार्थत्वादश्रुविमोचनं परिदेवनता-पुनः पुनः क्लिष्टभाषणमिति, एतानि चेष्टवियोगानिष्टसंयोगरोगवेदनाजनितशोकरूपस्यैवार्त्तस्य लक्षणानि, यत आह—"[1]तस्सक्कंदणसोयणपरिदेवणताडणाइं लिंगाइं । इट्ठाणिट्ठवियोगावियोगवियणानिमित्ताइं ॥१॥" इति, निदानस्यान्येषां च लक्षणान्तरमस्ति, आह च—"[2]निंदइ नियय-कयाइं पसंसइ सविम्हओ विभूईओ । पत्थेइ तासु रज्जइ तयज्जणपरायणो होइ ॥१॥" इति ॥ अथ रौद्रध्यानभेदा उच्यन्ते, हिंसा-सत्त्वानां वधबन्धनादिभिः प्रकारैः पीडामनुबध्नाति-सततप्रवृत्तं करोतीत्येवंशीलं यत्प्रणिधानं हिंसानुबन्धो वा यत्रास्ति तद्धिंसानुबन्धि रौद्रध्यानं इति प्रक्रम इति, उक्तं च-"[3]सत्तवहवेहबंधणडहणंकणमारणइपणिहाणं । अइकोहग्गहगत्थं णिग्घिणमणसोऽहमविवागं ॥१॥" इति, तथा मृषा-असत्यं तदनुबध्नाति पिशुनाऽसभ्यासद्भूतादिभिर्वचनभेदैस्तन्मृषानुबन्धि, आह च-"[4]पिसुणाऽसब्भासब्भूयघायाइवयणपणिहाणं । मायाविणोऽतिसंधणपरस्स पच्छन्नपावस्स ॥१॥" इति, तथा स्तेनस्य-चौरस्य कर्म्म स्तेयं तीव्रक्रोधाद्याकुलतया तदनुबन्धवत् स्तेयानुबन्धि, आह च-"[5]तह तिव्वकोहलोहाउलस्स भूतोवघायणमणज्जं । परदव्वहरणचित्तं परलोगावायनिरवेक्खं ॥१॥" इति, संरक्षणे-सर्वोपायैः परि-

१ तस्याक्रंदनशोचनपरिदेवनताडनानि लिंगानि । इष्टानिष्टवियोगावियोगवेदनानिमित्तानि ॥१॥ २ निन्दति निजकृतानि प्रशंसति सविस्मयो विभूतीः प्रार्थयति तासु रज्यति तदर्जनपरायणो भवति ॥१॥ ३ सत्ववधवेधबंधनदहनांकनमारणादिप्रणिधानमतिक्रोधग्रहग्रस्तं निर्घृणमनसोऽधमविपाकं ॥१॥ ४ पिशुनासभ्यासद्भूतघातादिवचनप्रणिधानं । मायाविनोऽतिसंधानपरस्य प्रच्छन्नपापस्य ॥१॥ ५ तथातीव्रक्रोधलोभाकुलस्य भूतोपघातनमनार्यं परद्रव्यहरणचित्तं परलोकापायनिरपेक्षं ॥१॥

त्राणे विषयसाधनधनस्यानुबन्धो यत्र तत्संरक्षणानुबन्धी, यदाह —"सद्दाइविसयसाहणधणसंरक्खणपरायणमणिट्ठं। सव्वाहिसंकणपरोवघायकलुसाउलं चित्तं ॥१॥" इति। अथैतल्लक्षणान्युच्यन्ते—'ओसन्नदोसे'त्ति हिंसादीनामन्यतरस्मिन् ओसन्नं—प्रवृत्तेः प्राचुर्यं बाहुल्यं यस्य स एव दोषः अथवा 'ओसन्नं'ति बाहुल्येनानुपरतत्वेन दोषो हिंसादीनां चतुर्णामन्यतर ओसन्नदोषः, तथा बहुष्वपि—सर्वेष्वपि हिंसादिषु दोषः—प्रवृत्तिलक्षणो बहुदोषः, बहुर्वा—बहुविधो हिंसानृतादिरिति बहुदोषः, तथा अज्ञानात्—कुशास्त्रसंस्कारात् हिंसादिष्वधर्मस्वरूपेषु नरकादिकारणेषु धर्म्मबुद्ध्याऽभ्युदयार्थं या प्रवृत्तिस्तल्लक्षणो दोषोऽज्ञानदोषः, अथवा उक्तलक्षणमज्ञानमेव दोषोऽज्ञानदोष इति, अन्यत्र नानाविधदोष इति पाठस्तत्र नानाविधेषु तु—उक्तलक्षणादिषु हिंसाद्युपायेषु दोषोऽसकृत्प्रवृत्तिरिति नानाविधदोष इति, तथा मरणमेवान्तो मरणान्तः आमरणान्तादामरणान्तम् असञ्जातानुतापस्य कालसौकरिकादेरिव या हिंसादिषु प्रवृत्तिः सैव दोष आमरणान्तदोषः। अथ धर्म्यं चतुर्विधमिति स्वरूपेण चतुर्षु पदेषु—स्वरूपलक्षणालम्बनानुप्रेक्षालक्षणेष्ववतारो विचारणीयत्वेन यस्य तच्चतुष्पदावतारं चतुर्विधस्यैव पर्यायो वाऽयमिति, क्वचित् 'चउप्पडोयार'मिति पाठस्तत्र चतुर्षु पदेषु प्रत्यवतारो यस्येति विग्रह इति, 'आणाविजए'त्ति आ—अभिविधिना ज्ञायन्तेऽर्था यया साऽऽज्ञा—प्रवचनं सा विचीयते—निर्णीयते पर्यालोच्यते वा यस्मिंस्तदाज्ञाविचयं धर्म्मध्यानमिति, प्राकृतत्वेन विजयमिति, आज्ञा या विजीयते अधिगमद्वारेण परिचिता क्रियते यस्मिन्नित्याज्ञाविजयं, एवं शेषाण्यपि, नवरं अपायाः—रागादिजनिताः प्राणिनामैहिकामुष्मिका अनर्थाः, विपाकः—फलं कर्म्मणां ज्ञानाद्यावारकत्वादि संस्थानानि लोकद्वीपसमुद्रजीवादीनामिति, आह च—"आप्तवचनं प्रवचनमाज्ञा विचयस्तदर्थनिर्णयनम्। आश्रवविकथागौरवपरीषहाद्यैरपायस्तु ॥१॥ अशुभशुभकर्म्म-

१ शब्दादिविषयसाधनधनसंरक्षणपरायणमनिष्टं। सर्वाभिशंकनपरोपघातकलुषाकुलं चित्तं ॥१॥

पाकानुचिन्तनार्थो विपाकविचयः स्यात्। द्रव्यक्षेत्राकृत्यनुगमनं संस्थानविचयस्तु ॥२॥" इति, एतल्लक्षणान्याह—'आणारुइ'त्ति आज्ञा—सूत्रव्याख्यानं निर्युक्त्यादि तत्र तया वा रुचिः—श्रद्धानं आज्ञारुचिः, एवमन्यत्रापि, नवरं निसर्गः—स्वाभावोऽनुपदेशस्तेन, तथा सूत्रम्—आगमः तत्र तस्माद्वा, तथा अवगाहनमवगाढम्—द्वादशाङ्गावगाहो विस्तराधिगम इति सम्भाव्यते तेन रुचिः अथवा ओगाढत्ति साधुप्रत्यासन्नीभूतस्तस्य साधूपदेशाद्रुचिः, उक्तं च—"आगमउवएसेणं निसग्गओ जं जिणप्पणीयाणं। भावाणं सद्दहणं धम्मज्झाणस्स तं लिंगं ॥१॥"[1] इति, तत्त्वार्थश्रद्धानरूपं सम्यक्त्वं धर्मस्य लिङ्गमिति हृदयं, धर्मस्यालम्बनान्युच्यन्ते—धर्म्मध्यानसौधारोहणार्थमालम्ब्यन्त इत्यालम्बनानि वाचनं वाचना—विनेयाय निर्जरायै सूत्रदानादि, तथा शङ्किते सूत्रादौ शङ्कापनोदाय गुरोः प्रच्छनं प्रतिप्रच्छना, प्रतिशब्दस्य धात्वर्थमात्रार्थत्वादिति, तथा पूर्वाधीतस्यैव सूत्रादेरविस्मरणनिर्जरार्थमभ्यासः परिवर्त्तनेति, अनुप्रेक्षणमनुप्रेक्षा—सूत्रार्थानुस्मरणमिति। अथानुप्रेक्षा उच्यन्ते—अन्विति—ध्यानस्य पश्चात्प्रेक्षणानि—पर्यालोचनान्यनुप्रेक्षाः, तत्र 'एकोऽहं न च मे कश्चिन्नाहमन्यस्य कस्यचित्। न तं पश्यामि यस्याहं, नासौ भावीति यो मम ॥१॥" इत्येवमात्मन एकस्य— एकाकिनो असहायस्यानुप्रेक्षा—भावना एकानुप्रेक्षा, तथा—कायः सन्निहितापायः, सम्पदः पदमापदाम्। समागमाः सापगमाः, सर्व्वमुत्पादि भङ्गुरम् ॥१॥" इत्येवं जीवितादेरनित्यस्यानुप्रेक्षा अनित्यानुप्रेक्षेति, तथा "जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते। जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥१॥" एवमशरणस्य—अत्राणस्यात्मनोऽनुप्रेक्षा अशरणानुप्रेक्षेति, तथा—"माता भूत्वा दुहिता भगिनो भार्या च भवति संसारे। व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुताञ्चैव ॥१॥" इत्येवं संसारस्य—चतसृषु गतिषु

[1] आगमोपदेशेन निसर्गतो यज्जिनप्रणीतानां भावानां श्रद्धानं तद्धर्मध्यानिनो लिंगं ॥१॥

सर्वावस्थासु संसरणलक्षणस्यानुप्रेक्षा संसारानुप्रेक्षेति । अथ शुक्लमाह—'पुहुत्तवितक्के'त्ति पृथक्त्वेन–एकद्रव्याश्रितानामुत्पादादिपर्यायाणां भेदेन पृथुत्वेन वा विस्तीर्णभावेनेत्यन्ये वितर्को–विकल्पः पूर्वगतश्रुतालम्बनो नानानयानुसरणलक्षणो यस्मिंस्तत्तथा, पूज्यैस्तु वितर्कः श्रुतालम्बनतया श्रुतमित्युपचारादधीत इति, तथा विचरणम्–अर्थाद् व्यञ्जने व्यञ्जनादर्थे तथा मनःप्रभृतीनां योगानामन्यतरस्मादन्यतरस्मिन्निति विचारो 'विचारोऽर्थव्यञ्जनयोगसंक्रान्ति'रिति (तत्त्वा० अ० ९ सू०४६) वचनात्, सह विचारेण सविचारि, गर्धनादित्वादिन्समासान्तः, उक्तं च—"उप्पायठितिभंगाइं पज्जयाणं जमेगदव्वंमि । नाणानयाणुसरणं पुव्वगयसुयाणुसारेणं ॥१॥ सवियारमत्थवंजणजोगंतरओ तयं पढमसुक्कं । होति पुहुत्तवियक्कं सवियारमरागभावस्स ॥२॥" इत्येको भेदः, तथा 'एगत्तवियक्के' त्ति एकत्वेन--अभेदेनोत्पादादिपर्यायाणामन्यतमैकपर्यायालम्बनतयेत्यर्थो वितर्कः--पूर्वगतश्रुताश्रयो व्यञ्जनरूपोऽर्थरूपो वा यस्य तदेकत्ववितर्कम्, तथा न विद्यते विचारोऽर्थव्यञ्जनयोरितरस्मादितरत्र तथा मनःप्रभृतीनामन्यतरस्मादन्यत्र सञ्चरणलक्षणो निर्वातगृहगतप्रदीपस्येव यस्य तदविचारीति पूर्ववदिति, उक्तं च–"जं पुण सुनिप्पकंपं निवायसरणप्पईवमिव चित्तं । उप्पायठिइभंगाइयाणमेगंमि पज्जाए ॥१॥ अवियारमत्थवंजणजोगंतरओ तयं बिइयसुक्कं । पुव्वगयसुयालंबणमेगत्तवियक्कमवियारं ॥२॥" इति द्वितीयः, तथा 'सुहुमकिरिए'त्ति निर्वाणगमनकाले केवलिनो निरुद्धमनोवाग्योगस्यार्द्धनिरुद्धकाययोगस्यैतद्, अतः सूक्ष्मा क्रिया

१ उत्पादस्थितिभंगादिपर्यायानां यदेकस्मिन् द्रव्ये नानानयैरनुसरणं पूर्वगतश्रुतानुसारेण ॥१॥ सविचारमर्थव्यञ्जनयोगान्तरतस्तत् प्रथमशुक्लम् भवति पृथक्त्ववितर्कं सविचारमरागभावस्य ॥२॥ २ यत्पुनः सुनिष्प्रकंपं निवातस्थानप्रदीपमिव चित्तं उत्पादस्थितिभंगादीनामेकस्मिन् पर्याये ॥१॥ अविचारमर्थव्यञ्जनयोगान्तरतस्तत् द्वितीयं शुक्लम् । पूर्वगतश्रुतालम्बनमेकत्ववितर्कमविचारम् ॥२॥

कायिकी उच्छ्वासादिका यस्मिंस्तत्तथा, न निवर्त्तते-न व्यावर्त्तत इत्येवंशीलमनिवर्त्ति प्रवर्द्धमानतरपरिणामादिति, भणितं च—"[1]निव्वाणगमणकाले केवलिणो दरनिरुद्धजोगस्स । सुहुमकिरियाऽनियट्टिं तइयं तणुकायकिरियस्स ॥१॥" इति तृतीयः, तथा, 'समुच्छिन्नकिरिए'त्ति समुच्छिन्ना-क्षीणा क्रिया-कायिक्यादिका शैलेशीकरणे निरुद्धयोगत्वेन यस्मिंस्तत्तथा, 'अप्पडिवाए'त्ति अनुपरतिस्वभावमिति चतुर्थः, आह हि—"[2]तस्सेव य सेलेसीगयस्स सेलोव्व निप्पकंपस्स । वोच्छिन्नकिरियमप्पडिवाई झाणं परमसुक्कं ॥१॥" इति, इह चान्त्ये शुक्लभेदद्वये अयं क्रमः-केवली किलान्तर्मुहूर्त्तभाविनि परमपदे भवोपग्राहिकर्म्मसु च वेदनीयादिषु समुद्घाततो निसर्गेण वा समस्थितिषु सत्सु योगनिरोधं करोति, तत्र च—'[3]पज्जत्तमेत्तसन्निस्स जत्तियाइं जहन्न जोगिस्स। होंति मणोदव्वाइं तव्वावारो य जम्मेत्तो ॥१॥ तदसंखगुणविहीणे समए समए निरुंभमाणो सो । मणसो सव्वनिरोहं कुणइ असंखेज्जसमएहिं ॥२॥ पज्जत्तमेत्तबिंदिय जहन्नवइजोगपज्जया जे उ । तदसंखगुणविहीणे समए समए निरुंभंतो ॥३॥ सव्ववइजोगरोहं संखातीएहिं कुणइ समएहिं । तत्तो असुहुमपणगस्स पढमसमओववन्नस्स ॥४॥ जो किर जहन्नजोगो तदसंखेज्जगुणहीणमेक्केक्के । समए निरुंभमाणो देहतिभागं च

१ निर्वाणगमनकालेऽर्द्धनिरुद्धयोगस्य केवलिनः सूक्ष्मक्रियानिवृत्ति तृतीयं सूक्ष्मकायक्रियस्य ॥१॥ २ तस्यैव च शैलेशीगतस्य शैल इव निष्प्रकंपस्य । व्युच्छिन्नक्रियमप्रतिपाति ध्यानं परमशुक्लं ॥१॥ ३ संज्ञिनः पर्याप्तमात्रस्य यावन्ति जघन्ययोगिनः भवंति मनोद्रव्याणि तद्व्यापारश्च यावन्मात्रः ॥१॥ तदसङ्ख्यगुणविहीनानि समये समये निरुन्धन् सः। मनसः सर्वनिरोधं करोत्यसङ्ख्यातसमयैः ॥२॥ पर्याप्तमात्रद्वीन्द्रियस्य जघन्यवाग्योगपर्यया ये तु तदसङ्ख्यगुणविहीनान् समये समये निरुंधन् ॥३॥ सर्ववाग्योगरोधं सङ्ख्यातीतैः करोति समयैः। ततश्च सूक्ष्मपनकस्य प्रथमसमयोत्पन्नस्य ॥४॥ यः किल जघन्ययोगस्तदसङ्ख्येयगुणहीनमेकैकस्मिन् समये निरुंधन् देहत्रिभागं च मुंचन् ॥५॥

गुत्तनो ॥५॥ रुंभइ य काययोगं संखाईतेहिं चेव समएहिं । तो कयजोगनिरोहो सेलेसीभावणामेइ ॥६॥' शैलेशस्येव–मेरोरिव या स्थिरता सा शैलेशीति, 'हस्सक्खराइं मज्झेण जेण कालेण पंच भण्णंति । अच्छइ सेलेसिगओ तत्तियमेत्तं तओ कालं ॥१॥ तणुरोहारंभाओ झायइ सुहुमकिरियाणियट्टिं सो । वोच्छिन्नकिरियमप्पडिवाइं सेलेसिकालंमि ॥२॥" इति । अथ शुक्लध्यानलक्षणान्युच्यन्ते—'अव्वहे'त्ति देवादिकृतोपसर्गादिजनितं भयं चलनं वा व्यथा तस्या अभावो अव्यथम्, तथा देवादिकृतमायाजनितस्य सूक्ष्मपदार्थविषयस्य च संमोहस्य–मूढताया निषेधादसम्मोहः, तथा देहादात्मन आत्मनो वा सर्वसंयोगानां विवेचनं–बुद्ध्या पृथक्करणं विवेकः, तथा निःसङ्गतया देहोपधित्यागो व्युत्सर्ग इति । अत्र विवरणगाथा—"चालिज्जइ बीहेइ व धीरो न परीसहोवसग्गेहिं । सुहुमेसु न संमुज्झइ भावेसु न देवमायासु २ ॥१॥ देहविवित्तं पेच्छइ अप्पाणं तहय सव्वसंजोगे ३ । देहोवहिवुस्सग्गं निस्संगो सव्वहा कुणइ ॥२॥" इति, आलंबनसूत्रं व्यक्तं, तत्र गाथा—"अह खंतिमद्दवज्जवमुत्तीओ जिणमयप्पहाणाओ । आलंवणाइं जेहि उ सुक्कज्झाणं समारुहइ ॥१॥" इति, अथ तदनुप्रेक्षा उच्यन्ते—'अणंतवत्तियाणुप्पेह'त्ति अनन्ता–अत्यन्तं प्रभूता वृत्तिः–वर्त्तनं यस्यासावनन्तवृत्तिः अनन्ततया वा वर्त्तत इत्यनन्तवर्त्ती तद्भावस्तत्ता, भवसन्तानस्येति गम्यते, तस्या अनुप्रेक्षा अनन्तवृत्तितानुप्रेक्षा अनन्तवर्त्तितानुप्रेक्षा वेति, यथा—

१ स काययोगं संख्यातीतैरेव समयै रुणद्धि ततः कृतयोगनिरोधः शैलेशीभावनां एति ॥२॥ येन मध्येन कालेन पंच हस्वाक्षराणि भण्यन्ते । तावन्मात्रं कालं ततः शैलेशीगतस्तिष्ठति ॥१॥ तनुरोधारम्भात् ध्यायति सूक्ष्मक्रियानिवृत्ति सः । व्युच्छिन्नक्रियमप्रतिपाति शैलेशीकाले ॥२॥ २ चाल्यते बिभेति वा धीरो न परिषहोपसर्गैः सूक्ष्मेष्वपि भावेषु न संमुह्यति न च देवमायासु ॥१॥ आत्मानं देहविविक्तं प्रेक्षते तथा सर्वसंयोगांश्च देहोपधिव्युत्सर्गं निःसंगः सर्वथा करोति ॥२॥ ३ अथ क्षान्तिमार्दवार्जवमुक्तयः आलंबनानि । जिनमतप्रधानाः यैस्तु शुक्लध्यानं समारोहति ॥१॥

"[१]एस अणाइ जीवो संसारो सागरोव्व दुत्तारो । नारयतिरियनरामरभवेसु परिहिंडए जीवो ॥१॥" इति, एवमुत्तरत्रापि समासः, नवरं 'विपरिणामे,त्ति विविधेन प्रकारेण परिणमनं विपरिणामो वस्तूनामिति गम्यते, यथा—"[२]सव्वट्ठाणाइं असासयाइं इह चेव देवलोगे य। सुरअसुरनराईणं रिद्धिविसेसा सुहाइं च ॥१॥" 'असुभे'त्ति अशुभत्वं संसारस्येति गम्यते, यथा—"[३]धी संसारो जंमि (मी)जुयाणओ परमरूवगव्वियओ । मरिऊण जायइ किमी तत्थेव कडेवरे नियए ॥१॥" तथा अपाया आश्रवाणामिति गम्यते, यथा—"[४]कोहो य माणो य अणिग्गहीया, माया य लोभो य पवड्ढमाणा । चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥१॥" इह गाथा—"[५]आसवदारावाए तह संसारासुहाणुभावं च । भवसंताणमणंतं वत्थूणं विपरिणामं च ॥१॥" इति ।

ध्यानाद् देवत्वमपि स्यादतो देवस्थितिसूत्रं—

**चउव्विहा देवाण ठिती पं० तं०—देवे णाममेगे १ देवसिणाते नाममेगे २ देवपुरोहिते नाममेगे ३ देवपज्जलणे नाममेगे ४, चउव्विधे संवासे पं० तं०—देवे णाममेगे देवीए सद्धिं संवासं गच्छेज्जा, देवे णाममेगे छवीते**

---

१ एष जीवोऽनादिः सागर इव संसारो दुरुत्तारः । जीवो नारकतिर्यग्नरामरभवेषु परिहिंडते ॥१॥ २ इह देवलोके च सर्वाणि स्थानान्यशाश्वतान्येव सुरासुरनरादीनां ऋद्धिविशेषाः सुखानि च ॥१॥ ३ धिक् संसारं यस्मिन् युवा परमरूपगर्वितः मृत्वा कृमिर्जायते तत्रैव निजे कलेवरे ॥१॥ ४ क्रोधो मानश्चानिगृहीतौ माया च लोभश्च विवर्धमानौ चत्वार एते कृत्स्नाः कषायाः पुनर्भवस्य मूलानि सिञ्चन्ति ॥१॥ ५ आश्रवद्वारापायान् तथा संसाराशुभानुभावं च अनन्तं भवसन्तानं वस्तूनां विपरिणामं च ॥१॥

सद्धिं संवासं गच्छेज्जा, छवी णाममेगे देवीए सद्धिं संवासं गच्छेज्जा, छवी णाममेगे छवीते सद्धिं संवासं गच्छेज्जा (सू० २४८)। चत्तारि कसाया पं० तं०—कोहकसाए माणकसाए मायाकसाए लोभकसाए, एवं णेरइयाणं जाव वेमाणियाणं २४, चउपतिट्ठिते कोहे पं० तं०—आतपइट्ठिते परपतिट्ठिए तदुभयपइट्ठिते अपतिट्ठिए, एवं णेरइयाणं जाव वेमाणियाणं २४, एवं जाव लोभे, वेमाणियाणं २४, चउहिं ठाणेहिं कोधुप्पत्ती सिता, तं०—खेत्तं पडुच्चा वत्थुं पडुच्चा सरीरं पडुच्चा उवहिं पडुच्चा, एवं णेरइयाणं जाव वेमाणियाणं २४, एवं जाव लोभ० वेमाणियाणं २४, चउव्विधे कोहे पं० तं०—अणंताणुबंधिकोहे अपच्चक्खाणकोहे पच्चक्खाणावरणे कोहे संजलणे कोहे, एवं नेरइयाणं जाव वेमाणियाणं २४, एवं जाव लोभे वेमाणियाणं २४, चउव्विहे कोहे पं० तं०—आभोगणिव्वत्तिए अणाभोगणिव्वत्तिते उवसंते अणुवसंते, एवं नेरइयाणं जाव वेमाणियाणं २४, एवं जाव लोभे जाव वेमाणियाणं २४ (सू० २४९)।

स्थितिः–क्रमो मर्यादा राजामात्यादिमनुष्यस्थितिवदेव, देवः सामान्यो नामेति वाक्यालङ्कारे एकः कश्चित् स्नातकः–प्रधानः, देव एव देवानां वा स्नातक इति विग्रहः, एवमुत्तरत्रापि, नवरं पुरोहितः–शान्तिकर्म्मकारी 'पज्जलणे'त्ति प्रज्वलयति–दीपयति वर्णवादकरणेन मागधवदिति प्रज्वलन इति। देवस्थितिप्रस्तावात् तद्विशेषभूतसंवाससूत्रम्, एतच्च व्यक्तं, किन्तु संवासो–मैथुनार्थं संवसनं, 'छवि'त्ति त्वक् तद्योगादौदारिकशरीरं तद्वती नारी तिरश्ची वा तद्वान्नरस्तिर्यग्वा छविरित्युच्यते। अनन्तरं संवास उक्तः, स च वेदलक्षणमोहोदयादिति मोहविशेषभूतकषायप्रकरणमाह—'चत्तारि कसाये'त्यादि, तत्र कृषन्ति–विलिखन्ति कर्म्मक्षेत्रं सुखदुःखफलयोग्यं

कुर्व्वन्ति कलुषयन्ति वा जीवमिति निरुक्तिविधिना कषायाः, उक्तं च—"[1]सुहदुक्खबहुसईयं कम्मक्खेत्तं कसंति ते जम्हा। कलुसंति जं च जीवं तेण कसायत्ति वुच्चंति ॥१॥" अथवा कषति–हिनस्ति देहिन इति कषं–कर्म्म भवो वा तस्यायो लाभहेतुत्वात् कषं वा आयन्ति–गमयन्ति देहिन इति कषायाः, उक्तं च—"[2]कम्मं कसं भवो वा कसमाओ सिं जओ कसायातो। कसमाययंति व जओ गमयंति कसं कसायत्ति ॥१॥" इति, तत्र क्रोधनं क्रुध्यति वा येन स क्रोधः–क्रोधमोहनीयोदयसम्पाद्यो जीवस्य परिणतिविशेषः क्रोधमोहनीयकर्मैव वेति, एवमन्यत्रापि, नवरं जात्यादिगुणवानहमेवेत्येवं मननम्–अवगमनं मन्यते वाऽनेनेति मानः, तथा मानं हिंसनं वञ्चनमित्यर्थो मीयते वाऽनयेति माया, तथा लोभनम्–अभिकाङ्क्षणं लुभ्यते वाऽनेनेति लोभः। 'एव'मिति यथा सामान्यतश्चत्वारः कषायास्तथा विशेषतो नारकाणामसुराणां यावच्चतुर्विंशतितमे पदे वैमानिकानामिति। 'चउप्पइट्ठिए'त्ति चतुर्षु–आत्मपरोभयतदभावेषु प्रतिष्ठितः चतुःप्रतिष्ठितः, तत्र 'आयपइट्ठिए'त्ति आत्मापराधेनैहिकामुष्मिकापायदर्शनादात्मविषय आत्मप्रतिष्ठितः परेणाक्रोशादिनोदीरितः परविषयो वा परप्रतिष्ठितः आत्मपरविषय उभयप्रतिष्ठितः आक्रोशादिकारणनिरपेक्षः केवलं क्रोधवेदनीयोदयाद् यो भवति सोऽप्रतिष्ठितः, उक्तं च—"सापेक्षाणि च निरपेक्षाणि च कर्म्माणि फलविपाकेषु। सोपक्रमञ्च निरुपक्रमं च दृष्टं यथाऽऽयुष्कम् ॥१॥" इति, अयं च चतुर्थभेदो जीवप्रतिष्ठितोऽपि आत्मादिविषयेऽनुत्पन्नत्वादप्रतिष्ठित उक्तो, न तु सर्वथा अप्रतिष्ठितः, चतुःप्रतिष्ठितत्वस्याभावप्रसङ्गादिति। एकेन्द्रियविकलेन्द्रियाणां कोपस्यात्मादिप्रतिष्ठितत्वं पूर्वभवे तत्परिणामपरिणतमरणेनोत्पन्नानामिति, एवं मान-

१ सुखदुःखबहुशस्यं कर्मक्षेत्रं कर्षन्ति ते यस्मात्। यच्च जीवं कलुषयन्ति तेन कषाया इति उच्यन्ते ॥१॥ २ यद्वा कषः कर्म भवो वा कषः अनयोरायो यतः कषायात् कषमाययंति वा यतो गमयन्ति वा कषं कषाया इति ॥१॥

मायालोभैर्दण्डकत्रयमपरमध्येतव्यमिति, क्षेत्रं नारकादीनां ४ स्वं समुत्पत्तिस्थानं प्रतीत्य—आश्रित्य एवं वस्तु सचेतनादि ३ वास्तु वा—गृहम् शरीरं दुःसंस्थितं विरूपं वा उपधिर्यस्योपकरणं, एकेन्द्रियादीनां भवान्तरापेक्षयेति, एवं मानादिभिरपि दण्डकत्रयं, अनन्तं भवमनुबध्नाति—अविच्छिन्नं करोतीत्येवंशीलोऽनन्तानुबन्धी अनन्तो वाऽनुबन्धोऽस्येत्यनन्तानुबन्धी—सम्यग्दर्शनसहभाविक्षमादिस्वरूपोपशमादिनिरूपणलवनिबन्धी, चारित्रमोहनीयत्वात् तस्य, न चोपशमादिभिरेव चारित्री अल्पत्वाद्यथाऽमनस्को न संज्ञी किन्तु महता मूलगुणादिरूपेण चारित्रेण चारित्री, मनःसंज्ञया संज्ञिवद् , अत एव त्रिविधं दर्शनमोहनीयं पञ्चविंशतिविधं चारित्रमोहनीयमिति, ननु 'पढमिल्लुयाण उदए नियमा' इत्यादि विरुध्यते, चारित्रावारकस्य सम्यक्त्वावारकत्वानुपपत्तेः, अत एव सप्तविधं दर्शनमोहनीयमेकविंशतिविधं चारित्रमोहनीयमिति मतं सङ्गतमाभातीति, अत्रोच्यते, 'पढमेल्लुयाणे'त्यादि यदुक्तं तदनन्तानुबन्धिनां न सम्यक्त्वावारकतया किन्तु सम्यक्त्वसहभाव्युपशमाद्यावारकतया, अन्यथाऽनन्तानुबन्धिभिरेव सम्यक्त्वस्यावृतत्वात् किमपरेण मिथ्यात्वेन प्रयोजनं ?, आवृतस्याप्यावरणेऽनवस्थाप्रसङ्गात् , तस्माद्यथा "केवलियनाणलंभो नन्नत्थ खए कसायाणं"ति इह कषायाणां केवलज्ञानस्यानावारकत्वेऽपि कषायक्षयः केवलज्ञानकारणतयोक्तः, तस्मिन्नेव तस्य भावाद् , एवमनन्तानुबन्धिक्षयोपशम एव सम्यक्त्वलाभ उच्यते, तस्मिन् सति तस्य भावाद् , यतो नानन्तानुबन्धिषूदितेषु मिथ्यात्वं क्षयोपशममुपयाति, तदभावाच्च न सम्यक्त्वमिति, यच्च सप्तविधं सम्यग्दर्शनमोहनीयमिति मतान्तरं तत्सम्यक्त्वसहचरितत्वेनोपशमादिगुणानां सम्यक्त्वोपचारादिति मन्यामह इति, न विद्यते प्रत्याख्यानम्—अणुव्रतादिरूपं यस्मिन् सोऽप्रत्याख्यानो—देशविरत्यावारकः, प्रत्याख्यानम् आमर्यादया सर्वविरतिरूपमेवेत्यर्थो वृणोतीति प्रत्याख्याना-

१ कषायाणां क्षयादन्यत्र न केवलज्ञानलंभः ॥

वरणः, सञ्ज्वलयति-दीपयति सर्वसावद्यविरतिमपीन्द्रियार्थसम्पाते वा सञ्ज्वलति-दीप्यत इति सञ्ज्वलनः-यथाख्यातचारित्रावारकः, एवं मानमायालोभेष्वप्यनन्तानुबन्ध्यादिभेदचतुष्टयमध्येतव्यमिति, एषां निरुक्तिः पूज्यैरियमुक्ता-"अनन्तान्यनुबध्नन्ति,यतो जन्मानि भूतये। अतोऽनन्तानुबन्ध्याख्या, क्रोधाद्याऽऽद्येषु दर्शिता ॥१॥ नाल्पमप्युत्सहेद्येषां, प्रत्याख्यानमिहोदयात्। अप्रत्याख्यानसंज्ञाऽतो, द्वितीयेषु निवेशिता ॥२॥ सर्वसावद्यविरतिः, प्रत्याख्यानमुदाहृतम्। तदावरणसंज्ञाऽतस्तृतीयेषु निवेशिता ॥३॥ शब्दादीन् विषयान् प्राप्य, सञ्ज्वलन्ति यतो मुहुः। अतः सञ्ज्वलनाह्वानं, चतुर्थानामिहोच्यते ॥४॥" इति, एवं मानादिभिरपि दण्डकत्रयम्। 'आभोगणिव्वत्तिए'त्ति आभोगो-ज्ञानं तेन निर्वर्त्तितो यज्जानन् कोपविपाकादि रुष्यति, इतरस्तु यदजानन्निति, उपशान्तः-अनुदयावस्थः, तत्प्रतिपक्षोऽनुपशान्तः, एकेन्द्रियादीनामाभोगनिर्वर्त्तितः संज्ञिपूर्वभवापेक्षया, अनाभोगनिर्वर्त्तितस्तु तद्भवापेक्षयाऽपि, उपशान्तो नारकादीनां विशिष्टोदयाभावात् अनुपशान्तो निर्विचार एवेति, एवं मानादिभिरपि दण्डकत्रयम्।

इदानीं कषायाणामेव कालत्रयवर्त्तिनः फलविशेषा उच्यन्ते—

**जीवा णं चउहिं ठाणेहिं अट्ठ कम्मपगडीओ चिणिंसु, तं०—कोहेणं माणेणं मायाए लोभेणं, एवं जाव वेमाणियाणं २४, एवं चिणंति एस दंडओ, एवं चिणिस्संति एस दंडओ, एवमेतेणं तिन्नि दंडगा, एवं उवचिणिंसु उवचिणंति उवचिणिस्संति, बंधिंसु ३ उदीरिंसु ३ वेदेंसु ३ निज्जरेंसु णिज्जरेंति निज्जरिस्संति, जाव वेमाणियाणं, एवमेक्केक्के पदे तिन्नि २ दंडगा भाणियव्वा, जाव निज्जरिस्संति (सू० २५०)। चत्तारि पडिमाओ**

पं० तं०—समाहिपडिमा उवहाणपडिमा विवेगपडिमा विउस्सग्गपडिमा, चत्तारि पडिमाओ पं० तं०—भद्दा सुभद्दा महाभद्दा सव्वतोभद्दा, चत्तारि पडिमातो पं० तं०—खुड्डिया मोयपडिमा महल्लिया मोयपडिमा जवमज्झा वइरमज्झा (सू० २५१)।

'जीवा णं' मित्यादि गतार्थं, नवरम् चयनं—कषायपरिणतस्य कर्म्मपुद्गलोपादानमात्रं उपचयनं—चितस्याबाधाकालं मुक्त्वा ज्ञानावरणीयादितया निषेकः, स चैवं—प्रथमस्थितौ बहुतरं कर्म्मदलिकं निषिञ्चति, ततो द्वितीयायां विशेषहीनं, एवं यावदुत्कृष्टायां विशेषहीनं निषिञ्चति, उक्तं च—"मोत्तूण सगमबाहं पढमाइ ठिईएँ बहुतरं दव्वं। सेसे विसेसहीणं जावुक्कोसंति सव्वेसिं ॥१॥" इति, बन्धनं—तस्यैव ज्ञानावरणीयादितया निषिक्तस्य पुनरपि कषायपरिणतिविशेषान्निकाचनमिति, उदीरणम्—अनुदयप्राप्तस्य करणेनाकृष्योदये प्रक्षेपणमिति, वेदनं—स्थितिक्षयादुदयप्राप्तस्य कर्म्मण उदीरणाकरणेन वोदयभावमुपनीतस्यानुभवनमिति, निर्जरा—कर्म्मणोऽकर्म्मत्वभवनमिति, इह च देशनिर्जरैव ग्राह्या, सर्वनिर्जरायाश्चतुर्विंशतिदण्डकेऽसम्भवात्, क्रोधादीनां च तदकारणत्वात्, क्रोधादिक्षयस्यैव तत्कारणत्वादिति, इह प्रज्ञापनाधीता संग्रहगाथा—"आयपइट्ठिय १ खेत्तं पडुच्च २ णंताणुबंधि ३ आभोगे ४। चिणउवचिणबंध उदीर वेय तह निज्जरा चेव ॥१॥" इति। अनन्तरं निर्जरोक्ता, सा च विशिष्टा प्रतिमाद्यनुष्ठानाद्भवतीति प्रतिमासूत्रत्रयं, तद् द्विस्थानकाधीतमपीहाधीयते, चतुःस्थानकानुरोधादिति, व्याख्याऽप्यस्य पूर्ववदनुसर्त्तव्या, किन्तु स्मरणाय किञ्चिदुच्यते—समाधिः—श्रुतं चारित्रं च

१ स्वकमबाधाकालं मुक्त्वा (निषेके) प्रथमस्थितौ बहुतरं द्रव्यं शेषायां विशेषहीनं यावदुत्कृष्टायां सर्वासां ॥१॥ २ आत्मप्रतिष्ठितः क्षेत्रं प्रतीत्य अनन्तानुबन्धी आभोगः चिनोति उपचिनोति बध्नाति उदीरयति वेदयति निर्जरयति ॥१॥

तद्विषया प्रतिमा-प्रतिज्ञा अभिग्रहः समाधिप्रतिमा द्रव्यसमाधिर्वा प्रसिद्धस्तद्विषया प्रतिमा-अभिग्रहः समाधिप्रतिमा एवमन्या अपि, नत्ररसुपधानं-तपः विवेकः-अशुद्धातिरिक्तभक्तपानवस्त्रशरीरतन्मलादित्यागः 'विउस्सग्गे'त्ति कायोत्सर्गः। तथा पूर्वादिदिक्चतुष्टयाभिमुखस्य प्रत्येकं प्रहरचतुष्टयमानः कायोत्सर्गो भद्रेति, अहोरात्रद्वयेन चास्याः समाप्तिरिति, सुभद्राऽप्येवंभूतैव सम्भाव्यते, न च दृष्टेति न लिखितेति, एवमेव चाहोरात्रप्रमाणः कायोत्सर्गो महाभद्रा, चतुर्भिश्चाहोरात्रैरियं समाप्यते, यस्तु दिग्दशकाभिमुखस्याहोरात्रप्रमाणः कायोत्सर्गः सा सर्व्वतोभद्रा, सा च दशभिरहोरात्रैः समाप्यत इति। मोयप्रतिमा-प्रश्रवणप्रतिज्ञा सा च क्षुल्लिका या षोडशभक्तेन समाप्यते महती तु याऽष्टादशभक्तेनेति, यवमध्या या यववद्दत्तिकवलादिभिराद्यन्तयोर्हीना मध्ये च वृद्धेति, वज्रमध्या तु याऽऽद्यन्तवृद्धा मध्ये हीना चेति।

प्रतिमाश्च जीवास्तिकाये एवेति तद्विपर्ययस्वरूपाजीवास्तिकायसूत्रं—

चत्तारि अत्थिकाया अजीवकाया पं० तं०—धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए पोग्गलत्थिकाए, चत्तारि अत्थिकाया अरूविकाया पं० तं०—धम्मत्थिकाए अधम्मत्थिकाए आगासत्थिकाए जीवत्थिकाए (सू० २५२) चत्तारि फला पं० तं०—आमे णामं एगे आममहुरे १ आमे णाममेगे पक्कमहुरे २ पक्के णाममेगे आममहुरे ३ पक्के णाममेगे पक्कमहुरे ४, एवामेव चत्तारि पुरिसजाता पं० तं०—आमे णाममेगे आममहुरफलसमाणे, ४ (सू० २५३) चउव्विहे सच्चे पं० तं०—काउज्जुयया भासुज्जुयया भावुज्जुयया अविसंवायणाजोगे, चउव्विहे

मोसे पं० तं०—कायअणुज्जुययया भासअणुज्जुययया भावअणुज्जुययया विसंवादणाजोगे, चउव्विहे पणिहाणे पं० तं०—मणपणिहाणे वइपणिहाणे कायपणिहाणे उवकरणपणिधाणे, एवं णेरइयाणं पंचिंदियाणं जाव वेमाणियाणं २४, चउव्विहे सुप्पणिहाणे पं० तं०—मणसुप्पणिहाणे जाव उवगरणसुप्पणिहाणे, एवं संजयमणुस्साणवि, चउव्विहे दुप्पणिहाणे पं० तं०—मणदुप्पणिहाणे जाव उवकरणदुप्पणिहाणे, एवं पंचिंदियाणं जाव वेमाणियाणं २४ (सू० २५४)।

'अत्थिकाय'त्ति, अस्तीत्ययं त्रिकालवचनो निपातः, अभूवन् भवन्ति भविष्यन्ति चेति भावना, अतोऽस्ति च ते प्रदेशानां कायाश्च राशय इति, अस्तिशब्देन प्रदेशाः क्वचिदुच्यन्ते, ततश्च तेषां वा कायाः अस्तिकायाः, ते चाजीवकायाः अचेतनत्वात्। अस्तिकाया मूर्त्तामूर्त्ता भवन्तीत्यमूर्त्तप्रतिपादनायारूप्यस्तिकायसूत्रं, रूपं-मूर्त्तिर्वर्णादिमत्त्वं तदस्ति येषां ते रूपिणस्तत्पर्युदासादरूपिणः-अमूर्त्ता इति। अनन्तरं जीवास्तिकाय उक्तः, तद्विशेषभूतपुरुषनिरूपणाय फलसूत्रं, आमम्-अपक्वं सत् आममिव मधुरम् आममधुरमीषन्मधुरमित्यर्थः, तथा आमं सत् पक्वमिव मधुरमत्यन्तमधुरमित्यर्थः, तथा पक्वं सत् आममधुरं प्राग्वत्, तथा पक्वं सत् पक्वमधुरं प्राग्वदेवेति, पुरुषस्तु आमो-वयःश्रुताभ्यामव्यक्तः आममधुरफलसमानः, उपशमादिलक्षणस्य माधुर्यस्याल्पस्यैव भावात्, तथा आम एव पक्वमधुरफलसमानः-पक्वफलवन्मधुरस्वभावः, प्रधानोपशमादिगुणयुक्तत्वादिति, तथा पक्वोऽन्यो वयःश्रुताभ्यां परिणतः आममधुरफलसमानः, उपशमादिमाधुर्यस्याल्पत्वात्, तथा पक्वस्तथैव, पक्वमधुरफलसमानोऽपि तथैवेति। अनन्तरं पक्वमधुर उक्तः, स च सत्यगुणयोगात् भवतीति सत्यं तद्विपर्ययं च मृषा तथा सत्यासत्यनिमित्तं प्रणिधानं प्रतिपिपादयिषुः सूत्राण्याह—'चउव्विहे

सच्चे' इत्यादीनि गतार्थानि, नवरमृजुकस्य-अमायिनो भावः कर्म्म वा ऋजुकता कायस्य ऋजुकता कायर्जुकता, एवमितरे अपि, नवरं भावो-मन इति, कायर्जुकताद्यश्च शरीरवाङ्मनसां यथावस्थितार्थप्रत्यायनार्थाः प्रवृत्तयः, तथा अनाभोगादिना गवादिकमश्वादिकं यद्वदति कस्मैचित् किञ्चिदभ्युपगम्य वा यन्न करोति सा विसंवादना तद्विपक्षेण योगः-सम्बन्धोऽविसंवादनायोग इति, 'मोसे'त्ति मृषाऽसत्यं कायस्यानृजुकतेत्यादि वाक्यम् । प्रणिधिः प्रणिधानं-प्रयोगः, तत्र मनसः प्रणिधानम्-आर्त्तरौद्रधर्म्मादिरूपतया प्रयोगो मनःप्रणिधानम्, एवं वाक्काययोरपि, उपकरणस्य-लौकिकलोकोत्तररूपस्य वस्त्रपात्रादेः संयमासंयमोपकाराय प्रणिधानं-प्रयोग उपकरणप्रणिधानं । 'एव'मिति यथा सामान्यतस्तथा नैरयिकाणामिति, तथा चतुर्विंशतिदण्डकपठितानां मध्ये ये पञ्चेन्द्रियास्तेषामपि वैमानिकान्तानामेवमेवेति, एकेन्द्रियादीनां मनःप्रभृतीनामसम्भवेन प्रणिधानासम्भवादिति । प्रणिधानविशेषः सुप्रणिधानं दुष्प्रणिधानञ्चेति तत्सूत्राणि, शोभनं संयमार्थत्वात् प्रणिधानं-मनःप्रभृतीनां प्रयोजनं सुप्रणिधानमिति । इदं च सुप्रणिधानं चतुर्विंशतिदण्डकनिरूपणायां मनुष्याणां तत्रापि संयतानामेव भवति, चारित्रपरिणतिरूपत्वात् सुप्रणिधानस्येत्याह-'एवं संजये'त्यादि, दुष्प्रणिधानसूत्रं सामान्यसूत्रवत् नवरं दुष्प्रणिधानम्-असंयमार्थं मनःप्रभृतीनां प्रयोग इति ।

पुरुषाधिकारादेवापरथा पुरुषसूत्राणि चतुर्दश—

चत्तारि पुरिसजाता पं० तं०—आवातभद्दते णाममेगे णो संवासभद्दते १, संवासभद्दए णाममेगे णो आवातभद्दए २, एगे आवातभद्दतेवि संवासभद्दतेवि ३ एगे णो आवायभद्दते नो वा संवासभद्दए ४, १, चत्तारि

पुरिसजाया पं० तं०—अप्पणो नाममेगे वज्जं पासति णो परस्स, परस्स णाममेगे वज्जं पासति ४, २, चत्तारि पुरिसजाया पं० तं०—अप्पणो णाममेगे वज्जं उदीरेइ णो परस्स ४, ३, अप्पणो नाममेगे वज्जं उवसामेति णो परस्स ४, ४, चत्तारि पुरिसजाया पं० तं०—अब्भुट्ठेइ नाममेगे णो अब्भुट्ठावेति, ५, एवं वंदति णाममेगे णो वंदावेइ ६, एवं सक्कारेइ ७ सम्माणेति ८ पूएइ ९ वाएइ १० पडिपुच्छति ११ पुच्छइ १२ वागरेति, १३, सुत्तधरे णाममेगे णो अत्थधरे अत्थधरे नाममेगे णो सुत्तधरे १४ (सू० २५५)।

सुगमानि. नवरमापतनमापातः—प्रथममीलकः तत्र भद्रको—भद्रकारी दर्शनालापादिना सुखकरत्वात्, संवासः—चिरं सहवासस्तस्मिन्न भद्रको हिंसकत्वात् संसारकारणनियोजकत्वाद्वेति, संवासभद्रकः सद् संयमतामत्यन्तोपकारितया नो आपातभद्रकः अनालापकठोरालापादिना, एवं द्वावन्यौ। 'वज्जं'ति वर्ज्यत इति वर्ज्यम् अवद्यं वा अकारलोपात्, वज्रवद्वज्रं वा गुरुत्वाद्धिंसाऽनृतादि पापं कर्म्म तदात्मनः सम्बन्धि कलहादौ पश्यति, पश्चात्तापान्वितत्वात्, न परस्य, तं प्रत्युदासीनत्वात्, अन्यस्तु परस्य नात्मनः, साभिमानत्वात्, इतर उभयोः, निरनुशयत्वेन यथावद्वस्तुबोधात्, अपरस्तु नोभयोर्विमूढत्वात् इति। दृष्ट्वा चैक आत्मनः सम्बन्धि अवद्यमुदीरयति—भणति यद्रुत मया कृतमेतदिति, उपशान्तं वा पुनः प्रवर्त्तयत्यथवा वज्रं—कर्म्म तदुदीरयति—पीडोत्पादनेन उदये प्रवेशयतीति, एवमुपशमयति—निवर्त्तयति पापं कर्म्म वा 'अब्भुट्ठेइ'त्ति अभ्युत्थानं करोति न कारयति परेण, संविग्नपाक्षिको लघुपर्यायो वा, कारयत्येव गुरुः, उभयवृत्तिर्वृषभादिः, अनुभयवृत्तिर्जिनकल्पिकोऽविनीतो वेति। एवं वन्दनादिसूत्रेष्वपि, नवरं वन्दते द्वादशावर्त्तादिना, सत्करोति वस्त्रादिदानेन, सन्मानयति स्तुत्यादिगुणोन्नतिकरणेन, पूजयति उचितपूजाद्रव्यैरिति, वाचयति—पाठयति, 'नो वायावेइ'

आत्मानमन्येनेति उपाध्यायादिः, द्वितीये शैक्षकः, तृतीये क्वचित् ग्रन्थान्तरेऽनधीती, चतुर्थे जिनकल्पिकः । एवं सर्वत्रोदाहरणं स्वबुद्ध्या योजनीयम्, प्रतीच्छतीति सूत्रार्थौ गृह्णाति, पृच्छति-प्रश्नयति सूत्रादि व्याकरोति-ब्रूते तदेवेति सूत्रधरः-पाठकः, अर्थधरो बोद्धा, अन्यस्तूभयधरः, चतुर्थस्तु जड इति ।

चमरस्स णं असुरिंदस्स असुरकुमाररन्नो चत्तारि लोगपाला पं तं-सोमे जमे वरुणे वेसमणे, एवं बलिस्सवि सोमे जमे वेसमणे वरुणे, धरणस्स कालपाले कोलपाले सेलपाले संखपाले, एवं भूयाणंदस्स चत्तारि कालपाले कोलपाले संखपाले सेलपाले, वेणुदेवस्स चित्ते विचित्ते चित्तपक्खे विचित्तपक्खे, वेणुदालिस्स चित्ते विचित्ते विचित्तपक्खे चित्तपक्खे, हरिकंतस्स पभे सुप्पभे पभकंते सुप्पभकंते, हरिस्सहस्स पभे सुप्पभे सुप्पभकंते पभकंते, अग्गिसिहस्स तेऊ तेउसिहे तेउकंते तेउप्पभे, अग्गिमाणवस्स तेऊ तेउसिहे तेउपभे तेउकंते, पुन्नस्स रूए रूयंसे रूदकंते रूदप्पभे, एवं विसिट्ठस्स रूते रूतंसे रूतप्पभे रूयकंते, जलकंतस्स जले जलइते जलकंते जलप्पभे, जलप्पहस्स जले जलरते जलप्पहे जलकंते, अमितगतिस्स तुरियगती खिप्पगती सीहगती सीहविक्कमगती, अमितवाहणस्स तुरियगती खिप्पगती सीहविक्कमगती सीहगती, वेलंबस्स काले महाकाले अंजणे रिट्ठे, पभंजणस्स काले महाकाले रिट्ठे अंजणे, घोसस्स आवत्ते वियावत्ते णंदियावत्ते महाणंदियावत्ते, महाघोसस्स आवत्ते वियावत्ते महाणंदियावत्ते णंदियावत्ते २०, सक्कस्स सोमे जमे वरुणे वेसमणे, ईसाणस्स सोमे जमे वेसमणे वरुणे, एवं एगंतरिता जावच्चुतस्स, चउव्विहा वाउकुमारा० पं० तं-काले महाकाले वेलंबे पभंजणे (सू० २५६) चउ-

देवा पं तं—भवणवासी वाणमंतरा जोइसिया विमाणवासी (सू०२५७)। चउव्विहे पमाणे पं० तं०—दव्वप्पमाणे खेत्तप्पमाणे कालप्पमाणे भावप्पमाणे (सू० २५८)।

पुरुषाधिकारादेव देवविशेषपुरुषनिरूपणपराणि लोकपालादिसूत्राणि कण्ठ्यानि नवरं इन्द्रः परमैश्वर्ययोगात् प्रभुः, महान् वा गजेन्द्रवत्, राजा तु राजनाद् दीपनात् शोभावत्त्वादित्यर्थः आराध्यत्वाद्वा, एकार्थौ वैताविति, दाक्षिणात्येषु यो नामतस्तृतीयो लोकपालः स औदीच्येषु चतुर्थश्चतुर्थस्त्वितर इति, एवं 'एक्कंतरिय'त्ति, यन्नामानः शक्रस्य तन्नामान एव सनत्कुमारब्रह्मलोकशुक्रप्राणतेन्द्राणां, तथा यन्नामान ईशानस्य तन्नामान एव माहेन्द्रलान्तकसहस्राराच्युतेन्द्राणामिति। कालादयः पातालकलशस्वामिन इति। चतुर्विधा देवा इत्युक्तम्, एतच्च संख्याप्रमाणमिति प्रमाणप्ररूपणसूत्रं, तत्र प्रमिति प्रमीयते वा—परिच्छिद्यते येनार्थस्तत् प्रमाणं, तत्र द्रव्यमेव प्रमाणं दण्डादिद्रव्येण वा धनुरादिना शरीरादेर्द्रव्यैर्वा दण्डहस्ताङ्गुलादिभिः द्रव्यस्य वा जीवादेः द्रव्याणां वा जीवधर्म्माधर्म्मादीनां द्रव्ये वा परमाण्वादौ पर्यायाणां द्रव्येषु वा तेष्वेव तेषामेव प्रमाणं द्रव्यप्रमाणं, एवं यथायोगं सर्वत्र विग्रहः कार्यः, तत्र द्रव्यप्रमाणं द्विधा—प्रदेशनिष्पन्नं विभागनिष्पन्नं च, तत्र आद्यं परमाण्वाद्यनन्तप्रदेशिकान्तं, विभागनिष्पन्नं पञ्चधा—मानादि, तत्र मानं धान्यमानं सेतिकादि रसमानं कर्षादि १ उन्मानं तुलाकर्षादि २ अवमानं हस्तादि ३ गणितमेकादि ४ प्रतिमानं गुञ्जावल्लादीति ५ क्षेत्रम्—आकाशं तस्य प्रमाणं द्विधा—प्रदेशनिष्पन्नादि, तत्र प्रदेशनिष्पन्नमेकप्रदेशावगाढादि असंख्यप्रदेशावगाढान्तं, विभागनिष्पन्नमङ्गुल्यादि, कालः—समयस्तन्मानं द्विधा प्रदेशनिष्पन्नमेकसमयस्थित्यादि असंख्येयसमयस्थित्यन्तं विभागनिष्पन्नं समयावलिकेत्यादि, क्षेत्रकालयोर्द्रव्यत्वे सत्यपि भेदनिर्देशो जीवादिद्रव्यविशेषकत्वेनानयोस्तत्पर्यायताऽपीति द्रव्याद्विशिष्टताख्यापनार्थः भाव एव भावानां वा

प्रमाणं भावप्रमाणं गुणनयसंख्याभेदभिन्नं, तत्र गुणा–जीवस्य ज्ञानदर्शनचारित्राणि, तत्र ज्ञानं प्रत्यक्षानुमानोपमानागमरूपं प्रमाणमिति, नया–नैगमादयः, संख्या–एकादिकेति ।

देवाधिकारे एवेदं सूत्रचतुष्टयं–

चत्तारि दिसाकुमारिमहत्तरियाओ पं० तं०—रूया रूयंसा सुरूवा रूपावती, चत्तारि विज्जुकुमारिमहत्तरियाओ पं० तं०—चित्ता चित्तकणगा सतेरा सोतामणी (सू० २५९)। सक्कस्स णं देविंदस्स देवरन्नो मज्झिमपरिसाते देवाणं चत्तारि पलिओवमाइं ठिती पं०, ईसाणस्स देविंदस्स देवरन्नो मज्झिमपरिसाए देवीणं चत्तारि पलिओवमाइं ठिई पं० (सू० २६०)। चउव्विहे संसारे पं० तं०—दव्वसंसारे खेत्तसंसारे कालसंसारे भावसंसारे (सू० २६१)।

'चत्तारि दिसा' इत्यादि सुगमं, नवरं दिक्कुमार्यश्च ता महत्तरिकाश्च–प्रधानतमास्तासां वा महत्तरिका दिक्कुमारीमहत्तरिकाः, एता मध्यरुचकवास्तव्या अर्हतो जातमात्रस्य नालकल्पनादि कुर्वन्तीति, विद्युत्कुमारीमहत्तरिकास्तु विदिग्रुचकवास्तव्याः, एताश्च भगवतो जातमात्रस्य चतसृष्वपि दिक्षु स्थिता दीपिकाहस्ता गायन्तीति । एते च देवाः संसारिण इति संसारसूत्रं, तत्र संसरणम्–इतश्चेतश्च परिभ्रमणं संसारः, तत्र संसारशब्दार्थज्ञस्तत्रानुपयुक्तो द्रव्याणां वा–जीवपुद्गललक्षणानां यथायोगं भ्रमणं द्रव्यसंसारः, तेषामेव क्षेत्रे–चतुर्दशरज्ज्वात्मके यत्संसरणं स क्षेत्रसंसारः, यत्र वा क्षेत्रे संसारो व्याख्यायते तदेव क्षेत्रमभेदोपचारात् संसारो यथा

रगवती गुणनिकेत्यादि, कालस्य–दिवसपक्षमासर्त्वयनसंवत्सरादिलक्षणस्य संसरणं–चक्रन्यायेन भ्रमणं पल्योपमादिकालविशेषविशेषितं वा नरकस्यापि जीवस्य नरकादिषु स कालसंसारः, यस्मिन् वा काले–पौरुष्यादिके संसारो व्याख्यायते स कालोऽपि संसार उच्यते अभेदाद्यथा प्रत्युपेक्षणाकरणात् कालोऽपि प्रत्युपेक्षणेति, तथा संसारशब्दार्थज्ञः तत्रोपयुक्तो जीवपुद्गलयोर्वा संसरणमात्रमुपसर्जनीकृतसकलद्रव्यं भावानां वौदयिकादीनां वर्णादीनां वा संसरणपरिणामो भावसंसार इति ।

अयञ्च द्रव्यादिसंसारोऽनेकनयैर्दृष्टिवादे विचार्यते इति दृष्टिवादसूत्रं–

चउव्विहे दिट्ठिवाए पं०तं—परिकम्मं सुत्ताइं पुव्वगए अणुजोगे (सू०२६२)। चउव्विहे पायच्छित्ते पं० तं० णाणपायच्छित्ते दंसणपायच्छित्ते चरित्तपायच्छित्ते चियत्तकिचपायच्छित्ते, १ चउव्विहे पायच्छित्ते पं० तं– परिसेवणापायच्छित्ते संजोयणापायच्छित्ते आरोअणापायच्छित्ते पलिउंचणापायच्छित्ते २ (सू० २६३)।

'चउव्विहे दिट्ठिवाए' इत्यादि, तत्र दृष्टयो दर्शनानि–नया उच्यन्ते–अभिधीयन्ते पतन्ति वा–अवतरन्ति यस्मिन्नसौ दृष्टिवादो दृष्टिपातो वा–द्वादशमङ्गम्, तत्र सूत्रादिग्रहणयोग्यतासंपादनसमर्थं परिकर्म गणितपरिकर्मवत्, तच्च सिद्धसेनिकादि, सूत्राणीति ऋजुसूत्रादीनि द्वाविंशतिर्भवन्ति, इह सर्वद्रव्यपर्यायनयाद्यर्थसूचनात् सूत्राणीति समस्तश्रुतात्पूर्वं करणात् पूर्वाणि, तानि चोत्पादपूर्वादीनि चतुर्दशेति, एतेषां चैवं नामप्रमाणानि, तद्यथा–"उप्पाय १ अग्गेणीयं २ वीरियं ३ अत्थिनत्थि उ पवायं ४। णाणपवायं ५

१ उत्पादं अग्रायणीयं वीर्यं अस्तिनास्तिप्रवादं ज्ञानप्रवादं सत्यप्रवादमात्मप्रवादं च कर्मप्रवादं च॥१॥

सच्चं ६ आयपवायं च ७ कम्मं च ८ ॥१॥ पुव्वं पच्चक्खाणं ९ विज्जणुवायं १० अवंझ ११ पाणाउं १२। किरियाविसालपुव्वं १३ चोद्दसमं बिंदुसारं तु १४ ॥२॥ उप्पाये पयकोडी १ अग्गेणीयंमि छन्नउइलक्खा २। विरियम्मि सयरिलक्खा ३ सट्ठिलक्खा उ अत्थिणत्थिम्मि ४ ॥३॥ एगा पउणा कोडी णाणपवायंमि होइ पुव्वंमि ५। एगा पयाण कोडी छच्च पया सच्चवायंमि ॥४॥ छव्वीसं कोडीओ आयपवायंमि होइ पयसंखा ७। कम्मपवाए कोडी असीती लक्खेहिं अब्भहिआ ८ ॥५॥ चुलसीइ सयसहस्सा पच्चक्खाणंमि वन्निया पुव्वे। एक्का पयाण कोडी दससहसहिया य अणुवाए १० ॥६॥ छव्वीसं कोडीओ पयाण पुव्वे अवंझणामंमि ११। पाणाउम्मि य कोडी छप्पणलक्खेहि अब्भहिया १२ ॥७॥ नवकोडीओ संखा किरियविसालंमि वन्निया गुरुणा १३। अद्धत्तेरसलक्खा पयसंखा बिंदुसारम्मि ॥८॥" इति, तेषु गतं-प्रविष्टं यत् श्रुतं तत्पूर्वगतं-पूर्वाण्येव, अङ्गप्रविष्टमङ्गानि यथेति, योजनं योगः अनुरूपोऽनुकूलो वा सूत्रस्य निजेनाभिधेयेन सह योग इत्यनुयोगः, स चैकस्तीर्थकराणां प्रथमसम्यक्त्वावाप्तिपूर्वभवादिगोचरो यः स मूलप्रथमानुयोगोऽभिधीयते, यस्तु कुलकरादिवक्तव्यता गोचरः स गण्डिकानुयोग इति। पूर्वगतमनन्तरमुक्तं, तत्र

प्रत्याख्यानं पूर्वं विद्यानुवादं अवन्ध्यं प्राणायुः क्रियाविशालं पूर्वं चतुर्दशं बिन्दुसारं तु ॥२॥ उत्पादे पदकोटी अग्रायणीये षण्णवतिलक्षाः वीर्ये सप्ततिलक्षाः अस्तिनास्तिपूर्वे षष्टिलक्षाः ॥३॥ पादोनैका कोटी ज्ञानप्रवादे भवति पूर्वे सत्यवादे षडधिकैका पदकोटी ॥४॥ आत्मप्रवादे षड्विंशतिः कोट्यः पदसंख्यया भवंति अशीत्या लक्षैरधिका पदकोटी कर्मप्रवादे ॥५॥ प्रत्याख्यानपूर्वे चतुरशीतिसहस्राणि वर्णितानि विद्यानुवादे दशसहस्राधिकैका कोटी पदानां ॥६॥ अवन्ध्यनाम्नि पूर्वे षड्विंशतिः कोट्यः पदानां प्राणायुषि च षट्पञ्चाशल्लक्षाधिका कोटी ॥७॥ गुरुणा क्रियाविशाले नव कोट्यो वर्णिताः पदसंख्यया अर्द्धत्रयोदश लक्षा बिन्दुसारे पदसंख्यया ॥८॥

न प्रायश्चित्तप्ररूपणाऽऽसीदिति प्रायश्चित्तमूत्रद्वयं, तत्र ज्ञानमेव प्रायश्चित्तं, यतस्तदेव पापं छिनत्ति प्रायः चित्तं वा शोधयतीति निरुक्तिवशात् ज्ञानप्रायश्चित्तमिति, एवमन्यत्रापि, 'वियत्तकिच्चे' त्ति व्यक्तस्य-भावतो गीतार्थस्य कृत्यं-करणीयं व्यक्तकृत्यं प्रायश्चित्तमिति, गीतार्थो हि गुरुलाघवपर्यालोचनेन यत् किञ्चन करोति तत्सर्वं पापविशोधकमेव भवतीति, अथवा ज्ञानाद्यतिचारविशुद्धये यानि प्रायश्चित्तान्यालोचनादीनि विशेषतोऽभिहितानि तानि तथा व्यपदिश्यन्ते, (यद्वा) 'वियत्ते'ति विशेषेण-अवस्थाद्यौचित्येन विशेषानभिहितमपि दत्तं-वितीर्णमभ्यनुज्ञातमित्यर्थः, यत्किञ्चिन्मध्यस्थगीतार्थेन कृत्यम्-अनुष्ठानं तद् विदत्तकृत्यं प्रायश्चित्तमेव, 'चियत्तकिच्चे'त्ति पाठान्तरतस्तु प्रीतिकृत्यं वैयावृत्त्यादीति, प्रतिषेवणम्-आसेवनमकृत्यस्येति प्रतिषेवणा, सा च द्विधा-परिणामभेदात् प्रतिषेवणीयभेदाद्वा, तत्र परिणामभेदात् "पडिसेवणा उ भावो सो पुण कुसलोव्व होज्जऽकुसलो वा। कुसलेण होइ कप्पो अकुसलपरिणामओ दप्पो ॥१॥" प्रतिषेवणीयभेदात्तु "मूलगुणउत्तरगुणे दुविहा पडिसेवणा समासेणं १। मूलगुणे पंचविहा पिंडविसोहाइगी इयरा ॥१॥" तस्यां प्रायश्चित्तमालोचनादि, तच्चेदम्-"आलोयण १ पडिक्कमणे २ मीस ३ विवेगे ४ तहा विउस्सग्गे ५। तव ६ छेय ७ मूल ८ अणवट्ठया य ९ पारंचिए १० चेव ॥१॥ इति प्रतिषेवणाप्रायश्चित्तं १, संयोजनम्-एकजातीयातिचारमीलनं संयोजना यथा शय्यातरपिण्डो गृहीतः सोऽप्युदकार्द्रहस्तादिना सोऽप्यभ्याहृतः सोऽप्याधाकर्म्मिकस्तत्र यत् प्रायश्चित्तं तत् संयोजनाप्राय-

१ भावः प्रतिषेवणा सः पुनः कुशलो वा भवेदकुशलो वा। कुशलेन भवति कल्पः अकुशलपरिणामाद्दर्पः ॥१॥ २ मूलगुणोत्तरगुणेषु द्विविधा प्रतिषेवणा समासेन। मूलगुणेषु पंचविधा पिंडविशोध्यादिका इतरा ॥१॥" ३ आलोचनं प्रतिक्रमणं मिश्रं विवेकस्तथा व्युत्सर्गः। तपश्छेदो मूलमनवस्थाप्यं पारांचितं चैव ॥१॥

श्चित्तम्, तथा आरोपणमेकापराधप्रायश्चित्ते पुनः पुनरासेवनेन विजातीयप्रायश्चित्ताध्यारोपणमारोपणा, यथा पञ्चरात्रिन्दिवप्रायश्चित्तमापन्नः पुनस्तत्सेवने दशरात्रिन्दिवं पुनः पञ्चदशरात्रिन्दिवमेवं यावत्षण्मासात् ततस्तस्याधिकं तपो देयं न भवति अपि तु शेषतपांसि तत्रैवान्तर्भावनीयानि, इह तीर्थे षण्मासान्तत्वात् तपस इति, उक्तं च—"[1]पंचाईयारोवण नेयव्वा जाव होंति छम्मासा। तेण परं मासियाणं छण्हुवरिं जोसणं कुज्जा ॥१॥ इति, आरोपणया प्रायश्चित्तमारोपणाप्रायश्चित्तमिति, तथा परिकुञ्चनम्—अपराधस्य द्रव्यक्षेत्रकालभावानां गोपायनमन्यथा सतामन्यथा भणनं परिकुञ्चना परिवञ्चना वा, उक्तं च—"दव्वे खेत्ते काले भावे पलिउञ्चणा चउवियप्प" त्ति, तथाहि—[2]सचित्ते अचित्तं १ जणवयपडिसेवियं च अद्धाणे २। सुब्भिक्खे य दुभिक्खे ३ हट्ठेण तहा गिलाणेणं ॥१॥" इति, तस्याः प्रायश्चित्तं परिकुञ्चनाप्रायश्चित्तं, विशेषोऽत्र व्यवहारपीठादवसेय इति।

प्रायश्चित्तं च कालापेक्षया दीयत इति कालनिरूपणासूत्रम्—

**चउव्विहे काले पं० तं—पमाणकाले अहाउयनिव्वत्तिकाले मरणकाले अद्धाकाले (सू०२६४)। चउव्विहे पोग्गलपरिणामे पन्नते तं—वन्नपरिणामे गंधपरिणामे रसपरिणामे फासपरिणासे (सू० २६५)। भरहेरवएसु णं वासेसु पुरिमपच्छिमवज्जा मज्झिमगा बावीसं अरहंता भगवंता चाउज्जामं धम्मं पण्णवेंति, तं०—सव्वातो पा-**

१ पंचादिकारोपणा ज्ञातव्या यावद्भवन्ति षण्मासास्ततः परं मासादीनां षण्णामुपरि शोषणं कुर्यात् ॥१॥ २ सचित्तमचित्तं जनपदप्रतिसेवितं चाध्वनि सुभिक्षे दुर्भिक्षे च हृष्टेन तथा ग्लानेन ॥१॥

पाणाइवायाओ वेरमणं, एवं मुसावायाओ वेरमणं, सव्वातो अदिन्नादाणाओ वेरमणं, सव्वाओ बहिद्धादाणा [परिग्गहा]ओ वेरमणं १. सव्वेसु णं महाविदेहेसु अरहंता भगवन्तो चाउज्जामं धम्मं पण्णवयंति, तं-सव्वातो पाणातिवायाओ वेरमणं, जाव सव्वातो बहिद्धादाणाओ वेरमणं (सू० २६६)।

तत्र प्रमीयते-परिच्छिद्यते येन वर्षशतपल्योपमादि तत्प्रमाणं तदेव कालः प्रमाणकालः, स च अद्धाकालविशेष एव दिवसादिलक्षणो मनुष्यक्षेत्रान्तर्वर्त्तीति उक्तं च—"दुविहो पमाणकालो दिवसपमाणं च होइ राई य। चउपोरिसिओ दिवसो राई चउपोरिसी चेव ॥१॥" इति, यथा-यत्प्रकारं नारकादिभेदेनायुः-कर्म्मविशेषो यथायुस्तस्य रौद्रादिध्यानादिना निर्वृत्तिः-बन्धनं तस्याः सकाशाद्यः कालो-नारकादित्वेन स्थितिर्जीवानां स यथायुर्निर्वृत्तिकालः, अथवा यथाऽऽयुषो निर्वृत्तिस्तथा यः कालो-नारकादिभवेऽवस्थानं स तथेति, अयमप्यद्धाकाल एवायुष्ककर्मानुभवविशिष्टः, सर्वसंसारिजीवानां वर्त्तनादिरूप इति, उक्तं च-"आउयमेत्तविसिट्ठो स एव जीवाण वत्तणादिमओ। भन्नइ अहाउकालो वत्तइ जो जच्चिरं जेणं ॥१॥ इति, मरणस्य-मृत्योः कालः-समयो मरणकालः, अयमप्यद्धासमयविशेष एव, मरणविशिष्टो मरणमेव वा कालो, मरणपर्यायत्वादिति, उक्तं च-"कालोत्ति मयं मरणं जहेह मरणं गओत्ति कालगओ। तम्हा स कालकालो जो जस्स मओ मरणकालो ॥१॥ इति, तथा अद्धैव कालः अद्धाकालः, कालशब्दो हि वर्ण-

१ द्विविधः प्रमाणकालः दिवसप्रमाणो भवति रात्रिप्रमाणश्च चतुःपौरुषीको दिवसो रात्रिरपि चतुःपौरुषी एव ॥१॥ २ आयुर्मात्रविशिष्टः स एव जीवानां वर्त्तनादिमयः। भण्यते यथाऽऽयुष्ककालो वर्त्तते यो यच्चिरं येन ॥१॥ ३ काल इति मतं मरणं यथेह मरणं गत इति कालगतः। तस्मात् स कालकालो यो यस्य मतो मरणकालः ॥२॥

प्रमाणकालादिष्वपि वर्त्तते, ततोऽद्धाशब्देन विशिष्यत इति, अयं च सूर्यक्रियाविशिष्टो मनुष्यक्षेत्रान्तर्वर्त्ती समयादिरूपोऽवसेयः, उक्तं च—"सूरकिरियाविसिट्ठो गोदोहाइकिरियासु निरवेक्खो। अद्धाकालो भन्नइ समयक्खेत्तंमि समयाइ ॥१॥ समयावलियमुहुत्ता दिवसमहोरत्तपक्खमासा य। संवच्छरजुगपलिया सागरओसप्पिपरियट्टा ॥२॥" इति। द्रव्यपर्यायभूतस्य कालस्य चतुःस्थानकमुक्तम्, इदानीं पर्यायाधिकारात् पुद्गलानां पर्यायभूतस्य परिणामस्य तदाह—'चउव्विहे' इत्यादि, परिणामः—अवस्थातोऽवस्थान्तरगमनम्, उक्तं च—"परिणामो ह्यर्थान्तरगमनं न तु सर्वथा व्यवस्थानम्। न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥१॥" इति, तत्र वर्णस्य-कालादेः परिणामः—अन्यथा भवनं वर्णेन वा कालादिनेतरत्यागेन पुद्गलस्य परिणामो वर्णपरिणामः, एवमन्येऽपि। अजीवद्रव्यपरिणाम उक्तोऽधुना तु जीवद्रव्यस्य परिणामा विचित्रा सूत्रप्रपञ्चेनाभिधीयन्ते—तत्र च 'भरते' त्यादिसूत्रद्वयं व्यक्तमेव, किन्तु पूर्वपश्चिमवर्जाः, किमुक्तं भवति ?—मध्यमका इति, ते चाष्टादयोऽपि भवन्तीत्युच्यते—द्वाविंशतिरिति, चत्वारो यमा एव यामा निवृत्तयो यस्मिन् स तथा 'बहिद्धादाणाओ' त्ति बहिर्द्धा—मैथुनं परिग्रहविशेषः आदानं च—परिग्रहस्तयोर्द्वन्द्वैकत्वमथवा आदीयत इत्यादानं—परिग्राह्यं वस्तु तच्च धर्मोपकरणमपि भवतीत्यत आह—बहिस्तात्—धर्मोपकरणाद् बहिर्यदिति, इह च मैथुनं परिग्रहेऽन्तर्भवति, न ह्यपरिगृहीता योषिद् भुज्यत इति प्रत्याख्येयस्य प्राणातिपातादेश्चतुर्विधत्वात् चतुर्यामता धर्म्मस्येति, इयं चेह भावना—मध्यमतीर्थकराणां विदेहकानां च चतुर्यामधर्म्मस्य पूर्वपश्चिमतीर्थकरयोश्च पञ्चयामधर्म्मस्य प्ररूपणा शिष्यापेक्षा, परमार्थतस्तु पञ्चयामस्यैवोभये-

१ सूर्यक्रियाविशिष्टो गोदोहादिक्रियासु निरपेक्षः। अद्धाकालो भण्यते समयादिः समयक्षेत्रे ॥१॥ समय आवलिका मुहूर्त्तः, दिवसोऽहोरात्रः पक्षः मासः संवत्सरं युगं पल्यः सागरः उत्सर्प्पिणी परावर्त्तः ॥२॥

पालयन्तो, यतः प्रथमपश्चिमतीर्थकरतीर्थसाधव ऋजुजडा वक्रजडाश्चेति, तत्त्वादेव परिग्रहो वर्जनीय इत्युपदिष्टे मैथुनवर्जनमवबोद्धुं पालयितुं च न क्षमाः, मध्यमविदेहजतीर्थंकरतीर्थसाधवस्तु ऋजुप्रज्ञत्वात् तद्बोद्धुं वर्जयितुं च क्षमा इति, भवतश्चात्र श्लोकौ—"पुरिमा उज्जुजड्डा उ, वक्कजड्डा य पच्छिमा। मज्झिमा उज्जुपन्ना उ, तेण धम्मे दुहा कए ॥१॥ पुरिमाणं दुव्विसोज्झो उ, चरिमाणं दुरणुपालए। कप्पो मज्झिमगाणं तु, सुविसुज्झे सुपालए ॥२॥" इति।

अनन्तरोक्तेभ्यः प्राणातिपातादिभ्योऽनुपरतोपरतानां दुर्गतिसुगती भवतः, तद्वन्तश्च ते दुर्गतेतरा भवन्तीति दुर्गतिसुगत्यात्मकारिणामयोर्दुर्गतसुगतानां च भेदान् सूत्रचतुष्टयेनाह—

चत्तारि दुग्गतीओ पं० तं०—णेरइयदुग्गती तिरिक्खजोणियदुग्गती मणुस्सदुग्गती देवदुग्गई १, चत्तारि सोग्गईओ पं० तं०—सिद्धसोगती देवसोग्गती मणुयसोग्गती सुकुलपच्चायाति २, चत्तारि दुग्गता पं० तं०—नेरइयदुग्गता तिरिक्खजोणियदुग्गता मणुयदुग्गता देवदुग्गता ३, चत्तारि सुग्गता पं० तं०—सिद्धसुगता जाव सुकुलपच्चायाया ४ (सू० २६७)। पढमसमयजिणस्स णं चत्तारि कम्मंसा खीणा भवंति—णाणावरणिज्जं दंसणावरणिज्जं मोहणिज्जं अन्तराइतं १, उप्पन्ननाणदंसणधरे णं अरहा जिणे केवली चत्तारि कम्मंसे वेदेति,

---

१ प्रथमे ऋजुजडाः वक्रजडाश्च पाश्चात्याः मध्यमास्तु ऋजुप्रज्ञास्तेन धर्मो द्विधा कृतः ॥१॥ पूर्वाणां दुर्विशोध्यस्तु चरमाणां दुरनुपाल्यः कल्पः मध्यमानान्तु सुविशोध्यः सुपाल्यश्च ॥२॥

तं०—वेदणिज्जं आउयं णामं गोतं २, पढमसमयसिद्धस्स णं चत्तारि कम्मंसा जुगवं खिज्जंति तं०—वेयणिज्जं आउयं णामं गोतं ३ (सू० २६८)।

'चत्तारी'त्यादि गतार्थम्, नवरं मनुष्यदुर्गतिः निन्दितमनुष्यापेक्षया देवदुर्गतिः किल्बिषिकाद्यपेक्षयेति, 'सुकुलपच्चायाइ'त्ति देवलोकादौ गत्वा सुकुले–इक्ष्वाकादौ प्रत्यायातिः–प्रत्यागमनं प्रत्याजातिर्वा–प्रतिजन्मेति, इयञ्च तीर्थङ्करादीनामेवेति मनुष्यसुगतेर्भोगभूमिजादिमनुजत्वरूपाया भिद्यते, दुर्गतिरेषामस्तीत्यचि प्रत्यये दुर्गता दुःस्था वा दुर्गताः एवं सुगताः। अनन्तरं सिद्धसुगता उक्ताः ते चाष्टकर्मक्षयात् भवन्त्यतः क्षयपरिणामस्य क्रममाह–'पढमे'त्यादि सूत्रत्रयं व्यक्तं, परं प्रथमः समयो यस्य स तथा स चासौ जिनश्च–सयोगिकेवली प्रथमसमयजिनस्तस्य कर्म्मणः–सामान्यस्यांशाः–ज्ञानावरणीयादयो भेदा इति, उत्पन्ने–आवरणक्षयाज्जाते ज्ञानदर्शने–विशेषसामान्यबोधरूपे धारयतीत्युत्पन्नज्ञानदर्शनधरोऽनेनानादिसिद्धकेवलज्ञानवतः सदाशिवस्यासद्भावं दर्शयति, न विद्यते रहः–एकान्तो गोप्यमस्य सकलसन्निहितव्यवहितस्थूलसूक्ष्मपदार्थसार्थसाक्षात्कारित्वादित्यरहा देवादिपूजाऽर्हत्वेनार्हन्वा रागादिजेतृत्वाज्जिनः केवलानि–परिपूर्णानि ज्ञानादीनि यस्य सन्ति स केवलीति, सिद्धत्वस्य कर्मक्षपणस्य च एकसमये संभवात् प्रथमसमयसिद्धस्येत्यादि व्यपदिश्यते।

असिद्धानां तु हास्यादयो विकारा भवन्तीति हास्यं तावच्चतुःस्थानकावतारित्वादाह—

चउहिं ठाणेहिं हासुप्पत्ती सिता तं०—पासित्ता भासेत्ता सुणेत्ता संभरेत्ता (सू० २६९) चउव्विहे अंतरे

पं० तं०—कट्ठंतरे पम्हंतरे लोहंतरे पत्थरंतरे, एवामेव इत्थिए वा पुरिसस्स वा चउव्विहे अंतरे पं० तं०—कट्ठंतरसमाणे पम्हंतरसमाणे लोहंतरसमाणे पत्थंतरसमाणे (सू० २७०) चत्तारि भयगा पं० तं०—दिवसभयते जत्ताभयते उच्चत्तभयते कब्बालभयते (सू० २७१) चत्तारि पुरिसजाता पं० तं०—संपागडपडिसेवी णामेगे णो पच्छन्नपडिसेवी पच्छन्नपडिसेवी णामेगे णो संपागडपडिसेवी एगे संपागडपडिसेवीवि पच्छन्नपडिसेवीवि एगे नो संपागडपडिसेवी णो पच्छन्नपडिसेवी (सू० २७२)।

'चउही'त्यादि, हसनं हासः—हासमोहोदयजनितो विकारस्तस्योत्पत्तिः—उत्पादः हासोत्पत्तिः 'पासित्त'त्ति दृष्ट्वा विदूषकादिचेष्टं। चक्षुषा, तथा भाषित्वा वाचा किञ्चिदसमञ्जसवचनं तथा श्रुत्वा श्रोत्रेण परोक्तं तथाविधवाक्यं तथा तथाविधमेव चेष्टावाक्यादिकं स्मृत्वा हसतीति शेषः, एवं दर्शनादीनि हासकारणानि भवन्तीति। असिद्धानामेव धर्मान्तरनिरूपणाय दृष्टान्तदार्ष्टान्तिकार्थवत्सूत्रद्वयम्, 'चउव्विहे' इत्यादि, काष्ठस्य च काष्ठस्य चेति काष्ठयोरन्तरं—विशेषो रूपनिर्म्माणादिभिरिति काष्ठान्तरमेवं पक्ष्म—कर्पासरूतादि पक्ष्मणोरन्तरं विशिष्टसौकुमार्यादिभिः लोहान्तरं अत्यन्तच्छेदकत्वादिभिः प्रस्तरान्तरं—पाषाणान्तरं चिन्तितार्थप्रापणादिभिरिति, 'एवमेव' काष्ठान्तरवत्, स्त्रिया वा स्त्र्यन्तरापेक्षया पुरुषस्य वा पुरुषान्तरापेक्षया, वाशब्दौ स्त्रीपुंसयोश्चातुर्विध्यं प्रति निर्विशेषताख्यापनार्थौ, काष्ठान्तरेण समानं- तुल्यमन्तरं—विशेषो विशिष्टपदवीयोग्यत्वादिना पक्ष्मान्तरसमानं वचनसुकुमारतयैव लोहांतरसमानं स्नेहच्छेदेन परीषहादौ निर्भङ्गत्वादिभिश्च प्रस्तरान्तरसमानं चिन्तातिक्रान्तमनोरथपूरकत्वेन विशिष्टगुणवद्वन्द्यपदवीयोग्यत्वादिना चेति। अनन्तरसूत्रेऽन्तरमुक्तमिति पुरुषविशेषान्तरनिरूपणाय भृतकसूत्रं, तत्र भ्रियते—पोष्यते स्मेति भृतः स एवानुकम्पितो भृतकः कर्म्मकर इत्यर्थः,

प्रतिदिवसं नियतमूल्येन कर्म्मकरणार्थं यो गृह्यते स दिवसभृतकः १ यात्रा–देशान्तरगमनं तस्यां सहाय इति भ्रियते यः स यात्राभृतकः २ मूल्यकालनियमं कृत्वा यो नियतं यथावसरं कर्म्म कार्यते स उच्चताभृतकः, कब्बाडभृतकः–क्षितिखानकः ओडादिः, यस्य स्वं कर्म्मार्प्यते द्विहस्ता त्रिहस्ता वा त्वया भूमिः खनितव्यैतावत्ते धनं दास्यामीत्येवं नियम्येति, इह गाथे—"दिवसभयओ उ घेप्पइ छिन्नेण धणेण दिवसदेवसियं । जत्ता उ होइ गमणं उभयं वा [आगमनं चेत्यर्थः] एत्तियधणेणं ॥१॥ कब्बाल ओडमाई हत्थमियं कम्म एत्तियधणेणं । एचिरकालुच्चत्ते कायव्वं कम्म जं बेंति ॥२॥" उक्तं लौकिकस्य पुरुषविशेषस्यान्तरमधुना लोकोत्तरस्य तस्यान्तरप्रतिपादनाय प्रतिषेविसूत्रं, तत्र सम्प्रकटम्–अगीतार्थसमक्षमकल्प्यभक्तादि प्रतिषेवितुं शीलं यस्य स सम्प्रकटप्रतिसेवीत्येवं सर्वत्र, नवरं प्रच्छन्नमगीतार्थासमक्षं, अत्र चाद्ये भङ्गकत्रये पुष्टालम्बनो बकुशादिः निरालम्बनो वा पार्श्वस्थादिर्द्रष्टव्यः, चतुर्थे तु निर्ग्रन्थः स्नातको वेति, अन्तराधिकारादेव देवपुरुषाणां स्त्रीकृतमन्तरं प्रतिपादयन्नाह—

**चमरस्स णं असुरिंदस्स असुरकुमाररन्नो सोमस्स महारन्नो चत्तारि अग्गमहिसीओ पं० तं०—कणगा कणगलता चित्तगुत्ता वसुंधरा, एवं जमस्स वरुणस्स वेसमणस्स, बलिस्स णं वतिरोयणिंदस्स वतिरोयणरन्नो सोमस्स महारन्नो चत्तारि अग्गमहिसीओ पं० तं०—मितगा सुभद्दा विज्जुत्ता असणी, एवं जमस्स वेसमणस्स वरुणस्स, धरणस्स णं नागकुमारिंदस्स णागकुमाररन्नो कालवालस्स महारन्नो चत्तारि अग्गमहिसीओ**

१ छिन्नेन धनेन दिवसे दिवसे दिवसभृतकस्तु गृह्यते यात्रा तु भवति गमनं गमनागमने वा इयता धनेन ॥१॥ ओडादिः कब्बडभृतको नियम्य इयता धनेन हस्तमितं कर्म्म कार्यते उच्चताभृतक इयत्कालं कर्म कर्तव्यं यद् ब्रवीति (भवति) ॥२॥

पं० तं०—असोगा विमला सुप्पभा सुदंसणा, एवं जाव संखवालस्स, भूताणंदस्स णं णागकुमारिंदस्स णागकुमाररन्नो कालवालस्स महारन्नो चत्तारि अग्ग० पं०तं०—सुणंदा सुभद्दा सुजाता सुमणा, एवं जाव सेलवालस्स जहा धरणस्स, एवं सव्वेसिं दाहिणिंदलोगपालाणं जाव घोसस्स जहा भूताणंदस्स एवं जाव महाघोसस्स लोगपालाणं, कालस्स णं पिसाइंदस्स पिसायरन्नो चत्तारि अग्गमहिसीओ पं० तं०—कमला कमलप्पभा उप्पला सुदंसणा, एवं महाकालस्सवि, सुरूवस्स णं भूतिंदस्स भूतरन्नो चत्तारि अग्गमहिसीओ पं० तं०—रूववती बहुरूवा सुरूवा सुभगा, एवं पडिरूवस्सवि, पुण्णभद्दस्स णं जक्खिंदस्स जक्खरन्नो चत्तारि अग्गमहिसीओ पं० तं०—पुत्ता बहुपुत्तिता उत्तमा तारगा, एवं माणिभद्दस्सवि, भीमस्स णं रक्खसिंदस्स रक्खसरन्नो चत्तारि अग्गमहिसीओ पं० तं०—पउमा वसुमती कणगा रतणप्पभा, एवं महाभीमस्सवि, किंनरस्स णं किंनरिंदस्स चत्तारि अग्ग० पं० तं०—वडेंसा केतुमती रतिसेणा रतिप्पभा, एवं किंपुरिसस्सवि, सप्पुरिसस्स णं किंपुरिसिंदस्स० चत्तारि अग्गमहिसीओ पं० तं०—रोहिणी णवमिता हिरी पुप्फवती, एवं महापुरिसस्सवि, अतिकायस्स णं महोरगिंदस्स चत्तारि अग्गमहिसीओ पं० तं०—भुयगा भुयगवती महाकच्छा फुडा, एवं महाकायस्सवि, गीतरतिस्स णं गंधव्विंदस्स चत्तारि अग्ग० पं० तं०—सुघोसा विमला सुस्सरा सरस्सती, एवं गीयजसस्सवि, चंदस्स णं जोतिसिंदस्स जोतिसरन्नो चत्तारि अग्गमहिसीओ पं० तं०—चंदप्पभा दोसिणाभा अच्चिमाली पभंकरा, एवं सूरस्सवि, णवरं सूरप्पभा दोसिणाभा अच्चिमाली पभंकरा, इंगालस्स णं महागहस्स चत्तारि

अग्गमहिसीओ पं० तं०--विजया वेजयंती जयंती अपराजिया, एवं सव्वेसिं महग्गहाणं जाव भावकेउस्स, सक्कस्स णं देविंदस्स देवरन्नो सोमस्स महारन्नो चत्तारि अग्ग० पं० तं०--रोहिणी मयणा चित्ता सोमा, एवं जाव वेसमणस्स, ईसाणस्स णं देविंदस्स देवरन्नो सोमस्स महारन्नो चत्तारि अग्ग० पं० तं०--पुढवी राती रयणी विज्जू, एवं जाव वरुणस्स (सू० २७३)। चत्तारि गोरसविगतीओ पं० तं०--खीरं दहिं सप्पिं णवणीतं, चत्तारि सिणेहविगइतीओ पं० तं०--तेल्लं घयं वसा णवणीतं, चत्तारि महाविगतीओ पं० तं०--महुं मंसं मज्जं णवणीतं (सू० २७४)। चत्तारि कूडागारा पं० तं०--गुत्ते णामं एगे गुत्ते गुत्ते णामं एगे अगुत्ते अगुत्ते णामं एगे गुत्ते अगुत्ते णामं एगे अगुत्ते, एवामेव चत्तारि पुरिसजाता पं० तं०--गुत्ते णाममेगे गुत्ते ४, चत्तारि कूडागारसालाओ पं० तं०--गुत्ता णाममेगा गुत्तदुवारा गुत्ताणाममेगा अगुत्तदुवारा अगुत्ता णाममेगा गुत्तदुवारा अगुत्ता णाममेगा अगुत्तदुवारा, एवामेव चत्तारित्थीओ पं० तं०--गुत्ता नाममेगा गुत्तिंदिता गुत्ता णाममेगा अगुत्तिंदिआ [ह्व] ४ (सू० २७५)। चउविहा ओगाहणा पं० तं०--दव्वोगाहणा खेत्तोगाहणा कालोगाहणा भावोगाहणा (सू० २७६)। चत्तारि पन्नत्तीओ अंगबाहिरियातो पं० तं०--चंदपन्नत्ती सूरपन्नत्ती जंबुद्दीवपन्नत्ती दीवसागरपन्नत्ती (सू० २७७)॥ चउट्ठाणस्स पढमो उद्देसओ ॥१॥

'चमरस्से'त्यादिकमग्रमहिपीसूत्रप्रपञ्चमाह, कण्ठ्यश्चायम् , नवरं 'महारन्नो'त्ति लोकपालस्याग्रभूताः-प्रधाना महिष्यो-राजभार्या अग्रमहिष्य इति, वइरोयणत्ति-विविधैः प्रकारै रोच्यन्ते-दीप्यन्त इति विरोचनास्त एव वैरोचनाः-उत्तरदिग्वासिनोऽसुराः

नेषामिन्द्रः, धरणसूत्रे 'एव'मिति कालवालस्येव कोलपालशैलपालशङ्खपालानामेतन्नामिका एव चतस्रश्चतस्रो भार्याः, एतदेवाह—'जाव संखवालस्स'त्ति, भूतानन्दसूत्रे 'एव'मिति यथा कालवालस्य तथान्येषामपि, नवरं तृतीयस्थाने चतुर्थो वाच्यः, धरणस्य दक्षिणनागकुमारनिकायेन्द्रस्य लोकपालानामग्रमहिष्यो यथा यन्नामिकास्तथा तन्नामिका एव सर्वेषां दाक्षिणात्यानां शेषाणामष्टानां वेणुदेवहरिकान्तअग्निशिखपूर्णजलकान्तअमितगतिवेलम्बघोषाख्यानामिन्द्राणां ये लोकपालाः सूत्रे दर्शितास्तेषां सर्वेषामिति, यथा च भूतानन्दस्यौदीच्यनागराजस्य तथा शेषाणामष्टानामौदीच्येन्द्राणां वेणुदालिहरिस्सहाग्निमानवविशिष्टजलप्रभामितवाहनप्रभञ्जनमहाघोषाख्यानां ये लोकपालास्तेषामपीति, एतदेवाह—'जहा धरणस्से'त्यादि । उक्तं सचेतनानामन्तरमथान्तराधिकारादेवाचेतनविशेषाणां विकृतीनां गोरसस्नेहमत्स्यलक्षणमन्तरं सूत्रत्रयेणाह—'चत्तारी'त्यादि, गवां रसो गोरसः, व्युत्पत्तिरेवेयं गोरसशब्दस्य प्रवृत्तिस्तु महिष्यादीनामपि दुग्धादिरूपे रसे, विकृतयः शरीरमनसोः प्रायो विकारहेतुत्वादिति, शेषं प्रकटम्, नवरं सर्पिः—घृतम्, नवनीतं—म्रक्षणं, स्नेहरूपा विकृतयः स्नेहविकृतयो वसा—अस्थिमध्यरसः, महाविकृतयो—महारसत्वेन महाविकारकारित्वात्, महतः सत्त्वोपघातस्य कारणत्वाच्चेति, इह विकृतिप्रस्तावाद् विकृतयो वृद्धगाथाभिः प्ररूप्यन्ते—"खीरं ६ दहि ४ णवणीयं ४ घयं ४ तहा तेल्लमेव ४ गुड २ मज्जं २ । महु ३ मंसं ३ चेव तहा ओगाहिमगं च दसमी उ ॥१॥ गोमहिसुट्टिपसूणं एलगखीराणि पंच चत्तारि । दहिमाइयाइं जम्हा उट्टीणं ताणि णो हुंति ॥२॥ चत्तारि होंति तेल्ला तिलअयसिकुसुंभसरिसवाणं च । विगईओ सेसाणं डोलाईणं न

१ क्षीरं दधि नवनीतं घृतं तथा तैलमेव गुडो मद्यं मधु मांसं चैव तथाऽवगाहिमं च दशमी तु ॥१॥ गोमहिष्युष्ट्रीपशू(अजा)नामेडकस्य क्षीराणि पञ्च दध्यादीनि चतुर्धा यस्मादुष्ट्रीणां तानि न भवन्ति ॥२॥

विगईओ ॥३॥ दवगुलपिंडगुला दो मज्जं पुण कट्ठपिट्ठनिप्फन्नं । मच्छियकोत्तियभामरभेयं च तिहा महुं होइ ॥४॥ जलथलखहयरमंसं चम्मं वस सोणियं तिहेयंपि । आइल्ल तिन्नि चलचल ओगाहिमगं च विगईओ ॥५॥ आदिमानि त्रीणि चलचलेत्येवं पक्वानि विकृतिरित्यर्थः "सेसा न होंति विगई अ जोगवाहीण ते उ कप्पंती । परिभुजंति न पायं जं निच्छयओ न नज्जंति ॥१॥ एगेण चेव तवओ पूरिज्जति पूयएण जो ताओ । बीओवि स पुण कप्पइ निव्विगई लेवडो नवरं ॥ २ ॥" इत्यादि । अचेतनान्तराधिकारादेव गृहविशेषान्तरं दृष्टान्ततयाऽभिधित्सुः पुरुषस्त्रियोश्चान्तरं दार्ष्टान्तिकतया अभिधातुकामः सूत्रचतुष्टयमाह— 'चत्तारि कूडे' त्यादि, कूटानि शिखराणि स्तूपिकास्तद्वन्त्यगाराणि–गेहानि–अथवा कूटं–सत्त्वबन्धनस्थानं तद्वदगाराणि कूटागाराणि, तत्र गुप्तं–प्राकारादिवृतं भूमिगृहादि वा पुनर्गुप्तं स्थगितद्वारतया पूर्वकालापरकालापेक्षया वेति, एवमन्येऽपि त्रयो भङ्गा बोद्धव्याः, पुरुषस्तु गुप्तो नेपथ्यादिनाऽन्तर्हितत्वेन पुनर्गुप्तो गुप्तेन्द्रियत्वेन, अथवा गुप्तः पूर्वं पुनर्गुप्तोऽधुनापीति, विपर्यय ऊह्यः, तथा कूटस्येव आकारो यस्याः शालाया–गृहविशेषस्य सा तथा, अयं च स्त्रीलिङ्गदृष्टान्तः, स्त्रीलक्षणदार्ष्टान्तिकार्थसाधर्म्यवशात्, तत्र गुप्ता–परिवारावृता गृहान्तर्गता वस्त्राच्छादिताङ्गा गूढस्वभावा वा गुप्तेन्द्रियास्तु निगृहीतानौचित्यप्रवृत्तेन्द्रियाः, एवं शेषभङ्गा ऊह्याः । अनन्तरं

---

चत्वारि भवन्ति तैलानि तिलातसीकुसुम्भसर्षपाणां च विकृतयः शेषाणि डोलियादीना न विकृतयः ॥३॥ द्रवगुडपिंडगुडौ द्वौ मद्यं पुनः काष्ठपिष्टनिष्पन्नं माक्षिककौंतिकभ्रामरभेदेन मधु त्रिधा भवति ॥४॥ जलस्थलखचरमांसानि चर्म वसा शोणितं त्रिधैतदपि आदिमं पक्वान्नत्रयं अवगाहिमं च विकृतिस्तु ॥५॥ शेषा विकृतयो न भवन्ति ते योगवाहिना कल्पन्ते प्रायः परिभुंजते न यन्निश्चयतो न ज्ञायंते ॥१॥ एकेनापूपेन कटाहश्चैव यः पूर्यते ततः द्वितीयोऽपि स पुनः कल्पते निर्विकृतिको लेपकृत्परम् ॥२॥

गुप्तेन्द्रियत्वमुक्तमिन्द्रियाणि चावगाहनाश्रयाणीत्यवगाहनानिरूपणसूत्रं, अवगाहन्ते—आसते यस्यां आश्रयन्ति वा यां जीवाः साऽवगाहना—शरीरं द्रव्यतोऽवगाहना द्रव्यावगाहना, एवं सर्वत्र, तत्र द्रव्यतोऽनन्तद्रव्या क्षेत्रतोऽसंख्येयप्रदेशावगाढा, कालतोऽसंख्येयसमयस्थितिका, भावतो वर्णाद्यनन्तगुणेति, अथवाऽवगाहना विवक्षितद्रव्यस्याधारभूता आकाशप्रदेशाः, तत्र द्रव्याणामवगाहना द्रव्यावगाहना, क्षेत्रमेवावगाहना क्षेत्रावगाहना, कालस्यावगाहना समयक्षेत्रलक्षणा कालावगाहना, भाववतां द्रव्याणामवगाहना भावावगाहना, भावप्राधान्यादिति, आश्रयणमात्रं वा अवगाहना, तत्र द्रव्यस्य पर्यायैरवगाहना—आश्रयणं द्रव्यावगाहना, एवं क्षेत्रस्य कालस्य भावानां द्रव्येणेति, अन्यथा वोपयुज्य व्याख्येयमिति। अवगाहनायाश्च प्ररूपणा प्रज्ञप्तिष्विति तच्चतुःस्थानकसूत्रम्, तत्र प्रज्ञाप्यन्ते—प्रकर्षेण बोध्यन्ते अर्था यासु ताः प्रज्ञप्तयः, अङ्गानि—आचारादीनि तेभ्यो बाह्याः अङ्गबाह्याः, यथार्थाभिधानाश्चैताः कालिकश्रुतरूपाः, तत्र सूरप्रज्ञप्तिजम्बूद्वीपप्रज्ञप्ती पञ्चमषष्ठाङ्गयोरुपाङ्गभूते, इतरे तु प्रकीर्णकरूपे इति, व्याख्याप्रज्ञप्तिरस्ति पञ्चमी केवलं साऽङ्गप्रविष्टेत्येताश्चतस्र उक्ता इति॥ चतुःस्थानकस्य प्रथमोद्देशकः समाप्त इति।

# अथ चतुर्थस्थानके द्वितीय उद्देशः।





व्याख्यातश्चतुःस्थानकस्य प्रथमोद्देशकोऽधुना द्वितीय आरभ्यते, अस्य चायं पूर्वेण सहाभिसम्बन्धः—अनन्तरोद्देशके जीवादिद्रव्यपर्यायाणां चतुःस्थानकमुक्तमिहापि तेषामेव तदेशोच्यत इत्येवंसम्बन्धस्यास्योद्देशकस्येदमादिसूत्रचतुष्टयम्—

चत्तारि पडिसंलीणा पं० तं०—कोहपडिसंलीणे माणपडिसंलीणे मायापडिसंलीणे लोभपडिसंलीणे, चत्तारि अपडिसंलीणा पं० तं०—कोहअपडिसंलीणे जाव लोभअपडिसंलीणे, चत्तारि पडिसंलीणा पं० तं०—मणपडिसंलीणे वतिपडिसंलीणे कायपडिसंलीणे इंदियपडिसंलीणे, चत्तारि अपडिसंलीणा पं० तं०—मणअपडिसंलीणे जाव इंदियअपडिसंलीणे ४ (सू० २७८)। चत्तारि पुरिसजाता पं० तं०—दीणे णाममेगे दीणे दीणे णाममेगे अदीणे अदीणे णाममेगे दीणे अदीणे णाममेगे अदीणे १, चत्तारि पुरिसजाता पं० तं०—दीणे णाममेगे दीणपरिणते दीणे णामं एगे अदीणपरिणते अदीणे णामं एगे दीणपरिणते अदीणे णाममेगे अदीणपरिणते २, चत्तारि पुरिसजाता पं० तं०—दीणे णाममेगे दीणरूवे ह्व (४) ३, एवं दीणमणे ४-४, दीणसंकप्पे ४-५, दीणपन्ने ४-६, दीणदिट्ठी ४-७, दीणसीलाचारे ४-८, दीणववहारे ४-९, चत्तारि पुरिसजाया पं० तं०—दीणे णाममेगे

दीणपरक्कमे, दीणे णाममेगे अदीण० ह्र (४) १०, एवं सव्वेसिं चउभंगो भाणियव्वो, चत्तारि पुरिसजाता पं० तं०—दीणे णाममेगे दीणवित्ती ४-११, एवं दीणजाती १२, दीणभासी १३, दीणोभासी १४, चत्तारि पुरिसजाता पं० तं०—दीणे णाममेगे दीणसेवी ह्र (४) १५, एवं दीणे णाममेगे दीणपरियाए १६, दीणे णाममेगे दीणपरियाले ह्र (४) १७, सव्वत्थ चउभंगो (सू० २७९)।

'चत्तारि पडिसंलीणे'त्यादि, अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः-अनन्तरसूत्रे प्रज्ञसय उक्ताः, ताश्च प्रतिसंलीनैरेव बुध्यन्त इति प्रतिसंलीनाः सेतराः अनेनाभिधीयन्त इत्येवंसम्बद्धमिदं सुगमं, नवरं, क्रोधादिकं वस्तु वस्तु प्रति सम्यग्लीना–निरोधवन्तः प्रतिसंलीनाः, तत्र क्रोधं प्रति उदयनिरोधेनोदयप्राप्तविफलीकरणेन च प्रतिसंलीनः क्रोधप्रतिसंलीनः, उक्तं च—"उदयस्सेव निरोहो उदयप्पत्ताण वाऽफलीकरणं। जं एत्थ कसायाणं कसायसंलीणया एसा ॥१॥" कुशलमनउदीरणेनाकुशलमनोनिरोधेन च मनः प्रतिसंलीनं यस्य स मनसा वा प्रतिसंलीनो मनःप्रतिसंलीनः, एवं वाक्कायेन्द्रियेष्वपि, नवरं शब्दादिषु मनोज्ञामनोज्ञेषु रागद्वेषपरिहारी इन्द्रियप्रतिसंलीन इति, अत्र गाथा—"अपसत्थाण निरोहो जोगाणमुदीरणं च कुसलाणं। कज्जंमि य विही गमणं जोगे संलीणया भणिया ॥१॥" सद्देसु य भद्दयपावएसु सोयविसमुवगएसु। तुट्ठेण व रुट्ठेण व समणेण सया न होयव्वं ॥१॥" एवं शेषेन्द्रियेष्वपि वक्तव्या,

१ उदयस्यैव निरोध उदयप्राप्तानां वाऽफलीकरणं यदत्र कषायाणां एषा कषायसंलीनता ॥१॥ २ अप्रशस्ताना योगाना निरोधः कुशलानामुदीरणं च कार्ये च विधिना गमनं एषा योगे संलीनतोक्ता ॥१॥ शब्देषु भद्रकपापकेषु श्रोत्रविषयमुपगतेषु रुष्टेन वा तुष्टेन वा सदा श्रमणेन न भवितव्यं ॥१॥

इत्येवं मनःप्रभृतिभिरसंलीनो भवति विपर्ययादिति । असंलीनमेव प्रकारान्तरेण सप्तदशभिश्चतुर्भङ्गीरूपैर्दीनसूत्रैराह–दीनो–दैन्यवान् क्षीणोर्जितवृत्तिः पूर्वं पश्चादपि दीन एव अथवा दीनो बहिर्वृत्त्या पुनर्दीनोऽन्तर्वृत्त्येत्यादिश्चतुर्भङ्गी, तथा दीनो बहिर्वृत्त्या म्लानवदनत्वादिगुणयुक्तशरीरेणेत्यर्थः, एवं प्रज्ञासूत्रं यावदादिपदं व्याख्येयं, दीनपरिणतः अदीनः सन् दीनतया परिणतोऽन्तर्वृत्त्येत्यादि चतुर्भङ्गी २, तथा दीनरूपो मलिनजीर्णवस्त्रादिनेपथ्यापेक्षया ३, तथा दीनमनाः स्वभावत एवानुन्नतचेताः ४, दीनसङ्कल्प उन्नतचित्तस्वाभाव्येऽपि कथञ्चिद्दीनविमर्शः ५, तथा दीनप्रज्ञः हीनसूक्ष्मार्थालोचनः ६, तथा दीनश्चित्तादिभिरेवमुत्तरत्राप्यादिपदं तथा दीनदृष्टिर्विच्छायचक्षुः ७, तथा दीनशीलसमाचारः हीनधर्म्मानुष्ठानः ८, तथा दीनव्यवहारो दीनान्योऽन्यदानप्रतिदानादिक्रियः हीनविवादो वा ९, तथा दीनपराक्रमो हीनपुरुषकार इति १०, तथा दीनस्येव वृत्तिः–वर्त्तनं जीविका यस्य स दीनवृत्तिः ११, तथा दीनं–दैन्यवन्तं पुरुषं दैन्यवद्वा यथा भवति तथा याचत इत्येवंशीलो दीनयाची, दीनं वा यातीति दीनयायी, दीना वा–हीना जातिरस्येति दीनजातिः १२, तथा दीनवद्दीनं वा भाषते दीनभाषी १३, दीनवदवभासते–प्रतिभाति अवभाषते वा–याचत इत्येवंशीलो दीनावभासी दीनावभाषी वा १४, तथा दीनं नायकं सेवत इति दीनसेवी १५, तथा दीनस्येव पर्यायः–अवस्था प्रव्रज्यादिलक्षणा यस्य स दीनपर्यायः १६, 'दीनपरियाले'त्ति दीनः परिवारो यस्य स तथा १७, 'सव्वत्थ चउभंगो'त्ति सर्वसूत्रेषु चत्वारो भङ्गा द्रष्टव्या इति ।

पुरुषजाताधिकारवत्येवेयमष्टादशसूत्री

**चत्तारि पुरिसजाता पं० तं०—अज्जे णाममेगे अज्जे ४, १। चत्तारि पुरिसजाता पं० तं०—अज्जे णाममेगे**

अन्नपरिणए ४, २। एवं अन्नरूवे ३। अन्नमणे ४। अन्नसंकप्पे ५। अन्नपन्ने ६। अन्नदिट्ठी ७। अन्नसीलाचारे ८। अन्नववहारे ९। अन्नपरक्कमे १०। अन्नवित्ती ११। अन्नजाती १२। अन्नभासी १३। अन्नओभासी १४। अन्नसेवी १५। एवं अन्नपरियाए १६। अन्नपरियाले १७, एवं सत्तर आलावगा १७, जहा दीणेणं भणिया तहा अन्नणवि भाणियव्वा, चत्तारि पुरिसजाया पं० तं०—अन्ने णाममेगे अन्नभावे अन्ने नाममेगे अणन्नभावे अणन्ने नाममेगे अन्नभावे अणन्ने नाममेगे अणन्नभावे १८ (सू० २८०) चत्तारि उसभा पं० तं०—जातिसंपन्ने कुलसंपन्ने बलसंपन्ने रूवसंपन्ने, एवामेव चत्तारि पुरिसजाता पं० तं०—जातिसंपन्ने जाव रूवसंपन्ने १, चत्तारि उसभा पं० तं०—जातिसंपन्ने णामं एगे नो कुलसंपण्णे, कुलसंपण्णे नामं एगे नो जाइसंपण्णे, एगे जातिसंपण्णेवि कुलसंपण्णेवि, एगे नो जातिसंपण्णे नो कुलसंपन्ने, एवामेव चत्तारि पुरिसजाया पं० तं०—जातिसंपण्णे नाममेगे ४, २, चत्तारि उसभा पन्नता तं०—जातिसंपन्ने नामं एगे नो बलसंपन्ने, एवामेव चत्तारि पुरिसजाया पं० तं०—जातिसंपन्ने ४, ३, चत्तारि उसभा पं० तं०—जाइसंपन्ने नामं एगे नो रूवसंपन्ने ४, एवामेव चत्तारि पुरिसजाया पं० तं—जातिसंपन्ने नामं एगे नो रूवसंपन्ने, रूवसंपन्ने णाममेगे ह ४, ४, चत्तारि उसभा पं० तं०—कुलसंपन्ने नामं एगे नो बलसंपन्ने ह ४ एवामेव चत्तारि पुरिसजाया पं० तं०—कुलसंपन्ने नाममेगे नो बलसंपन्ने, ह ४, ५, चत्तारि उसभा पं० तं०—कुलसंपन्ने णाममेगे णो रूवसंपन्ने, ह ४, एवामेव चत्तारि पुरिसजाता पं० तं० कुल० ह ४, ६, चत्तारि उसभा पं० तं०—बलसंपन्ने णामं एगे नो रूवसंपण्णे ४ ह, एवामेव

चत्तारि पुरिसजाया पण्णत्ता तं—बलसंपण्णे नाममेगे ४, ७। चत्तारि हत्थी पं० तं०—भद्दे मंदे मिते संकिन्ने, एवामेव चत्तारि पुरिसजाया पं० तं०—भद्दे मंदे मिते संकिन्ने, चत्तारि हत्थी पं० तं०—भद्दे णाममेगे भद्दमणे, भद्दे णाममेगे मंदमणे, भद्दे णाममेगे मियमणे, भद्दे नाममेगे संकिन्नमणे, एवामेव चत्तारि पुरिसजाया पं० तं०—भद्दे णाममेगे भद्दमणे भद्दे णाममेगे मंदमणे भद्दे णाममेगे मियमणे भद्दे णाममेगे संकिन्नमणे, चत्तारि हत्थी पं० तं०—मंदे णाममेगे भद्दमणे मंदे नाममेगे मंदमणे मंदे णाममेगे मियमणे मंदे णाममेगे संकिन्नमणे, एवामेव चत्तारि पुरिसजाता, पं० तं०—मंदे णाममेगे भद्दमणे तं चेव, चत्तारि हत्थी पं० तं०—मिते णाममेगे भद्दमणे मिते णाममेगे मंदमणे मिते णाममेगे मियमणे मिते णाममेगे संकिन्नमणे, एवामेव चत्तारि पुरिसजाता पं० तं०—मिते णाममेगे भद्दमणे तं चेव, चत्तारि हत्थी पं० तं०—संकिण्णे नाममेगे भद्दमणे संकिन्ने नाममेगे मंदमणे संकिन्ने णाममेगे मियमणे, संकिन्ने नाममेगे संकिन्नमणे, एवामेव चत्तारि पुरिसजाया पं० तं०—संकिन्ने नाममेगे भद्दमणे तं चेव जाव संकिन्ने नाममेगे संकिन्नमणे,—मधुगुलियपिंगलक्खो अणुपुव्वसुजायदीहणंगूलो। पुरओ उदग्गधीरो सव्वंगसमाधितो भद्दो ॥१॥ चलबहलविसमचम्मो थूलसिरो थूलएण पेएण। थूलणहदंतवालो हरिपिंगललोयणो मंदो ॥२॥ तणुओ तणुतग्गीवो तणुयतत्तो तणुयदंतणहवालो। भीरू तत्थुव्विग्गो तासी य भवे मिते णामं ॥३॥ एतेसिं हत्थीणं थोवं थोवं तु जो हरति हत्थी। रूवेण व सीलेण व सो संकिन्नोत्ति नायव्वो ॥४॥ भद्दो मज्जइ सरए मंदो उण मज्जते वसंतंमि। मिउ मज्जति हेमंते

संकिन्नो सत्त्वकालंमि ॥५॥ (सू० २८१)

गतार्था, नवरं आर्यो नवधा यदाह—खेत्ते जाईकुलकम्मसिप्पभासाइ नाणचरणे य। दंसणआरिय णवहा मिच्छा सगजवणखसमाइ ॥१॥ इति, तत्र आर्यः क्षेत्रतः पुनरार्यः पापकर्मबहिर्भूतत्वेनापाप इत्यर्थः, एवं सप्तदश सूत्राणि नेयानि, तथा आर्यभावः क्षायिकादिज्ञानादियुक्तः अनार्यभावः क्रोधादिमानिति। पुरुषजातप्रकरणमेव दृष्टान्तदार्ष्टान्तिकार्थोपेतं आ विकथासूत्रादभिधीयते, पाठसिद्धं चैतत्, नवरं ऋषभा-बलीवर्दाः जातिः-गुणवन्मातृकत्वं कुलं-गुणवत्पितृकत्वं बलं-भारवहनादिसामर्थ्यं रूपं-शरीरसौन्दर्यमिति. पुरुषास्तु स्वयं भावयितव्याः, २, अनन्तरदृष्टान्तसूत्राणि तु सपुरुषदार्ष्टान्तिकानि जात्यादीनि चत्वारि पदानि भुवि विन्यस्य षण्णां द्विकसंयोगानां 'जाइसंपन्ने नो कुलसंपन्ने' इत्यादिना स्थानभङ्गकक्रमेण षडेव चतुर्भङ्गिकाः कृत्वा समवसेयानि। हस्तिसूत्रे भद्रादयो हस्तिविशेषा वक्ष्यमाणलक्षणा वनादिविशेषिताश्च, यदाह—"भद्रो मन्दो मृगश्चेति, विज्ञेयास्त्रिविधा, गजाः। वनप्रचार १ मारूप्य २, सत्त्वभेदोपलक्षिताः ३ ॥१॥" इति, तत्र भद्रो हस्ती भद्र एव धीरत्वादिगुणयुक्तत्वात्, मन्दो मन्द एव धैर्यवेगादिगुणेषु मन्दत्वात्, मृगो मृग एव तनुत्वभीरुत्वादिना, सङ्कीर्णः किञ्चिद् भद्रादिगुणयुक्तत्वात् संकीर्ण एवेति, पुरुषोऽप्येवं भावनीयः, उत्तरसूत्राणि तु चत्वारि सदार्ष्टान्तिकानि, भद्रादिपदानि चत्वारि तदधः क्रमेण चत्वार्येव भद्रमनः-प्रभृतीनि च विन्यस्य "भद्दे नामं एगे भद्दमणे" इत्यादिना क्रमेण समवसेयानि, तत्र भद्रो जात्याकाराभ्यां प्रशस्तस्तथा भद्रं मनो यस्याथवा भद्रस्येव मनो यस्य स तथा धीर इत्यर्थः, मन्दं मन्दस्येव वा मनो यस्य स तथा नात्यन्तधीरः, एवं मृगमना

| | | | |
|---|---|---|---|
| भ | मं | मृ | सं |
| भ | मं | मृ | सं |

क्षेत्रे जातिकुलकर्मशिल्पभाषाभ्यः ज्ञानचरणाभ्यां दर्शनाच्चार्या नवधा शकयवनखसादयो म्लेच्छाः ॥१॥

भीरुरित्यर्थः, सङ्कीर्णमना भद्रादिचित्रलक्षणोपेतमना विचित्रचित्त इत्यर्थः, पुरुषास्तु वक्ष्यमाणभद्रादिलक्षणानुसारेण प्रशस्ताप्रशस्तस्वरूपा मन्तव्या इति, भद्रादिलक्षणमिदम्—'महु'गाथा, मधुगुटिकेव-क्षौद्रवटिकेव पिङ्गले-पिङ्गे अक्षिणी-लोचने यस्य स तथा, अनुपूर्वेण-परिपाट्या सुष्ठु जातः-उत्पन्नो यः सोऽनुपूर्वसुजातः, स्वजात्युचितकालक्रमजातो हि बलरूपादिगुणयुक्तो स चासौ दीर्घलाङ्गुलश्च-दीर्घपुच्छ इति स तथा, अनुपूर्व्वेण वा स्थूलसूक्ष्मसूक्ष्मतरलक्षणेन सुजातं दीर्घं लांगूलं यस्य स तथेति, पुरतः-अग्रभागे उदग्रः-उन्नतः तथा धीरः-अक्षोभः तथा अर्वाण्यङ्गानि सम्यक्-प्रमाणलक्षणोपेतत्वेन आहितानि-व्यवस्थितानि यस्य स सर्वाङ्गसमाहितो भद्रो नाम गजविशेषो भवतीति, 'चल'गाहा, चलं-श्लथं बहलं-स्थूलं विषमं-वलियुक्तं चर्म्म यस्य स तथा, स्थूलशिराः, स्थूलकेन 'पेएण'त्ति पेचकेन पुच्छमूलेन युक्तः स्थूलनखदन्तवालो, हरिपिङ्गललोचनः-सिंहवत् पिङ्गाक्षो मन्दो गजविशेषो भवतीति, 'तणु'-गाहा, तनुकः-कृशः तनुग्रीवः तनुत्वक्-तनुचर्म्मा तनुकदन्तनखवालः, भीरुः-भयशीलः स्वभावतस्त्रस्तो भयकारणवशात् स्तब्धकर्णकरणादिलक्षणोपेतो भीत एव उद्विग्नः कष्टविहारादावुद्वेगवान् स्वयं त्रस्तः परानपि त्रासयतीति त्रासी च भवेन्मृगो नाम गजभेद इति, 'एएसिं गाहा' 'भद्दो गाहा' कण्ठ्ये, तथा "दं[1]तेहिं हणइ भद्दो मंदो हत्थेण आहणइ हत्थी। गत्ताधरेहि य मिओ संकिन्नो सव्वओ हणइ ॥१॥ इति,

अनन्तरं संकीर्णः सङ्कीर्णमना इत्यत्र मनःस्वरूपमुक्तं, अथ वाचःस्वरूपभणनाय विकथाकथाप्रकरणमाह—

१ भद्रो दन्तैर्हन्ति मन्दो हस्तेनाहंति हस्ती गात्राधराभ्यां च मृगः संकीर्णः सर्वैर्हन्ति ॥१॥

चत्तारि विकहाओ पं० तं०—इत्थिकहा भत्तकहा देसकहा रायकहा, इत्थिकहा चउव्विहा पं० तं०—इत्थीणं जाइकहा इत्थीणं कुलकहा इत्थीणं रूवकहा इत्थीणं णेवत्थकहा, भत्तकहा चउव्विहा पं० तं०—भत्तस्स आवावकहा भत्तस्स णिव्वावकहा भत्तस्स आरंभकहा भत्तस्स निट्ठाणकहा, देसकहा चउव्विहा पं० तं०—देसविहिकहा देसविकप्पकहा देसच्छंदकहा, देसनेवत्थकहा, रायकहा चउव्विहा पं० तं०—रन्नो अतिताणकहा रन्नो निज्जाणकहा रन्नो बलवाहणकहा रन्नो कोसकोट्ठागारकहा, चउव्विहा, धम्मकहा पं० तं०—अक्खेवणी विक्खेवणी संवेयणी निव्वेगणी, अक्खेवणी कहा चउव्विहा पं० तं०—आयारअक्खेवणी ववहारअक्खेवणी पन्नत्तिअक्खेवणी दिट्ठिवातअक्खेवणी, विक्खेवणी कहा चउव्विहा पं० तं०—ससमयं कहेइ, ससमयं कहित्ता परसमयं कहेइ १, परसमयं कहेत्ता ससमयं ठावित्ता भवति २, सम्मावातं कहेइ सम्मावातं कहेत्ता मिच्छावातं कहेइ ३ मिच्छावातं कहेत्ता सम्मावातं ठावतित्ता भवति ४, संवेगणी कथा चउव्विहा पं० तं०—इहलोगसंवेगणी परलोगसंवेगणी आतसरीरसंवेगणी परसरीरसंवेगणी, णिव्वेगणीकहा चउव्विहा पं० तं०—इहलोगे दुचिन्ना कम्मा इहलोगे दुहफलविवागसंजुत्ता भवंति १, इहलोगे दुचिन्ना कम्मा परलोगे दुहफलविवागसंजुत्ता भवंति २, परलोगे दुचिन्ना कम्मा इहलोगे दुहफलविवागसंजुत्ता भवंति ३, परलोगे दुचिन्ना कम्मा परलोये दुहफलविवागसंजुत्ता भवंति ४, इहलोगे सुचिन्ना कम्मा इहलोगे सुहफलविवागसंजुत्ता भवंति १, इहलोगे सुचिन्ना कम्मा परलोगे सुहफलविवागसंजुत्ता भवंति २ एवं चउभंगो ४ (सू० २८२)।

सुगमम् , नवरं, विरुद्धा संयमबाधकत्वेन कथा–वचनपद्धतिर्विकथा, ततः स्त्रीणां स्त्रीषु वा कथा स्त्रीकथा, इयं च कथेत्युक्तापि स्त्रीविषयत्वेन संयमविरुद्धत्वाद्विकथेति भावनीयेति, एवं भक्तस्य भोजनस्य, देशस्य जनपदस्य, राज्ञो नृपस्येति, ब्राह्मणीप्रभृतीनामन्यतमाया या प्रशंसा निन्दा वा सा जात्या जातेर्वा कथेति जातिकथा, यथा—'धिग्ब्राह्मणीर्धवाभावे, या जीवन्ति मृता इव। धन्या मन्ये जने शूद्रीः, पतिलक्षेऽप्यनिन्दिताः ॥१॥" इति, एवं उग्रादिकुलोत्पन्नानामन्यतमाया यत् प्रशंसादि सा कुलकथा, यथा—'अहो चौलुक्यपुत्रीणां, साहसं जगतोऽधिकम्। पत्युर्मृत्यौ विशन्त्यग्नौ, याः प्रेमरहिता अपि ॥१॥' इति, तथा अन्ध्रीप्रभृतीनामन्यतमाया रूपस्य यत्प्रशंसादि सा रूपकथा, यथा—'चन्द्रवक्त्रा सरोजाक्षी, सद्गीः पीनघनस्तनी। किं लाटी नो मता साऽस्य, देवानामपि दुर्लभा ? ॥१॥" इति, तासामेव अन्यतमायाः कच्छाबन्धादिनेपथ्यस्य यत्प्रशंसादि नेपथ्यकथेति, यथा—'धिग्नारीरौदीच्या बहुवसनाच्छादिताङ्गलतिकत्वात्। यद्यौवनं न यूनां चक्षुर्मोदाय भवति सदा ॥१॥" इति, स्त्रीकथायां चैते दोषाः—"[3]आयपरमोहुदीरणं उड्डाहो सुत्तमाइपरिहाणी। बंभवयस्स अगुत्ती पसंगदोसा य गमणादी ॥१॥" उन्निष्क्रमणादय इत्यर्थः, तथा शाकघृतादीन्येतावन्ति तस्यां रसवत्यामुपयुज्यन्त इत्येवंरूपा कथा आवापकथा, एतावन्तस्तत्र पक्कापक्कान्नभेदा व्यञ्जनभेदा वेति निर्वापकथेति, तित्तिरादीनामियतां तत्रोपयोग इत्यारम्भकथा, एतावत् द्रविणं तत्रोपयुज्यत इति निष्ठानकथेति, उक्तश्च—"[2]सागघयादावादो पक्कापक्को य होइ निव्वावो। आरंभ तित्तिराइ णिट्ठाणं जा सयसहस्सं ॥१॥" इति इह चामी दोषाः "[3]आहारमन्तरेणवि गेहीओ जाइए सइंगालं। अजिइं-

१ आत्मपरयोर्मोहोदीरणा उड्डाहः सूत्रादिपरिहानिः ब्रह्मव्रतस्यागुप्तिः प्रसंगदोषा उन्निष्क्रमणं च ॥१॥ २ शाकघृतादिरावापः पक्कापक्कश्च भवति निर्वापः तित्तिराद्यारंभः यावच्छतसहस्रादि निष्ठानं ॥१॥ ३ आहारमन्तरेणापि गृद्ध्या साङ्गारं जायते अजितेन्द्रियता औदरिकत्वादस्तु अनुज्ञादोषश्च ॥१॥

ट्ठिय ओदरियावाओ उ अणुन्नदोसा य ॥२॥" इति, तथा देशे मगधादौ विधिः—विरचना भोजनमणिभूमिकादीनां भुज्यते वा यद्यत्र प्रथमतयेति देशविधिस्तत्कथा देशविधिकथा, एवमन्यत्रापि, नवरं, विकल्पः—सस्यनिष्पत्तिः, वप्रकूपादिदेवकुलभवनादिविशेषश्चेति, छन्दो-गम्यागम्यविभागो यथा लाटदेशे मातुलभगिनी गम्या अन्यत्रागम्येति, नेपथ्यं—स्त्रीपुरुषाणां वेषः स्वाभाविको विभूषाप्रत्ययश्चेति, इह दोषाः—"[1]रागद्दोसुप्पत्ती सपक्खपरक्खओ य अहिगरणं। बहुगुण इमोत्ति देसो सोउं गमणं च अन्नेसिं ॥१॥" इति, तथा अतियानं—नगरादौ प्रवेशस्तत्कथा अतियानकथा, यथा—"[2]सियसिंधुरखंधगओ सियचमरो सेयछत्तछन्नणहो। जणणयणकिरणसेओ एसो पविसइ पुरे राया ॥१॥" इति, एवं सर्वत्र, नवरं निर्याणं—निर्गमः तत्कथा यथा—"[3]वज्जंताउज्जममंदवंदिसद्दं मिलंतसामंतं। संखुद्धसेन्नमुद्धुयचिंधं नयरा निवो नियइ ॥१॥" बलं हस्त्यादि वाहनं—वेगसरादि, तत्कथा यथा—"[4]हेसंतहयं गज्जंतमयगलं घणघणं-तरहलक्खं। कस्सऽन्नस्सवि सेन्नं णिन्नासियसत्तुसिन्नं भो! ॥१॥" कोशो—भाण्डागारं कोष्ठागारं—धान्यागारमिति, तत्कथा यथा—"[5]पुरिसपरंपरपत्तेण भरियविस्संभरेण कोसेणं। णिज्जियवेसमणेणं तेण समो को निवो अन्नो? ॥१॥"इति, इह चैते दोषाः—"[6]चारिय

---

१ रागद्वेषोत्पत्तिः स्वपक्षपरपक्षाभ्यामधिकरणं च एष बहुगुणो देश इति श्रुत्वाऽन्येषां गमनं च ॥१॥ २ सितसिन्धुरस्कन्धगतः सितचामरः सितच्छत्रच्छन्ननभाः जननयनकिरणश्वेत एष प्रविशति पुरे राजा ॥१॥ ३ वाद्यमानातोद्यं अमंदवंदिशब्दं मिलत्सामन्तं संक्षुब्धसैन्यं उद्धूतचिह्नं नगरान्नृपो निर्गच्छति ॥१॥ ४ हेषद्धयं गर्जद्गजं घनघनायमानरथलक्षं कस्यान्यस्यापि सैन्यं निर्नाशितशत्रुसैन्यं भोः! ॥१॥ ५ पुरुषपरम्परया प्राप्तेन भृतविश्वम्भरेण कोशागारेण। निर्जितवैश्रमणेन तेन समोऽन्यः को नृपः? ॥१॥ ६ चारिकाचौराभिमरतया हते मारिते शङ्का कर्तुकामा वा। सुखानुत्पन्नां दर्शनं कुर्यादाशंसाप्रयोगं वा ॥१॥

चोरा १ भिमरे २ हिय १ मारिय २ संक:काउकामा वा। भुत्ताभुत्तोहाणे करेज्ज वा आससपओगं ॥१॥" भुक्तभोगोऽभुक्तभोगो वा अवधावनं कुर्यादित्यर्थः। आक्षिप्यते—मोहात् तत्त्वं प्रत्याकृष्यते श्रोताऽनयेत्याक्षेपणी, तथा विक्षिप्यते सन्मार्गात् कुमार्गे कुमार्गाद्वा सन्मार्गे श्रोताऽनयेति विक्षेपणी, संवेगयति—संवेगं करोतीति संवेद्यते वा—संबोध्यते संवेज्यते वा—संवेगं ग्राह्यते श्रोताऽनयेति संवेदनी संवेजनी वेति, निर्विद्यते—संसारादेर्निर्विण्णः क्रियते अनयेति निर्वेदनीति, आचारो—लोचास्नानादिस्तत्प्रकाशनेन आक्षेपणी आचाराक्षेपणीति, एवमन्यत्रापि, नवरं व्यवहारः—कथञ्चिदापन्नदोषव्यपोहाय प्रायश्चित्तलक्षणः, प्रज्ञप्तिः—संशयापन्नस्य श्रोतुर्मधुरवचनैः प्रज्ञापनं, दृष्टिवादः—श्रोत्रपेक्षया नयानुसारेण सूक्ष्मजीवादिभावकथम् , अन्ये त्वभिदधति—आचारादयो ग्रन्था एव परिगृह्यन्ते, आचाराद्यभिधानादिति, अस्याश्चायं रसः—"विज्जाचरणं च तवो पुरिसकारो य समिइगुत्तिओ। उवइस्सइ खलु जं सो कहाएँ अक्खेवणीइ रसो ॥१॥ इति, स्वसमयं—स्वसिद्धान्तं कथयति, तद्गुणानुद्दीपयति पूर्वं, ततस्तं कथयित्वा परसमयं कथयति, तद्दोषान् दर्शयतीत्येका, एवं परसमयकथनपूर्वकं स्वसमयं स्थापयिता—स्वसमयगुणानां स्थापको भवतीति द्वितीया, 'सम्मावाय'मित्यादि अस्यायमर्थः—परसमयेष्वपि घुणाक्षरन्यायेन यो यावान् जिनागमतत्त्ववादसदृशतया सम्यग्—अविपरीततत्त्वानां वादः सम्यग्वादः तं कथयति, तं कथयित्वा तेष्वेव यो जिनप्रणीततत्त्वात् विरुद्धत्वान्मिथ्यावादस्तं दोषदर्शनतः कथयतीति तृतीया, परसमयेष्वेव मिथ्यावादं कथयित्वा सम्यग्वादं स्थापयिता भवतीति चतुर्थी, अथवा सम्यग्वादः—अस्तित्वं, मिथ्यावादो—नास्तित्वं, तत्र आस्तिकवादिदृष्टीरुक्त्वा नास्तिकवादिदृष्टीर्भणतीति तृतीया, एतद्विपर्यया चतुर्थीति, इहलोको—मनुष्यजन्म तत्स्वरूपकथनेन संवेगनी इहलोकसंवेगनी, सर्व-

१ विद्याचरणं च तपः पुरुषकारश्च समितिगुप्तयः। उपदिश्यते खलु यत् स कथाया आक्षेपण्या रसः॥१॥

मिदं मानुषत्वमगारमध्रुवं कदलीस्तम्भसमानमित्यादिरूपा, एवं परलोकसंवेदनी देवादिभवस्वभावकथनरूपा देवा अपीर्ष्याविपादभयवियोगादिदुःखैरभिभूताः, किं पुनस्तिर्यगादय इति, आत्मशरीरसंवेगनी यदेतदस्मदीयं शरीरमेतदशुचि अशुचिकारणजातमशुचिद्वारविनिर्गतमिति न प्रतिबन्धस्थानमित्यादिकथनरूपा, एवं परशरीरसंवेगनी अथवा परशरीरं मृतकशरीरमिति, इहलोके दुश्चीर्णानि—चौर्यादीनि कर्माणि—क्रिया इहलोके दुःखमेव कर्मद्रुमजन्यत्वात् फलं दुःखफलं तस्य विपाकः—अनुभवो दुःखफलविपाकस्तेन संयुक्तानि दुःखफलविपाकसंयुक्तानि भवन्ति चौरादीनामिवेत्येका, एवं नारकाणामिवेति द्वितीया, आ गर्भात् व्याधिदारिद्र्याभिभूतानामिवेति तृतीया, प्राक्कृताशुभकर्मोत्पन्नानां नरकप्रायोग्यं बध्नतां काकगृध्रादीनामिव चतुर्थीति, 'इहलोए सुचिन्ने'त्यादि चतुर्भङ्गी तीर्थकरदानदातृ १ सुसाधु २ तीर्थकर ३ देवभवस्थतीर्थकरादीना४मिव भावनीयेति ॥

उक्तो वाग्विशेषोऽधुना पुरुषजातप्रधानतया कायविशेषमाह—

तहेव चत्तारि पुरिसजाया पं० तं०—किसे णाममेगे किसे किसे णाममेगे दढे दढे णाममेगे किसे दढे णाममेगे दढे, चत्तारि पुरिसजाया पं० तं०—किसे णाममेगे किससरीरे किसे णाममेगे दढसरीरे दढे णाममेगे किससरीरे दढे णाममेगे दढसरीरे ४ ॥ चत्तारि पुरिसजाया पं० तं०—किससरीरस्स नाममेगस्स णाणदंसणे समुप्पज्जति णो दढसरीरस्स दढसरीरस्स णाम एगस्स णाणदंसणे समुप्पज्जति णो किससरीरस्स एगस्स किससरीरस्सवि णाणदंसणे समुप्पज्जति दढसरीरस्सवि एगस्स नो किससरीरस्स णाणदंसणे समुप्पज्जति णो दढसरीरस्स

(सू०२८३) चउहिं ठाणेहिं निग्गंथाण वा निग्गंथीण वा अस्सिं समयंसि अतिसेसे नाणदंसणे समुप्पज्जिउकामेवि न समुप्पज्जेज्जा, तं०—अभिक्खणं अभिक्खणमित्थिकहं भत्तकहं देसकहं रायकहं कहेत्ता भवति १, विवेगेण विउस्सग्गेणं णो सम्ममप्पाणं भाविता भवति २पुव्वरत्तावरत्तकालसमयंसि णो धम्मजागरितं जागरतिता भवति ३, फासुयस्स एसणिज्जस्स उंछस्स सामुदाणियस्स णो सम्मं गवेसिता भवति ४, इच्चेतेहिं चउहिं ठाणेहिं निग्गंथाण वा निग्गंथीण वा जाव नो समुप्पज्जेज्जा। चउहिं ठाणेहिं निग्गंथाण वा निग्गंथीण वा अतिसेसे णाणदंसणे समुप्पज्जिउकामे समुप्पज्जेज्जा, तं०—इत्थिकहं भत्तकहं देसकहं रायकहं नो कहेत्ता भवति, विवेगेण विउस्सगेणं सम्ममप्पाणं भावेता भवति, पुव्वरत्तावरत्तकालसमयंसि धम्मजागरियं जागरतिता भवति, फासुयस्स एसणिज्जस्स उंछस्स सामुदाणियस्स सम्मं गवेसिया भवति, इच्चेएहिं चउहिं ठाणेहिं निग्गंथाण वा निग्गंथीण वा जाव समुप्पज्जेज्जा (सू० २८४)।

'चत्तरि पुरिसे'त्यादि कण्ठ्यं, नवरं कृशः–तनुशरीरः पूर्वं पश्चादपि कृश एव अथवा कृशो भावेन हीनसत्त्वादित्वात् पुनः कृशः शरीरादिभिरेवं दृढोऽपि विपर्ययादिति, पूर्वसूत्रार्थविशेषाश्रितमेव द्वितीयं सूत्रं, तत्र कृशो भावतः, शेषं सुगमं। कृशस्यैव चतुर्भङ्ग्या ज्ञानोत्पादमाह—'चत्तारी'त्यादि व्यक्तं, किन्तु कृशशरीरस्य विचित्रतपसा भावितस्य शुभपरिणामसम्भवेन तदावरणक्षयोपशमादिभावात् ज्ञानञ्च दर्शनञ्च ज्ञानदर्शनं ज्ञानेन वा सह दर्शनं ज्ञानदर्शनं छाद्मस्थिकं कैवलिकं वा तत्समुत्पद्यते, न दृढशरीरस्य, तस्य हि उपचितत्वेन बहुमोहतया तथाविधशुभपरिणामाभावेन क्षयोपशमाद्यभावादित्येकः, तथाऽमन्दसंहननस्याल्पमोहस्य दृढशरीर-

स्यैव ज्ञानदर्शनमुत्पद्यते, स्वस्थशरीरतया मनःस्वास्थ्येन शुभपरिणामभावतः क्षयोपशमादिभावात् न कृशशरीरस्यास्वास्थ्यादिति द्वितीयः, तथा कृशस्य दृढस्य वा तदुत्पद्यते विशिष्टसंहननस्याल्पमोहस्योभयथापि शुभपरिणामभावात् कृशत्वदृढत्वे नापेक्षत इति तृतीयः, चतुर्थः सुज्ञानः। ज्ञानदर्शनयोरुत्पादः उक्तोऽधुना तद्व्याघात उच्यते, तत्र—'चउही'त्यादि सूत्रं स्फुटं, परं नि न्थीग्रहणात् स्त्रिया अपि केवलमुत्पद्यत इत्याह, 'अस्मिन्नि'ति अस्मिन् प्रत्यक्ष इवानन्तरप्रत्यासन्ने समये 'अइसेसे'त्ति शेषाणि—मत्यादिचक्षुर्दर्शनादीनि अतिक्रान्तं सर्वविबोधादिगुणैर्यत्तदतिशेषमतिशयवत्केवलमित्यर्थः समुत्पत्तुकाममपीतीहैवार्थो द्रष्टव्यः, ज्ञानादेरभिलाषाभावात्, कथयितेति शीलार्थिकस्तृन् तेन द्वितिया न विरुद्धेति, 'विवेकेने'ति अशुद्धादित्यागेन 'विउस्सग्गेणं'ति कायव्युत्सर्गेण पूर्वरात्रश्च—रात्रेः पूर्वो भागो अपररात्रश्च—रात्रेरपरो भागः तावेव कालः स एव समयः—अवसरो जागरिकायाः पूर्वरात्रापररात्रकालसमयस्तस्मिन् कुटुम्बजागरिकाव्यवच्छेदेन धर्मप्रधाना जागरिका—निद्राक्षयेण बोधो धर्मजागरिका, भावप्रत्युपेक्षेत्यर्थो, यथा—"किं कयं किं वा सेसं किं करणिज्जं तवं च न करेमि। पुव्वावरत्तकाले जागरओ भावपडिलेहा ॥१॥" इति, अथवा—"को मम कालो? किमेयस्स उचियं? असारा विसया नियमगामिणो विरसावसाणा भीसणो मच्चू ॥१॥" इत्यादिरूपा विभक्तिपरिणामात् तया जागरिता—जागरको भवति, अथवा धर्म्मजागरिकां जागरिता—कर्त्तेति द्रष्टव्यमिति, तथा प्रगता असवः—उच्छ्वासादयः प्राणा यस्मात् स प्रासुको—निर्जीवस्तस्य एष्यते—गवेष्यते उद्गमादिदोषरहिततयेत्येषणीयः—कल्प्यस्तस्य उञ्छ्यते—अल्पाल्पतया गृह्यत इत्युञ्छो—भक्तपानादिस्तस्य समुदाने—भिक्षणे याच्ञायां

१ किं कृतं वा शेषं किं करणीयं च तपश्च न करोमि पूर्वापररात्रकाले जाग्रतो भावप्रतिलेखना ॥१॥ २ को वा मम कालः? किमेतस्योचितं? असारा विषया नियमगामिनो विरसावसाना: भीषणो मृत्युः ॥१॥

भवः सामुदानिकः तस्य नो सम्यग्गवेषयिता–अन्वेष्टा भवति, इत्येवंप्रकारैः–एतैरनन्तरोदितैरित्यादि निगमनम् , एतद्विपर्ययसूत्रं कण्ठ्यं। निर्ग्रन्थप्रस्तावात्तदकृत्यनिषेधाय सूत्रे—

नो कप्पति निग्गंथाण वा निग्गंथीण वा चउहिं महापाडिवएहिं सज्झायं करेत्तए, तं०—आसाढपाडिवए इंदमहपाडिवए कत्तियपाडिवए सुगिम्हपाडिवए १, णो कप्पइ निग्गंथाण वा निग्गंथीण वा चउहिं संझाहिं सज्झायं करेत्तए, तं०—पढमाते पच्छिमाते मज्झण्हे अड्ढरत्ते २॥ कप्पइ निग्गंथाण वा निग्गंथीण वा चाउक्कालं सज्झायं करेत्तए, तं०—पुव्वण्हे, अवरण्हे पओसे पच्चूसे (सू० २८५)। चउव्विहा लोगट्ठिती पं० तं०—आगासपतिट्ठिए वाते वातपतिट्ठिए उदधी उदधिपतिट्ठिया पुढवी पुढविपइट्ठिया तसा थावरा पाणा ४ (सू०२८६)। चत्तारि पुरिसजाता पं० तं०—तहे नाममेगे नोतहे नाममेगे सोवत्थी नाममेगे पधाणे नाममेगे ४, चत्तारि पुरिसजाया पं० तं०—आयंतकरे नाममेगे णो परंतकरे १ परंतकरे णाममेगे णो आतंतकरे २ एगे आतंतकरेवि परंतकरेवि ३ एगे णो आतंतकरे णो परंतकरे ४, २, चत्तारि पुरिसजाता पं० तं०—आतंतमे नाममेगे नो परंतमे परंतमे नो (ह्व) ४, ३, चत्तारि पुरिसजाया पं० तं०—आयंदमे नाममेगे णो परंदमे ४, ४, ( सू० २८७ )। चउव्विधा गरहा पं० तं०—उवसंपज्जामित्तेगा गरहा वितिगिच्छामित्तेगा गरहा जंकिंचिमिच्छामीत्तेगा गरहा एवंपि पन्नत्तेगा गरहा (सू० २८८)।

'नो कप्पई'त्यादिके कण्ठये, केवलं महोत्सवानन्तरवृत्तित्वेनोत्सवानुवृत्त्या शेषप्रतिपद्धर्मविलक्षणतया महाप्रतिपदस्तासु, इह

न देशविशेषरूढया पाडिवगहिंति निर्देशः, स्वाध्यायो—नन्द्यादिसूत्रविषयो वाचनादिः, अनुप्रेक्षा तु न निषिध्यते, आषाढस्य पौर्णमास्या अनन्तरा प्रतिपदाषाढप्रतिपदेवमन्यत्रापि, नवरमिन्द्रमहः—अश्वयुक्पौर्णमासी, सुग्रीष्मः—चैत्रपौर्णमासीति, इह च यत्र विषये यतो दिवसान्महामहाः प्रवर्त्तन्ते तत्र तद्दिवसात् स्वाध्यायो न विधीयते महसमाप्तिदिनं यावत्, तच्च पौर्णमास्येव, प्रतिपदस्तु क्षणानुवृत्तिसम्भवेन वर्ज्यन्त इति, उक्तं च—"आसाढी इंदमहो कत्तिय सुगिम्हए य बोद्धव्वो। एए महामहा खलु सव्वेसिं जाव पाडिवया ॥१॥" इति, अकालस्वाध्याये चामी दोषाः—"सुयणाणंमि अभत्ती लोगविरुद्धं पमत्तछलणा य। विज्जासाहणवेगुन्नधम्मया एव मा कुणसु ॥१॥" इति, विद्यासाधनवैगुण्यसाधर्म्येणैवेत्यर्थः, प्रथमा सन्ध्या अनुदिते सूर्ये पश्चिमा—अस्तमयसमये। उक्तविपर्ययसूत्रं कण्ठ्यं, किन्तु 'पुव्वण्हे अवरण्हे'त्ति दिनस्याद्यचरमप्रहरयोः 'पओसे पच्चूसे'त्ति रात्रेरिति। स्वाध्यायप्रवृत्तस्य च लोकस्थितिपरिज्ञानं भवतीति तामेव प्रतिपादयन्नाह—'चउव्विहे'त्यादि, लोकस्य—क्षेत्रलक्षणस्य स्थितिः—व्यवस्था लोकस्थितिः, आकाशप्रतिष्ठितो वातो—घनवाततनुवातलक्षणः, उदधिः—घनोदधिः, पृथिवी—रत्नप्रभादिका, त्रसा—द्वीन्द्रियादयस्ते पुनर्ये रत्नप्रभादिपृथ्वीष्वप्रतिष्ठितास्तेऽपि विमानपर्वतादिपृथिवीप्रतिष्ठितत्वात् पृथिवीप्रतिष्ठिता एव, विमानपृथिवीनां चाकाशादिप्रतिष्ठितत्वं यथासम्भवमवसेयम्, अविवक्षा चेह विमानादिगतदेवादित्रसानामिति, स्थावरास्त्विह बादरवनस्पत्यादयो ग्राह्याः, सूक्ष्माणां सकललोकप्रतिष्ठितत्वात्, शेषं सुगममिति। अनन्तरं त्रसाः प्राणा उक्ताः, अधुना त्रसप्राणविशेषस्य 'चत्तारी'त्यादिभिश्चतुर्भिश्चतुर्भङ्गीसूत्रैः स्वरूपं दर्शयति, कण्ठ्यानि

१ आषाढी इन्द्रमहः कार्त्तिकः सुग्रीष्मे बोद्धव्याः एते महामहाः खलु सर्वेषां यावत्प्रतिपदः ॥१॥ २ श्रुतज्ञानेऽभक्तिः लोकविरुद्धता प्रमत्तछलना च विद्यासाधनवैगुण्यधर्मता इति मा कुरु ॥१॥

चैतानि, केवलं 'तह'त्ति सेवकः सन् यथैवादिश्यते तथैव यः प्रवर्त्तते स तथा, अन्यस्तु नो तथैवान्यथापीत्यर्थ इति नोतथः, तथा स्वस्तीत्याह चरति वा सौवस्तिकः प्राकृतत्वात् ककारलोपे दीर्घत्वे च सोवत्थी–माङ्गलिकाभिधायी मागधादिरन्यः, एतेषामेवाराध्यतया प्रधानः–प्रभुरन्य इति। 'आयंतकरे'त्ति आत्मनोऽन्तम्–अवसानं भवस्य करोतीत्यात्मान्तकरः, नो परस्य भवान्तकरो, धर्मदेशनानासेवकः प्रत्येकबुद्धादिः १, तथा परस्य भवान्तं करोति मार्गप्रवर्त्तनेन परान्तकरो नात्मान्तकरोऽचरमशरीर आचार्यादिः २, तृतीयस्तु तीर्थकरोऽन्यो वा ३, चतुर्थो दुष्षमाचार्यादिः४, अथवाऽऽत्मनोऽन्तं–मरणं करोतीति आत्मान्तकरः, एवं परान्तकरोऽपि, इह प्रथमआत्मवधको द्वितीयः परवधकः तृतीय उभयहन्ता चतुर्थस्त्ववधक इति, अथवाऽऽत्मतन्त्रः, सन् कार्याणि करोतीत्यात्मतन्त्रकरः, एवं परतन्त्रकरोऽपि, इह तु प्रथमो जिनो, द्वितीयो भिक्षुः, तृतीय आचार्यादिः, चतुर्थः कार्यविशेषापेक्षया शठ इति, अथवा आत्मतन्त्रं–आत्मायत्तं धनगच्छादि करोतीत्यात्मतन्त्रकर एवमितरापि भङ्गयोजना स्वयमूह्येति। तथा आत्मानं तमयति–खेदयतीत्यात्मतमः आचार्यादिः, परं–शिष्यादिकं तमयतीति परतमः, सर्वत्र प्राकृतत्वादनुस्वारः, अथवा आत्मनि तमः–अज्ञानं क्रोधो वा यस्य स आत्मतमाः, एवमितरेऽपि, तथा आत्मानं दमयति–शमवन्तं करोति शिक्षयति वेत्यात्मदमः आचार्योऽश्वदमकादिर्वा, एवमितरेऽपि, नवरं परः–शिष्योऽश्वादिर्वा॥ दमश्च गर्ह्यगर्हातः स्यादिति गर्हासूत्रं, तत्र गुरुसाक्षिका आत्मानो निन्दा गर्हा, तत्र उपसंपद्ये–आश्रयामि गुरुं स्वदोषनिवेदनार्थं अभ्युपगच्छामि वोचितं प्रायश्चित्तं इतीत्येवंप्रकारः परिणाम एका गर्हेति, गर्हात्वं चास्योक्तपरिणामस्य गर्हायाः कारणत्वेन कारणे कार्योपचाराद् गर्हासमानफलत्वाच्च द्रष्टव्यमिति, अभिधीयते हि भगवत्याम्—"निग्गंथे णं गाहावइकुलं पिंडवायपडियाए [पिण्ड-

१ निर्ग्रन्थो गृहपतिकुलं पिण्डादानप्रतिज्ञया प्रविष्टोऽन्यतरत् अकृत्यस्थानं प्रतिपेवितं, तस्यैवं भवति–इहैव तावदहमेतस्य स्थानस्यालोचयामि

स्थानप्रतिसेवेत्यर्थः,] परिट्ठिणं अन्नयरे अकिच्चट्ठाणे पडिसेविए, तस्स णं एवं भवइ–इहेव ताव अहं एयस्स ठाणस्स आलोएमि पडिक्कमामि निंदामि जाव पडिवज्जामि, तओ पच्छा थेराणं अंतियं आलोइस्सामि॰ से य संपट्ठिए असंपत्ते अप्पणा य पुव्वमेव कालं करेज्जा से णं भंते! किं आराहए विराहए?, गोयमा! आराहए नो विराहए''त्ति, तथा 'वितिगिच्छामि'त्ति वीति–विशेषेण विविधप्रकारं वा चिकित्सामि–प्रतिकरोमि निराकरोमि गर्हणीयान् दोषान् इतीत्येवंविकल्पात्मिका एकाऽन्या गर्हा, तत एवेति, तथा 'जंकिंचिमिच्छामीति'त्ति यत्किञ्चनानुचितं तन्मिथ्या–विपरीतं दुष्ठु मे–मम इत्येवंवासनागर्भवचनरूपा एकाऽन्या गर्हा, एवं स्वरूपत्वादेव गर्हायाः, तथा 'एवमपी'ति अनेनापि–स्वदोषगर्हणप्रकारेणापि प्रज्ञप्ता–अभिहिता जिनैर्दोषशुद्धिरिति प्रतिपत्तिरेका गर्हा, एवंविधप्रतिपत्तेर्गर्हाकारणत्वादिति, 'एवंपी पन्नत्तेगा गरहे'ति पाठे व्याख्यानमिदम्, 'एवंपि पन्नत्ते एगा' इति पाठे त्विदं–यत्किञ्चनानुचितं तन्मिथ्येत्येवं प्रतिपत्तव्यमित्येवमपि प्रज्ञप्ते–प्ररूपिते सत्येका गर्हा भवति, एवंविधप्ररूपणायाः प्रज्ञापनीयस्य गर्हाकारणत्वात्, अथवा उपसंपद्ये–प्रतिपद्याम्यहमतिचारानित्येवं स्वदोषप्रतिपत्तिरेका गर्हा, तथा विचिकित्सामि–शङ्के अशङ्कनीयानपि जिनभाषितभावान् गुर्वादीन् वा दोषवत्तयेत्येवंप्रकारा अपि गर्हा स्वदोषप्रतिपत्तिरूपत्वादेवेति, तथा यत्किञ्चन साधूनामनुचितं तदिच्छामि–साक्षात्करणेऽपि मनसाऽभिलषामि, इह मकार आगमिकः प्राकृतत्वादिति, अथवा यत्किञ्चन साधुकृत्यमाश्रित्य मिथ्या–विपर्यस्तोऽस्मि–भवामि मिथ्याकरोमि वा मिथ्ययामीति, 'मिच्छामि' म्लेच्छवदाचरामि वा म्लेच्छामीति मिच्छामि, शेषं पूर्ववत्, तथा असदनुष्ठा-

---

आलोचयामि प्रतिक्रामामि निन्दामि यावत्प्रतिपद्ये ततः पश्चात्स्थविराणामन्तिके अलोचयिष्यामि, स च संप्रस्थितोऽसंप्राप्त आत्मना च पूर्वमेव कालं कुर्यात् स भदन्त! किमाराधको विराधकः?, गौतम! आराधको न विराधकः ॥

नप्रवृत्तः सन् प्रेरितः सन् केनापि स्वकीयचित्तसमाधानार्थं वा स्वकीयासदनुष्ठानसमर्थनाय क्लिष्टचित्ततयैवं प्ररूपयामि भावयामि वा, यदुत–एवमपि प्रज्ञप्तिः–प्ररूपणाऽस्ति जिनागमे, पाठान्तरे त्वेवमपि प्रज्ञप्तोऽयं भाव इत्यस्थानाभिनिवेशी उत्सूत्रप्ररूपको वाऽहमित्येका गर्हा, एवं स्वदोषप्रतिपत्तिरूपा गर्हा सर्वत्रेति ॥

गर्हा च दोषवर्जकस्यैव सम्यग् भवति नेतरस्येति दोषवर्जकजीवस्वरूपनिरूपणाय सप्तदश चतुर्भङ्गी सूत्राणि—

चत्तारि पुरिसजाया पं० तं०—अप्पणो नाममेगे अलमंथू भवति णो परस्स परस्स नाममेगे अलमंथू भवति णो अप्पणो एगे अप्पणोवि अलमंथू भवति परस्सवि एगे नो अप्पणो अलमंथू भवति णो परस्स १। चत्तारि मग्गा पं० तं०—उज्जू नाममेगे उज्जू उज्जू नाममेगे वंके वंके नाममेगे उज्जू वंके नाममेगे वंके २। एवामेव चत्तारि पुरिसजाया पं० तं०—उज्जू नाममेगे उज्जू ४, ३। चत्तारि मग्गा पं० तं०—खेमे नाममेगे खेमे खेमे णाममेगे अखेमे ह्व (४), ४। एवामेव चत्तारि पुरिसजाता पं० तं०— खेमे णाममेगे खेमे, ह्व (४), ५। चत्तारि मग्गा पं० तं०—खेमे णाममेगे खेमरूवे, खेमे णाममेगे अखेमरूवे ४, ६। एवामेव चत्तारि पुरिसजाया पं० तं० खेमे नाममेगे खेमरूवे ४, ७। चत्तारि संबुक्का पं० तं०—वामे नाममेगे वामावत्ते वामे नाममेगे दाहिणावत्ते दाहिणे नाममेगे वामावत्ते दाहिणे नाममेगे दाहिणावत्ते ८। एवामेव चत्तारि पुरिसजाया पं० तं०—वामे नाममेगे वामावत्ते, ह्व (४) ९। चत्तारि धूमसिहाओ पं० तं०—वामा नाममेगा वामावत्ता ४, १०। एवामेव चत्तारित्थीओ

पं० तं०—वामा णाममेगा वामावत्ता ४, ११। चत्तारि अग्गिसिहाओ पं० तं०—वामा णाममेगा वामावत्ता, (ह्व) ४, १२। एवामेव चत्तारित्थीओ पं० तं०—वामा णा० (ह्व) ४, १३। चत्तारि वायमंडलिया पं० तं०—वामा णाममेगा वामावत्ता ४, १४, एवामेव चत्तारित्थीओ पं० तं०—वामा णाममेगा वामावत्ता ४, १५। चत्तारि वणसंडा पं० तं०—वामे नाममेगे वामावत्ते ४, १६, एवामेव चत्तारि पुरिसजाया पं० तं०—वामे णाममेगे वामावत्ते, ४, १७। (सू० २८९)।

व्यक्तानि, केवलं अलमस्तु-निषेधो भवतु य एवमाह सोऽलमस्त्वित्युच्यते, निषेधक इत्यर्थः, स चात्मनो दुर्णयेषु प्रवर्त्तमानस्यैको निषेधकः, अथवा 'अलमंथु'त्ति समयभाषया समर्थोऽभिधीयते. ततः आत्मनो निग्रहे समर्थः कश्चिदिति, एको मार्ग ऋजुरादावन्तेऽपि ऋजुः अथवा ऋजुः प्रतिभाति तत्त्वतोऽपि ऋजुरेवेति, पुरुषस्तु ऋजुः पूर्वापरकालापेक्षया, अन्तस्तत्त्वबहिस्तत्त्वापेक्षया वेति, क्वचित्तु 'उज्जूनामं एगे उज्जूमणे'त्ति पाठः, सोऽपि बहिस्तत्त्वान्तस्तत्त्वापेक्षया व्याख्येयः, क्षेमो नामैको मार्ग आदौ निरुपद्रवतया पुनः क्षेमोऽन्ते नथैव, प्रसिद्धितत्त्वाभ्यां वा, एवं पुरुषोऽपि क्रोधाद्युपद्रवरहिततया क्षेम इति, क्षेमो भावतोऽनुपद्रवत्वेन क्षेमरूप आकारेण मार्गः, पुरुषस्तु प्रथमो भावद्रव्यलिङ्गयुक्तः साधुः, द्वितीयः कारणिको द्रव्यलिङ्गवर्जितः साधुरेव, तृतीयो निह्नवः, चतुर्थोऽन्यतीर्थिको गृहस्थो वेति, ७, शम्बूकाः-शङ्खाः वामो वामपार्श्वव्यवस्थितत्वात् प्रतिकूलगुणत्वाद्वा, वामावर्त्तः प्रतीतः, एवं दक्षिणावर्त्तोऽपि, दक्षिणो दक्षिणपार्श्वनियुक्तत्वादनुकूलगुणत्वाद्वेति, पुरुषस्तु वामः प्रतिकूलस्वभावतया वाम एवावर्त्तते-प्रवर्त्तत इति वामावर्त्तो विपरीतप्रवृत्तिकः अन्यो वाम एव स्वरूपेण कारणवशाद् दक्षिणावर्त्तः-अनुकूलवृत्तिः, अन्यस्तु दक्षिणोऽनुकूलस्वभावतया कारणवशात् वामा-

वर्त्तः-अननुकूलवृत्तिरित्येवं चतुर्थोऽपीति, धूमशिखा वामा वामपार्श्ववर्त्तितया अननुकूलस्वभावतया वा वामत एवावर्त्तते या तथावलनात् सा वामावर्त्ता स्त्री पुरुषवद् व्याख्येया, कम्बुदृष्टान्ते सत्यपि धूमशिखादिदृष्टान्तानां स्त्रीदार्ष्टान्तिके शब्दसाधर्म्येणोपपन्नतरत्वाद् भेदेनोपादानमिति ११, एवमग्निशिखापि १३, वातमण्डलिका-मण्डलेनोद्ध्वंप्रवृत्तो वायुरिति, इह च स्त्रियो मालिन्योपतापचापल्यस्वभावा भवन्तीत्यभिप्रायेण तासु धूमशिखादिदृष्टान्तत्रयोपन्यास इति, उक्तश्च—"चंवला मइलणसीला सिणेहपरिपूरियावि तावेइ। दीवयसिहव्व महिला लद्धप्पसरा भयं देइ ॥१॥" इति, १५, वनखण्डस्तु शिखावत्, नवरं वामावर्त्तो वामवलनेन जातत्वाद् वायुना वा तथा धूयमानत्वादिति १६, पुरुषस्तु पूर्ववदिति १७॥

अनुकूलस्वभावोऽनुकूलप्रवृत्तिश्चानन्तरं पुरुष उक्तः, एवंभूतश्च निर्ग्रन्थः सामान्येनानुचितप्रवृत्तावपि न स्वाचारमतिक्रामतीति दर्शयन्नाह—

**चउहिं ठाणेहिं णिग्गंथे णिग्गंथिं आलवमाणे वा संलवमाणे वा णातिक्कमति तं०—पंथं पुच्छमाणे वा १ पंथं देसमाणे वा २ असणं वा पाणं वा खाइमं वा साइमं वा दलेमाणे वा ३ दलावेमाणे वा ३ (सू० २९०)। तमुक्कायस्स णं चत्तारि नामधेज्जा पं० तं०—तमिति वा तमुक्कातेति वा अंधकारेति वा महंधकारेति वा। तमुक्कायस्स णं चत्तारि णामधेज्जा पं० तं—लोगंधगारेति वा लोगतमसेति वा देवंधगारेति वा देवतमसेति वा। तमुक्कायस्स णं चत्तारि नामधेज्जा पं० तं०—वातफलिहेति वा वातफलिहखोमेति वा देवरन्नेति वा देववूढेति वा। तमुक्काते णं चत्तारि कप्पे आवरित्ता चिट्ठति तं०—सोधम्मीसाणं सणंकुमारमाहिंदं (सू० २९१)।**

१ चपला मलिनताकरणशीला स्नेहपरिपूरितापि तापयति दीपकशिखेव महिला लब्धप्रसरा भयं ददाति ॥१॥

'चउहीं'त्यादि, स्फुटं, किन्त्वालपन्–ईषत्प्रथमतया वा जल्पन् संलपन् मिथो भाषणेन नातिक्रामति–न लङ्घयति निर्ग्रन्थाचारं, 'एगो एगित्थिए सद्धिं नेव चिट्ठे न संलवे'' विशेषतः साध्व्या इत्येवंरूपं, मार्गप्रश्नादीनां पुष्टालम्बनत्वादिति, तत्र मार्गं पृच्छन्, प्रष्टव्यसाधर्म्मिकगृहस्थपुरुषादीनामभावे–हे आर्ये। कोऽस्माकमितो गच्छतां मार्ग इत्यादिना क्रमेण मार्गं वा तस्या देशयन्–धर्म्मशीले! अयं मार्गस्ते इत्यादिना क्रमेण, अशनादि वा ददद्–धर्म्मशीले! गृहाणेदमशनादीत्येवं, तथा अशनादि दापयन्, आर्ये! दापयाम्येतनुभ्यं आगच्छेह गृहादानित्यादिविधिनेति। तथा तमस्कायं तम इत्यादिभिः शब्दैः व्याहरन्नातिक्रमति भाषाचारं यथार्थत्वादिति तानाह–'तमुकाये'त्यादि सूत्रत्रयं सुगमं, नवरं तमसः–अप्कायपरिणामरूपस्यान्धकारस्य कायः–प्रचयस्तमस्कायो, यो ह्यसंख्याततमरुणवराभिधानद्वीपस्य बाह्यवेदिकान्तादरुणोदाख्यं समुद्रं द्विचत्वारिंशद्योजनसहस्राण्यवगाह्योपरितनाज्जलान्तादेकप्रदेशिकया श्रेण्या समुत्थितः सप्तदशैकविंशत्यधिकानि योजनशतानि ऊर्ध्वमुत्पत्य ततः तिर्यक् प्रविस्तृणन् सौधर्म्मादींश्चतुरो देवलोकानावृत्त्योर्ध्वमपि च ब्रह्मलोकस्य रिष्टं विमानप्रस्तटं संप्राप्तः, तस्य नामान्येव नामधेयानि, 'तम'इति तमोरूपत्वात्, इतिरुपप्रदर्शने वा विकल्पे तमोमात्ररूपताभिधायकान्याद्यानि चत्वारि नामधेयानि, तथाऽपराणि चत्वार्येवात्यन्तिकतमोरूपताभिधायकानीति, लोके अयमेवान्धकारो नान्योऽस्तीदृश इति लोकान्धकारः, देवानामप्यन्धकारोऽसौ, तच्छरीरप्रभाया अपि तत्राप्रभवनादिति देवान्धकारः, अत एव ते बलवतो भयेन तत्र नश्यन्तीति श्रुतिरिति, तथाऽन्यानि चत्वारि कार्याश्रयाणि वातस्य परिहननात् परिघः–अर्गला, परिघ इव परिघः, वातस्य परिघो वातपरिघः, तथा वातं परिघवत् क्षोभयति हतमार्गं करोतीति–वातपरिघक्षोभः, वात एव वा परिघस्तं क्षोभयति यः स तथा,

१ एकाकी एकाकिन्या स्त्रिया सार्धं नैव तिष्ठेत् नैव संलपेत्।

वर्त्तः–अननुकूलवृत्तिरित्येवं चतुर्थोऽपीति, धूमशिखा वामा वामपार्श्ववर्त्तितया अननुकूलस्वभावतया वा वामत एवावर्त्तते या तथावलनात् सा वामावर्त्ता स्त्री पुरुषवद् व्याख्येया, कम्बुदृष्टान्ते सत्यपि धूमशिखादिदृष्टान्तानां स्त्रीदार्ष्टान्तिके शब्दसाधर्म्येणोपपन्नतरत्वाद् भेदेनोपादानमिति ११, एवमग्निशिखापि १३, वातमण्डलिका–मण्डलेनोर्द्ध्वप्रवृत्तो वायुरिति, इह च स्त्रियो मालिन्योपतापचापल्यस्वभावा भवन्तीत्यभिप्रायेण तासु धूमशिखादिदृष्टान्तत्रयोपन्यास इति, उक्तञ्च—"चंवला मइलणसीला सिणेहपरिपूरियावि तावेइ। दीवयसिहव्व महिला लद्धप्पसरा भयं देइ ॥१॥" इति, १५, वनखण्डस्तु शिखावत्, नवरं वामावर्त्तो वामवलनेन जातत्वाद् वायुना वा तथा धूयमानत्वादिति १६, पुरुषस्तु पूर्ववदिति १७॥

अनुकूलस्वभावोऽनुकूलप्रवृत्तिश्चानन्तरं पुरुष उक्तः, एवंभूतश्च निर्ग्रन्थः सामान्येनानुचितप्रवृत्तावपि न स्वाचारमतिक्रामतीति दर्शयन्नाह—

**चउहिं ठाणेहिं णिग्गंथे णिग्गंथिं आलवमाणे वा संलवमाणे वा णातिक्कमति तं०—पंथं पुच्छमाणे वा १ पंथं देसमाणे वा २ असणं वा पाणं वा खाइमं वा साइमं वा दलेमाणे वा ३ दलावेमाणे वा ३ (सू० २९०)। तमुक्कायस्स णं चत्तारि नामधेज्जा पं० तं०—तमिति वा तमुक्कातेति वा अंधकारेति वा महंधकारेति वा। तमुक्कायस्स णं चत्तारि णामधेज्जा पं० तं—लोगंधगारेति वा लोगतमसेति वा देवंधगारेति वा देवतमसेति वा। तमुक्कायस्स णं चत्तारि नामधेज्जा पं० तं०—वातफलिहेति वा वातफलिहखोमेति वा देवरन्नेति वा देववूढेति वा। तमुक्काते णं चत्तारि कप्पे आवरित्ता चिट्ठति तं०—सोधम्मीसाणं सणंकुमारमाहिंदं (सू० २९१)।**

१ चपला मलिनताकरणशीला स्नेहपरिपूरितापि तापयति दीपकशिखेव महिला लब्धप्रसरा भयं ददाति ॥१॥

'चउत्थी'त्यादि, स्फुटं, किन्त्वालपन्-ईषत्प्रथमतया वा जल्पन् संलपन् मिथो भाषणेन नातिक्रामति-न लङ्घयति निर्ग्रन्थाचारं, 'एगो एगित्थिए सद्धिं नेव चिट्ठे न संलवे'¹ विशेषतः साध्व्या इत्येवंरूपं, मार्गप्रश्नादीनां पुष्टालम्बनत्वादिति, तत्र मार्गं पृच्छन्, प्रश्नीयसाधर्म्मिकगृहस्थपुरुषादीनामभावे-हे आर्ये। कोऽस्माकमितो गच्छतां मार्ग इत्यादिना क्रमेण मार्गं वा तस्या देशयन्-धर्म्मशीले! अयं मार्गस्ते इत्यादिना क्रमेण, अशनादि वा ददद्-धर्म्मशीले! गृहाणेदमशनादीत्येवं, तथा अशनादि दापयन्, आर्ये! दापयाम्येतत्तुभ्यं आगच्छेह गृहादावित्यादिविधिनेति। तथा तमस्कायं तम इत्यादिभिः शब्दैः व्याहरन्नातिक्रमति भाषाचारं यथार्थत्वादिति तानाह-'तमुक्काये'त्यादि सूत्रत्रयं सुगमं, नवरं तमसः-अप्कायपरिणामरूपस्यान्धकारस्य कायः-प्रचयस्तमस्कायो, यो ह्यसंख्याततमस्यारुणवराभिधानद्वीपस्य बाह्यवेदिकान्तादरुणोदाख्यं समुद्रं द्विचत्वारिंशद्योजनसहस्राण्यवगाह्योपरितनाज्जलान्तादेकप्रदेशिकया श्रेण्या समुत्थितः सप्तदशैकविंशत्यधिकानि योजनशतानि ऊर्द्ध्वमुत्पत्य ततः तिर्यक् प्रविस्तृणन् सौधर्म्मादींश्चतुरो देवलोकानावृत्योर्द्ध्वमपि च ब्रह्मलोकस्य रिष्टं विमानप्रस्तटं संप्राप्तः, तस्य नामान्येव नामधेयानि, 'तम'इति तमोरूपत्वात्, इतिरुपप्रदर्शने वा विकल्पे तमोमात्ररूपताभिधायकान्याद्यानि चत्वारि नामधेयानि, तथाऽपराणि चत्वार्येवात्यन्तिकतमोरूपताभिधायकानीति, लोके अयमेवान्धकारो नान्योऽस्तीदृश इति लोकान्धकारः, देवानामप्यन्धकारोऽसौ, तच्छरीरप्रभाया अपि तत्राप्रभवनादिति देवान्धकारः, अत एव ते बलवतो भयेन तत्र नश्यन्तीति श्रुतिरिति, तथाऽन्यानि चत्वारि कार्याश्रयाणि वातस्य परिहननात् परिघः-अर्गला, परिघ इव परिघः, वातस्य परिघो वातपरिघः, तथा वातं परिघवत् क्षोभयति हतमार्गं करोतीति-वातपरिघक्षोभः, वात एव वा परिघस्तं क्षोभयति यः स तथा,

¹ एकाकी एकाकिन्या स्त्रिया सार्धं नैव तिष्ठेत् नैव संलपेत्।

पाठान्तरेण वातपरिक्षोभ इति, क्वचिद्देवपरिघो देवपरिक्षोभ इति चाद्यपदद्वयस्थाने पठ्यते, देवानामरण्यमिव बलवद्भयेन नाशनस्थानत्वाद् यः स देवारण्यमिति, देवानां व्यूहः सागरादिसाङ्ग्रामिकव्यूह इव यो दुरधिगम्यत्वात् स देवव्यूह इति, तमस्कायस्वरूपप्रतिपादनायैव 'तमुक्काये ण'मि त्यादि सूत्रं गतार्थम्, किन्तु सौधर्मादीनावृणोत्यसौ कुक्कुटपञ्जरसंस्थानसंस्थितस्य तस्य प्रतिपादनाद्, उक्तं च—"[1]तमुक्काए णं भंते ! किंसंठिए पन्नत्ते ?, गोयमा ! अहे मल्लगमूलसंठिए उप्पिं कुक्कुडपंजरसंठिए पन्नत्ते" त्ति ॥

अनन्तरं तमस्कायो वचनपर्यायैरुक्तोऽधुना अर्थपर्यायैः पुरुषं निरूपयता पञ्चसूत्री गदिता

चत्तारि पुरिसजाता पं० तं०—संपागडपडिसेवी णाममेगे पच्छन्नपडिसेवी णाममेगे पडुप्पन्ननंदी नाममेगे णिस्सरणणंदी णाममेगे १। चत्तारि सेणाओ पं० तं०—जतित्ता णाममेगे णो पराजिणित्ता पराजिणित्ता णाममेगे णो जतित्ता एगा जतित्तावि पराजिणित्तावि एगा नो जतित्ता नो पराजिणित्ता २। एवामेव चत्तारि पुरिसजाता पं० तं०—जतित्ता नाममेगे नो पराजिणित्ता ४, ३। चत्तारि सेणाओ पं० तं०—जतित्ता णामं एगा जयई जइत्ता णाममेगा पराजिणति पराजिणित्ता णाममेगा जयति पराजिणित्ता नाममेगा पराजिणति ४। एवामेव चत्तारि पुरिसजाता पं० तं०—जइत्ता नाममेगे जयति ४, ५। (सू० २९२)।

सुगमा च, नवरं कश्चित्साधुर्गच्छवासी संप्रकटमेव—अगीतार्थप्रत्यक्षमेव प्रतिसेवते मूलगुणानुत्तरगुणान् वा दर्प्पतः कल्पेन वेति

[1] तमस्कायो भदन्त ! किंसंस्थितः प्रज्ञप्तो, गौतम ! अधो मल्लकमूलसंस्थितः उपरि कुर्कुटपंजरसंस्थितः ॥

संप्रकटप्रतिसेवीत्येकः, एवमन्यः प्रच्छन्नं प्रतिसेवत इति प्रच्छन्नप्रतिसेवी, अन्यस्तु प्रत्युत्पन्नेन—लब्धेन वस्त्रशिष्यादिना प्रत्युत्पन्नो वा—जातः सन् शिष्याचार्यादिरूपेण नन्दति यः स प्रत्युत्पन्ननन्दी, अथवा नन्दनं नन्दिः—आनन्दः, प्रत्युत्पन्नेन नन्दिर्यस्य स प्रत्युत्पन्ननन्दिः, तथा प्राघूर्णकशिष्यादीनामात्मनो वा निःसरणेन—गच्छादेर्निर्गमेन नन्दति यो नन्दिर्वा यस्य स तथा, पाठान्तरे तु प्रत्युत्पन्नं—यथालब्धं सेवते—भजते नानुचितं विवेचयतीति प्रत्युत्पन्नसेवीति । 'जइत्त'त्ति जेत्री जयति रिपुबलमेका न पराजेत्री—न पराजयते—रिपुबलान्न भज्यते द्वितीया तु पराजेत्री—परेभ्यो भङ्गभाक्, अत एव नोजेत्रीति, तृतीया कारणवशादुभयस्वभावेति, चतुर्थी त्वविजिगीषुत्वादनुभयरूपेति, पुरुषः—साधुः स जेता परीषहाणां न तेभ्यः पराजेता—उद्विजते इत्यर्थो महावीरवदित्येको, द्वितीयः कण्डरीकवत्, तृतीयस्तु कदाचिज्जेता कदाचित्कर्मवशात् पराजेता शैलकराजर्षिवत्, चतुर्थस्त्वनुत्पन्नपरीषहः । जित्वा एकदा रिपुबलं पुनरपि जयतीत्येका अन्या जित्वा पराजयते—भज्यते अन्या पराजित्य—परिभज्य पुनर्जयति चतुर्थी तु पराजित्य—परिभज्यैकदा पुनः पराजयते, पुरुषस्तु परीषहादिष्वेवं चिन्तनीय इति ॥

जेतव्याश्चेह तत्त्वतः कषाया एवेति तत्स्वरूपं दर्शयितुकामः क्रोधस्योत्तरत्रोपदर्शयिष्यमाणत्वान्मायादिकषायत्रयप्रकरणमाह—

चत्तारि केतणा पं० तं०—वंसीमूलकेतणते मेंढविसाणकेतणते गोमुत्तिकेतणते अवलेहणितकेतणाते, एवामेव चउव्विधामाया पं० तं०—वंसीमूलकेतणासमाणा जाव अवलेहणितासमाणा, वंसीमूलकेतणासमाणं मायं अणुपविट्ठे जीवे कालं करेति णेरइएसु उववज्जति, मेंढविसाणकेतणासमाणं मायमणुप्पविट्ठे जीवे कालं करेति

तिरिक्खजोणितेसु उववज्जति, गोमुत्ति० जाव कालं करेति मणुस्सेसु उववज्जति, अवलेहणिता जाव देवेसु उववज्जति। चत्तारि थंभा पं० तं०—सेलथंभे अट्ठिथंभे दारुथंभे तिणिसलताथंभे, एवामेव चउव्विधे माणे पं० तं०—सेलथंभसमाणे जाव तिणिसलताथंभसमाणे, सेलथंभसमाणं माणं अणुपविट्ठे जीवे कालं करेति नेरनिएसु उववज्जति, एवं जाव तिणिसलताथंभसमाणं माणं अणुपविट्ठे जीवे कालं करेति देवेसु उववज्जति। चत्तारि वत्था पं० तं०—किमिरागरत्ते कद्दमरागरत्ते खंजणरागरत्ते हलिद्दरागरत्ते, एवामेव चउव्विधे लोभे पं० तं०—किमिरागरत्तवत्थसमाणे कद्दमरागरत्तवत्थसमाणे खंजणरागरत्तवत्थसमाणे हलिद्दरागरत्तवत्थसमाणे, किमिरागरत्तवत्थसमाणं लोभमणुपविट्ठे जीवे कालं करेइ नेरइएसु उववज्जइ, तहेव जाव हलिद्दरागरत्तवत्थसमाणं लोभमणुपविट्ठे जीवे कालं करेइ देवेसु उववज्जति (सू० २९३)।

'चत्तारि'त्यादि प्रकटं, किन्तु केतनं—सामान्येन वक्रं वस्तु पुष्पकरण्डस्य वा सम्बन्धि मुष्टिग्रहणस्थानं वंशादिदलकं, तच्च वक्रं भवति, केवलमिह सामान्येन वक्रं वस्तु केतनं गृह्यते, तत्र वंशीमूलं च तत्केतनं च वंशीमूलकेतनमेवं सर्वत्र, नवरं मेण्ढविषाणं—मेषश्रृङ्गं, गोमूत्रिका प्रतीता, 'अवलेहणिय'त्ति अवलिख्यमानस्य वंशशलाकादेर्या प्रतन्वी त्वक् साऽवलेखनिकेति, वंशीमूलकेतनकादिसमता तु मायायास्तद्वतामनार्जवभेदात्, तथाहि—यथा वंशीमूलमतिगुपिलवक्रमेवं कस्यचिन्मायाऽपीत्येवमल्पाल्पतराल्पतमानार्जवत्वेनान्याऽपि भावनीयेति, इयं चानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनरूपा क्रमेण ज्ञेया, प्रत्येकमित्यन्ये, तेनैवानन्तानुबन्धिन्या उदयेऽपि देवत्वादि न विरुध्यते, एवं मानादयोऽपि, वाचनान्तरे तु पूर्वं क्रोधमानसूत्राणि ततो मायासूत्राणि, तत्र

क्रोधसूत्राणि 'चत्तारि राइओ पन्नत्ताओ, तं०—पव्वयराई पुढविराई रेणुराई जलराई, एवामेव चउव्विहे कोहे' इत्यादि मायासूत्राणी-त्यर्पितानीति, फलसूत्रे अनुप्रविष्टः—तदुदयवर्त्तीति, शिलाविकारः शैलः स चासौ स्तम्भश्च—स्थाणुः शैलस्तम्भः, एवमन्येऽपि, नवरं, अस्थि दारु च प्रतीतं, तिनिशो—वृक्षविशेषस्तस्य लता—कम्बा तिनिशलता, सा चात्यन्तमृद्वीति, मानस्यापि शैलस्तम्भादिसमानता तद्वतो नमनाभावविशेषात् ज्ञेयेति, मानोऽप्यनन्तानुबन्ध्यादिरूपः क्रमेण दृश्यः, तत्फलसूत्रं व्यक्तं, कृमिरागे वृद्धसम्प्रदायोऽयं—मनुष्यादीनां रुधिरं गृहीत्वा केनापि योगेन युक्तं भाजने स्थाप्यते, ततस्तत्र कृमय उत्पद्यन्ते, ते च वाताभिलाषिणः छिद्रनिर्गता आसन्ना भ्रमन्तो निर्हारलाला मुञ्चन्ति ताः कृमिसूत्रं भण्यते, तच्च स्वपरिणामरागरञ्जितमेव भवति, अन्ये भणन्ति—ये रुधिरे कृमय उत्पद्यन्ते तान् तत्रैव मृदित्वा कचवरमुत्तार्य तद्रसे कञ्चिद् योगं प्रक्षिप्य पट्टसूत्रं रञ्जयन्ति, स च रसः कृमिरागो भण्यते अनुत्तारीति, तत्र कृमीणां रागो—रञ्जकरसः कृमिरागस्तेन रक्तं कृमिरागरक्तम् , एवं सर्वत्र, नवरं कर्दमो—गोवाटादीनां खञ्जनं—दीपादीनां हरिद्रा प्रतीतेति, कृमिरागादिरक्तवस्त्रसमानता च लोभस्य अनन्तानुबन्ध्यादितद्भेदवतां जीवानां क्रमेण दृढहीनहीनतरहीनतमानुबन्धत्वात् , तथाहि—कृमिरागरक्तं वस्त्रं दग्धमपि न रागानुबन्धं मुञ्चति, तद्भस्मनोऽपि रक्तत्वाद् , एवं यो मृतोऽपि लोभानुबन्धं न मुञ्चति तस्याभिधीयते लोभः कृमिरागरक्तवस्त्रसमानोऽनन्तानुबन्धी चेति, एवं सर्वत्र भावना कार्येति, फलसूत्रं स्पष्टम् , इह कषायप्ररूपणागाथाः—"जलरेणुपुढविपव्वयराईसरिसो चउव्विहो कोहो । तिणिसलयाकट्ठट्ठियसेलत्थंभोवमो माणो ॥१॥ मायाऽवलेहिगोमुत्तिमिंढसिंगघणवंसिमूलसमा । लोभो हलिद्दखंजणकद्दमकिमिरागसारिच्छो ॥२॥ पक्खचउमासवच्छरजावज्जीवाणुगामिणो कमसो । देवनरतिरियनारय-

१ जलरेणुपृथ्वीपर्वतराजीसदृशश्चतुर्विधः क्रोधः तिनिशलताकाष्ठास्थिकशैलस्तम्भोपमो मानः ॥१॥ मायावलेखिकागोमूत्रैडकशृङ्गघनवंशमूलसमा लोभो

गइसाहणहेयवो भणिया ॥३॥" इति॥

अनन्तरं कषायाः प्ररूपिताः, कषायैश्च संसारो भवतीति संसारस्वरूपमाह—

चउव्विहे संसारे पं० तं०—णेरतियसंसारे जाव देवसंसारे। चउव्विहे आउते पं० तं०—णेरतिआउते जाव देवाउते। चउव्विहे भवे पं० तं०—नेरतिएभवे जाव देवभवे (सू० २९४)। चउव्विहे आहारे पं० तं—असणे पाणे खाइमे साइमे। चउव्विहे आहारे पं० तं०—उवक्खरसंपन्ने उवक्खडसंपन्ने सभावसंपन्ने परिजुसियसंपन्ने (सू० २९५)।

'चउव्विहे' इत्यादि व्यक्तं, किन्तु संसरणं संसारः-मनुष्यादिपर्यायान्नारकादिपर्यायगमनमिति, नैरयिकप्रायोग्येष्वायुर्नामगोत्रादिषु कर्म्मसूदयगतेषु जीवो नैरयिक इति व्यपदिश्यते, उक्तं च—"नेरइए णं भंते ! नेरइएसु उववज्जइ अनेरइए नेरइएसु उववज्जइ ?, गोयमा !, नेरइए नेरइएसु उववज्जइ नो अनेरइए नेरइसु उववज्जइ" इति, ततो नैरयिकस्य संसरणम्-उत्पत्तिदेशगमनमपरापरावस्थागमनं वा नैरयिकसंसारः, अथवा संसरन्ति जीवा यस्मिन्नसौ संसारो -गतिचतुष्टयं, तत्र नैरयिकस्यानुभूयमानगतिलक्षणः परम्परया चतुर्गतिको वा संसारो नैरयिकसंसारः, एवमन्येऽपि ॥ उक्तरूपश्च संसार आयुषि सति भवतीति आयुः-

हरिद्राखंजनकर्दमकृमिरागसदृशः ॥२॥ पक्षचतुर्मासंसंवत्सरयावज्जीवानुगामिनः क्रमशः देवनरतिर्यन्नारकगतिसाधनहेतवो भणिताः ॥३॥

१ नैरयिको भदन्त ! नैरयिकेषूत्पद्यते अनैरयिको नैरयिकेषूत्पद्यते ?, गौतम ! नैरयिको नैरयिकेषूत्पद्यते न अनैरयिको नैरयिकेषूत्पद्यते ॥

सूत्रं, यत्र एति न याति चेत्यायुः-कर्म्मविशेष इति, तत्र येन निरयभवे प्राणी ध्रियते तन्निरयायुरेवमन्यान्यपि, उक्तरूपं चायुर्भवे स्थितिं कारयतीति भवसूत्रं, कण्ठ्यं, केवलं भवनं भवः-उत्पत्तिर्निरये भवो निरयभवो मनुष्येषु मनुष्याणां वा भवो मनुष्यभवः, एवमन्यावपि। भवेषु न सर्वेष्वाहारका जीवाः इत्याहारसूत्रे, तत्राह्रियत इत्याहारः अश्यत इत्यशनम्-ओदनादि पीयत इति पानं-सौवीरादि स्वादः प्रयोजनमस्येति खादिमं-फलवर्गादि स्वादः प्रयोजनमस्येति स्वादिमं-तम्बूलादि, उपस्क्रियतेऽनेनेत्युपस्करो-हिङ्ग्वादिस्तेन सम्पन्नो-युक्त उपस्करसम्पन्नः, तथा उपस्करणमुपस्कृतं-पाक इत्यर्थस्तेन सम्पन्न ओदनमण्डकादिः उपस्कृतसम्पन्नः, पाठान्तरेण नो उपस्करसम्पन्नो-हिङ्ग्वादिभिरसंस्कृत ओदनादिः, स्वभावेन-पाकं विना सम्पन्नः-सिद्धः द्राक्षादिः स्वभावसम्पन्नः, 'परिजुसिय'त्ति पर्युषितं-रात्रिपरिवसनं तेन सम्पन्नः पर्युषितसम्पन्न इड्डरिकादिः, यतस्ताः पर्युषितकलनीकृताः अम्लरसा भवन्ति, आरनालस्थिताम्रफलादिर्वेति ॥

अनन्तरोदिताः संसारादयो भावाः कर्म्मवतां भवन्तीति 'चउव्विहे बंधे' इत्यादि कर्म्मप्रकरणमारादेककसूत्रात्—

चउव्विहे बंधे पं० तं०—पगतिबंधे ठितीबंधे अणुभावबंधे पदेसबंधे। चउव्विहे उवक्कमे पं० तं—बंधणोवक्कमे उदीरणोवक्कमे उवसमणोवक्कमे विप्परिणामणोवक्कमे। बंधणोवक्कमे चउव्विहे पं० तं०-पगतिबंधणोवक्कमे ठितिबंधणोवक्कमे अणुभावबंधणोवक्कमे पदेसबंधणोवक्कमे। उदीरणोवक्कमे चउव्विहे पं० तं०-पगतीउदीरणोवक्कमे ठितीउदीरणोवक्कमे अणुभावउदीरणोवक्कमे पदेसउदीरणोवक्कमे। उवसमणोवक्कमे चउव्विहे पं० तं०—

पगतिउवसामणोवक्कमे ठिति० अणु० पदेसुवसामणोवक्कमे। विप्परिणामणोवक्कमे चउव्विहे पं० तं०—पगति० ठिती० अणु० पतेसविप्प०। चउव्विहे अप्पाबहुए पं० तं०—पगतिअप्पाबहुए ठिति० अणु० पतेसप्पाबहुते। चउव्विहे संकमे पं० तं०—पगतिसंकमे ठिती० अणु० पएससंकमे। चउव्विहे णिधत्ते पं० तं०—पगतिणिधत्ते ठिती० अणु० पएसणिधत्ते। चउव्विहे णिकायिते पं० तं०—पगतिणिकायिते ठिति० अणु० पएसणिकायिते (सू० २९६)।

प्रकटं चैतत्, नवरं सकषायत्वात् जीवस्य कर्म्मणो योग्यानां पुद्गलानां बन्धनम्—आदानं बन्धः, तत्र कर्म्मणः प्रकृतयः—अंशा भेदा ज्ञानावरणीयादयोऽष्टौ तासां प्रकृतेर्वा—अविशेषितस्य कर्म्मणो बन्धः प्रकृतिबन्धः, तथा स्थितिः—तासामेवावस्थानं जघन्यादिभेदभिन्नं तस्या बन्धो—निर्वर्त्तनं स्थितिबन्धः, तथा अनुभावो—विपाकः तीव्रादिभेदो रस इत्यर्थस्तस्य बन्धोऽनुभावबन्धः, तथा जीवप्रदेशेषु कर्म्मप्रदेशानामनन्तानन्तानां प्रतिप्रकृति प्रतिनियतपरिमाणानां बन्धः—सम्बन्धनं प्रदेशबन्धः, परिमितपरिमाणगुडादिमोदकबन्धवदिति, एतच्च मोदकदृष्टान्तं वर्णयन्ति वृद्धाः—यथा किल मोदकः कणिक्कागुडघृतकटुभाण्डादिद्रव्यबद्धः सन् कोऽपि वातहरः कोऽपि पित्तहरः कोऽपि कफहरः कोऽपि मारकः कोऽपि बुद्धिकरः कोऽपि व्यामोहकरः, एवं कर्म्मप्रकृतिः काचिज्ज्ञानमावृणोति काचिद्दर्शनं काचित् सुखदुःखादिवेदनमुत्पादयतीति, तथा तस्यैव मोदकस्य यथाऽविनाशभावेन कालनियमरूपा स्थितिर्भवति, एतच्च कर्म्मणोऽपि तद्भावेन नियतकालावस्थानं स्थितिबन्धः, तथा तस्यैव मोदकस्य यथा स्निग्धमधुरादिरेकगुणद्विगुणादिभावेन रसो भवति, एवं कर्म्मणोऽपि देशसर्वघातिशुभाशुभतीव्रमन्दादिरनुभागबन्धः, तथा तस्यैव मोदकस्य यथा कणिक्कादिद्रव्याणां परिमाण-

तत्त्वं एवं कर्म्मणोऽपि पुद्गलानां प्रतिनियतप्रमाणता प्रदेशबन्ध इति । उपक्रम्यते–क्रियतेऽनेनेत्युपक्रमः–कर्मणो बद्धत्वोदीरितत्वादिना परिणमनहेतुर्जीवस्य शक्तिविशेषो योऽन्यत्र करणमिति रूढः, उपक्रमणं वोपक्रमो–बन्धनादीनामारम्भः, 'स्यादारम्भ उपक्रम' इति वचनादिति, तत्र बन्धनं–कर्म्मपुद्गलानां जीवप्रदेशानां च परस्परं सम्बन्धनं, इदं च सूत्रमात्रबद्धलोहशलाकासम्बन्धोपममवगन्तव्यं तस्योपक्रमः–उक्तार्थो बन्धनोपक्रमः, आसकलितावस्थस्य वा कर्म्मणो बद्धावस्थीकरणं बन्धनं तदेवोपक्रमो–वस्तुपरिकर्म्मरूपो बन्धनोपक्रमो, वस्तुपरिकर्म्मवस्तुविनाशरूपस्याप्युपक्रमस्याभिहितत्वादिति, एवमन्यत्रापि, नवरमप्राप्तकालफलानां कर्म्मणामुदये प्रवेशनमुदीरणा, उक्तं च—"जं करणेणोकड्ढिय उदए दिज्जइ उदीरणा एसा । पगईठिइअणुभागप्पएसमूलुत्तरविभागा ॥१॥" तथा उदयोदीरणानिधत्तनिकाचनाकरणानामयोग्यत्वेन कर्म्मणोऽवस्थापनमुपशमनेति, उक्तं च—"ओवट्टणउव्वट्टण संकमणाइं च तिन्नि करणाइं" इति. उपशमनायां सन्तीति प्रक्रमः, तथा विविधैः प्रकारैः कर्म्मणां सत्तोदयक्षयक्षयोपशमोद्वर्त्तनापवर्त्तनादिभिरेतद्रूपतयेत्यर्थः, गिरिसरिदुपलन्यायेन द्रव्यक्षेत्रादिभिर्वा करणविशेषेण वाऽवस्थान्तरापादनं विपरिणामना, इह च विपरिणामना बन्धनादिषु तदन्येषूदयादिष्वस्तीति सामान्यरूपत्वाद् भेदेनोक्तेति । बन्धनोपक्रमो–बन्धनकरणं चतुर्द्धा, तत्र प्रकृतिबन्धनस्योपक्रमो जीवपरिणामो योगरूपः, तस्य प्रकृतिबन्धहेतुत्वादिति, स्थितिबन्धनस्यापि स एव, नवरं, कषायरूपः, स्थितेः कषायहेतुकत्वादिति, अनुभागबन्धनोपक्रमोऽपि परिणाम एव, नवरं कषायरूपः, प्रदेशबन्धनोपक्रमस्तु स एव योगरूप इति, यत उक्तम्—"जोगा पयडिपएसं

१ यत्करणेनाकृष्योदये दीयते एषोदीरणा प्रकृतिस्थित्यनुभागप्रदेशमूलोत्तरविभागा ॥१॥ २ उद्वर्त्तनापवर्त्तनसंक्रमणरूपाणि च त्रीणि करणानि (उपशमनायां) ३ योगात् प्रकृतिप्रदेशौ स्थित्यनुभागौ कषायतः करोति ।

ठिइअणुभागं कसायओ कुणइ" इति, प्रकृत्यादिबन्धनानामारम्भा वा उपक्रमा इति, एवमन्यत्रापि। यन्मूलप्रकृतीनामुत्तरप्रकृतीनां वा दलिकं वीर्यविशेषेणाकृष्योदये दीयते सा प्रकृत्युदीरणेति, वीर्यादेव च प्राप्तोदयया स्थित्या सहाप्राप्तोदया स्थितिरनुभूयते सा स्थित्युदीरणेति, तथैव प्राप्तोदयेन रसेन सहाप्राप्तोदयो रसो यो वेद्यते साऽनुभागोदीरणेति, तथा प्राप्तोदयैर्नियतपरिमाणकर्म्मप्रदेशैः सहाप्राप्तोदयानां नियतपरिमाणानां कर्म्मप्रदेशानां यद्वेदनं सा प्रदेशोदीरणेति, इहापि कषाययोगरूपः परिणाम आरम्भो वोपक्रमार्थः, प्रकृत्युपशमनोपक्रमादयश्चत्वारोऽपि सामान्योपशमनोपक्रमानुसारेणावगन्तव्याः, प्रकृतिविपरिणामनोपक्रमादयोऽपि सामान्यविपरिणामनोपक्रमलक्षणानुसारेणाववोद्धव्याः, उपक्रमस्तु प्रकृत्यादित्वेन पुद्गलानां परिणमनसमर्थं जीववीर्यमिति। 'अप्पाबहुए'त्ति अल्पं च-स्तोकं बहु च-प्रभूतमल्पबहु तद्भावोऽल्पबहुत्वं, दीर्घत्वासंयुक्तत्वे च प्राकृतत्वादिति, प्रकृतिविषयमल्पबहुत्वं बन्धाद्यपेक्षया, यथा सर्वस्तोकप्रकृतिबन्धक उपशान्तमोहादिः एकविधबन्धकत्वात्, बहुतरबन्धक उपशमकादिसूक्ष्मसम्परायः, षड्विधबन्धकत्वात्, बहुतरबन्धकः सप्तविधबन्धकस्ततोऽष्टविधबन्धक इति, स्थितिविषयमल्पबहुत्वं यथा—"[1]सव्वत्थोवो संजयस्स जहन्नओ ठिइबन्धो, एगेंदियबायरपज्जत्तगस्स जहन्नओ ठिइबन्धो असंखेज्जगुणो" इत्यादि, अनुभागं प्रत्यल्पबहुत्वं यथा,—"[2]सव्वत्थोवाइं अणंतगुणवुड्ढिठाणाणि असंखेज्जगुणवुड्ढिठाणाणि असंखेज्जगुणाणि जाव अणंतभागवुड्ढिठाणाणि असंखेज्जगुणाणि" प्रदेशाल्पबहुत्वं यथा—"अट्ठ-

---

१ संयतस्य जघन्यः स्थितिबन्धः सर्वस्तोकः एकेन्द्रियबादरपर्याप्तकस्य जघन्यः स्थितिबन्धः असंख्यातगुणः २ अनन्तगुणवृद्धिस्थानानि सर्वस्तोकानि असंख्येयगुणवृद्धिस्थानान्यसंख्येयगुणानि यावदनन्तभागवृद्धिस्थानान्यसंख्येयगुणानि

विइंयगस्स आउयभागो थोवो नामगोयाणं तुल्लो विसेसाहिओ नाणदंसणावरणंतरायाणं तुल्लो विसेसाहिओ मोहस्स विसेसाहिओ वेयणीयस्स विसेसाहिओ'' इति, यां प्रकृतिं बध्नाति जीवः तदनुभावेन प्रकृत्यन्तरस्थं दलिकं वीर्यविशेषेण यत्परिणमयति स संक्रमः, उक्तं च—''सो संकमोत्ति भन्नइ जं बंधणपरिणओ पओगेणं । पययंतरत्थदलियं परिणामइ तदणुभावे जं ॥१॥'' इति, तत्र प्रकृतिसंक्रमः सामान्यलक्षणावगम्य एवेति, मूलप्रकृतीनामुत्तरप्रकृतीनां वा स्थितेर्यदुत्कर्षणं अपकर्षणं वा प्रकृत्यन्तरस्थितौ वा नयनं स स्थितिसंक्रम इति, उक्तं च—''ठिइसंकमोत्ति वुच्चइ मूलुत्तरपगईओ उ जा हि ठिई । उव्वट्टिया व ओवट्टिया व पगइं णिया वऽन्नं ॥१॥'' इति, अनुभागसंक्रमोऽप्येवमेव, यदाह—''तत्थट्ठपयं उव्वट्टिया व ओवट्टिया व अविभागा । अणुभागसंकमो एस अन्नपगइं णिया वावि ॥१॥'' इति, अट्ठपयंति–अनुभागसंक्रमस्वरूपनिर्द्धारणं, 'अविभाग'त्ति अनुभागाः 'निय'त्ति नीता इति । यत्कर्मद्रव्यमन्यप्रकृतिस्वभावेन परिणाम्यते स प्रदेशसंक्रमः, उक्तञ्च—''जं दलियमन्नपगइं णिज्जइ सो संकमो पएसस्स'' इति, निधानं निहितं वा निधत्तं, भावे कर्म्मणि वा क्तप्रत्यये निपातनात्, उद्वर्त्तनापवर्त्तनावर्जितानां शेपकरणानामयोग्यत्वेन कर्म्मणोऽवस्थापनमुच्यते, नितरां काचनं–बन्धनं निकाचितं–कर्म्मणः सर्वकरणानामयोग्यत्वेनावस्थापनं, उक्तञ्चोभयसंवादि—''संकमणंपि निहत्तीए

---

१ [illegible] आयुर्भागः स्तोको नामगोत्रयोस्तुल्यो विशेषाधिको ज्ञानदर्शनावरणान्तरायाणां तुल्यो विशेषाधिको मोहस्य विशेषाधिको वेदनीयस्य विशेषाधिकः २ [illegible]परिणतः प्रयोगेन तदनुभावेन प्रकृत्यन्तरस्थं दलिकं परिणमयति यत् स संक्रम इति भण्यते ॥१॥ ३ मूलोत्तरप्रकृतीनां या स्थितिस्तस्या उत्कर्षणमपकर्षणं प्रकृत्यन्तरस्थितावयनं वा स्थितिसंक्रम इत्युच्यते ॥१॥ ४ तत्रार्थपदं (स्वरूपं) उद्वर्त्तिता वा अपवर्त्तिता वा अविभागाः । अनुभागसंक्रम एषः अन्यप्रकृतिं नीता वाऽपि ॥१॥ ५ यद्दलिकमन्यप्रकृतौ नीयते स संक्रमः प्रदेशस्य ६ निधत्तत्वे संक्रमणमपि नास्ति निकाचनस्य शेषाण्यपि ॥

णत्थि सेसाणि वत्ति इयरस्स" इति, निकाचनाकरणस्येति, अथवा पूर्वबद्धस्य कर्म्मणस्तप्तसंमीलितलोहशलाकासम्बन्धसमानं निधत्तं, तप्तमिलितसंकुट्टितलोहशलाकासम्बन्धसमानं निकाचितमिति, प्रकृत्यादिविशेषस्तूभयत्रापि सामान्यलक्षणानुसारेण नेय इति, विशेषतो बन्धादिस्वरूपजिज्ञासुना कर्मप्रकृतिसंग्रहणिरनुसरणीयेति ॥

इहानन्तरमल्पबहुत्वमुक्तं, तत्रात्यन्तमल्पमेकं शेषं त्वपेक्षया बहु इत्यल्पबहुत्वाभिधायिन एककतिसर्वशब्दान् चतुःस्थानकेऽवतारयन् 'चत्तारी'त्यदि सूत्रत्रयमाह,

**चत्तारि एक्का पं० तं०—दविए एक्कते माउ एक्कते पज्जते इक्कते संगहे इक्कते (सू० २९७) चत्तारि कती पं० तं०—दवितकती माउयकती पज्जवकती संगहकती (सू० २९८) चत्तारि सव्वा पं० तं०—नामसव्वए ठवणसव्वए आएससव्वते निरवसेससव्वते (सू० २९९)।**

एकसंख्योपेतानि द्रव्यादीनि स्वार्थिककप्रत्ययोपादानादेककानि, तत्र द्रव्यमेवैककं द्रव्यैककं सचित्तादिभेदात् त्रिविधमिति, 'माउयएक्कए'त्ति मातृकापदैककम्-एकं मातृकापदं, तद्यथा-उप्पन्ने इ वेत्यादि, इह प्रवचने दृष्टिवादे समस्तनयवादबीजभूतानि मातृकापदानि भवन्ति, तद्यथा-उप्पन्ने इ वा विगए इ वा धुवे इ वत्ति, अमूनि च मातृकापदानीव अ आ इत्येवमादीनि सकलशब्दशास्त्रार्थव्यापारव्यापकत्वान्मातृकापदानीति, पर्यायैककः-एकः पर्यायः, पर्यायो विशेषो धर्म्म इत्यनर्थान्तरं, स चानादिष्टो वर्णादिरादिष्टः कृष्णादिरिति, संग्रहैककः शालिरिति, अयमर्थः-संग्रहः-समुदायस्तमाश्रित्यैकवचनगर्भशब्दप्रवृत्तिः, तथा चैकोऽपि शालिः

शालिरित्युच्यते, बहवोऽपि शालयः शालिरिति, लोके तथादर्शनादिति, क्वचित्पाठः 'दविए एक्कए' इत्यादि, तत्र द्रव्ये विषयभूते एकक इत्यादि व्याख्येयमिति । कतीति प्रश्नगर्भापरिच्छेदवत् संख्यावचनो बहुवचनान्तः, तत्र द्रव्याणि च तानि कति च द्रव्यकति कति द्रव्याणीत्यर्थः, द्रव्यविषयो वा कतिशब्दो द्रव्यकतिः, एवं मातृकापदादिष्वपि, नवरं संग्रहः शालियवगोधूमा इत्यादि । नाम च तत्सर्वं च नामसर्वं सचेतनादेर्वा वस्तुनो यस्य सर्व्वमिति नाम तन्नामसर्वं नाम्ना सर्व्वं सर्वं इति वा नाम यस्येति विग्रहाद्–नाम-शब्दस्य च पूर्वनिपातः, तथा स्थापनया–सर्वमेतदितिकल्पनया अक्षादि द्रव्यं सर्वं स्थापनासर्वं स्थापनैव वा अक्षादिद्रव्यरूपा सर्व्वं स्थापनासर्व्वं, आदेशनमादेशः–उपचारो व्यवहारः स च बहुतरे प्रधाने वा आदिश्यते देशेऽपि यथा विवक्षितं घृतमभिसमीक्ष्य बहुतरे भुक्ते स्तोके च शेषे उपचारः क्रियते–सर्व्वं घृतं भुक्तं, प्रधानेऽप्युपचारः यथा ग्रामप्रधानेषु गतेषु पुरुषेषु सर्व्वो ग्रामो गत इति व्यपदिश्यते इति, अत आदेशतः सर्वमादेशसर्व्वं उपचारसर्व्वमित्यर्थः, तथा निरवशेषतया–अपरिशेषव्यक्तिसमाश्रयेण सर्व्वं निरवशेषसर्व्वं, यथा–अनिमिषाः सर्व्वे देवाः, न हि देवव्यक्तिरनिमिषत्वं काचिद् व्यभिचरतीत्यर्थः, सर्वत्र ककारः स्वार्थिको द्रष्टव्यः ।

अनन्तरं सर्वं प्ररूपितं तत्प्रस्तावात् सर्वमनुष्यक्षेत्रपर्यन्तवर्त्तिनि पर्व्वते सर्वासु तिर्यग्दिक्षु कूटानि प्ररूपयन्नाह—

**माणुसुत्तरस्स णं पव्वयस्स चउदिसिं चत्तारि कूडा पं० तं०—रयणे रतणुच्चते सव्वरयणे रतणसंचये (सू० ३००) जंबुद्दीवे २ भरहेरवतेसु वासेसु तीताते उस्सप्पिणीए सुसमसुसमाए समाए चत्तारि सागरोवमकोडाकोडीओ कालो हुत्था जंबुद्दीवे २ भरहेरवते इमीसे ओसप्पिणीए दूसमसुसमाए समाए जहण्णपए णं चत्तारि सागरोवमकोडाकोडीओ कालो हुत्था, जंबुद्दीवे २ भरहेरवएसु वासेसु आगमेस्साते उस्सप्पिणीते सुसमसुस-**

माते समाए चत्तारि सागरोवमकोडाकोडीओ कालो भविस्सइ (सू० ३०१) जंबूद्दीवे २ देवकुरुउत्तरकुरुवज्जाओ चत्तारि अकम्मभूमीओ पं० तं०—हेमवते हेरन्नवते हरिवस्से रम्मगवासे, चत्तारि वट्टवेयड्ढपव्वता पं० तं०—सद्दावई वियडावई गंधावई मालवंतपरिताते, तत्थ णं चत्तारि देवा महिड्ढितीया जाव पलिओवमट्ठितीता परिवसंति, तं०—साती पभासे अरुणे पउमे, जंबुद्दीवे २ महाविदेहे वासे चउव्विहे पं० तं०—पुव्वविदेहे अवरविदेहे देवकुरा उत्तरकुरा, सव्वेऽवि णं णिसढणीलवंतवासहरपव्वता चत्तारि जोयणसयाइं उड्ढं उच्चत्तेणं चत्तारि गाउयसयाइं उव्वेहेणं पं०, जंबूद्दीवे २ मंदरस्स पव्वयस्स पुरत्थिमेणं सीताए महानदीए उत्तरे कूले चत्तारि वक्खारपव्वया पं० तं०—चित्तकूडे पम्हकूडे णलिणकूडे एगसेले, जंबू० मंदर० पुर० सीताए महानदीए दाहिणकूले चत्तारि वक्खार पव्वया पं० तं०—तिकूडे वेसमणकूडे अंजणे मातंजणे, जंबू० मंदर० पच्चत्थिमेणं सीओदाए महानतीए दाहिण-कूले चत्तारि वक्खारपव्वता पं० तं०—अंकावती पम्हावती आसीविसे सुहावहे, जंबू० मंदर० पच्च० सीओदाए महाणतीते उत्तरकूले चत्तारि वक्खारपव्वया पं० तं०—चंदपव्वते सूरपव्वते देवपव्वते णागपव्वते, जंबू० मंदरस्स पव्वयस्स चउसु विदिसासु चत्तारि वक्खारपव्वया पं० तं०—सोमणसे विज्जुप्पभे गंधमायणे मालवंते, जंबूद्दीवे २ महाविदेहे वासे जहन्नपते चत्तारि अरहंता चत्तारि चक्कवट्टी चत्तारि बलदेवा चत्तारि वासुदेवा उप्पज्जिंसु वा उप्पज्जंति वा उप्पज्जिस्संति वा, जंबूद्दीवे २ मंदरपव्वते चत्तारि वणा पं० तं०—भद्दसालवणे नंदणवणे सोमणसवणे पंडगवणे, जंब० मन्दरे पव्वए पंडगवणे चत्तारि अभिसेगसिलाओ पं० तं०—पंडुकंबलसिला अइ-

पण्डुकंबलसिला रत्तकंबलसिला अतिरत्तकंबलसिला, मंदरचूलिया णं उवरिं चत्तारि जोयणाइं विक्खंभेणं पन्नत्ता, एवं धायइसंडदीवपुरच्छिमद्धेवि कालं आदिं करेत्ता जाव मंदरचूलियत्ति, एवं जाव पुक्खरवरदीवपच्चच्छिमद्धे जाव मंदरचूलियत्ति—जंबूद्दीवगआवस्सगं तु कालाओ चूलिया जाव। धायइसंडे पुक्खरवरे य पुव्वावरे पासे ॥१॥ (सू० ३०२)।

'माणुसुत्तरस्से'त्यादि स्फुटं, किन्तु 'चउदिसि'न्ति चतसृणां दिशां समाहारश्चतुर्दिक् तस्मिंश्चतुर्दिशि, अनुस्वारः प्राकृतत्वादिति, कूटानि-शिखराणि, इह च दिग्ग्रहणेऽपि विदिक्ष्विति द्रष्टव्यं, तत्र दक्षिणपूर्वस्यां दिशि रत्नकूटं, गरुडस्य वेणुदेवस्य निवासभूतं, तथा दक्षिणापरस्यां दिशि रत्नोच्चयकूटं वेलम्बसुखदमित्यपरनामकं वेलम्बस्य वायुकुमारेन्द्रस्य सम्बन्धि, तथा पूर्वोत्तरस्यां दिशि सर्वरत्नकूटं वेणुदालिसुपर्णकुमारेन्द्रस्य, तथा अपरोत्तरस्यां रत्नसञ्चयकूटं प्रभञ्जनापरनामकं प्रभञ्जनवायुकुमारेन्द्रस्येति, एवं चैतद् व्याख्यायते द्वीपसागरप्रज्ञप्तिसंग्रहण्यनुसारेण, यतस्तत्रोक्तम्—"[1]दक्खिणपुव्वेण रयणकूडं गरुलस्स वेणुदेवस्स। सव्वरयणं च पुव्वुत्तरेण तं वेणुदालिस्स ॥१॥ रयणस्स अवरपासे तिन्निवि समइच्छिऊण कूडाइं। कूडं वेलंबस्स उ विलंबसुहयं सया होइ ॥२॥ सव्वरयणस्स अवरेण तिन्नि समइच्छिऊण कूडाइं। कूडं पभंजणस्स उ पभंजणं आढियं होइ ॥३॥" इति, इह चतुःस्थानकानुरोधेन चत्वार्युक्तानि, अन्यथा अन्यान्यपि द्वादश सन्ति, पूर्वदक्षिणापरोत्तरासु त्रीणि त्रीणि, द्वादश चैकैकदेवाधिष्ठितानीति, उक्तं

[1] दक्षिणपूर्वस्यां रत्नकूटं गरुडस्य वेणुदेवस्य सर्वरत्नं च पूर्वोत्तरस्यां तद्वेणुदालिनः ॥१॥ रत्नस्यापरपार्श्वे त्रीण्यपि समतिक्रम्य कूटानि कूटं वेलंबस्य तु विलंबसुखदं सदा भवति ॥२॥ सर्वरत्नस्यापरस्यां त्रीणि कूटानि समतिक्रम्य प्रभंजनस्य प्रभंजनं कूटं आढ्यं भवति ॥३॥

च-पुव्वेण तिन्नि कूडा दाहिणओ तिण्णि तिण्णि अवरेणं । उत्तरओ तिन्नि भवे चउद्दिसिं माणुसनगस्स ॥१॥" इति । अनन्तरं मानुषोत्तरे कूटद्रव्याणि प्ररूपितानि, अधुना तेनावृतक्षेत्रद्रव्याणां चतुःस्थानकावतारं 'जंबूद्दीवेत्यादिना चत्तारि मंदरचूलियाओ' एतदन्तेन ग्रन्थेनाह-व्यक्तश्चायं, नवरं चित्रकूटादीनां वक्षारपर्व्वतानां षोडशानामिदं स्वरूपम्-"पंचसए[2] बाणउए सोलस य सहस्स दो कलाओ य । विजया १ वक्खारं २ तरनईण ३ तह वणमुहायामो ४ ॥१॥" इति, तथा-"जत्तो[3] वासहरगिरी तत्तो जोयणसयं समवगाढा । चत्तारि जोयणसए उव्विद्धा सव्वरयणमया ॥१॥ जत्तो पुण सलिलाओ तत्तो पञ्चसयगाउउव्वेहो । पञ्चेव जोयणसए उव्विद्धा आसखंधणिभा ॥२॥" इति, विष्कम्भश्चैषामेवम्-"विजयाणं विक्खंभो बावीससयाइं तेरसहियाइं । पंचसए वक्खारा पणुवीससयं च सलिलाओ ॥१॥" इति ॥ पद्यते-गम्यते इति पदं-संख्यास्थानं तच्चानेकधेति जघन्यं-सर्व्वहीनं पदं जघन्यपदं तत्र विचार्ये सत्यवश्यंभावेन चत्वारोऽर्हदादय इति ॥ भूम्यां भद्रशालवनं मेखलायुगले च नन्दनसौमनसे शिखरे पण्डकवनमिति, अत्र गाथाः-"बावीससहस्साइं पुव्वावरमेरुभद्दसालवणं । अड्ढाइज्जसया उण दाहिणपासे य उत्तरओ ॥१॥ पंचेव जोयणसए उड्ढं गंतूण

१ पूर्वस्यां त्रीणि कूटानि दक्षिणस्यां त्रीणि अपरस्यां त्रीणि उत्तरस्यां त्रीणि भवेयुश्चतसृषु दिक्षु मानुषनगस्य ॥१॥ २ द्विनवत्यधिकपंचशतानि षोडश सहस्राणि द्वे च कले विजया वक्षस्कारा अन्तर्नद्यः तथा वनमुखानि आयामेन ॥१॥ ३ यतो वर्षधरगिरिस्ततो योजनशतं समवगाढाः चतुर्योजनशतान्युद्विद्धाः सर्वरत्नमयाः ॥१॥ यतः पुनः सलिलाः ततः पंचशतगव्यूतान्युद्वेधः पंचैव योजनशतान्युद्विद्धा अश्वस्कन्धनिभाः ॥२॥ ४ विजयानां विष्कम्भो त्रयोदशाधिकानि द्वाविंशतिशतानि वक्षस्काराणां पंचशतानि सलिलानां पंचविंशत्यधिकं शतं ॥१॥ ५ मेरोः पूर्वापरयोर्द्वाविंशतिः सहस्राणि भद्रशालवनं दक्षिणोत्तरपार्श्वयोरर्द्धतृतीयशतानि पुनः ॥१॥ पंचैव योजनशतान्यूर्ध्वं गत्वा पंचयोजनशतपृथुलं नंदनं सुमेरुं परिक्षिप्य स्थितं रम्यं ॥२॥

पंनगयविहूलं। नंदणवणं सुमेरुं परिक्खिवित्ता ठियं रम्मं ॥२॥ वासट्ठिसहस्साइं पंचेव सयाइं नंदणवणाओ। उड्ढं गंतूण वणं सोमणसं नंदणवरिच्छं ॥३॥ सोमणसाओ तीसं छच्च सहस्से विलग्गिऊण गिरिं। विमलजलकुंडगहणं हवइ वणं पंडगं सिहरे ॥४॥ चत्तारि जोयणसया चउणउया चक्कवालओ रुंदं। इगतीस जोयणसया बावट्ठी परिरओ तस्स ॥५॥" इति, तीर्थकराणामभिषेकार्थाः शिला अभिषेकशिलाः चूलिकायाः पूर्वदक्षिणापरोत्तरासु दिक्षु क्रमेणावगम्या इति, 'उवरिं'ति अग्रे 'विक्खंभेणं'ति विस्तरेणेति यथा 'जंबूद्दीवे दीवे भरहेरवएसु वासेसु' इत्यादिभिः सूत्रैः कालादयश्चूलिकान्ता अभिहिताः एवं धातकीखण्डस्य पूर्वार्द्धे पश्चिमार्द्धे पुष्करार्द्धस्यापि पूर्वार्द्धे पश्चिमार्धे च वाच्याः, एकमेरुसम्बद्धवक्तव्यतायाः चतुर्ष्वप्यन्येषु समानत्वाद्, एतदेवाह–'एव'मित्यादि, अमुमेवातिदेशं संग्रहगाथया आह–'जंबूदीवे'त्यादि, जम्बूद्वीपस्येदं जम्बूद्वीपकं तं वा गच्छतीति जम्बूद्वीपगं, जम्बूद्वीपे यदिति वाक्यशेषः, अवश्यंभावित्वाद् वाच्यत्वाद्वाऽऽवश्यकं जम्बूद्वीपकावश्यकं जम्बूद्वीपगावश्यकं वा वस्तुजातं, तुः पूरणे, किमादि किमन्तं चेत्याह–कालात् सुषमसुषमालक्षणादारभ्य चूलिकां–मंदरचूलिकां यावत् यत्तदिति गम्यते धातकीखण्डे पुष्करवरे च द्वीपे यौ पूर्वापरौ पार्श्वौ प्रत्येकं पूर्वार्द्धमपरार्द्धं च तयोः पूर्वापरेषु वर्षेषु वा–क्षेत्रेष्वन्यूनाधिकं द्रष्टव्यमिति शेष इति ॥

जंबुद्दीवस्स णं दीवस्स चत्तारि दारा पं० तं०—विजये वेजयंते जयंते अपराजिते, ते णं दारा चत्तारि जोयणाइं विक्खंभेणं तावतितं चेव पवेसेणं पं०, तत्थ णं चत्तारि देवा महिड्ढीया जाव पलिओवमट्ठितीता परिवसंति वि-

नन्दनवनादूर्ध्वं द्वाषष्टिं सहस्राणि पञ्च शतानि गत्वा नन्दनवनसदृशं सौमनसं वनं ॥३॥ सौमनसात्षट्त्रिंशत्सहस्राणि गत्वा गिरौ विमलजलकुंडगहनं पाण्डकं वनं भाति शिखरे ॥४॥ चतुर्नवत्यधिकचतुःशतानि चक्रवालतया विस्तीर्णं द्विषष्ट्यधिकैकत्रिंशच्छतानि तस्य परिरयः ॥५॥

जते वेजयंते जयंते अपराजिते (सू० ३०३) जंबूद्दीवे २ मंदरस्स पव्वयस्स दाहिणेणं चुल्लहिमवंतस्स वासहरपव्वयस्स चउसु विदिसासु लवणसमुद्दं तिन्नि २ जोयणसयाइं ओगाहित्ता एत्थ णं चत्तारि अंतरदीवा पं० तं०—एगूरूयदीवे आभासियदीवे वेसाणितदीवे णंगोलियदीवे, तेसु णं दीवेसु चउव्विहा मणुस्सा परिवसंति, तं०—एगूरूता आभासिता वेसाणिता णंगोलिया, तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं चत्तारि २ जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पं० तं०—हयकन्नदीवे गयकन्नदीवे गोकन्नदीवे संकुलिकन्नदीवे, तेसु णं दीवेसु चउव्विधा मणुस्सा परिवसंति तं०—हयकन्ना गयकन्ना गोकन्ना संकुलिकन्ना, तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं पंच २ जोयणसयाइं ओगाहित्ता एत्थ णं चत्तारि अंतरदीवा पं० तं०—आयंसमुहदीवे मेंढमुहदीवे अओमुहदीवे गोमुहदीवे, तेसु णं दीवेसु चउव्विहा मणुस्सा भाणियव्वा, तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं छ छ जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पं० तं०—आसमुहदीवे हत्थिमुहदीवे सीहमुहदीवे वग्घमुहदीवे, तेसु णं दीवेसु मणुस्सा भाणियव्वा, तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं सत्त सत्त जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पं० तं० आसकन्नदीवे हत्थिकन्नदीवे अकन्नदीवे कन्नपाउरणदीवे, तेसु णं दीवेसु मणुया भाणियव्वा, तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं अट्ठट्ठ जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पं० तं०—उक्कामुहदीवे मेहमुहदीवे विज्जुमुहदीवे विज्जुदंतदीवे, तेसु णं दीवेसु मणुस्सा भाणियव्वा, तेसि णं दीवाणं चउसु विदिसासु लवणसमुद्दं णव णव जोयणसयाइं ओगाहेत्ता एत्थ

णं चत्तारि अंतरदीवा पं० तं०—घणदंतदीवे लट्ठदंतदीवे गूढदंतदीवे, सुद्धदंतदीवे, तेसु णं दीवेसु चउव्विहा मणुस्सा परिवसंति तं०—घणदंता लट्ठदंता गूढदंता सुद्धदंता, जंबूदीवे २ मंदरस्स पव्वयस्स उत्तरेणं सिहरिस्स वासहरपव्वयस्स चउसु विदिसासु लवणसमुद्दं तिन्नि २ जोयणसयाइं ओगाहेत्ता एत्थ णं चत्तारि अंतरदीवा पं० तं०—एगूरुयदीवे सेसं तदेव निरवसेसं भाणियव्वं जाव सुद्धदंता (सू०३०४) जंबूदीवस्स णं दीवस्स बाहिरिल्लाओ वेतिनंताओ चउद्दिसिं लवणसमुद्दं पंचाणउइ जोयणसहस्साइं ओगाहेत्ता एत्थ णं महतिमहालता महालंजरसंठाणसंठिता चत्तारि महापायाला पं० तं०—वलतामुहे केउते जूवए ईसरे, एत्थ णं चत्तारि देवा महिड्ढिया जाव पलिओवमट्ठितीता परिवसंति, तं०—काले महाकाले वेलंबे पभंजणे, जंबूदीवस्स णं दीवस्स बाहिरिल्लाओ वेतिनंताओ चउद्दिसिं लवणसमुद्दं बायालीसं २ जोयणसहस्साइं ओगाहेत्ता एत्थ णं चउण्हं वेलंधरनागराईणं चत्तारि आवासपव्वता पं० तं०—गोथूभे उदयभासे संखे दगसीमे, तत्थ चं चत्तारि देवा महिड्ढिया जाव पलिओवमट्ठितीता परिवसंति तं०—गोथूभे सिवए संखे मणोसिलाते, जंबूदीवस्स णं दीवस्स बाहिरिल्लाओ वेइयंताओ चउसु विदिसासु लवणसमुद्दं बायालीसं २ जोयणसहस्साइं ओगाहेत्ता एत्थ णं चउण्हं अणुवेलंधरणागरातीणं चत्तारि आवासपव्वता पं० तं०—कक्कोडए विज्जुप्पभे केलासे अरुणप्पभे, तत्थ णं चत्तारि देवा महिड्ढीया जाव पलिओवमट्ठितीता परिवसंति, तं०—कक्कोडए कद्दमए केलासे अरुणप्पभे, लवणे णं समुद्दे णं चत्तारि चंदा पभासिंसु वा पभासंति वा पभासिस्संति वा, चत्तारि सूरिता तविंसु वा तवंति वा तविस्संति वा, चत्तारि

कत्तियाओ जाव चत्तारि भरणीओ, चत्तारि अग्गी जाव चत्तारि जमा, चत्तारि अंगारा जाव चत्तारि भावकेऊ, लवणस्स णं समुद्दस्स चत्तारि दारा पं० तं०—विजए विजयंते जयंते अपराजिते, ते णं दारा णं चत्तारि जोयणाइं विक्खंभेणं तावतितं चेव पवेसेणं पं०, तत्थ णं चत्तारि देवा महिड्डिया जाव पलिओवमट्ठितिया परिवसंति—विजये वेजयंते जयंते अपराजिए (सू० ३०५) धायइसंडे दीवे चत्तारि जोयणसयसहस्साइं चक्कवालविक्खंभेणं पं०, जंबूदीवस्स णं दीवस्स बहिया चत्तारि भरहाइं चत्तारि एरवयाइं, एवं जहा सद्दुदेसते तहेव निरवसेसं भाणियव्वं जाव चत्तारि मंदरा चत्तारि मन्दरचूलिआओ (सू० ३०६)।

विजयादीनि क्रमेण पूर्वादिदिक्षु विष्कम्भो–द्वारशाखयोरन्तरं प्रवेशः–कुड्यस्थूलत्वमष्ट योजनान्युच्चमिति, उक्तं च—"[१]चउजोयणविच्छिन्ना अट्ठेव य जोयणाणि उव्विद्धा। उभओवि कोसकोसं कुड्डा बाहल्लओ तेसिं ॥१॥" इति, क्रोशं शाखाबाहल्यमित्यर्थः, "[२]पलिओवमट्ठिईया सुरगणपरिवारिया सदेवीया। एएसु दारनामा वसंति देवा महिड्डिया॥२॥" इति, 'चुल्लहिमवंतस्स'त्ति महाहिमवदपेक्षया लघोर्हिमवतः, तस्य हि प्राग्भागापरभागयोः प्रत्येकं शाखाद्वयमस्तीत्युच्यते 'चउसु विदिसासु' विदिक्षु पूर्वोत्तराद्यासु लवणसमुद्रं त्रीणि त्रीणि योजनशतान्यवगाह्य–उल्लङ्घ्य ये शाखाविभागा वर्त्तन्ते 'एत्थ'त्ति एतेषु शाखाविभागेषु अन्तरे–मध्ये समुद्रस्य द्वीपाः, अथवा अन्तरं–परस्परविभागस्तत्प्रधाना द्वीपा अन्तरद्वीपाः, तत्र पूर्वोत्तरायामेकोरु[च]काभिधानो योजनशतत्रयायामविष्कम्भो

१ योजनचतुष्कं विस्तीर्णा अष्टयोजनोद्वेधा उभयतोऽपि क्रोशक्रोशं कुड्या बाहल्यतस्तयोः ॥१॥ २ पल्योपमस्थितिकाः सुरगणपरिवृताः सदेवीकाः एतेषु द्वारनामानो वसन्ति देवा महर्द्धिकाः ॥२॥

द्वीपः, एवमाभाषिकवैषाणिकलांगूलिकद्वीपा अपि क्रमेणाग्नेयीनैर्ऋतीवायव्यास्विति, चतुर्विधा इति समुदायापेक्षया न त्वेकैकस्मिन्निति, अतः क्रमेणैते योज्याः, द्वीपनामतः पुरुषाणां नामान्येव, ते तु सर्वाङ्गोपाङ्गसुन्दरा दर्शने मनोरमाः स्वरूपतो, नैकोरुचकादय एवेति, तथा एतेभ्य एव चत्वारि योजनशतान्यवगाह्य प्रतिविदिक् चतुर्योजनशतायामविष्कम्भा द्वितीयाश्चत्वार एव, एवं येषां यावदन्तरं तेषां तावदेवायामविष्कम्भप्रमाणं यावत्सप्तमानां नवशतान्यन्तरं तावदेव च तत्प्रमाणमिति, सर्वेऽप्यष्टाविंशतिरेते, एतन्मनुष्यास्तु युग्मप्रसवाः पल्योपमासंख्येयभागायुषोऽष्टधनुःशतोच्चाः, तथैरावतक्षेत्रविभागकारिणः शिखरिणोऽप्येवमेव पूर्वोत्तरादिविदिक्षु क्रमेणैतन्नामिकैवान्तरद्वीपानामष्टाविंशतिरिति, अन्तरद्वीपप्रकरणार्थसंग्रहगाथाः—"चुल्लहिमवंत पुव्वावरेण विदिसासु सागरं तिसए। गंतूणंतरदीवा तिन्नि सए होंति विच्छिन्ना ॥१॥ अउणावन्ननवसए किंचूणे परिहि तेसिमे नामा। एगूरुगआभासिय वेसाणी चेव नंगूली ॥२॥ एएसिं दीवाणं परओ चत्तारि जोयणसयाइं। ओगाहिऊण लवणं सपडिदिसिं चउसयपमाणा ॥३॥ चत्तारंतरदीवा हयगयगोकन्नसंकुलीकण्णा। एवं पंचसयाइं छसत्तअट्ठेव नव चेव ॥४॥ ओगाहिऊण लवणं विक्खंभोगाहसरिसया भणिया। चउरो चउरो दीवा इमेहिं णामेहिं णेयव्वा ॥५॥ आयंसगमेंढमुहा अओमुहा गोमुहा य चउरेते। अस्समुहा हत्थिमुहा सीहमुहा चेव वग्घमुहा ॥६॥ तत्तो अ

---

१ क्षुद्रहिमवत्पूर्वापरयोर्विदिक्षु त्रिशतीं सागरं गत्वा द्वीपास्त्रिशतविस्तीर्णा भवन्ति ॥१॥ एकोनपंचाशदधिकं नवशतं किंचिदूनं परिधिः तेषामिमानि नामानि एकोरुक आभाषिको विषाणी लांगुली चैव ॥२॥ एतेषां द्वीपानां परतश्चत्वारि योजनशतानि अवगाह्य लवणं सुप्रतिदिशि चतुःशतप्रमाणाः ॥३॥ चत्वारोऽन्तर्द्वीपा हयगजगोकर्णशष्कुलीकर्णाः एते पंचशतानि षट्सप्ताष्ट नव चैव ॥४॥ लवणमवगाह्य विष्कम्भावगाहसदृशाः भणिताः चत्वारश्चत्वारो द्वीपा एभिर्नामभिर्ज्ञातव्याः ॥५॥ आदर्शकमेंढमुखायोमुखा गोमुखश्च चत्वार एते अश्वमुखो हस्तिमुखः सिंहमुखश्चैव व्याघ्रमुखः ॥६॥

अस्सकन्ना हत्थियकन्ना अकन्नपाउरणा। उक्कामुहमेहमुहा विज्जुमुहा विज्जुदंता य ॥७॥ घणदंत लट्ठदंता निगूढदंता य सुद्धदंता य। वासहरे सिहरंमिवि एवं चिय अट्ठवीसावि ॥८॥ अंतरदीवेसु नरा धणुसयअट्ठूसिया सया मुइया। पालिंति मिहुणधम्मं पल्लस्स असंखभागाऊ॥९॥ चउसट्ठि पिट्ठिकरंडयाणि मणुयाणऽवच्चपालणया। अउणासीइं तु दिणा चउत्थभत्तेण आहारो ॥१०॥" इति॥ 'एत्थ णं'ति मध्यमेषु दशसु योजनसहस्रेषु महामहान्त इति वक्तव्ये समयभाषया 'महइमहालया' इत्युक्तम्, महच्च तदरञ्जरं च अरंजरं-उदकुम्भ इत्यर्थः महारञ्जरं तस्य संस्थानेन संस्थिता ये ते तथा, तदाकारा इत्यर्थः, महान्तस्तदन्यक्षुल्लकव्यवच्छेदेन पातालमिवागाधत्वात् गम्भीरत्वात्पातालाः पाताले व्यवस्थितत्वाद्वा पातालाः महान्तश्च ते पातालाश्चेति महापातालाः, वडवामुखः केतुको यूपक ईश्वरश्चेति, क्रमेण पूर्वादिदिक्ष्विति, एते च मुखे मूले च दश सहस्राणि योजनानां, मध्ये उच्चैस्त्वेन च लक्षमिति, एषामुपरितनभागे जलमेव मध्ये वायुजले मूले वायुरेवेति, एतन्निवासिनो देवाः वायुकुमाराः कालादय इति, इह गाथाः—"पंणनउइ सहस्साइं ओगाहित्ताण चउद्दिसिं लवणं। चउरोऽलंजरसंठाणसंठिया होंति पायाला ॥१॥ वलयामुह केऊए जूयग तह इस्सरे य बोद्धव्वे। सव्ववइरामयाणं कुड्डा एएसिं दससइया ॥२॥ जोयणसहस्सदसगं मूले उवरिं च होंति विच्छिन्ना। मज्झे य सयसहस्सं तत्तियमेत्तं च

---

ततश्चाश्वकर्णः हस्तिकर्णाकर्णकर्णप्रावरणाः उल्कामुखः मेघमुखः विद्युन्मुखो विद्युद्दन्तश्च ॥७॥ घनदंतो लष्टदन्तः निगूढदन्तश्च शुद्धदन्तश्च शिखरिण्यपि वर्षधरे एवमेव अष्टाविंशतिरपि ॥८॥ अन्तर्द्वीपेषु नराः धनुःशताष्टोच्छ्रिताः सदा मुदिताः। पालयन्ति मिथुनकधर्मं पल्यासंख्येयभागायुषः ॥९॥ चतुःषष्टिः पृष्ठकरण्डकानि मनुष्याः एकोनाशीतिं यावदपत्यपालनादिनानि आहारश्चतुर्थभक्तेन ॥१०॥ १ चतुर्दिशि लवणं पंचनवतिसहस्राण्यवगाह्य चत्वारोऽलंजरसंस्थानसंस्थिताः पाताला भवन्ति ॥१॥ वलयमुखः केतुकः यूपकस्तथा ईश्वरश्च बोद्धव्याः सर्वे वज्रमयाः कुड्या एषां दशशतानि ॥२॥

ओगाढा ॥३॥ पलिओवमट्ठिईया एएसिं अहिवईसुरा इणमो । काले य महाकाले वेलंब पभंजणे चेव ॥४॥ अन्नेवि य पायाला खुड्डालंजरगसंठिया लवणे । अट्ठसया चुलसीया सत्त सहस्सा य सव्वेवि ॥५॥ जोयणसयविच्छिन्ना मूलुवरिं दस सयाणि मज्झंमि । ओगाढा य सहस्सं दस जोयणिया य सिं कुड्डा ॥६॥ पायालाण विभागा सव्वाणवि तिन्नि तिन्नि बोद्धव्वा । हेट्ठिमभागे वाऊ मज्झे वाऊ य उदगं च ॥७॥ उवरिं उदगं भणियं पढमगबीएसु वाउसंखुभिओ । वामे [वमतीत्यर्थः,] उदगं तेण य परिवड्ढइ जलनिही खुभिओ ॥८॥ परिसंठियंमि पवणे पुणरवि उदगं तमेव संठाणं । वच्चेइ तेण उदही परिहायइणुक्कमेणेवं ॥९॥" इति, वेलां–लवणसमुद्रशिखामन्तर्निर्गच्छन्तीं बहिर्वाऽऽयान्तीमग्रशिखां च धारयन्तीति संज्ञात्वाद्वेलंधरास्ते च ते नागराजाश्च–नागकुमारवराः वेलंधरनागराजास्तेषामानामपर्वताः पूर्वादिदिक्षु क्रमेण गोस्तूपादयः, विदिक्षु–पूर्वोत्तरादिषु वेलंधराणां पश्चाद्वृत्तयो अनुनायकत्वेन नागराजा अनुवेलंधरनागराजाः, वेलंधरवक्तव्यतागाथाः–"दसजोयणसहस्सा लवणसिहा चक्कवालओ रुंदा । सोलससहस्सउच्चा सहस्समेगं तु ओगाढा ॥१॥

---

[illegible] मूले उपरि च विस्तीर्णा भवन्ति मध्ये शतसहस्रं तावन्मात्रं चावगाढाः ॥३॥ पल्योपमस्थितिका एतेषामधिपतिसुरा एते कालश्च महाकालः [illegible] प्रभंजनश्चेव ॥४॥ अन्येऽपि च क्षुद्रकालंजरसंस्थिता लवणे पातालाः सन्ति ते सर्वेऽपि सप्तसहस्राष्टशतचतुरशीतिमिताः ॥५॥ [illegible] मूले उपरि च दश शतानि मध्ये अवगाढाश्च सहस्रं दश योजनानि (योजनमाना,एषां भित्तिः ॥६॥ सर्वेषामपि पातालानां त्रयस्त्रयो विभागा [illegible] अधस्तनभागे वायुर्मध्ये वायुरुदकं च ॥७॥ उपरि उदकं भणितं प्रथमद्वितीययोः संक्षुभितो वायुरुदकं वमति तेन क्षुभितो जलनिधिः [illegible] ॥८॥ पवने परिसंस्थिते पुनरप्युदकं तत्संस्थानमेव गच्छति तेनोदधिः परिहीयतेऽनुक्रमेणैवं ॥९॥ २ लवणशिखा दशयोजनसहस्रमाना [illegible] विस्तीर्णा षोडशसहस्रोच्चा एकं सहस्रं त्ववगाढा ॥१॥

[समाद् भूभागादिति भावः] 'देसूणमद्धजोयण लवणसिहोवरि दगं तु कालदुगे। [दिवा रात्रौ चेत्यर्थः], अइरेगं अइरेगं परिवड्ढइ हायए वावि ॥२॥ अब्भिंतरियं वेलं धरेंती लवणोदहिस्स नागाणं। बायालीससहस्सा [अन्तर्विशन्तीमित्यर्थः] दुसत्तरिसहस्स बाहिरियं ॥३॥" [बहिर्गच्छन्तीमित्यर्थः] सट्ठिं नागसहस्सा धरिंति अग्गोदगं [शिखाग्रमित्यर्थः] समुद्दस्स। वेलंधरआवासा लवणे य चउद्दिसिं चउरो ॥४॥ पुव्वाइ अणुक्कमसो गोथुभदगभाससंखदगसीमा। गोथुभ सिवए संखे मणोसिले नागरायाणो ॥५॥ अणुवेलंधरवासा लवणे विदिसासु संठिया चउरो। कक्कोडे विज्जुप्पभे केलासऽरुणप्पभे चेव ॥६॥ कक्कोडय कद्दमए केलासऽरुणप्पभे य रायाणो। बायालीससहस्से गंतुं उदहिंमि सव्वेवि ॥७॥ चत्तारि जोयणसए तीसे कोसं च उग्गया भूमिं। सत्तरस जोयणसए इगवीसे ऊसिया सव्वे ॥८॥ इति, 'पभासिंसु'त्ति चन्द्राणां सौम्यदीप्तिकत्वाद्वस्तुप्रभासनमुक्तमादित्यानां तु खररश्मित्वात् 'तवइंसु'त्ति तापनमुक्तमिति। चतुःसङ्ख्यात्वाच्चन्द्राणां तत्परिवारस्यापि नक्षत्रादेश्चतुःसङ्ख्यत्वमेवेत्याह—चतस्रः कृत्तिका नक्षत्रापेक्षया न तु तारकापेक्षयेति, एवमष्टाविंशतिरपि, अग्निरिति कृतिकानक्षत्रस्य देवता यावद्यम इति भरण्या देवता, अङ्गारक आद्यो ग्रहः भावकेतुरित्य-

१ दिवा रात्रौ च देशोनमर्द्धयोजनं लवणशिखोपरि अतिरेकमतिरेकं परिवर्धते हीयते वापि ॥२॥ अभ्यन्तरां वेलां धारयंति लवणोदधेः द्वाचत्वारिंशत्सहस्रमाना देवाः नागाना द्वासप्ततिसहस्री बाह्यां ॥३॥ षष्टिर्नागसहस्री धारयंत्यग्रोदकं समुद्रस्य। वेलन्धराणामावासा लवणे च चतुर्दिक्षु चत्वारः ॥४॥ पूर्वाद्यनुक्रमतः गोस्तूपदकभासशंखदकसीमाख्या गोस्तूपशिवशंखमनःशिला नागराजानः ॥५॥ लवणे विदिक्षु चत्वारोऽनुवेलंधरावासाः संस्थिताः कर्कोटकविद्युत्प्रभकैलासारुणप्रभाश्चैव ॥६॥ कर्कोटकः कर्दमकः कैलासोऽरुणप्रभश्च राजानः द्वाचत्वारिंशत्सहस्राणि तस्मिन्नुदधौ सर्वेऽपि गत्वा ॥७॥ चत्वारि योजनशतानि त्रिशतं क्रोशं चोद्गता भूमिं। सप्तदशयोजनशती एकविंशतिरुच्छ्रिताः सर्वे ॥८॥

द्वाशीतिम इति, शेषं यथा द्विस्थानके, समुद्रद्वारादि जम्बूद्वीपद्वारादिवदिति, चक्रवालस्य–वलयस्य विष्कम्भो–विस्तरः जम्बूद्वीपाद्विर्धातकीखण्डपुष्करार्द्धयोरित्यर्थः, शब्दोपलक्षित उद्देशकः शब्दोद्देशको द्विस्थानकस्य तृतीय इत्यर्थः, केवलं तत्र द्विस्थानानुरोधेन 'दो भरहाइं' इत्याद्युक्तमिह तु 'चत्तारी'त्यादि ॥

उक्तं मनुष्यक्षेत्रवस्तूनां चतुःस्थानकमधुना क्षेत्रसाधर्म्यान्नन्दीश्वरद्वीपवस्तूनामासत्यसूत्राच्चतुःस्थानकं 'नंदीसरस्से' त्यादिना ग्रन्थेनाह—

[अथ नन्दीश्वरविचारः] णंदीसरवरस्स णं दीवस्स चक्कवालविक्खंभस्स बहुमज्झदेसभागे चउद्दिसिं चत्तारि अंजणगपव्वता पं० तं०–पुरत्थिमिल्ले अंजणगपव्वते दाहिणिल्ले अंजणगपव्वए पचत्थिमिल्ले अंजणगपव्वते उत्तरिल्ले अंजणगपव्वते ४, ते णं अंजणगपव्वता चउरासीति जोयणसहस्साइं उड्ढं उच्चत्तेण एगं जोयणसहस्सं उव्वेहेणं मूले दस जोयणसहस्साइं विक्खंभेणं तदणंतरं च णं मायाए २ परिहातेमाणा २ उवरिमेगं जोयणसहस्सं विक्खंभेणं पण्णत्ता मूले इक्कतीसं जोयणसहस्साइं छच्च तेवीसे जोयणसते परिक्खेवेणं उपरिं तिन्नि २ जोयणसहस्साइं एगं च छावट्ठं जोयणसतं परिक्खेवेणं, मूले विच्छिन्ना मज्झे संखेत्ता, उप्पिं तणुया० गोपुच्छसंठाणसंठिता सव्वअंजणमया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया निप्पंका निक्कंकडच्छाया सप्पभा समिरीया सउज्जोया पासाईया दरिसणीया अभिरूवा पडिरूवा, तेसि णं अंजणगपव्वयाणं उवरिं बहुसमरमणिज्जभूमिभा-

गा पं०, तेसि णं बहुसमरमणिज्जभूमिभागाणं बहुमज्झदेसभागे चत्तारि सिद्धायतणा पण्णत्ता, ते णं सिद्धायतणा एगं जोयणसयं आयामेणं पण्णत्ता, पण्णासं जोयणाइं विक्खंभेणं बावत्तरि जोयणाइं उड्ढं उच्चत्तेणं, तेसिं सिद्धायतणाणं चउदिसिं चत्तारि दारा पं० तं०—देवदारे असुरदारे णागदारे सुवन्नदारे, तेसु णं दारेसु चउव्विहा देवा परिवसंति, तं–देवा असुरा नागा सुवण्णा, तेसि णं दाराणं पुरतो चत्तारि मुहमंडवा पं०, तेसि णं मुहमंडवाणं पुरओ चत्तारि पेच्छाघरमंडवा पं०, तेसि णं पेच्छाघरमंडवाणं बहुमज्झदेसभागे चत्तारि वइरामया अक्खाडगा पं०, तेसि णं वइरामयाणं अक्खाडगाणं बहुमज्झदेसभागे चत्तारि मणिपेढियातो पं०, तासि णं मणिपेढिताणं उवरिं चत्तारि सीहासणा पन्नत्ता, तेसि णं सीहासणाणं उवरिं चत्तारि विजयदूसा पन्नत्ता, तेसि णं विजयदूसगाणं बहुमज्झदेसभागे चत्तारि वइरामता अंकुसा पं०, तेसु णं वतिरामतेसु अंकुसेसु चत्तारि कुंभिका मुत्तादामा पं०, ते णं कुंभिका मुत्तादामा पत्तेयं २ अन्नेहिं तदद्धउच्चत्तपमाणमित्तेहिं चउहिं अद्धकुंभिकेहिं मुत्तादामेहिं, सव्वतो समंता संपरिक्खित्ता, तेसि णं पेच्छाघरमंडवाणं पुरओ चत्तारि मणिपेढिताओ पण्णत्ताओ, तासि णं मणिपेढियाणं उवरिं चत्तारि २ चेतितथूभा पण्णत्ता, तासि णं चेतितथूभाणं पत्तेयं २ चउदिसिं चत्तारि मणिपेढियातो पं०, तासि णं मणिपेढिताणं उवरि चत्तारि जिणपडिमाओ सव्वरयणामईतो संपलियंकणिसन्नाओ थूभाभिमुहाओ चिट्ठंति, तं०—रिसभा वद्धमाणा चंदाणणा वारिसेणा, तेसि णं चेतितथूभाणं पुरतो चत्तारि मणिपेढिताओ पं०, तासि णं मणिपेढिताणं उवरिं चत्तारि चेतितरुक्खा पं०, तेसिणं चेतितरुक्खाणं पुरओ चत्तारि

मणिपेढियाओ पं०, तासि णं मणिपेढियाणं उवरिं चत्तारि महिंदज्झया पं०, तेसि णं महिंदज्झयाणं पुरओ चत्तारि णंदाओ पुक्खरणीओ पं०, तासि णं पुक्खरिणीणं पत्तेयं २ चउदिसिं चत्तारि वणसंडा पं० तं०—पुरच्छिमेणं दाहिणेणं पच्चत्थिमेणं उत्तरेणं—पुव्वेणं असोगवणं दाहिणओ होइ सत्तवण्णवणं । अवरेणं चंपगवणं चूतवणं उत्तरे पासे ॥१॥ तत्थ णं जे से पुरच्छिमिल्ले अंजणगपव्वते तस्स णं चउदिसिं चत्तारि णंदाओ पुक्खरिणीतो पं० तं०—णंदुत्तरा णंदा आणंदा नंदिवद्धणा, ताओ णंदाओ पुक्खरिणीओ एगं जोयणसयसहस्सं आयामेणं पन्नासं जोयणसहस्साइं विक्खंभेणं दस जोयणसताइं उव्वेहेणं, तासि णं पुक्खरिणीणं पत्तेयं २ चउदिसिं चत्तारि तिसोवाणपडिरूवगा, तेसि णं तिसोवाणपडिरूवगाणं पुरतो चत्तारि तोरणा पं०, तं०—पुरच्छिमेणं दाहिणेणं पच्चत्थिमेणं उत्तरेणं, तासि णं पुक्खरणीणं पत्तेयं २ चउद्दिसिं चत्तारि वणसंडा पं० तं०—पुरतो दाहिण० पच्च० उत्तरेणं, पुव्वेणं असोगवणं जाव चूयवणं उत्तरे पासे, तासि णं पुक्खरिणीणं बहुमज्झदेसभागे चत्तारि दधिमुहगपव्वया पं०, ते णं दधिमुहगपव्वया चउसट्ठिं जोयणसहस्साइं उड्ढं उच्चत्तेणं एगं जोयणसहस्सं उव्वेहेणं सव्वत्थ समा पल्लगसंठाणसंठिता दसजोयणसहस्साइं विक्खंभेणं एक्कतीसं जोयणसहस्साइं छच्च तेवीसे जोयणसते परिक्खेवेणं, सव्वरयणामता अच्छा जाव पडिरूवा, तेसि णं दधिमुहगपव्वताणं उवरिं बहुसमरमणिज्जा भूमिभागा पं०, सेसं जहेव अंजणगपव्वताणं तहेव निरवसेसं भाणियव्वं, जाव चूतवणं उत्तरे पासे, तत्थ णं जे से दाहिणिल्ले अंजणगपव्वते तस्स णं चउदिसिं चत्तारि णंदाओ पुक्खरणीओ पण्णत्ताओ, तं०—भद्दा विसाला कुमुदा

पोंडरिगिणी, तातो णंदातो पुक्खरणीतो एगं जोयणसयसहस्सं सेसं तं चेव जाव दधिमुहगपव्वता जाव वणसंडा, तत्थ णं जे से पच्चत्थिमिल्ले अंजणगपव्वते तस्स णं चउद्दिसिं चत्तारि णंदाओ पुक्खरणीओ पं०, तं०—णंदिसेणा अमोहा गोथूभा सुदंसणा, सेसं तं चेव, तहेव दधिमुहगपव्वता तहेव सिद्धायतणा जाव वणसंडा, तत्थ णं जे से उत्तरिल्ले अंजणगपव्वते तस्स णं चउद्दिसिं चत्तारि णंदाओ पुक्खरणीओ पं०, तं०—विजया वेजयंती जयंती अपराजिता, तातो णं पुक्खरिणीओ एगं जोयणसयसहस्सं तं चेव पमाणं तहेव दधिमुहगपव्वता तहेव सिद्धायतणा जाव वणसंडा, णंदीसरवरस्स णं दीवस्स चक्कवालविक्खंभस्स बहुमज्झदेसभागे चउसु विदिसासु चत्तारि रतिकरगपव्वता पं०, तं०—उत्तरपुरच्छिमिल्ले रइकरगपव्वए दाहिणपुरच्छिमिल्ले रइकरगपव्वए दाहिणपच्चत्थिमिल्ले रतिकरगपव्वते उत्तरपच्चत्थिमिल्ले रतिकरगपव्वए, ते णं रतिकरगपव्वता दस जोयणसयाइं उड्ढं उच्चत्तेणं दस गाउतसताइं उव्वेहेणं सव्वत्थ समा झल्लरिसंठाणसंठिता दस जोयणसहस्साइं विक्खंभेणं एक्कतीसं जोयणसहस्साइं छच्च तेवीसे जोयणसते परिक्खेवेणं, सव्वरयणामता, अच्छा जाव पडिरूवा, तत्थ णं जे से उत्तरपुरच्छिमिल्ले रतिकरगपव्वते तस्स णं चउदिसिं ईसाणस्स देविंदस्स देवरन्नो चउण्हमग्गमहिसीणं जंबूद्दीवपमाणाओ चत्तारि रायहाणीओ पं०, तं०—णंदुत्तरा णंदा उत्तरकुरा देवकुरा, कण्णाते कण्हरातीते रामाए रामरक्खियाते, तत्थ णं जे से दाहिणपुरच्छिमिल्ले रतिकरगपव्वते, तस्स णं चउदिसिं सक्कस्स देविंदस्स देवरन्नो चउण्हमग्गमहिसीणं जंबूद्दीवपमाणातो चत्तारि रायहाणीओ पं०, तं०—

समणा मोमणसा अग्गिमाली मणोरमा पउमाते सिवाते सतीते अंजूए, तत्थ णं जे से दाहिण पच्चत्थिमिल्ले रतिकरगपव्वते तत्थ णं चउद्दिसिं सक्कस्स देविंदस्स देवरन्नो चउण्हमग्गमहिसीणं जंबूद्दीवपमाणमेत्तातो चत्तारि रायहाणीओ पं०, तं०—भूता भूतवडेंसा गोथूभा सुदंसणा, अमलाते अच्छराते णवमिताते रोहिणीते, तत्थ णं जे से उत्तरपच्चत्थिमिल्ले रतिकरगपव्वते तत्थ णं चउदिसिमिसाणस्स देविंदस्स देवरन्नो चउण्हमग्गमहिसीणं जंबुद्दीवप्पमाणमित्तातो चत्तारि रायहाणीओ पं०, तं०—रयणा रतणुच्चता सव्वरतणा रतणसंचया, वसूते वसुगुत्ताते वसुमित्ताते वसुंधराए (सू० ३०७)।

सूत्रमिदमाद्यं, केवलं—जम्बू १ लवणे धायइ २ कालोए पुक्खराइ ३ जुयलाइं। वारुणि ४ खीर ५ घय ६ इक्खू ७ नंदीसर ८ अरुण ९ दीवुदही ॥१॥ ति गणनयाऽष्टमो नन्दीश्वरः स एव वरः २, अमनुष्यद्वीपापेक्षया बहुतरजिनभवनादिसद्भावेन तस्य वरत्वादिति, तस्य चक्रवालविष्कम्भस्य प्रमाणं १६३८४००००००, उक्तं च—"तेवट्ठं कोडिसयं चउरासीइं च सयसहस्साइं। नंदीसरवरदीवे विक्खंभो चक्कवालेणं ॥१॥" इति, मध्यश्चासौ देशभागश्च—देशावयवो मध्यदेशभागः, स च नात्यन्तिक इति बहुमध्यदेशभागो न प्रदेशादिपरिगणनया निष्टङ्कितः, अपि तु प्राय इति, अथवा अत्यन्तं मध्यदेशभागो बहुमध्यदेशभाग इति, तत्र इहाञ्जनकाः मूले दश योजनसहस्राणि विष्कम्भेणेत्युक्तम्, द्वीपसागरप्रज्ञप्तिसंग्रहिण्यां तूक्तम्—"चुलसीति सहस्साइं उव्विद्धा ओगया सहस्समहे।

१ त्रिषष्टिः कोटिशतं चतुरशीतिश्च शतसहस्राणि नन्दीश्वरवरद्वीपे चक्रवालतो विष्कम्भः ॥१॥ २ चतुरशीतिः सहस्राणि उद्विद्धाः अधः सहस्रं गताः [illegible]

धरणितले विच्छिन्ना य ऊणगा ते दससहस्सा ॥१॥ [1]नव चेव सहस्साइं पंचेव य होंति जोयणसयाइं। अंजणगपव्वयाणं मूलंमि उ होइ विक्खंभो ॥२॥" कंदस्येत्यर्थः, "[2]नव चेव सहस्साइं चत्तारि य होंति जोयणसयाइं। अंजणगपव्वयाणं धरणियले होइ विक्खंभो ॥१॥" इति, तदिदं मतान्तरमित्यवसेयमेवमन्यत्रापि, मतान्तरबीजानि तु केवलिगम्यानीति, 'गोपुच्छसंठाण'त्ति गोपुच्छो ह्यादौ स्थूलोऽन्ते सूक्ष्मस्तद्वत्तेऽपीति, 'सव्वंजणमय'त्ति अञ्जनं–कृष्णरत्नविशेषः तन्मयाः सर्व एवानन्यमयत्वेन सर्वथैवाञ्जनमयाः सर्वाञ्जनमयाः परमकृष्णा इति भावः; उक्तं च—"[3]भिंगंगरुईलकज्जलअंजणधाउसरिसा विरायंति। गगणतलमणुलिहंता अंजणगा पव्वया रम्मा ॥१॥"इति, अच्छाः आकाशस्फटिकवत्, सण्हा–श्लक्ष्णपरमाणुस्कन्धनिष्पन्नाः, श्लक्ष्णदलनिष्पन्नपटवत्, लण्हा–श्लक्ष्णा मसृणा इत्यर्थः, घुण्टितपटवत्, तथा घृष्टा इव घृष्टाः, खरशानया पाषाणप्रतिमावत्, मृष्टा इव मृष्टाः सुकुमारशानया पाषाणप्रतिमेव शोधिता वा प्रमार्जनिकयेव अत एव नीरजसः रजोरहितत्वात् निर्म्मलाः कठिनमलाभावात् धौतवस्त्रवद्वा निष्पङ्का आर्द्रमलाभावात् अकलङ्कत्वाद्वा 'निक्कंकडच्छाया' निष्कङ्कटा निष्कवचा निरावरणेत्यर्थः छाया–शोभा येषां ते तथा अकलङ्कशोभा वा सप्रभा देवानन्दकत्वादिप्रभावयुक्ताः अथवा स्वेन आत्मना प्रभान्ति न परत इति स्वप्रभाः यतः 'समिरीया' सह मरीचिभिः–किरणैर्ये ते तथा, अत एव 'सउज्जोया' सहोद्योतेन–वस्तुप्रभासनेन वर्त्तन्ते ये ते तथा 'पासाईय'त्ति प्रासादीयाः–मनःप्रसादकराः दर्शनीयास्तांश्चक्षुषा पश्यन्नपि न श्रमं

धरणीतले विस्तीर्णा ॥१॥ १ नव चैव सहस्राणि पंचैव भवन्ति योजनशतानि अंजनकपर्वतानां मूले तु विष्कंभः ॥२॥ २ नव चैव सहस्राणि चत्वारि च भवंति शतानि योजनानामंजनकपर्वतानां धरणीतले भवति विष्कम्भः ॥१॥ ३ भृंगाङ्गगवलकरुचिरकज्जलांजनधातुसदृशा विराजन्ते गगनतलमनुलिखंत इवांजनकाः पर्वता रम्याः ॥१॥

गच्छतीत्यर्थः अभिरूपाः—कमनीयाः प्रतिरूपाः द्रष्टारं द्रष्टारं प्रति रमणीया इति यावत्शब्दसंग्रहः, बहुसमाः—अत्यन्तसमा रमणीयाश्च ये ते तथा सिद्धानि—शाश्वतानि सिद्धानां वा—शाश्वतीनामर्हत्प्रतिमानामायतनानि—स्थानानि सिद्धायतनानि, उक्तं च—"अंजणगपव्वयाणं सिहरतलेसु हवंति पत्तेयं। अरहंतायणाइं सीहणिसायाइं तुंगाइं ॥१॥" मुखे—अग्रद्वारे आयतनस्य मण्डपा मुखमण्डपाः पट्टशालारूपाः प्रेक्षा—प्रेक्षणकं तदर्थं गृहरूपाः मण्डपाः प्रेक्षागृहमण्डपाः प्रसिद्धस्वरूपाः, वैरं—वज्रं रत्नविशेषस्तन्मयाः आखाटकाः—प्रेक्षाकारिजनासनभूताः प्रतीता एव विजयदूष्याणि—वितानकरूपाणि वस्त्राणि तन्मध्यभाग एवाङ्कुशाः अवलम्बननिमित्तं, कुम्भो मुक्ताफलानां परिमाणतया विद्यते येषु तानि कुम्भिकानि मुक्तादामानि—मुक्ताफलमालाः, कुम्भप्रमाणञ्च—"दो असतीओ पसती दो पसतीओ सेतिया चत्तारि सेतियाओ कुडवो चत्तारि कुडवा पत्थो चत्तारि पत्था आढयं चत्तारि आढया दोणो सट्ठी आढयाइं जहन्नो कुंभो असीइ मज्झिमो सयमुक्कोसो" इति, 'तदद्धे'ति तेषामेव मुक्तादाम्नामर्द्धमुच्चत्वस्य प्रमाणं येषां तानि तदर्द्धोच्चत्वप्रमाणानि तान्येव तन्मात्राणि तैः 'अद्धकुंभिक्केहिं'ति मुक्ताफलार्द्धकुम्भवद्भिः सर्वतः—सर्वासु दिक्षु, किमुक्तं भवति?—समन्तादिति, चैत्यस्य सिद्धायतनस्य प्रत्यासन्नाः स्तूपाः—प्रतीताश्चैत्यस्तूपाश्चित्ताल्हादकत्वाद्वा चैत्याः स्तूपाः चैत्यस्तूपाः संपर्यङ्कनिषण्णाः—पद्मासननिषण्णाः, एवं सन्मुखा अपि. महेन्द्रा इति—अतिमहान्तः समयभाषया ते च ते ध्वजाश्चेति. अथवा महेन्द्रस्येव—शक्रादेर्ध्वजा महेन्द्रध्वजाः। शाश्वतपुष्करिण्यः सर्वा अपि सामान्येन नन्दा इत्युच्यन्ते, 'सत्तपन्नवणं'ति सप्तच्छदवनमिति, 'तिसोवाणपडिरूवग'त्ति एकद्वारं

१ अञ्जनपर्वतानां शिखरतलेषु भवन्ति प्रत्येकं। अर्हदायतनानि सिंहनिषद्यानि तुंगानि॥१॥ २ द्वे असती पसतिः द्वे पसती सेतिका चतस्रः सेतिकाः कुडवः चत्वारः कुडवाः प्रस्थकः चत्वारः प्रस्थकाः आढकः चत्वार आढकाः द्रोणः आढकषष्ट्या जघन्यः कुंभोऽशीत्या मध्यमः शतेनोत्कृष्टः

प्रति निर्गमप्रवेशार्थं त्रिदिगभिमुखास्तिस्रः सोपानपंक्तयः, दधिवत् श्वेतं मुखं–शिखरं रजतमयत्वात् येषां ते तथा, उक्तं च—"[1]संखदलविमलनिम्मलदहिघणगोखीरहारसंकासा। गगणतलमणुलिहंता सोहंते दहिमुहा रम्मा॥१॥" इति, बहुमध्यदेशभागे–उक्तलक्षणे विदिक्षु–पूर्वोत्तराद्यासु रतिकरणाद्रतिकराः ४, राजधान्यः क्रमेण कृष्णादीनामिन्द्राणीनामिति, तत्र दक्षिणलोकार्द्धनायकत्वाच्छक्रस्य पूर्वदक्षिणदक्षिणापरविदिग्द्वयरतिकरयोस्तस्येन्द्राणीनां राजधान्य इतरयोरीशानस्योत्तरलोकार्द्धाधिपतित्वात् तस्येति, एवञ्च नन्दीश्वरे द्वीपे अञ्जनकदधिमुखेषु ४–१६ विंशतिर्जिनायतनानि भवन्ति, अत्र च देवाः चातुर्मासिकप्रतिपत्सु सांवत्सरिकेषु चान्येषु च बहुषु जिनजन्मादिषु देवकार्येषु समुदिता अष्टाह्निकामहिमाः कुर्वन्तः सुखंसुखेन विहरन्तीत्युक्तं जीवाभिगमे, ततो यद्यन्यान्यपि तथाविधानि सन्ति सिद्धायतनानि तदा न विरोधः, सम्भवन्ति च तानि उक्तनगरीषु विजयनगर्यामिवेति, तथा दृश्यते च पञ्चदशस्थानोद्धारलेशः—"[2]सोलसदहिमुहसेला कुंदामलसंखचंदसंकासा। कणयनिभा बत्तीसं रइकरगिरि बाहिरा तेसिं॥१॥" द्वयोर्द्वयोर्वाप्योरन्तराले बहिःकोणयोः प्रत्यासत्तौ द्वौ द्वावित्यर्थः, "[3]अंजणगाइगिरीणं णाणामणिपज्जलंतसिहरेसु। बावन्नं जिणणिलया मणिरयण सहस्स कूडवरा॥१॥" इति, तत्त्वन्तु बहुश्रुता विदन्तीति।

एतच्च पूर्वोक्तं सर्वं सत्यं जिनोक्तत्वात् इति सत्यसम्बन्धेन सत्यसूत्रम्—

---

१ शंखदलविमलनिर्मलदधिघनगोक्षीरमुक्ताहारसंकाशाः। गगनतलमनुलिखन्तः शोभन्ते दधिमुखा रम्याः॥१॥ २ दधिमुखशैलाः षोडशामलकुंदशंखचंद्रसंकाशाः। द्वात्रिंशद्रतिकराः कनकनिभाः तयोः (वाप्योः) बहिः॥१॥ २ अंजनकादिगिरीणां नानामणिप्रज्वलच्छिखरेषु द्विपंचाशज्जिनगृहाणि मणिरत्नमयानि सहस्राणि कूटवराः॥१॥

चउव्विहे सच्चे पं० तं०—णामसच्चे ठवणसच्चे दव्वसच्चे भावसच्चे (सू० ३०८) अजीवियाणं चउव्विहे तवे पं० तं०—उग्गतवे घोरतवे रसणिज्जूहणता जिब्भिंदियपडिसंलीणता (सू० ३०९) चउव्विहे संजमे पं० तं०—मणसंजमे वतिसंजमे कायसंजमे उवगरणसंजमे। चउव्विधे चियाते पं० तं०—मणचियाते वितिचियाते कायचियाते उवगरणचियाते। चउव्विहा अकिंचणता पं० तं०—मणअकिंचणता वतिअकिंचणता कायअकिंचणता उवगरणअकिंचणता (सू० ३१०) ॥ इति द्वीतीयोद्देशकः सम्पूर्णः॥

नामस्थापनासत्ये सुज्ञाने, द्रव्यसत्यमनुपयुक्तस्य सत्यमपि भावसत्यं तु यत्स्वपरानुपरोधेनोपयुक्तस्येति ॥ सत्यं चारित्रविशेष इति चारित्रविशेषानुदेशकान्तं यावदाह 'आजीविए'त्यादि, 'आजीविकानां' गोशालकशिष्याणां उग्रतपः—अष्टमादि क्वचन 'उदार'मिति पाठः तत्र उदारं—शोभनं इहलोकाद्याशंसारहितत्वेनेति घोरं—आत्मनिरपेक्षं 'रसनिज्जूहणया' घृतादिरसपरित्यागः जिह्वेन्द्रियप्रतिसंलीनता—मनोज्ञामनोज्ञेष्वाहारेषु रागद्वेषपरिहार इति, आर्हतानां तु द्वादशधेति, मनोवाक्कायानामकुशलत्वेन निरोधाः कुशलत्वेन तदुदीरणानि संयमाः, उपकरणसंयमो महामूल्यवस्त्रादिपरिहारः, पुस्तकवस्त्रतृणचर्म्मपञ्चकपरिहारो वा तत्र—"गंडी कच्छवि मुट्ठी संपुडफलए तहा छिवाडीय। एयं पोत्थयपणगं पन्नत्तं वीयरागेहिं ॥१॥ बाहल्लपुहत्तेहिं गंडी पोत्थो उ तुल्लओ दीहो। कच्छवि अंते तणुओ मज्झे पिहुलो मुणेयव्वो ॥२॥ चउरंगुलदीहो वा वट्टागिति मुट्ठिपोत्थओ अहवा। चउरंगुलदीहोच्चिय चउरंसो होइ

१ गंडी कच्छपी मुष्टिः संपुटफलकस्तथा सृपाटिका च एतत्पुस्तकपंचकं प्रज्ञप्तं वीतरागैः ॥१॥ बाहल्यपृथक्त्वैर्गंडीपुस्तकं तु तुल्यं दीर्घं कच्छपी अंते तनुको मध्ये पृथुः ज्ञातव्यः ॥२॥ चतुरंगुलदीर्घो वा वृत्ताकृतिर्मुष्टिपुस्तकमथवा। चतुरंगुलदीर्घ एव चतुरस्रो भवति ज्ञातव्यः ॥३॥

विन्नेओ ॥३॥ संपुडगो दुगमाइ फलगा वोच्छं छिवाडित्ताहे। तणुपत्तूसियरूवा होइ छिवाडी बुहा बेंति ॥४॥ दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहल्लो। तं मुणियसमयसारा छिवाडिपोत्थं भणंतीह ॥५॥" वस्त्रपञ्चकं द्विधा, अप्रत्युपेक्षितदुष्प्रत्युपेक्षितभेदात्, तत्र—"[1]अप्पडिलेहियदूसे तूलि उवहाणगं च नायव्वं। गंडुवहाणालिंगिणि मसूरए चेव पोत्तमए ॥१॥ पल्हवि कोयव पावार नवयए तह य दाढिगालीओ। दुप्पडिलेहियदूसे एयं बीयं भवे पणगं ॥२॥ पल्हवि हत्थुत्थरणं तु कोयवो रूयपूरिओ पडओ। दढिगालि धोयपोत्ती सेस पसिद्धा भवे भेया ॥३॥ तणपणगं पुण भणियं जिणेहिं कम्मट्ठगंठिमहणेहिं। साली वीही कोद्दव रालग रन्ने तणाइं च ॥४॥" चर्म्मपञ्चकमिदम्—"[2]अयएलगावि महिसी मिगाण अजिणं तु पंचमं होइ। तलिया खल्लगवज्झो कोसग कत्ती य बीयं तु ॥५॥" इति, 'चियाए'त्ति त्यागो मनःप्रभृतीनां प्रतीत एव, अथवा मनःप्रभृतिभिरशनादेः साधुभ्यो दानं त्यागः, एवमुपकरणेन पात्रादिना भक्तादेस्तस्य वा त्याग उपकरणत्यागः, न विद्यते किञ्चन—द्रव्यजातमस्येत्यकिञ्चनस्तद्भावो अकिञ्चनता निष्परिग्रहतेत्यर्थः, सा च मनःप्रभृतिभिरुपकरणापेक्षया च भवतीति यथोक्तेति॥ चतुःस्थानकस्य द्वितीयोद्देशकः समाप्तः॥

---

फलकद्वयादिः संपुटकोऽथ वक्ष्ये सृपाटिकां तनुपत्रोच्छ्रितरूपां भवति सृपाटिकां बुधा ब्रुवते ॥४॥ दीर्घो वा ह्रस्वो वा योऽल्पबाहल्यः पृथुर्भवति। तं ज्ञातसमयसाराश्छिवाडीपुस्तकं भणंतीह ॥५॥ १ अप्रतिलेखितदूष्येषु तूलिकोपधानं च ज्ञातव्यं गंडोपधानमालिंगिनी मसूरकश्चैव पोतमयः ॥१॥ प्रह्लत्तिः कुतुपः प्रावारो नवत्वक् तथा च दंष्ट्रागालिः। दुष्प्रतिलेखितदूष्ये एतद्द्वितीयं भवेत् पञ्चकं ॥२॥ प्रह्लत्तिर्हस्तास्तरणं कुतुपको रूतपूरितः पटः। दढगालिर्धौतपोतिका शेषाः प्रसिद्धा भेदा भवन्ति ॥३॥ तृणपञ्चकं पुनर्भणितं जिनैः अष्टकर्मग्रन्थिमथनैः। शाली व्रीहिः कोद्रवो रालकोऽरण्यतृणानि च ॥४॥ २ अजैडकगोमहिषीणां मृगाणामजिनं तु पञ्चमं भवति। तलिका खल्लको वर्द्धः कोशकः कर्त्तरिका (कृत्तिका) च द्वितीयं तु ॥५॥

व्याख्यातो द्वितीयोद्देशकः, अथ तृतीय आरभ्यते, अस्य चायं पूर्वेण सहाभिसम्बन्धः, पूर्वत्र जीवक्षेत्रपर्याया उक्ताः, इह तु जीवपर्याया उच्यन्ते, इत्येवंसम्बन्धस्यास्येदमादि सूत्रद्वयं

चत्तारि राईओ पं० तं०—पव्वयराती पुढविराती वालुयराती उदगराती, एवामेव चउव्विहे कोहे पं० तं०—पव्वयरातिसमाणे पुढविरातिसमाणे वालुयरातिसमाणे उदगरातिसमाणे, पव्वयरातिसमाणं कोहं अणुपविट्ठे जीवे कालं करेइ णेरइतेसु उववज्जति, पुढविरातिसमाणं कोहमणुप्पविट्ठे तिरिक्खजोणितेसु उववज्जति, वालुयरातिसमाणं कोहं अणुप्पविट्ठे समाणे मणुस्सेसु उववज्जति, उदगरातिसमाणं कोहमणुपविट्ठे समाणे देवेसु उववज्जति १। चत्तारि उदगा पं० तं०—कद्दमोदए खंजणोदए वालुओदए सेलोदए, एवामेव चउव्विहे भावे पं० तं०—कद्दमोदगसमाणे खंजणोदगसमाणे वालुओदगसमाणे सेलोदगसमाणे, कद्दमोदगसमाणं भावमणुपविट्ठे जीवे कालं करेइ णेरइएसु उववज्जति, एवं जाव सेलोदगसमाणं भावमणुपविट्ठे जीवे कालं करेइ देवेसु उववज्जइ (सू० ३११) चत्तारि पक्खी पं० तं०—रुयसंपन्ने नाममेगे णो रूवसंपन्ने रूवसंपन्ने नाममेगे नो रुतसंपन्ने एगे रूवसंपन्नेवि रुतसंपन्नेवि नो रुतसंपन्ने णो रूवसंपन्ने, एवामेव चत्तारि पुरिसजाया पं० तं०—रुयसंपन्ने नाममेगे णो रूवसंपन्ने ४, चत्तारि पुरिसजाया पं० तं०—पत्तियं करेमीतेगे पत्तियं करेइ पत्तियं करेमीतेगे अपत्तितं करेति अप्पत्तियं करेमीतेगे पत्तितं करेइ अप्पत्तियं करेमीतेगे अप्पत्तितं करेति, चत्तारि पुरिसजाया पं० तं०—अप्पणो णाममेगे पत्तितं करेति णो परस्स परस्स नाममेगे पत्तियं करेति णो अप्पणो (४) ह्व, चत्तारि पुरिसजाया पं०

तं०—पत्तियं पवेसामीतेगे पत्तितं पवेसेइ पत्तियं पवेसामीतेगे अप्पत्तितं पवेसेति ४। चत्तारि पुरिसजाता पं० तं०—अप्पणो नाममेगे पत्तितं पवेसेइ णो परस्स परस्स ४ ह्व (सू० ३१२)।

'चत्तारी'त्यादि, अस्य चायमभिसम्बन्धः—पूर्वं चारित्रमुक्तं, तत्प्रतिबन्धकश्च क्रोधादिभाव इति क्रोधस्वरूपप्ररूपणायेदमुच्यते, तदेवंसम्बन्धस्यास्य दृष्टान्तभूतादिसूत्रस्य व्याख्या—राजी' रेखा, शेषं क्रोधव्याख्यानं मायादिवत्, मायादिप्रकरणाच्चान्यत्र क्रोधविचारो विचित्रत्वात् सूत्रगतेरिति, द्वितीयं सुगममेव॥ अयं च क्रोधो भावविशेष एवेति भावप्ररूपणाय दृष्टान्तादिसूत्रद्वयमाह—'चत्तारी' त्यादि प्रसिद्धं, किन्तु कर्दमो यत्र प्रविष्टः पादादिर्नाक्रष्टुं शक्यते कष्टेन वा शक्यते, खञ्जनं दीपादिखञ्जनतुल्यः पादादिलेपकारी कर्दमविशेष एव, वालुका प्रतीता सा तु लग्नापि जलशोषे पादादेरल्पेनैव प्रयत्नेनापैतीत्यल्पलेपकारिणी, शैलास्तु पाषाणाः श्लक्ष्णरूपास्ते पादादेः स्पर्शनेनैव किञ्चिद्दुःखमुत्पादयन्ति, न तु तथाविधं लेपमुपजनयन्ति, कर्दमादिप्रधानान्युदकानि कर्दमोदकादीन्युच्यन्ते, भावो—जीवस्य रागादिपरिणामः तस्य कर्दमोदकादिसाम्यं तत्स्वरूपानुसारेण कर्म्मलेपमङ्गीकृत्य मन्तव्यमिति। अनन्तरं भाव उक्तोऽधुना तद्वतः पुरुषान् सदृष्टान्तान् 'चत्तारि पक्खी' त्यादिना 'अत्थमियत्थमिये' त्येतदन्तेन ग्रन्थेनाह—व्यक्तश्चायं, नवरं रुतं रूपं च सर्वेषामेव पक्षिणामस्त्यतस्ते विशिष्टे एवेह ग्राह्ये, ततो रुतं—मनोज्ञशब्दस्तेन सम्पन्नः एकः पक्षी न च रूपेण—मनोज्ञेनैव कोकिलवत्, रूपसम्पन्नो न रुतसम्पन्नः, प्राकृतशुकवत्, उभयसम्पन्नो मयूरवत्, अनुभयस्वभावः काकवदिति, पुरुषोऽत्र यथायोगं मनोज्ञशब्दः प्रशस्तरूपश्च प्रियवादित्वसद्वेषत्वाभ्यां साधुर्वा सिद्धसिद्धान्तप्रसिद्धशुद्धधर्म्मदेशनादिस्वाध्यायप्रबन्धवान् लोचविरलवालोत्तमाङ्गतातपस्तनुतनुत्वमलमलिनदेहताअल्पोपकरणतादिलक्षणसुविहितसाधुरूपधारी वा योज्य इति। 'पत्तियं'ति प्रीतिरेव

प्रीतिकं स्वार्थिककप्रत्ययोपादानेऽपि रूढेर्नपुंसकतेति, तत्करोमि प्रत्ययं वा करोमीति परिणतः प्रीतिकमेव प्रत्ययमेव वा करोति, स्थिरपरिणामत्वात् उचितप्रतिपत्तिनिपुणत्वात् सौभाग्यवत्त्वाद्वेति, अन्यस्तु प्रीतिकरणे परिणतोऽप्रीतिं करोति उक्तवैपरीत्यादिति, अपरोऽप्रीतौ परिणतः प्रीतिमेव करोति, सञ्जातपूर्वभावनिवृत्तत्वात्, परस्य वा अप्रीतिहेतुतोऽपि प्रीत्युत्पत्तिस्वभावत्वादिति, चतुर्थः सुगानः, आत्मन एकः कश्चित् प्रीतिकम्—आनन्दं भोजनाच्छादनादिभिः करोति—उत्पादयति आत्मार्थप्रधानत्वान्न परस्य, अन्यः परस्य परार्थप्रधानत्वान्नात्मनोऽपर उभयस्याप्युभयार्थप्रधानत्वादितरो नोभयस्याप्युभयार्थशून्यत्वादिति, आत्मनः प्रत्ययं—प्रतीतिं करोति न परस्येत्याद्यपि व्याख्येयमिति, 'पत्तिअं पवेसेमि'त्ति प्रीतिकं प्रत्ययं वाऽयं करोतीत्येवं परस्य चित्ते विनिवेशयामीति परिणतस्तथैवैकः प्रवेशयतीत्येक इति, सूत्रशेषोऽनन्तरसूत्रं च पूर्ववत् ।

चत्तारि रुक्खा पं० तं०—पत्तोवए पुप्फोवए फलोवए छायोवए, एवामेव चत्तारि पुरिसजाया पं० तं०—पत्तोवारुक्खसमाणे पुप्फोवारुक्खसमाणे फलोवारुक्खसमाणे छातोवारुक्खसमाणे (सू० ३१३) भारण्णं वहमाणस्स चत्तारि आसासा पन्नत्ता, तंजहा—जत्थ णं अंसातो अंसं साहरइ तत्थवि य से एगे आसासे पण्णत्ते १, जत्थवि य णं उच्चारं वा पासवणं वा परिट्ठावेति तत्थवि य से एगे आसासे पण्णत्ते २, जत्थवि य णं णागकुमारावासंसि वा सुवन्नकुमारावासंसि वा वासं उवेति तत्थवि य से एगे आसासे पन्नत्ते ३, जत्थवि य णं आवकधाते चिट्ठति तत्थवि य से एगे आसासे पन्नत्ते ४, एवामेव समणोवासगस्स चत्तारि आसासा पं० तं०—जत्थ णं सीलव्वतगुणव्वतवेरमणपच्चक्खाणपोसहोववासाइं पडिवज्जेति तत्थवि अ से एगे आसासे पण्णत्ते १, जत्थवि य णं सामाइयं

तं०—पत्तियं पवेसामीतेगे पत्तितं पवेसेइ पत्तियं पवेसामीतेगे अप्पत्तितं पवेसेति ४। चत्तारि पुरिसजाता पं० तं०—अप्पणो नाममेगे पत्तितं पवेसेइ णो परस्स परस्स ४ ह्व (सू० ३१२)।

'चत्तारी'त्यादि, अस्य चायमभिसम्बन्धः—पूर्वं चारित्रमुक्तं, तत्प्रतिबन्धकश्च क्रोधादिभाव इति क्रोधस्वरूपप्ररूपणायेदमुच्यते, तदेवंसम्बन्धस्यास्य दृष्टान्तभूतादिसूत्रस्य व्याख्या—राजी' रेखा, शेषं क्रोधव्याख्यानं मायादिवत्, मायादिप्रकरणाच्चान्यत्र क्रोधविचारो विचित्रत्वात् सूत्रगतेरिति, द्वितीयं सुगममेव॥ अयं च क्रोधो भावविशेष एवेति भावप्ररूपणाय दृष्टान्तादिसूत्रद्वयमाह—'चत्तारी' त्यादि प्रसिद्धं, किन्तु कर्दमो यत्र प्रविष्टः पादादिर्नाक्रष्टुं शक्यते कष्टेन वा शक्यते, खञ्जनं दीपादिखञ्जनतुल्यः पादादिलेपकारी कर्दमविशेष एव, वालुका प्रतीता सा तु लग्नापि जलशोषे पादादेरल्पेनैव प्रयत्नेनापैतीत्यल्पलेपकारिणी, शैलास्तु पाषाणाः श्लक्ष्णरूपास्ते पादादेः स्पर्शनेनैव किञ्चिद्दुःखमुत्पादयन्ति, न तु तथाविधं लेपमुपजनयन्ति, कर्दमादिप्रधानान्युदकानि कर्दमोदकादीन्युच्यन्ते, भावो—जीवस्य रागादिपरिणामः तस्य कर्दमोदकादिसाम्यं तत्स्वरूपानुसारेण कर्म्मलेपमङ्गीकृत्य मन्तव्यमिति। अनन्तरं भाव उक्तोऽधुना तद्वतः पुरुषान् सदृष्टान्तान् 'चत्तारि पक्खी' त्यादिना 'अत्थमियत्थमिये' त्येतदन्तेन ग्रन्थेनाह—व्यक्तश्चायं, नवरं रुतं रूपं च सर्वेषामेव पक्षिणामस्त्यतस्ते विशिष्टे एवेह ग्राह्ये, ततो रुतं—मनोज्ञशब्दस्तेन सम्पन्नः एकः पक्षी न च रूपेण—मनोज्ञेनैव कोकिलवत्, रूपसम्पन्नो न रुतसम्पन्नः, प्राकृतशुकवत्, उभयसम्पन्नो मयूरवत्, अनुभयस्वभावः काकवदिति, पुरुषोऽत्र यथायोगं मनोज्ञशब्दः प्रशस्तरूपश्च प्रियवादित्वसद्वेषत्वाभ्यां साधुर्वा सिद्धसिद्धान्तप्रसिद्धशुद्धधर्म्मदेशनादिस्वाध्यायप्रबन्धवान् लोचविरलवालोत्तमाङ्गतातपस्तनुतनुत्वमलमलिनदेहताअल्पोपकरणतादिलक्षणसुविहितसाधुरूपधारी वा योज्य इति। 'पत्तियं'ति प्रीतिरेव

प्रीतिकं स्वार्थिककप्रत्ययोपादानेऽपि स्त्रैणपुंसकतेति, तत्करोमि प्रत्ययं ना करोमीति परिणतः प्रीतिकमेव प्रत्ययमेव वा करोति, भिन्नपरिणामत्वात् उचितप्रतिपत्तिनिपुणत्वात् सौभाग्यवत्त्वाद्वेति, अन्यस्तु प्रीतिकरणे परिणतोऽप्रीतिं करोति उक्तवैपरीत्यादिति, अपरोऽप्रीतौ परिणतः प्रीतिमेव करोति, तज्जातपूर्वभावनिवृत्तत्वात्, परस्य वा अप्रीतिहेतुतोऽपि प्रीत्युत्पत्तिस्वभावत्वादिति, चतुर्थः सुज्ञानः. आत्मन एकः कश्चित् प्रीतिकम्—आनन्दं भोजनाच्छादनादिभिः करोति—उत्पादयति आत्मार्थप्रधानत्वान्न परस्य, अन्यः परस्य परार्थप्रधानत्वान्नात्मनोऽपर उभयस्याप्युभयार्थप्रधानत्वादितरो नोभयस्याप्युभयार्थशून्यत्वादिति, आत्मनः प्रत्ययं—प्रतीतिं करोति न परस्येत्यादिरपि व्याख्येयमिति, 'पत्तियं पवेसेमि'त्ति प्रीतिकं प्रत्ययं वाऽयं करोतीत्येवं परस्य चित्ते विनिवेशयामीति परिणतस्तथैकः प्रवेशयतीत्येक इति. सूत्रशेषोऽनन्तरसूत्रं च पूर्ववत् ।

चत्तारि रुक्खा पं० तं०—पत्तोवए पुप्फोवए फलोवए छायोवए, एवामेव चत्तारि पुरिसजाया पं० तं०—पत्तोवारुक्खसमाणे पुप्फोवारुक्खसमाणे फलोवारुक्खसमाणे छातोवारुक्खसमाणे (सू० ३१२) भारण्णं वहमाणस्स चत्तारि आसासा पन्नता, तंजहा—जत्थ णं अंसातो अंसं साहरइ तत्थवि य से एगे आसासे पण्णत्ते १, जत्थ विय णं उच्चारं वा पासवणं वा परिट्ठावेति तत्थवि य से एगे आसासे पण्णत्ते २, जत्थवि य णं णागकुमारावासंसि वा सुवन्नकुमारावासंसि वा वासं उवेति तत्थवि य से एगे आसासे पन्नत्ते ३, जत्थवि य णं आवकधाते चिट्ठति तत्थवि य से एगे आसासे पन्नत्ते ४, एवामेव समणोवासगस्स चत्तारि आसासा पं० तं०—जत्थ णं सीलव्वतगुणव्वयवेरमणपच्चक्खाणपोसहोववासाइं पडिवज्जेति तत्थवि अ से एगे आसासे पण्णत्ते १, जत्थवि य णं सामाइयं

देसावगासियं सम्ममणुपालेइ तत्थविय से एगे आसासे पं० २, जत्थविय णं चाउद्दसट्ठमुद्दिट्ठपुन्नमासिणीसु पडिपुन्नं पोसहं सम्मं अणुपालेइ तत्थवि य से एगे आसासे पण्णत्ते ३, जत्थवि य णं अपच्छिममारणंतितसंलेहणाजूसणाजूसिते भत्तपाणपडितातिक्खिते पाओवगते कालमणवकंखमाणे विहरति तत्थविय से एगे आसासे पन्नत्ते (सू० ३१४)।

पत्राणि–पर्णान्युपगच्छतीति पत्रोपगो बहलपत्र इत्यर्थः, एवं शेषा अपि, पत्रोपगादिवृक्षसमानता तु पुरुषाणां लोकोत्तराणां लौकिकानां चार्थिषु तथाविधोपकाराकरणेन स्वस्वभावलाभ एव पर्यवसितत्वात् १, सूत्रदानादिना उपकारकत्वात् २ अर्थदानादिना महोपकारकत्वात् ३ अनुवर्त्तनापायसंरक्षणादिना सततोपसेव्यत्वाच्च ४ क्रमेण द्रष्टव्येति, । भारं–धान्यमुक्तोल्यादिकं वहमानस्य–देशाद्देशान्तरं नयतः पुरुषस्य आश्वासा–विश्रामाः, भेदश्च तेषामवसरभेदेनेति, यत्रावसरे अंसाद्–एकस्मात् स्कन्धादंसमिति–स्कन्धान्तरं संहरति–नयति भारमिति प्रक्रमः तत्रावसरे अपिचेति उत्तराश्वासापेक्षया समुच्चये 'से' तस्य वोढुरिति १, परिष्ठापयति–व्युत्सृजति २, नागकुमारावासादिकमुपलक्षणमतोऽन्यत्र वाऽऽयतने वासमुपैतीति–रात्रौ वसति ३ यावती–यत्परिमाणा कथा–मनुष्योऽयं देवदत्तादिर्वाऽयमिति व्यपदेशलक्षणा यावत्कथा तया यावज्जीवमित्यर्थः, तिष्ठति–वसति इत्ययं दृष्टान्तः ४, एवमेवे'त्यादि दार्ष्टान्तिकः, श्रमणान्–साधूनुपास्ते इति श्रमणोपासकः–श्रावकस्तस्य सावद्यव्यापारभाराक्रान्तस्य आश्वासाः–तद्विमोचनेन विश्रामाः चित्तस्याश्वासनानि–स्वास्थ्यानि इदं मे परलोकभीतस्य त्राणमित्येवंरूपाणीति, स हि जिनागमसङ्गमावदातबुद्धितया आरम्भपरिग्रहौ दुःखपरम्पराकारिसंसारकान्तारकारणभूततया परित्याज्यावित्याकलयन् करणभटवशतया तयोः प्रवर्त्तमानो महान्तं खेदसन्तापं भयं चोद्वहति, भावयति

व्रतानि-स्थूलप्राणातिपातविरमणादीनि, अन्यत्र तु शीलानि-अणुव्रतानि व्रतानि-सप्त शिक्षाव्रतानि तदिह न व्याख्यातं, गुणव्रतादीनां साक्षादेवोपादानादिति, गुणव्रते-दिग्व्रतोपभोगपरिभोगव्रतलक्षणे विरमणानि-अनर्थदण्डविरतिप्रकारा रागादिविरतयो वा प्रत्याख्यानानि-नमस्कारसहितादीनि पोषधः-पर्वदिनमष्टम्यादि तत्रोपवसनम्-अभक्तार्थः पोषधोपवासः, एतेषां द्वन्द्वस्तान् प्रतिपद्यते-अभ्युपगच्छति तत्रापि च 'से' तस्यैक आश्वासः प्रज्ञप्तो १, यत्रापि च सामायिकं-सावद्ययोगपरिवर्जननिरवद्ययोगप्रतिसेवनलक्षणं यद्व्यवस्थितः श्राद्धः श्रमणभूतो भवति, तथा देशे-दिग्व्रतगृहीतस्य दिक्परिमाणस्य विभागे अवकाशः-अवस्थानमवतारो विषयो यस्य तद्देशावकाशं तदेव देशावकाशिकं-दिग्व्रतगृहीतस्य दिक्परिमाणस्य प्रतिदिनं संक्षेपकरणलक्षणं सर्वव्रतसंक्षेपकरणलक्षणं वा अनुपालयति-प्रतिपत्त्यनन्तरमखण्डमासेवत इति, तत्रापि च तस्यैक आश्वासः प्रज्ञप्त इति २, उद्दिष्टेत्यमावास्या परिपूर्णमिति-अहोरात्रं यावत् आहारशरीरसत्कारत्यागब्रह्मचर्याव्यापारलक्षणभेदोपेतमिति ३, यत्रापि च पश्चिमैवामङ्गलपरिहारार्थमपश्चिमा सा चासौ मरणमेवान्तो मरणान्तस्तत्र भवा मारणान्तिकी सा चेत्यपश्चिममारणान्तिकी सा चासौ संलिख्यतेऽनया शरीरकषायादीति सल्लेखना-तपोविशेषः सा चेति अपश्चिममारणान्तिकीसल्लेखना तस्याः 'जूसण'त्ति जोषणा सेवनालक्षणो यो धर्म-

१ हद्धी जिनानामाज्ञा ममापुण्यस्येदृशं चरित्रं एवं आलप्यालं, आश्चर्य? दूरं विसंवदति ॥१॥ हतमस्माकं ज्ञानं हतमस्माकं मानुष्यमाहात्म्यं। पतिताः कूपनिकायां अपि लघुबाला इव चेष्टामः ॥२॥

स्तया 'जूसिय'त्ति जुष्टः सेवितः अथवा क्षपितः-क्षपितदेहो यः स तथा, तथा भक्तपाने प्रत्याख्याते येन स तथा, पादपवत् उपगतो-निश्चेष्टतया स्थितः पादपोपगतः, अनशनविशेषं प्रतिपन्न इत्यर्थः, कालं-मरणकालं अनवकाङ्क्षन् तत्रानुत्सुक इत्यर्थः, विहरति तिष्ठति।

चत्तारि पुरिसजाया पं० तं०—उदितोदिते णाममेगे उदितत्थमिते णाममेगे अत्थमितोदिते णाममेगे अत्थमियत्थमिते णाममेगे, भरहे राया चाउरंतचक्कवट्टी णं उदितोदिते, बंभदत्ते णं राया चाउरंतचक्कवट्टी उदिअत्थमिते, हरितेसबले णमणगारे णमत्थमिओदिते, काले णं सोयरिये अत्थमितत्थमिते (सू० ३१५) चत्तारि जुम्मा पं० तं०—कडजुम्मे तेयोए दावरजुम्मे कलिओए, नेरतिताणं चत्तारि जुम्मा पं० तं०—कडजुम्मे तेओए दावरजुम्मे कलितोए, एवं असुरकुमाराणं जाव थणियकुमाराणं, एवं पुढविकाइयाणं आउ० तेउ० वाउ० वणस्सति० बेंदिताणं तेंदियाणं चउरिंदियाणं पंचिंदियतिरिक्खजोणियाणं मणुस्साणं वाणमंतरजोइसियाणं वेमाणियाणं सव्वेसिं जहा णेरइयाणं (सू० ३१६) चत्तारि सूरा पं० तं०—खंतिसूरे तवसूरे दाणसूरे जुद्धसूरे, खंतिसूरा अरहंता तवसूरा अणगारा दाणसूरे वेसमणे जुद्धसूरे वासुदेवे (सू० ३१७) चत्तारि पुरिसजाया पं० तं०—उच्चे णाममेगे उच्चच्छंदे उच्चे णाममेगे णीतच्छंदे णीते णाममेगे उच्चच्छंदे नीए णाममेगे णीयच्छंदे (सू० ३१८) असुरकुमाराणं चत्तारि लेसातो पं० तं०—कण्हलेसा णीललेसा काउलेसा तेउलेसा, एवं जाव थणियकुमाराणं, एवं पुढविकाइयाणं आउवणस्सइकाइयाणं वाणमंतराणं सव्वेसिं जहा असुरकुमाराणं (सू० ३१९)

उदितश्चासौ उन्नतकुलबलसमृद्धिनिरवद्यकर्म्मभिरभ्युदयवान् उदितश्च परमसुखसंदोहोदयेनेत्युदितोदितो यथा भरतः, उदितोदि-

पशुपालधनुर्गोलिकाप्रक्षेपणोपायप्रस्फोटिताक्षिगोलकतया मरणानन्तराप्रतिष्ठानमहानरकमहावेदनाप्राप्ततया चेति २, तथा अस्तमितश्चासौ हीनकुलोत्पत्तिदुर्भगत्वदुर्गतत्वादिना उदितश्च समृद्धिकीर्त्तिसुगतिलाभादिनेति अस्तमितोदितो यथा हरिकेशबलाभिधानोऽनगारः, स हि जन्मान्तरोपात्तनीचैर्गोत्रकर्म्मवशावाप्तहरिकेशाभिधानचाण्डालकुलतया दुर्भगतया दरिद्रतया च पूर्वमस्तमितादित्य इवानभ्युदयवत्त्वादस्तमित इति, पश्चात्तु प्रतिपन्नप्रव्रज्यो निष्प्रकम्पचरणगुणावर्जितदेवकृतसान्निध्यतया प्राप्तप्रसिद्धितया सुगतिगततया च उदित इति ३, तथा अस्तमितश्चासौ सूर्य इव दुष्कुलतया दुष्कर्म्मकारितया च कीर्त्तिसमृद्धिलक्षणतेजोवर्जितत्वादस्तमितश्च दुर्गतिगमनादित्यस्तमितास्तमितः, यथा कालाभिधानः सौकरिकः, स हि शूकरैश्चरति–मृगयां करोतीति यथार्थः सौकरिक एव दुष्कुलोत्पन्नः प्रतिदिनं महिषपञ्चशतीव्यापादक इति पूर्वमस्तमितः पश्चादपि मृत्वा सप्तमनरकपृथिवीं गत इति अस्तमित एवेति ४, भरहेत्यादि तु उदाहरणसूत्रं भावितार्थमेवेति। ये एवं विचित्रभावैश्चिन्त्यन्ते ते जीवाः सर्व एव चतुर्षु राशिष्ववतरन्तीति तान् दर्शयन्नाह—'चत्तारि जुम्मे'त्यादि, जुम्मत्ति–राशिविशेषः, यो हि राशिश्चतुष्कापहारेण अपहियमाणश्चतुःपर्यवसितो भवति स कृतयुग्म इत्युच्यते, यस्तु त्रिपर्यवसितः स त्र्योजः द्विपर्यवसितो द्वापरयुग्मः एकपर्यवसितः कल्योज इति, इह गणितपरिभाषायां समराशिर्युग्ममुच्यते विषमस्तु ओज इति, इयञ्च समयस्थितिः, लोके तु कृतयुगादीनि एवमुच्यन्ते–"द्वात्रिंशत्सहस्राणि, कलौ लक्षचतुष्टयम्। वर्षाणां द्वापरादौ स्यादेतद् द्वित्रिचतुर्गुणम् ॥१॥" इति, उक्तराशीन्नारकादिषु निरूपयन्नाह—'नेरइए'त्यादि सुगमं, नवरं नारकादयश्चतुर्द्धाऽपि स्युः,

जन्ममरणाभ्यां हीनाधिकत्वसंभवादिति, पुनर्जीवानेव भावैर्निरूपयन्नाह—'चत्तारि सूरे'त्यादि सूत्रद्वयं कण्ठ्यं, किन्तु शूरा-वीराः, क्षान्तिशूरा अर्हन्तो महावीरवत्, तपःशूरा अनगाराः दृढप्रहारिवत्, दानशूरो वैश्रमण उत्तराशालोकपालस्तीर्थंकरादिजन्मपारणकादिरत्नवृष्टिपातनादिनेति, उक्तश्च—"वेसमणवयणसंचोइया उ ते तिरियजंभगा देवा। कोडिग्गसो हिरन्ना रयणाणि य तत्थ उवणेंति ॥१॥" त्ति, युद्धशूरो वासुदेवः कृष्णवत् तस्य षष्ट्यधिकेषु त्रिषु संग्रामशतेषु लब्धजयत्वादिति, उच्चः पुरुषः शरीरकुलविभवादिभिः तथा उन्नतच्छन्दः-उच्चताभिप्रायः औदार्यादियुक्तत्वात् नीचच्छन्दस्तु-विपरीतो नीचोऽप्युच्चविपर्ययादिति। अनन्तरमुच्चेतराभिप्राय उक्तः, स च लेश्याविशेषाद् भवतीति लेश्यासूत्राणि, सुगमानि च, नवरं असुरादीनां चतस्रो लेश्या द्रव्याश्रयेण भावतस्तु षडपि सर्वदेवानां, मनुष्यपञ्चेन्द्रियतिरश्चां तु द्रव्यतो भावतश्च षडपीति, पृथिव्यब्वनस्पतीनां हि तेजोलेश्या भवति देवोत्पत्तेरिति तेषां चतस्र इति।

उक्तलेश्याविशेषेण च विचित्रपरिणामा मानवाः स्युरिति यानादिदृष्टान्तचतुर्भङ्गिकाभिरन्यथा च पुरुषचतुर्भङ्गिका यानसूत्रादिना श्रावकसूत्रावसानेन ग्रन्थेन दर्शयन्नाह—

**चत्तारि जाणा पं० तं०—जुत्ते णाममेगे जुत्ते जुत्ते णाममेगे अजुत्ते अजुत्ते णाममेगे जुत्ते अजुत्ते णाममेगे अजुत्ते, एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्ते जुत्ते णाममेगे अजुत्ते ४, चत्तारि जाणा पं०**



१ वैश्रमणवचनसंचोदितास्तु ते तिर्यग्जृंभका देवाः कोटयग्रशो हिरण्यरत्नानि च तत्रोपनयन्ति ॥१॥

तं०—जुत्ते णाममेगे जुत्तपरिणते जुत्ते णाममेगे अजुत्तपरिणते०, एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्तपरिणते ४, चत्तारि जाणा पं० तं० —जुत्ते णाममेगे जुत्तरूवे जुत्ते णाममेगे अजुत्तरूवे अजुत्त णाममेगे जुत्तरूवे० ४, एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्तरूवे ४, चत्तारि जाणा पं० तं०—जुत्ते णाममेगे जुत्तसोभे ४, एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्तसोभे। चत्तारि जुग्गा पं० तं०—जुत्ते नाममेगे जुत्ते, एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्ते ४, एवं जधा जाणेण चत्तारि आलावगा तथा जुग्गेणवि, पडिपक्खो तहेव पुरिसजाता जाव सोभेत्ति। चत्तारि सारही पं० तं०—जोयावइत्ता णामं एगे नो विजोयावइत्ता विजोयावइत्ता नामं एगे नो जोयावइत्ता एगे जोयावइत्तावि विजोयावइत्तावि एगे नो जोयावइत्ता नो विजोयावइत्ता, एवामेव चत्तारि हया पं० तं०—जुत्ते णामं एगे जुत्ते जुत्ते णाममेगे अजुत्ते ४ एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्ते, एवं जुत्तपरिणते जुत्तरूवे जुत्तसोभे सव्वेसिं पडिवक्खो पुरिसजाता। चत्तारि गया पं० तं०—जुत्ते णाममेगे जुत्ते ४, एवामेव चत्तारि पुरिसजाया पं० तं०—जुत्ते णाममेगे जुत्ते ४ एवं जहा हयाणं तहा गयाणवि भाणियव्वं, पडिवक्खो तहेव पुरिसजाया। चत्तारि जुग्गारिता पं० तं०—पंथजाती णाममेगे णो उप्पहजाती उप्पथजाती णाममेगे णो पंथजाती एगे पंथजातीवि उप्पहजातीवि, एगे णो पंथजाती णो उप्पहजाती, एवामेव चत्तारि पुरिसजाया। चत्तारि पुप्फा पं० तं०—रूवसंपन्ने नाममेगे णो गंधसंपन्ने गंधसंपन्ने णाममेगे नो रूवसंपन्ने एगे रूवसंपन्नेवि गंधसंपन्नेवि एगे णो रूवसंपन्ने

णो गंधसंपन्ने, एवामेव चत्तारि पुरिसजाता पं० तं०—रूवसंपन्ने णाममेगे णो सीलसंपन्ने ४, चत्तारि पुरिसजाया पं० तं०—जातिसंपन्ने नाममेगे नो कुलसंपन्ने ४, १, चत्तारि पुरिसजाया पं० तं०—जातिसंपण्णे नामं एगे णो वलसंपन्ने बलसंपन्ने नामं एगे णो जातिसंपन्ने ४, २, एवं जातीते रूवेण ४ चत्तारि आलावगा ३, एवं जातीते सुएण ४, ४, एवं जातीते सीलेण ४, ५, एवं जातीते चरित्तेण ४, ६, एवं कुलेण बलेण ४, ७, एवं कुलेण रूवेण ४, ८, कुलेण सुत्तेण ४, ९, कुलेण सीलेण ४, १०, कुलेण चरित्तेग ४, ११, चत्तारि पुरिसजाता पं० तं०—बलसंपण्णे नाममेगे णो रूवसंपन्ने ४, १२, एवं बलेण सुतेण ४, १३, एवं बलेण सीलेण ४, १४, एवं बलेण चरित्तेण ४, १५, चत्तारि पुरिसजाया पं० तं०—रूवसंपन्ने नाममेगे णो सुयसंपण्णे ४, १६, एवं रूवेण सीलेण ४, १७, रूवेण चरित्तेण ४, १८, चत्तारि पुरिसजाता पं० तं०—सुयसंपन्ने नाममेगे णो सीलसंपन्ने ४, १९, एवं सुतेण चरित्तेण य ४, २०, चत्तारि पुरिसजाता पं० तं०—सीलसंपन्ने नाममेगे नो चरित्तसंपन्ने ४, २१, एते एक्कवीसं भंगा भाणितव्वा, चत्तारि फला पं० तं०—आमलगमहुरे मुद्दितामहुरे खीरमहुरे खंडमहुरे, एवामेव चत्तारि आयरिया पं० तं०—आमलगमहुरफलसमाणे जाव खंडमहुरफलसमाणे, चत्तारि पुरिसजाया पं० तं०—आतवेतावच्चकरे नाममेगे नो परवेतावच्चकरे ४, चत्तारि पुरिसजाता पं० तं०—करेति नाममेगे वेयावच्चं णो पडिच्छइ पडिच्छइ नाममेगे वेयावच्चं नो करेइ ४, चत्तारि पुरिसजाता पं० तं०—अट्ठकरे णाममेगे णो माणकरे माणकरे णाममेगे णो अट्ठकरे एगे अट्ठकरेवि माणकरेवि एगे णो अट्ठकरे णो माणकरे, चत्तारि पुरिसजाता पं० तं०—

गणट्ठकरे णाममेगे णो माणकरे ४, चत्तारि पुरिसजाता पं० तं०—गणसंग्गहकरे णाममेगे णो माणकरे ४, चत्तारि पुरिसजाया पं० तं०—गणसोभकरे णामं एगे णो माणकरे ४, चत्तारि पुरिसजाया पं० तं०—गणसोहिकरे णाममेगे नो माणकरे ४, चत्तारि पुरिसजाया पं० तं०—रूवं नाममेगे जहति नो धम्मं धम्मं नाममेगे जहति नो रूवं एगे रूवंपि जहति धम्मंपि जहति एगे नो रूवं जहति नो धम्मं, चत्तारि पुरिसजाया पं० तं०—धम्मं नाममेगे जहति नो गणसंठितिं ४, चत्तारि पुरिसजाया पं० तं०—पियधम्मे नाममेगे नो दढधम्मे दढधम्मे नाममेगे नो पितधम्मे एगे पियधम्मेवि दढधम्मेवि एगे नो पियधम्मे नो दढधम्मे, चत्तारि आयरिया पं० तं०—पव्वायणायरिते नाममेगे णो उवट्ठावणायरिते उवट्ठावणायरिए णाममेगे णो पव्वायणायरिए एगे पव्वायणातरितेवि उवट्ठावणातरितेवि एगे नो पव्वायणातरिते नो उट्ठावणातरिते धम्मायरिए, चत्तारि आयरिया पं० तं०—उद्देसणायरिए णाममेगे णो वायणायरिए ४ धम्मायरिए, चत्तारि अंतेवासी पं० तं०—पव्वायणंतेवासी नामं एगे णो उवट्ठावणंतेवासी ४ धम्मंतेवासी, चत्तारि अंतेवासी पं० तं०—उद्देसणंतेवासी नामं एगे नो वायणंतेवासी १ [वायणंतेवासी] ४ धम्मंतेवासी, चत्तारि निग्गंथा पं० तं०—रातिणिये समणे निग्गंथे महाकम्मे महाकिरिए अणायावी असमिते धम्मस्स अणाराधते भवति १ राइणिते समणे निग्गंथे अप्पकम्मे अप्पकिरिते आतावी समिए धम्मस्स आराहते भवति २ ओमरातिणिते समणे निग्गंथे महाकम्मे महाकिरिते अणातावी असमिते धम्मस्स अणाराहते भवति ३, ओमरातिणिते समणे निग्गंथे अप्पकम्मे अप्पकिरिते आतावी समिते

धम्मस्स आराहते भवति ४, चत्तारि णिग्गंथीओ पं० तं०—रातिणिया समणी निग्गंथी एवं चेव ४, चत्तारि समणोवासगा पं० तं०—रायणिते समणोवासए महाकम्मे तहेव ४, चत्तारि समणोवासियाओ पं० तं०—रायणिता समणोवासिता महाकम्मा तहेव चत्तारि गमा (सू० ३२०)।

'चत्तारी'त्यादि कण्ठ्यश्चायं, नवरं यानं—शकटादि, तद्युक्तं बलीवर्दादिभिः, पुनर्युक्तं—सङ्गतं समयसामग्रीकं वा पूर्वापरकालापेक्षया वा इत्येकं अन्यत् युक्तं तथैवायुक्तं तूक्तविपरीतत्वादिति, एवमितरौ, पुरुषस्तु युक्तो धनादिभिः पुनर्युक्त उचितानुष्ठानैः सद्भिर्वा, पूर्वकाले वा युक्तो धनधर्म्मानुष्ठानादिभिः पश्चादपि तथैवेति चतुर्भङ्गी, अथवा युक्तो द्रव्यलिङ्गेन भावलिङ्गेन चेति प्रथमः साधुः, द्रव्यलिङ्गेन नेतरेणेति द्वितीयो निह्नवादिः, न द्रव्यलिङ्गेन भावलिङ्गेन तु युक्त इति तृतीयः प्रत्येकबुद्धादिः, उभयवियुक्तश्चतुर्थो गृहस्थादिरिति, एवं सूत्रान्तराण्यपि, नवरं युक्तं गोभिः युक्तपरिणतं तु अयुक्तं सत्सामग्र्या युक्ततया परिणतमिति, पुरुषः पूर्ववत्, युक्तरूपं—सङ्गतस्वभावं प्रशस्तं वा युक्तं युक्तरूपमिति, पुरुषपक्षे युक्तो धनादिना ज्ञानादिगुणैर्वा युक्तरूपः—उचितवेषः सुविहितनेपथ्यो वेति, तथा युक्तं तथैव युक्तं शोभते युक्तस्य वा शोभा यस्य तद्युक्तशोभमिति, पुरुषस्तु युक्तो गुणैस्तथा युक्ता—उचिता शोभा यस्य स तथेति, युग्यं—वा—वाहनमश्वादि, अथवा गोल्लविषये जंपानं द्विहस्तप्रमाणं चतुरस्रं सवेदिकमुपशोभितं युग्यकमुच्यते तद्युक्तमारोहणसामग्र्या पर्याणादिकया पुनर्युक्तं वेगादिभिरित्येवं यानवद् व्याख्येयम्, एतदेवाह—'एवं जहे'त्यादि, प्रतिपक्षो दार्ष्टान्तिकस्तथैव, कोऽसावित्याह—'पुरिसजाय' त्ति पुरुषजातानीत्येवं परिणतरूपशोभसूत्रचतुर्भङ्गिकाः सप्रतिपक्षा वाच्याः, यावच्छोभसूत्रचतुर्भङ्गी यथा अजुत्ते नामं एगे अजुत्तसोभे, एतदेवाह—'जाव सोभे'त्ति, सारथिः—शाकटिकः, योजयिता शकटे गवादीनां न वियोजयिता—मोक्ता, अन्यस्तु वियोजिता न तु योज-

यितेति, एवं शेषावपि, नवरं चतुर्थः खेटयत्येवेति, अथवा योक्त्रयन्तं प्रयुङ्क्ते यः स योक्त्रापयिता वियोक्त्रयतः प्रयोक्ता तु वियोक्त्रापयितेति, लोकोत्तरपुरुषविवक्षायां तु सारथिरिव सारथिर्योजयिता–संयमयोगेषु साधूनां प्रवर्त्तयिता, वियोजयिता तु–तेषामेवानुचितानां निवर्त्तयितेति, यानसूत्रवत् हयगजसूत्राणीति, 'जुग्गारिय'त्ति युग्यस्य चर्या–वहनं गमनमित्यर्थः, क्वचित्तु 'जुग्गायरिय'त्ति पाठः, तत्रापि युग्याचर्येति, पथयायि एकं युग्यं भवति नोत्पथयायीत्यादिश्चतुर्भङ्गी, इह च युग्यस्य चर्याद्वारेणैव निर्देशे चतुर्विधत्वेनोक्तत्वात् तत्पर्याया एवोद्देशेनोक्तं चातुर्विध्यमवसेयमिति, भावयुग्यपक्षे तु युग्यमिव युग्यं–संयमयोगभरवोढा साधुः, स च पथियाय्यप्रमत्त उत्पथयायी लिङ्गविशेषः उभययायी प्रमत्तः चतुर्थः सिद्धः, क्रमेण सदसदुभयानुभयानुष्ठानरूपत्वात्, अथवा पथ्युत्पथयोः स्वसमयपररूपत्वाद् यायित्वस्य च गत्यर्थत्वेन बोधपर्यायत्वाद् स्वसमयपरसमयबोधापेक्षयेयं चतुर्भङ्गी नेयेति, एकं पुष्पं रूपसम्पन्नं न गन्धसम्पन्नमाकुलीपुष्पवत् द्वितीयश्च बकुलस्येव तृतीयं जातेरिव चतुर्थं बदर्यादेरिवेति, पुरुषो रूपसम्पन्नो–रूपवान् सुविहितरूपयुक्तो वेति ७ जाति ६ कुल ५ बल ४ रूप ३ श्रुत २ शील १ चारित्रलक्षणेषु सप्तसु पदेषु एकविंशतौ द्विकसंयोगेषु एकविंशतिरेव चतुर्भङ्गिकाः कार्याः सुगमाश्चेति, आमलकमिव मधुरं यदन्यत् आमलकमेव वा मधुरमामलकमधुरं 'मुद्दिय'त्ति मृद्वीका–द्राक्षा तद्वत्सैव वा मधुरं मृद्वीकामधुरं क्षीरवत् खण्डवच्च मधुरमिति विग्रहः, यथैतानि क्रमेणेषद्बहुबहुतरबहुतममाधुर्यवन्ति तथा ये आचार्या ईषद्बहुबहुतरबहुतमोपशमादिगुणलक्षणमाधुर्यवन्तस्ते तत्समानतया व्यपदिश्यन्त इति, आत्मवैयावृत्त्यकरोऽलसो विसम्भोगिको वा परवैयावृत्त्यकरः स्वार्थनिरपेक्षः स्वपरवैयावृत्त्यकरः स्थविरकल्पिकः कोऽपि उभयनिवृत्तोऽनशनविशेषप्रतिपन्नकादिरिति, करोत्येवैको वैयावृत्त्यं निःस्पृहत्वात् १ प्रतीच्छत्येवान्य आचार्यत्वग्लानत्वादिना २ अन्यः करोति प्रतीच्छति च स्थविरविशेषः ३ उभयनिवृत्तस्तु

जिनकल्पिकादिरिति ४, 'अट्ठकरे'त्ति अर्थान्-हिताहितप्राप्तिपरिहारादीन् राजादीनां दिग्यात्रादौ तथोपदेशतः करोतीत्यर्थकरः-मन्त्री नैमित्तिको वा, स चार्थकरो नामैको न मानकरः, कथमहमनभ्यर्थितः कथयिष्यामीत्यवलेपवर्जितः, एवमितरे त्रयः, अत्र च व्यवहारभाष्यगाथा—"पुट्ठापुट्ठो पढमो जत्ताइ हियाहियं परिकहेइ। तइओ पुट्ठो सेसा उ णिप्फला एव गच्छेवि ॥१॥" इति, गणस्य-साधुसमुदायस्यार्थान्-प्रयोजनानि करोतीति गणार्थकरः-आहारादिभिरुपष्टम्भकः, न च मानकरोऽभ्यर्थनानपेक्षत्वात्, एवं त्रयोऽन्ये, उक्तं च—"आहारउवहिसयणाइएहिं गच्छस्सुवग्गहं कुणइ। बीओ न जाइ माणं दोन्निवि तइओ न उ चउत्थो ॥१॥" इति, अथवा 'नो माणकरो'त्ति गच्छार्थकरोऽहमिति न माद्यतीति। अनन्तरं गणस्यार्थ उक्तः, स च संग्रहोऽत आह—'गणसंगहकरे'त्ति गणस्याहारादिना ज्ञानादिना च संग्रहं करोतीति गणसंग्रहकरः, शेषं तथैव, उक्तं च—"सो[3] पुण गच्छस्सऽट्ठो उ संगहो तत्थ संगहो दुविहो। दव्वे भावे नियमाउ होंति आहारणाणादी ॥१॥" आहारोपधिशय्याज्ञानादीनीत्यर्थः, न माद्यति, गणस्यानवद्यसाधुसामाचारीप्रवर्त्तनेन वादिधर्मकथिनैमित्तिकविद्यासिद्धत्वादिना वा शोभाकरणशीलो गणशोभाकरो, नो मानकरोऽभ्यर्थनाऽनपेक्षितया मदाभावेन वा, गणस्य यथायोगं प्रायश्चित्तदानादिना शोधिं-शुद्धिं करोतीति गणशोधिकरः, अथवा शङ्किते भक्तादौ सति गृहिकुले गत्वाऽनभ्यर्थितो भक्तशुद्धिं करोति यः स प्रथमः, यस्तु मानान्न गच्छति स द्वितीयः, यस्त्वभ्यर्थितो गच्छति स तृतीयः, यस्तु नाभ्यर्थना-

१ पृष्टोऽपृष्टो वा प्रथमो यात्रायां हिताहितं परिकथयति तृतीयः पृष्टः शेषौ तु निष्फलौ एवं गच्छेऽपि ॥१॥ २ आहारोपधिशयनादिकैर्गच्छस्योपग्रहं करोति द्वितीयो न मानं याति तृतीयो द्वावपि न तु चतुर्थं इति ॥१॥ ३ स गच्छस्यार्थः पुनः संग्रहस्तु तत्र संग्रहो द्विविधः द्रव्ये भावे नियमाद् भवन्ति आहाराद्यो ज्ञानादयश्च ॥१॥

पेक्षी नापि तत्र गन्ता स चतुर्थ इति, रूपं-साधुनेपथ्यं जहाति-त्यजति कारणवशात् न धर्मं-चारित्रलक्षणं बोटिकमध्यस्थितमुनिवत्, अन्यस्तु धर्म्मं न रूपं निह्नववत्, उभयमपि उत्प्रव्रजितवत्, नोभयं सुसाधुवत्, धर्म्मं त्यजत्येको जिनाज्ञारूपं न गणसंस्थितिं-स्वगच्छकृतां मर्यादां. इह कैश्चिदाचार्यैः तीर्थंकरानुपदेशेन संस्थितिः कृता यथा-नास्माभिर्महाकल्पाद्यतिशयश्रुतमन्यगणगत्काय देयमिति, एवं च योऽन्यगणसत्काय न तद्ददाति स धर्म्मं त्यजति न गणस्थितिं, जिनाज्ञाननुपालनात्, तीर्थंकरोपदेशो ह्येवं-सर्वेभ्यो योग्येभ्यः श्रुतं दातव्यमिति प्रथमो, यस्तु ददाति स द्वितीयः, यस्त्वयोग्येभ्यः तद्ददाति स तृतीयः, यस्तु श्रुताव्यवच्छेदार्थं तदव्यवच्छेदसमर्थस्य परशिष्यस्य स्वकीयदिग्बन्धं कृत्वा श्रुतं ददाति तेन न धर्म्मो नापि गणसंस्थितिस्त्यक्तेति स चतुर्थ इति, उक्तं च—"[1]सयमेव दिसाबंधं काऊण पडिच्छगस्स जो देइ। उभयमवलंबमाणं कामं तु तयंपि पूएमो ॥१॥"त्ति, प्रियो धर्म्मो यस्य तत्र प्रीतिभावेन सुखेन च प्रतिपत्तेः स प्रियधर्म्मा न च दृढो धर्म्मो यस्य, आपद्यपि तत्परिणामाविचलनात्, अक्षोभत्वादित्यर्थः स दृढधर्म्मेति, उक्तं च—"[2]दसविहवेयावच्चे अन्नतरे खिप्पमुज्जमं कुणति। अच्चंतमणेव्वाणिं धिइविरियकिसो पढमभंगो ॥१॥" अन्यस्तु दृढधर्म्मा अङ्गीकृतापरित्यागात् न तु प्रियधर्म्मा कष्टेन धर्म्मप्रतिपत्तेः, इतरौ सुज्ञानौ, उक्तं च—"[3]दुक्खेण उगाहिज्जइ बीओ गहियं तु नेइ जा तीरं। उभयं तो कल्लाणो तइओ चरिमो उ पडिकुट्ठो ॥१॥" इति, आचार्यसूत्रचतुर्थभङ्गे यो न प्रव्राजनया न

---

१ स्वयमेव दिग्बंधं कृत्वा प्रतीच्छकाय यो ददाति (श्रुतं) तमप्युभयमवलंबयंतं प्रकामं पूजयामः ॥ १ ॥ २ दशविधवैयावृत्त्येष्वन्यतरस्मिन् क्षिप्रमुद्यमं करोति अत्यन्तमविश्रान्तं धृतिवीर्यकृशः प्रथमभंगः ॥१॥ ३ दुःखेनोद्ग्राह्यते द्वितीयो गृहीतं तु नयति पारं तृतीय उभयमतः कल्याणश्चरमस्तु प्रतिकुष्टः ॥१॥

चोत्थापनयाचार्यः स क इत्याह–धर्म्माचार्य इति, प्रतिबोधक इत्यर्थः, आह च—"[1]धम्मो जेणुवइट्ठो सो धम्मगुरू गिही व समणो वा। कोवि तिहिं संपउत्तो दोहिवि एक्केक्कगेणेव ॥१॥" इति, त्रिभिरिति–प्रव्राजनोत्थापनाधर्म्माचार्यत्वैरिति, उद्देशनम्–अङ्गादेः पठनेऽधिकारित्वकरणं तत्र तेन वाऽऽचार्यो–गुरुः उद्देशनाचार्यः, उभयशून्यः को भवतीत्याह–धर्म्माचार्य इति, अन्ते–गुरोः समीपे वस्तुं शीलमस्यान्तेवासी–शिष्यः प्रव्राजनया–दीक्षया अन्तेवासी प्रव्राजनान्तेवासी दीक्षित इत्यर्थः, उपस्थापनान्तेवासी महाव्रतारोपणतः शिष्य इति, चतुर्थभङ्गकस्थः क इत्याह–धर्म्मान्तेवासी धर्म्मप्रतिबोधनतः शिष्यः, धर्म्मार्थितयोपसम्पन्नो वेत्यर्थः, यो नोद्देशनान्तेवासी न वाचनान्तेवासीति चतुर्थः, स क इत्याह–धर्म्मान्तेवासीति, निर्गता बाह्याभ्यन्तरग्रन्थान्निर्ग्रन्थाः–साधवो, रत्नानि भावतो ज्ञानादीनि तैर्व्यवहरतीति रात्निकः पर्यायज्येष्ठ इत्यर्थः श्रमणो निर्ग्रन्थो महान्ति–गुरूणि स्थित्यादिभिस्तथाविधप्रमादाद्यभिव्यङ्ग्यानि कर्म्माणि यस्य स महाकर्म्मा, महती क्रिया–कायिक्यादिका कर्म्मबन्धहेतुर्यस्य स महाक्रियः, न आतापयति–आतापनां शीतादिसहनरूपां करोतीत्यनातापी मन्दश्रद्धत्वादिति, एत एवासमितः समितिभिः, स चैवंभूतो धर्म्मस्यानाराधको भवतीत्येकः, अन्यस्तु पर्यायज्येष्ठ एवाल्पकर्म्मा–लघुकर्म्मा अल्पक्रिय इति द्वितीयः, अन्यस्तु अवमो–लघुः पर्यायेण रात्निको अवमरात्निकः, एवं निर्ग्रन्थिकाश्रमणोपासकश्रमणोपासिकासूत्राणि 'चत्तारि गम'त्ति त्रिष्वपि सूत्रेषु चत्वार आलापका भवन्तीति ॥

**चत्तारि समणोवासगा पं० तं०—अम्मापितिसमाणे भातिसमाणे मित्तसमाणे सवत्तिसमाणे, चत्तारि समणोवासगा पं० तं०—अद्दागसमाणे पडागसमाणे खाणुसमाणे खरकंटयसमाणे ४ (सू० ३२१) समणस्स णं**

[1] येन धर्म उपदिष्टः स धर्मगुरुः गृही श्रमणो वा कोऽपि त्रिभिः संयुक्तः द्वाभ्यामेकैकेन वा (प्रव्राजकादयः) ॥१॥

भगवतो महावीरस्स समणोवासगाणं सोधम्मकप्पे अरुणाभे विमाणे चत्तारि पलिओवमाइं ठिती पन्नत्ता (सू०३२२) चउहिं ठाणेहिं अहुणोववन्ने देवे देवलोगेसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तते णो चेव णं संचातेति हव्वमागच्छित्तते, तं०—अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते गिद्धे गढिते अज्झोववन्ने से णं माणुस्सए कामभोगे नो आढाइ नो परियाणाति णो अट्ठं बंधइ णो णिताणं पगरेति णो ठितिपगप्पं पगरेति १, अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते ४ तस्स णं माणुस्सते पेमे वोच्छिन्ने दिव्वे संकंते भवति २, अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते ४ तस्स णं एवं भवति—इण्हिं गच्छं मुहुत्तेणं गच्छं, तेणं कालेणमप्पाउया मणुस्सा कालधम्मुणा संजुत्ता भवंति ३, अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु मुच्छिते ४ तस्स णं माणुस्सए गंधे पडिकूले पडिलोमे तावि भवति, उड्ढंपिय णं माणुस्सए गंधे जाव चत्तारि पंच जोयणसताइं हव्वमागच्छति ४, इच्चेतेहिं चउहिं ठाणेहिं अहुणोववण्णे देवे देवलोएसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तए णो चेव णं संचातेति हव्वमागच्छित्तए। चउहिं ठाणेहिं अहुणोववन्ने देवे देवलोएसु इच्छेज्जा माणुसं लोगं हव्वमागच्छित्तते संचाएइ हव्वमागच्छित्तए तं०—अहुणोववन्ने देवे देवलोगेसु दिव्वेसु कामभोगेसु अमुच्छिते जाव अणज्झोववन्ने, तस्स णं एवं भवति—अत्थि खलु मम माणुस्सए भवे आयरितेति वा उवज्झाएति वा पवत्तीति वा थेरेति वा गणीति वा गणधरेति वा गणावच्छेएति वा जेसिं पभावेणं मए इमा एतारूवा दिव्वा देविड्ढी दिव्वा देवजुत्ती लद्धा पत्ता अभिसमन्नागया, तं गच्छामि णं ते भगवंते वंदामि

जाव पज्जुवासामि, १, अहुणोववन्ने देवे देवलोएसु जाव अणज्झोववन्ने तस्स णमेवं भवति—एस णं माणुस्सए भवे णाणीति वा तवस्सीति वा अइदुक्कर २ कारते, तं गच्छामि णं ते भगवंते वंदामि जाव पज्जुवासामि २, अहुणोववन्ने देवे देवलोएसु जाव अणज्झोववन्ने तस्स णमेवं भवति—अत्थि णं मम माणुस्सए भवे माताति वा जाव सुण्हाति वा, तं गच्छामि णं तेसिमंतितं पाउब्भवामि पासंतु ता मे इममेतारूवं दिव्वं देविड्ढिं दिव्वं देवजुत्तिं लद्धं पत्तं अभिसमन्नागतं ३, अहुणोववन्ने देवे देवलोगेसु जाव अणज्झोववन्ने तस्स णमेवं भवति—अत्थि णं मम माणुस्सए भवे मित्तेति वा, सहीति वा सुहीति वा सहाएति वा, संगएति वा तेसिं च णं अम्हे अन्नमन्नस्स संगारे पडिसुते भवति, जो मे पुव्विं चयति से संबोहेतव्वे, इच्चेतेहिं जाव संचातेति हव्वमागच्छित्तते ४। (सू०३२३)।

'अम्मापिइसमाणे' मातापितृसमानः, उपचारं विना साधुषु एकान्तेनैव वत्सलत्वात्, भ्रातृसमानः अल्पतरप्रेमत्वात् तत्त्व विचारादौ निष्ठुरवचनादप्रीतेः तथाविधप्रयोजने त्वत्यन्तवत्सलत्वाच्चेति, मित्रसमानः सोपचारवचनादिना प्रीतिक्षतेः, तत्क्षतौ चापद्यप्युपेक्षकत्वादिति। समानः—साधारणः पतिरस्याः सपत्नी, यथा सा सपत्न्या ईर्ष्यावशादपराधान् वीक्षते एवं यः साधुषु दूषणदर्शनतत्परोऽनुपकारी च स सपत्नीसमानोऽभिधीयत इति, 'अद्दाग'त्ति आदर्शसमानो यो हि साधुभिः प्रज्ञाप्यमानानुत्सर्गापवादादीनागमिकान् भावान् यथावत्प्रतिपद्यते सन्निहितार्थानादर्शकवत् स आदर्शसमानः, यस्यानवस्थितो बोधो विचित्रदेशनावायुना सर्वतोऽपह्रियमाणत्वात् पताकेव स पताकासमान इति, यस्तु कुतोऽपि कदाग्रहान्न गीतार्थदेशनया चाल्यते सोऽनमनस्वभावबोधत्वेनाप्रज्ञापनीयः स्थाणुसमान इति, यस्तु प्रज्ञाप्यमानो न केवलं स्वाग्रहान्न चलति अपि तु प्रज्ञापकं दुर्वचनकण्टकैर्विध्यति स खरकण्टकसमानः,

खरा-निरन्तरा निष्ठुरा वा कण्टाः-कण्टका यस्मिंस्तत् खरकण्टं-बुब्बूलादिडालं खरणमिति लोके यदुच्यते तच्च विलग्नं चीवरं न केवलमविनाशितं न मुञ्चत्यपि तु तद्विमोचकं पुरुषादिकं हस्तादिषु कण्टकैः विध्यतीति, अथवा खरकण्टयति-लेपवन्तं करोति यत् तत्खरण्टम्-अशुच्यादि तन्ममानो, यो हि कुबोधापनयनप्रवृत्तं संसर्गमात्रादेव दूषणवन्तं करोति, कुबोधकुशीलतादुष्प्रसिद्धिजनकत्वेनोन्मत्तप्ररूपकोऽयमित्यसद्दूषणोद्भावकत्वेन वेति । श्रमणोपासकाधिकारादिदमाह—'समणस्से'त्यादि कण्ठ्यं, नवरं, श्रमणोपासकानामानन्दादीनामुपासकदशाभिहितानामिति । देवाधिकारादेवेदमाह—'चउहीं'त्यादि, त्रिस्थानके तृतीयोद्देशके प्रायो व्याख्यातमेवेदं, तथापि किञ्चिदुच्यते, चउहिं ठाणेहिं नो संचाएइत्ति सम्बन्धः, तथा देवलोकेषु देवमध्ये इत्यर्थः, हव्वं-शीघ्रं, संचाएइत्ति-शक्नोति, कामभोगेषु-मनोज्ञशब्दादिषु मूर्च्छित इव मूर्च्छितो-मूढस्तत्स्वरूपस्यानित्यत्वादेर्विवोधाक्षमत्वात् गृद्धः-तदाकाङ्क्षावान् अतृप्त इत्यर्थः ग्रथित एव ग्रथितस्तद्विषयस्नेहरज्जुभिस्संदर्भित इत्यर्थ, अध्युपपन्नः अत्यन्तं तन्मना इत्यर्थः, नाद्रियते-न तेष्वादरवान् भवति, न परिजानाति-एतेऽपि वस्तुभूता इत्येवं न मन्यते, तथा तेष्विति गम्यते अर्थं वध्नाति-एतैरिदं प्रयोजनमिति निश्चयं करोति, तथा नो तेषु निदानं प्रकरोति-एते मे भूयासुरित्येवमिति, तथा नो तेषु स्थितिप्रकल्पम्-अवस्थानविकल्पनमेतेष्वहं तिष्ठामि एते वा मम तिष्ठन्तु-स्थिरा भवन्त्वित्येवंरूपं स्थित्या वा-मर्यादया प्रकृष्टः कल्पः-आचारः स्थितिप्रकल्पस्तं प्रकरोति-कर्त्तुमारभते, प्रशब्दस्यादिकर्मार्थत्वादिति, एवं दिव्यविषयप्रसक्तिरेकं कारणं, तथा यतोऽसावधुनोत्पन्नो देवः कामेषु मूर्च्छितादिविशेषणोऽतस्तस्य मानुष्यकमित्यादि इति दिव्यप्रेमसंक्रान्तिः द्वितीयं, तथाऽसौ देवो यतो भोगेषु मूर्च्छितादिविशेषणो भवति ततस्तत्प्रतिवन्धात् 'तस्स ण'मित्यादि इति देवकार्यायत्ततया मनुष्यकार्यानायत्तत्वं तृतीयम्, तथा दिव्यभोगमूर्च्छितादिविशेषणात्तस्य मनुष्याणामयं मानुष्यः स एव मानु-

ष्यको गन्धः प्रतिकूलो–दिव्यगन्धविपरीतवृत्तिः प्रतिलोमश्चापि इन्द्रियमनसोरनाह्लादकत्वाद् , एकार्थौ वैतौ अत्यन्तामनोज्ञताप्रतिपादनायोक्ताविति, यावदिति परिमाणार्थः, 'चत्तारि पंचे'ति विकल्पदर्शनार्थं कदाचित् भरतादिष्वेकान्तसुषमादौ चत्वार्येवान्यदा तु पञ्चापि, मनुष्यपञ्चेन्द्रियतिरश्चां बहुत्वेनौदारिकशरीराणां तदवयवतन्मलानां च बहुत्वेन दुरभिगन्धप्राचुर्यादिति, आगच्छति, मनुष्यक्षेत्रादाजिगमिषुं देवं प्रतीति, इदं च मनुष्यक्षेत्रस्याशुभस्वरूपत्वमेवोक्तं, न च देवोऽन्यो वा नवभ्यो योजनेभ्यः परतः आगतं गन्धं जानातीति, अथवा अत एव वचनाद् यदिन्द्रियविषयप्रमाणमुक्तं तदौदारिकशरीरेन्द्रियापेक्षयैव सम्भाव्यते, कथमन्यथा विमानेषु योजनलक्षादिप्रमाणेषु दूरस्थिता देवा घण्टाशब्दं शृणुयुर्यदि परं प्रतिशब्दद्वारेणान्यथा वेति नरभवाशुभत्वं चतुर्थमनागमनकारणमिति, शेषं निगमनम् , आगमनकारणानि प्रायः प्राग्वत् तथापि किञ्चिदुच्यते, कामभोगेष्वमूर्च्छितादिविशेषणो यो देवस्तस्य 'एव'मिति एवंभूतं मनो भवति यदुत अस्ति मे, किन्तदित्याह–आचार्य इति वा आचार्य एतद्वास्ति इतिः–उपप्रदर्शने वा विकल्प एवमुत्तरत्रापि क्वचिदितिशब्दो न दृश्यते तत्र तु सूत्रं सुगममेवेति, इह च आचार्यः–प्रतिबोधकप्रव्राजकादिरनुयोगाचार्यो वा उपाध्यायः–सूत्रदाता प्रवर्त्तयति साधूनाचार्योपदिष्टेषु वैयावृत्त्यादिष्विति प्रवर्त्ती, प्रवर्त्तिव्यापारितान् साधून् संयमयोगेषु सीदतः स्थिरीकरोति स्थविरो, गणोऽस्यास्तीति गणी–गणाचार्यः गणधरो–जिनशिष्यविशेषः आर्यिकाप्रतिजागरको वा साधुविशेषः समयप्रसिद्धः, गणस्यावच्छेदो–देशोऽस्यास्तीति गणावच्छेदकः, यो हि तं गृहीत्वा गच्छावष्टम्भायैवोपधिमार्गणादिनिमित्तं विहरति, 'इम'त्ति इयं प्रत्यक्षासन्ना, एतदेव रूपं यस्या न कालान्तरादावपि रूपान्तरभाक् सा तथा, दिव्या–स्वर्गसम्भवा प्रधाना वा देवर्द्धिः–विमानरत्नादिका द्युतिः शरीरादिसम्भवा युतिर्वा–युक्तिरिष्टपरिवारादिसंयोगलक्षणा लब्धा–उपार्जिता जन्मान्तरे प्राप्ता–इदानीमुपनता अभिसमन्वागता–भोग्यावस्थां

गता, 'नं'ति तस्मात्तान् भगवतः पूज्यान् वन्दे स्तुतिभिः, नमस्यामि प्रणामेन सत्करोमि आदरकरणेन वस्त्रादिना वा सन्मानयाम्युचितप्रतिपत्त्या कल्याणं मङ्गलं दैवतं चैत्यमितिबुद्ध्या पर्युपासे-सेवामीत्येकम्, तथा ज्ञानी श्रुतज्ञानादिनेत्यादि द्वितीयं, तथा 'भाया इ वा भज्जा इ वा भइणी इ वा पुत्ता इ वा धूया इ वे'ति यावच्छब्दाक्षेपः, स्नुषा-पुत्रभार्या 'तं' तस्मात्तेषामन्तिकं-समीपं प्रादुर्भवामि प्रकटीभवामि 'ता' तावत् 'मे' मम 'इमे' इति पाठान्तर इति तृतीयं, तथा मित्रं-पश्चात्स्नेहवत् सखा-बालवयस्यः सुहृत्-सज्जनो हितैषी सहायः-सहचरस्तदेककार्यप्रवृत्तो वा सङ्गतं विद्यते यस्यासौ साङ्गतिकः-परिचितस्तेषां, 'अम्हे'त्ति अस्माभिः 'अन्नमन्नस्स'त्ति अन्योऽन्यं 'संगारे'त्ति सङ्केतः प्रतिश्रुतः-अभ्युपगतो भवति स्मेति, 'जे मो'(मे)त्ति योऽस्माकं पूर्वं च्यवते देवलोकात् स सम्बोधयितव्य इति चतुर्थं, इदञ्च मनुष्यभवे कृतसङ्केतयोरेकस्य पूर्वलक्षादिजीविषु भवनपत्यादिषूत्पद्य च्युत्वा च नरतयोत्पन्नस्यान्यः पूर्वलक्षादि जीवित्वा सौधर्म्मादिषूत्पद्य सम्बोधनार्थं यदेहागच्छति तदाऽवसेयमिति, इत्येतैरित्यादि निगमनमिति।

अनन्तरं देवागम उक्तस्तत्र तत्कृतोद्योतो भवतीति तद्विपक्षमन्धकारं लोके आह—

चउहिं ठाणेहिं लोगंधगारे सिया, तं०—अरहंतेहिं वोच्छिज्जमाणेहिं अरहंतपन्नत्ते धम्मे वोच्छिज्जमाणे पुव्वगते वोच्छिज्जमाणे जायतेते वोच्छिज्जमाणे, चउहिं ठाणेहिं लोउज्जोते सिता, तं०—अरहंतेहिं जायमाणेहिं अरहंतेहिं पव्वतमाणेहिं अरहंताणं णाणुप्पयमहिमासु अरहंताणं परिनिव्वाणमहिमासु ४, एवं देवंधगारे देवुज्जोते देवसन्निवाते देवुक्कलिताते देवकहकहते, चउहिं ठाणेहिं देविंदा माणुस्सं लोगं हव्वमागच्छंति एवं जहा

तिठाणे जाव लोगंतिता देवा माणुस्सं लोगं हव्वमागच्छेज्जा, तं०—अरहंतेहिं जायमाणेहिं जाव अरिहंताणं परिनिव्वाणमहिमासु (सू० ३२४)।

'चउही'त्यादि व्यक्तं, किन्तु लोकेऽन्धकारं—तमिस्रं द्रव्यतो भावतश्च यत्र यद् स्यात्, सम्भाव्यते ह्यर्हदादिव्यवच्छेदे द्रव्यतोऽन्धकारं, उत्पातरूपत्वात् तस्य, छत्रभङ्गादौ रजउद्घातादिवदिति, वह्निव्यवच्छेदेऽन्धकारं द्रव्यत एव, तथास्वभावात् दीपादेरभावाद्वा, भावतोऽपि वा, एकान्तदुष्पमादावागमादेरभावादिति। पूर्वं देवागम उक्तः, अतो देवाधिकारवन्तमादुःखशय्यासूत्रात् सूत्रप्रपञ्चमाह— 'चउही'त्यादि, सुगमश्चायं, नवरं लोकोद्योतश्चतुर्ष्वपि स्थानेषु देवागमात्, जन्मादित्रये तु स्वरूपेणापि, एवमिति यथा लोकान्धकारं तथा देवान्धकारमपि चतुर्भिः स्थानैः, देवस्थानेष्वपि ह्यर्हदादिव्यवच्छेदकाले वस्तुमाहात्म्यात् क्षणमन्धकारं भवतीति, एवं देवोद्योतोऽर्हतां जन्मादिष्विति, देवसन्निपातोः—देवसमवाय एवमेव देवोत्कलिका—देवलहरिः, एवमेव देवकहकहेत्ति—देवप्रमोदकलकलः, एवमेव देवेन्द्रा मनुष्यलोकमागच्छेयुः अर्हतां जन्मादिष्वेवेति यथा त्रिस्थानके प्रथमोद्देशके तथा देवेन्द्रागमनादीनि लोकान्तिकसूत्रावसानानि वाच्यानि, केवलमिह परिनिर्वाणमहिमास्विति चतुर्थमिति।

पूर्वमर्हतां जन्मादिव्यतिकरेण देवागम उक्तः, अधुना अर्हतामेव प्रवचनार्थे दुःस्थितस्य साधोः दुःखशय्या इतरस्येतरा भवन्तीति सूत्रद्वयेनाह—

चत्तारि दुहसेज्जाओ पं० तं०—तत्थ खलु इमा पढमा दुहसेज्जा तं०—से णं मुंडे भवित्ता अगारातो अण-

गारियं पव्वतिते निग्गंथे पावयणे संकिते कंखिते वितिगिच्छिते भेयसमावन्ने कलुससमावन्ने निग्गंथं पावयणं णो सद्दहति णो पत्तियति णो रोएइ, निग्गंथं पावयणं असद्दहमाणे अपत्तितमाणे अरोएमाणे मणं उच्चावतं नियच्छति विणिघातमावज्जति पढमा दुहसेज्जा १, अहावरा दोचा दुहसेज्जा से णं मुंडे भवित्ता अगारातो जाव पव्वतिते सएणं लाभेणं णो तुस्सति परस्स लाभमासाएति पीहेति पत्थेति अभिलसति परस्स लाभमासाएमाणे जाव अभिलसमाणे मणं उच्चावयं नियच्छइ विणिघातमावज्जति दोचा दुहसेज्जा २, अहावरा तच्चा दुहसेज्जा—से णं मुंडे भवित्ता जाव पव्वइए दिव्वे माणुस्सए कामभोगे आसाएइ जाव अभिलसति दिव्वमाणुस्सए कामभोगे आसाएमाणे जाव अभिलसमाणे मणं उच्चावयं नियच्छति विणिघातमावज्जति तच्चा दुहसेज्जा ३, अहावरा चउत्था दुहसेज्जा–से णं मुंडे जाव पव्वइए तस्स णमेवं भवति जया णं अहमगारवासमावसामि तदा णमहं संवाहणपरिमद्दणगातब्भंगगातुच्छोलणाइं लभामि जप्पभिइं च णं अहं मुंडे जाव पव्वतिते तप्पभिइं च णं अहं संवाहण जाव गातुच्छोलणाइं णो लभामि, से णं संवाहण जाव गातुच्छोलणाइं आसाएति जाव अभिलसति से णं संवाहण जाव गातुच्छोलणाइं आसाएमाणे जाव मणं उच्चावतं नियच्छति विणिघायमावज्जति चउत्था दुहसेज्जा ४। चत्तारि सुहसेज्जाओ पं० तं०—तत्थ खलु इमा पढमा सुहसेज्जा, से णं मुंडे भवित्ता अगारातो अणगारियं पव्वतिए निग्गंथे पावयणे निस्संकिते णिक्कंखिते निव्वितिगिच्छिए नो भेदसमावन्ने नो कलुससमावन्ने निग्गंथं पावयणं सद्दहइ पत्तीयइ रोतेति निग्गंथं पावयणं सद्दहमाणे पत्तितमाणे रोएमाणे

नो मणं उच्चावतं नियच्छति णो विणिघातमावज्जति पढमा सुहसेज्जा १, अहावरा दोच्चा सुहसेज्जा, से णं मुंडे जाव पव्वतिते सतेणं लाभेणं तुस्सति परस्स लाभं णो आसाएति णो पीहेति णो पत्थेइ णो अभिलसति परस्स लाभमणासाएमाणे जाव अणभिलसमाणे नो मणं उच्चावतं णियच्छति णो विणिघातमावज्जति, दोच्चा सुहसेज्जा २, अहावरा तच्चा सुहसेज्जा–से णं मुंडे जाव पव्वइए दिव्वमाणुस्सए कामभोगे णो आसाएति जाव नो अभिलसति दिव्वमाणुस्सए कामभोगे अणासाएमाणे जाव अणभिलसमाणे नो मणं उच्चावतं नियच्छति णो विणिघातमावज्जति तच्चा सुहसेज्जा ३, अहावरा चउत्था सुहसेज्जा—से णं मुंडे जाव पव्वतिते तस्स णं एवं भवति—जइ ताव अरहंता भगवंतो हट्ठा आरोग्गा बलिया कल्लसरीरा अन्नयराइं ओरालाइं कल्लाणाइं विउलाइं पयताइं पग्गहिताइं महाणुभागाइं कम्मक्खयकारणाइं तवोकम्माइं पडिवज्जंति किमंग पुण अहं अब्भोवगमिओवक्कमियं वेयणं नो सम्मं सहामि खमामि तितिक्खेमि अहियासेमि ममं च णं अब्भोवगमिओवक्कमियं सम्ममसहमाणस्स अक्खममाणस्स अतितिक्खमाणस्स अणहियासेमाणस्स किं मन्ने कज्जति?, एगंतसो मे पावे कम्मे कज्जति, ममं च णं अब्भोवगमिओ जाव सम्मं सहमाणस्स जाव अहियासेमाणस्स किं मन्ने कज्जति?, एगंतसो मे निज्जरा कज्जति, चउत्था सुहसेज्जा ४। (सू० ३२५) चत्तारि अवायणिज्जा, पं० तं०—अविणीए वीगईपडिबद्धे अविओसवितपाहुडे माई। चत्तारि वातणिज्जा, पं० तं०—विणीते अविगतीपडिबद्धे वितोसवितपाहुडे अमाती (सू० ३२६)।

'चत्तारि'त्यादि, चतस्रः-चतुःसङ्ख्या दुःखदाः शय्या दुःखशय्याः, ताश्च द्रव्यतोऽतथाविधखट्वादिरूपाः भावतस्तु दुःस्थचितया दुःश्रमणतास्वभावाः प्रवचनाश्रद्धान १ परलाभप्रार्थन २ कामाशंसन ३ स्नानादिप्रार्थन ४ विशेपिताः प्रज्ञप्ताः, 'तत्रे'ति तासु मध्ये 'से' इति स कश्चित् गुरुकर्म्मा अयार्थो वा अयं स च वाक्योपक्षेपे 'प्रवचने' शासने दीर्घत्वञ्च प्रकटादित्वादिति शङ्कितः-एकभावविषयसंशययुक्तः काङ्क्षितो-मतान्तरमपि साध्विति बुद्धिः विचिकित्सितः-फलं प्रति शङ्कावान् भेदसमापन्नो-बुद्धिद्वैधीभावापन्न एवमिदं सर्वं जिनशासनोक्तमन्यथा वेति कलुषसमापन्नो-नैतदेवमिति विपर्यस्त इति, न श्रद्धत्ते-सामान्येनैवमिदमिति नो प्रत्येति-प्रतिपद्यते प्रीतिद्वारेण नो रोचयति-अभिलापातिरेकेणासेवनाभिमुखतयेति, मनः-चित्तमुच्चावचम्-असमञ्जसं निर्गच्छति-याति करोतीत्यर्थः, ततो विनिघातं-धर्मभ्रंशं संसारं वा आपद्यते, एवमसौ श्रामण्यशय्यायां दुःखमास्त इत्येका, तथा स्वकेन-स्वकीयेन लभ्यते लम्भनं चेति लाभः-अन्नादे रत्नादेर्वा तेन आशां करोतीत्याशयति स नूनं मे दास्यतीत्येवमिति आस्वादयति वा-लभते चेत् भुङ्क्त एव स्पृहयति-वाञ्छयति प्रार्थयति-याचते अभिलषति-लब्धेऽप्यधिकतरं वाञ्छतीत्यर्थः, शेषमुक्तार्थमेवमप्यसौ दुःखमास्त इति द्वितीया, तृतीया कण्ठ्या, अगारवासो-गृहवासस्तमावसामि-तत्र वर्त्ते सम्बाधनं-शरीरस्यास्थिसुखत्वादिना नैपुण्येन मर्दनविशेषः परिमर्दनं तु-पिष्टादेर्मलनमात्रं परिशब्दस्य धात्वर्थमात्रवृत्तित्वात् गात्राभ्यङ्गः-तैलादिनाऽङ्गम्रक्षणं गात्रोत्क्षालनम्-अङ्गधावनमेतानि लभे न कश्चित् निषेधयतीति, शेषं कण्ठ्यमिति चतुर्थी ॥ दुःखशय्याविपरीताः सुखशय्याः प्रागिवावगम्याः, नवरं-'हट्ठ'त्ति शोकाभावेन हृष्टा इव हृष्टा अरोगा—ज्वरादिवर्जिताः बलिकाः-प्राणवन्तः कल्पशरीराः-पटुशरीरा अन्यतराणि-अनशनादीनां मध्ये एकतराणि उदाराणि-आशंसादोषरहिततयोदारचित्तयुक्तानि कल्याणानि मङ्गलस्वरूपत्वात् विपुलानि बहुदिनत्वात् प्रयतानि प्रकृष्टसंयमयुक्तत्वात्

प्रगृहीतानि आदरप्रतिपन्नत्वात् महानुभागानि अचिन्त्यशक्तियुक्तत्वात् (समृद्धानि) ऋद्धिविशेषकारणत्वात् कर्मक्षयकारणानि मोक्षसाधकत्वात् तपःकर्माणि तपः-क्रियाः प्रतिपद्यन्ते-आश्रयन्ति, 'किमंग पुण'त्ति किं प्रश्ने अङ्गेत्यात्मामन्त्रणेऽलङ्कारे वा 'पुन'रिति पूर्वोक्तार्थवैलक्षण्यदर्शने शिरोलोचब्रह्मचर्यादीनामभ्युपगमे भवा आभ्युपगमिकी उपक्रम्यतेऽनेनायुरित्युपक्रमो-ज्वरातीसारादिस्तत्र भवा या सौपक्रमिकी सा चासौ सा चेति आभ्युपगमिकौपक्रमिकी तां वेदनां-दुःखं सहामि तदुत्पत्तावभिमुखतया, अस्ति च सहिरवैमुख्यार्थे यथाऽसौ भटस्तं भटं सहते, तस्मान्न भज्यत इति भावः क्षमे आत्मनि परे वाऽविकोपतया तितिक्षामि अदैन्यतया अध्यासयामि सौष्ठवातिरेकेण तत्रैव वेदनायामवस्थानं करोमीत्यर्थः, एकार्था वैते शब्दाः, किं 'मन्ने'त्ति मन्ये निपातो वितर्कार्थः, क्रियते-भवतीत्यर्थः, 'एगंतसो'त्ति एकान्तेन सर्वथेत्यर्थ इति ॥ एते च दुःखसुखशय्यावन्तो निर्गुणसगुणाः अतस्तद्विशेषाणामेव वाचनीयावाचनीयत्वदर्शनाय सूत्रद्वयं, कण्ठ्यं, नवरं 'वीयइ'त्ति विकृतिः—क्षीरादिका 'अव्यवशमितप्राभृत' इति प्राभृतम्—अधिकरणकारी कोप इति।

अनन्तरं वाचनीयावाचनीयाः पुरुषा उक्ता इति पुरुषाधिकारात् तद्विशेषप्रतिपादनपरं चतुर्भङ्गिकाप्रतिबद्धं सूत्रप्रबन्धमाह—

चत्तारि पुरिसजाया पं० तं०—आतंभरे नाममेगे नो परंभरे परंभरे नाममेगे नो आतंभरे एगे आतंभरेवि परंभरेवि एगे नो आयंभरे नो परंभरे, चत्तारि पुरिसजाया पं० तं०—दुग्गए नाममेगे दुग्गए दुग्गए नाममेगे सुग्गते सुग्गते नाममेगे दुग्गए सुग्गए नाममेगे सुग्गए, चत्तारि पुरिसजाया पं० तं०—दुग्गते नाममेगे दुव्वए

दुग्गए नाममेगे सुव्वए सुग्गए नाममेगे दुव्वते सुग्गए नाममेगे सुव्वए ४, चत्तारि पुरिसजाया पं० तं०—दुग्गते नाममेगे दुप्पडिताणंदे दुग्गते नाममेगे सुप्पडिताणंदे ४, चत्तारि पुरिसजाया पं० तं०—दुग्गते नाममेगे दुग्गतिगामी दुग्गए नाममेगे सुग्गतिगामी ४, चत्तारि पुरिसजाया पं० तं०—दुग्गते नाममेगे दुग्गतिं गते दुग्गते नाममेगे सुगतिं गते ४, चत्तारि पुरिसजाता पं० तं०—तमे नाममेगे तमे तमे नाममेगे जोती जोती णाममेगे तमे जोती णाममेगे जोती ४, चत्तारि पुरिसजाता पं० तं०—तमे नाममेगे तमवले तमे नाममेगे जोतिवले जोती नाममेगे तमवले जोती नाममेगे जोतीवले, चत्तारि पुरिसजाता पं० तं०—तमे नाममेगे तमवलपलज्जणे तमे नाममेगे जोतीवलपलज्जणे ४, चत्तारि पुरिसजाता पं० तं०—परिन्नायकम्मे नाममेगे नो परिन्नातसन्ने परिन्नातसन्ने णाममेगे णो परिन्नातकम्मे एगे परिन्नातकम्मेवि० ४, चत्तारि पुरिसजाता पं० तं०—परिन्नायकम्मे णाममेगे नो परिन्नातगिहावासे परिन्नायगिहावासे णामं एगे णो परिन्नातकम्मे ४, चत्तारि पुरिसजाता पं० तं०—परिण्णायसन्ने णाममेगे नो परिन्नातगिहावासे परिन्नातगिहावासे णामं एगे० ४, चत्तारि पुरिसजाता पं० तं०—इहत्थे णाममेगे नो परत्थे परत्थे नाममेगे नो इहत्थे ४, चत्तारि पुरिसजाता पं० तं०—एगेणं णाममेगे वड्ढति एगेणं हायति एगेणं णाममेगे वड्ढइ दोहिं हायति दोहिं णाममेगे वड्ढति एगेणं हातति एगे दोहिं नाममेगे वड्ढति दोहिं हायति, चत्तारि कंथका पं० तं०—आइन्ने नाममेगे आइन्ने आइन्ने नाममेगे खलुंके खलुंके नाममेगे आइन्ने खलुंके नाममेगे खलुंके ४, एवामेव चत्तारि पुरिसजाता पं० तं०—आइन्ने नाममेगे आइन्ने चउभंगो, चत्तारि कंथगा

पं० तं०—आतिन्ने नाममेगे आतिन्नताते विहरति आइन्ने नाममेगे खलुंकत्ताए विहरति ४, एवामेव चत्तारि पुरिसजाता पं० तं०—आइन्ने नाममेगे आइन्नताए विहरइ, चउभंगो चत्तारि पकंथगा पं० तं०—जातिसंपन्ने नाममेगे णो कुलसंपन्ने ४, एवामेव चत्तारि पुरिसजाता पं० तं०—जातिसंपन्ने नाममेगे चउभंगो, चत्तारि कंथगा पं० तं०—जातिसंपन्ने नाममेगे णो बलसंपन्ने ४, एवामेव चत्तारि पुरिसजाता पं० तं०—जातिसंपन्ने नाममेगे णो बलसंपण्णे ४, चत्तारि कंथगा पं० तं०—जातिसंपन्ने णाममेगे णो रूवसंपन्ने ४, एवामेव चत्तारि पुरिसजाता पं० तं०—जातिसंपन्ने नाममेगे णो रूवसंपण्णे ४ चत्तारि कंथगा पं० तं०—जाइसंपन्ने णाममेगे णो जयसंपण्णे ४ एवामेव चत्तारि पुरिसजाया पं० तं०—जातिसंपन्ने ४, एवं कुलसंपन्नेण य बलसंपण्णेण त ४, कुलसंपन्नेण य रूवसंपण्णेण त ४ कुलसंपण्णेण त जयसंपन्नेण त ४ एवं बलसंपन्नेण त रूवसंपन्नेण त ४ बलसंपन्नेण त जयसंपण्णेण त ४, सव्वत्थ पुरिसजाया पडिवक्खो, चत्तारि कंथगा पं० तं०—रूवसंपन्ने णाममेगे णो जयसंपन्ने ४ एवामेव चत्तारि पुरिसजाया पं० तं०—रूवसंपन्ने नाममेगे णो जयसंपन्ने ४। चत्तारि पुरिसजाया पं० तंजहा—सीहत्ताते णाममेगे निक्खंते सीहत्ताते विहरइ सीहत्ताते नाममेगे निक्खंते सियालत्ताए विहरइ सीयालत्ताए नाममेगे निक्खंते सीहत्ताए विहरइ सीयालत्ताए नाममेगे निक्खंते सीयालत्ताए विहरइ (सू० ३२७)।

'चत्तारि'त्यादि, आत्मानं बिभर्त्ति—पुष्णातीत्यात्मम्भरिः प्राकृतत्वादायंभरे, तथा परं बिभर्त्तीति परम्भरिः, प्राकृतत्वात्परंभरे इति, तत्र प्रथमभंगे स्वार्थकारक एव, स च जिनकल्पिको, द्वितीयः परार्थकारक एव, स च भगवानर्हन्, तस्य विवक्षया सकलस्वा-

र्थमात्रः स्वप्रधानप्रयोजनप्रापणप्रवणप्राणितत्वात्, तृतीये स्वपरार्थकारी, स च स्थविरकल्पिकः विहितानुष्ठानतः सार्थकरत्वाद्विधि-वत्सिद्धान्तदेशनातश्च परार्थसम्पादकत्वात्, चतुर्थं तूभयानुपकारी, स च मुग्धमतिः कश्चिद् यथाच्छन्दो वेति, एवं लौकिकपुरुषोऽपि योजनीयः। उभयानुपकारी च दुर्गत एव स्यादिति दुर्गतसूत्रं, दुर्गतो—दरिद्रः पूर्वं धनविहीनत्वात् ज्ञानादिरत्नविहीनत्वाद्वा पश्चादपि तथैव दुर्गत एवेति, अथवा दुर्गतो द्रव्यतः पुनर्दुर्गतो भावत इति प्रथमः, एवमन्ये त्रयो, नवरं सुगतो द्रव्यतो धनी भावतो ज्ञानादि-गुणवानिति। दुर्गतः कोऽपि व्रती स्यादिति दुर्व्रतसूत्रं, दुर्गतो—दरिद्रः दुर्व्रतः—असम्यग्व्रतोऽथवा दुर्व्ययः—आयनिरपेक्षव्ययः कुस्थानव्ययो वेत्येकः, अन्यो दुर्गतः सन् सुव्रतो—निरतिचारनियमः, सुव्ययो वौचित्यप्रवृत्तेरिति, इतरौ प्रतीतौ। दुर्गतस्तथैव दुष्प्रत्यानन्दः—उपकृतेन कृतमुपकारं यो नाभिमन्यते, यस्तु मन्यते तं स सुप्रत्यानन्द इति। दुर्गतो—दरिद्रः सन् दुर्गतिं गमिष्यतीति दुर्गतिगामीत्येवमन्येऽपि, नवरं सुगतिं गमिष्यतीति सुगतिगामी, सुगतः—ईश्वर इत्यर्थः। दुर्गतस्तथैव दुर्गतिं गतः यात्राजनकुपिततत्स्मारणप्रवृत्तद्रमकवत्, एवमन्ये त्रयः। तम इव तमः पूर्वमज्ञानरूपत्वादप्रकाशत्वाद्वा पश्चादपि तम एवेत्येकः, अन्यस्तु तमः पूर्वं पश्चाज्ज्योतिरिव ज्योतिरुपार्जितज्ञानत्वात् प्रसिद्धिप्राप्तत्वाद्वा, शेषौ सुज्ञानौ। तमः—कुकर्मकारितया मलिनस्वभावस्तमः—अज्ञातं बलं—सामर्थ्यं यस्य तमः—अन्धकारं वा तदेव तत्र वा बलं यस्य स तथा, असदाचारवानज्ञानी रात्रिचरो वा चौरादिरित्येकः, तथा तमस्तथैव ज्योतिः—ज्ञानं बलं यस्य आदित्यादिप्रकाशो वा ज्योतिस्तदेव तत्र वा बलं यस्य स तथा, अयं चासदाचारो ज्ञानवान् दिनचारी वा चौरादिरिति द्वितीयो, ज्योतिः—सत्कर्मकारितयोज्ज्वलस्वभावस्तमोबलस्तथैव, अयं च सदाचारवान् अज्ञानी कारणान्तराद्वा रात्रिचर इति तृतीयः, चतुर्थः सुज्ञानः, अयञ्च सदाचारवान् ज्ञानी दिनचरो वेति। तथा तमस्तथैव 'तमबलपलज्जणे'त्ति

तमो—मिथ्याज्ञानं अन्धकारं वा तदेव बलं तत्र वा अथवा तमसि—उक्तरूपे बले च—सामर्थ्ये प्ररज्यते—रतिं करोतीति तमोबलप्ररञ्जनः एवं ज्योतिर्बलप्ररञ्जनोऽपि, नवरं ज्योतिः—सम्यग्ज्ञानमादित्यादिप्रकाशो वेति, एवमितरावपि, इहापि त एव पूर्वसूत्रोक्ताः पुरुषविशेषाः प्ररञ्जनविशेषिताः द्रष्टव्याः, अथवा तमस्तथैवाप्रसिद्धो वा तमोबलेन—अन्धकारबलेन सञ्चरन् प्रलज्जते इति तमोबलप्रलज्जनः—प्रकाशचारी, एवमितरेऽपि, नवरं द्वितीयोऽन्धकारचारी तृतीयः काशचारी चतुर्थः कुतोऽपि कारणादन्धकारचार्येवेति, 'पज्जलणे'त्ति क्वचित्पाठः तत्राज्ञानबलेनान्धकारबलेन वा ज्ञानबलेन प्रकाशबलेन वा प्रज्वलति–दर्पितो भवत्यवष्टम्भं करोति यः स तथेति। परिज्ञातानि–ज्ञपरिज्ञया स्वरूपतोऽवगतानि प्रत्याख्यानपरिज्ञया च परिहृतानि कर्माणि–कृष्यादीनि येन स परिज्ञातकर्मा नो–न च परिज्ञाताः संज्ञा–आहारसंज्ञाद्या येन स परिज्ञातसंज्ञः, अभावितावस्थः प्रव्रजितः श्रावको वेत्येकः, परिज्ञातसंज्ञः सद्भावनाभावितत्वात् न परिज्ञातकर्म्मा कृष्याद्यनिवृत्तेः श्रावक इति द्वितीयः, तृतीयः साधुश्चतुर्थोऽसंयत इति। परिज्ञातकर्मा–सावद्यकरणकारणानुमतिनिवृत्तः कृष्यादिनिवृत्तो वा न परिज्ञातगृहावासोऽप्रव्रजित इत्येकः, अन्यस्तु परिज्ञातगृहावासो न त्यक्तारम्भो दुष्प्रव्रजित इति द्वितीयः तृतीयः साधुश्चतुर्थोसंयतः, त्यक्तसंज्ञो विशिष्टगुणस्थानकत्वादत्यक्तगृहावासो गृहस्थत्वादेकः अन्यस्तु परिहृतगृहवासो यतित्वादभावितत्वान्न परिहृतसंज्ञः अन्य उभयथा अन्यो नोभयथेति। इहैव जन्मन्यर्थः–प्रयोजनं भोगसुखादि आस्था वा–इदमेव साध्विति बुद्धिर्यस्य स इहार्थ इहास्थो वा भोगपुरुष इहलोकप्रतिबद्धो वा, परत्रैव जन्मान्तरे अर्थ आस्था वा यस्य स परार्थः परास्थो वा साधुर्बालतपस्वी वा इह परत्र च यस्यार्थ आस्था वा स सुश्रावक उभयप्रतिबद्धो वा उभयप्रतिषेधवान् कालशौकरिकादिर्मूढो वेति, अथवा इहैव विवक्षिते ग्रामादौ तिष्ठतीति इहस्थस्तत्प्रतिबन्धान्न परस्थो अन्यस्तु परत्र प्रतिबन्धात्परस्थः

अन्यस्तूभयस्थः अन्यः सर्वाप्रतिबद्धत्वादनुभयस्थः साधुरिति। एकेनेति श्रुतेन एकः कश्चिद्वर्द्धते एकेनेति सम्यग्दर्शनेन हीयते, यथोक्तम्—"जह जह बहुस्सुओ संमओ य सीसगणसंपरिवुडो य। अविणिच्छिओ य समए तह तह सिद्धंतपडिणीओ ॥१॥" इत्येकः तथा एकेन श्रुतेनैवान्यो वर्द्धते द्वाभ्यां सम्यग्दर्शनविनयाभ्यां हीयते इति द्वितीयः, द्वाभ्यां श्रुतानुष्ठानाभ्यामन्यो वर्द्धते एकेन सम्यग्दर्शनेन हीयते इति तृतीयः, द्वाभ्यां श्रुतानुष्ठानाभ्यां अन्यो वर्द्धते द्वाभ्यां सम्यग्दर्शनविनयाभ्यां हीयत इति चतुर्थः, अथवा ज्ञानेन वर्द्धते रागेण हीयते इत्येकः, अन्यो ज्ञानेन वर्द्धते रागद्वेषाभ्यां हीयते इति द्वितीयः, अन्यो ज्ञानसंयमाभ्यां वर्द्धते रागेण हीयते इति तृतीयः, अन्यो ज्ञानसंयमाभ्यां वर्द्धते रागद्वेषाभ्यां हीयत इति चतुर्थः, अथवा क्रोधेन वर्द्धते मायया हीयते क्रोपेन वर्द्धते मायालोभाभ्यां हीयते क्रोधमानाभ्यां वर्द्धते मायया हीयते क्रोधमानाभ्यां वर्द्धते मायालोभाभ्यां हीयत इति। प्रकन्थकाः पाठान्तरतः कन्थका वा-अश्वविशेषाः, आकीर्णो—व्याप्तो जवादिगुणैः पूर्वं पश्चादपि तथैव, अन्यस्त्वाकीर्णः पूर्वं पश्चात्खलुङ्को—गलिरविनीत इति, अन्यः पूर्वं खलुङ्कः पश्चादाकीर्णो गुणवानिति चतुर्थः पूर्वं पश्चादपि खलुङ्क एवेति। आकीर्णो गुणवान् आकीर्णतया—गुणवत्तया विनयवेगादिभिरित्यर्थः, वहति—प्रवर्त्तते विहरतीति पाठान्तरं आकीर्णोऽन्य आरोहदोषेण खलुङ्कतया—गलितया वहति, अन्यस्तु खलुङ्कः आरोहकगुणात् आकीर्णतया वहति, चतुर्थः प्रतीतः, सूत्रद्वयेऽपि पुरुषा दार्ष्टान्तिका योज्याः, सूत्रे तु कचिन्नोक्ताः, विनिवत्वात् ग्रन्थगतेरिति, ५ जाति ४ कुल ३ बल २ रूप १ जयपदेषु दशभिर्द्विकसंयोगैर्दशैव प्रकन्थकदृष्टान्तचतुर्भङ्गीसूत्राणि, प्रत्येकं तान्येवानुसरन्ति सन्ति दश दार्ष्टान्तिकपुरुषसूत्राणि भवन्तीति, नवरं जयः—पराभिभव इति, सिंहतया—ऊर्जवृत्त्या निष्क्रान्तो गृहवा-

१ यथा यथा बहुश्रुतः संमतश्च शिष्यगणसंपरिवृतश्च अविनिश्चितो यदि समये तथा तथा सिद्धान्तप्रत्यनीकः ॥१॥

सात् तथैव च विहरति उद्यतविहारेणेति, शृगालतया-दीनवृत्त्येति ।

पूर्वं पुरुषाणामश्वादिभिर्जात्यादिगुणेन समतोक्ताऽधुना अप्रतिष्ठानादीनां तामेव प्रमाणत आह—

**चत्तारि लोगे समा पं० तं०—अपइट्ठाणे नरए १ जंबुद्दीवे दीवे २ पालते जाणविमाणे ३ सव्वट्ठसिद्धे महाविमाणे ४, चत्तारि लोगे समा सपक्खिं सपडिदिसिं पं० तं०—सीमंतए नरए समयक्खेत्ते उडुविमाणे ईसीपब्भारा पुढवी, (सू० ३२८) उड्ढलोगे णं चत्तारि बिसरीरा पं० तं०—पुढविकाइया आउ० वणस्सइ० उराला तसा पाणा, अहो लोगे णं चत्तारि बिसरीरा पं० तं०—एवं चेव, एवं तिरियलोएवि ४ (सू० ३२९)।**

'चत्तारी'त्यादि सूत्रद्वयं प्रायो व्याख्यातार्थं तथाप्युच्यते, अप्रतिष्ठानो नरकावासः सप्तम्यां नरकपृथिव्यां पञ्चानां कालादीनां नरकावासानां मध्यवर्त्ती, स च योजनलक्षं, पालकं पालकदेवनिर्मितं सौधर्मेन्द्रसम्बन्धि यानञ्च तद्विमानञ्च यानाय वा-गमनाय विमानं यानविमानं, नतु शाश्वतमिति, सर्वार्थसिद्धं पञ्चानामनुत्तरविमानानां मध्यममिति । चत्वारो लोके समा भवन्ति, कथमित्याह—'सपक्खिं सपडिदिसं'ति समानाः पक्षाः-पार्श्वा दिशो यस्मिन् तत्सपक्षं इहेकारः प्राकृतत्वेन तथा समानाः प्रतिदिशो-विदिशो यस्मिंस्तत्सप्रतिदिक् तद् यथा भवत्येवं समा भवन्तीति, सदृशाः पक्षैरिति सपक्षमित्यव्ययीभावो वेति, पृथुसङ्कीर्णयोर्हि द्रव्ययोरधउपरिविभागेन स्थितयोस्तुल्यमानयोर्वा विषमताव्यवस्थितयोर्न समा दिशो विदिशश्च भवन्तीत्यत्यन्तसमताख्यापनार्थमिदं विशेषणद्वयमिति, सीमन्तकः प्रथमपृथिव्यां प्रथमप्रस्तटे पञ्चचत्वारिंशद्योजनलक्षप्रमाण इति, समयः-कालस्तदुपलक्षितं क्षेत्रं समयक्षेत्रं मनुष्यक्षेत्रमित्यर्थः,

उडुविमानं सौधर्मे प्रथमप्रस्तट एवेति, ईषद्-अल्पो रत्नप्रभाद्यपेक्षया प्राग्भारः-उच्छ्रयादिलक्षणो यस्यां सेषत्प्राग्भारा। ईषत्प्राग्भारा ऊर्ध्वलोके भवतीति ऊर्ध्वलोकप्रस्तावादिदमाह-'उड्ढे'त्यादि, द्वे शरीरे येषां ते द्विशरीराः, एकं पृथिवीकायिकादिशरीरमेव द्वितीयं जन्मान्तरभावि मनुष्यशरीरं ततस्तृतीयं केषाञ्चिन्न भवत्यनन्तरमेव सिद्धिगमनात्, 'ओराला तस'त्ति उदाराः-स्थूला द्वीन्द्रियादयो न तु सूक्ष्मास्तेजोवायुलक्षणाः, तेषामनन्तरभवे मानुषत्वाप्राप्त्या सिद्धिर्न भवतीति शरीरान्तरसम्भवात्, तथोदारत्रसग्रहणेन द्वीन्द्रियादिप्रतिपादनेऽपीह द्विशरीरतया पञ्चेन्द्रिया एव ग्राह्याः, विकलेन्द्रियाणामनन्तरभवे सिद्धेरभावाद्, उक्तञ्च—"विगला लभेज्ज विरइं ण उ किंचि लभेज्ज सुहुमतसा" [विकला लभेरन् विरतिं नैव किञ्चिल्लभेरन् सूक्ष्मत्रसाः] इति। लोकसम्बन्धायाते अधोलोकतिर्यग्लोकयोरतिदेशसूत्रे, गतार्थे इति।

तिर्यग्लोकाधिकारात् तदुद्भवं संयतादिपुरुषं भेदैराह—

चत्तारि पुरिसजाया पं० तं०—हिरिसत्ते हिरिमणसत्ते चलसत्ते थिरसत्ते (सू० ३३०) चत्तारि सिज्जपडिमाओ पं०, चत्तारि वत्थपडिमाओ पं०, चत्तारि पायपडिमाओ पं०, चत्तारि ठाणपडिमाओ पं० (सू० ३३१) चत्तारि सरीरगा जीवफुडा पं० तं०—वेउव्विए आहारए तेयए कम्मए, चत्तारि सरीरगा कम्मुम्मीसगा पं० तं०—ओरालिए वेउव्विए आहारते तेउते (सू० ३३२) चउहिं अत्थिकाएहिं लोगे फुडे पं० तं०—धम्मत्थिकाएणं अधम्मत्थिकाएणं जीवत्थिकाएणं पुग्गलत्थिकाएणं, चउहिं बादरकातेहिं उववज्जमाणेहिं लोगे फुडे पं० तं०-पुढविकाइएहिं

आउ० वाउ० वणस्सइकाइएहिं (सू० ३३३) चत्तारि पएसग्गेणं तुल्ला पं० तं०—धम्मत्थिकाए अधम्मत्थिकाए लोगागासे एगजीवे (सू० ३३४)।

'चत्तारी'त्यादि, ह्रिया–लज्जया सत्त्वं–परीषहादिसहने रणाङ्गणे वा अवष्टम्भो यस्य स ह्रीसत्त्वः, तथा ह्रिया–हसिष्यन्ति मामुत्तमकुलजातं जना इति लज्जया मनस्येव न काये रोमहर्षकम्पादिभयलिङ्गोपदर्शनात् सत्त्वं यस्य स ह्रीमनःसत्त्वः, चलम्–अस्थिरं परीषहादिसम्पाते ध्वंसात् सत्त्वं यस्य स चलसत्त्वः, एतद्विपर्ययात् स्थिरसत्त्व इति। स्थिरसत्त्वोऽनन्तरमुक्तः, स चाभिग्रहान् प्रतिपद्य पालयतीति तद्दर्शनाय सूत्रचतुष्टयमिदं–'चत्तारि सिज्जे'त्यादि, सुगमं, नवरं शय्यते यस्यां सा शय्या–संस्तारकः तस्याः प्रतिमा–अभिग्रहाः शय्याप्रतिमाः, तत्रोद्दिष्टं फलकादीनामन्यतमत् ग्रहीष्यामि नेतरदित्येका, यदेव प्रागुद्दिष्टं तदेव यदि द्रक्ष्यामि तदा तदेव ग्रहीष्यामि नान्यदिति द्वितीया, तदपि यदि तस्यैव शय्यातरस्य गृहे भवति ततो ग्रहीष्यामि नान्यत आनीय तत्र शयिष्य इति तृतीया, तदपि फलकादिकं यदि यथासंस्तृतमेवास्ते ततो ग्रहीष्यामि नान्यथेति चतुर्थी, आसु च प्रतिमास्वाद्ययोः प्रतिमयोर्गच्छनिर्गतानामग्रहः उत्तरयोरन्यतरस्यामभिग्रहः, गच्छान्तरगतानां तु चतस्रोऽपि कल्पन्त इति वस्त्रप्रतिमा–वस्त्रग्रहणविषये प्रतिज्ञाः, कार्प्पासिकादीत्येवमुद्दिष्टं वस्त्रं याचिष्ये इति प्रथमा, तथा प्रेक्षितं वस्त्रं याचिष्ये नापरमिति द्वितीया, तथाऽऽन्तरपरिभोगेनोत्तरीयपरिभोगेन वा शय्यातरेण परिभुक्तप्रायं वस्त्रं ग्रहीष्यामीति तृतीया, तथा तदेवोत्सृष्टधर्म्मकं ग्रहीष्यामीति चतुर्थी, पात्रप्रतिमा उद्दिष्टं दारुपात्रादि याचिष्ये १, तथा प्रेक्षितं २ तथा दातुः स्वाङ्गिकं परिभुक्तप्रायं द्वित्रेषु वा पात्रेषु पर्यायेण परिभुज्यमानं पात्रं याचिष्य इति तृतीया, उज्झितधर्म्मकमिति चतुर्थी, स्थानं–कायोत्सर्गाद्यर्थं आश्रयः तत्र प्रतिमाः स्थानप्रतिमाः, तत्र कस्यचिद् भिक्षोरेवंभूतोऽ

भिग्रहो भवति यथा–अहमचित्तं स्थानमुपाश्रयिष्यामि तत्र चाकुञ्चनप्रसारणादिकां क्रियां करिष्ये, तथा किञ्चिदचित्तं कुड्यादिकमवलम्बयिष्ये, तथा तत्रैव स्तोकपादविहरणं समाश्रयिष्यामीति प्रथमा प्रतिमा, द्वितीया त्वाकुञ्चनप्रसारणादिक्रियामवलम्बनं च करिष्ये न पादविहरणमिति, तृतीया त्वाकुञ्चनप्रसारणमेव नावलम्बनपादविहरणे इति, चतुर्थी पुनर्यत्र त्रयमपि न विधत्ते । अनन्तरं शरीरचेष्टानिरोध उक्त इति शरीरप्रस्तावादिदं सूत्रद्वयं–'चत्तारी'त्यादि व्यक्तं, किन्तु जीवेन स्पृष्टानि-व्याप्तानि जीवस्पृष्टानि, जीवेन हि स्पृष्टान्येव वैक्रियादीनि भवन्ति, न तु यथा औदारिकं जीवमुक्तमपि भवति मृतावस्थायां तथैतानीति, 'कम्मुम्मीसग'त्ति कार्मणेन शरीरेणोन्मिश्रकाणि न केवलानि यथौदारिकादीनि त्रीणि वैक्रियादिभिरमिश्राण्यपि भवन्ति नैवं कार्मणेनेति भावः । शरीराणि कार्मणेनोन्मिश्राणीत्युक्तमुन्मिश्राणि च स्पृष्टान्येवेति स्पृष्टप्रस्तावात् सूत्रद्वयं–'चउही'त्यादि, गतार्थं, केवलं 'फुडे'त्ति स्पृष्टः–प्रतिप्रदेशं व्याप्तः, सूक्ष्माणां पञ्चानामपि सर्वलोकात् सर्वलोके उत्पादात् बादरतैजसानां तु सर्वलोकादुद्धृत्य मनुष्यक्षेत्रे ऋजुगत्या वक्रगत्या चोत्पद्यमानानां द्वयोरूर्ध्वकपाटयोरेव बादरतेजस्त्वव्यपदेशस्येष्टत्वाच्च 'चउहिं बादरकाएहिं' इत्युक्तं, बादरा हि पृथिव्यम्बुवायुवनस्पतयः सर्वतो लोकादुद्धृत्य पृथिव्यादि घनोदध्यादि घनवातवलयादि घनोदध्यादिषु यथास्वमुत्पादस्थानेष्वन्यतरगत्योत्पद्यमाना अपर्याप्तकावस्थायामतिबहुत्वात् सर्वलोकं प्रत्येकं स्पृशन्ति, पर्याप्तास्त्वेते बादरतेजस्कायिकास्त्रसाश्च लोकासङ्ख्येयभागमेव स्पृशन्तीति, उक्तञ्च प्रज्ञापनायाम्—"एत्थ णं बादरपुढविकाइयाणं पज्जत्तगाणं ठाणा पन्नत्ता, उववाएणं लोयस्स असंखेज्जइभागे,"

१ अत्र बादरपृथ्वीकायिकानां पर्याप्तकानां स्थानानि प्रज्ञप्तानि उपपातेन लोकस्यासंख्याततमो भागः, बादरपृथ्वीकायिकानामपर्याप्तकानां स्थानानि प्रज्ञप्तानि उपपातेन सर्वलोके, बादरतेजस्कायिकानां पर्याप्तानां स्थानानि प्रज्ञप्तानि उपपातेन लोकस्यासंख्याततमो भागः, बादरतेजस्कायिकानामपर्या-

तथा "बादरपुढविकाइयाणं अपज्जत्तगाणं ठाणा पन्नत्ता, उववाएणं सव्वलोए," एवमब्वायुवनस्पतीनां, तथा "बादरतेउकाइयाणं पज्जत्ताणं ठाणा पन्नत्ता, उववाएणं लोयस्स असंखेज्जइभागे" बादरतेउकाइयाणं अपज्जत्ताणं ठाणा पन्नत्ता, लोयस्स दोसु उड्ढकवाडेसुं तिरियलोयतट्टे य" त्ति द्वयोरूर्ध्वकपाटयोरूर्ध्वकपाटस्थतिर्यग्लोके चेत्यर्थः, तिर्यग्लोकस्थालके चेत्यन्ये, तथा "कहिन्नं भंते! सुहुमपुढविकाइयाणं पज्जत्तगाणं अपज्जत्तगाण य ठाणा पन्नत्ता?, गोयमा! सुहुमपुढविकाइया जे पज्जत्तगा जे य अपज्जत्तगा ते सव्वे एगविहा अविसेसमणाणत्ता सव्वलोगपरियावन्नगा पन्नत्ता समणाउसो!" त्ति, एवमन्येऽपि, "एवं बेइंदियाणं पज्जत्तापज्जत्ताणं ठाणा पन्नत्ता, उववाएणं लोयस्स असंखेज्जइभागो" त्ति, [द्वीन्द्रियाणां पर्याप्तकापर्याप्तकानां स्थानानि प्रज्ञप्तानि उपपातेन लोकस्यासङ्ख्याततमो भागः] एवं शेषाणामपीति। चतुर्भिर्लोकः स्पृष्ट इत्युक्तमिति लोकप्रस्तावात्तस्य धर्मास्तिकायादीनां चान्योऽन्यं प्रदेशतः समतामाह–'चत्तारी'त्यादि कण्ठ्यं, नवरं प्रदेशाग्रेण–प्रदेशपरिमाणेनेति तुल्याः–समाः सर्वेषामेषामसङ्ख्यातप्रदेशत्वात्, 'लोयागासे'त्ति आकाशस्यानन्तप्रदेशत्वेन धर्मास्तिकायादिभिः सहातुल्यताप्रसक्तेर्लोकग्रहणं, 'एगजीवे'त्ति सर्वजीवानामनन्तप्रदेशत्वाद्विवक्षिततुल्यताऽभावप्रसङ्गादेकग्रहणमिति।

पूर्वं पृथिव्यादिभिः स्पृष्टो लोक इत्युक्तमिति पृथिव्यादिप्रस्तावादिदमाह—

---

प्तकानां स्थानानि प्रज्ञप्तानि लोकस्य द्वयोरूर्ध्वकपाटयोस्तिर्यग्लोके च (स्थाले च) ॥१ क्व भदन्त! सूक्ष्मपृथ्वीकायिकानामपर्याप्तकानां पर्याप्तकानां च स्थानानि प्रज्ञप्तानि?, गौतम! सूक्ष्मपृथ्वीकायिका ये पर्याप्ता ये चापर्याप्तकास्ते सर्वे एकविधा अविशेषा अनानात्वाः सर्वलोकपर्यापन्नाः प्रज्ञप्ताः श्रमणायुष्मन्!

चउण्हमेगं सरीरं नो सुपस्सं भवइ, तं०—पुढविकाइयाणं आउ० तेउ० वणस्सइकाइयाणं (सू० ३३५) चत्तारि इंदियत्था पुट्ठा वेदेंति, तं०—सोतिंदियत्थे घाणिंदियत्थे जिब्भिंदियत्थे फासिंदियत्थे (सू० ३३६) चउहिं ठाणेहिं जीवा य पोग्गला य णो संचातेंति बहिया लोगंता गमणताते, तं०—गतिअभावेणं णिरुवग्गहताते लुक्खताते लोगाणुभावेणं (सू० ३३७)।

'चउण्ह'मित्यादि कण्ठ्यं, किन्तु 'नो पस्सं'ति चक्षुषा नो दृश्यमतिसूक्ष्मत्वात्, क्वचित् नो सुपस्संति पाठः, तत्र न सुखदृश्यं—न चक्षुषः प्रत्यक्षदृश्यमनुमानादिभिस्तु दृश्यमपीत्यर्थः, बादरवायूनां तथा सूक्ष्माणां पञ्चानामपि तदेकमनेकं वा अदृश्यमिति चतुर्णामित्युक्तं, वनस्पतय इह साधारणा एव ग्राह्याः, प्रत्येकशरीरस्यैकस्यापि दृश्यत्वादिति। पृथिव्यादीनां शरीरस्य चक्षुरिन्द्रियाविषयत्वमुक्तमितीन्द्रियविषयप्रस्तावादिदमाह—'चत्तारि इंदिये'त्यादि, स्पष्टं, किन्तु इन्द्रियैरर्यन्ते—अधिगम्यन्त इतीन्द्रियार्थाः—शब्दादयः, 'पुट्ठ'त्ति स्पृष्टाः—इन्द्रियसम्बद्धा 'वेएंति'त्ति वेद्यन्ते—आत्मना ज्ञायन्ते, नयनमनोवर्जानां श्रोत्रादीनां प्राप्तार्थपरिच्छेदस्वभावत्वादिति उक्तं च—"पुट्ठं सुणेइ सद्दं रूवं पुण पासई अपुट्ठं तु। गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥१॥ इति [स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टमेव गंधं रसं च स्पर्शं च बद्धस्पृष्टं व्याकुर्यात् ॥१॥]" अनन्तरं जीवपुद्गलयोरिन्द्रियद्वारेण ग्राहकग्राह्यभाव उक्तोऽधुना तयोर्गतिधर्मं चिन्तयन्नाह—'चउही'त्यादि, व्यक्तं, परमन्येषां गतिरेव नास्तीति 'जीवा य पुग्गला ये'त्युक्तम् 'नो संचाएंति' न शक्नुवन्ति नालं 'बहिय'त्ति बहिस्ताल्लोकान्तात् अलोके इत्यर्थः, गमनतायै—गमनाय गन्तुमित्यर्थः, गत्यभावेन—लोकान्तात् परतस्तेषां गतिलक्षणस्वभावाभावादधो दीपशिखावत्, तथा निरुपग्रहतया—धर्मास्तिकायाभावेन तज्जनितगत्युपष्टम्भाभावात् गन्त्यादि-

रहितपङ्गुवत्, तथा रूक्षतया सिकतामुष्टिवत् लोकान्तेषु हि पुद्गला रूक्षतया तथा परिणमन्ति यथा परतो गमनाय नालं, कर्मपुद्गलानां तथाभावे जीवा अपि, सिद्धास्तु निरुपग्रहतयैवेति, लोकानुभावेन–लोकमर्यादया विषयक्षेत्रादन्यत्र मार्त्तण्डमण्डलवदिति ।

अन्तरोक्ता अर्था उक्तवन्निदर्शनतः प्रायः प्राणिनां प्रतीतिपथपातिनो भवन्तीति निदर्शनभेदप्रतिपादनाय पञ्चसूत्री—

चउव्विहे णाते पं० तं०—आहरणे आहरणतद्देसे आहरणतद्दोसे उवन्नासोवणए १, आहरणे चउव्विहे पं० तं०—अवाते उवाते ठवणाकम्मे पडुप्पन्नविणासी २, आहरणतद्देसे चउव्विहे पं० तं०—अणुसिट्ठी उवालंभे पुच्छा निस्सावयणे ३, आहरणतद्दोसे चउव्विहे पं० तं०—अधम्मजुत्ते पडिलोमे अंतोवणीते दुरुवणीते ४, उवन्नासोवणए चउव्विहे पं० तं०—तव्वत्थुते तदन्नवत्थुते पडिनिभे हेतू ५, हेऊ चउव्विहे—पं० तं०—जावते थावते वंसते लूसते, अथवा हेऊ चउव्विहे पं० तं०—पच्चक्खे अणुमाणे ओवम्मे आगमे, अहवा हेऊ चउव्विहे पं० तं०—अत्थित्तं अत्थि सो हेऊ १, अत्थित्तं णत्थि सो हेऊ, २, णत्थित्तं अत्थि सो हेऊ ३, णत्थित्तं णत्थि सो हेऊ ४ (सू० ३३८)।

तत्र ज्ञायते अस्मिन् सति दार्ष्टान्तिकोऽर्थ इति अधिकरणे क्तप्रत्ययोपादानात् ज्ञातं–दृष्टान्तः, साधनसद्भावे साध्यस्यावश्यंभावः साध्याभावे वा साधनस्यावश्यमभाव इत्युपदर्शनलक्षणो, यदाह–"साध्येनानुगमो हेतोः, साध्याभावे च नास्तिता। ख्याप्यते यत्र दृष्टान्तः, स साधर्म्येतरो द्विधा ॥१॥" इति, तत्र साधर्म्यदृष्टान्तोऽग्निरत्र धूमाद्यथा महानस इति, वैधर्म्यदृष्टान्तस्तु अग्न्यभावे धूमो न

भवति यथा जलाशये इति, अथवा आख्यानकरूपं ज्ञातं, तच्च चरितकल्पितभेदात् द्विधा, तत्र चरित यथा निदानं दुःखाय ब्रह्मदत्तस्येव, कल्पितं यथा प्रमादवतामनित्यं यौवनादीति देशनीयं, यथा पाण्डुपत्रेण किशलयानां देशितं, तथाहि—"जह तुब्भे तह अम्हे तुब्भेऽवि य होहिहा जहा अम्हे । अप्पाहेइ पडंतं पंडुयपत्तं किसलयाणं ॥१॥" [यथा यूयं तथा वयं यूयमपि भविष्यथ यथा वय शिक्षयति पतत् पांडुपत्रं, किशलयान् ॥१॥"] इति, अथवोपमानमात्रं ज्ञातं सुकुमारः करः किशलयमिवेत्यादिवत्, अथवा ज्ञातम्—उपपत्तिमात्रं ज्ञानहेतुत्वात्, कस्माद्यवाः क्रीयन्ते ? यस्मान्मुधा न लभ्यन्ते इत्यादिवदिति, एवमनेकधा साध्यप्रत्यायनस्वरूपं ज्ञातमुपाधिभेदात् चतुर्विधं दर्शयति—तत्र आ—अभिविधिना ह्रियते—प्रतीतौ नीयते अप्रतीतोऽर्थोऽनेनेत्याहरणं, यत्र समुदित एव दार्ष्टान्तिकोऽर्थः उपनीयते यथा पापं दुःखाय ब्रह्मदत्तस्येवेति, तथा तस्य—आहरणार्थस्य देशस्तद्देशः स चासावुपचारादाहरणं चेति प्राकृतत्वादाहरणशब्दस्य पूर्वनिपाते आहरणतद्देश इति, भावार्थश्चात्र—यत्र दृष्टान्तार्थदेशेनैव दार्ष्टान्तिकार्थस्योपनयनं क्रियते तत्तद्देशोदाहरणमिति, यथा चन्द्र इव मुखमस्या इति, इह हि चन्द्रे सौम्यत्वलक्षणेनैव देशेन मुखस्योपनयनं नानिष्टेन नयननासावर्जितत्वकलङ्कादिनेति, तथा तस्यैव—आहरणस्य सम्बन्धी साक्षात्प्रसङ्गसम्पन्नो वा दोषस्तद्दोषः स चासौ धर्म्मो धर्म्मिणः उपचारादाहरणं चेति प्राकृतत्वेन पूर्वनिपातादाहरणतद्दोष इति, अथवा तस्य—आहरणस्य दोषो यस्मिंस्तत्तथा, शेषं तथैव, अयमत्र भावार्थः—यत्साध्यविकलत्वादिदोषदुष्टं तद्दोषाहरणं, यथा नित्यः शब्दोऽमूर्त्तत्वात् घटवत्, इह साध्यसाधनवैकल्यं नाम दृष्टान्तदोषो, यच्चासभ्यादिवचनरूपं तदपि तद्दोषाहरणं, यथा सर्वथाऽहमसत्यं परिहरामि गुरुमस्तककर्त्तनवदिति, यद्वा साध्यसिद्धिं कुर्वदपि दोषान्तरमुपनयति तदपि तदेव, यथा सत्यं धर्म्ममिच्छन्ति लौकिकमुनयोऽपि—"वरं कूपशताद्वापी, वरं वापीशतात्क्रतुः । वरं क्रतुशतात्पुत्रः, सत्यं पुत्रशताद्वरम् ॥१॥" इति वचनवक्तृनारदवदिति,

अनेन च श्रोतुः पुत्रकतुप्रभृतिषु प्रायः संसारकारणेषु धर्म्मप्रतीतिराहितेति आहरणतद्दोपतेति, यथा वा—बुद्धिमता केनापि कृतमिदं जगत् सन्निवेशविशेषवत्त्वात् घटवत् स चेश्वर इति, अनेन हि स बुद्धिमान् कुम्भकारतुल्योऽनीश्वरः सिद्ध्यतीति, ईश्वरश्च स विवक्षित इति, तथा वादिना अभिमतार्थसाधनाय कृते वस्तूपन्यासे तद्विघटनाय यः प्रतिवादिना विरुद्धार्थोपनयः क्रियते पर्यनुयोगोपन्यासे वा य उत्तरोपनयः स उपन्यासोपनयः, उत्तररूपमुपपत्तिमात्रमपि ज्ञातभेदो ज्ञातहेतुत्वादिति, यथा अकर्त्ताऽऽत्मा अमूर्त्तत्वादाकाशवदित्युक्ते अन्य आह—आकाशवदेवाभोक्तेत्यपि प्राप्तमनिष्टं चैतदिति, यथा वा मांसभक्षणमदुष्टं प्राण्यङ्गत्वादोदनादिवत्, अत्राहान्यः—ओदनादिवदेव स्वपुत्रादिमांसभक्षणमप्यदुष्टमिति, यथा वा त्यक्तसङ्गा वस्त्रपात्रादिसंग्रहं न कुर्वन्ति ऋषभादिवत्, अत्राह—कुण्डिकाद्यपि ते न गृह्णन्ति तद्वदेवेति, तथा कस्मात्कर्म कुरुपे यस्माद् धनार्थीति, इह प्रथमं ज्ञातं समग्रसाधर्म्यं द्वितीयं देशसाधर्म्यं तृतीयं सदोपं चतुर्थं प्रतिवाद्युत्तररूपमित्ययमेषां स्वरूपविभाग इति, इह देशतः संवादगाथा—"चरियं च कप्पियं वा दुविहं तत्तो चउव्विहेक्केक्कं । आहरणे तद्देसे तद्दोसे चेवुवन्नासा ॥१॥" [चरितं च कल्पिकं वा द्विविधं ततश्चतुर्विधमेकैकं आहरणं तद्देशः तद्दोपश्चैव उपन्यासः ॥१॥] इति, 'अवाये, अपायः—अनर्थः स यत्र द्रव्यादिष्वभिधीयते यथैतेषु द्रव्यादिविशेषेष्वस्त्यपायो विवक्षितद्रव्यादिविशेषेष्विव, हेयता वाऽस्य यत्राभिधीयते तदाहरणमपाय इति, स च चतुर्धा द्रव्यादिभिः—तत्र द्रव्यात् द्रव्ये वाऽपायो द्रव्यमेव वा तत्कारणत्वादपायो द्रव्यापायः, एतद्धेयतासाधकं एतत्साधकं वाऽऽहरणमपि तथोच्यते, तत्प्रयोगो—द्रव्यापायः परिहार्यस्तत्र वाऽपायो वर्त्तते देशान्तरगमनेनोपार्जितद्रविणयोस्तल्लोभात् परस्परमारणपरिणतयोः स्वग्रामाद् बहिः प्राप्तावनुतापात् ह्रदत्यक्तमत्स्यगिलिततद्वित्तयोर्मत्स्यबन्धकपार्श्वात् गृहीतस्य तस्य मत्स्यस्य विदारणेऽवाप्ततद्द्रव्यलुब्धभगिन्या मत्स्यच्छेदकशस्त्राभिघातेन तदुद्दालनप्रवृत्तमारितमा-

त्रुकायास्तथाविधव्यतिकरदर्शनोत्पन्नसंवेगात् प्रतिपन्नप्रव्रज्ययोर्भ्रातृवणिजोरिव, तत्परिहारश्च प्रव्रज्यया तत्त्यागादिति, आहारणता चास्य देशेनोपनयस्याविवक्षणादिति, तथा क्षेत्रात् क्षेत्रे वा क्षेत्रमेव वाऽपायः क्षेत्रापायः, शेषं तथैव, एवमुत्तरत्रापि, तत्प्रयोगः—अपायवत् क्षेत्रं वर्जयेत् जरासन्धाभिधानप्रतिवासुदेवात् सम्भावितापायां मथुरानगरीं यथा दशार्हचक्रं वर्जयामासेति, अथवा सम्भवत्यपायः सप्रत्यनीकक्षेत्रे ससर्प्पगृहवत्, कालापायो यथा—सापायकालवर्जने यतेत, द्वैपायनो द्वारकामावर्षद्वादशकाद्धक्ष्यतीति श्रुतनेमिनाथवचनो द्वादशवर्षलक्षणसापायकालपरिजिहीर्षयोत्तरापथप्रवृत्तो द्वैपायनो यथेति, अथवा सापायोऽपि भवति कालो रुद्रादिवदिति, तथा भावापायो यथा भावापायं परिहरेत् महानागवत् नागदत्तक्षुल्लकवद्वेति, तथाहि—किल कश्चित् क्षपकः प्रस्तुतपारणकः सक्षुल्लकः समारब्धभिक्षार्थभ्रमणकः कथञ्चिन्मारितमण्डूकिकः क्षुल्लकप्रेरितोऽप्रतिपन्नतद्वचनः पुनरावश्यककाले स्मारिततदर्थः समुत्पन्नकोपः क्षुल्लकोपघातायाभ्युत्थितो वेगादागच्छन् स्तम्भ आपतितो मृतो ज्योतिष्केषूत्पन्नोऽनन्तरं च्युतो जातिस्मरदृष्टिविषसर्प्पतयोत्पन्नः सर्प्पदष्टमृतपुत्रेण च सर्प्पेषु कुपितेन राज्ञाऽऽदिष्टजनमार्यमाणेषु नागेषु नागविनाशकनरेण केनाप्योषधिबलादाकृष्यमाणो दृष्टकोपविपाकतया च मद्दृष्टिविषेण मा घातकपुरुषविघातो भवत्विति भावनया पुच्छतो निर्गच्छन् यथानिर्गमं च खण्ड्यमानः कोपलक्षणभावापायं परिहृतवानिति, तथा स एवानन्तरं नागदत्ताभिधानराजसुततयोत्पन्नो बालत्व एव प्रतिपन्नप्रव्रज्योऽत्यन्तसंविग्नस्तिर्यग्भवाभ्यासाच्चात्यन्तक्षुधालुतयादित्योदयादस्तमयं यावत् भोजनशीलोऽसाधारणगुणावर्जितदेवताभिवन्दितोऽत एव तद्गच्छगतमासादिक्षपकचतुष्टयस्येर्ष्याविषयीभूतो विनयार्थं तेषामुपदर्शितस्वार्थानीतभोजनः तैश्च मत्सराद्भोजनमध्यनिष्ठ्यूतनिष्ठीवनोऽत्यन्तोपशान्तचित्तवृत्तितया यः केवलः पुर्दैवतावन्दितस्तेषामपि क्षपकाणां संवेगहेतुत्वेन केवलज्ञानदर्शनसमृद्धिसम्पादकः कोपरूपं भावापायं परिजहारेति, अथवा

कोपादिलक्षणो भावोऽपायो भवति क्षपकस्येवेति, गाथे इह—“दव्वावाए दुन्नि उ वाणियगा भायरो धणनिमित्तं । वहपरिणयमेक्कमिक्कं दहंमि मच्छेण निव्वेओ ॥१॥ खित्तंमि अवक्कमणं दसारवग्गस्स होइ अवरेणं । दीवायणो य काले भावे मंडुकियाखमओ ॥२॥” [द्रव्यापाये द्वौ वणिग्भ्रातरौ धननिमित्तं । वधपरिणतौ एकैकस्मिन् ह्रदे मत्स्येन निर्वेदः ॥१॥ क्षेत्रे अवक्रमणं दशार्हवर्गस्य भवत्यपरस्याम् । द्वीपायनश्च काले भावे मण्डूकिकाक्षपकः ॥२॥] इति, ‘उवाए’त्ति उपायः—उपेयं प्रति पुरुषव्यापारादिका साधनसामग्री स यत्र द्रव्यादावुपेये अस्तीत्यभिधीयते यथैतेषु द्रव्यादिविशेषेषु साधनीयेष्वस्त्युपायो विवक्षितद्रव्यादिविशेषवत्, उपादेयता वाऽस्य यत्राभिधीयते तदाहरणमुपाय इति, सोऽपि द्रव्यादिभिश्चतुर्द्धैव’ तत्र द्रव्यस्य सुवर्णादेः प्रासुकोदकादेर्वा द्रव्यमेव वा उपायो द्रव्योपायः, एतत्साधनमेतदुपादेयतासाधनं वाऽऽहरणमपि तथोच्यते, तत्प्रयोगश्चैवम्—अस्ति सुवर्णादिषूपायः उपायेनैव वा सुवर्णादौ प्रवर्त्तितव्यं, तथाविधधातुवादसिद्धादिवदिति, एवं क्षेत्रोपायः—क्षेत्रपरिकर्म्मणोपायो यथा अस्त्यस्य क्षेत्रस्य क्षेत्रीकरणोपायो लाङ्गलादिस्तथाविधसाधुव्यापारो वा तेनैव वा प्रवर्त्तितव्यमत्र तथाविधान्यक्षेत्रवदिति, एवं कालोपायः—कालज्ञानोपायः, यथा अस्ति कालस्य ज्ञाने उपायः धान्यादेरिव, जानीहि वा कालं घटिकाच्छायादिनोपायेन तथाभूतगणितज्ञवदिति, एवं भावोपायो यथा भावज्ञाने उपायोऽस्ति भावं वोपायतो जानीहि, वृहत्कुमारिकाकथाकथनेन विज्ञातचौरादिभावाभयकुमारवदिति, तथाहि—किल राजगृहनगरस्वामिनः श्रेणिकराजस्य पुत्रोऽभयकुमाराभिधानो देवताप्रसादलब्धसर्वर्त्तुकफलादिसमृद्धारामस्याम्रफलानां अकालाम्रफलदोहदवद्भार्यादोहदपूरणार्थं चाण्डालचौरेणापहरणे कृते चौरपरिज्ञानार्थं नाटयदर्शननिमित्तमिलितबहुजनमध्ये वृहत्कुमारिकाकथामचकथत्, तथाहि—काचिद् वृद्धकुमारिका वाञ्छितवरलाभाय कामदेवपूजार्थमारामे पुष्पाणि चोरयन्ती आरामपतिना गृहीता सद्भावकथने विवाहितया पत्या अप-

रिभुक्तया मत्पार्श्वे समागन्तव्यमित्यभ्युपगमं कारयित्वा मुक्ता ततः कदाचित् विवाहिता सती पतिमापृच्छय रात्रावारामपतिपार्श्वे गच्छन्ती चौरराक्षसाभ्यां गृहीता सद्भावकथने प्रतिनिवृत्तया भवत्पार्श्व आगन्तव्यमितिकृताभ्युपगमा मुक्ता आरामे गता आरामिकेण सत्यप्रतिज्ञेत्यखण्डितशीला विसर्जिता इतराभ्यामपि तथैव विसर्जिता पतिसमीपमागतेति, ततो भो लोकाः पत्यादीनां मध्ये को दुष्करकारक इति नागरो पप्रच्छ, तत ईर्ष्यालुप्रभृतयः पत्यादीन् दुष्करकारित्वेनाभिदधुः, चौरचाण्डालस्तु चौरानिति, ततोऽसावनेनोपायेन भावमुपलक्ष्य चौर इतिकृत्वा तं बन्धयामासेति, अत्रापि गाथे—"एमेव चउविगप्पो होइ उवाओऽवि तत्थ दव्वम्मि। धाउव्वाओ पढमो णंगलकुलिएहिं खेत्तं तु ॥१॥ कालोऽवि नालियाईहिं होइ भावम्मि पंडिओ अभओ। चोरस्स कए णट्टि य वड्ढकुमारिं परिकहिंसु ॥२॥" [ एवमेव चतुर्विकल्पो भवत्युपायोऽपि तत्र द्रव्ये धातुवादः प्रथमः लांगूलकुलिकैः क्षेत्रं तु ॥१॥ कालोऽपि नालिकादिभिः भवति भावे पंडितोऽभयः चौरस्य कृते नृत्ये वृद्धकुमारीकथां परिचख्यौ ॥२॥ ] इति । 'ठवणाकम्मे'त्ति स्थापनं प्रतिष्ठापनं स्थापना तस्याः कर्म्म—करणं स्थापनाकर्म्म येन ज्ञातेन परमतं दूषयित्वा स्वमतस्थापना क्रियते तत्स्थापनाकर्म्मेति भावः, तच्च द्वितीयाङ्गे द्वितीयश्रुतस्कन्धे प्रथमाध्ययनं पुण्डरीकाख्यं, तत्र ह्युक्तमस्ति—काचित्पुष्करिणी कर्दमप्रचुरजला तन्मध्यदेशे महत्पुण्डरीकं तदुद्धरणार्थं चतसृभ्यो दिग्भ्यश्चत्वारः पुरुषाः सकर्दममार्गैः प्रवेष्टुमारब्धाः, ते चाकृततदुद्धरणा एवं पङ्के निमग्नाः, अन्यस्तु तटस्थोऽसंस्पृष्टकर्दम एवामोघवचनतया तदुद्धृतवानिति ज्ञातम्, उपनयश्चायमत्र—कर्दमस्थानीया विषयाः पुण्डरीकं राजादिर्भव्यपुरुषः चत्वारः पुरुषाः परतीर्थिकाः पञ्चमः पुरुषः साधुः अमोघवचनं धर्म्मदेशना पुष्करिणी संसारः तदुद्धारो निर्वाणमिति, अनेन च ज्ञातेन विषयाभिष्वङ्गवतां तीर्थिकानां भव्यस्य संसारानुत्तारकत्वं साधोश्च तद्विपर्ययं वदता आचार्येण परमतदूषणेन स्वमतं स्थापितमतो भवतीदं ज्ञातं स्थापनाक-

र्म्मेति, अथवाऽऽपन्नं दूषणमपोह्य स्वाभिमतस्थापना कार्येत्येवंविधार्थप्रतिपत्तिर्यतो जायते तत्स्थापनाकर्म्म, किल मालाकारेण केनापि राजमार्गपुरीषोत्सर्गलक्षणापराधापोहाय तत्स्थाने पुष्पपुञ्जकरणेन किमिदमिति पृच्छतो लोकस्य हिंगुशिवो देवोऽयमिति वदता व्यन्तरायतनस्थापना कृतेति, एतस्मात्किलाख्यानकादुक्तार्थः प्रतीयत इतीदं स्थापनाकर्म्मेति तथा नित्यानित्यं वस्त्वित्यसङ्गतं जिनमतं विरुद्धधर्माध्यासादिति दूषणमापन्नमेतद्व्यपोहायोच्यतेविरुद्धधर्माध्यासो न भेदनिबन्धनं विकल्पस्येव, विकल्पो हि क्रमभाविवर्णोल्लेखवान् विरुद्धधर्म्मोपेतो भवति, न च कथञ्चिदेको न भवति, खण्डशो विभक्तस्य तस्य स्वरूपलाभाभावात् प्रवृत्तिनिवृत्त्योरकारणता स्यादसमञ्जसं चैवमिति, एवञ्च विरुद्धधर्माध्यासस्य कथञ्चिद्भेदकत्वे सति न केवलं नित्यानित्यं न भवतीति दूषणमपोढमपि तु सर्वमनेकान्तात्मकमिति विकल्पज्ञानेन स्वमतं प्रसाधितम् , अतो विकल्पज्ञातं स्वमतस्थापनेन स्थापनाकर्म्मेति, अत्र निर्युक्तिगाथाः—"ठंवणाकम्मं एक्कं [ अभेदमित्यर्थः] दिट्ठंतो तत्थ पुंडरीयं तु । अहवाऽवि सन्नढक्कण हिंगुसिवकयं उदाहरणं ॥१॥" इति, सव्यभिचारो हेतुर्यः सहसोपन्यस्तस्तस्य समर्थनार्थं यो दृष्टान्तः पुनरुपन्यस्यते स स्थापनाकर्म्मेति, उक्तं च—"सव्वभिचारं हेउं सहसा वोत्तुं तमेव अन्नेहिं। उववूहइ सप्पसरं सामत्थं चऽप्पणो णाउं ॥१॥" ति, तद्यथा—अनित्यः शब्दः कृतकत्वात् , अथ वर्णात्मके शब्दे कृतकत्वं न विद्यते वर्णानां नित्यतयाऽभिहितत्वादिति व्यभिचारः, समर्थना पुनर्वर्णात्मा शब्दः कृतको निजकारणभेदेन भिद्यमानत्वात् घटपटादिवत् , घटादिदृष्टान्तेन हि वर्णानां कृतकत्वं स्थापितमिति भवत्ययं स्थापनाकर्म्मेति, 'पडुप्पन्नविणासि'त्ति प्रत्यु-

१ स्थापना कर्म अभिन्नं दृष्टान्तस्तत्र पुंडरीकं तु अथवा पिसंज्ञाच्छादकहिंगुशिवदेवकृतमुदाहरणम् ॥१॥ २ सव्यभिचारं हेतुं सहसोक्त्वा तमेवान्यैः उपबृंहयति सप्रसंगं सामर्थ्यं चात्मनो ज्ञात्वा ॥१॥

त्पन्नस्य-तत्कालोत्पन्नवस्तुनो विनाशोऽभिधेयतया यत्रास्ति तत्प्रत्युत्पन्नविनाशीति, यथा केनापि वणिजा दुहित्रादिस्त्रीपरिवारशीलविनाशरक्षार्थं तदासक्तिनिमित्तस्वगृहासन्नराजगान्धर्विकगुणनिकायाः स्वगृहे कुलदेवतानिवेशनाद् गुणनिकाकाले तस्या देवताया अग्रतः अतोधनादव्याजेन राजापराधपरिहारेण विनाशः कृतः, एवं गुरुणा शिष्यान् क्वचिद् वस्तुन्यध्युपपद्यमानानुपलभ्य तस्य तदासक्तिनिमित्तमुपहन्तव्यमित्येवं प्रत्युत्पन्नविनाशनीयताज्ञापकत्वात् प्रत्युत्पन्नविनाशिज्ञातता गन्धर्विकाख्यानकस्यावगन्तव्येति, उक्तञ्च—"होति पडुप्पन्नविणासणंमि गंधव्विया उदाहरणं। सीसोऽवि कत्थइ जई अज्झोववज्जेज्ज तो गुरुणा ॥१॥ वारेयव्वो उवाएणं" इति, अथवा अकर्त्ताऽऽत्मा अमूर्त्तत्वादाकाशवदित्युत्पन्ने आत्मनोऽकर्तृत्वापत्तिलक्षणे दूषणे तद्विनाशायोच्यते—कर्त्तैवात्मा कथञ्चिन्मूर्त्तत्वाद्देवदत्तवदिति। व्याख्यातमाहरणं, आहरणता चैतद्भेदानां देशेन दोषवत्तया चोपनयनाभावादिति। अथाहरणतद्देशो व्याख्यायते—स च चतुर्धा, तत्र अनुशासनमनुशास्तिः—सद्गुणोत्कीर्त्तनेनोपबृंहणं सा विधेयेति यत्रोपदिश्यते साऽनुशास्तिः, यथा गुणवन्तोऽनुशासनीया भवन्ति, यथा साधुलोचनपतितरजःकणापनयनेन लोकसम्भावितशीलकलङ्का तत्क्षालनायाराधितदेवताकृतप्रातिहार्या चालनीन्यस्थापितोदकाच्छोटनोद्घाटितचंपागोपुरत्रया सुभद्रा अहो शीलवतीति महाजनेनानुशासितेति, उक्तं च—"आहरणं तद्देसे चउहा अणुसट्ठि तह उवालंभो। पुच्छा निस्सावयणं होइ सुभद्दाऽणुसट्ठीए ॥१॥ साहुक्कारपुरोयं जह सा अणुसासिया पुरजणेणं। वेयावच्चाईसुवि एन

१ भवति प्रत्युत्पन्नविनाशने गान्धर्विकोदाहरणं शिष्योऽपि कुत्रापि यदि अध्युपपद्येत तदा गुरुणोपायेन वारयितव्यः॥ २ आहरणं तद्देशे चतुर्धा अनुशास्तिस्तथोपालम्भः पृच्छा निश्रावचनं भवति सुभद्रानुशास्तौ ॥१॥ साधुकारपूर्वकं यथा साऽनुशिष्टा पौरजनेन वैयावृत्त्यादिष्वपि एवं समानानुपबृंहयेत् ॥२॥

जयंतेववूहेज्जा ॥२॥" इति, इह च तथाविधवैयावृत्त्यकरणादिनाप्युपनयः सम्भवति तत्त्यागेन च महाजनानुशास्तिमात्रेणोपनयः कृत इत्याहरणतद्देशतेति, एवमनभिमतांशत्यागादभिमतांशोपनयनमुत्तरेष्वपि भावनीयमिति, तथा उपालम्भनं उपालम्भो—भङ्ग्यन्तरेणानुशासनमेव स यत्राभिधीयते स उपालंभो यथा क्वचिदपराधवृत्तयो विनेया उपालम्भनीयाः यथा महावीरसमवसरणे सविमानागतचन्द्रादित्योद्योतेन कालविभागमजानती मृगावतीनाम्नी साध्वी स्थिता ततस्तद्गमनेऽतिकालोऽयमिति सम्भ्रान्ता सह साध्वीभिरार्यचन्दनासमीपं गता तया चोपालब्धा—अयुक्तमिदं भवादृशीनामुत्तमकुलजातानामिति, तथा पृच्छा—प्रश्नः किं कथं केन कृतमित्यादि सा यत्र विधेयतयोपदिश्यते सा पृच्छा, यथा प्रच्छनीया ज्ञानिनो निर्णयार्थिभिर्यथा भगवान् कोणिकेन पृष्टः, तथाहि—किल कोणिकः श्रेणिकराजपुत्रः श्रमणं भगवन्तं महावीरं पप्रच्छ, तद्यथा—भदन्त ! चक्रवर्त्तिनोऽपरित्यक्तकामा मृताः क्वोत्पद्यन्ते ?, भगवताऽभिहितं—सप्तमनरकपृथिव्यां, ततोऽसौ बभाण—अहं क्वोत्पत्स्ये ?, स्वामिनोक्तं—षष्ठ्यां, स उवाच—अहं किं न सप्तम्यां ?, स्वामिना जगदे—सप्तम्यां चक्रवर्त्तिनो यान्ति, ततोऽसावभिदधौ—किमहं न चक्रवर्त्ती ?, यतो ममापि हस्त्यादिकं तत्समानमस्ति, स्वामिना प्रत्यूचे—तव रत्ननिधयो न सन्ति, ततोऽसौ कृत्रिमाणि रत्नानि कृत्वा भरतक्षेत्रसाधनप्रवृत्तः कृतमालिकयक्षेण गुहाद्वारे व्यापादितः षष्ठीं गत इति। तथा 'निस्सावयणे'त्ति निश्रया वचनं निश्रावचनम्, अयमर्थः—कमपि सुशिष्यमालम्ब्य यदन्यप्रबोधार्थं वचनं तन्निश्रावचनं तद्यत्र विधेयतयोच्यते तदाहरणं निश्रावचनं, यथा असहनान् विनेयान् मार्दवसम्पन्नमन्यमालम्ब्य किञ्चिद् ब्रूयात्, गौतममाश्रित्य भगवानिवेति, तथाहि—किल गौतमं तापसादिप्रव्रजितानां केवलोत्पत्तावनुत्पन्नकेवलत्वेनाधृतिमन्तं चिरसंश्लिष्टोऽसि गौतम ! चिरपरिचितोऽसि गौतम ! मा त्वमधृतिं कार्षीरित्यादिना वचनसन्दोहेनानुशासयता अन्येऽप्यनुशासिताः, तदनुशासनार्थं द्रुमपत्रका-

ध्यानं न प्रणिन्ये इति. उक्तं च—“पुच्छाए कोणिए खलु निस्सावयणंमि गोयमस्सामि” [ पृच्छायां कोणिकः खलु निश्रावचने गौतमस्वामी ] इति ॥ व्याख्यातं तद्देशोदाहरणम् , तद्दोषोदाहरणमथ व्याख्यायते, तच्च चतुर्द्धा, तत्र ‘अहम्मजुत्ते’त्ति यदुदाहरणं कस्यचिदर्थस्य साधनायोपादीयते केवलं पापाभिधानस्वरूपं येन चोक्तेन प्रतिपाद्यस्याधर्म्मबुद्धिरुपजन्यते तदधर्म्मयुक्तं, तद्यथा—उपायेन कार्याणि कुर्यात् कोलिकनलदामवत् , तथाहि—पुत्रखादकमत्कोटकमार्गेणोपलब्धबिलवासानामशेषमत्कोटकानां तप्तजलस्य बिले प्रक्षेपणतो मारणदर्शनेन रञ्जितचित्तचाणक्यावस्थापितेन चौरग्राहनलदामाभिधानकुविन्देन चौर्यसहकारितालक्षणोपायेन विश्वासिता मिलिताश्चौरा विषमिश्रभोजनदानतः सर्वे व्यापादिता इति, आहरणतद्दोषता चास्याधर्म्मयुक्तत्वात् तथाविधश्रोतुरधर्म्मबुद्धिजनकत्वाच्चेति, अत एव नैवंविधमुदाहर्त्तव्यं यतिनेति, ‘पडिलोमे’त्ति प्रतिकूलं यत्र प्रातिकूल्यमुपदिश्यते यथा शठं प्रति शठत्वं कुर्यात् , यथा चण्डप्रद्योते तदपहरणार्थं तदपहृताभयकुमारश्चकारेति, तद्दोषता चास्य श्रोतुः परापकारकरणनिपुणबुद्धिजनकत्वात् , अथवा धृष्टप्रतिवादिना द्वावेव राशी जीवश्चाजीवश्चेत्युक्ते तत्प्रतिघातार्थं कश्चिदाह—तृतीयोऽप्यस्ति नोजीवाख्यो गृहकोलिकादिच्छिन्नपुच्छवदिति, अस्यापि तद्दोषताऽपसिद्धान्ताभिधानादिति, ‘अत्तोवणीए’त्ति आत्मैवोपनीतः—तथा निवेदितो नियोजितो यस्मिंस्तत्तथा, येन ज्ञातेन परमदूषणायोपात्तेनात्ममतमेव दुष्टतयोपनीयते यथा पिङ्गलेनात्मा तदात्मोपनीतं, तथाहि—कथमिदं तडागमभेदं भविष्यतीति राज्ञा पृष्टः पिङ्गलाभिधानः स्थपतिरवोचत्—भेदस्थाने कपिलादिगुणे पुरुषे निखाते सतीति, अमात्येन तु स एव तत्र तद्गुणत्वान्निखात इति तेनार्गेन नियुक्तः, स्ववचनदोषात् , तदेवंविधमात्मोपनीतमिति, अत्रोदाहरणं यथा सर्व्वे सत्त्वा न हन्तव्या इत्यस्य पक्षस्य दूषणाय कश्चिदाह—अन्यधर्म्मस्थिता हन्तव्या विष्णुनेव दानवा इत्येवंवादिना आत्मा हन्तव्यतयोपनीतो धर्म्मान्तरस्थितपुरुषाणामिति, तद्दोषता

तु प्रतीतैवास्येति, 'दुरुवणीए'त्ति दुष्टमुपनीतं–निगमितं योजितमस्मिन्निति दुरुपनीतं परिव्राजकवाक्यवद्, यथा हि किल कश्चित् परिव्राजको जालव्यग्रकरो मत्स्यबन्धाय चलितः, केनचिद् धूर्त्तेन किञ्चिदुक्तस्तेन च तस्योत्तरमसङ्गतं दत्तम्, अत्र च वृत्तं—"कन्थाऽऽचार्याऽधना ते ननु शफरवधे जालमश्नासि मत्स्यांस्तेमे मद्योपदंशान् पिबसि ननु? युतो वेश्यया यासि वेश्याम्?। दत्त्वाऽरीणां गलेंऽह्रि क्व नु तव रिपवो? येषु सन्धिं छिनद्मि, चौरस्त्वं? द्यूतहेतोः कितव इति कथं? येन दासीसुतोऽस्मि ॥१॥" इत्येवं प्रकृतसाध्यानुपयोगि स्वमतदूषणावहं वा यत्तद्दार्ष्टान्तिकेन सह साधर्म्याभावाद् दुरुपनीतमिति, यथा नित्यः शब्दो घटवद्, इह घटे नित्यत्वं नास्त्येवेति कुतस्तत्साधर्म्याच्छब्दस्य नित्यत्वमस्तु?, अपि त्वनित्यत्वात् घटस्य तत्साधर्म्याच्छब्दस्यानित्यत्वमेवानभिमतं सिध्यतीति साध्यानुपयोगीदमुदाहरणम्, तथा सन्तानोच्छेदो मोक्षो दीपस्येवेत्यभ्युपगमे दीपदृष्टान्तादनादिमतोऽपि सन्तानस्यावस्तुता प्रतीयते तथाहि–दीपस्यात्मनश्च सन्तानोच्छेद उत्तरक्षणाजनकत्वात्, तत्त्वे चार्थक्रियाकारित्वलक्षणसत्त्वाभावादन्त्यक्षणस्यावस्तुत्वम् अवस्तुत्वजनकत्वात् पूर्वक्षणस्यापि तत एव पूर्वतरस्यापीत्येवं समस्तस्यापि सन्तानस्यावस्तुत्वम्, अथ क्षणान्तरानारम्भेऽपि स्वगोचरज्ञानजननलक्षणार्थक्रियाकारित्वादन्त्यक्षणो वस्तु भविष्यति, नैवम्, एवं हि भूतभाविपर्यायपरम्परापि योगिज्ञानं स्वविषयमुत्पादयतीति वस्तुत्वं स्वीकुर्यात्. तन्न क्षणान्तरानारम्भे वस्तुत्वमित्यतो भवति दीपज्ञातं स्वमतदूषणावहमिति, अथवा अनित्यः शब्दः कृतकत्वाद् घटवदिति वक्तव्ये सम्भ्रमादनित्यो घटः कृतकत्वाच्छब्दवदिति वदतो दुरुपनीतं विपर्ययोपनयनादिति, अत्र गाथा—"पढमं अहम्मजुत्तं पडिलोमं अत्तणो उवन्नासो। दुरुवणियं च चउत्थं अहम्मजुत्तंमि नलदामो ॥१॥ पडिलोमे जह अभओ पज्जोयं हरइ अवहिओ संतो" इति "अत्तउ-

१ प्रथममधर्मयुक्तं प्रतिलोम आत्मन उपन्यासः दुरुपनीतं च चतुर्थमधर्मयुक्ते नलदामः ॥१॥ प्रतिलोम्नि यथाऽभयः प्रद्योतं हरति अपहृतः सन्॥

वन्नासंमि य तलायभेयंमि पिंगलो थवई। अणिमिसगेण्हणभिक्खुग दुरुवणीए उदाहरणं ॥१॥" इति, उक्त आहरणतद्दोषोऽधुनोपन्यासोपनय उच्यते, स च चतुर्द्धा, तत्र 'तव्वत्थुए'त्ति तदेव-परोपन्यस्तसाधनं वस्त्विति-उत्तरभूतं वस्तु यस्मिन्नुपन्यासोपनये स तद्वस्तुकोऽथवा तदेव-परोपन्यस्तं वस्तु तद्वस्तु तदेव तद्वस्तुकं तद्युक्त उपन्यासोपनयोऽपि तद्वस्तुक इत्युच्यते एवमुत्तरत्रापि, यथा कश्चिदाह-समुद्रतटे महान् वृक्षोऽस्ति, तच्छाखा जलस्थलयोरुपरि स्थिताः, तत्पत्राणि च यानि जले निपतन्ति तानि जलचरा जीवा भवन्ति यानि च स्थले निपतन्ति तानि स्थलचरा इति, अन्यस्तदुपन्यस्तमेव तरुपत्रपतनवस्तु गृहीत्वा तदुक्तं विघटयति, यदुत-यानि पुनर्मध्ये तेषां का वार्त्तत्येतदुपपत्तिमात्रमुत्तरभूतं तद्वस्तुक उपन्यासोपनयो, ज्ञातत्वं चास्य ज्ञातनिमित्तत्वात्, अथवा यथारूढमेव ज्ञातमेतत्, तथा हि एवं प्रयोगोऽस्य-जलस्थलपतितपत्राणि न जलचरादिसत्त्वाः सम्भवन्ति, जलस्थलमध्यपतितपत्रवत्, तन्मध्यपतितपत्राणां हि जलस्थलपतितपत्रजलचरत्वादिप्राप्तिवदुभयरूपप्रसङ्गो, न चोभयरूपाः सत्त्वा अभ्युपगता इति, अथवा नित्यो जीवः अमूर्त्तत्वादाकाशवदित्युक्ते आह-अनित्य एवास्तु अमूर्त्तत्वात् कर्म्मवदिति। तथा 'तयन्नवत्थुए'त्ति तस्मात्-परोपन्यस्ताद् वस्तुनोऽन्यदुत्तरभूतं वस्तु यस्मिन्नुपन्यासोपनये स तदन्यवस्तुको यथा जले पतितानि जलचरा इत्युक्ते एतद्विघटनाय पतनादन्यदुत्तरमाह-यानि पुनः पातयित्वा खादति नयति वा तानि किं भवन्ति?, न किञ्चिदित्यर्थोऽयमपि ज्ञापकतया ज्ञातमुक्तः, अथवा यथारूढमेव ज्ञातमेषः, तथाहि-न जलस्थलपतितानि पत्राणि जलचरादिसत्त्वाः सम्भवन्ति, मनुष्याद्याश्रितानीव, अयमभिप्रायो यथा-जलाद्याश्रितत्वात् जलचरादितया तानि सम्पद्यन्ते तथा मनुष्याद्याश्रिततया मनुष्यादिभवयूकादितयाऽपि सम्पद्यन्ताम्, आश्रितत्वस्याविशेषात्, न च तानि तथाऽभ्युप-

गमोपन्यासे न तउागभेदे पिंगलः स्थपतिः अनिमेषग्राहकभिक्षुर्दुरुपनीते उदाहरणं ॥१॥

गम्यन्त इति जलादिगतानामपि जलचरत्वाद्यसम्भव इति, तथा 'पडिनिभे'त्ति यत्रोपन्यासोपनये वादिनोपन्यस्तवस्तुनः सदृशं वस्तूत्तरदानायोपनीयते स प्रतिनिभो यथा कोऽपि प्रतिजानीते यदुत–यो मामपूर्वं श्रावयति तस्मै लक्षमूल्यमिदं कटोरकं ददामीति, स च श्रावितोऽपि तन्नापूर्वमिति प्रतिपद्यते, तत एकेन सिद्धपुत्रेणोक्तम्—"तुंज्झ पिया मज्झ पिउणो, धारेइ अणूणयं सयसहस्सं। जइ सुयपुव्वं दिज्जउ अह न सुयं खोरयं देहि ॥१॥" इति, प्रतिनिभता चास्य सर्वस्मिन्नप्युक्ते श्रुतपूर्वमेवेदं ममेत्येवमसत्यं वचो ब्रुवाणस्य परस्य निग्रहाय तव पिता मम पितुर्द्धारयति लक्षमित्येवंविधस्य द्विपाशरज्जुकल्पस्यासत्यस्यैव वचस उपन्यस्तत्वादिति, अस्य चोपपत्तिमात्ररूपस्याप्यर्थज्ञापकतया ज्ञातत्वमुक्तमिति, अथवा यथारूढमेव ज्ञातमेषः, तथाहि अत्रायं प्रयोगः—नास्त्यश्रुतपूर्वं किञ्चित् श्लोकादि ममेत्येवमभिमानधनं ब्रूमो वयम्–अस्ति तवाश्रुतपूर्वं वचनं तव पिता मम पितुर्द्धारयत्यनूनं शतसहस्रमिति यथेति। तथा 'हेउ'त्ति यत्रोपन्यासोपनये पर्यनुयोगस्य हेतुरुत्तरतयाऽभिधीयते स हेतुरिति, यथा केनापि कश्चित् पर्यनुयुक्तः–अहो किं यवाः क्रीयन्ते त्वया ?, स त्वाह–येन मुधैव न लभ्यन्ते इति, तथा कस्मात् ब्रह्मचर्यादिकष्टमनुष्ठीयते ?, यस्मादकृततपसां नरकादौ गुरुतरा वेदना भवतीति, इदमपि उपपत्तिमात्रमेव ज्ञातत्वेनोक्तमर्थज्ञापकत्वादिति, अथवाऽयमपि यथारूढं ज्ञातमेव, तथाह्यस्यैवं प्रयोगः–कस्मात् त्वया प्रव्रज्या क्रियत इति पृष्टः सन् केनापि साधुराह–यतस्तां विना मोक्षो न भवति, एतत्समर्थनायैव साधुस्तमाह–भो यवग्राहिन् ! किमिति त्वया यवाः क्रीयन्ते ?, स त्वाह–येन मुधा न लभ्यन्ते, साधोश्चायमभिप्रायो यथा–मुधालाभाभावात् तान् क्रीणासि त्वमेवमहं तां विना तदभावात्तां करोमीति, इह च मुधा यवालाभस्य क्रयणे हेतोः सतो दृष्टान्ततयोपन्यस्तत्वाद्धेतूपन्यासोपनयज्ञाततेति, इह च किञ्चिद्विशेषेणै-

१ तव पिता मम पितुर्धारयत्यनूनं शतसहस्रं यदि श्रुतपूर्वं ददातु अथ न श्रुतं क्षौरकं देहि ॥१॥

संख्या ज्ञातभेदाः सम्भवन्त्यन्येऽपि किन्तु ते न विवक्षिताः अन्तर्भावो वा कथञ्चित् गुरुभिर्विवक्षितो न च तं वयं सम्यग् जानीम इति। अथ ज्ञातानंतरं ज्ञातवद्धेतोः साध्यसिद्ध्यङ्गत्वात् तद्भेदान् हेऊ इत्यादिना सूत्रत्रयेणाह—व्यक्तं चैतत्, नवरं हिनोति—गमयति ज्ञेयमिति हेतुः—अन्यथाऽनुपपत्तिलक्षणः, उक्तञ्च—"अन्यथाऽनुपपन्नत्वं, हेतोर्लक्षणमीरितम्। तदप्रसिद्धिसन्देहविपर्यासैस्तदाभता ॥१॥" इति, प्रागुक्तश्च हेतुः पर्यनुयुक्तस्योत्तररूपमुपपत्तिमात्रमयं तु साध्यं प्रत्यन्वयव्यतिरेकवान् तथाविधदृष्टान्तस्मृततद्भाव इति, स नैकलक्षणोऽपि किञ्चिद्विशेषाच्चतुर्द्धा, तत्र 'जावए'त्ति यापयति—वादिनः कालयापनां करोति, यथा काचिदसती एकैकरूपकेण एकैकमुष्ट्रलिण्डं दातव्यमिति दत्तशिक्षस्य पत्युस्तद्विक्रयार्थमुज्जयनीप्रेषणोपायेन विटसेवायां कालयापनां कृतवतीति यापकः; उक्तञ्च—"उब्भामिया य महिला जावगहेउम्मि उट्टलिंडाइं ॥" इति, इह वृद्धैर्व्याख्यातम्—प्रतिवादिनं ज्ञात्वा तथा तथा विशेषणबहुलो हेतुः कर्त्तव्यो यथा कालयापना भवति, ततोऽसौ नावगच्छति प्रकृतमिति, स चेदृशः सम्भाव्यते—सचेतना वायवः अपरप्रेरणे गति तिर्यग्गानियतत्वाभ्यां गतिमत्त्वात् गोशरीरवदिति, अयं हि हेतुर्विशेषणबहुलतया परस्य दुरधिगमत्वात् वादिनः कालयापनां करोति, स्वरूपमस्यानवबुध्यमानो हि परो न झगित्येवानैकान्तिकत्वादिदूषणोद्भावनाय प्रवर्त्तितुं शक्नोति, अतो भवत्यस्माद् वादिनः कालयापनेति, अथवा योऽप्रतीतव्याप्तिकतया व्याप्तिसाधकप्रमाणान्तरसव्यपेक्षत्वान्न झगित्येव साध्यप्रतीतिं करोति अपि तु कालक्षेपेणेत्यसौ साध्यप्रतीतिं प्रति कालयापनाकारित्वाद्यापकः, यथा क्षणिकं वस्त्विति पक्षे बौद्धस्य सत्त्वादिति हेतुः, नहि सत्त्वश्रवणादेव क्षणिकत्वं प्रत्येति पर इत्यतो बौद्धः सत्त्वं क्षणिकत्वेन व्याप्तमिति प्रसाधयितुमुपक्रमते, तथाहि—सत्त्वं नामार्थक्रियकारित्वमेव, अन्यथा वन्ध्यासुतस्यापि सत्त्वप्रसङ्गः, अर्थक्रिया तु नित्यस्यैकरूपत्वान्न क्रमेण नापि यौगपद्येन क्षणान्तरे अकर्तृत्वप्रसङ्गादित्यतोऽर्थक्रिया-

लक्षणं सत्त्वमक्षणिकान्निवर्त्तमानं क्षणिक एवावतिष्ठत इत्येवं क्षेपेण साध्यसाधने कालयापनाकारित्वाद् यापकः सत्त्वलक्षणो हेतुरिति। तथा स्थापयति पक्षमक्षेपेण प्रसिद्धव्याप्तिकत्वात् समर्थयति, यथा परिव्राजकधूर्त्तो लोकमध्यभागे दत्तं बहुफलं भवति तच्चाहमेव जानामीति मायया प्रतिग्राममन्यान्यं लोकमध्यं परूपयति सति तन्निग्रहाय कश्चित् श्रावको लोकमध्यस्यैकत्वात् कथं बहुषु ग्रामादिषु तत्सम्भव इत्येवंविधोपपत्त्या त्वद्दर्शितो भो लोकमध्यभागो न भवतीति पक्षं स्थापितवानिति स्थापको हेतुः, उक्तश्च—"लोगस्स मज्झजाणण थावगहेऊ उदाहरणं" इति, स चायं–अग्निरत्र धूमात्, तथा नित्यानित्यं वस्तु द्रव्यपर्यायतस्तथैव प्रतीयमानत्वादिति, अनयोश्च प्रतीतव्याप्तिकतया अकालक्षेपेण साध्यस्थापनात् स्थापकत्वमिति। तथा व्यंसयति–परं व्यामोहयति शकटतित्तिरीग्राहकधूर्त्तवद् यः स व्यंसक इति, तथाहि–कश्चिदन्तराललब्धमृततित्तिरीयुक्तेन शकटेन नगरं प्रविष्टः उक्तो धूर्त्तेन यथा–शकटतित्तिरी कथं लभ्यते?, स च किलायं शकटस्य सत्कां तित्तिरीं याचत इत्यभिप्रायादवोचत्–तर्प्पणालोडिकयेति, सक्त्वालोडनेन जलाद्यालोडितसक्तुभिरित्यर्थः, ततो धूर्त्तः साक्षिण आहृत्य सतित्तिरीकं शकट जग्राह, उक्तवांश्च मदीयमेतद्, अनेनैव शकटतित्तिरीति दत्तत्वात्, मया तु शकटसहिता तित्तिरी शकटतित्तिरीति गृहीतत्वादिति, ततो विषण्णः शाकटिक इति, अत्रोक्तम्–"सा सगडतित्तिरी वंसगंमि हेउंमि होइ णायव्वा॥" इति, स चैवं–अस्ति जीवोऽस्ति घट इत्यभ्युपगमे जीवघटयोरस्तित्वमविशेषेण वर्त्तते ततस्तयोरेकत्वं प्राप्तमभिन्नशब्दविषयत्वादिति व्यंसको हेतुः, घटशब्दविषयघटस्वरूपवत्, अथास्तित्वं जीवादौ न वर्त्तते ततो जीवाद्यभावः स्यादस्तित्वाभावादिति व्यंसकः प्रतिवादिनो व्यामोहकत्वादिति, तथा 'लूसए'त्ति लूषयति–मुष्णाति व्यंसकापादितमनिष्टमिति लूषको हेतुः, स एव शाकटिको यथा–धूर्त्तान्तरशिक्षितेन हि शाकटिकेन तेन याचितोऽसौ धूर्त तर्हि देहि मे तर्प्पणालोडिकामिति, ततो धू-

नेनोक्ता स्वभार्या–देहस्मे मल्कूनालोडयेति, ताञ्च तथा कुर्वन्तीं तद्भार्यां गृहीत्वाऽसौ प्रस्थितोऽवादीच्च धूर्तमभि–मदीयेयं तर्पण-मिति मल्कूनालोडगतीति तर्पणालोडिकेति भवतैव दत्तत्वादिति, स चायं यदि जीवघटयोरस्तित्ववृत्त्या एकत्वं सम्भावयसि तदा सर्वभावानामेकत्वं स्यात्, सर्वेष्वप्यस्तित्ववृत्तेरविशेषात्, न चैवमिति, इहास्तित्ववृत्तेरविशेषादित्ययं लूपको जीवघटयोरेकत्वापादन-लक्षणस्याभावापत्तिलक्षणस्य वाऽनिष्टस्य परापादितस्यानेन लूपितत्वादिति, अथवेति हेतोः प्रकारान्तरताद्योतको विकल्पार्थो हिनोति–गमयति प्रमेयमर्थं स वा हीयते–अधिगम्यते अनेनेति हेतुः–प्रमेयस्य प्रमितौ कारणं प्रमाणमित्यर्थः, स चतुर्विधः स्वरूपादिभेदात्, तत्र 'पच्चक्खे'त्ति अक्षाणि अश्नुते—व्याप्नोत्यर्थानित्यक्षः–आत्मा तं प्रति यद्वर्त्तते ज्ञानं तत्प्रत्यक्षं निश्चयतोऽवधिमनःपर्यायकेव-लानि, अक्षाणि चेन्द्रियाणि प्रति यत्तत्प्रत्यक्षं व्यवहारतस्तच्चक्षुरादिप्रभवमिति, लक्षणमिदमस्य—"अपरोक्षतयाऽर्थस्य, ग्राहकं ज्ञान-मीदृशम्। प्रत्यक्षमितरत् ज्ञेयं, परोक्षं ग्रहणेक्षया ॥१॥" ग्रहणापेक्षयेति भावः, अन्विति–लिङ्गदर्शनसम्बन्धानुसरणयोः पश्चान्मानं–ज्ञानमनुमानम्, एतल्लक्षणमिदम्—"साध्याविनाभुवो लिङ्गात्, साध्यनिश्चायकं स्मृतम्। अनुमानं तदभ्रान्तं, प्रमाणत्वात् समक्ष-वत् ॥१॥" इति, एतच्च साध्याविनाभूतहेतुजन्यत्वेनाप्युपचाराद्धेतुरिति, तथा उपमानमुपमा सैवोपम्यं अनेन गवयेन सदृशोऽसौ गौरिति सादृश्यप्रतिपत्तिरूपं, उक्तञ्च—"गां दृष्ट्वाऽयमरण्येऽन्यं, गवयं वीक्षते यदा। भूयोऽवयवसामान्यभाजं वर्त्तुलकण्ठकम् ॥१॥ तस्यामेव त्ववस्थायां, यद्विज्ञानं प्रवर्त्तते। पशुनैतेन तुल्योऽसौ, गोपिण्ड इति सोपमा ॥२॥" इति, अथवा श्रुतातिदेशवाक्यस्य गवयार्थोपलम्भने संज्ञासंज्ञिसम्बन्धज्ञानमुपमानमुच्यत इति, आगम्यन्ते–परिच्छिद्यन्ते अर्था अनेनेत्यागमः–आप्तवचनसम्पाद्यो वि-प्रकृष्टार्थप्रत्ययः, उक्तञ्च—"दृष्टेष्टाव्याहताद् वाक्यात्परमार्थाभिधायिनः। तत्त्वग्राहितयोत्पन्नं, मानं शाब्दं प्रकीर्त्तितम् ॥ १ ॥

आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकम्। तत्त्वोपदेशकृत् सार्वं, शास्त्रं कापथघट्टनम् ॥१॥" इति। इहान्यथाऽनुपपन्नत्वलक्षणहेतुजन्यत्वादनुमानमेव कार्ये कारणोपचाराद्धेतुः, स च चतुर्विधः, चतुर्भङ्गीरूपत्वात्, तत्र अस्ति—विद्यते तदिति—लिङ्गभूतं धूमादिवस्तु इतिकृत्वा अस्ति सः—अग्न्यादिकः साध्योऽर्थ इत्येव हेतुरिति अनुमानं, तथा अस्ति तदग्न्यादिकं वस्त्वतो नास्त्यसौ तद्विरुद्धः शीतादिरर्थ इत्येवमपि हेतुरनुमानमिति, तथा नास्ति तदग्न्यादिकमतः शीतकालेऽस्ति स शीतादिरर्थ इत्येवमपि हेतुरनुमानमिति, तथा नास्ति तद्वृक्षत्वादिकमिति नास्ति शिंशपात्वादिकोऽर्थ इत्यपि हेतुरनुमानमिति, इह च शब्दे कृतकत्वस्यास्तित्वादस्त्यनित्यत्वं घटवत्तथा धूमस्यास्तित्वादिहास्त्यग्निर्महानस इवेत्यादिकं स्वभावानुमानं कार्यानुमानञ्च प्रथमभङ्गकेन सूचितम् १, तथा अग्नेरस्तित्वाद्धूमास्तित्वाद्वा नास्ति शीतस्पर्श इत्यादि विरुद्धोपलम्भानुमानं विरुद्धकार्योपलम्भानुमानञ्च, तथाऽग्नेर्धूमस्य वाऽस्तित्वान्नास्ति शीतस्पर्शजनितदन्तवीणारोमहर्षादिः पुरुषविकारो महानसवदित्यादि कारणविरुद्धोपलम्भानुमानम् कारणविरुद्धकार्योपलम्भानुमानं च द्वितीयभङ्गकेनाभिहितं २ तथा छत्रादेरग्नेर्वा नास्तित्वादस्ति क्वचित्कालादिविशेषे आतपः शीतस्पर्शो वा पूर्वोपलब्धप्रदेश इवेत्यादिकं विरुद्धकारणानुपलम्भानुमानं विरुद्धानुपलम्भानुमानञ्च तृतीयभङ्गकेनोपात्तं ३ तथा दर्शनसामग्र्यां सत्यां घटोपलम्भस्य नास्तित्वान्नास्तीह घटो विवक्षितप्रदेशवदित्यादि स्वभावानुपलब्ध्यनुमानं तथा धूमस्य नास्तित्वान्नास्त्यविकलो धूमकारणकलापः प्रदेशान्तरवदित्यादि कार्यानुपलब्ध्यनुमानम्, तथा वृक्षनास्तित्वात् शिंशपा नास्तीत्यादि व्यापकानुपलम्भानुमानं तथाऽग्नेर्नास्तित्वाद्धूमो नास्तीत्यादि कारणानुपलम्भानुमानञ्च चतुर्थभङ्गकेनावरुद्धमिति, न च वाच्यं न जैनप्रक्रियेयं, सर्वत्र जैनाभिमतान्यथानुपपन्नत्वरूपस्य हेतुलक्षणस्य विद्यमानत्वादिति ४।

अनन्तरं हेतुशब्देन ज्ञानविशेष उक्तस्तदधिकाराद् ज्ञानविशेषनिरूपणायाह—

चउव्विहे संखाणे पं० तं०—पडिकम्मं १ ववहारे २ रज्जू ३ रासी ४। अहोलोगे णं चत्तारि अंधगारं करेंति, तं०—नरगा णेरइया पावाइं कम्माइं असुभा पोग्गला ?, तिरियलोगे णं चत्तारि उज्जोतं करेंति, तं०—चंदा सूरा मणि जोनी २, उड्ढलोगे णं चत्तारि उज्जोतं करेंति, तं०—देवा १ देवीओ २ विमाणा ३ आभरणा ४, ३ (सू० ३३८)॥ चउट्ठाणस्स ततिओ उद्देसतो समत्तो ॥

'चउव्विहे' इत्यादि, संख्यायते-गण्यते अनेनेति संख्यानं गणितमित्यर्थः, तत्र परिकर्म सङ्कलनादिकं पाटीप्रसिद्धं, एवं व्यवहारोऽपि मिश्रकव्यवहारादिरनेकधा, रज्जुरिति रज्जुगणितं क्षेत्रगणितमित्यर्थः, राशिरिति त्रैराशिकपञ्चराशिकादीति। रज्जुरिति क्षेत्रगणितमुक्तमिति क्षेत्रसम्बन्धाल्लोकलक्षणक्षेत्रस्य त्रिधा विभक्तस्यान्धकारोद्योतावाश्रित्य सूत्रत्रयेण प्ररूपणामाह-'अहे' इत्यादि सुगमं, किन्तु अधोलोके-उक्तलक्षणे चत्वारि वस्तूनीति गम्यते नरका-नरकावासा नैरयिका-नारका एते कृष्णस्वरूपत्वात् अन्धकारं कुर्वन्ति, पापानि कर्माणि ज्ञानावरणादीनि मिथ्यात्वाज्ञानलक्षणभावान्धकारकारित्वादन्धकारं कुर्वन्तीत्युच्यते, अथवा अन्धकारस्वरूपे अधोलोके प्राणिनामुत्पादकत्वेन पापानां कर्मणामन्धकारकर्तृत्वमिति, तथा अशुभाः पुद्गलाः-तमिश्रभावेन परिणता इति। 'मणि' त्ति मणयः-चन्द्रकान्ताद्याः, 'जोइ'त्ति ज्योतिरग्निरिति ॥ चतुःस्थानकस्य तृतीयोद्देशको विवरणतः समाप्त इति ॥

व्याख्यातस्तृतीयोद्देशकः, तदनन्तरं चतुर्थ आरभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तरोद्देशके विविधा भावाश्चतुःस्थानकतयोक्ता इहापि त एव तथैवोच्यन्त इत्येवंसम्बन्धस्यास्योद्देशकस्येदमादिसूत्रं—

चत्तारि पसप्पगा पं० तं०—अणुप्पन्नाणं भोगाणं उप्पाएत्ता एगे पसप्पए पुव्वुप्पन्नाणं भोगाणं अविप्पतोगेणं एगे पसप्पते अणुप्पन्नाणं सोक्खाणं उप्पाइत्ता एगे पसप्पए पुव्वुप्पन्नाणं सोक्खाणं अविप्पओगेणं एगे पसप्पए। (सू० ३३९) णेरतिताणं चउव्विहे आहारे पं० तं०—इंगालोवमे मुम्मरोवमे सीतले हिमसीतले, तिरिक्खजोणियाणं चउव्विहे आहारे पं० तं०—कंकोवमे बिलोवमे पाणमंसोवमे पुत्तमंसोवमे, मणुस्साणं चउव्विहे आहारे पं० तं०—असणे जाव सातिमे, देवाणं चउव्विहे आहारे पं० तं०—वन्नमंते गंधमंते रसमंते फासमंते। (सू० ३४०) चत्तारि जातिआसीविसा पं० तं०—विच्छुतजातीयासीविसे मंडुक्कजातीयासीविसे उरगजातीयासीविसे मणुस्सजातिआसीविसे, विच्छुयजातिआसीविसस्स णं भंते! केवइए विसए पन्नत्ते?, पभू णं विच्छुयजातिआसीविसे अद्धभरहप्पमाणमेत्तं बोंदिं विसेणं विसपरिणयं विसट्टमाणिं करित्तए विसए से विसट्ठताए नो चेव णं संपत्तीए करेंसु वा करेंति वा करिस्संति वा, मंडुक्कजातिआसीविसस्स पुच्छा, पभू णं मंडुक्कजातिआसीविसे भरहप्पमाणमेत्तं बोंदिं विसेणं (विसप०) विसट्टमाणिं, सेसं तं चेव जाव करेस्संति वा, उरगजाति पुच्छा, पभू णं उरगजातिआसीविसे जंबूदीवपमाणमेत्तं बोंदिं विसेण सेसं तं चेव जाव करेस्संति वा, मणुस्सजातिपुच्छा,

पभू णं मणुस्सजातिआसीविसे समयखेत्तपमाणमेत्तं बोंदिं विसेणं विसपरिणतं विसट्टमाणिं करेत्तए, विसते से विसट्ठताते नो चेव णं जाव करिस्संति वा (सू० ३४१)।

'चत्तारि पसप्पगे'त्यादि, अस्य चानन्तरसूत्रेण सहायं सम्बन्धः—अनन्तरसूत्रे देवा देव्यश्च निर्दिष्टाः, ते च भोगवन्तः सुखिनाश्च भवन्तीति भोगान् सुखानि चाश्रित्य प्रसर्पकभेदाभिधानायेदमुच्यते, इत्येवंसम्बन्धस्यास्य व्याख्या—प्रकर्षेण सर्पन्ति—गच्छन्ति भोगार्थं देशाद्देशं सञ्चरन्ति आरम्भपरिग्रहतो वा विस्तारं यान्तीति प्रसर्पकाः, 'अणुप्पन्नाणं'ति द्वितीयार्थे षष्ठीति अनुत्पन्नान्—अप्राप्तान् भोगान्—शब्दादीन् तत्कारणद्रविणाङ्गनादीन् वा 'उप्पाइत्त'त्ति उत्पादयितुं सम्पादनाय अथवाऽनुत्पन्नानां भोगानामुत्पादयिता—उत्पादकः सन् एकः कोऽपि प्रसर्पति—प्रगच्छति, प्रसर्पको वा प्रगन्ता भवतीति गम्यते, प्रसर्पन्ति च भोगार्थिनो देहिनः उक्तञ्च—"धावेइ रोहणं तरइ सागरं भमइ गिरिनिगुंजेसु। मारेइ बंधवंपिहु पुरिसो जो होज्ज (इ) धणलुद्धो ॥१॥ अडइ बहुं वहइ भरं सहइ छुहं पावमायरइ धिट्ठो। कुलसीलजातिपच्चयट्ठिइं च लोभद्दुओ चयइ ॥२॥"इति, तथा पूर्वोत्पन्नानां पाठान्तरेण प्रत्युत्पन्नानां वा 'अविप्पओगेणं'ति अविप्रयोगाय रक्षणार्थमिति 'सौख्याना'मिति भोगसम्पाद्यानन्दविशेषाणां, शेषं सुगमं। भोगसौख्यार्थं च प्रसर्पन्तः कर्म बद्ध्वा नारकत्वेनोत्पद्यन्त इति नारकानाहारतो निरूपयन्नाह—'नेरइयाण'मित्यादि व्यक्तं, केवलं अङ्गारोपमः अल्पकालदाहत्वात् मुर्मुरोपमः स्थिरतरदाहत्वात् शीतलः शीतवेदनोत्पादकत्वात् हिमशीतलोऽत्यन्तशीतवेदनाजनकत्वात्, अधोऽध इति

१ धावति रोहणं तरति सागरं भ्राम्यति गिरिनिकुंजेषु। मारयति बांधवमपि पुरुषो यो भवेद्धनलुब्धः ॥१॥ अटति बहुं वहति भारं सहते क्षुधां पापमाचरति धृष्टः। कुलशीलजातिप्रत्ययस्थितिं च लोभोपद्रुतस्त्यजति ॥२॥

क्रम इति। आहाराधिकारात् तिर्यग्मनुष्यदेवानामाहारनिरूपणाय सूत्रत्रयं—'तिरिक्खजोणियाण'मित्यादि व्यक्तं, नवरं कङ्कः—पक्षिविशेषः तस्याहारेणोपमा यत्र स मध्यपदलोपात् कङ्कोपमः, अयमर्थो—यथा हि कङ्कस्य दुर्जरोऽपि स्वरूपेणाहारः सुखभक्ष्यः सुखपरिमाणश्च भवति एवं यस्तिरश्चां सुभक्षः सुखपरिमाणश्च स कङ्कोपमइति, तथा बिले प्रविशद्द्रव्यं बिलमेव तेनोपमा यत्र स तथा, बिले हि अलब्धरसास्वादं झगिति यथा किल किञ्चित् प्रविशति एवं यस्तेषां गलबिले प्रविशति स तथोच्यते, पाणो—मातङ्गस्तन्मांसमस्पृश्यत्वेन जुगुप्सया दुःखाद्यं स्यादेवं यस्तेषां दुःखाद्यः स पाणमांसोपमः, पुत्रमांसं तु स्नेहपरतया दुःखाद्यतरं स्यादेवं यो दुःखाद्यतरः स पुत्रमांसोपमः, क्रमेण चैते शुभसमाशुभाशुभतरा वेदितव्याः, वर्णवानित्यादौ प्रशंसायामतिशायने वा मतुबिति। आहारो हि भक्षणीय इति भक्षणाधिकारादाशीविषसूत्रं, सुगमश्चेदं, नवरं 'आसीविस'त्ति आश्यो—दंष्ट्रास्तासु विषं येषां ते आशीविषाः, ते च कर्मतो जातितश्च, तत्र कर्मतस्तिर्यङ्मनुष्याः कुतोऽपि गुणादाशीविषाः स्युः, देवाश्चासहस्राराच्छापादिना परव्यापादनादिति, उक्तञ्च—"आसी दाढा तग्गयमहाविसाऽऽसीविसा दुविह भेया। ते कम्मजाइभेएण णेगहा चउव्विहविगप्पा ॥१॥" [आशी द्रंष्ट्रा तद्गतमहाविषा आशीविषा द्विविधभेदाः ते कर्मजातिभेदेन नैकधा चतुर्विधविकल्पाः ॥१॥ (वृश्चिकमंडुकोरगनराः)] इति, जातित आशीविषा जात्याशीविषाः—वृश्चिकादयः, 'केवइय'त्ति कियान् विषयो—गोचरो विषस्येति गम्यते, प्रभुः—समर्थः, अर्द्धभरतस्य यत्प्रमाणं—सातिरेकत्रिषष्ट्यधिकयोजनशतद्वयलक्षणं तदेव मात्रा—प्रमाणं यस्याः साऽर्द्धभरतप्रमाणमात्रा तां बोन्दिं—शरीरं विषेण—स्वकीयाशीप्रभवेण करणभूतेन विषपरिणतां—विषरूपापन्नां विषपरिगतामिति क्वचित्पाठे तद्व्याप्तामित्यर्थः, 'विसट्टमाणिं' विकसन्तीं विदलन्तीं 'कत्तु' त्रिधातुं विषयः सः—गोचरोऽसौ अथवा 'से' तस्य वृश्चिकस्य, विषमेवार्थो विषार्थस्तद्भावस्तत्ता तस्या विषार्थतायाः—विषत्वस्य तस्यां वा 'नो

चेव'त्ति नैवेत्यर्थः 'सम्पत्त्या' एवंविधयोन्दिसम्प्राप्तिद्वारेण 'करिंसु'त्ति अकार्षुर्वृश्चिका इति गम्यते, इह चैकवचनप्रक्रमेऽपि बहुवचननिर्देशो वृश्चिकाशीविषाणां बहुत्वज्ञापनार्थं, एवं कुर्वन्ति करिष्यन्ति, त्रिकालनिर्देशश्चामीषां त्रैकालिकत्वज्ञापनार्थः; समयक्षेत्रं—मनुष्यक्षेत्रं।

विषपरिणामो हि व्याधिरिति तदधिकाराद् व्याधिभेदानाह—

चउव्विहे वाही पं० तं०—वातिते पित्तिते सिंभिते सन्निवातिते, चउव्विहा तिगिच्छा पं० तं०—विज्जो ओसधाइं आउरे परिचारते १ (सू० ३४३) चत्तारि तिगिच्छगा पं० तं०—आततिगिच्छते नाममेगे णो परतिगिच्छते १ परतिगिच्छए नाममेगे ४, २, चत्तारि पुरिसजाया पं० तं०—वणकरे णाममेगे नो वणपरिमासी वणपरिमासी नाममेगे णो वणकरे एगे वणकरेवि वणपरिमासीवि एगे णो वणकरे णो वणपरिमासीवि १, चत्तारि पुरिसजाया पं० तं०—वणकरे नाममेगे णो वणसारक्खी ४, २, चत्तारि पुरिसजाया पं० तं०—वणकरे नामं एगे णो वणसंरोही ४, ३, चत्तारि वणा पं० तं०—अंतोसल्ले नाममेगे णो बाहिंसल्ले ४, १, एवामेव चत्तारि पुरिसजाया पं० तं०—अंतोसल्ले णाममेगे णो बाहिंसल्ले ४, २, चत्तारि वणा पं० तं०—अंतो दुट्ठे नामं एगे णो बाहिं दुट्ठे बाहिं दुट्ठे नामं एगे नो अंतो ४, ३, एवामेव चत्तारि पुरिसजाया पं० तं०—अंतो दुट्ठे नाममेगे नो बाहिं दुट्ठे ४, ४, चत्तारि पुरिसजाया पं० तं०—सेतंसे णाममेगे सेयंसे सेयंसे नाममेगे पावंसे पावंसे णामं एगे सेयंसे पावंसे

णाममेगे पावंसे, १, चत्तारि पुरिसजाया पं० तं०—सेतंसे णाममेगे सेतंसेत्ति सालिसए सेतंसे णाममेगे पावंसेत्ति सालिसते ४, २, चत्तारि पुरिसा पं० तं०—सेतंसेत्ति णाममेगे सेतंसेत्ति मण्णति सेतंसेत्ति णाममेगे पावंसेत्ति मण्णति ४, ३, चत्तारि पुरिसजाता पं० तं०—सेयंसे णाममेगे सेयंसेत्ति सालिसते मन्नति सेतंसे णाममेगे पावंसेत्ति सालिसते मन्नति ४, ४, चत्तारि पुरिसजाता पं० तं०—आघवतित्ता णाममेगे णो परिभावतित्ता परिभावइत्ता णाममेगे णो आघवतित्ता ४, ५, चत्तारि पुरिसजाया पं० तं०—आघवतित्ता णाममेगे नो उंछजीविसंपन्ने उंछजीविसंपन्ने णाममेगे णो आघवइत्ता ४, ६, चउव्विहा रुक्खविगुव्वणा पं० तं०—पवालत्ताए पत्तत्ताए पुप्फत्ताए फलत्ताए (सू० ३४४)।

'चउव्विहे'इत्यादि कण्ठ्यं, केवलं वातो निदानमस्येति वातिकः एवं सर्वत्र नवरं सन्निपातः—संयोगो द्वयोस्त्रयाणां वेति, वातादिस्वरूपं चैतत्—"तत्र रूक्षो १ लघुः २ शीतः ३ खरः ४ सूक्ष्म ५ श्चलो ६ऽनिलः। पित्तं सस्नेह १ तीक्ष्णो २ष्णं ३ लघु ४विस्रं ५सरं ६ द्रवम् ७॥१॥ कफो गुरु १ र्हिमः २ स्निग्धः ३ प्रक्लेदी ४ स्थिर ५ पिच्छिलः ६। सन्निपातस्तु सङ्कीर्णलक्षणो द्व्यादिमीलकः ॥२॥" वातादीनां कार्याणि पुनरिमानि—"पारुष्यसङ्कोचनतोदशूलश्यामत्वमङ्गव्यथचेष्टभङ्गाः। सुप्तत्वशीतत्वखरत्वशोषाः, कर्म्माणि वायोः प्रवदन्ति तज्ज्ञाः ॥१॥ परिस्रवस्वेदविदाहरागा, वैगन्ध्यसंक्लेदविपाककोपाः। प्रलापमूर्च्छाभ्रमिपीतभावाः, पित्तस्य कर्म्माणि वदन्ति तज्ज्ञाः ॥२॥ श्वेतत्वशीतत्वगुरुत्वकण्डूस्नेहोपदेहस्तिमितत्वलेपाः। उत्सेधसम्पातचिरक्रियाश्च, कफस्य कर्म्माणि वदन्ति तज्ज्ञाः ॥३॥" इति। अनन्तरं व्याधिरुक्तः, अधुना तस्यैव चिकित्सां चिकित्सकांश्च सूत्रद्वयेनाह—'चउव्विहे'त्यादि, कण्ठ्यं, नवरं चिकित्सा—रोग-

प्रतीकारस्तस्याश्चातुर्विध्यं कारणभेदादिति, एतत्सूत्रसंवादकमुक्तमपरैरपि—"भिषग् १ द्रव्याण्यु २ पस्थाता ३, रोगी ४ पादचतुष्टयम्। चिकित्सितस्य निर्दिष्टं, प्रत्येकं तच्चतुर्गुणम् ॥१॥ दक्षो १ विज्ञातशास्त्रार्थो २, दृष्टकर्म्मा ३ शुचि ४ र्भिषक्। बहुकल्पं १ बहुगुणं २, सम्पन्नं ३ योग्यमौषधम् ४ ॥२॥ अनुरक्तः १ शुचि २ र्दक्षो ३, बुद्धिमान् ४ परिचारकः। आढ्यो १ रोगी भिषग्वश्यो २, ज्ञापकः ३ सत्त्ववानपि ४ ॥ ३॥" इति, इयं द्रव्यरोगचिकित्सा मोहभावरोगचिकित्सा त्वेवं,—'निव्विगइ निब्बलोमे तवउद्धट्ठाणमेव उब्भामे। वेयावच्चाहिंडण मंडलि कप्पट्ठियाहरणं ॥१॥" इति [ निर्व्वलं—वल्लादि, अवमम्—ऊनं उद्भामो—भिक्षाभ्रमणम् आहिंडणं देशेषु मण्डली—सूत्रार्थयोः 'कप्पट्ठिया' श्रेष्ठिवधूरिति—[ निर्विकृतिकं वल्लादि न्यूनं आचामाम्लादि कायोत्सर्गः विहारः वैयावृत्त्यं भिक्षाभ्रमः मंडली ( मोहचिकित्सैषा ) कुलपुत्रिकोदाहरणात् ] चिकित्सका द्रव्यतो ज्वरादिरोगान् प्रति भावतो रागादीन् प्रतीति, तत्रात्मनो ज्वरादेः कामादेर्वा चिकित्सकः—प्रतिकर्त्तेत्यात्मचिकित्सक इति। अथात्मचिकित्सकान् भेदतः सूत्रत्रयेणाह—'चत्तारी'त्यादि कण्ठ्यं, नवरं व्रणं—देहे क्षतं स्वयं करोति रुधिरादिनिर्गालनार्थमिति व्रणकरो नो—नैव व्रणं परिमृशतीत्येवंशीलो व्रणपरिमर्शीत्येकः, अन्यस्त्वन्यकृतं व्रणं परिमृशति न च तत् करोतीति, एवं भावव्रणं—अतिचारलक्षणं करोति कायेन न च तदेव परिमृशति पुनःपुनः संस्मरणेन स्पृशति, अन्यस्तु तत्परिमृशत्यभिलापान्न च करोति कायतः संसारभयादिभिरिति, व्रणं करोति न च तत्पट्टबन्धादिना संरक्षति, अन्यस्तु कृतं संरक्षति न च करोति, भावव्रणं त्वाश्रित्यातिचारं करोति न च तं सानुबन्धं भवन्तं कुशीलादिसंसर्गतन्निदानपरिहारतो रक्षत्येकोऽन्यस्तु पूर्वकृतातिचारं निदानपरिहारतो रक्षति नवं च न करोति, 'नो' नैव व्रणं संरोहयत्यौषधदानादिनेति व्रणसंरोही, भावव्रणापेक्षया तु नो व्रणसंरोही प्रायश्चित्ताप्रतिपत्तेः, व्रणसंरोही पूर्वकृतातिचारप्रायश्चित्तप्रतिपत्त्या, नो व्रणकरोऽपूर्वातिचाराकारि-

त्वादिति। उक्ता आत्मचिकित्सकाः, अथ चिकित्स्यं व्रणं दृष्टान्तीकृत्य पुरुषभेदानाह–'चत्तारी'त्यादि चतुःसूत्री, सुगमा, नवरं, अन्तः–मध्ये शल्यं यस्य अदृश्यमानमित्यर्थः तत्तथा, 'बाहिं सल्ले'त्ति यच्छल्यं व्रणस्यान्तरल्पं बहिस्तु बहु तद्बहिरिव बहिरित्युच्यते, अन्तो बहिः शल्यं यस्य तत्तथा, यदि पुनः सर्वथैव तत्ततो बहिः स्यात् तदा शल्यतैव न स्याद्, उद्धृतत्वे वा भूतभावितया स्यादपीति २, यत्र पुनरन्तर्बहु बहिरप्युपलभ्यते तदुभयशल्यं ३ चतुर्थः शून्य इति ४, गुरुसमक्षमनालोचितत्वेनान्तः शल्यम्-अतिचाररूपं यस्य स तथा, बहिः शल्यं आलोचिततया यस्य तत्तथा, अन्तर्बहिश्च शल्यमालोचितानालोचितत्वेन यस्य स तथा, चतुर्थः शून्यः। अन्तर्दुष्टं व्रणं लूतादिदोषतः, न बही रागाद्यभावेन सौम्यत्वात् ४, पुरुषस्तु अन्तर्दुष्टः शठतया संवृताकारत्वान्न बहिरित्येकः, अन्यस्तु कारणेनोपदर्शितवाक्पारुष्यादित्वाद्बहिरेवेति। पुरुषाधिकारात् तद्भेदप्रतिपादनाय षट्सूत्री कण्ठ्या च, किन्तु अतिशयेन प्रशस्यः श्रेयानेकः प्रशस्यभावः सद्बोधत्वात् पुनः श्रेयान् प्रशस्तानुष्ठानत्वात् साधुवदित्येकः १ अन्यस्तु श्रेयांस्तथैव अतिशयेन पापः पापीयान्, स चाविरतत्वेन दुरनुष्ठायित्वादिति २ अन्यस्तु पापीयान् भावतो मिथ्यात्वादिभिरुपहतत्वात् कारणवशात् सदनुष्ठायित्वाच्च श्रेयान् उदायिनृपमारकवत् ३ चतुर्थः स एव कृतपाप इति ४, अथवा श्रेयान् गृहस्थत्वे निष्क्रमणकाले वा पुनः श्रेयान् प्रव्रज्यायां विहारकाले वेत्येवमन्येऽपि। श्रेयानेको भावतो द्रव्यतस्तु श्रेयान् प्रशस्यतर इत्येवंबुद्धिजनकत्वेन सदृशकः–अन्येन श्रेयसा तुल्यो न तु सर्वथा श्रेयानेवेत्येकः १, अन्यस्तु भावतः श्रेयानपि द्रव्यतः पापीयानित्येवंबुद्धिजनकत्वेन सदृशकः–अन्येन पापीयसा समानो न तु पापीयानेवेति द्वितीयः २, भावतः पापीयानप्यन्यः संवृताकारतया श्रेयानित्येवंबुद्धिजनकतया सदृशकोऽन्येन श्रेयसेति तृतीयः, चतुर्थः सुज्ञानः। श्रेयानेकः सद्वृत्तत्वात् श्रेयानित्येवमात्मानं मन्यते यथावद्बोधात् लोकेन वा मन्यते विशदसदनुष्ठानाद्, इह च मन्निज्ज-

इति वक्तव्ये प्राकृतत्वेन मत्वर्डन्युक्तम्, श्रेयानप्यन्य आत्मन्यरुचिपरायणत्वात् पापीयानित्यात्मानं मन्यते, स एव वा पूर्वोपलब्धत-त्वेन जनेन मन्यते दृढप्रहारिवत् १ पापीयानप्यपरो मिथ्यात्वाद्युपहततया श्रेयानित्यात्मानं मन्यते, कुतीर्थिकवत्, तद्भक्तेन वेति २, पापीयानन्योऽविरतिकत्वात् पापीयानित्यात्मानं मन्यते, सद्बोधत्वात्, असंयतो वा मन्यते, संयतलोकेनेति ३, श्रेयानेको भावतो द्रव्यतस्तु किञ्चित्सदनुष्ठायित्वात् श्रेयानित्येवंविकल्पजनकत्वेन सदृशकोऽन्येन श्रेयसा मन्यते-ज्ञायते जनेनेति विभक्तिपरिणामाद्वा सदृशकमात्मानं मन्यत इति एवं शेषाः ५, 'आघवइत्ते'ति आख्यायकः-प्रज्ञापकः प्रवचनस्य एकः-कश्चिन्न च प्रविभावयिता-प्रभावयिता प्रभावकः शासनस्य उदारक्रियाप्रतिभादिरहितत्वात् प्रविभाजयिता वा-प्रवचनार्थस्य नयोत्सर्गादिभिर्विवेचयितेति, अथवा आख्यायकः सूत्रस्य प्रविभावयिता प्रविभाजयिता वाऽर्थस्येति । आख्यायक एकः सूत्रार्थस्य न चोञ्छजीविकासम्पन्नो नैषणादिनिरत इत्यर्थः, स चापद्गतः संविग्नः संविग्नपाक्षिको वा, यदाह—"होज्ज हु वसणं पत्तो सरीरदुब्बलयाए असमत्थो । चरणकरणे असुद्धे सुद्धं मग्गं परूवेज्जा ॥१॥" तथा—"ओसन्नोऽवि विहारे कम्मं सिढिलेइ सुलहबोही य । चरणकरणं विसुद्धं उववूहंतो परूवेंतो ॥२॥" [शरीरदौर्बल्येनासमर्थः व्यसनं प्राप्तो भवेत् (तथापि) अशुद्धे चरणकरणे शुद्धं मार्गं प्ररूपयेत् ॥१॥ विहारेऽवसन्नोऽपि कर्म शिथिल-यति सुलभबोधिश्च विशुद्धं चरणकरणमुपबृंहयन् प्ररूपयंश्च ॥२॥] इत्येकः द्वितीयो यथाच्छन्दः तृतीयः साधुः चतुर्थो गृहस्थादिरिति, पूर्वसूत्रे साधुलक्षणपुरुषस्याख्यापकत्वोञ्छजीविकासम्पन्नत्वलक्षणा गुणविभूपोक्ता अधुना तत्साम्याद्वृक्षविभूपामाह—'चउव्विहे' त्यादि, अथवा पूर्वमुञ्छजीविकासंपन्नः साधुपुरुष उक्तः, तस्य च वैक्रियलब्धिमतस्तथाविधप्रयोजने वृक्षं विकुर्वतो यद्विधा तद्विक्रिया स्यात्तामाह—'चउव्विहे'त्यादि पातनयैवोक्तार्थं, नवरं 'पवालत्तये'ति नवाङ्कुरतयेत्यर्थः ।

एते हि पूर्वोक्ता आख्यायकादयः पुरुषास्तीर्थिका इति तेषां स्वरूपाभिधानायाह—

**चत्तारि वातिसमोसरणा पं० तं०—किरियावादी अकिरियावादी अन्नाणितावादी वेणतियावादी। णेरइयाणं चत्तारि वादिसमोसरणा पं० तं०—किरियावादी जाव वेणतितवादी, एवमसुरकुमाराणवि जाव थणियकुमाराणं एवं विगलिंदियवज्जं जाव वेमाणियाणं। (सू० ३४५)।**

वादिनः–तीर्थिकाः समवसरन्ति–अवतरन्त्येष्विति समवसरणानि–विविधमतमीलकास्तेषां समवसरणानि वादिसमवसरणानि, क्रियां–जीवाजीवादिरर्थोऽस्तीत्येवंरूपां वदन्तीति क्रियावादिन आस्तिका इत्यर्थः तेषां यत्समवसरणं तत्त एवोच्यन्ते अभेदादिति, तन्निषेधादक्रियावादिनो–नास्तिका इत्यर्थः, अज्ञानमभ्युपगमद्वारेण येषामस्ति ते अज्ञानिकाः त एव वादिनोऽज्ञानिकवादिनः, अज्ञानमेव श्रेय इत्येवंप्रतिज्ञा इत्यर्थः, विनय एव वैनयिकं तदेव निःश्रेयसायेत्येवंवादिनो वैनयिकवादिन इति, एतद्भेदसङ्ख्या चेयं—"असियसयं किरियाणं अकिरियवाईण होइ चुलसीई। अन्नाणिय सत्तट्ठी वेणइयाणं च बत्तीसा ॥१॥" [क्रियावादिनां अशीत्यधिकं शतं अक्रियावादिनां चतुरशीतिरज्ञानिनां सप्तषष्टिः वैनयिकानां द्वात्रिंशत् ॥१॥] इति, तत्राशीत्यधिकं शतं क्रियावादिनां भवति, इदं चामुनोपायेनावगन्तव्यम्–जीवाजीवाश्रवसंवरबन्धनिर्जरापुण्यापुण्यमोक्षाख्यान् नव पदार्थान् विरचय्य परिपाट्या जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ तयोरधो नित्यानित्यभेदौ तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्च न्यसनीयाः, पुनश्चेत्थं विकल्पाः कर्त्तव्याः–अस्ति जीवः स्वतो नित्यः कालत इत्येको विकल्पः, विकल्पार्थश्चायं–विद्यते खल्वयमात्मा स्वेन रूपेण

न परापेक्षया ह्रस्वदीर्घत्वे इव नित्यश्च कालवादिनः, उक्तेनैवाभिलापेन द्वितीयो विकल्प ईश्वरकारणिनः, तृतीयो विकल्प आत्मवादिनः 'पुरुष एवेदं सर्व'मित्यादिप्रतिपत्तुरिति, चतुर्थो नियतिवादिनः, नियतिश्च–पदार्थानामवश्यन्तया यद्यथाभवने प्रयोजककर्त्रीति पञ्चमः स्वभाववादिनः, एवं स्वत इत्यजहता लब्धाः पञ्च विकल्पाः, परत इत्यनेनापि पञ्चैव लभ्यन्ते, तत्र परत इत्यस्यायमर्थः–इह सर्वपदार्थानां पररूपापेक्षः स्वरूपपरिच्छेदो यथा ह्रस्वत्वाद्यपेक्षो दीर्घत्वादिपरिच्छेदः, एवमेव चात्मनः स्तम्भकुम्भादीन् समीक्ष्य तद्व्यतिरिक्ते वस्तुन्यात्मबुद्धिः प्रवर्त्तत इत्यतो यदात्मनः स्वरूपं तत्परत एवावधार्यते न स्वत इति, नित्यत्वापरित्यागेन चैते दश विकल्पाः, एवमनित्यत्वेनापि दशैव, एवं विंशतिर्जीवपदार्थेन लब्धाः अजीवादिष्वप्यष्टस्वेवमेव प्रतिपदं विंशतिर्विकल्पानामतो विंशतिर्नवगुणा शतमशीत्युत्तरं क्रियावादिनामिति, एते च विकल्पा एकैकशो न लभ्यन्ते शीलाङ्गवदिति। तथा अक्रियावादिनां तु चतुरशीतिर्द्रष्टव्या, एतच्चेयं–पुण्यापुण्यविवर्जितपदार्थसप्तकन्यासस्तथैव जीवस्याधः स्वपररूपविकल्पद्वयोपन्यासः, असत्त्वादात्मनो नित्यानित्यभेदौ न स्तः, कालादीनां तु पञ्चानां षष्ठी यदृच्छा न्यस्यते, इयं चानभिसन्धिपूर्विकाऽर्थप्राप्तिरिति, पश्चाद्विकल्पाभिलापः–नास्ति जीवः स्वतः कालत इत्येको विकल्पः, एवमीश्वरादिभिरपि यदृच्छावसानैः सर्वे षड्विकल्पाः, तथा नास्ति जीवः परतः कालत इति षड्विकल्पा इत्येकत्र द्वादश, एवमजीवादिष्वपि षट्सु प्रत्येकं द्वादश विकल्पाः, एवञ्च द्वादश सप्तगुणाश्चतुरशीतिविकल्पाः नास्तिकानामिति। अज्ञानिकानां तु सप्तषष्टिर्भवति, इयं चामुनोपायेन द्रष्टव्या–तत्र जीवाजीवादीन् नव पदार्थान् पूर्ववत् व्यवस्थाप्य पर्यन्ते चोत्पत्तिमुपन्यस्याधः सप्त सदादय उपन्यसनीयाः, सत्त्व १मसत्त्वं २सदसत्त्वं ३ अवाच्यत्वं ४ सदवाच्यत्वं ५असदवाच्यत्वं ६ सदसदवाच्यत्व ७मिति, तत एते नव सप्तकाः त्रिषष्टिः, उत्पत्तेस्तु चत्वार एवाद्या विकल्पाः, तद्यथा–सत्त्व १ मसत्त्वं सदसत्त्व ३ मवाच्यत्वं ४ चेति, त्रिषष्टिमध्ये क्षिप्ताः

सप्तषष्टिर्भवन्ति, विकल्पाभिलापश्चैवं—को जानाति जीवः सन्निति किंवा तेन ज्ञातेनेत्येको विकल्पः, एवमसदादयोऽपि वाच्याः, तथा सती भावोत्पत्तिरिति को जानाति किं वाऽनया ज्ञातया ? एवमसती सदसती अवक्तव्या चेति, सत्त्वादिसप्तभङ्ग्याश्चायमर्थः—स्वरूपमात्रापेक्षया वस्तुनः सत्त्वं १ पररूपमात्रापेक्षया त्वसत्त्वं २ तथा एकस्य घटादिद्रव्यदेशस्य ग्रीवादेः सद्भावपर्यायेण ग्रीवात्वादिनाऽऽदिष्टस्य सत्त्वात् तथा घटादिद्रव्यदेशस्यैवापरस्य बुध्नादेरसद्भावपर्यायेण वृत्तत्वादिना परगतपर्यायेणैवादिष्टस्यासत्त्वाद् वस्तुनः सदसत्त्वम् ३ तथा सकलस्यैवाखण्डितस्य घटादिवस्तुनोऽर्थान्तरभूतैः पटादिपर्यायैर्निजैश्चोद्ध्वंकुण्डलौष्ठायतवृत्तग्रीवादिभिर्युगपद्विवक्षितस्य सत्त्वेनासत्त्वेन वा वक्तुमशक्यत्वात् तस्य घटादेर्द्रव्यस्यावक्तव्यत्वम् ४, तथा घटादिद्रव्यस्यैकदेशस्य सद्भावपर्यायैरादिष्टस्य सत्त्वादपरस्य स्वपरपर्यायैर्युगपदादिष्टतया सत्त्वेनासत्त्वेन वा वक्तुमशक्यत्वात् घटादिद्रव्यस्य सदवक्तव्यत्वमिति ५, तथा तस्यैव घटादिद्रव्यस्यैकदेशस्य परपर्यायैरादिष्टस्यासत्त्वादपरदेशस्य स्वपरपर्यायैर्युगपदादिष्टत्वेन तथैव वक्तुमशक्यत्वात् तस्य घटादेरसदवक्तव्यत्वम् ६, तथा घटादिद्रव्यस्यैकदेशस्य स्वपर्यायैरादिष्टत्वेन सत्त्वादपरस्य परपर्यायैरादिष्टतया असत्त्वादन्यस्य स्वपरपर्यायैर्युगपदादिष्टस्य तथैव वक्तुमशक्यत्वेनावक्तव्यत्वात् तस्य घटादिद्रव्यस्य सदसदवक्तव्यत्वमिति ७, इह च प्रथमद्वितीयचतुर्था अखण्डवस्त्वाश्रिताः शेषाश्चत्वारो वस्तुदेशाश्रिता दर्शिताः, तथाऽन्यैस्तृतीयोऽपि विकल्पोऽखण्डवस्त्वाश्रित एवोक्तः, तथाहि—अखण्डस्य वस्तुनः स्वपर्यायैः परपर्यायैश्च विवक्षितस्य सदसत्त्वमिति, अत एवाभिहितमाचारटीकायाम्—"इह चोत्पत्तिमङ्गीकृत्योत्तरविकल्पत्रयं न संभवति, पदार्थावयवापेक्षत्वात् तस्योत्पत्तेश्चावयवाभावा"दिति, एवमज्ञानिकानां सप्तषष्टिर्भवतीति । वैनयिकानां च द्वात्रिंशद्, सा चैवमवसेया—सुरनृपतियतिज्ञातिस्थविराधममातृपितॄणां प्रत्येकं कायेन वाचा मनसा दानेन च देशकालोपपन्नेन विनयः कार्य इत्येते चत्वारो

भेदाः मुगादिष्वष्टासु स्थानेषु भवन्ति, ते चैकत्र मीलिता द्वात्रिंशदिति, सर्वसङ्ख्या पुनरेतेषां त्रीणि शतानि त्रिषष्ट्यधिकानीति, उक्तञ्च पूज्यैः—"आस्तिकमनमात्माद्या ९ नित्यानित्यात्मका नव पदार्थाः। कालनियतिस्वभावेश्वरात्मकृतकाः स्वपरसंस्थाः ॥१॥ कालयदृच्छानियतीश्वरस्वभावात्मनश्चतुरशीतिः। नास्तिकवादिगणमतं न सन्ति सप्त स्वपरसंस्थाः ॥२॥ अज्ञानिकवादिमतं नव जीवादीन् सदादिसप्तविधान्। भावोत्पत्तिं सदसद्द्वैधाऽवाच्यांश्च को वेत्ति ? ॥३॥ वैनयिकमतं विनयश्चेतोवाक्कायदानतः कार्यः। सुरनृपतियतिज्ञातिस्थविराधममातृपितृषु सदा ॥४॥" इति, एतान्येव समवसरणानि चतुर्विंशतिदण्डके निरूपयन्नाह—'नेरइयाण'मित्यादि सुगमं, नवरं नारकादिपञ्चेन्द्रियाणां समनस्कत्वाच्चत्वार्यप्येतानि सम्भवन्ति, 'विगलेंदियवज्जं'ति एकद्वित्रिचतुरिन्द्रियाणाममनस्कत्वान्न संभवन्ति तानीति।

पुरुषाधिकारात् पुरुषविशेषप्रतिपादनाय प्रायः सदृष्टान्तसूत्राणि पुरुषसूत्राणि त्रिचत्वारिंशतं "चत्तारि मेहे'त्यादीत्याह,

चत्तारि मेहा पं० तं०—गज्जित्ता णाममेगे णो वासित्ता वासित्ता णाममेगे णो गज्जित्ता एगे गज्जित्तावि वासित्तावि एगे णो गज्जित्ता णो वासित्ता १, एवामेव चत्तारि पुरिसजाया पं० तं०—गज्जित्ता णाममेगे णो वासित्ता ४, २, चत्तारि मेहा पं० तं०—गज्जित्ता णाममेगे णो विज्जुयाइत्ता विज्जुयाइत्ता णाममेगे ४, ३, एवामेव चत्तारि पुरिसजाया पं० तं०—गज्जित्ता णाममेगे णो विज्जुयाइत्ता ४, ४, चत्तारि मेहा पं० तं०—वासित्ता णाममेगे णो विज्जुयाइत्ता ४, ५, एवामेव चत्तारि पुरिस० वासित्ता णाममेगे णो विज्जुयाइत्ता ४, ६, चत्तारि

मेहा पं० तं०—कालवासी ४, ७, णाममेगे णो अकालवासी एवामेव चत्तारि पुरिसजाया पं० तं०—कालवासी णाममेगे नो अकालवासी ४, ८, चत्तारि मेहा पं० तं०—खेत्तवासी णाममेगे णो अखित्तवासी ४, ९, एवामेव चत्तारि पुरिसजाया पं० तं०—खेत्तवासी णाममेगे णो अखेत्तवासी ४, १०, चत्तारि मेहा पं० तं०—जणतित्ता णाममेगे णो णिम्मवइत्ता णिम्मवइत्ता णाममेगे णो जणतित्ता ४, ११, एवामेव चत्तारि अम्मापियरो पं० तं०—जणइत्ता णाममेगे णो णिमवइत्ता ४, १२, चत्तारि मेहा पं० तं०—देसवासी णाममेगे णो सव्ववासी ४, १३, एवामेव चत्तारि रायाणो पं० तं०—देसाधिवती णाममेगे णो सव्वाधिवती ४, १४ (सू०३४६)।

सुगमानि च, नवरं मेघाः–पयोदाः गर्जिता–गर्जिकृत् नो वर्षिता–न प्रवर्षणकारीति १, एवं कश्चित्पुरुषो गर्जितेव, गर्जिता दानज्ञानव्याख्यानानुष्ठानशत्रुनिग्रहादिविषये उच्चैः प्रतिज्ञावान् नो–नैव वर्षितेव–वर्षिता–वर्षकोऽभ्युपगतसम्पादक इत्यर्थः, अन्यस्तु कार्यकर्त्ता न चोच्चैः प्रतिज्ञावानिति, एवमितरावपि नेयाविति २। 'विज्जुयाइत्त'त्ति विद्युत्कर्त्ता ३, एवं पुरुषोऽपि कश्चिदुच्चैः प्रतिज्ञाता न च विद्युत्कारतुल्यस्य दानादिप्रतिज्ञातार्थारम्भाडम्बरस्य कर्त्ताऽन्यस्तु आरम्भाडम्बरस्य कर्त्ता न प्रतिज्ञातेति, एवमन्यावपीति ४, वर्षिता कश्चिद् दानादिभिर्न तु तदारम्भाडम्बरकर्त्ता, अन्यस्तु विपरीतोऽन्य उभयथाऽन्यो न किञ्चिदिति ५-६, कालवर्षी–अवसरवर्षीति एवमन्येऽपि, ७, पुरुषस्तु कालवर्षीव कालवर्षी–अवसरे दानव्याख्यानादिपरोपकारार्थप्रवृत्तिक एकः अन्यस्त्वन्यथेति, एवं शेषौ ८, क्षेत्रं धान्याद्युत्पत्तिस्थानम् ९, पुरुषस्तु क्षेत्रवर्षीव क्षेत्रवर्षी–पात्रे दानश्रुतादीनां निक्षेपकः, अन्यो विपरीतोऽन्यस्तथाविधविवेकविकलतया महौदार्यात् प्रवचनप्रभावनादिकारणतो वा उभयस्वरूपोऽन्यस्तु दानादावप्रवृत्तिक इति १०, जनयिता मेघो यो

वृष्ट्या धान्यमुद्गमयति, निर्म्मापयिता तु यो वृष्ट्यैव सफलता नयतीति ११, एवं मातापितरावपीति प्रसिद्धं, एवमाचार्योऽपि शिष्यं प्रत्युपनेतव्य इति १२, विवक्षितभरतादिक्षेत्रस्य प्रावृडादिकालस्य वा देशे आत्मनो वा देशेन वर्षतीति देशवर्षी १ यस्तु तयोः सर्वयोः सर्वात्मना वा वर्षति स सर्ववर्षी, अन्यस्तु क्षेत्रतो देशे कालतः सर्वत्रात्मनो वा सर्व्वः २, अथवा कालतो देशे क्षेत्रतः सर्वत्र ३ आत्मनो वा सर्वतः ४, अथवा आत्मनो देशेन क्षेत्रतः ५, कालतो वा सर्वत्र ६, अथवा क्षेत्रकालतो देशेन आत्मनः सर्वतः ७, अथवा क्षेत्रतो देशे, आत्मनो देशेन कालतः सर्वत्र ८, अथवा कालतो देशे आत्मनो देशेन क्षेत्रतो न सर्वत्रे ९ त्येवं नवभिर्विकल्पैर्वर्षति स देशवर्षी सर्ववर्षी चेति, चतुर्थः सुज्ञान इति १३, राजा तु यो विवक्षितक्षेत्रस्य मेघवदेश एव योगक्षेमकारितया प्रभवति स देशाधिपतिर्न सर्वाधिपतिः स च पल्लीपत्यादिः, यस्तु न पल्ल्यादौ देशेऽन्यत्र तु सर्वत्र प्रभवति स सर्वाधिपतिर्न देशाधिपतिर्यस्तूभयत्र स उभयाधिपतिरथवा देशाधिपतिर्भूत्वा सर्वाधिपतिर्यो भवति वासुदेवादिवत् स देशाधिपतिश्च सर्वाधिपतिश्चेति, चतुर्थो राज्यभ्रष्ट इति १४,

चत्तारि मेहा पं० तं०—पुक्खलसंवट्टते पज्जुन्ने जीमूते जिम्हे, पुक्खलवट्टए णं महामेहे एगेणं वासेणं दसवाससहस्साइं भावेति, पज्जुन्ने णं महामेहे एगेणं वासेणं दस वाससयाइं भावेति, जीमूते णं महामेहे एगेणं वासेणं दसवासाइं भावेति, जिम्हे णं महामेहे बहूहिं वासेहिं एगं वासं भावेति वा ण वा भावेइ १५, (सू० ३४७) चत्तारि करंडगा पं० तं०—सोवागकरंडते वेसिताकरंडते गाहावतिकरंडते रायकरंडते १६, एवामेव चत्तारि आयरिया पं० तं०—सोवागकरंडगसमाणे वेसिताकरंडगसमाणे गाहावइककरंडगसमाणे रायकरंडगसमाणे १७

(सू० ३४८) चत्तारि रुक्खा पण्णत्ता तं०—साले नाममेगे सालपरियाते साले नाममेगे एरंडपरियाए एरंडे० ४, १८ एवामेव चत्तारि आयरिया पं० तं०—साले णाममेगे सालपरिताते साले णाममेगे एरंडपरियाते एरंडे णाममेगे० ४ १९ चत्तारि रुक्खा पं० तं०—साले णाममेगे सालपरिवारे० ४, २० एवामेव चत्तारि आयरिया पं० तं०—साले नाममेगे सालपरिवारे० ४, २१ सालदुममज्झयारे जह साले णाम होइ दुमराया। इय सुंदरआयरिए सुंदरसीसे मुणेयव्वे ॥१॥ एरंडमज्झयारे जह साले णाम होइ दुमराया। इय सुंदरआयरिए मंगुलसीसे मुणेयव्वे ॥२॥ सालदुममज्झयारे एरंडे णाम होति दुमराया। इय मंगुलआयरिए सुंदरसीसे मुणेयव्वे ॥३॥ एरंडमज्झयारे एरंडे णाम होइ दुमराया। इय मंगुलआयरिए मंगुलसीसे मुणेयव्वे ॥४॥ चत्तारि मच्छा पं० तं०—अणुसोयचारि पडिसोयचारी अंतचारी मज्झचारी, २२ एवामेव चत्तारि भिक्खागा पं० तं०—अणुसोयचारी पडिसोयचारी अंतचारी मज्झचारी, २३ चत्तारि गोला पं० तं० मधुसित्थगोले जउगोले दारुगोले मट्टियागोले, २४ एवामेव चत्तारि पुरिसजाया पं० तं०—मधुसित्थगोलसमाणे ४ २५ चत्तारि गोला पं० तं०—अयगोले तउगोले तंबगोले सीसगोले, २६ एवामेव चत्तारि पुरिसजाया पं० तं०—अयगोलसमाणे जाव सीसगोलसमाणे, २७ चत्तारि गोला पं० तं०—हिरण्णगोले सुवन्नगोले रयणगोले वयरगोले, २८ एवामेव चत्तारि पुरिसजाया पं० तं०—हिरण्णगोलसमाणे जाव वइरगोलसमाणे, २९ चत्तारि पत्ता पं० तं०—असिपत्ते करपत्ते खुरपत्ते कलम्बचीरितापत्ते, ३० एवामेव चत्तारि पुरिसजाया पं० तं०—असिपत्तसमाणे जाव कलंबचीरितापत्तसमाणे,

३१ चत्तारि कडा पं० तं०—सुंबकडे विदलकडे चम्मकडे कंबलकडे, ३२ एवामेव चत्तारि पुरिसजाया पं० तं०—सुंबकडसमाणे जाव कंबलकडसमाणे ३३ (सू० ३४९) चउव्विहा चउप्पया पं० तं०—एगखुरा दुखुरा गंडीपदा सणप्फदा, ३४ चउव्विहा पक्खी पं० तं०—चम्मपक्खी लोमपक्खी समुग्गपक्खी विततपक्खी, ३५ चउव्विहा खुड्डपाणा पं० तं०—बेइंदिया तेइंदिया चउरिंदिया संमुच्छिमपंचिंदियतिरिक्खजोणिया ३६ (सू० ३५०) चत्तारि पक्खी पं० तं०—णिवत्तित्ता णाममेगे नो परिवतित्ता परिवइत्ता नामं एगे नो निवइत्ता एगे निवतित्तावि परिवतित्तावि एगे नो निवतित्ता नो परिवतित्ता, ३७ एवामेव चत्तारि भिक्खागा पं० तं०—णिवतित्ता णाममेगे नो परिवतित्ता ४, ३८ (सू० ३५१) चत्तारि पुरिसजाया पं० तं०—णिक्कट्ठे णाममेगे णिक्कट्ठे निक्कट्ठे नाममेगे अणिक्कट्ठे ४, ३९ चत्तारि पुरिसजाया पं० तं०—णिक्कट्ठे नाममेगे णिक्कट्ठप्पा णिक्कट्ठे नाममेगे अनिक्कट्ठप्पा ४. ४० चत्तारि पुरिसजाया पं० तं०—बुहे नाममेगे बुहे बुहे नाममेगे अबुहे ४, ४१ चत्तारि पुरिसजाया पं० तं०—बुधे नाममेगे बुधहियए ४, ४२ चत्तारि पुरिसजाया पं० तं०—आयाणुकंपते णाममेगे नो पराणुकंपते ४, ४३ (सू० ३५२)।

'पुक्खले'त्यादि, 'एगेणं वासेणं'ति एकया वृष्ट्या भावयतीति—उदकस्नेहवतीं करोति धान्यादिनिष्पादनसमर्थामितियावत् भुवमिति गम्यते, जिम्हस्तु बहुभिर्वर्षणैरेकमेव वर्षम्—अब्दं यावत् भुवं भावयति नैव वा भावयति रूक्षत्वात्तज्जलस्येति। अत्रान्तरे मेघानुसारेण पुरुषाः पुष्कलावर्त्तसमानादयः पुरुषाधिकारत्वात् अभ्यूह्या इति, तत्र सकृदुपदेशेन दानेन वा प्रभूतकालं यावच्छुभस्वभा-

वमीश्वरं वा देहिनं यः करोत्यसावाद्यमेघसमानः, एवं स्तोकतरस्तोकतमकालापेक्षया द्वितीयतृतीयमेघसमानौ असकृदुपदेशादिना देहिनमल्पकालं यावदुपकुर्व्वन्ननुपकुर्वन् वा चतुर्थमेघसमान इति १५ । करण्डको—वस्त्राभरणादिस्थानं जनप्रतीतः, श्वपाककरण्डकः—चाण्डालकरण्डकः, स च प्रायश्चर्म्मपरिकर्म्मोपकरणवर्ध्रादिचर्मांशस्थानतया अत्यन्तमसारो भवति, वेश्याकरण्डकस्तु जतुपूरितस्वर्णाभरणादिस्थानत्वात् किञ्चित्ततः सारोऽपि वक्ष्यमाणकरण्डकापेक्षया त्वसार एवेति, गृहपतिकरण्डकः—श्रीमत्कौटुम्बिककरण्डकः, स च विशिष्टमणिसुवर्णाभरणादियुक्तत्वात् सारतरः, राजकरण्डकस्तु अमूल्यरत्नादिभाजनत्वात्सारतम इति १६, एवमाचार्यो यः षट्प्रज्ञकगाथादिरूपसूत्रार्थधारी विशिष्टक्रियाविकलश्च स प्रथमः अत्यन्तासारत्वात्, यस्तु दुरधीतश्रुतलवोऽपि वागाडम्बरेण मुग्धजनमावर्जयति स द्वितीयः परीक्षाऽक्षमतया असारत्वादेव, यस्तु स्वसमयपरसमयज्ञः क्रियादिगुणयुक्तश्च स तृतीयः सारतरत्वात्, यस्तु समस्ताचार्यगुणयुक्ततया तीर्थकरकल्पः स चतुर्थः सारतमत्वात् सुधर्मादिवदिति १७, सालो नामैकः सालाभिधानवृक्षजातियुक्तत्वात् सालस्यैव पर्याया—धर्म्मा बहलच्छायत्वासेव्यत्वादयो यस्य सः शालपर्याय इत्येकः, शालो नामैक इति तथैव एरण्डस्येव पर्याया धर्मा अबहलच्छायत्वाऽऽसेव्यत्वादयो यस्य स एरण्डपर्याय इति द्वितीयः, एरण्डो नामैक एरण्डाभिधानवृक्षजातीयत्वात् सालपर्यायो बहलच्छायत्वादिधर्म्मयुक्तत्वादिति तृतीयः, एरण्डो नामैकस्तथैव एरण्डपर्यायः अबहलच्छायत्वाद्येरण्डधर्म्मयुक्तत्वादिति चतुर्थः १८, आचार्यस्तु साल इव सालो यथा हि सालो जातिमानेवमाचार्योऽपि यः सत्कुलः सद्गुरुकुलश्च स साल एवोच्यते तथा सालपर्यायः—सालधर्म्मा यथा हि सालः सच्छायत्वादिधर्म्मयुक्त एवं यो ज्ञानक्रियाप्रभवयशःप्रभृतिगुणयुक्तो भवति स तथोच्यते इत्येकः, तथा सालो नामैक इति तथैव एरण्डपर्यायस्तूक्तविपर्ययादिति द्वितीयः, एवमितरावपीति १९, तथा सालस्तथैव साल एव परिवारः—परि-

करो यस्य स सालपरिवारः, एवं शेषत्रयमिति २०, आचार्यस्तु साल इव सालो गुरुकुलश्रुतादिभिरुत्तमत्वात् सालपरिवारः सालकल्पमहानुभावसाधुपरिकरत्वात्, तथा एरण्डपरिवारः एरण्डकल्पनिर्गुणसाधुपरिकरत्वात् एवमेरण्डोऽपि श्रुतादिभिर्हीनत्वादिति, चतुर्थः सुगमः, उक्तचतुर्भङ्ग्या एव भावनार्थं 'सालदुमे'त्यादि गाथाचतुष्कं, व्यक्तं नवरं मञ्जुलम्—असुन्दरं २१, अनुश्रोतसा चरतीत्यनुश्रोतश्चारी—नद्यादिप्रवाहगामी एवमन्ये त्रयः २२, एवं भिक्षाकः—साधुः, यो ह्यभिग्रहविशेषादुपाश्रयसमीपात् क्रमेण कुलेषु भिक्षते सोऽनुश्रोतश्चारिमत्स्यवदनुश्रोतश्चारी प्रथमो, यस्तूत्क्रमेण गृहेषु भिक्षमाण उपाश्रयमायाति स द्वितीयो, यस्तु क्षेत्रान्तेषु भिक्षते स तृतीयः, क्षेत्रमध्ये चतुर्थः २३, मधुसित्थु—मदनं तस्य गोलो—वृत्तपिण्डो मधुसित्थगोल एवमन्येऽपि, नवरं जतु—लाक्षा दारुमृत्तिके प्रसिद्धे इति २४, यथैते गोला मृदुकठिनकठिनतरकठिनतमाः क्रमेण भवन्त्येवं ये पुरुषाः परीषहादिषु मृदुदृढदृढतरदृढतमसत्त्वा भवन्ति ते मधुसित्थगोलसमाना इत्यादिभिर्व्यपदेशैर्व्यपदिश्यन्त इति २५, अयोगोलादयः प्रतीताः २६, एतैश्चायोगोलकादिभिः क्रमेण गुरुगुरुतरगुरुतमात्यन्तगुरुभिः आरम्भादिविचित्रप्रवृत्त्युपार्जितकर्म्मभारा ये पुरुषा भवन्ति तेऽयोगोलसमाना इत्यादिव्यपदेशवन्तो भवन्ति पितृमातृपुत्रकलत्रगतस्नेहभारतो वेति २७, हिरण्यादिगोलेषु क्रमेणाल्पगुणगुणाधिकगुणाधिकतरगुणाधिकतमेषु पुरुषाः समृद्धितो ज्ञानादिगुणतो वा समानतया योज्याः २८, पत्राणि—पर्णानि तद्वत्प्रतनुतया यानि अस्यादीनि तानि पत्राणीति, असिः—खड्गः स एव पत्रमसिपत्रं करपत्रं—क्रकचं येन दारु छिद्यते क्षुरः—छुरः स एव पत्रं क्षुरपत्रं, कदम्बचीरिकेति शस्त्रविशेष इति २९, तत्र द्राक् छेदकत्वादसिपत्रसमः पुरुषो द्रागेव स्नेहपाशं छिनत्ति सोऽसिपत्रसमानः, अवधारितदेववचनसनत्कुमारचक्रवर्त्तिवत्, यस्तु पुनः पुनरुच्यमानो भावनाभ्यासात् स्नेहतरुं छिनत्ति स करपत्रसमानः, तथाविधश्रावकवत्, करपत्रस्य हि गमनागमनाभ्यां कालक्षेपेण छेदक-

त्वादिति, यस्तु श्रुतधर्म्ममार्गोऽपि सर्वथा स्नेहच्छेदासमर्थो देशविरतिमात्रमेव प्रतिपद्यते स क्षुरपत्रसमानः, क्षुरो हि केशादिकमल्पमेव छिनत्तीति, यस्तु स्नेहच्छेदं मनोरथमात्रेणैव करोति स चतुर्थः अविरतसम्यग्दृष्टिरिति, अथवा यो गुर्वादिषु शीघ्रमन्दमन्दतरमन्दतमतया स्नेहं छिनत्ति स एवमपदिश्यते ३१, कम्बादिभिरातानवितानभावेन निष्पाद्यते यः स कटः कट इव कट इत्युपचारात् तन्त्वादिमयोऽपि कट एवेति, तत्र 'सुंबकडे'त्ति तृणविशेषनिष्पन्नः 'विदलकडे'त्ति वंशशकलकृतः 'चम्मकडे'त्ति वद्ध्र्यूतमश्वकादिः 'कंबलकडे'त्ति कम्बलमेवेति ३२, एतेषु चाल्पबहुबहुतरबहुतमावयवप्रतिबन्धेषु पुरुषा योजनीयाः, तथाहि—यस्य गुर्वादिष्वल्पः प्रतिबन्धः स्वल्पव्यलीकादिनापि विगमात् स सुम्बकटसमान इत्येवं सर्वत्र भावनीयमिति ३३, चतुष्पदाः स्थलचरपञ्चेन्द्रियतिर्यञ्चः एकः खुरः पादे पादे येषां ते एकखुराः—अश्वादयः, एवं द्वौ खुरौ येषां ते तथा ते च गवादयः, गण्डी—सुवर्णकारादीनामधिकरणी गण्डिका तद्वत्पदानि येषां ते तथा ते हस्त्यादयः, 'सणप्फय'त्ति सनखपदाः नाखराः—सिंहादयः, इहोत्तरसूत्रद्वये च जीवानां पुरुषशब्दवाच्यत्वात् पुरुषाधिकारतेति ३४, चर्ममयपक्षाः पक्षिणश्चर्म्मपक्षिणो—वल्गुलीप्रभृतयः एवं लोमपक्षिणो—हंसादयः समुद्गकवत् पक्षौ येषां ते समुद्गकपक्षिणः, समासान्त इन्, ते च बहिर्द्वीपसमुद्रेषु, एवं विततपक्षिणोऽपीति ३५, क्षुद्रा—अधमा अनन्तरभवे सिद्ध्यभावात् प्राणा—उच्छ्वासादिमन्तः क्षुद्रप्राणाः संमूर्च्छनेन निर्वृत्ताः सम्मूर्च्छिमाः, तिरश्चां सत्का योनिर्येषां ते तथा ततः पदत्रयस्य कर्मधारये सति सम्मूर्च्छिमपञ्चेन्द्रियतिर्यग्योनिका इति भवति ३६, निपतिता—नीडादवतरीता—अवतरीतुं शक्तो नामैकः पक्षी धृष्टत्वादज्ञत्वाद्वा न तु परिव्रजिता—न परिव्रजितुं शक्तो बालत्वादित्येकः, एवमन्यः परिव्रजितुं शक्तः पुष्टत्वान्न तु निपतितुं भीरुत्वादन्यस्तूभयथा चतुर्थस्तूभयप्रतिषेधवानतिबालत्वादिति ३७, निपतिता—भिक्षाचर्यायामवतरीता भोजनाद्यर्थित्वान्न तु परिव्रजिता—परिश्रमको

४ स्थानाध्ययने उद्देशः ४ करण्डकाः वृक्षमत्स्यगोलपत्रकटाःचतुष्पदाद्याः पक्षिभिक्षूनिष्कृष्टाद्याः सू—३४७—३५२

म्लानत्वादलसत्वाल्लज्जालुत्वादेत्येकः अन्यः परिव्रजिता-परिभ्रमणशील आश्रयान्निर्गतः सन् न तु निपतिता-भिक्षार्थमवतरीतुमशक्तः सूत्रार्थापरिज्ञानादिना, शेषौ स्पष्टौ ३८, निष्कृष्टः-निष्कर्षितः तपसा कृशदेह इत्यर्थः पुनर्निकृष्टो भावतः कृशीकृतकषायत्वादेवमन्ये त्रय इति ३९, एतद्भावनार्थमेवानन्तरं सूत्रं-निष्कृष्टः कृशशरीरतया तथा निष्कृष्टः आत्मा कषायादिनिर्म्मथनेन यस्य स तथेत्येवमन्ये त्रय इति, अथवा निष्कृष्टस्तपसा कृशीकृतः पूर्वं पश्चादपि तथैवेत्येवमाद्यसूत्रं व्याख्येयं, द्वितीयं तु यथोक्तमेवेति ४०, बुधो बुधत्वकार्यभूतसत्क्रियायोगात्, उक्तञ्च—"पठकः पाठकश्चैव, ये चान्ये तत्त्वचिन्तकाः। सर्वे[ते]व्यसनिनो राजन्!, यः क्रियावान् स पण्डितः ॥१॥" इति, पुनर्बुधः सविवेकमनस्त्वादित्येकः, अन्यो बुधस्तथैव अबुधस्त्वविविक्तमनस्त्वात्, अपरस्त्वबुधोऽसत्क्रियत्वात् बुधो विवेकवन्मनस्त्वाच्चतुर्थ उभयनिषेधादिति ४१, अनन्तरसूत्रेणैव व्यक्तीक्रियते-बुधः सत्क्रियत्वात्, बुधं हृदयं-मनो यस्य स बुधहृदयो विवेकमनस्त्वात्, अथवा बुधः शास्त्रज्ञत्वात् बुधहृदयस्तु कार्येष्वमूढलक्षत्वादित्येकः, एवमन्ये त्रय ऊह्याः ४२, आत्मानुकम्पकः-आत्महितप्रवृत्तः प्रत्येकबुद्धो जिनकल्पिको वा परानपेक्षो वा निर्घृणः, परानुकंपको निष्ठितार्थतया तीर्थकरः आत्मानपेक्षो वा दयैकरसो मेतार्यवत्, उभयानुकंपकः स्थविरकल्पिक उभयाननुकंपकः पापात्मा कालशौकरिकादिरिति ४३।

अनन्तरं पुरुषभेदा उक्ताः, अधुना तद्व्यापारविशेषं तद्भेदसंपाद्यमभिधित्सुः सूत्रसप्तकमाह-'चउव्विहे संवासे' इत्यादि

चउव्विहे संवासे पं० तं०—दिव्वे आसुरे रक्खसे माणुसे १, चउव्विवे संवासे पं० तं०—देवे णाममेगे देवीए सद्धिं संवासं गच्छति देवे नाममेगे असुरीए सद्धिं संवासं गच्छति असुरे णाममेगे देवीए सद्धिं संवासं

गच्छइ असुरे नाममेगे असुरीए सद्धिं संवासं गच्छति २, चउव्विधे संवासे पं० तं०—देवे नाममेगे देवीए सद्धिं संवासं गच्छति देवे नाममेगे रक्खसीए सद्धिं संवासं गच्छति रक्खसे णाममेगे देवीए सद्धिं संवासं गच्छति रक्खसे नाममेगं रक्खसीए सद्धिं संवासं गच्छति ४, ३, चउव्विधे संवासे पं० तं०—देवे नाममेगे देवीए सद्धिं संवासं गच्छति देवे नाममेगे मणुस्सीहिं सद्धिं संवासं गच्छति मणुस्से नाममेगे देवीहिं सद्धिं संवासं गच्छति मणुस्से नाममेगे मणुस्सीइ सद्धिं संवासं गच्छति ४, चउव्विधे संवासे पं० तं०—असुरे णाममेगे असुरीए सद्धिं संवासं गच्छति असुरे नाममेगे रक्खसीए सद्धिं संवासं गच्छति ४, ५, चउव्विधे संवासे पं० तं०—असुरे नाममेगे असुरीए सद्धिं संवासं गच्छति असुरे णाममेगे मणुस्सीए सद्धिं संवासं गच्छति ४, ६, चउव्विधे संवासे पं० तं०—रक्खसे नाममेगे रक्खसीए सद्धिं संवासं गच्छति रक्खसे नाममेगे माणुसीए सद्धिं संवासं गच्छति ४, ७, (सू० ३५३) चउविहे अवद्धंसे पं० तं०—आसुरे आभिओगे संमोहे देवकिव्विसे चउहिं ठाणेहिं जीवा आसुरत्ताते कम्मं पगरेंति, तं०—कोवसीलाते पाहुडसीलयाते संसत्ततवोकम्मेणं निमित्ताजीवयाते, चउहिं ठाणेहिं जीवा आभिओगत्ताते कम्मं पगरेंति तं०—अत्तुक्कोसेणं परपरिवातेणं भूतिकम्मेणं कोउयकरणेणं, चउहिं ठाणेहिं जीवा सम्मोहत्ताते कम्मं पग ेंति, तं०—उम्मग्गदेसणाए मग्गंतराएणं कामासंसपओगेणं भिज्जानियाणकरणेणं; चउहिं ठाणेहिं जीवा देवकिव्विसियत्ताते कम्मं पगरेंति तं०—अरहंताणं अवन्नं वयमाणे अरहंतपन्नत्तस्स धम्मस्स अवन्नं वयमाणे आयरियउवज्झायाणमवन्नं वदमाणे चाउवन्नस्स सं-

नरस्स अन्नं वदमाणे (सू० ३५४)।

कण्ठ्यं नवरं स्त्रिया सह संवसनं–शयनं संवासः, द्यौः–स्वर्गः तद्वासी देवोऽप्युपचाराद् द्यौस्तत्र भवो दिव्यो वैमानिकसम्बन्धीत्यर्थः, असुरस्य–भवनपतिविशेषस्यायमासुर एवमितरौ, नवरं राक्षसो–व्यन्तरविशेषः, चतुर्भङ्गिकासूत्राणि देवासुरेत्येवमादिसंयोगतः

| | | | |
|---|---|---|---|
| देव १ | असुर २ | राक्षस ३ | मनुष्य |
| देवी | असुरी | राक्षसी | नारी |

षड् भवन्ति। पुरुषक्रियाधिकारादेवापध्वंससूत्रं तत्रापध्वंसनमपध्वंसः–चारित्रस्य तत्फलस्य वा असुरादिभावनाजनितो विनाशः, तत्रासुरभावनाजनित आसुरः, येषु चाऽनुष्ठानेषु वर्त्तमानोऽसुरत्वमर्जयति तेगतमनो वासनमासुरभावना, एवं भावनान्तरमपि, अभियोगभावनाजनित आभियोगः, सम्मोहभावनाजनितः साम्मोहः, देवकिल्बिषभावनाजनितो देवकिल्बिष इति, इह च कन्दर्पभावनाजनितः कान्दर्प्पोऽपध्वंसः पञ्चमोऽस्ति, स च सन्नपि नोक्तः, चतुःस्थानकानुरोधात्, भावना हि पञ्चागमेऽभिहिताः, आह च—"कंदप्प १ देवकिब्बिस २ अभिओगा ३ आसुरा य ४ संमोहा ५। एसा उ संकिलिट्ठा पञ्चविहा भावणा भणिया ॥१॥" [कंदर्पा देवकिल्बिषाऽभियोग्या आसुरी च संमोहा। एतास्तु संक्लिष्टाः पञ्चविधा भावना भणिता ॥१॥] आसाञ्च मध्ये यो यस्यां भावनायां वर्त्तते स तद्विधेषु देवेषु गच्छति चारित्रलेशसभावाद्, उक्तञ्च—"जो संजओऽवि एयासु अप्पसत्थासु वट्टइ कहंचि। सो तव्विहेसु गच्छइ सुरेसु भइओ चरणहीणो ॥१॥" [यः संयतोऽप्येतासु अप्रशस्तासु वर्त्तते कथञ्चित्। स तद्विधेषु सुरेषु गच्छति भक्तश्चरणहीनः ॥१॥] इति, आसुरादिरपध्वंस उक्तः, स चासुरत्वादिनिबन्धन इत्यसुरादिभावनास्वरूपभूतान्यसुरादित्वसाधनकर्म्मणां कारणानि सूत्रचतुष्टयेनाह–'चउहिं ठाणेहीं'त्यादि कण्ठ्यं, नवरं असुरेषु भव आसुरः–असुरविशेषलब्धावः आसुरत्वं तस्मै आसुरत्वाय तदर्थमित्यर्थः, अथवा असुरतायै असुरतया वा कर्म्म–तदायुष्कादि प्रकुर्वन्ति–कर्त्तु-

मारभन्ते, तद्यथा-क्रोधनशीलतया-कोपस्वभावत्वेन प्राभृतशीलतया-कलहनसम्बन्धतया संसक्ततपःकर्म्मणा-आहारोपधिशय्यादिप्रतिवद्धभावतपश्चरणेन निमित्ताजीवनतया-त्रैकालिकलाभालाभादिविषयनिमित्तोपात्ताहाराद्युपजीवनेनेति, अयमर्थोऽन्यत्रैवमुक्तः-"अणुबद्धविग्गहोविय संसत्ततवो निमित्तमाएसी । निक्किवणिराणुकंपो आसुरियं भावणं कुणइ ॥१॥" [अनुबद्धविग्रहः संसक्ततपा निमित्तादेशी निष्कृपः निरनुकंपः आसुरिकीं भावनां करोति ॥१॥] इति, तथा अभियोगं-व्यापारणमर्हन्तीत्याभियोग्याः-किङ्करदेवविशेषास्तद्भावस्तत्ता तस्यै तया वेति, आत्मोत्कर्षेण-आत्मगुणाभिमानेन परपरिवादेन-परदोषपरिकीर्त्तनेन भूतिकर्म्मणा-ज्वरितादीनां भूत्यादिभी रक्षादिकरणेन कौतुककरणेन-सौभाग्यादिनिमित्तं परस्नपनकादिकरणेनेति, इदमप्येवमन्यत्र-"कोउय भूईकम्मे पसिणा इयरे निमित्तमाजीवी । इड्डिरससायगरुओ अभिओगं भावणं कुणइ ॥१॥"इति [प्रश्नोऽङ्गुष्ठप्रश्नादिरितरः स्वप्नविद्यादिरिति] [कौतुकं भूतिकर्म प्रश्नः इतर (स्वप्नादिः) निमित्ताजीवी ऋद्धिरससातागौरवित आभियोग्यां भावनां करोति ॥१॥] तथा सम्मुह्यतीति सम्मोहः-मूढात्मा देवविशेष एव तद्भावस्तत्ता तस्यै सम्मोहतायै सम्मोहत्वाय सम्मोहतया वेति, उन्मार्गदेशनया-सम्यग्दर्शनादिरूपभावमार्गातिक्रान्तधर्मप्रथनेन [प्रकटनेन-प्रकथनेन] मार्गान्तरायेण-मोक्षाध्वप्रवृत्ततद्विघ्नकरणेन, कामाशंसाप्रयोगेण-शब्दादावभिलाषकरणेन, 'भिज्ज'त्ति लोभो गृद्धिस्तेन निदानकरणं एतस्मात्तपःप्रभृतेश्चक्रवर्त्यादित्वं मे भूयादिति निकाचनाकरणं तेनेति, इयमप्येवमन्यत्र-"उम्मग्गदेसओ मग्गनासओ मग्गविप्पडीवत्ती । मोहेण य मोहेत्ता संमोहं भावणं कुणइ ॥१॥" इति, [उन्मार्गदेशको मार्गनाशको मार्गविप्रतिपत्तिकः मोहेन च मोहयित्वा संमोहीं भावनां करोति ॥१॥] देवानां मध्ये किल्बिषः-पापोऽत एवास्पृश्यादिधर्म्मको देवश्चासौ किल्बिषश्चेति वा देवकिल्बिषः शेषं तथैव, अवर्णः-अश्लाघा असद्दोषोद्घट्टनमित्यर्थः, अयमर्थोऽन्यत्रैवमुच्यते—"नाणस्स केवलीणं धम्मायरिआण

गच्चमाहूणं। भागं अवन्नमाई किब्बिसियं भावणं कुणइ ॥१॥" इति, [ज्ञानस्य केवलिनां धर्माचार्याणां सर्वसाधूनाम्। भाषमाणोऽवर्णादि किल्बिषिकीं भावनां करोति ॥१॥"] इह कन्दर्पभावना नोक्ता चतुःस्थानकत्वादिति, अवसरश्चायमस्या इति सा प्रदर्श्यते— "कंदप्पे कुक्कुइए दवसीले यावि हासणकरे य। विम्हावितो य परं कंदप्पं भावणं कुणइ ॥१" इति, [कन्दर्पः कन्दर्पकथावान्, कुकुचितो भाण्डचेष्टः, द्रवशीलो दर्पात् द्रुतगमनभाषणादि, हासनकरो वेषवचनादिना स्वपरहासोत्पादकः विस्मापकः—इन्द्रजाली] [कंदर्पी कुकुचितः द्रुतगामी चापि हासनकरः परं विस्मापयन् (विस्मापक इन्द्रजाली) कंदर्पी भावनां करोति ॥१॥]

अयञ्चापध्वंसः प्रव्रज्यान्वितस्येति प्रव्रज्यानिरूपणाय 'चउव्विहा पव्वज्जे' त्यादि सूत्राष्टकं—

चउव्विहा पव्वज्जा पं० तं०—इहलोगपडिबद्धा परलोगपडिबद्धा दुहतो लोगपडिबद्धा अप्पडिबद्धा १, चउव्विहा पव्वज्जा पं० तं०—पुरओपडिबद्धा मग्गओपडिबद्धा दुहतो पडिबद्धा अपडिबद्धा २, चउव्विहा पव्वज्जा पं० तं०—ओवायपव्वज्जा अक्खातपव्वज्जा संगारपव्वज्जा विहगगइपव्वज्जा ३, चउव्विहा पव्वज्जा पं० तं०—तुयावइत्ता पुयावइत्ता मोयावइत्ता परिपूयावइत्ता ४, चउव्विहा पव्वज्जा पं० तं०—नडखइया भडखइया सीहखइया सियालक्खइया ५, चउव्विहा किसी पं० तं०—वाविया परिवाविया णिंदिता परिणिंदिता ६, एवामेव चउव्विहा पव्वज्जा पं० तं०—वाविता परिवाविता णिंदिता परिणिंदिता ७, चउव्विहा पव्वज्जा पं० तं०—धन्नपुंजितसमाणा धन्नविरल्लितसमाणा धन्नविक्खित्तसमाणा धन्नसंकट्टितसमाणा ८, (सू० ३५५)।

कण्ठ्यं, किन्तु इहलोकप्रतिबद्धा निर्वाहादिमात्रार्थिनां परलोकप्रतिबद्धा जन्मान्तरकामाद्यर्थिनां द्विधालोकप्रतिबद्धोभयार्थिनां अप्रतिबद्धा विशिष्टसामायिकवतामिति। पुरतः—अग्रतः प्रव्रज्यापर्यायभाविषु शिष्याहारादिषु या प्रतिबद्धा सा तथोच्यते, एवं मार्गतः—पृष्ठतः स्वजनादिषु, द्विधाऽपि काचित्, अप्रतिबद्धा पूर्ववत्। 'ओवाय'त्ति अवपातः—सद्गुरूणां सेवा ततो या प्रव्रज्या साऽवपातप्रव्रज्या, आख्यातस्य—प्रव्रज्येत्याद्युक्तस्य या स्यात् साऽऽख्यातप्रव्रज्या आर्यरक्षितभ्रातुः फल्गुरक्षितस्येवेति, 'सागर'त्ति सङ्केतस्तस्माद्या सा तथा मेतार्यादीनामिव यदिवा यदि त्वं प्रव्रजसि तदाऽहमपीत्येवं सङ्केततो या सा तथेति, 'विहगगइ'त्ति विहगगत्या—पक्षिन्यायेन परिवारादिवियोगेनैकाकिनो देशान्तरगमनेन च या सा विहगगतिप्रव्रज्या, क्वचिद् 'विहगपव्वज्जे'ति पाठस्तत्र विहगस्येवेति दृश्यमिति, विहतस्य वा—दारिद्र्यादिभिररिभिर्वेति। 'तुयावइत्त'त्ति तोदं कृत्वा तोदयित्वा—व्यथामुत्पाद्य या प्रव्रज्या दीयते, मुनिचन्द्रपुत्रस्य सागरचन्द्रेणेव सा तथोच्यते, 'उयावइत्त'त्ति क्वचित्पाठस्तत्र ओजो—बलं शारीरं विद्यादिसत्कं वा तत्कृत्वा-प्रदर्श्य या दीयते सा ओजयित्वेत्यभिधीयते, 'पुयावइत्त'त्ति प्लुङ् गता'विति वचनात् प्लावयित्वा—अन्यत्र नीत्वाऽऽर्यरक्षितवत्, पूतं वा दूषणव्यपोहेन कृत्वा या सा पूतयित्वेति, 'बुयावइत्त'त्ति सम्भाष्य गौतमेन कर्षकवत्, वचनं वा पूर्वपक्षरूपं कारयित्वा निगृह्य च प्रतिज्ञावचनं वा कारयित्वा या सा तथोक्ता, क्वचित् 'मोयावइत्त'त्ति पाठस्तत्र मोचयित्वा साधुना तैलार्थदासत्वप्राप्तभगिनीवदिति, 'परिवुयावइत्त'त्ति घृतादिभिः परिप्लुतभोजनः परिप्लुत एव तं कृत्वा परिप्लुतयित्वा सुहस्तिना रङ्कवत् या सा तथोच्यत इति। नटस्येव संवेगविकलधर्म्मकथाकरणोपार्जितभोजनादीनां 'खइय'त्ति खादितं भक्षणं यस्यां सा नटखादिता, नटस्येव वा 'खइव'त्ति संवेगशून्यधर्म्मकथनलक्षणो हेवाकः—स्वभावो यस्यां सा तथा, एवं भटादिष्वपि, नवरं भटः तथाविधबलोपदर्शनलब्ध-

भोजनादेः खादिता आरभटवृत्तिलक्षणहेवाको वा सिंहः पुनः शौर्यातिरेकादवज्ञयोपात्तस्य यथारब्धभक्षणेन वा खादिता तथाविधप्रकृतिर्वा शृगालस्तु न्यग्वृत्त्योपात्तस्यान्यान्यस्थानभक्षणेन वा खादिता तत्स्वभावो वेति। कृषिः—धान्यार्थं क्षेत्रकर्षणम्, 'वाविय'त्ति सकृद्धान्यवपनवती 'परिवाविय'त्ति द्विस्त्रिर्वा उत्पाट्य स्थानान्तरारोपणतः परिवपनवती शालिकृषिवत्, 'निंदिय'त्ति एकदा विजातीयतृणाद्यपनयनेन शोधिता निदाता, 'परिनिंदिय'त्ति द्विस्त्रिर्वा तृणादिशोधनेनेति, प्रव्रज्या तु वाविया सामायिकारोपणेन परिवाविया महाव्रतारोपणेन निरतिचारस्य सातिचारस्य वा मूलप्रायश्चित्तदानतः, निन्दिया सकृदतिचारालोचनेन परिणिंदिया पुनः पुनरिति 'धन्नपुंजियसमाण'त्ति खले लूनपूनविशुद्धपुञ्जीकृतधान्यसमाना सकलातिचारकचवरविरहेण लब्धस्वस्वभावत्वात् एका, अन्या तु खलक एव यद्विरेल्लितं—विसारितं वायुना पुनरपुञ्जीकृतं धान्यं तत्समाना या हि लघुनापि यत्नेन स्वस्वभावं लप्स्यत इति, अन्या तु यद्विकीर्णं—गोखुरक्षुण्णतया विक्षिप्तं धान्यं तत्समाना या हि सहजसमुत्पन्नातिचारकचवरयुक्तत्वात् सामग्र्यन्तरापेक्षितया कालक्षेपलभ्यस्वस्वभावा सा धान्यविकीर्णसमानोच्यते, अन्या तु यत्सङ्कर्षितं—क्षेत्रादाकर्षितं खलमानीतं धान्यं तत्समाना या हि बहुतरातिचारोपेतत्वाद् बहुतरकालप्राप्तव्यस्वस्वभावा सा धान्यसङ्कर्षितसमानेति, इह च पुञ्जितादेर्धान्यविशेषणस्य परनिपातः प्राकृतत्वादिति ॥

इयं च प्रव्रज्या एवं विविधा संज्ञावशाद्भवतीति संज्ञानिरूपणाय सूत्रपञ्चकं—

चत्तारि सन्नाओ पं० तं०—आहारसन्ना भयसन्ना मेहुणसन्ना परिग्गहसन्ना १, चउहिं ठाणेहिं आहारसन्ना

समुप्पज्जति, तं०—ओमकोट्ठताते १ छुहावेयणिज्जस्स कम्मस्स उदएणं २ मतीते ३ तदट्ठोवओगेणं ४, २, चउहिं ठाणेहिं भयसन्ना समुप्पज्जति, तं०—हीणसत्तत्ताते भयवेयणिज्जस्स कम्मस्स उदएणं मतीते तदट्ठोवओगेणं ३, चउहिं ठाणेहिं मेहुणसन्ना समुप्पज्जति, तं०—चितमंससोणिययाए मोहणिज्जस्स कम्मस्स उदएणं मतीते तदट्ठोवओगेणं ४, चउहिं ठाणेहिं परिग्गहसन्ना समुप्पज्जइ, तं०—अविमुत्तयाए लोभवेयणिज्जस्स कम्मस्स उदएणं मतीते तदट्ठोवओगेणं ५ (सू० ३५६) चउव्विहा कामा पं० तं०—सिंगारा कलुणा बीभत्सा रोद्दा, सिंगारा कामा देवाणं कलुणा कामा मणुयाणं बीभत्सा कामा तिरिक्खजोणियाणं रोद्दा कामा णेरइयाणं (सू० ३५७)।

'चत्तारी'त्यादि व्यक्तं, केवलं संज्ञानं संज्ञा–चैतन्यं, तच्चासातवेदनीयमोहनीयकर्म्मोदयजन्यविकारयुक्तमाहारसंज्ञादित्वेन व्यपदिश्यत इति, तत्राहारसंज्ञा–आहाराभिलाषः भयसंज्ञा–भयमोहनीयसम्पाद्यो जीवपरिणामो मैथुनसंज्ञा–वेदोदयजनितो मैथुनाभिलाषः परिग्रहसंज्ञा–चारित्रमोहोदयजनितः परिग्रहाभिलाष इति, अवमकोष्ठतया–रिक्तोदरतया मत्या–आहारकथाश्रवणादिजनितया तदर्थोपयोगेन–सततमाहारचिन्तयेति। हीनसत्त्वतया–सत्त्वाभावेन मतिः–भयवार्त्ताश्रवणभीषणदर्शनादिजनिता बुद्धिस्तया तदर्थोपयोगेन–इहलोकादिभयलक्षणार्थपर्यालोचनेनेति। चिते–उपचिते मांसशोणिते यस्य स तथा तद्भावस्तत्ता तया चितमांसशोणिततया मत्या–सुरतकथाश्रवणादिजनितबुद्ध्या तदर्थोपयोगेन–मैथुनलक्षणार्थानुचिन्तनेनेति। अविमुक्ततया–सपरिग्रहतया मत्या–सचेतनादिपरिग्रहदर्शनादिजनितबुद्ध्या तदर्थोपयोगेन–परिग्रहानुचिन्तनेनेति। संज्ञा हि कामगोचरा भवन्तीति कामनिरूपणसूत्रं व्यक्तश्च, किन्तु कामाः शब्दादयः, शृङ्गारा देवानां एकान्तिकात्यन्तिकमनोज्ञत्वेन प्रकृष्टरतिरसास्पदत्वादिति, रतिरूपो हि शृङ्गारो, यदाह—"व्यवहारः

पुंनार्योरन्योऽन्यं रक्तयोरतिप्रकृतिः शृङ्गारः" इति, मनुष्याणां करुणो मनोज्ञत्वस्यातथाविधत्वात्तुच्छत्वेन क्षणदृष्टनष्टत्वेन शुक्रशोणिताद्विप्रभवदेहाश्रितत्वेन च शोचनात्मकत्वात्, करुणो हि रसः शोकस्वभावः "करुणः शोकप्रकृति"रिति वचनादिति, तिरश्चां बीभत्सा जुगुप्सास्पदत्वात्, बीभत्सरसो हि जुगुप्सात्मको, यदाह—"भवति जुगुप्साप्रकृतिर्बीभत्सः' इति, नैरयिकाणां रौद्रा-दारुणा अत्यन्तमनिष्टत्वेन क्रोधोत्पादकत्वात्, रौद्ररसो हि क्रोधरूपो, यत आह—"रौद्रः क्रोधप्रकृति"रिति।

एते च कामाः तुच्छगम्भीरयोर्बाधकेतरा इति तावभिधित्सुः सदृष्टान्तान्यष्टौ सूत्राण्याह—

चत्तारि उदगा पं० तं०—उत्ताणे णाममेगे उत्ताणोदए उत्ताणे णाममेगे गंभीरोदए गंभीरे णाममेगे उत्ताणोदए गंभीरे णाममेगे गंभीरोदए १, एवामेव चत्तारि पुरिसजाया पं० तं०—उत्ताणे नाममेगे उत्ताणहिदए उत्ताणे णाममेगे गंभीरहिदए ४, २, चत्तारि उदगा पं० तं०—उत्ताणे णाममेगे उत्ताणोभासी उत्ताणे णाममेगे गंभीरोभासी ४, ३, एवामेव चत्तारि पुरिसजाया पं० तं०—उत्ताणे णाममेगे उत्ताणोभासी उत्ताणे णाममेगे गंभीरोभासी ४, ४, चत्तारि उदही पं० तं०—उत्ताणे णाममेगे उत्ताणोदही उत्ताणे णाममेगे गंभीरोदही ४, ५, एवामेव चत्तारि पुरिसजाता पं० तं०—उत्ताणे णाममेगे उत्ताणहियए ४, ६, चत्तारि उदही पं० तं०—उत्ताणे णाममेगे उत्ताणोभासी उत्ताणे णाममेगे गंभीरोभासी ४, ७, एवामेव चत्तारि पुरिसजाया पं० तं०—उत्ताणे णाममेगे उत्ताणोभासी ४, ८ (सू० ३५८)।

'चत्तारी'त्यादीनि व्यक्तानि च, किन्तु उदकानि-जलानि प्रज्ञप्तानि तत्रोत्तानं नामैकं तुच्छत्वात् प्रतलमित्यर्थः पुनरुत्तानं स्वच्छतयोपलभ्यमध्यस्वरूपत्वादुदकं-जलम्, उत्ताणोदयेत्ति व्यस्तोऽयं निर्देशः प्राकृतशैलीवशात् समस्त इवावभासते, न च मूलोपात्तेनोदकशब्देनायं गतार्थो भविष्यतीति वाच्यम्, तस्य बहुवचनान्तत्वेनेहासम्बद्ध्यमानत्वात्, साक्षादुदकशब्दे च सति किं तस्य वचनपरिणामादनुकर्षणेनेत्येवमुदधिसूत्रेऽपि भावनीयमीति। तथोत्तानं तथैव गम्भीरमुदकं-गडुलत्वादनुपलभ्यमानस्वरूपं तथा गम्भीरम्-अगाधं प्रचुरत्वादुत्तानमुदकं स्वच्छतयोपलभ्यमध्यस्वरूपत्वात् तथा गम्भीरमगाधत्वात् पुनर्गम्भीरमुदकं गडुलत्वादिति, पुरुषस्तु उत्तानः अगम्भीरो बहिर्दर्शितमददैन्यादिजन्यविकृतकायवाक्चेष्टत्वादुत्तानहृदयस्तु दैन्यादियुक्तगुह्यधरणासमर्थचित्तत्वादित्येकः अन्य उत्तानः कारणवशाद्दर्शितविकृतचेष्टत्वात् गम्भीरहृदयस्तु स्वभावेनोत्तानहृदयविपरीतत्वात् तृतीयस्तु गम्भीरो दैन्यादिवत्त्वेऽपि कारणवशात् संवृताकारतया उत्तानहृदयस्तथैव चतुर्थः प्रथमविपर्ययादिति। तथा उत्तानं प्रतलत्वादुत्तानमवभासते स्थानविशेषात् तथोत्तानं तथैव गम्भीरम्-अगाधमवभासते सङ्कीर्णाश्रयत्वादिना तथा गम्भीरम्-अगाधमुत्तानावभासि तु विस्तीर्णस्थानाश्रयत्वादिना। तथा गम्भीरम्-अगाधं गम्भीरावभासि तथाविधस्थानाश्रितत्वादिनैवेति, पुरुषस्तूत्तानः-तुच्छ उत्तान एवावभासते प्रदर्शिततुच्छत्वविकारत्वाद् द्वितीयः संवृतत्वात् तृतीयः कारणतो दर्शितविकारत्वाच्चतुर्थः सुज्ञानः। तथा उदकसूत्रद्वयवदुदधिसूत्रद्वयमपि सदार्ष्टान्तिकमवसेयमिति, अथवा उत्तानः सगाधत्वादेक उदधिः-उदधिदेशः पूर्वं पश्चादपि उत्तान एव वेलाया बहिःसमुद्रेष्वभावात् द्वितीयस्तूत्तानः पूर्वं पश्चाद् गम्भीरो वेलाऽऽगमेनागाधत्वात् तृतीयस्तु गम्भीरः पूर्वं पश्चात् वेलाविगमेनोत्तान उदधिः चतुर्थः सुज्ञानः॥

समुद्रप्रस्तावात्तत्तरकान् सूत्रद्वयेनाह—

चत्तारि तरगा पं० तं०—समुद्दं तरामीतेगे समुद्दं तरइ समुद्दं तरामीतेगे गोप्पतं तरति गोप्पतं तरामीतेगे ४, १, चत्तारि तरगा पं० तं०—समुद्दं तरित्ता नाममेगे समुद्दे विसीतते समुद्दं तरेत्ता णाममेगे गोप्पते विसीतति गोपतितं ४,२ (सू० ३५९) चत्तारि कुंभा पं० तं०—पुन्ने नाममेगे पुन्ने पुन्ने नाममेगे तुच्छे तुच्छे णाममेगे पुन्ने तुच्छे णाममेगे तुच्छे, एवामेव चत्तारि पुरिसजाया पं० तं०—पुन्ने नाममेगे पुन्ने ४, चत्तारि कुंभा पं० तं०—पुन्ने नाममेगे पुन्नोभासी पुन्ने नाममेगे तुच्छोभासी तुच्छे नाममेगे पुन्नोभासी तुच्छे नाममेगे तुच्छोभासी, एवं चत्तारि पुरिसजाया पं० तं०—पुन्ने णाममेगे पुन्नोभासी ४, चत्तारि कुंभा पं० तं०—पुन्ने नाममेगे पुन्नरूवे पुन्ने नाममेगे तुच्छरूवे ४, एवामेव चत्तारि पुरिसजाया पं०, तं०—पुन्ने नाममेगे पुन्नरूवे ४, चत्तारि कुंभा पं० तं०—पुन्नेवि एगे पितट्ठे पुन्नेवि एगे अवदले तुच्छेवि एगे पियट्ठे तुच्छेवि एगे अवदले, एवामेव चत्तारि पुरिसजाया पं० तं०—पुन्नेवि एगे पितट्ठे ४, तहेव चत्तारि कुंभा पं० तं०—पुन्नेवि एगे विस्संदति पुन्नेवि एगे णो विस्संदति तुच्छेवि एगे विस्संदति तुच्छेवि एगे न विस्संदइ, एवामेव चत्तारि पुरिसजाया पं० तं०-पुन्नेवि एगे विस्संदति ४, तहेव चत्तारि कुंभा पं० तं०—भिन्ने जज्जरिए परिस्साई अपरिस्साइ, एवामेव चउव्विहे चरित्ते पं० तं०—भिन्ने जाव अपरिस्साई, चत्तारि कुंभा पं० तं०—महुकुंभे नामं एगे महुप्पिहाणे महुकुंभे णामं एगे विसपिहाणे विसकुंभे नामं एगे महुपिहाणे विसकुंभे णाममेगे विसपिहाणे, एवामेव चत्तारि पुरिसजाया पं० तं०—महुकुंभे नाम एगे मधुपिहाणे ४—'हिययमपावमकलुसं जीहाऽवि य महुरभासिणी निच्चं। जंमि पुरिसंमि विज्जति से

मधुकुंभे मधुपिहाणे ॥१॥ हिययमपावमकलुसं जीहाऽवि य कडुयभासिणी निच्चं । जंमि पुरिसंमि विज्जति से मधुकुंभे विसपिहाणे ॥२॥ जं हिययं कलुसमयं जीहाऽवि य मधुरभासिणी निच्चं । जंमि पुरिसंमि विज्जति से विसकुंभे महुपिहाणे ॥३॥ जं हिययं कलुसमयं जीहाऽवि य कडुयभासिणी निच्चं । जंमि पुरिसंमि विज्जति से विसकुंभे विसपिहाणे ॥४॥ (सू० ३६०)।

'चत्तारी तरगे'त्यादि व्यक्तं, नवरं तरन्तीति तराः त एव तरकाः, समुद्रं-समुद्रवदुस्तरं सर्वविरत्यादिकं कार्यं तरामि-करोमीत्येवमभ्युपगम्य तत्र समर्थत्वादेकः समुद्रं तरति-तदेव समर्थयतीत्येकः, अन्यस्तु तदभ्युपगम्यासमर्थत्वात् गोष्पदं-तत्कल्पं देशविरत्यादिकमल्पतमं तरति-निर्वाहयतीति, अन्यस्तु गोष्पदप्रायमभ्युपगम्य वीर्यातिरेकात् समुद्रप्रायमपि साधयतीति चतुर्थः प्रतीतः १। समुद्रप्रायं कार्यं तरीत्वा-निर्वाह्य समुद्रप्राये प्रयोजनान्तरे विषीदति-न तन्निर्वाहयतीति विचित्रत्वात् क्षयोपशमस्येति, एवमन्ये त्रय इति २ । पुरुषानेव कुम्भदृष्टान्तेन प्रतिपिपादयिषुः सूत्रप्रपञ्चमाह-सुगमश्चायं, नवरं पूर्णः-सकलावयवयुक्तः प्रमाणोपेतो वा पुनः पूर्णो-मध्वादिभृतः द्वितीये भङ्गे तुच्छो-रिक्तः, तृतीये तुच्छः-अपूर्णावयवो लघुर्वा, चतुर्थः सुज्ञानः, अथवा पूर्णो-भृतः पूर्वं पश्चादपि पूर्ण इत्येवं चत्वारोऽपि १, पुरुषस्तु पूर्णो जात्यादिभिर्गुणैः पुनः पूर्णो ज्ञानादिभिरिति अथवा पूर्णो धनेन गुणैर्वा पूर्वं पश्चादपि तैः पूर्ण एवेत्येवं शेषा अपि २, पूर्णोऽवयवैर्दध्यादिना वा पूर्ण एवावभासते द्रष्टॄणामिति पूर्णावभासीत्येकोऽन्यस्तु पूर्णोऽपि कुतश्चिद्धेतोर्विवक्षितप्रयोजनासाधकत्वादेस्तुच्छोऽवभासते, एवं शेषौ ३ । पुरुषस्तु पूर्णो धनश्रुतादिभिस्तद्विनियोगाच्च पूर्ण एवावभासते, अन्यस्तु तदविनियोगात्तुच्छ एवावभासते, अन्यस्तु तुच्छोऽपि कथमपि प्रस्तावोचितप्रवृत्तेः पूर्णवदवभासते, अपरस्तुच्छो धनश्रुतादि-

गृहीतोऽत एव तदविनियोजकत्वात् तुच्छावभासीति ४। तथा पूर्णो नीरादिना पुनः पूर्णं पुण्यं वा-पवित्रं रूपं यस्य स तथेति प्रथमो द्वितीये तुच्छं-हीनं रूपम्-आकारो यस्य स तुच्छरूपः, एवं शेषौ ५। पुरुषस्तु पूर्णो ज्ञानादिभिः पूर्णरूपः पुण्यरूपो वा विशिष्टरजोहरणादिद्रव्यलिङ्गसद्भावात् सुसाधुरिति द्वितीयभङ्गे तुच्छरूपः कारणान्यक्तलिङ्गः सुसाधुरेवेति तृतीये तुच्छो ज्ञानादिविहीनो निह्नवादिश्चतुर्थो ज्ञानादिद्रव्यलिङ्गहीनो गृहस्थादिरिति ६। तथा पूर्णस्तथैव अपिस्तुच्छापेक्षया समुच्चयार्थः एकः-कश्चित् प्रियाय-प्रीतये अयमिति प्रियार्थः कनकादिमयत्वात् सार इत्यर्थः, तथा अपदलम्-अपशदं द्रव्यं कारणभूतं मृत्तिकादि यस्यासावपदलः अवदलति वा-दीर्यत इत्यवदलः आमपक्वतयाऽसार इत्यर्थः, तुच्छोऽप्येवमेवेति ७। पुरुषो धनश्रुतादिभिः पूर्णः प्रियार्थः कश्चित्प्रियवचनदानादिभिः प्रियकारी सार इति, अन्यस्तु न तथेत्यपदलः परोपकारं प्रत्ययोग्य इति, तुच्छोऽप्येवमेवेति ८। पूर्णोऽपि जलादेर्विष्यन्दते-क्षरति, इह तुच्छः-तुच्छजलादिः स एव विष्यन्दते, अपिः सर्वत्र समुच्चये प्रतियोग्यपेक्षयेति ९। पुरुषस्तु पूर्णोऽप्येको विष्यन्दते-धनं ददाति श्रुतं वा अन्यो नेति तुच्छोऽपि-अल्पवित्तादिरपि धनश्रुतादि विष्यन्दतेऽन्यो नैवेति १०। तथा भिन्नः-स्फुटितः जर्जरितो-राजीयुक्तः परिश्रावी-दुष्पक्वत्वात् क्षरकः अपरिश्रावी कठिनत्वादिति ११। चारित्रं तु भिन्नं मूलप्रायश्चित्तापत्त्या जर्जरितं छेदादिप्राप्त्या परिस्रावि सूक्ष्मातिचारतया अपरिस्रावि निरतिचारतयेति, इह च पुरुषाधिकारेऽपि यच्चारित्रलक्षणपुरुषधर्मभणनं तद्धर्मधर्मिणोः कथञ्चिदभेदादनवद्यमनगन्तव्यमिति १२। तथा मधुनः-क्षौद्रस्य कुम्भो मधुकुम्भो मधुभृतं गव्वेव वा पिधानं-स्थगनं यस्य स मधुपिधानः एवमन्ये त्रयः १३। पुरुषसूत्रं स्वयमेव 'हियं'मित्यादिगाथाचतुष्टयेन भावितमिति, तत्र हृदयं-मनः अपापम्-अहिंसमकलुषम्-अप्रीतिवर्जितमिति, जिह्वाऽपि च मधुरभाषिणी नित्यं यस्मिन् पुरुषे विद्यते स पुरुषो मधुकुम्भ इव मधुकुम्भो मधुपिधान इव मधुपिधान

इति प्रथमभङ्गयोजना, तृतीयगाथायां यद् हृदयं कलुषमयम्—अप्रीत्यात्मकमुपलक्षणत्वात् पापं च जिह्वा या मधुरभाषिणी नित्यं तत्सा चेति गम्यते यस्मिन् पुरुषे विद्यते स पुरुषो विषकुम्भो मधुपिधानस्तत्साधर्म्यादिति १४।

अत्र च चतुर्थः पुरुष उपसर्गकारी स्यादित्युपसर्गप्ररूपणाय 'चउव्विहा उवसग्गे'त्यादि सूत्रपञ्चकमाह—

चउव्विहा उवसग्गा पं० तं०—दिव्वा माणुसा तिरिक्खजोणिया आयसंचेयणिज्जा १, दिव्वा उवसग्गा चउव्विहा पं० तं०—हासा पाओसा वीमंसा पुढोवेमाता २, माणुस्सा उवसग्गा चउव्विधा पं० तं०—हासा पाओसा वीमंसा कुसीलपडिसेवणया ३, तिरिक्खजोणिया उवसग्गा चउव्विहा पं० तं०—भता पदोसा आहारहेउं अवच्चलेणसारक्खणया ४, आतसंचेयणिज्जा उवसग्गा चउव्विहा पं० तं०—घट्टणता पवडणता थंभणता लेसणता ५ (सू० ३६१)।

कण्ठ्यश्चेदं, नवरमुपसर्जनान्युपसृज्यते वा—धर्म्मात् प्रच्याव्यते जन्तुरेभिरुपसर्ग्गा—बाधाविशेषाः, ते च कर्तृभेदाच्चतुर्विधाः, आह च—"उवसज्जणमुवसग्गो तेण तओ य उवसिज्जए जम्हा। सो दिव्वमणुयतेरिच्छआयसंवेयणाभेओ ॥१॥" इति, [ उपसर्जनमुपसर्गः येन यतो वोपसृज्यते यस्मात् स दिव्यमानुजतैर्यगात्मसंवेदनाभेदः ॥१॥ ] आत्मना संचेत्यन्ते—क्रियन्त इत्यात्मसंचेतनीयाः, तत्र दिव्या हासत्ति—हासाद्भवन्ति हाससम्भूतत्वाद्वा हासा उपसर्ग्गा एवेत्येवमन्यत्रापि, यथा भिक्षार्थं ग्रामान्तरप्रस्थितक्षुल्लकैर्व्यन्तर्या उपयाचितं प्रतिपन्नं—यदीप्सितं लप्स्यामहे तदा तवोण्डेरकादि दास्याम इति, लब्धे च तत्र तवेदमिति

भगिन्या तद्गण्डेरकादि तैः स्वयमेव भक्षितं, देवतया च हासेन तद्रूपमाहृत्य क्रीडितं अनागच्छत्सु च क्षुल्लकेषु व्याकुले गच्छे निवेदितमाचार्याणां देवतया क्षुल्लकवृत्तं, ततो श्रुपभैरुण्डेरकादि याचित्वा तस्यै दत्तं, तया तु ते दर्शिता इति, प्रद्वेषाद्यथा सङ्गमको महावीरस्योपसर्गानकरोत्, विमर्षात् यथा कश्चिद्देवकुलिकायां वर्षान्क्षपित्वा साधुषु गतेषु तदीय एवान्यः पश्चादागतस्तत्रोषितः तं च देवता किंस्वरूपोऽयमिति विमर्षादुपसर्गितवतीति, पृथग्–भिन्ना विविधा मात्रा–हासादिवस्तुरूपा येषु ते पृथग्विमात्रा अथवा पृथग्–विविधा मात्रा विमात्रा तया इत्येतल्लुप्ततृतीयैकवचनं पदं दृश्यं, तथाहि–हासेन कृत्वा प्रद्वेषेण करोतीत्येवं संयोगाः, यथा सङ्गमक एव विमर्षेण कृत्वा प्रद्वेषेण कृतवानिति, तथा मानुष्या हासात् यथा गणिकादुहिता क्षुल्लकमुपसर्गितवती सा च तेन दण्डेन ताडिता विवादे न गतः श्रीगृहदृष्टान्तो निवेदितस्तेनेति, प्रद्वेषाद्यथा गजसुकुमारः सोमिलब्राह्मणेन व्यपरोपितः, विमर्षाद्यथा चाणक्योक्तचन्द्रगुप्तेन धर्म्मपरीक्षार्थं लिङ्गिनोऽन्तःपुरे धर्म्ममाख्यापिताः क्षोभिताश्च साधवस्तु क्षोभितुं न शकिता इति, कुशीलम्–अब्रह्म तस्य प्रतिषेवणं कुशीलप्रतिषेवणं तद्भावः कुशीलप्रतिषेवणता उपसर्ग्गः कुशीलस्य वा प्रतिषेवणं येषु ते कुशीलप्रतिषेवणकाः अथवा कुशीलप्रतिषेवणयेति व्याख्येयं, यथा सन्ध्यायां वसत्यर्थं प्रोषितस्येर्ष्यालोर्गृहे प्रविष्टः साधुश्चतसृभिरीर्ष्यालुजायाभिर्दत्तावासः प्रत्येकं चतुरोऽपि यामानुपसर्गितो न च क्षुभितः, तथा तैरश्चा भयात् श्वादयो दशेयुः प्रद्वेषाच्चण्डकौशिको भगवन्तं दष्टवान् आहारहेतोः सिंहादयः अपत्यलयनसंरक्षणाय काक्यादय उपसर्गयेयुरिति, तथा आत्मसंचेतनीयाः घट्टनता घट्टनया वा यथाऽक्षिणि रजः पतितं तत-स्तदक्षि हस्तेन मलितं दुःखितुमारब्धमथवा स्वयमेवाक्षिणि गले वा मांसाङ्कुरादि जातं घट्टयतीति प्रपतनता प्रपतनया वा यथा अप्रयत्नेन गच्छतः प्रपतनात् दुःखमुत्पद्यते स्तम्भनता स्तम्भनया वा यथा तावदुपविष्टः स्थितो यावत् सुप्तः पादादिः स्तब्धो जातः श्लेष-

णता श्लेषणया वा यथा पादमाकुञ्च्य स्थितो वातेन तथैव पादो लगित इति, भवन्ति चात्र गाथाः—"हास १ प्पदोस २ वीमंसओ ३ विमायाय ४ वा भवे दिव्वो। एवं चिय माणुस्सो कुसीलपडिसेवणचउत्थो ॥१॥ तिरिओ भय १ प्पओसा २ ऽऽहारा ३ ऽवच्चादिरक्खणत्थं वा ४। घट्टण १ थंभण २ पवडण ३ लेसणओ वाऽऽयसंचेओ ४ ॥२॥ दिव्वंमि वंतरी १ संगमे २ गजइ ३ लोभणादीया ४ [इत्युत्तरार्द्धं], गणिया १ सोमिल २ धम्मोवएसणे ३ सालुजोसियाईया ४। तिरियंमि साण १ कोसिय २ सीहा अचिरस्सूवियगवाई ॥३॥ कणुग १ कुडणा २ भिपयणाइ ३ गत्तसंलेसणादओ ४ नेया। आओदाहरणा वाय १ पित्त २ कफ ३ सन्निवाया व"त्ति ॥४॥ [हास्यात्प्रद्वेषाद्विमर्शाद्विमात्रातो वा भवेद्दिव्यः। एवमेव मानुष्यः कुशीलप्रतिषेवनाचतुर्थः ॥१॥ तैरश्चः भयात्प्रद्वेषादाहारादपत्यरक्षणार्थं वा। घट्टनस्तंभनप्रपतनसंलेषणतो वाऽऽत्मसंवेदः॥ दिव्ये व्यन्तरी संगम एकयतिलोभन्यादिका (क्षोभणादिकाः)। मानुष्ये गणिकासोमिलधर्म्मोपदेशकेर्ष्यालुयोषिदादयः ॥ तैरश्चीने श्वकौशिकसिंहाचिरप्रसूतगवादिकाः। कणकुट्टनाभिपतनगर्तासंलेषणादयो ज्ञेयाः ॥ आत्मोदाहरणानि वातपित्तकफसन्निपाता वा]

उपसर्गसहनात् कर्म्मक्षयो भवतीति कर्म्मस्वरूपप्रतिपादनायाह—

चउव्विहे कम्मे पं० तं०—सुभे नाममेगे सुभे सुभे नाममेगे असुभे असुभे नाम ४, १, चउव्विहे कम्मे पं० तं०—सुभे नाममेगे सुभविवागे सुभे णाममेगे असुभविवागे असुभे नाममेगे सुभविवागे असुभे नामभेगे असुभविवागे ४, २, चउव्विहे कम्मे पं० तं०—पगडीकम्मे ठितीकम्मे अणुभावकम्मे पदेसकम्मे ४, ३, (सू०

४ स्थानाध्ययने उद्देशः ४ कर्मसङ्घबुद्धिःजीव सू–३६३ ३६५

॥२६७॥

३६२) चउव्विहे संघे पं० तं०—समणा समणीओ सावगा साविग्राओ (सू० ३६३) चउव्विहा बुद्धी पं० तं०—उप्पत्तिता वेणतिता कम्मिया पारिणामिया, चउव्विधा मई पं० तं० – उग्गहमती ईहामती अवायमई धारणामती, अथवा चउव्विहा मती पं० तं०—अरंजरोदगसमाणा वियरोदयसमाणा सरोदगसमाणा सागरोदगसमाणा (सू० ३६४) चउव्विहा संसारसमावन्नगा जीवा पं० तं०—णेरइता तिरिक्खजोणीया मणुस्सा देवा, चउव्विहा सव्वजीवा पं० तं०—मणजोगी वइजोगी कायजोगी अजोगी अहवा चउव्विहा सव्वजीवा पं० तं०—इत्थिवेयगा पुरिसवेदगा णपुंसकवेदगा अवेदगा अथवा चउव्विहा सव्वजीवा पं० तं०—चक्खुदंसणी अचक्खुदंसणी ओहिदंसणी केवलदंसणी अहवा चउव्विहा सव्वजीवा पं० तं०—संजया असंजया संजयासंजया णोसंजयाणोअसंजया (सू० ३६५)।

'चउव्विहे'त्यादि सूत्रत्रयं व्यक्तं, नवरं क्रियत इति कर्म्म ज्ञानावरणीयादि तत् शुभं–पुण्यप्रकृतिरूपं पुनः शुभं–शुभानुबन्धित्वात् भरतादीनामिव, शुभं तथैवाशुभमशुभानुबन्धित्वात् ब्रह्मदत्तादीनामिव अशुभं–पापप्रकृतिरूपं शुभं शुभानुबन्धित्वात् दुःखितानामकामनिर्जरावतां गवादीनामिव अशुभं तथैव पुनरशुभमशुभानुबन्धित्वात् मत्स्यबन्धादीनामिवेति। तथा शुभं सातादि सातादित्वेनैव यद्बद्धं तथैवोदेति यत्तत् शुभविपाकं यत्तु बद्धं शुभत्वेन संक्रमकरणवशान्नूदेत्यशुभत्वेन तद् द्वितीयं, भवति च कर्मणि कर्मान्तरानुप्रवेशः, संक्रमाभिधानकरणवशाद्, उक्तञ्च–"मूलप्रकृत्यभिन्नाःसंक्रमयति गुणत उत्तराः प्रकृतीः। नन्वात्माऽमूर्त्तत्वादध्यवसानप्रयोगेण ॥१॥" इति, तथा मतान्तरम्–"मोत्तूण आउयं खलु दंसणमोहं चरित्तमोहं च। सेसाणं पयडीणं उत्तरविहिसंकमो भणिओ ॥१॥"

[आयुर्दर्शनमोहं चारित्रमोहमेव च मुक्त्वा शेषाणां प्रकृतीनामुत्तरविधिसंक्रमो भणितः ॥१॥] यद्बद्धमशुभतयोदेति च शुभतया तत्तृतीयं चतुर्थं प्रतीतमिति, तृतीयं कर्म्मसूत्रमत्रत्यद्वितीयोद्देशकबन्धसूत्रवज्ज्ञेमिति। चतुर्विधकर्म्मस्वरूपं सङ्घ एव वेत्तीति सङ्घसूत्रं, स च सर्वविद्वचनसंस्कृतबुद्धिमानिति बुद्धिसूत्रं, बुद्धिश्च मतिविशेष इति मतिसूत्रे, सुगमानि चैतानि, नवरं सङ्घो-गुणरत्नपात्रभूत-सत्त्वसमूहः, तत्र श्राम्यन्ति-तपस्यन्तीति श्रमणाः अथवा सह मनसा शोभनेन निदानपरिणामलक्षणपापरहितेन च चेतसा वर्त्तत इति समनसस्तथा समानं-स्वजनपरजनादिषु तुल्यं मनो येषां ते समनसः, उक्तञ्च—"तो समणो जइ सुमणो भावेण य जइ न होइ पावमणो। सयणे य जणे य समो समो य माणावमाणेसुं ॥१॥" [तदा श्रमणः यदि सुमनाः भावेन यदि न भवति पापमनाः। स्वजने जने च समः समश्च मानापमानयोः ॥१॥] अथवा समिति-समतया शत्रुमित्रादिष्वणन्ति-प्रवर्त्तन्त इति समणाः, आह च—"नत्थि य सि कोइ वेसो पिओ व सव्वेसु चेव जीवेसु। एएण होइ समणो एसो अन्नोऽवि पज्जाओ ॥१॥" [नास्ति च तस्य कोऽपि द्वेष्यः प्रियो वा सर्वेष्वपि जीवेषु। एतेन भवति समनाः एषोऽन्योऽपि पर्यायः ॥१॥] इति, प्राकृततया सर्वत्र समणत्ति, एवं समणीओ, तथा शृण्वन्ति जिनवचनमिति श्रावकाः, उक्तञ्च—"अवाप्तदृष्ट्यादिविशुद्धसम्पत्, परं समाचारमनुप्रभातम्। शृणोति यः साधुजनादतन्द्रस्तं श्रावकं प्राहुरमी जिनेन्द्राः ॥१॥" इति, अथवा श्रान्ति पचन्ति तत्त्वार्थश्रद्धानं निष्ठां नयन्तीति श्राः, तथा वपन्ति-गुणवत्सप्तक्षेत्रेषु धनबीजानि निक्षिपन्तीति वाः, तथा किरन्ति-क्लिष्टकर्म्मरजो विक्षिपन्तीति काः, ततः कर्म्मधारये श्रावका इति भवति, यदाह-"श्रद्धालुतां श्राति पदार्थचिन्तनाद्धनानि पात्रेषु वपत्यनारतम्। किरत्यपुण्यानि सुसाधुसेवनादथापि तं श्रावकमाहुरञ्जसा ॥१॥" इति, एवं श्राविका अपीति, तथा उत्पत्तिरेव प्रयोजनं यस्याः सा औत्पत्तिकी, ननु क्षयोपशमः कारणमस्याः, सत्यं,

किन्तु स खल्वन्तरङ्गत्वात्सर्वबुद्धिसाधारण इति न विवक्ष्यते, न चान्यच्छास्त्रकर्माभ्यासादिकमपेक्षत इति, अपि च—बुद्ध्युत्पादात्पूर्वं स्वयमदृष्टोऽन्यतश्चाश्रुतो मनसाऽप्यनालोचितस्तस्मिन्नेव क्षणे यथावस्थितोऽर्थो गृह्यते यया सा लोकद्वयाविरुद्धैकान्तिकफलवती बुद्धिरौत्पत्तिकीति, यदाह—"पुव्वमदिट्ठमसुयमवेइयतक्खणविसुद्धगहियत्था । अव्वाहयफलजोगा बुद्धी उप्पत्तिया नाम ॥१॥" इति, [पूर्वमदृष्टाश्रुताज्ञातस्य तत्क्षणे गृहीतविशुद्धार्था । अव्याहतफलयोगवती औत्पातिकी नाम्नी बुद्धिः ॥१॥] नटपुत्ररोहकादीनामिवेति, तथा विनयो—गुरुशुश्रूषा स कारणमस्यास्तत्प्रधाना वा वैनयिकी, अपिच—कार्यभरनिस्तरणसमर्था धर्मार्थकामशास्त्राणां गृहीतसूत्रार्थसारा लोकद्वयफलवती चेयमिति, यदाह—"भरनित्थरणसमत्था तिवग्गसुत्तत्थगहिअपेयाला । उभओ लोगफलवती विणयसमुत्था हवइ बुद्धि ॥१॥ त्ति, [भरनिस्तरणसमर्था गृहीतत्रिवर्गशास्त्रसूत्रार्थसारा । उभयलोकफलवती विनयसमुत्था भवति बुद्धिः ॥१॥] नैमित्तिकसिद्धपुत्रशिष्यादीनामिवेति, अनाचार्यकं कर्म्म साचार्यकं शिल्पं कादाचित्कं वा कर्म्म नित्यव्यापारस्तु शिल्पमिति, कर्म्मणो जाता कर्म्मजा, अपिच—कर्माभिनिवेशोपलब्धकर्म्मपरमार्था कर्म्माभ्यासविचाराभ्यां विस्तीर्णा प्रशंसाफलवती चेति, यदाह—"उवओगदिट्ठसारा कम्मपसंगपरिघोलणविसाला । साहुक्कारफलवती कम्मसमुत्था हवइ बुद्धी ॥१॥" इति [उपयोगदृष्टसारा कर्मप्रसंगपरिघोलनविशाला । साधुकारफलवती कर्मसमुत्था भवति बुद्धिः ॥१॥] हैरण्यककर्षकादीनामिवेति, परिणामः—सुदीर्घकालपूर्वापरार्थावलोकनादिजन्य आत्मधर्म्मः स प्रयोजनमस्यास्तत्प्रधाना वेति पारिणामिकी, अपिच—अनुमानकारणमात्रदृष्टान्तैः साध्यसाधिका वयोविपाके च पुष्टीभूता अभ्युदयमोक्षफला चेति, यदाह—"अणुमाणहेउदिट्ठंतसाहिया वयविवागपरिणामा । हियनिस्सेसफलवई बुद्धी परिणामिया नाम ॥१॥" इति [अनुमानहेतुदृष्टान्तसाधिका वयोविपाकपरिणामा । हितनिःश्रेयसफलवती बुद्धिः पारिणामिकीनाम्नी ॥१॥अभयकु-

माराढीनामिवेति । तथा मननं मतिः तत्र सामान्यार्थस्याशेषविशेषनिरपेक्षस्यानिर्देश्यस्य रूपादेः अव इति–प्रथमतो ग्रहणं परिच्छेदनमवग्रहः स एव मतिरवग्रहमतिरेवं सर्वत्र, नवरं तदर्थविशेषालोचनमीहा प्रक्रान्तार्थविशेषनिश्चयोऽवायः अवगतार्थविशेषधरणं धारणेति, उक्तञ्च—"सामन्नत्थावगहणमोग्गहो भेयमग्गणमिहेहा । तस्सावगमोऽवाओ अविच्चुई धारणा तस्स ॥१॥" इति । [सामान्येनार्थावग्रहणमवग्रहो भेदमार्गणमिहेहा तस्यावगमोऽवायोऽविच्युतिर्धारणा तस्य ॥१॥] तथा अरञ्जरम्–उदकुम्भो अलञ्जरमिति यत्प्रसिद्धं तत्रोदकं यत्तत्समाना प्रभूतार्थग्रहणोत्प्रेक्षणधरणसामर्थ्याभावेनाल्पत्वादस्थिरत्वाच्च, अरञ्जरोदकं हि सङ्क्षिप्तं शीघ्रं निष्ठितं चेति, विदरो–नदीपुलिनादौ जलार्थो गर्त्तः तत्र यदुदकं तत्समाना अल्पत्वादपरापरार्थोहनमात्रसमर्थत्वात् झगिति अनिष्ठितत्वाच्च, तदुदकं ह्यल्पं तथाऽपरापरमल्पमल्पं स्यन्दते, अत एव क्षिप्रमनिष्ठितश्चेति, सरउदकसमाना तु विपुलत्वाद्बहुजनोपकारित्वादनिष्ठितत्वाच्च प्रायः सरोजलस्याप्येवंभूतत्वादिति, सागरोदकसमाना पुनः सकलपदार्थविषयत्वेनात्यन्तविपुलत्वादक्षयत्वादलब्धमध्यत्वाच्च, सागरजलस्यापि ह्येवंभूतत्वादिति । यथोक्तमतिमन्तो जीवा एव भवन्तीति जीवसूत्राणि पञ्च व्यक्तानि चैतानि, नवरं मनोयोगिनः-समनस्का योगत्रयसद्भावेऽपि तस्य प्राधान्यादेवं वाग्योगिनो द्वीन्द्रियादयः काययोगिन एकेन्द्रिया अयोगिनो–निरुद्धयोगाः सिद्धाश्चेति । अवेदकाः–सिद्धादयः । चक्षुषः सामान्यार्थग्रहणमवग्रहेहारूपं दर्शनं चक्षुर्दर्शनं तद्वन्तश्चतुरिन्द्रियादयः, अचक्षुः–स्पर्शनादि तद्दर्शनवन्त एकेन्द्रियादय इति । संयताः–सर्वविरताः असंयता–अविरताः संयतासंयता–देशविरताः त्रयप्रतिषेधवन्तः सिद्धा इति ॥

जीवाधिकाराज्जीवविशेषान् पुरुषभेदान् चतुःसूत्र्याऽऽह—

चत्तारि पुरिसजाया पं० तं०—मित्ते नाममेगे मित्ते मित्ते नाममेगे अमित्ते अमित्ते नाममेगे मित्ते अमित्ते णाममेगे अमित्ते १, चत्तारि पुरिसजाया पं० तं०—मित्ते णाममेगे मित्तरूवे चउभंगो, ४, २, चत्तारि पुरिसजाया पं० तं०—मुत्ते णाममेगे मुत्ते मुत्ते णाममेगे अमुत्ते, ४, ३, चत्तारि पुरिसजाया पं० तं०—मुत्ते णाममेगे मुत्तरूवे ४, ४, (सू० ३६६) पंचिंदियतिरिक्खजोणिया चउगईया चउआगईया पं० तं०—पंचिंदियतिरिक्खजोणिया पंचिंदियतिरिक्खजोणिएसु उववज्जमाणा णेरइएहिंतो वा तिरिक्खजोणिएहिंतो वा मणुस्सेहिंतो वा देवेहिंतो वा उववज्जेज्जा, से चेव णं से पंचिंदियतिरिक्खजोणिए पंचिंदियतिरिक्खजोणियत्तं विप्पजहमाणे णेरइयत्ताए वा जाव देवत्ताते वा उवागच्छेज्जा, मणुस्सा चउगईआ चउआगतिता, एवं चेव मणुस्सावि (सू० ३६७) बेइंदिया णं जीवा असमारभमाणस्स चउविहे संजमे कज्जति, तं०—जिब्भामयातो सोक्खातो अववरोवित्ता भवति, जिब्भामएणं दुक्खेणं असंजोगेत्ता भवति, फासमयातो सोक्खातो अववरोवेत्ता भवइ एवं चेव ४, बेइंदियाणं जीवा समारभमाणस्स चउविधे असंजमे कज्जति, तं०—जिब्भामयातो सोक्खाओ ववरोवित्ता भवति, जिब्भामतेणं दुक्खेणं संजोगित्ता भवति, फासामयातो सोक्खाओ ववरोवेत्ता भवइ (सू० ३६८) सम्मद्दिट्ठिताणं णेरइयाणं चत्तारि किरियाओ पं० तं०—आरंभिता परिग्गहिता मायावत्तिया अपचक्खाणकिरिया, सम्मद्दिट्ठिताणमसुरकुमाराणं चत्तारि किरियाओ पं० तं०—एवं चेव, एवं विगलिंदियवज्जं जाव वेमाणियाणं (सू० ३६९) चउहिं ठाणेहिं संते गुणे नासेज्जा, तं०—कोहेणं पडिनिसेवेणं अकयण्णुयाए मिच्छत्ताभिनिवेसेणं।

चउहिं ठाणेहिं संते गुणे दीवेज्जा तंजहा—अब्भासवत्तितं परच्छंदाणुवत्तितं कज्जहेउं कतपडिकतितेति वा, (सू० ३७०) णेरइयाणं चउहिं ठाणेहिं सरीरुप्पत्ती सिता, तंजहा—कोहेणं माणेणं मायाए लोभेणं, एवं जाव वेमाणियाणं, णेरइयाणं चउहिं ठाणेहिं निव्वत्तिते सरीरे पं० तं०—कोहनिव्वत्तिए जाव लोभनिव्वत्तिए, एवं जाव वेमाणियाणं (सू० ३७१)।

'चत्तारी'त्यादि, स्पष्टा चेयं, नवरं मित्रमिहलोकोपकारित्वात्पुनर्मित्रं—परलोकोपकारित्वात्सद्गुरुवत्, अन्यस्तु मित्रं स्नेहवत्त्वादमित्रं परलोकसाधनविध्वंसात्कलत्रादिवत्, अन्यस्त्वमित्रः प्रतिकूलत्वान्मित्रं निर्वेदोत्पादनेन परलोकसाधनोपकारकत्वादविनीतकलत्रादिवच्चतुर्थोऽमित्रः प्रतिकूलत्वात् पुनरमित्रः संक्लेशहेतुत्वेन दुर्गतिनिमित्तत्वात्, पूर्वापरकालापेक्षया वेदं भावनीयमिति। तथा मित्रमन्तःस्नेहवृत्त्या मित्रस्यैव रूपम्—आकारो बाह्योपचारकरणात् यस्य स मित्ररूप इति एको, द्वितीयोऽमित्ररूपो बाह्योपचाराभावात् तृतीयः अमित्रः स्नेहवर्जितत्वादिति चतुर्थः प्रतीतः। तथा मुक्तः—त्यक्तसङ्गो द्रव्यतः पुनर्मुक्तो भावतोऽभिष्वङ्गाभावात् सुसाधुवत्, द्वितीयोऽमुक्तः साभिष्वङ्गत्वात् रङ्कवत्, तृतीयोऽमुक्तो द्रव्यतः भावतस्तु मुक्तो राज्यावस्थोत्पन्नकेवलज्ञानभरतचक्रवर्तिवत्, चतुर्थो गृहस्थः, कालापेक्षया वेदं दृश्यमिति। मुक्तो निरभिष्वङ्गतया मुक्तरूपो वैराग्यपिशुनाकारतया यतिरिवेत्येको द्वितीयोऽमुक्तरूप उक्तविपरीतत्वाद् गृहस्थावस्थायां महावीर इव तृतीयोऽमुक्तः साभिष्वङ्गत्वाच्छठयतिवच्चतुर्थो गृहस्थ इति। जीवाधिकारिकं पञ्चेन्द्रियतिर्यग्मनुष्यसूत्रद्वयं सुगमं, एवं द्वीन्द्रियसूत्रद्वयमपि, नवरं द्वीन्द्रियान् जीवान् असमारभमाणस्य—अव्यापादयतः, जिह्वाया विकारो जिह्वामयं तस्मात् सौख्याद्—रसोपलम्भानन्दरूपादव्यपरोपयिता—अभ्रंशयिता, तथा जिह्वामयं—जिह्वेन्द्रियहानिरूपं यद् दुःखं तेना-

संयोजयितेति। जीवाधिकारादेव सम्यग्दृष्टिजीवक्रियासूत्राणि सुगमानि चैतानि, नवरं सम्यग्दृष्टीनां चतस्रः क्रिया मिथ्यात्वक्रियाया अभावात् एवं 'विगलिंदियवज्जं'ति, एकद्वित्रिचतुरिन्द्रियाणां पञ्चापि, तेषां मिथ्यादृष्टित्वात्, द्वीन्द्रियादीनाञ्च सासादनसम्यक्त्वस्याल्पत्वेनाविवक्षितत्वादिति, एवं चेह विकलेन्द्रियवर्जनेन षोडश क्रियासूत्राणि वैमानिकान्तानि भवन्तीति। अनन्तरं क्रिया उक्तास्तद्वांश्च सद्भूतान् परगुणान् नाशयति प्रकाशयति चेत्येवमर्थं सूत्रद्वयं, तच्च सुगमं, नवरं सतो-विद्यमानान् गुणान् नाशयेदिव नाशयेत्-अपलपति न मन्यते, क्रोधेन-रोषेण तथा प्रतिनिवेशेन-एष पूज्यते अहं तु नेत्येवं परपूजाया असहनलक्षणेन कृतमुपकारं परसम्बन्धिनं न जानातीत्यकृतज्ञस्तद्भावस्तत्ता तया मिथ्यात्वाभिनिवेशेन-बोधविपर्यासेन, उक्तञ्च—"रोसेण पडिनिवेसेण तहय अकयण्णुमिच्छभावेणं। संतगुणे नासित्ता भासइ अगुणे असंते वा ॥१॥" इति [रोषेण प्रतिनिवेशेन तथैवाकृतज्ञतया मिथ्याभावेन न सतो गुणान्नाशयित्वाऽसतो दोषान् भाषते ॥१॥] असतः-अविद्यमानान् क्वचित्संतेत्ति पाठस्तत्र च सतो-विद्यमानान् गुणान् दीपयेत् वदेदित्यर्थः, अभ्यासो-हेवाको वर्णनीयासन्नता वा प्रत्ययो-निमित्तं यत्र दीपने तदभ्यासप्रत्ययं, दृश्यते ह्यभ्यासान्निर्विषयापि निष्फलापि च प्रवृत्तिः, सन्निहितस्य च प्रायेण गुणानामेव ग्रहणमिति, तथा परच्छन्दस्य-पराभिप्रायस्यानुवृत्तिः-अनुवर्त्तना यत्र तत्परच्छन्दानुवृत्तिकं दीपनमेव, तथा कार्यहेतोः-प्रयोजननिमित्तं चिकीर्षितकार्यं प्रत्यानुकूल्यकरणायेत्यर्थः, तथा कृते-उपकृते प्रतिकृतं-प्रत्युपकारः तद्यस्यास्ति स कृतप्रतिकृतिकः 'इति वा' कृतप्रत्युपकर्त्तेतिहेतोरित्यर्थः, अथवा कृतप्रतिकृतये इति वा-एकेनैकस्योपकृतं गुणा वोत्कीर्त्तिताः स तस्यासतोऽपि गुणान् प्रत्युपकारार्थमुत्कीर्त्तयतीत्यर्थः, इतिरुपप्रदर्शने वा विकल्पे। इदञ्च गुणनाशनादि शरीरेण क्रियत इति शरीरस्योत्पत्तिनिर्वृत्तिसूत्राणां दण्डकद्वयं, कण्ठ्यं चैतत्, नवरं क्रोधादयः कर्मबन्धहेतवः, कर्म च

शरीरोत्पत्तिकारणमिति कारणकारणे कारणोपचारात् क्रोधादयः शरीरोत्पत्तिनिमित्ततया व्यपदिश्यन्त इति। 'चउहिं ठाणेहिं सरीरे' त्याद्युक्तं, क्रोधादिजन्यकर्म्मनिर्वर्त्तितत्वात् क्रोधादिभिर्निर्वर्त्तितं शरीरमित्यपदिष्टं, इह चोत्पत्तिरारम्भमात्रं निर्वृत्तिस्तु निष्पत्तिरिति।

क्रोधादयः शरीरनिर्वृत्तेः कारणानीत्युक्तं तन्निग्रहास्तु धर्म्मस्येत्याह—

चत्तारि धम्मदारा पन्नत्ता, तंजहा—खंती मुत्ती अज्जवे मद्दवे (सू० ३७२) चउहिं ठाणेहिं जीवा णेरतियत्ताए कम्मं पकरेंति, तंजहा—महारंभताते महापरिग्गहयाते पंचिंदियवहेणं कुणिमाहारेणं १ चउहिं ठाणेहिं जीवा तिरिक्खजोणियत्ताए कम्मं पगरेंति, तं०—माइल्लताते णियडिल्लताते अलियवयणेणं कूडतुलकूडमाणेणं २ चउहिं ठाणेहिं जीवा मणुस्सत्ताते कम्मं पगरेंति, तंजहा—पगतिभद्दताते पगतिविणीययाए साणुक्कोसयाते अमच्छरिताते ३ चउहिं ठाणेहिं जीवा देवाउयत्ताए कम्मं पगरेंति, तंजहा—सरागसंजमेणं संजमासंजमेणं बालतवोकम्मेणं अकामणिज्जराए ४ (सू० ३७३) चउव्विहे वज्जे पं० तं०—तते वितते घणे झुसिरे १ चउव्विहे नट्टे पं० तं०—अंचिए रिभिए आरभडे भिसोले २ चउव्विहे गेए पं० तं०—उक्खित्तए पत्तए मंदए रोविंदए ३ चउव्विहे मल्ले पं० तं०—गंथिमे वेढिमे पूरिमे संघातिमे ४ चउव्विहे अलंकारे पं० तं०—केसालंकारे वत्थालंकारे मल्लालंकारे आभरणालंकारे ५ चउव्विहे अभिणते पं० तं०—दिट्ठंतिते पांडुसुते सामंतोवातणिते लोगमज्भावसिते ६ (सू० ३७४) सणंकुमारमाहिंदेसु णं कप्पेसु विमाणा चउवन्ना पं० तं०—णीला लोहिता हालिद्दा

सुक्किला. महासुक्कसहस्सारेसु णं कप्पेसु देवाणं भवधारणिज्जा सरीरगा उक्कोसेणं चत्तारि रयणीओ उड्ढं उच्चत्तेणं पन्नत्ता (सू० ३७५)।

'चत्तारि धम्मे'त्यादि, धर्मस्य-चारित्रलक्षणस्य द्वाराणीव द्वाराणि-उपायाः। क्षान्त्यादीनि धर्मद्वाराणीत्युक्तं, अथारम्भादीनि नारकत्वादिसाधनकर्म्मणो द्वाराणीति विभागतः 'चउहिं ठाणेहिं' इत्यादिना सूत्रचतुष्टयेनाह-कण्ठ्यश्चैतत्, नवरं 'नेरइयत्ताए'त्ति नैरयिकत्वाय नैरयिकतायै नैरयिकतया वा कर्म्म-आयुष्कादि, नेरइयाउयत्ताएत्ति पाठान्तरे नैरयिकायुष्कतया नैरयिकायुष्करूपं कर्म्मदलिकमिति, महान्-इच्छापरिमाणेनाकृतमर्यादतया बृहन् आरम्भः-पृथिव्याद्युपमर्द्दलक्षणो यस्य स महारम्भः-चक्रवर्त्यादिस्तद्भावस्तत्ता तया महारम्भतया एवं महापरिग्रहतयाऽपि, नवरं परिगृह्यत इति परिग्रहो-हिरण्यसुवर्णद्विपदचतुष्पदादिरिति, 'कुणिम'मिति मांसं तदेवाहारो-भोजनं तेन, 'माइल्लयाए'त्ति मायितया माया च मनःकुटिलता, 'नियडिल्लयाए'त्ति निकृतिमत्तया निकृतिश्च वञ्चनार्थं कायचेष्टाद्यन्यथाकरणलक्षणा अभ्युपचारलक्षणा वा तद्वत्तया, कूटतुलाकूटमानेन यो व्यवहारः स कूटतुलाकूटमान इत्योच्यते अतस्तेनेति, प्रकृत्या-स्वभावेन भद्रकता-परानुपतापिता या सा प्रकृतिभद्रकता तया सानुक्रोशतया-सदयतया मत्सरिकता-परगुणासहिष्णुता तत्प्रतिषेधोऽमत्सरिकता तयेति, सरागसंयमेन-सकषायचारित्रेण वीतरागसंयमिनामायुषो बन्धाभावात् संयमासंयमो-द्विप्रभावत्वाद्देशसंयमः बाला इव बाला-मिथ्यादृशस्तेषां तपःकर्म्म-तपःक्रिया बालतपःकर्म्म तेन अकामेन-निर्जरां प्रत्यनभिलाषेण निर्जरा-कर्म्मनिर्जरणहेतुर्बुभुक्षादिसहनं यत् सा अकामनिर्जरा तया। अनन्तरं देवोत्पत्तिकारणान्युक्तानि, देवाश्च वाद्यनाट्यादिरतयो भवन्तीति वाद्यादिभेदाभिधानाय पट्सूत्री, तत्र वज्जेत्ति-वाद्यं तत्र--'ततं वीणादिकं ज्ञेयं, विततं पटहादिकम्। घनं तु

कांस्यतालादि, वंशादि, शुषिरं मतम् ॥१॥' इति, नाट्यगेयाभिनयसूत्राणि सम्प्रदायाभावान्न विवृतानि, मालायां साधु माल्यं—पुष्पं तद्रचनापि माल्यं ग्रन्थः—सन्दर्भः सूत्रेण ग्रन्थनं तेन निर्वृत्तं ग्रन्थिमं मालादि, वेष्टनं वेष्टस्तेन निर्वृत्तं वेष्टिमं—मुकुटादि, पूरेण—पूरणेन निर्वृत्तं पूरिमं—मृन्मयमनेकच्छिद्रं वंशशलाकादिपञ्जरं वा यत्पुष्पैः पूर्यत इति, सङ्घातेन निर्वृत्तं सङ्घातिमं—यत्परस्परतः पुष्पनालादि-सङ्घातनेनोपजन्यत इति, अलंक्रियते—भूष्यतेऽनेनेत्यलङ्कारः केशा एवालङ्कारः केशालङ्कारः, एवं सर्वत्र देवाधिकारवत्येव 'सणंकुमारे'त्यादिका द्विसूत्री सुगमा चेयं, नवरं सनत्कुमारमाहेन्द्रयोश्चतुर्वर्णानि, कल्पान्तरेषु त्वन्यथा, तदुक्तम्—"सोहम्मे पंचवण्णा एक्कगहाणी उ जा सहस्सारो। दो दो तुल्ला कप्पा तेण परं पुंडरीयाओ ॥१॥" [द्वयोर्द्वयोः कल्पयोर्वर्णस्य हानिः कार्येत्यर्थः—तत्र भवे धार्यते तदिति तं वा भवं धारयतीति भवधारणीयं—यज्जन्मतो मरणावधि 'कृतमुष्टिकस्तु रत्निः स एव वितताङ्गुलिररत्नि' रिति वचने सत्यपि रत्निशब्देनेह सामान्येन हस्तोऽभिधीयत इति, शुक्रसहस्रारयोश्चतुर्हस्ता देवा अन्यत्र त्वन्यथा, यत आह—"भवण १० वण ८ जोइस ५ सोहम्मीसाणे सत्त होंति रयणीओ। एक्केक्कहाणि सेसे दुदुगे य दुगे चउक्के य ॥१॥ गेविज्जेसुं दोन्नी एक्का रयणी अणुत्तरेसु"त्ति [भवनवानमंतरज्योतिष्कसौधर्मैशानेषु सप्त रत्नयो भवंति शेषेषु एकैकहानिः द्विके द्विके च द्विके चतुष्के च ॥१॥ ग्रैवेयकेषु द्वे रत्नी अनुत्तरसुरेष्वेका रत्निः ॥] भवधारणीयान्येवं, उत्तरवैक्रियाणि तु लक्षमपि सम्भवन्ति, उत्कृष्टेनैतत्, जघन्यतस्त्वङ्गुलासङ्ख्येयभागप्रमाणान्युत्पत्तिकाले भवधारणीयानि भवन्त्युत्तरवैक्रियाणि त्वङ्गुलसङ्ख्येयभागप्रमाणानीति। अनन्तरं देववक्तव्यतोक्ता, देवाश्चाप्कायतयाऽप्युत्पद्यन्ते इत्युदकगर्भप्रतिपादनाय 'चत्तारी'त्यादि सूत्रद्वयमाह—

**चत्तारि उदकगब्भा पं० तं०—उस्सा महिया सीता उसिणा, चत्तारि उदकगब्भा पं० तं०—हेमगा अब्भ-**

मंथडा मीनोसिणा पंचरूविता,—माहे उ हेमगा गब्भा, फग्गुणे अब्भसंथडा । सीतोसिणा उ चित्ते, वतिसाहे पंचरूविता ॥१॥ (सू० ३७६) चत्तारि माणुस्सीगब्भा पं० तं०—इत्थित्ताए पुरिसत्ताए णपुंसगत्ताते बिंबत्ताए,—अप्पं सुक्कं बहुं ओयं, इत्थी तत्थ पजातति । अप्पं ओयं बहुं सुक्कं, पुरिसो तत्थ पजातति ॥१॥ दोण्हंपि रत्तसुक्काणं, तुल्लभावे णपुंसओ । इत्थीओतसमाओगे, बिंबं तत्थ पजायति ॥२॥ (सू० ३७७)।

'दगगब्भ'त्ति दकस्य–उदकस्य गर्भा इव गर्भा दकगर्भाः–कालान्तरे जलवर्षणस्य हेतवस्तत्संसूचका इति तत्त्वमिति, अवश्यायः–अपाजलं महिका–धूमिका शीतान्यात्यन्तिकानि एवमुष्णा–घर्माः, एते हि यत्र दिन उत्पन्नास्तस्मादुत्कर्षेणाव्याहताः सन्तः षड्भिर्मासैरुदकं प्रसुवते, अन्यैः पुनरेवमुक्तम्—"पवनाभ्रवृष्टिविद्युद्गर्जितशीतोष्णरश्मिपरिवेषाः । जलमत्स्येन सहोक्ताः दशधा धातुप्रजनहेतुः ॥१॥" तथा—"शीतवाताश्च विन्दुश्च, गर्जितं परिवेषणम् । सर्व्वे गर्भेषु शंसन्ति, निर्ग्रन्थाः साधुदर्शनाः ॥१॥" तथा "सप्तमे २ मासे, सप्तमे २ऽहनि । गर्भाः पाकं नियच्छन्ति, यादृशास्तादृशं फलम् ॥१॥" हिमं–तुहिनं तदेव हिमकं तस्यैते हैमका हिमपातरूपा इत्यर्थः, 'अब्भसंथड'त्ति अभ्रसंस्थितानि मेघैराकाशाच्छादनानीत्यर्थः, आत्यन्तिके शीतोष्णे, पञ्चानां रूपाणां–गर्जितविद्युज्जलवातारभ्रलक्षणानां समाहारः पञ्चरूपं तदस्ति येषां ते पञ्चरूपिका उदकगर्भाः, इह मतान्तरमेवम्–पौषे समार्गशीर्षे सन्ध्यारागोऽम्बुदाः सपरिवेषाः । नात्यर्थं मार्गशिरे शीतं पौषेऽतिहिमपातः ॥१॥ माघे प्रबलो वायुस्तुषारकलुषद्युती रविशशाङ्कौ । अतिशीतं सघनस्य च भानोरस्तोदयौ धन्यौ ॥२॥ फाल्गुनमासे रूक्षश्चण्डः पवनोऽभ्रसम्प्लवाः स्निग्धाः । परिवेषाश्चासकलाः कपिलस्ताम्रो रविश्च शुभः ॥३॥ पवनघनवृष्टियुक्ताश्चैत्रे गर्भाः शुभाः सपरिवेषाः । घनपवनसलिलविद्युत्स्तनितैश्च हिताय वैशाखे ॥४॥" इति, तानेव मासभेदेन दर्श-

यति—'माहे' त्यादि श्लोकः। गर्भाधिकारान्नारीगर्भसूत्रं व्यक्तं, केवलं 'इत्थित्ताए'त्ति स्त्रीतया बिम्बमिति-गर्भप्रतिबिम्बं गर्भाकृतिरार्त्तवपरिणामो न तु गर्भ एवेति, उक्तञ्च—"अवस्थितं लोहितमङ्गनाया, वातेन गर्भ ब्रुवतेऽनभिज्ञाः। गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः, श्रुते पुनः केवल एव रक्ते ॥१॥ गर्भ जडा भूतहृतं वदन्ती" त्यादि, वैचित्र्यं गर्भस्य कारणभेदादिति श्लोकाभ्यां तदाह—'अप्प'मित्यादि, शुक्रं-रेतः पुरुषसम्बन्धि ओज-आर्त्तवं रक्तं स्त्रीसम्बन्धि यत्र गर्भाशय इति गम्यते इति, तथा स्त्रिया ओजसा समायोगो-वातवशेन तत्स्थिरीभवनलक्षणः स्त्र्योजःसमायोगस्तस्मिन् सति बिम्बं 'तत्र' गर्भाशये प्रजायते, अन्यैरप्यत्रोक्तम्—"अत एव च शुक्रस्य, बाहुल्याज्जायते पुमान्। रक्तस्य स्त्री तयोः साम्ये, क्लीबः शुक्रार्त्तवे पुनः ॥१॥ वायुना बहुशो भिन्ने, यथास्वं बह्वपत्यता। वियोनिविकृताकारा, जायन्ते विकृतैर्मलैः ॥२॥ इति ॥

गर्भः प्राणिनां जन्मविशेषः स चोत्पादोऽभिधीयते, उत्पादश्चोत्पादाभिधानपूर्वे प्रपञ्चत इति तत्स्वरूपविशेषप्रतिपादनायाह—

उप्पायपुव्वस्स णं चत्तारि मूलवत्थू पन्नत्ता (सू० ३७८) चउव्विहे कव्वे पं० तं०—गज्जे पज्जे कत्थे गेए (सू० ३७९) णेरतिताणं चत्तारि समुग्घाता पं० तं०—वेयणासमुग्घाते कसायसमुग्घाते मारणंतियसमुग्घाए वेउव्वियसमुग्घाए, एवं वाउक्काइयाणवि (सू० ३८०) अरिहतो णं अरिट्ठनेमिस्स चत्तारि सया चोद्दसपुव्वीणमजिणाणं जिणसंकासाणं सव्वक्खरसन्निवाईणं जिणो इव अवितथवागरमाणाणं उक्कोसिता चउद्दसपुव्विसंपया हुत्था (सू० ३८१) समणस्स णं भगवओ महावीरस्स चत्तारि सया वादीणं सदेवमणुयासुराते परिसाते अपराजियाणं

उक्कोसिता यावित्संपया हुत्था (सू० ३८२) हेट्ठिल्ला चत्तारि कप्पा अद्धचंदसंठाणसंठिया पन्नत्ता, तंजहा—सोहम्मे ईसाणे सणंकुमारे माहिंदे, मज्झिल्ला चत्तारि कप्पा पडिपुन्नचंदसंठाणसंठिया पन्नत्ता, तंजहा—बंभलोगे लंतते महासुक्के सहस्सारे, उवरिल्ला चत्तारि कप्पा अद्धचंदसंठाणसंठिता पन्नत्ता तंजहा—आणते पाणते आरणे अच्चुते (सू०३८३) चत्तारि समुद्दा पत्तेयरसा पं० तं०—लवणोदे वरुणोदे खीरोदे घतोदे (सू०३८४) चत्तारि आवत्ता पं० तं०—खरावत्ते उन्नतावत्ते गूढावत्ते आमिसावत्ते, एवामेव चत्तारि कसाया पं० तं०—खरावत्तसमाणे कोहे उन्नत्तावत्तसमाणे माणे गूढावत्तसमाणा माता आमिसावत्तसमाणे लोभे, खरावत्तसमाणं कोहं अणुपविट्ठे जीवे कालं करेति णेरइएसु उववज्जति, उन्नत्तावत्तसमाणं माणं एवं चेव गूढावत्तसमाणं मातमेवं चेव आमिसावत्तसमाणं लोभमणुपविट्ठे जीवे कालं करेति नेरइएसु उववज्जेति (सू० ३८५)।

'उप्पाये'त्यादि कण्ठ्यं, नवरं उत्पादपूर्वं प्रथमं पूर्वाणां तस्य चूला—आचारस्याग्राणीव तद्रूपाणि वस्तूनि—परिच्छेदविशेषा अध्ययनवच्चूलावस्तूनि। उत्पादपूर्वं हि काव्यमिति काव्यमत्र कण्ठ्यं चैतन्नवरं काव्यं—ग्रन्थः, गद्यम्—अच्छन्दोनिबद्धं शस्त्रपरिज्ञाध्ययनवत् पद्यं—छन्दोनिबद्धं विमुक्त्यध्ययनवत्, कथायां साधु कथ्यं ज्ञाताध्ययनवत्, गेयं—गानयोग्यं, इह गद्यपद्यान्तर्भावेऽपीतरयोः कथागानधर्मविशिष्टतया विशेषो विवक्षित इति। अनन्तरं गेयमुक्तं, तच्च भाषास्वभावत्वात् दण्डमन्थादिक्रमेण लोकैकदेशादि पूरयति, समुद्घातोऽप्येवमेवेति साधर्म्यात् समुद्घातसूत्रे सुगमे च, नवरं समुद्घननं समुद्घातः—शरीराद्बहिर्जीवप्रदेशप्रक्षेपः, वेदनया समुद्घातः कषायैः समुद्घातो मरणमेवान्तो मरणान्तः तत्र भवो मारणान्तिकः स एव समुद्घातो वैक्रियाय समुद्घातः २ इति विग्रहा

इति। वैक्रियसमुद्घातो हि लब्धिरूप उक्त इति लब्धिप्रस्तावात् विशिष्टश्रुतलब्धिमतामभिधानाय 'अरहओ' इत्यादि सूत्रद्वयी सुगमा, नवरमजिनानामसर्वज्ञत्वात् जिनसंकाशानामविसंवादिवचनत्वाद् यथापृष्टनिर्व्वक्तृत्वाच्च सर्वे अक्षराणाम्—अकारादीनां सन्निपाता—द्व्यादिसंयोगा अभिधेयानन्तत्वादनन्ता अपि विद्यन्ते येषां ते सर्वाक्षरसन्निपातिनः, एतेषां जिनसंकाशत्वे कारणमाह—'जिणो चिवे'-त्यादि, 'उक्कोसिय'त्ति नातोऽधिकाश्चतुर्दशपूर्विणो बभूवुः कदाचिदपीति। ते च प्रायः कल्पेषु गता इति कल्पसूत्राणि सुगमानि च, नवरं 'अद्धचंदसंठाणसंठिए'त्ति पूर्वापरतो मध्यभागे सीमासद्भावादिति। देवलोका हि क्षेत्रमिति क्षेत्रप्रस्तावात् समुद्रसूत्रं व्यक्तं, नवरं एकमेकं प्रति भिन्नो रसो येषां ते प्रत्येकरसाः, अतुल्यरसा इत्यर्थः, लवणरसोदकत्वाल्लवणः पाठान्तरे तु लवणमिवोदकं यत्र स लवणोदो निपातनादिति प्रथमः वारुणी—सुरा तया समानं वारुणं वारुणमुदकं यस्मिन् स वारुणोदः चतुर्थः क्षीरवत्तथा घृतवदुदकं यत्र स क्षीरोदः पञ्चमः घृतोदः षष्ठः, कालोदपुष्करोदस्वयम्भुरमणा उदकरसाः, शेषास्तु इक्षुरसा इति, उक्तञ्च—"वारुणिवरखीरवरो घयवर लवणो य होंति पत्तेया। कालो पुक्खरउदही सयंभुरमणो य उदगरसा ॥१॥" इति। अनन्तरं समुद्रा उक्तास्तेषु चावर्त्ता भवन्तीत्यावर्त्तान् दृष्टान्तान् कषायांश्च तद्दार्ष्टान्तिकानभिधित्सुः सूत्रद्वयमाह—सुगमं चैतत्, नवरं खरो—निष्ठुरोऽतिवेगितया पातकश्छेदको वा आवर्त्तनमावर्त्तः स च समुद्रादेश्चक्रविशेषाणां वेति खरावर्त्तः, उन्नतः—उच्छ्रितः स चासावावर्त्तश्चेति उन्नतावर्त्तः, स च पर्वतशिखरारोहणमार्गस्य वातोत्कलिकाया वा, गूढश्चासावावर्त्तश्चेति गूढावर्त्तः स च गेन्दुकदवरकस्य दारुग्रन्थ्यादेर्वा आमि'—मांसादि तदर्थमावर्त्तः शकुनिकादीनामामिषावर्त्त इति, एतत्समानता च क्रोधादीनां क्रमेण परापकारकरणदारुणत्वात् पत्रतृणादिवस्तुन इव मनस उन्नतत्वारोपणात् अत्यन्तदुर्लक्ष्यस्वरूपत्वात् अनर्थशतसम्पातसंकुलेऽप्यवपतनकारणत्वाच्चेति, इयश्चोपमा प्रकर्षवतां कोपादीनामिति तत्फ-

क्माह—'नरावत्ते'त्यादि, अशुभपरिणामस्याशुभकर्मबन्धनिमित्ततया दुर्गतिनिमित्तत्वादुच्यते 'णेरइएसु उववज्जइ'त्ति ॥

अणुराहानक्खत्ते चउत्तारे पं० पुव्वासाढे एवं चेव उत्तरासाढे एवं चेव (सू० ३८६) जीवाणं चउठाणनिव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा चिणंति वा चिणिस्संति वा, नेरतियनिव्वत्तिते तिरिक्खजोणितनिवत्तिते मणुस्स० देवनिव्वत्तिते, एवं उवचिणिंसु वा उवचिणंति वा उवचिणिस्संति वा, एवं चिय उवचिय बंध उदीर वेय तह निज्जरे चेव। (सू० ३८७) चउपदेसिया खंधा अणंता पन्नत्ता चउपदेसोगाढा पोग्गला अणंता चउसमयट्ठितीया पोग्गला अणंता चउगुणकालगा पोग्गला अणंता जाव चउगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ३८८) ॥ चउत्थो उद्देसो समत्तो चउठाणं चउत्थमज्झयणं समत्तं ॥

नारका अनन्तरमुक्तास्तेश्च वैक्रियादिना समानधर्माणो देवा इति तद्विशेषभूतनक्षत्रदेवानां चतुःस्थानकं विवक्षुः अणुराहेत्यादि सूत्रत्रयमाह—कण्ठ्यञ्चैतदिति। देवत्वादिभेदश्च जीवानां कर्मपुद्गलचयादिकृत इति तत्प्रतिपादनायाह—'जीवाण'मित्यादि सूत्रषट्कं, व्याख्यातं प्राक् तथापि किञ्चिल्लिख्यते. 'जीवाणं'ति णंशब्दो वाक्यालङ्कारार्थः, चतुर्भिः स्थानकैः—नारकत्वादिभिः पर्यायैर्निर्वर्त्तिताः—कर्मपरिणामं नीतास्तथाविधाशुभपरिणामवशाद्बद्धास्ते चतुःस्थाननिर्वर्त्तितास्तान् पुद्गलान् , कथं निर्वर्त्तितानित्याह—पापकर्मतया—अशुभज्ञानावरणादिरूपत्वेन, 'चिणिंसु'त्ति तथाविधापरकर्मपुद्गलैश्चितवन्तः—पापप्रकृतीरल्पप्रदेशा बहुप्रदेशीकृतवन्तः, 'नेरइयनिव्वत्तिए'त्ति नैरयिकेण सता निर्वर्त्तिता इति विग्रहः, एवं सर्वत्र, तथा 'एवं उवचिणिंसु'त्ति चयसूत्राभिलापेनोपचयसूत्रं

वाच्यं उवचिणिंसुत्ति–उपचितवन्तः पौनःपुन्येन 'एव'मिति चयादिन्यायेन बन्धादिसूत्राणि वाच्यानीत्यर्थः, इह च 'एवं बन्धउदीरे'त्यादिवक्तव्ये यच्चयोपचयग्रहणं तत्स्थानान्तरप्रसिद्धगाथोत्तरार्द्धानुवृत्तिवशादिति, तत्र 'बंध'त्ति बंधिंसु ३ श्लथबन्धनबद्धान् गाढबन्धनबद्धान् कृतवन्तः ३, 'उदीर'त्ति उदीरिंसु ३ उदयप्राप्ते दलिके अनुदितांस्तान् आकृष्य करणेन वेदितवन्तः ३, 'वेय'त्ति वेदिंसु ३ प्रतिसमयं स्वेन रसविपाकेनानुभूतवन्तः ३ 'तह निज्जरा चेव'त्ति निज्जरिंसु ३ कात्स्न्र्येनानुसमयमशेषतद्विपाकहान्या परिशातितवन्तः ३ इति । पुद्गलाधिकारात् पुद्गलानेव द्रव्यादिभिर्निरूपयन्नाह–'चउप्पएसे'त्यादि सुगममिति ॥

इति चतुःस्थानकस्य चतुर्थ उद्देशकः समाप्तः ॥ ग्रंथाग्रं २९३२

॥ इति श्रीमदभयदेवाचार्यविरचिते स्थानाख्यतृतीयाङ्गविवरणे चतुःस्थानकाख्यं चतुर्थमध्ययनं समाप्तम् ॥

## अथ पञ्चमस्थानकम्

——(०)——

व्याख्यातं चतुर्थमध्ययनं, साम्प्रतं सङ्ख्याक्रमसम्बद्धमेव पञ्चस्थानकाख्यं पञ्चममध्ययनं व्याख्यायते, अस्य चायं विशेषाभिसम्बन्धः-इहानन्तराध्ययने जीवाजीवतद्धर्म्माख्याः पदार्थाश्चतुःस्थानकावतारेणाभिहिताः, इह तु त एव पञ्चस्थानकावतारेणाभिधीयन्ते इत्यनेनाभिसंबन्धेनायातस्यास्योद्देशकत्रयवतश्चतुरनुयोगद्वारवतोऽध्ययनस्य प्रथमोद्देशको व्याख्यायते, अस्य च पूर्वोद्देशकेन सह सम्बन्धोऽधिकृताध्ययनवत् द्रष्टव्यः, तस्य चेदमादिसूत्रम्-

पंच महव्वया पं० तं०—सव्वातो पाणातिवायाओ वेरमणं ॥ जाव सव्वातो परिग्गहातो वेरमणं। पंचाणुव्वता पं० तं०—थूलातो पाणाइवायातो वेरमणं थूलातो मुसावायातो वेरमणं थूलातो अदिन्नादाणातो वेरमणं सदारसंतोसे इच्छापरिमाणे ॥ (सू० ३८९)।

अस्य च पूर्वसूत्रेण सहायं सम्बन्धः-पूर्वसूत्रे अजीवानां परिणामविशेष उक्तः इह तु स एव जीवानामुच्यत इत्येवं सम्बन्धस्यास्य व्याख्या संहितादिक्रमेण, स च क्षुण्ण एव, नवरं पञ्चेति सङ्ख्यान्तरव्यवच्छेदः, तेन न चत्वारि, प्रथमपश्चिमतीर्थयोः पञ्चानामेव भावात्, महान्ति-बृहन्ति तानि च तानि व्रतानि च-नियमा महाव्रतानि, महत्त्वं चैषां सर्वजीवादिविषयत्वेन महाविषयत्वात्,

उक्तञ्च—"पढमंमि सव्वजीवा बीए चरमे अ सव्वदव्वाइं। सेसा महव्वया खलु तदेक्कदेसेण दव्वाणं ॥१॥" इति, [प्रथमे सर्वे जीवा द्वितीये चरमे च सर्वाणि द्रव्याणि। शेषाणि महाव्रतानि तदेकदेशे द्रव्याणां ॥१॥] ['तदेक्कदेसेणं'ति तेषां–द्रव्याणामेकदेशेनेत्यर्थः] तथा यावज्जीवं त्रिविधं त्रिविधेनेति प्रत्याख्यानरूपत्वाच्च तेषामिति, देशविरतापेक्षया महतो वा गुणिनो व्रतानि महद्व्रतानीति, पुँल्लिङ्गनिर्देशस्तु प्राकृतत्वादिति, प्रज्ञप्तानि–तथाविधशिष्यापेक्षया प्ररूपितानि महावीरेणाद्यतीर्थकरेण च न शेषैरिति, एतत्किल सुधर्मस्वामी जम्बूस्वामिनं–प्रतिपादयामास, तद्यथा सर्वस्मात्–निरवशेषात्त्रसस्थावरसूक्ष्मबादरभेदभिन्नात् कृतकारितानुमतिभेदाच्चेत्यर्थः, अथवा द्रव्यतः षड्जीवनिकायविषयात् क्षेत्रतस्त्रिलोकसम्भवात् कालतोऽतीतादे रात्र्यादिप्रभवाद्वा भावतो रागद्वेषसमुत्थाच्च, न तु परिस्थूरादेवेति भावः, प्राणानां–इन्द्रियोच्छ्वासायुरादीनामतिपातः–प्राणिनः सकाशाद्विभ्रंशः प्राणातिपातः प्राणिप्राणवियोजनमित्यर्थः तस्माद्विरमणं–सम्यग्ज्ञानश्रद्धानपूर्वकं निवर्त्तनमिति, तथा सर्वस्मात्–सद्भावप्रतिषेधा १ सद्भावोद्भावन २ अर्थान्तरोक्ति ३ गर्हाभेदात् ४ कृतादिभेदाच्च अथवा द्रव्यतः सर्वधर्म्मास्तिकायादिद्रव्यविषयात् क्षेत्रतः सर्वलोकालोकगोचरात् कालतोऽतीतादे रात्र्यादिवर्त्तिनो वा भावतः कषायनोकषायादिप्रभवात् मृषा–अलीकं वदनं वादो मृषावादः तस्माद्विरमणं–विरतिरिति, तथा सर्वस्मात्–कृतादिभेदादथवा द्रव्यतः सचेतनाचेतनद्रव्यविषयात् क्षेत्रतो ग्रामनगरारण्यादिसम्भवात् कालतोऽतीतादे रात्र्यादिप्रभवाद्वा भावतो रागद्वेषमोहसमुत्थात् अदत्तं–स्वामिना अवितीर्णं तस्याऽऽदानं–ग्रहणमदत्तादानं तस्माद्विरमणमिति, तथा सर्वस्मात् कृतकारितानुमतिभेदादथवा द्रव्यतो दिव्यमानुषतैरश्चभेदात् रूपरूपसहगतभेदाद्वा तत्र रूपाणि–निर्जीवानि प्रतिमारूपाण्युच्यन्ते रूपसहगतानि तु–सजीवानि भूषणविकलानि वा रूपाणि भूषणसहितानि रूपसहगतानीति क्षेत्रतस्त्रिलोकसम्भवात् कालतोऽतीतादे रात्र्यादिसमुत्थाद्वा

भावतो रागद्वेषप्रभवात् मिथुनं–स्त्रीपुंसद्वन्द्वं तस्य कर्म मैथुनं तस्माद् विरमणमिति, तथा सर्वस्मात्–कृतादेरथवा द्रव्यतः सर्वद्रव्यविषयात् क्षेत्रतो लोकसम्भवात् कालतोऽतीतादे रात्र्यादिभवाद्वा भावतो रागद्वेषविषयात् परिगृह्यते–आदीयते परिग्रहणं वा परिग्रहः तस्माद्विरमणमिति। व्रतप्रस्तावात् 'पञ्चाणुव्वए'त्याद्यणुव्रतसूत्रं, स्फुटं चेदं, किन्तु अणूनि–लघूनि व्रतानि अणुव्रतानि, लघुत्वं च महाव्रतापेक्षया अल्पविषयत्वादिनेति प्रतीतमेवेति, उक्तं च—"सव्वगयं सम्मत्तं सुए चरित्ते ण पज्जवा सव्वे। देसविरइं पडुच्चा दोण्हवि पडिसेहणं कुज्जा ॥१॥" इति [ सर्वद्रव्यपर्यायगतं सम्यक्त्वं श्रुते चारित्रे च सर्वे पर्याया न। देशविरतिं प्रतीत्य द्वयोरपि प्रतिषेधं कुर्यात्–न सर्वद्रव्याणि न सर्वपर्यवाः ॥१॥ ] अथवा अनु–महाव्रतकथनस्य पश्चात्तदप्रतिपत्तौ यानि व्रतानि कथ्यन्ते तान्यनुव्रतानि, उक्तं च—"जइधम्मस्सऽसमत्थे जुज्जइ तद्देसणंपि साहूणं। तदहिगदोसनिवित्तीफलंति कायाणुकंपट्ठा ॥१॥" इति [ यतिधर्मस्यासामर्थ्ये तद्देशनमपि साधूनां युज्यते तदधिकदोषनिवृत्तिफलत्वात्कायानुकंपार्थं ॥१॥ ] अथवा सर्वविरतापेक्षया अणोः–लघोर्गुणिनो व्रतान्यणुव्रतानीति, स्थूला–द्वीन्द्रियादयः सत्त्वाः, स्थूलत्वं चैषां सकललौकिकानां जीवत्वप्रसिद्धेः स्थूलविषयत्वात् स्थूलः तस्मात् प्राणातिपातात्। तथा स्थूलः–परिस्थूलवस्तुविषयोऽतिदुष्टविवक्षासमुद्भवस्तस्मात् मृषावादात् तथा परिस्थूरवस्तुविषयं चौर्यारोपणहेतुत्वेन प्रसिद्धमतिदुष्टाध्यवसायपूर्वकं स्थूलं तस्माददत्तादानात् तथा स्वदारसन्तोष–आत्मीयकलत्रादन्यत्रेच्छानिवृत्तिरिति, उपलक्षणात् परदारवर्जनमपि ग्राह्यं, तथा इच्छायाः–धनादिविषयाभिलाषस्य परिमाणं–नियमनमिच्छापरिमाणं देशतः परिग्रहविरतिरित्यर्थः।

इच्छापरिमाणं चेन्द्रियार्थगोचरं श्रेय इतीन्द्रियार्थवक्तव्यतार्थं पंचवन्नेत्यादित्रयोदशसूत्रीमाह—

पंचवन्ना पं० तं०—किण्हा नीला लोहिता हालिद्दा सुक्किल्ला १, पंच रसा पं० तं०—तित्ता जाव मधुरा २, पंच कामगुणा पं० तं०—सद्दा रूवा गंधा रसा फासा ३, पंचहिं ठाणेहिं जीवा सज्जंति तं०—सद्देहिं जाव फासेहिं ४, एवं रज्जंति ५ मुच्छंति ६ गिज्झंति अज्झोववज्जंति ८, पंचहिं ठाणेहिं जीवा विणिघायमावज्जंति, तं०—सद्देहिं जाव फासेहिं ९ पंच ठाणा अपरिण्णाता जीवाणं अहिताते असुभाते अखमाते अणिस्सेताते अणाणुगामितत्ताते भवंति, तं०—सद्दा जाव फासा १० पंच ठाणा सुपरिन्नाता जीवाणं हिताते सुभाते जाव आणुगामियत्ताए भवंति तं०—सद्दा जाव फासा ११, पंच ठाणा अपरिण्णाता जीवाणं दुग्गतिगमणाए भवंति तं०—सद्दा जाव फासा १२, पंच ठाणा परिण्णाया जीवाणं सुग्गतिगमणाए भवंति तं०—सद्दा जाव फासा १३ (सू० ३९०) पंचहिं ठाणेहिं जीवा दोग्गतिं गच्छंति, तं०—पाणातिवातेणं जाव परिग्गहेणं, पंचहिं ठाणेहिं जीवा सोगतिं गच्छंति तं०—पाणातिवातवेरमणेणं जाव परिग्गहवेरमणेणं (सू० ३९१)।

प्रकटा चेयं, नवरं पञ्च वर्णाः १ पञ्चैव रसास्तदन्येषां सांयोगिकत्वेनाविवक्षितत्वादिति २, 'कामगुण'त्ति कामस्य–मदनाभिलाषस्य अभिलाषमात्रस्य वा संपादका गुणा–धर्म्माः पुद्गलानां, काम्यन्त इति कामाः ते च ते गुणाश्चेति वा कामगुणा इति ३। 'पंचहिं ठाणेहिं'ति पञ्चसु पञ्चभिर्वा (इन्द्रियैः) स्थानेषु–रागाद्याश्रयेषु तैर्वा सह सज्यन्ते–सङ्गं सम्बन्धं कुर्वन्तीति ४, 'एव'मिति पञ्चस्वेव स्थानेषु रज्यन्ते–सङ्गकारणं रागं यान्तीति ५ मूर्च्छन्ति–तद्दोषानवलोकनेन मोहमचेतनत्वमिव यान्ति संरक्षणानुबन्धवन्तो वा भवन्तीति ६, गृध्यन्ति–प्राप्तस्यासन्तोषेणाप्राप्तस्यापरापरस्याकाङ्क्षावन्तो भवन्तीति ७, अध्युपपद्यन्ते–तदेकचित्ता भव-

न्ती वा भवन्तीति ९, गृध्यन्ति–प्राप्तस्यासन्तोषेणाप्राप्तस्य...

न्तीति तदर्जनाय वाऽधिकरणेनोपपद्यन्ते–उपपन्ना घटमाना भवन्तीति ८, विनिघातं–मरणं मृगादिवत् संसारं वाऽऽपद्यन्ते–प्राप्नुवन्तीति, आह च—"रक्तः शब्दे हरिणः स्पर्शे नागो रसे च वारिचरः। कृपणपतङ्गो रूपे भुजगो गन्धे ननु विनष्टः ॥१॥ पञ्चसु रक्ताः पञ्च विनष्टा यत्रागृहीतपरमार्थाः। एकः पञ्चसु रक्तः प्रयाति भस्मान्ततां मूढः ॥२॥ इति। 'अपरिन्नाय'त्ति अपरिज्ञया स्वरूपतोऽपरिज्ञातानि–अनवगतानि अप्रत्याख्यानपरिज्ञया वाऽप्रत्याख्यातानि अहिताय–अपायाय अशुभाय–अपुण्यबन्धाय असुखाय वा अक्षमाय–अनुचितत्वाय असमर्थत्वाय वा अनिःश्रेयसाय–अकल्याणायामोक्षाय वा यदुपकारि सत्कालान्तरमनुयाति तदनुगामिकं तत्प्रतिषेधोऽननुगामिकं तद्भावस्तत्त्वं तस्मै अननुगामिकत्वाय भवन्ति १० द्वितीयं विपर्ययसूत्रं ११, उत्तरसूत्रद्वयेन तु एतदेवाहितहितादि व्यञ्जितमस्ति, दुर्गतिगमनाय–नारकादिभवप्राप्तये सुगतिगमनाय–सिद्ध्यादिप्राप्तये इति १२–१३। दुर्गतिसुगत्योः कारणान्तरप्रतिपादनसूत्रे सुगमे इति।

इह संवरतपसी मोक्षहेतू, तत्रानन्तरमाश्रवनिरोधलक्षणः संवर उक्तोऽधुना तपोभेदात्मिकाः प्रतिमा आह—

पंचपडिमातो पं० तं०—भद्दा सुभद्दा महाभद्दा सव्वतोभद्दा भद्दुत्तरपडिमा (सू० ३९२) पंच थावरकाया पं० तं०—इंदे थावरकाए बंभे थावरकाए सिप्पे थावरकाए संमती थावरकाए पाजावच्चे थावरकाए, पंच थावरकायाधिपती पं० तं०—इंदे थावरकाताधिपती जाव पाजावच्चे थावरकाताहिपती (सू० ३९३) पंचहिं ठाणेहिं ओहिदंसणे समुप्पज्जिउकामेवि तप्पढमयाते खंभातेज्जा, तं० अप्पभूतं वा पुढविं पासित्ता तप्पढमयाते खंभातेज्जा,

कुंथुरासिभूतं वा पुढविं पासित्ता तप्पढमयाते खंभातेज्जा, महतिमहालतं वा महोरगसरीरं पासित्ता तप्पढमताते खंभातेज्जा, देवं वा महड्डियं जाव महेसक्खं पासित्ता तप्पढमताते खंभातेज्जा पुरेसु वा पोराणाइं महतिमहालतानि महानिहाणाइं पहीणसामिताति पहीणसेउयातिं पहीणगुत्तागाराइं उच्छिन्नसामियाइं उच्छिन्नसेउयाइं उच्छिन्नगुत्तागाराइं जाइं इमाइं गामागरणगरखेडकब्बडदोणमुहपट्टणासमसंबाहसन्निवेसेसु सिंघाडगतिगचउक्कचच्चरचउम्मुहमहापहपहेसु णगरणिद्धमणेसु सुसाणसुन्नागारगिरिकंदरसन्तिसेलोवट्ठावणभवणगिहेसु संनिक्खित्ताइं चिट्ठंति ताइं वा पासित्ता तप्पढमताते खंभातेज्जा, इच्चेहिं पंचहिं ठाणेहिं ओहिदंसणे समुप्पज्जिउकामे तप्पढमताते खंभाएज्जा। पंचहिं ठाणेहिं केवलवरनाणदंसणे समुप्पज्जिउकामे तप्पढमताते नो खंभातेज्जा, तं०—अप्पभूतं वा पुढविं पासित्ता तप्पढमताते णो खंभेज्जा, सेसं तहेव जाव भवणगिहेसु संनिक्खित्ताइं चिट्ठंति ताइं वा पासित्ता तप्पढमयाते णो खंभातेज्जा, सेसं तहेव, इच्चेतेहिं पंचहिं ठाणेहिं जाव नो खंभातेज्जा (सू० ३९४)।

'पंचे'त्यादि व्यक्तं, नवरं भद्रा १ महाभद्रा २ सर्वतोभद्रा ३ द्वि १ चतु २ र्दशभि ३ र्दिनैः क्रमेण भवन्तीत्युक्तं प्रा , सुभद्रा त्वदृष्टत्वान्न लिखिता, सर्वतोभद्रा तु प्रकारान्तरेणाप्युच्यते, द्विधेयं–क्षुद्रिका महती च, तत्राद्या चतुर्थादिना द्वादशावसानेन पञ्चसप्ततिदिनप्रमाणेन तपसा भवति, अस्याश्च स्थापनोपायगाथा–"एगाई पंचंते ठविउं मज्झं तु आइमणुपंतिं। उचियकमेण य सेसे जाण लहुं सव्वओभद्दं ॥१॥"इति [एकादिकान् पञ्चांतान् स्थापयित्वा मध्य आदिमं अनुपंक्ति। उचितक्रमेण शेषान् जानीहि सर्वतो-

भद्रम् ॥१॥] पारणकादिनानि तु पञ्चविंशतिरिति, स्थापना, महती तु चतुर्थादिना षोडशावसानेन षण्णवत्यधिकदिनशतमानेन भवति, अस्या अपि स्थापनोपायगाथा—"एगाई सत्तंते ठविउं मज्झं च आदिमणुपंतिं । उचियकमेण य सेसे जाण महं सव्वओभद्दं ॥१॥" इति, एकादिकान् सप्तान्तान् स्थापयित्वा मध्यं आदिमं अनुपंक्ति उचितक्रमेण शेषान् जानीहि महासर्वतोभद्रां" ॥१॥] पारणकदिनान्येकोनपञ्चाशदिति, स्थापना, भद्रोत्तरप्रतिमा द्विधा—क्षुल्लिका महती च, तत्र आद्या द्वादशादिना विंशान्तेन

पञ्चसप्तत्यधिकदिनशतप्रमाणेन तपसा भवति, अस्याः स्थापनोपायगाथा—"पंचाई य नवंते ठविउं मज्झं तु आदिमणुपंतिं । उचियकमेण य सेसे जाणह भद्दोत्तरं खुड्डं ॥१॥" इति [पंचादिकान् नवान्तान् स्थापयित्वा मध्यं आदिमं अनुपंक्ति उचितक्रमेण शेषान् जानीहि क्षुद्रं भद्रोत्तरां ॥१॥] पारणकदिनानि पञ्चविंशतिरिति, महती तु द्वादशादिना चतुर्विंशतितमान्तेन द्विनवत्यधिकदिनशतत्रयमानेन तपसा भवति, तत्र च गाथा—"पंचादिगारसंते ठविउं मज्झं तु आइमणुपंतिं । उचियकमेण य सेसे महइं भद्दोत्तरं जाण ॥१॥" इति [पंचादिकानेकादशान्तान् स्थापयित्वा मध्यं आदिमं अनुपंक्ति उचितक्रमेण शेषान् जानीहि महतीं भद्रोत्तरां ॥१॥] पारणकदिनान्येकोनपञ्चाशदिति ३। उक्तः कर्म्मणां निर्जरणहेतुस्तपोविशेषः, अधुना तेषामेवानुपादानहेतोः संयमस्य विषयभूतानेकेन्द्रियजीवानाह—"पंचे"त्यादि, स्थावरनामकर्मोदयात् स्थावराः—पृथिव्यादयः

| | | | | | | |
|---|---|---|---|---|---|---|
| ५ | ६ | ७ | ८ | ९ | १० | ११ |
| ८ | ९ | १० | ११ | ५ | ६ | ७ |
| ११ | ५ | ६ | ७ | ८ | ९ | १० |
| ७ | ८ | ९ | १० | ११ | ५ | ६ |
| १० | ११ | ५ | ६ | ७ | ८ | ९ |
| ६ | ७ | ८ | ९ | १० | ११ | ५ |
| ९ | १० | ११ | ५ | ६ | ७ | ८ |

तेषां काया–राशयः स्थावरो वा कायः–शरीरं येषां ते स्थावरकायाः, इन्द्रसम्बन्धित्वादिन्द्रः स्थावरकायः पृथिवीकायः, एवं ब्रह्मशिल्पसम्मतिप्राजापत्या अपि अप्कायादित्वेन वाच्या इति । एतन्नायकानाह–'पंचे- दिये'त्यादि, स्थावरकायानां–पृथिव्यादीनामिति (मपि) सम्भाव्यन्तेऽधिपतयो–नायका दिशामिवेन्द्रा- ग्न्यादयो नक्षत्राणामिवाश्वियमदहनादयो दक्षिणेतरलोकार्द्धयोरिव शक्रेशानाविति स्थावरकायाधिपतय इति । एते चावधिमन्त इत्यवधिस्वरूपमाह–'पंचही' त्यादि व्यक्तं, नवरं अवधिना दर्शनं–अवलोकन- मर्थानामुत्पत्तुकामं–भवितुकामं तत्प्रथमतायां–अवधिदर्शनोत्पादप्रथमसमये 'खंभाएज्ज'त्ति स्कभ्नीयात् क्षुभ्येत, चलतीत्यर्थः, अवधि- दर्शने वा समुत्पत्तुकामे सति अवधिमानिति गम्यते क्षुभ्येद् अल्पभूतां–स्तोकसत्त्वां पृथिवीं दृष्ट्वा, वाशब्दा विकल्पार्थाः, अनेकसत्त्व- व्याकुला भूरिति सम्भावनावान् अकस्मादल्पसत्त्वभूदर्शनात् आः किमेतदेवमित्येवं क्षुभ्येदेव अक्षीणमोहनीयत्वादिति भावः, अथवा भूत- शब्दस्य प्रकृत्यर्थत्वादल्पभूतां–अल्पां, पूर्वं हि तस्य बह्वी पृथ्वीति सम्भावनाऽऽसीदिति १, तथाऽत्यन्तप्रचुरत्वात्कुन्थूनां कुन्थुराशि- भूतां–कुन्थुराशित्वप्राप्तां पृथिवीं दृष्ट्वा अत्यन्तविस्मयदयाभ्यामिति २, तथा 'महइमहालयं'ति महातिमहत् महोरगशरीरं–महाऽहितनुं बाह्यद्वीपवर्त्तियोजनसहस्रप्रमाणं दृष्ट्वा विस्मयाद् भयाद्वा ३, तथा देवं महर्द्धिकं महाद्युतिकं महानुभागं महाबलं महासौख्यं दृष्ट्वा विस्मयादिति ४, तथा 'पुरेसु व'त्ति नगराद्येकदेशभूतानि प्राकारावृत्तानि पुराणीति प्रसिद्धं तेषु पुराणानि–चिरन्तनानि ओरालाइं क्वचित्पाठः तत्र मनोहराणीत्यर्थः 'महइमहालयाइं'ति विस्तीर्णत्वेन महानिधानानीति–महामूल्यरत्नादिमत्त्वेन, प्रहीणाः स्वामिनो येषां तानि तथा, तथा प्रहीणाः सेकारः–सेचकास्तेष्वेवोपर्युपरि धनप्रक्षेपकाः पुत्रादयो येषां तानि तथा, अथवा प्रहीणाः सेतवः–तद-

विज्ञानभूताः पालयमन्मार्गा वाऽतिचिरन्तनतया प्रतिजागरकाभावेन च येषां तानि प्रहीणसेतुकानि, किं बहुना ?, निधायकानां यानि गोत्रागाराणि—कुलगृहाणि तान्यपि प्रहीणानि येषां । अथवा तेषामेव गोत्राणि—नामान्याकाराश्च—आकृतयस्ते प्रहीणा येषां तानि प्रहीणगोत्रागाराणि प्रहीणगोत्राकाराणि वा, एवमुच्छिन्नस्वामिकादीन्यपि, नवरमिह प्रहीणाः—किंचित्सत्तावन्तः उच्छिन्ना—निर्नष्टसत्ताकाः, यानीमानि—अनन्तरोक्तविशेषणानि तथा ग्रामादिषु यानि, तत्र करादिगम्यो ग्रामः, आगत्य कुर्वन्ति यत्र स आकरो—लोहाद्युत्पत्तिभूमिरिति, नास्मिन् करोऽस्तीति नकरं, धूलीप्राकारोपेतं खेटं, कुनगरं कर्बटं, सर्वतोऽर्द्धयोजनात् परेण स्थितग्रामं मडम्बं यस्य जलस्थलपथावुभावपि तद् द्रोणमुखं यत्र जलपथस्थलपथयोरन्यतरेण पर्याहारप्रवेशस्तत्पत्तनं तीर्थस्थानमाश्रमः यत्र पर्वतनितम्बादिदुर्गे परचक्रभयेन रक्षार्थं धान्यादीनि संवहन्ति स संवाहः, यत्र प्रभूतानां भाण्डानां प्रवेशः स संनिवेशः, तथा शृङ्गाटकं—त्रिकोणं रथ्यान्तरस्थापना त्रिकं—यत्र रथ्यानां त्रयं मिलति चत्वरं—रथ्याष्टकमध्यं चतुष्कं—यत्र रथ्याचतुष्टयं चतुर्मुखं—देवकुलादि महापथो—राजमार्गः पथो—रथ्यामात्रं, एवंभूतेषु वा स्थानेषु, नगरनिर्द्धमनेषु—तत्क्षालेषु, तथा आगारशब्दसम्बन्धात् श्मशानागारं—पितृवनगृहं—शून्यागारं—प्रतीतं तथा गृहशब्दसम्बन्धात् गिरिगृहं—पर्वतोपरि गृहं कन्दरगृहं—गिरिगुहा गिरिकन्दरं वा शान्तिगृहं—यत्र राज्ञां शान्तिकर्म—होमादि क्रियते शैलगृहं—पर्वतमुत्कीर्य यत्कृतं, उपस्थानगृहं—आस्थानमण्डपोऽथवा शैलोपस्थानगृहं—पाषाणमण्डपः भवनगृहं—यत्र कुटुम्बिनो वास्तव्या भवन्तीति. अथवा शान्त्यादिविशेषितानि भवनानि गृहाणि च, तत्र भवनं—चतुःशालादि गृहं तु—अपवरकादिमात्रं तेषु सन्निक्षिप्तानि—न्यस्तानि दृष्ट्वा क्षुभ्येद् अदृष्टपूर्वतया विस्मयाल्लोभाद्वेति, 'इच्चेएही'त्यादि निगमनमिति । केवलज्ञानदर्शनं तु न स्कभ्नीयात् केवली वा याथात्म्येन वस्तुदर्शनात् क्षीणमोहनीयत्वेन भयविस्मयलोभाद्यभावेन अतिगम्भीरत्वाच्चेति, अत आह—'पंचही'-

त्यादि सुगममिति।

तथा नारकादिशरीराणि बीभत्सान्युदाराणि च दृष्ट्वाऽपि न केवलदर्शनं स्कभ्नातीति शरीरप्ररूपणाय 'नेरइयाण'मित्यादि सूत्रप्रपञ्चः

णेरइयाणं सरीरगा पंचवन्ना पंचरसा पं० तं०—किण्हा जाव सुक्किल्ला, तित्ता जाव मधुरा, एवं निरंतरं जाव वेमाणियाणं। पंच सरीरगा पं० तं०—ओरालिते वेउव्विते आहारते तेयते कम्मते, ओरालितसरीरे पंचवन्ने पंचरसे पं० तं०—किण्हे जाव सुक्किल्ले तित्ते जाव महुरे, एवं जाव कम्मगसरीरे, सव्वेवि णं बादरबोंदिधरा कलेवरा पंचवन्ना पंचरसा दुगंधा अट्ठफासा (सू० ३९५)।

गतार्थश्चायं, नवरं पञ्चवर्णत्वं नारकादिवैमानिकान्तानां [शरीरिणां] शरीराणां निश्चयनयात्, व्यवहारतस्तु एकवर्णप्राचुर्यात् कृष्णादिप्रतिनियतवर्णतैवेति, 'जाव सुक्किल्ल'त्ति किण्हा नीला लोहिता हालिद्दा सुक्किल्ला 'जाव महुर'त्ति तित्ता कडुया कसाया अंबिला महुरा 'जाव वेमाणियाणं'ति चतुर्विंशतिदण्डकसूत्रम्। 'सरीर'त्ति उत्पत्तिसमयादारभ्य प्रतिक्षणमेव शीर्यंत इति शरीरं, 'ओरालिय'त्ति उदारं-प्रधानं उदारमेवौदारिकं, प्रधानता चास्य तीर्थंकरादिशरीरापेक्षया, न हि ततोऽन्यत् प्रधानतरमस्ति, प्राकृतत्वेन च ओरालियंति ?, अथवा उरालं नाम विस्तरालं विशालं सातिरेकयोजनसहस्रप्रमाणत्वादस्य अन्यस्य चावस्थितस्यैवमसम्भवात्, उक्तञ्च—"जोयणसहस्समहियं ओहे एगिंदिए तरुगणेसु। मच्छजुयले सहस्सं उरगेसु य गब्भजाएसु ॥१॥" इति [योजनसहस्रमधिकं ओघेनैकेन्द्रिये तरुगणे च। मत्स्ययुगले सहस्रं गर्भजातेपूरगेषु च ॥१॥] वैक्रियस्य लक्षप्रमाणत्वेऽप्यनवस्थितत्वात्, तदेव

ओरालिकं २, अथवा उरलमल्पप्रदेशोपचितत्वाद्बृहत्त्वाच्च भिण्डवदिति तदेव ओरालिकं निपातनात् ३, अथवा ओरालं-मांसास्थिस्नाय्वाद्यवबद्धं तदेव ओरालिकमिति ४, उक्तञ्च—"तत्थोदार १ मुरालं २ उरलं ३ ओरालमहव ४ विन्नेयं । ओदारियंति पढमं पडुच्च तित्थेसरसरीरं ॥१॥ भन्नइ य तहोरालं वित्थरवंतं वणस्सइं पप्प । पगईए नत्थि अन्नं एद्दहमेत्तं विसालंति ॥२॥ [उरलं थेवपएसोवचियंपि महल्लगं जहा भिंडं । मंसट्ठिण्हारुबद्धं ओरालं समयपरिभासा ॥३॥ इति [तत्रोदारमुरालमुरलमोरालमथवा विज्ञेयं प्रथमं तीर्थेश्वरशरीरं प्रतीत्यौदारिकमिति ॥१॥ भण्यते च तथोरालं विस्तारवद्वनस्पतिं प्राप्य प्रकृत्या यदन्यन्नास्त्येतावन्मात्रं विस्तृतं ॥२॥ स्तोकप्रदेशोपचितमपि भिंडवन्महत् उरलं मांसास्थिस्नायुबद्धमोरालं समयपरिभाषा ॥३॥] 'वेउव्वियं'त्ति विविधा विशिष्टा वा क्रिया विक्रिया तस्यां भवं वैक्रियं, उक्तं च—"विविहा व विसिट्ठा वा किरिया विकिरिय तीएँ जं भवं तमिह । वेउव्वियं तयं पुण नारगदेवाण पगईए ॥१॥" इति, [विविधा वा विशिष्टा वा क्रिया विक्रिया तस्यां यद्भवं तदिह वैक्रियं तत्पुनः प्रकृत्या नारकदेवानां ॥१॥] विविधं विशिष्टं वा कुर्वन्ति तदिति, वैकुर्विकमिति वा, 'आहारए'त्ति तथाविधकार्योत्पत्तौ चतुर्दशपूर्वविदा योगबलेनाह्रियत इत्याहारकं, उक्तं च—"कज्जंमि समुप्पन्ने सुयकेवलिणा विसिट्ठलद्धीए । जं एत्थ आहरिज्जइ भणंति आहारगं तं तु ॥१॥" [श्रुतकेवलिना विशिष्टलब्ध्या यदत्र कार्ये समुत्पन्ने आह्रियते तदेवाहारकं भण्यते ॥१॥] कार्याणि चामूनि—"पाणिदयरिद्धिसंदरिसणत्थमत्थोवगहणहेउं वा । संसयवोच्छेयत्थं गमणं जिणपायमूलम्मि ॥१॥" [प्राणिदयर्द्धिसंदर्शनार्थं अर्थावग्रहणाय वा संशयव्युच्छेदाय वा जिनपादमूले गमनं ॥१॥] कार्यसमाप्तौ पुनर्मुच्यते याचितोपकरणवदिति, 'तेयए'त्ति तेजसो भावस्तैजसं, उष्मादिलिङ्गसिद्धं, उक्तं च—"सव्वस्स उम्हसिद्धं रसादिआहारपागजणगं च । तेयगलद्धिनिमित्तं च तेयगं होइ नायव्वं ॥१॥" इति [सर्वेषामुष्मतासिद्धं रसाद्या-

हारपाकजनकं च । तेजोलब्धिनिमित्तं च तेजःशरीरं भवति ज्ञातव्यं ॥१॥] 'कम्मए'त्ति कर्म्मणो विकारः कार्म्मणं, सकलशरीरकारणमिति, उक्तं च—"कम्मविगारो कम्मणमट्ठविहविचित्तकम्मनिप्फन्नं । सव्वेसिं सरीराणं कारणभूयं मुणेयव्वं ॥१॥" इति [कर्मविकारः कार्मणं अष्टविधविचित्रकर्मनिष्पन्नं । सर्वेषां शरीराणां कारणभूतं च ज्ञातव्यं ॥१॥] औदारिकादिक्रमश्च यथोत्तरं सूक्ष्मत्वात् प्रदेशबाहुल्याच्चेति । तथा सर्वाण्यपि बादरबोन्दिधराणि—पर्याप्तकत्वेन स्थूराकारधारीणि कलेवराणि—शरीराणि मनुष्यादीनां पञ्चादिवर्णादीन्यवयवभेदेनेति, अक्षिगोलकादिषु तथैवोपलब्धेः, 'दो गध'त्ति सुरभिदुरभिभेदात्, 'अट्ठ फास'त्ति कठिनमृदुशीतोष्णगुरुलघुस्निग्धरूक्षभेदादिति, अबादरबोन्दिधराणि तु न नियतवर्णादिव्यपदेश्यानि, अपर्याप्तत्वेनावयवविभागाभावादिति,

अनन्तरं शरीराणि प्ररूपितानीति शरीरिविशेषगतान् धर्मविशेषान् पंचहिं ठाणेहीत्यादिनाऽऽर्जवसूत्रान्तेन ग्रन्थेन दर्शयति—

पंचहिं ठाणेहिं पुरिमपच्छिमगाणं जिणाणं दुग्गमं भवति, तं०—दुआइक्खं दुविभज्जं दुपस्सं दुतितिक्खं दुरणुचरं । पंचहिं ठाणेहिं मज्झिमगाणं जिणाणं सुगमं भवति, तं०—सुआतिक्खं सुविभज्जं सुपस्सं सुतितिक्खं सुरणुचरं । पंच ठाणाइं समणेणं भगवता महावीरेणं समणाणं णिग्गंथाणं णिच्चं वन्निताइं निच्चं कित्तिताइं णिच्चं बुतिताइं णिच्चं पसत्थाइं निचमब्भणुन्नाताइं भवंति, तं०—खंती मुत्ती अज्जवे मद्दवे लाघवे, पंच ठाणाइं समणेणं भगवता महावीरेणं जाव अब्भणुन्नायाइं भवंति, तं०—सच्चे संजमे तवे चिताले बंभचेरवासे, पंच ठाणाइं समणाणं जाव अब्भणुन्नायाइं भवंति, तं०—उक्खित्तचरते निक्खित्तचरते अंतचरते पंतचरते लूहचरते, पंच

ठाणाइं जाव अब्भणुण्णायाइं भवंति, तं०—अन्नातचरते अन्नइलायचरे मोणचरे संसट्ठकप्पिते तज्जातसंसट्ठकप्पिते पंच ठाणाइं जाव अब्भणुन्नानाइं भवंति, तं०—उवनिहिते सुद्धेसणिते संखादत्तिते दिट्ठलाभिते पुट्ठलाभिते. पंच ठाणाइं जाव अब्भणुण्णानाइं भवंति, तं०—आयंबिलिते निव्वियते पुरमड्ढिते परिमिते पिंडवाविते भिन्नपिंडवाविते, पंच ठाणाइं० अब्भणुन्नायाइं भवंति, तं०—अरसाहारे विरसाहारे अंताहारे पंताहारे लूहाहारे, पंच ठाणाइं० अब्भणुन्नायाइं भवंति, तं०—अरसजीवी विरसजीवी अंतजीवी पंतजीवी लूहजीवी, पंच ठाणाइं० भवंति, तं०—ठाणातिते उक्कुडुआसणिए पडिमट्ठाती वीरासणिए णेसज्जिए, पंच ठाणाइं० भवंति, तं०—दंडायतिते लगंडसाती आतावते अवाउडत्ते अकंडूयते (सू० ३९६) पंचहिं ठाणेहिं समणे निग्गंथे महानिज्जरे महापज्जवसाणे भवति, तं०—अगिलाते आयरियवेयावच्चं करेमाणे १ एवं उवज्झायवेयावच्चं करेमाणे २ थेरवेयावच्चं० ३ तवस्सिवेयावच्चं० ४ गिलाणवेयावच्चं करेमाणे ५। पंचहिं ठाणेहिं समणे निग्गंथे महानिज्जरे महापज्जवसाणे भवति, तं०—अगिलाते सेहवेयावच्चं करेमाणे १ अगिलाते कुलवेया० २ अगिलाए गणवे० ३ अगिलाए संघवे० ४ अगिलाते साहम्मियवेयावच्चं करेमाणे ५ (सू० ३९७)।

सुगमश्चायं, नवरं पञ्चसु स्थानकेषु—आख्यानादिक्रियाविशेषलक्षणेषु पुरिमा—भरतैरावतेषु चतुर्विंशतेरादिमास्ते च पश्चिमकाश्च—चरमाः पुरिमपश्चिमकास्तेषां जिनानां—अर्हतां 'दुग्गमं'ति दुःखेन गम्यत इति दुर्गमं भावसाधनोऽयं कृच्छ्रवृत्तिरित्यर्थः तद्भवति विनेयानामृजुजडत्वेन वक्रजडत्वेन च, तानि चेमानि 'तंजहे'त्यादि, इह चाख्यानं विभजनं दर्शनं तितिक्षणमनुचरणं चेत्येवं वक्त-

न्येऽपि येषु स्थानेषु कृच्छ्रवृत्तिर्भवति तानि तद्योगात् कृच्छ्रवृत्तीन्येवोच्यन्ते इति कृच्छ्रवृत्तिद्योतकदुःशब्दविशेषितानि कर्मसाधनशब्दाभिधेयान्याख्याना (ख्येया)दीनि विचित्रत्वाच्छब्दप्रवृत्तेराह, 'दुआइक्खं'मित्यादि, तत्र दुराख्येयं-कृच्छ्राख्येयं वस्तुतत्त्वं, विनेयानां महावचनाटोपप्रबोध्यत्वेन भगवतामायासोत्पत्तेरित्येवमाख्याने कृच्छ्रवृत्तिरुक्ता, एवं विभजनादिष्वपि भावनीया, तथा-व्याख्यातेऽपि तत्र दुर्विभजं-कष्टविभजनीयं, ऋजुजडत्वादेरेव तद्भवति दुःशकं शिष्याणां वस्तुतत्त्वस्य विभागेनावस्थापनमित्यर्थः, दुर्विभवमित्यत्र पाठान्तरे दुर्विभाव्यं दुःशका विभावना कर्त्तुं तस्येत्यर्थः, तदा 'दुप्पस्सं'ति दुःखेन दृश्यते इति दुर्दर्शं, उपपत्तिभिर्दुःशकं शिष्याणां प्रतीतावारोपयितुं तत्त्वमिति भावः, 'दुत्तितिक्खं'ति दुःखेन तितिक्ष्यते सह्यते इति दुस्तितिक्षं-परीषहादि दुःशकं परीषहादिकमुत्पन्नं तितिक्षयितुं, शिष्यं तत्प्रति क्षमां कारयितुमिति भाव इति, 'दुरणुचरं'ति दुःखेनानुचर्यते-अनुष्ठीयत इति दुरनुचरमन्तर्भूतकारितार्थत्वेन दुःशकमनुष्ठापयितुमित्यर्थः, [ कातन्त्रे हि कारितसंज्ञयैव णिगन्तो ज्ञाप्यते ] अथवा तेषां तीर्थे दुरासंख्येयं दुर्विभजमाचार्यादीनां वस्तुतत्त्वं शिष्यान् प्रति, आत्मनापि दुर्दर्शं दुस्तितिक्षं दुरनुचरमित्येवं कारितार्थं विमुच्य व्याख्येयं, तेषामपि ऋजुजडादित्वादिति । मध्यमानां तु सुगमं-अकृच्छ्रवृत्तिः, तद्विनेयानामृजुप्रज्ञत्वेनाल्पप्रयत्नेनैव बोधनीयत्वाद् विहितानुष्ठाने सुखप्रवर्त्तनीयत्वाच्चेति, शेषं पूर्ववत्, नवरमकृच्छ्रार्थविशिष्टता आख्यानादीनां वाच्या, तथा 'सुरनुचर'न्ति रेफः प्राकृतत्वादिति, नित्यं सदा वर्णितानि फलतः कीर्त्तितानि-संशब्दितानि नामतः, 'बुइयाइं'ति व्यक्तवाचोक्तानि स्वरूपतः 'प्रशस्तानि' प्रशंसितानि श्लाघितानि 'शंसु स्तुता'विति वचनात् अभ्यनुज्ञातानि-कर्त्तव्यतया अनुमतानि भवन्तीति, अयं च सूत्रोत्क्षेपः प्रतिसूत्रं वैयावृत्यसूत्रं यावद् दृश्य इति, तत्र क्षान्त्यादयः क्रोधलोभमायामाननिग्रहाः तथा लाघवमुपकरणतो गौरवत्रयत्यागतश्चेति, तथाऽन्यानि पञ्च, सद्भ्यो हितं सत्यम्-अनलीकं,

तच्चतुर्विधं, यतोऽभाणि—"अविसंवादनयोगः कायमनोवागजिह्मता चैव। सत्यं चतुर्विधं तच्च जिनवरमतेऽस्ति नान्यत्र ॥१॥" इति, तथा संयमनं संयमो—हिंसादिनिवृत्तिः, स च सप्तदशविधः, तदुक्तम्—"पुढविदगअगणिमारुय वणप्फइ बितिचउपणिंदि अज्जीवे। पेहोपेहपमज्जणपरिट्ठवणमणोवई काए ॥१॥" [ पृथ्वीदकाग्निमारुतवनस्पतिद्वित्रिचतुःपंचेंद्रियाजीवेषु प्रेक्षोत्प्रेक्षप्रमार्जनपरिष्ठापनमनोवाक्कायेषु ॥१॥ ] अथवा—"पञ्चाश्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः। दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥१॥" इति, तथा तप्यतेऽनेनेति तपः, यतोऽभ्यधायि—"रसरुधिरमांसमेदोऽस्थिमज्जशुक्राण्यनेन तप्यन्ते। कर्माणि वाऽशुभानीत्यतस्तपो नाम नैरुक्तम् ॥१॥" [ सान्वर्थमित्यर्थः—तच्च द्वादशधा, यथाऽऽह—"अणसणमूणोयरिया वित्तीसंखेवणं रसच्चाओ। कायकिलेसो संलीणया य बज्झो तवो होइ ॥१॥ पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ। झाणं उस्सग्गोऽविय अब्भिंतरओ तवो होइ ॥२॥" इति [ अनशनमवमौदर्यं वृत्तिसंक्षेपो रसत्यागः कायक्लेशः संलीनतेति बाह्यं तपो भवति ॥१॥ प्रायश्चित्तं विनयो वैयावृत्त्यं तथैव स्वाध्यायो ध्यानमुत्सर्गः अपि चाभ्यन्तरं तपो भवति ॥१॥ ] 'चियाए'त्ति त्यजनं त्यागः—संविग्नैकसाम्भोगिकानां भक्तादिदानमित्यर्थः, यतो वाच—"तो कयपच्चक्खाणो आयरियगिलाणबालवुड्ढाणं। देज्जाऽसणाइ संते लाभे कयवीरियायारो ॥१॥ संविग्गअन्नसंभोइयाण देसिज्ज सड्ढगकुलाणि। अतरंतो वा संभोइयाण देसे जहसमाही ॥२॥" इति [ ततः कृतप्रत्याख्यानः आचार्यग्लानबालवृद्धानां। सति लाभेऽशनादि दद्यात् कृतवीर्याचारः ॥१॥ ] ( कयपच्चक्खाणोऽविय आव० ) संविग्नान्यसंभोगिकानां श्राद्धकुलानि दर्शयेत्। सांभोगिकानामप्यशक्तो यथासमाधि देशयेत् ॥२॥ ] ब्रह्मचर्यं—मैथुनविरमणे तेन वा वासो ब्रह्मचर्यवास इत्येष पूर्वोक्तैः सह दशविधः श्रमणधर्म इति, अन्यत्र त्वयमेवमुक्तः—"खंती य मद्दवऽज्जव मुत्ती तवसंजमे य बोद्धव्वे। सच्चं सोयं आकिंचणं च बंभं च जइ-

धम्मो ॥१॥" इति [ क्षान्तिश्च मार्दवमार्जवं मुक्तिस्तपः संयमश्च बोद्धव्यः। सत्य शौचमाकिंचन्यं च ब्रह्म च यतिधर्म्मः ॥१॥ ] इतश्च साधुधर्म्मभेदस्य बाह्यतपोविशेषस्य वृत्तिसंक्षेपाभिधानस्य भेदाः 'उक्खित्तचरए'इत्यादिना अभिधीयन्ते, तत्र उत्क्षिप्तं—स्वप्रयोजनाय पाकभाजनादुद्धृतं तदर्थमभिग्रहविशेषाच्चरति—तद्गवेषणाय गच्छतीत्युत्क्षिप्तचरकः, एवं सर्वत्र, नवरं निक्षिप्तं—अनुद्धृतं अन्ते भवमान्तं—भुक्तावशेषं वल्लादि प्रकृष्टमान्तं प्रान्तं—तदेव पर्युषितं, रूक्षं—निःस्नेहमिति, इह च भावप्रत्ययप्रधानत्वेन उत्क्षिप्तचरकत्व मित्यादि द्रष्टव्यमेवमुत्तरत्रापि भावप्रधानता दृश्या, इह चाद्यौ भावाभिग्रहावितरे द्रव्याभिग्रहाः, यतोऽभाणि—"उक्खित्तमाइचरगा भावजुया खलु अभिग्गहा होंति। गायंतो व रुयंतो जं देइ निसण्णमाई वा ॥१॥" [ उत्क्षिप्तादिचरकत्वादिका अभिग्रहा भावयुता भवंति। गायन् वा रुदन् निषण्णादिर्वा यद्दाति ॥१॥ ] तथा "लेवडमलेवडं वा अमुगं दव्वं च अज्ज घेच्छामि। अमुगेण उ दव्वेणं अह दव्वाभिग्गहो नामं ॥२॥" इति [ लेपकृदलेपकृद्वाऽमुकं द्रव्यं चाद्य ग्रहीष्यामि। अमुकेन तु द्रव्येणैप द्रव्याभिग्रहो नाम ॥१॥ ] एवमन्यत्रापि विशेष ऊह्य इति, अज्ञातः—अनुपदर्शितस्वाजन्यर्द्धिमत्प्रव्रजितादिभावः सन् चरति—भिक्षार्थमटतीत्यज्ञातचरकः, तथा 'अन्नइलायचरए'त्ति अन्नग्लानको दोषान्नभुगिति भगवतीटीप्पनके उक्तः, एवंविधः सन् , अथवा अन्नं विना ग्लायकः—समुत्पन्नवेदनादिकारण एवेत्यर्थः, अन्यस्मै वा ग्लायकाय भोजनार्थं चरतीति अन्नग्लानकचरकोऽन्नग्लायकचरकोऽन्यग्लायकचरको वा, क्वचित् पाठः 'अन्नवेल'त्ति तत्रान्यस्यां—भोजनकालापेक्षयाऽऽद्यावसानरूपायां वेलायां—समये चरतीत्यादि दृश्यं, अयं च कालाभिग्रह इति, तथा मौनं—मौनव्रतं तेन चरति मौनचरकः, तथा संसृष्टेन—खरण्टितेनेत्यर्थो हस्तभाजनादिना दीयमानं 'कल्पिकं' कल्पवत् कल्पनीयमुचितमभिग्रहविशेषाद्भक्तादि यस्य स संसृष्टकल्पिकः, तथा 'तज्जातेन' देयद्रव्यप्रकारेण यत्संसृष्टं हस्तादि तेन

उपनिधीयत इत्युपनिधिः—प्रत्यासन्नं यद्यथाकथञ्चिदानीतं तेन चरति तद्ग्रहणायेत्यर्थः दीयमानं कल्पिकं यस्येति विग्रह इति, उपनिहितमेव वा यस्य ग्रहणविषयतयाऽस्ति स प्रज्ञादेराकृतिगणत्वेन मत्वर्थीयाणप्रत्यये औपनिहित इति, तथा इत्यौपनिधिकः, उपनिहितमेव वा यस्य ग्रहणविषयतयाऽस्ति स प्रज्ञादेराकृतिगणत्वेन मत्वर्थीयाणप्रत्यये औपनिहित इति, तथा शुद्धा—अनतिचारा एषणा—शङ्कितादिदोषवर्जनरूपा 'संसट्ठमसंसट्ठे'त्यादिसप्तप्रकारा अन्यतरा वा तया चरतीत्युत्तरपदवृद्ध्या शुद्धै-षणिकः, सङ्ख्याप्रधानाः—परिमिता एव दत्तयः—सकृद्भक्तादिक्षेपलक्षणा ग्राह्याः यस्य स सङ्ख्यादत्तिकः, दत्तिलक्षणश्लोकः—"दत्ती उ जत्तिए वारे, खिवई होंति तत्तिया। अवोच्छिन्ननिवायाओ, दत्ती होइ दवेतरा॥१॥" इति [ यावतीर्वाराः क्षिपति तावत्यो दत्तयो भवन्ति। अव्युच्छिन्ननिपाताद्द्रवेतरयोर्दत्तिर्भवति ॥१॥ ] तथा दृष्टस्यैव भक्तादेर्लाभस्तेन चरतीति तथैव दृष्टलाभिकः, पृष्टस्यैव साधो! दीयते ते ? इत्येवं यो लाभस्तेन चरतीति प्राग्वत् पृष्टलाभिकः, आचाम्लं—समयप्रसिद्धं तेन चरतीत्याचाम्लिकः, निर्गतो घृतादिविकृतिभ्यो यः स निर्विकृतिकः, पुरिमार्द्धं—पूर्वाह्णलक्षणं प्रत्याख्यानविशेषोऽस्ति यस्य स तथा, परिमितो—द्रव्यादिपरिमाणतः पिण्डपातो—भक्तादिलाभो यस्यास्ति स परिमितपिण्डपातिकः, भिन्नस्यैव—स्फोटितस्यैव पिण्डस्य सक्तुकादिसम्बन्धिनः पातो—लाभो यस्यास्ति स भिन्नपिण्डपातिकः। ग्रहणानन्तरमभ्यवहरणं भवतीत्यत एतदुच्यते—'अरसं' हिङ्ग्वादिभिरसंस्कृतमाहारयतीत्यरसो चाऽ-हारो यस्यासावरसाहारः, एवं सर्वत्र, नवरं विरसं—विगतरसं पुराणधान्यौदनादि, रूक्षं तैलादिवर्जितमिति, तथा अरसेन जीवितुं शील-माजन्मापि यस्य स तथा, एवमन्यत्रापि। 'ठाणाइए'त्ति स्थानं—कायोत्सर्गः तमतिददाति प्रकरोति अतिगच्छति वेति स्थानातिदः स्थानातिगो वेति, उत्कुटुकासनं—पीठादौ पुतालगनेनोपवेशनरूपमभिग्रहतो यस्यास्ति स उत्कुटुकासनिकः, तथा प्रतिमया—एकरात्रि-क्यादिकया कायोत्सर्गविशेषेणैव तिष्ठतीत्येवंशीलो यः स प्रतिमाशायी 'वीरासनं' भून्यस्तपादस्य सिंहासने उपविष्टस्य तदपनयने

या कायावस्था तद्रूपं, दुष्करं च तदिति, अत एव वीरस्य—साहसिकस्यासनमिति वीरासनमुक्तं तदस्यास्तीति वीरासनिकः, तथा निषद्या—उपवेशनविशेषः, सा च पञ्चधा, तत्र यस्यां समं पादौ पुतौ च स्पृशतः सा समपादपुता १ यस्यां तु गोरिवोपवेशनं सा गोनिषधिका २ यत्र तु पुताभ्यामुपविष्टः सन् एकं पादमुत्पाट्यास्ते सा हस्तिशुण्डिका ३ पर्यङ्कार्द्धपर्यङ्का च प्रसिद्धा, निषद्यया चरति नैषधिक इति, दण्डस्येवायतिः—दीर्घत्वं पादप्रसारणेन यस्य स दण्डायतिकः, तथा लगण्डं किल दुःसंस्थितं काष्ठं तद्वन्मस्तकपार्ष्णिकानां भुवि लगनेन पृष्ठस्य चालगनेनेत्यर्थः यः शेते तथाविधाभिग्रहात् स लगण्डशायी, तथा आतापयति—आतापनां शीतातपादिसहनरूपां करोतीत्यातापकः, तथा न विद्यते प्रावृतं—प्रावरणं अस्येत्यप्रावृतकः, तथा न कण्डूयत इत्यकण्डूयकः, 'स्थानातिग' इत्यादिपदानां कल्पभाष्यव्याख्येयम्—"उद्धट्ठाणं ठाणाइयं तु पडिमा य होंति मासाई । पंचेव णिसेज्जाओ तासि विभासा उ कायव्वा ॥१॥ वीरासणं सीहासणेव्व जहमुक्कजाणुगणिविट्ठो । डंडे लगण्डउवमा आययकुज्जे य दोण्हंपि ॥२॥ आयावणा य तिविहा उक्कोसा मज्झिमा जहन्ना य । उक्कोसा उ निवन्ना निसन्न मज्झा ठिय जहन्ना ॥३॥ तिविहा होइ निवन्ना ओमंथिय पास तइय उत्ताणा" इति [स्थानादिकमेवोर्ध्वस्थानं प्रतिमा भवन्ति मासाद्याः । निषद्याः पंचैव तासां विभाषा तु कर्त्तव्या ॥१॥ ऊर्ध्वजानुको (मुक्तजानुकः) यथा सिंहासने निविष्टः वीरासनं दंडेन लगंडेन उपमा द्वयोरपि आयतकुब्जत्वयोः ॥१॥ आतापना च त्रिविधोत्कृष्टा मध्यमा जघन्या च सुप्तस्योत्कृष्टा निषण्णा मध्या स्थिता जघन्या ॥१॥ निर्वर्णा त्रिविधा भवति अवमंथिता पार्श्वा तथा उत्ताना] निषण्णापि त्रिविधा—"गोदुह उक्कुडपलियंकमेस तिविहा य मज्झिमा होइ । तइया उ हत्थिसोंडगपायसमपाइया चेव ॥४॥" इति [(निषण्णा) गोदोहिकोत्कुटपर्यंका एषा त्रिविधा च मध्यमा भवति तृतीया तु हस्तिसोंडिका पादसमपादिका चैव ॥१॥] इयं च निषण्णादिका त्रिविधा

उत्कटाद्यासना स्वस्थाने पुनरप्युत्कटादिभेदा ओमंथियादिभेदेनावगन्तव्या, इह च यद्यपि स्थानातिगत्वादीनामातापनायामन्तर्भावस्तथापि प्रधानेनाभिलापतया न पुनरुक्तत्वं मन्तव्यमिति । तथा महानिर्जरो—बृहत्कर्मक्षयकारी महानिर्जरत्वाच्च महद्—आत्यन्तिकं पुनरुद्भवाभावात् पर्यवसानं—अन्तो यस्य स तथा, 'अगिलाए'त्ति अग्लान्या—अखिन्नतया बहुमानेनेत्यर्थः, आचार्यः पञ्चप्रकारः, तद्यथा—प्रव्राजनाचार्यो दिगाचार्यः सूत्रस्य उद्देशनाचार्यः सूत्रस्य समुद्देशनाचार्यो वाचनाचार्यश्चेति, तस्य वैयावृत्त्यं—व्यापृतस्य—शुभव्यापारवतो भावः कर्म वा वैयावृत्त्यं—भक्तादिभिर्धर्मोपग्रहकारिवस्तुभिरुपग्रहकरणमाचार्यवैयावृत्त्यं तत्कुर्वाणो—विदधदिति, एवमुत्तरपदेष्वपि, नवरमुपाध्यायः—सूत्रदाता स्थविरः स्थिरीकरणात् अथवा जात्या षष्टिवार्षिकः पर्यायेण विंशतिवर्षपर्यायः श्रुतेन समवायधारी तपस्वी—मासक्षपकादिः ग्लानः—अशक्तो व्याध्यादिभिरिति, तथा 'सेह'त्ति शिक्षकोऽभिनवप्रव्रजितः 'साधर्मिकः, समानधर्मा लिङ्गतः प्रवचनतश्चेति, कुलं—चान्द्रादिकं साधुसमुदायविशेषरूपं प्रतीतं, गणः—कुलसमुदायः सङ्घो—गणसमुदाय इत्येवं सूत्रद्वयेन दशविधं वैयावृत्त्य माभ्यन्तरतपोभेदभूतं प्रतिपादितमिति, उक्तं च—"आयरियउवज्झाए थेरतवस्सीगिलाणसेहाणं । साहंमियकुलगणसंघ संगयं तमिह कायव्वं ॥१॥" इति, [आचार्योपाध्यायस्थविरतपस्विशैक्षग्लानानां । साधर्मिककुलगणसंघस्य संगतं तदिह कर्त्तव्यम् ॥१॥]

पंचहिं ठाणेहिं समणे णिग्गंथे साहम्मितं संभोतितं विसंभोतितं करेमाणे णातिक्कमति, तं०—सकिरित ठाणं पडिसेवित्ता भवति १ पडिसेवित्ता णो आलोएइ २ आलोइत्ता णो पट्ठवेति ३ पट्ठवेत्ता णो णिव्विसति ४ जाइं इमाइं थेराणं ठितिपकप्पाइं भवंति ताइं अतियंचिय २पडिसेवेति से हंदऽहं पडिसेवामि किं मं थेरा करिस्संति ? ५। पंचहिं ठाणेहिं समणे निग्गंथे साहंमितं पारंचितं करेमाणे णातिक्कमति, तं०—सकुले वसति सकु-

लस्स भेदाते अब्भुट्ठित्ता भवति १ गणे वसति गणस्स भेताते अब्भुट्ठेत्ता भवति २ हिंसप्पेही ३ छिद्दप्पेही ४ अभिक्खणं पसिणाततणाइं पउंजित्ता भवति ५। (सू०३९८) आयरियउवज्झायस्स णं गणंसि पंच वुग्गहट्ठाणा पं० तं०—आयरियउवज्झाए णं गणंसि आणं वा धारणं वा नो सम्मं पउंजेत्ता भवति १ आयरियउवज्झाए णं गणंसि आधारातिणियाते कितिकम्मं नो सम्मं पउंजित्ता भवति २ आयरियउवज्झाते गणंसि जे सुत्तपज्जवजाते धारति ते काले २ णो सम्ममणुप्पवातित्ता भवति ३ आयरियउवज्झाए गणंसि गिलाणसेहवेयावच्चं नो सम्ममब्भुट्ठित्ता भवति ४ आयरियउवज्झाते गणंसि अणापुच्छितचारी यावि हवइ नो आपुच्छियचारी ५। आयरियउवज्झायस्स णं गणंसि पंचावुग्गहट्ठाणा पं० तं०—आयरियउवज्झाए गणंसि आणं वा धारणं वा सम्मं पउंजित्ता भवति, एवमधारायणिताते सम्मं किइकम्मं पउंजित्ता भवइ आयरियउवज्झाए णं गणंसि जे सुतपज्जवजाते धारेति ते काले २ सम्मं अणुपवाइत्ता भवइ आयरियउवज्झाए गणंसि गिलाणसेहवेतावच्चं सम्मं अब्भुट्ठित्ता भवति आयरियउवज्झाते गणंसि आपुच्छियचारी यावि भवति णो अणापुच्छियचारी (सू० ३९९) पंच निसिज्जाओ पं० तं०—उक्कुडुती गोदोहिता समपायपुता पलितंका अद्धपलितंका। पंच अज्जवट्ठाणा पं० तं०—साधुअज्जवं साधुमद्दवं साधुलाघवं साधुखंती साधुमुत्ती (सू० ४००)।

साम्भोगिकं-एकभोजनमण्डलीकादिकं विसाम्भोगिकं-मण्डलीबाह्यं कुर्वन्नातिक्रामति आज्ञामिति गम्यते, उचितत्वादिति, सक्रियंप्रस्तावादशुभकर्मबन्धयुक्तं स्थानं-अकृत्यविशेषलक्षणं प्रतिषेविता भवतीत्येकं, प्रतिषेव्य गुरवे नालोचयति-न निवेदयतीति द्वितीयं,

आलोच्य गुरूपदिष्टप्रायश्चित्तं न प्रस्थापयति–कर्तुं नारभत इति तृतीयं, प्रस्थाप्य न निर्विशति–न समस्तं प्रवेशयत्यथवा 'निर्वेशः परिभोग' इति वचनान्न परिभुङ्क्ते–नासेवत इत्यर्थः इति चतुर्थं, यानीमानि सुप्रसिद्धतया प्रत्यक्षाणि 'स्थविराणां' स्थविरकल्पिकानां 'स्थितौ' समाचारे प्रकल्प्यानि–प्रकल्पनीयानि योग्यानि विशुद्धपिण्डशय्यादीनि स्थितिप्रकल्प्यानि अथवा स्थितिश्च–मासकल्पादिका प्रकल्प्यानि च पिण्डादीनि स्थितिप्रकल्प्यानि तानि 'अइयंचिय अइयंचिय'त्ति अतिक्रम्यातिक्रम्येत्यर्थः, प्रतिषेवते तदन्यानीति गम्यते, अथ सङ्घाटकादिः साधुरेवं पर्यालोचयति–यथा नैतत्प्रतिषेवितुमुचितं गुरुर्नो बाह्यौ करिष्यति, तत्रेतर आह—'से' इति तद्-कल्प्यजातं 'हंदे'ति कोमलामन्त्रणं वचनं हमित्यकारप्रश्लेषादहं प्रतिषेवामि किं मम 'स्थविराः' गुरवः करिष्यन्ति ?, न किञ्चित्ते रुष्टाअपि मे कर्तुं शक्यन्ते इति बलोपदर्शनं पञ्चममिति । 'पारंचिय'ति दशमप्रायश्चित्तभेदवन्तमपहृतलिङ्गादिकमित्यर्थः कुर्वन्नातिक्रामति सामायिकमिति गम्यते, कुले–चान्द्रादिके वसति गच्छवासीत्यर्थस्तस्यैव कुलस्य भेदायान्योऽन्यमधिकरणोत्पादनेनाभ्युत्थाता भवति यतत इत्यर्थः इत्येकं, एवं गणस्यापीति द्वितीयं, तथा हिंसां–वधं साध्वादेः प्रेक्षते–गवेषयतीति हिंसाप्रेक्षीति तृतीयं, हिंसार्थमेवापभ्राजनार्थं वा 'छिद्राणि'प्रमत्ततादीनि प्रेक्षत इति छिद्रप्रेक्षीति चतुर्थं, अभीक्ष्णमितीह पुनःशब्दार्थः ततश्चाभीक्ष्णमभीक्ष्णं पुनः पुनरित्यर्थः प्रश्ना–अंगुष्ठकुड्यप्रश्नादयः सावद्यानुष्ठानपृच्छा वा त एवायतनान्यसंयमस्य प्रश्नायतनानि प्रयोक्ता भवति, प्रयुङ्क्त इत्यर्थः इति पञ्चमं । तथा आचार्योपाध्यायस्येति समाहारद्वन्द्वः कर्मधारयो वा, ततश्चाचार्यस्योपाध्यायस्य 'गणंसि'त्ति गणे 'विग्रहस्थानानि' कलहाश्रयाः, आचार्योपाध्यायौ द्वयं वा 'गणे' गणविषये 'आज्ञां' हे साधो ! भवतेदं विधेयमित्येवंरूपामादिष्टिं 'धारणां' न विधेयमिदमित्येवंरूपां 'नो'नैव सम्यग्–औचित्येन प्रयोक्ता भवतीति साधवः परस्परं कलहायन्ते असम्यग्नियोगात् दुर्नियन्त्रितत्वाच्च,

अथवा अनौचित्यनियोक्तारमाचार्यादिकमेव कलहायन्ते इत्येवं सर्वत्रेति, अथवा गूढार्थपदैरगीतार्थस्य पुरतो देशान्तरस्थगीतार्थनिवेदनाय गीतार्थो यदतिचारनिवेदनं करोति साऽऽज्ञा, असकृदालोचनादानेन यत्प्रायश्चित्तविशेषावधारणं सा धारणा, तयोर्न सम्यक् प्रयोक्तेति स कलहभागिति प्रथमं, तथा स एव 'आहाराइणियाए'त्ति रत्नानि द्विधा–द्रव्यतो भावतश्च, तत्र द्रव्यतः कर्केतनादीनि भावतो ज्ञानादीनि, तत्र रत्नैः–ज्ञानादिभिर्व्यवहरतीति रात्निकः–बृहत्पर्यायो यो यो रात्निको यथारात्निकं तद्भावस्तत्ता तया यथारात्निकतया–यथाज्येष्ठं कृतिकर्म्म–वन्दनकं विनय एव वैनयिकं तच्च न सम्यक् प्रयोक्ता, अन्तर्भूतिकारितार्थत्वाद्वा प्रयोजयिता भवतीति द्वितीयं, तथा स एव यानि श्रुतस्य पर्यवजातानि–सूत्रार्थप्रकारान् 'धारयति' धारणाविषयीकरोति तानि काले काले–यथावसरं न सम्यगनुप्रवाचयिता भवति–न पाठयतीत्यर्थः इति तृतीयं, काले अनुप्रवाचयितेत्युक्तं तत्र गाथाः—"कालक्कमेण पत्तं संवच्छरमाइणा उ जं जंमि। तं तंमि चेव धीरो वाएज्ञा सो य कालोऽयं ॥१॥ तिवरिसपरियागस्स उ आयारपकप्पनाममज्झयणं। चउवरिसस्स य सम्मं सुयगडं नाम अंगंति ॥२॥ दसकप्पव्ववहारा संवच्छरपणगदिक्खियस्सेव। ठाणं समवाओऽवि य अंगे ते अट्ठवासस्स ॥३॥ दसवासस्स विवाहो एक्कारसवासयस्स य इमे उ। खुड्डियविमाणमाई अज्झयणा पंच नायव्वा ॥४॥ बारसवासस्स तहा अरुणुववायाइ पंच अज्झयणा। तेरसवासस्स तहा उट्ठाणसुयाइया चउरो ॥५॥ चोद्दसवासस्स तहा आसीविसभावणं जिणा बिंति। पन्नरसवासगस्स य दिट्ठीविसभावणं तहय ॥६॥ सोलसवासाईसु य एक्कोत्तरवुड्ढिएसु जहसंखं। चारणभावणमहासुविणभावणा तेयगनिसग्गा ॥७॥ एगूणवीसवासगस्स उ दिट्ठिवाओ दुवालसममंगं। संपुण्णवीसवरिसो अणुवाई सव्वसुत्तस्स ॥८॥" त्ति, [संवत्सरादिना कालक्रमेण यस्मिन् यदेव प्राप्तं तत्तस्मिन्नेव धीरो वाचयेत् सोऽयं कालः ॥१॥ त्रिवर्षपर्यायकस्याचारप्रकल्पनामाध्ययनं चतुर्वर्षस्य

न सूत्रकृतनामाङ्गमिति सम्यग्वाचयेत् ॥२॥ दशाकल्पव्यवहाराः संवत्सरपंचकदीक्षितस्यैव स्थानांगं समवायोऽपि ते अष्टवर्षस्यांगे ॥३॥ दशवर्षस्य विवाहः एकादशवर्षस्येमानि क्षुल्लकविमानप्रविभक्त्यादीन्यध्ययनानि पंच ज्ञातव्यानि ॥४॥ द्वादशवर्षस्य तथाऽरुणोपपातादीनि पंचाध्ययनानि त्रयोदशवर्षस्य तथोत्थानश्रुतादिकानि चत्वारि ॥५॥ चतुर्दशवर्षस्याशीविषभावनां जिना ब्रुवन्ति पञ्चदशवर्षकस्य च दृष्टिविषभावनां तथा च ॥६॥ षोडशवर्षादिषु चैकैकोत्तरवर्द्धितेषु यथासंख्यं चारणभावनां महास्वप्नभावनां तेजोनिसर्गं ॥७॥ एकोनविंशतिकस्य तु दृष्टिवादो द्वादशममंगं संपूर्णविंशतिवर्षोऽनुपाती सर्वश्रुतस्य ॥१॥ ] तथा स एव ग्लानशैक्षवैयावृत्त्यं प्रति न सम्यक् स्वयमभ्युत्थाता–अभ्युपगन्ता भवतीति चतुर्थं, तथा स एव गणं अनापृच्छ्य चरति–क्षेत्रान्तरसंक्रमादि करोतीत्येवंशीलोऽनापृच्छ्यचारी, किमुक्तं भवति ?–नो आपृच्छ्यचारीति पञ्चमं विग्रहस्थानं। एतदेव व्यतिरेकेणाह–अविग्रहसूत्रं गतार्थं। निषद्यासूत्रे निषदनानि निषद्याः–उपवेशनप्रकारास्तत्रासनालग्नपुतः पादाभ्यामवस्थित उत्कुटुकस्तस्य या सा उत्कुटुका, तथा गोर्दोहनं गोदोहिका तद्वद्यास्तो गोदोहिका, तथा समौ–समतया भूलग्नौ पादौ च पुतौ च यस्यां सा समपादपुता, तथा पर्यङ्का–जिनप्रतिमानामिव या पद्मासनमिति रूढा, तथा अर्द्धपर्यङ्का–ऊरावेकपादनिवेशनलक्षणेति। तथा ऋजोः–रागद्वेषवक्रत्ववर्जितस्य सामायिकवतः कर्म्म भावो वा आर्जवं संवर इत्यर्थः तस्य स्थानानि–भेदा आर्जवस्थानानि, साधु–सम्यग्दर्शनपूर्वकत्वेन शोभनमार्जवं–मायानिग्रहस्ततः कर्म्मधारयः साधोर्वा–यतेरार्जवं साध्वार्जवं, एवं शेषाण्यपि।

आर्जवयुक्ताश्च मृत्वा प्रायो देवा भवन्तीति पंचविहा जोइसियेत्यादिना ईसाणस्स णमेतदन्तेन ग्रन्थेन देवाधिकारमाह—

पंचविहा जोइसिया पं० तं०—चंदा सूरा गहा नक्खत्ता ताराओ, पंचविहा देवा पं० तं०—भविअदव्वदेवा

णरदेवा धम्मदेवा देवातिदेवा भावदेवा (सू० ४०१) पंचविहा परितारणा पं० तं०—कातपरिचारणा फासपरितारणा रूवपरितारणा सद्दपरितारणा मणपरितारणा (सू० ४०२) चमरस्स णं असुरिंदस्स असुरकुमाररन्नो पंच अग्गमहिसीओ पं० तं०—काले राती रतणी विज्जू मेहा, बलिस्स णं वतिरोतणिंदस्स वतिरोतणरन्नो पंच अग्गमहिसीओ पं० तं०—सुभा णिसुभा रंभा णिरंभा मतणा (सू० ४०३) चमरस्स णमसुरिंदस्स असुरकुमाररण्णो पंच संगामिता अणिता पंच संगामिया अणियाधिवती पं० तं०—पायत्ताणिते पीढाणिते कुंजराणिते महिसाणिते रहाणीते, दुमे पायत्ताणिताधिवती सोदामी आसराया पीढाणियाधिवती कुंथू हत्थिराया कुंजराणिताधिवती लोहितक्खे महिसाणिताधिवती किन्नरे रधाणिताधिवती। बलिस्स णं वतिरोतणिंदस्स वतिरोतणरन्नो पंच संगामिताणिता पंच संगामिताणीयाधिवती पं० तं०—पायत्ताणिते जाव रधाणिते, महद्दुमे पायत्ताणिताधिवती महासोतामो आसराता पीढाणिताधिवती मालंकारो हत्थिराया कुंजराणिताधिपती महालोहिअक्खो महिसाणिताधिपती किंपुरिसे रधाणिताधिपती। धरणस्स णं णागकुमारिंदस्स णागकुमाररन्नो पंच संगामिता अणिता पंच संगामिताणीयाधिपती पं० तं०—पायत्ताणिते जाव रहाणीए, भद्दसेणे पायत्ताणिताधिपती जसोधरे आसराया पीढाणिताधिपती सुदंसणे हत्थिराया कुंजराणिताधिपती नीलकंठे महिसाणियाधिपती आणंदे रहाणिताहिवई। भूयाणंदस्स नागकुमारिंदस्स नागकुमाररन्नो पंच संगामियाणिया पंच संगामियाणीयाहिवई पं० तं०—पायत्ताणीए जाव रहाणीए दक्खे पायत्ताणियाहिवई सुग्गीवे आसराया पीढाणिया-

हिवई सुविक्कमे हत्थिराया कुंजराणिनाहिवई सेयकंठे महिसाणियाहिवई नंदुत्तरे रहाणियाहिवई। वेणुदेवस्स णं सुवन्निंदस्स सुवन्नकुमाररन्नो पंच संगामियाणिता पंच संगामिताणिताहिपती पं० तं०—पायत्ताणीते एवं जधा धरणस्स तधा वेणुदेवस्सवि, वेणुदालियस्स जहा भूताणंदस्स, जधा धरणस्स तहा सव्वेसिं दाहिणिल्लाणं जाव घोसस्स, जधा भूताणंदस्स तधा सव्वेसिं उत्तरिल्लाणं जाव महाघोसस्स। सक्कस्स णं देविंदस्स देवरन्नो पंच संगामिता अणिता पंच संगामिताणिताधिवती पं० तं०—पायत्ताणिते जाव उसभाणिते, हरिणेगमेसी पायत्ताणिताधिवती वाऊ आसराता पीढाणिताधिवई एरावणे हत्थिराया कुंजराणिताधिपई दामड्ढी उसभाणिताधिपती माढरो रधाणिताधिपती, ईसाणस्स णं देविंदस्स देवरन्नो पंच संगामिया अणिता जाव पायत्ताणिते पीढाणिए कुंजराणिए उसभाणिए रधाणिते, लहुपरक्कमे पायत्ताणिताधिवती महावाऊ आसराया पीढाणियाहिवई पुप्फदंते हत्थिराया कुंजराणियाहिवती महादामड्ढी उसभाणियाहिवई महामाढरे रधाणियाहिवती, जधा सक्कस्स तहा सव्वेसिं दाहिणिल्लाणं जाव आरणस्स जधा ईसाणस्स तहा सव्वेसिं उत्तरिल्लाणं जाव अच्चुतस्स (सू० ४०४) सक्कस्स णं देविंदस्स देवरन्नो अब्भंतरपरिसाए देवाणं पंच पलिओवमाइं ठिती पं०, ईसाणस्स णं देविंदस्स देवरन्नो अब्भंतरपरिसाते देवीणं पंच पलिओवमाइं ठिती पं०, (सू० ४०५)

सुगमश्चायं, नवरं ज्योतींषि-विमानविशेषास्तेषु भवा ज्योतिष्का इति, तथा दीव्यन्ति-क्रीडादिधर्म्मभाजो भवन्ति दीव्यन्ते वा-स्तूयन्ते ये ते देवाः, भव्या-भाविदेवपर्यायोग्या अत एव द्रव्यभूताः ते च ते देवाश्चेति भव्यद्रव्यदेवाः-वैमानिकादि ४, देव-

त्वेनानन्तरभवे ये उत्पत्स्यन्त इत्यर्थः, नराणां देवा नरदेवाश्चक्रवर्त्तिन इत्यर्थः, धर्मप्रधाना देवा धर्म्मदेवाः—चारित्रवन्तो देवानां मध्ये अतिशयवन्तो देवाः देवाधिदेवाः—अर्हन्तः भावदेवा—देवायुष्काद्यनुभवन्तो वैमानिकादयः ४ इत्यर्थः । 'परितारण'त्ति वेदोदयप्रतीकारः, तत्र स्त्रीपुंसयोः कायेन परिचारणा—मैथुनप्रवृत्तिः कायपरिचारणा ईशानकल्पं यावद्, एवमन्यत्रापि समासः, नवरं स्पर्शेन तदुपरि द्वयोः ४ रूपेण द्वयोः ६ शब्देन द्वयो ८ मनसा चतुर्षु १२ ग्रैवेयकादिषु परिचारणव नास्तीति । 'साङ्ग्रामिकाणि' सङ्ग्रामप्रयोजनानि, एतच्च गान्धर्वनाट्यानीकयोर्व्यवच्छेदार्थं विशेषणमिति, अनीकाधिपतयः—सैन्यमध्ये प्रधानाः पदात्यादयः, एवं पदातीनां—पत्तीनां समूहः पादातं तदेवानीकं पादातानीकं पीठानीकं—अश्वसैन्यं, पादातानीकाधिपतिः पदातिरेवोत्तमः, अश्वराजः—प्रधानोऽश्वः, एवमन्येऽपि, दाहिणिल्लाणंति सनत्कुमारब्रह्मशुक्रानतारणानां, 'उत्तरिल्लाणं'ति माहेन्द्रलान्तकसहस्रारप्राणताच्युतानामिति, इह च दाक्षिणात्याः सौधर्मादयो विषमसङ्ख्या इति विषमसङ्ख्यत्वं शब्दस्य प्रवृत्तिनिमित्तीकृत्य ब्रह्मलोकशुक्रौ दाक्षिणात्यावुक्तौ, समसङ्ख्यत्वं तु प्रवृत्तिनिमित्तीकृत्य लान्तकसहस्रारावुत्तराविति, तथा देवेन्द्रस्तवाध्ययनाभिधानप्रकीर्णकश्रुत इव द्वादशानामिन्द्राणां विवक्षणादारणस्येत्याद्युक्तमिति सम्भाव्यते, अन्यथा चतुर्षु द्वावेवेन्द्रावत आरणस्येत्याद्यनुपपन्नं स्यादिति ।

इहानन्तरं देवानां वक्तव्यतोक्ता, दुष्टाध्यवसायस्य च प्राणिनस्तद्गतिस्थित्यादिप्रतिघातो भवतीति तन्निरूपणायाह—

पंचविहा पडिहा पं० तं०—गतिपडिहा ठितीपडिहा बंधणपडिहा भोगपडिहा बलवीरितपुरिसयारपरक्कमपडिहा (सू० ४०६) पंचविधे आजीविते पं० तं०—जातिआजीवे कुलाजीवे कम्माजीवे सिप्पाजीवे लिंगा-

जीवे (सू० ५०७) पंच रायककुहा पं० तं०—खग्गं छत्तं उप्फेसं उपाणहाओ वालवीअणी (सू० ४०८)।

'पंचविहा पडिहे'त्यादि सुगमं, नवरं 'पडिह'त्ति प्राकृतत्वात् उप्पा इत्यादिवत्प्रतिघातः प्रतिहननमित्यर्थः, तत्र गतेः—देवगत्यादेः प्रकरणाच्छुभायाः प्रतिघातः—तत्प्राप्तियोग्यत्वे सति विकर्म्मकरणादप्राप्तिर्गतिप्रतिघातः, प्रव्रज्यादिपरिपालनतः प्राप्तव्यशुभदेवगतेर्नरकप्राप्तौ कण्डरीकस्येवेति, तथा स्थितेः—शुभदेवगतिप्रायोग्यकर्म्मणां बद्ध्वैव प्रतिघातः स्थितिप्रतिघातः, भवति चाध्यवसायविशेषाग्निनेः प्रतिघातो, यदाह—"दीहकालठिइयाओ हस्सकालठियाओ पकरेइ" इति, [दीर्घकालस्थितिकाः ह्रस्वकालस्थितिकाः प्रकरोति प्रकृतीः] ॥ तथा बन्धनं नामकर्म्मण उत्तरप्रकृतिरूपमौदारिकादिभेदतः पञ्चविधं तस्य प्रक्रमात् प्रशस्तस्य प्राग्वत् प्रतिघातो बन्धनप्रतिघातो, बन्धनग्रहणस्योपलक्षणत्वात् तत्सहचरप्रशस्तशरीरतदङ्गोपाङ्गसंहननसंस्थानानामपि प्रतिघातो व्याख्येयः, तथा प्रशस्तगतिस्थितिबन्धनादिप्रतिघाताद् भोगानां—प्रशस्तगत्याद्यविनाभूतानां प्रतिघातो भोगप्रतिघातो, भवति हि कारणाभावे कार्याभाव इति, तथा प्रशस्तगत्यादेरभावादेव बलवीर्यपुरुषकारपराक्रमप्रतिघातो भवतीति प्रतीतं, तत्र बलं—शारीरं वीर्य—जीवप्रभवं पुरुषकारः—अभिमानविशेषः पराक्रमः—स एव निष्पादितस्वविषयोऽथवा पुरुषकारः—पुरुषकर्त्तव्यं पराक्रमो—बलवीर्ययोर्व्यापारणमिति। देवगत्यादिप्रतिघातश्च चारित्रातिचारकारिणो भवतीत्युत्तरगुणानाश्रित्य तद्विशेषमाह—'पंचविहे'त्यादि, जातिं—ब्राह्मणादिकामाजीवति—उपजीवति तज्जातीयमात्मानं सूचादिनोपदर्श्य ततो भक्तादिकं गृह्णातीति जात्याजीवकः, एवं सर्वत्र, नवरं कुलम्—उग्रादिकं गुरुकुलं वा कर्म्म—कृष्यादिनानाचार्यकं वा शिल्पं—तूर्णनादि साचार्यकं वा लिङ्गं—साधुलिङ्गं तदाजीवति, ज्ञानादिशून्यस्तेन जीविकां कल्पयतीत्यर्थः, लिङ्गस्थानेऽन्यत्र गणोऽधीयते, यत उक्तम्—"जाईकुलगणकम्मे सिप्पे आजीवणा उ पंचविहा। सूयाए असूयाए अप्पाण

कहेइ एक्केक्के ॥१॥" त्ति, [ आत्मनो जातिकुलगणकर्माणि शिल्पं वा सूचयाऽसूचया वैकैकं कथयतीति पंचविधा आजीवकाः ॥१॥] तत्र गणो–मल्लादिः, सूचया–व्याजेनासूचया–साक्षात्। अनन्तरं साधूनां रजोहरणादिकं लिङ्गमुक्तं, अधुना खड्गादिरूपं राज्ञां तदेवाह— 'पंच रायककुभा'इत्यादि व्यक्तं नवरं राज्ञां–नृपतीनां ककुदानि–चिह्नानि राजककुदानि, 'उप्फेसि'त्ति शिरोवेष्टनं शेखरक इत्यर्थः, 'पाहणाउ'त्ति उपानहौ, वालव्यजनी चामरमित्यर्थः, श्रूयते च–"अवणेइ पंच ककुहाणि जाणि रायाण चिंधभूयाणि। खग्गं छत्तोवाणह मउडं तह चामराओय ॥१॥" इति, [खड्गं छत्रं उपानहौ मुकुटं तथा चामराणि पंचापनयति यानि राज्ञः चिह्नभूतानि ॥१॥]

अनन्तरोदितककुदयोग्यश्रैक्ष्वाकादिप्रव्रजितः सरागोऽपि सन् सत्त्वाधिकत्वाद्यानि वस्तून्यालम्ब्य परीषहादीनपगणयति तान्याह—

पंचहिं ठाणेहिं छउमत्थे णं उदिन्ने परिस्सहोवसग्गे सम्मं सहेज्जा खमेज्जा तितिक्खेज्जा अहियासेज्जा, तं०–उदिन्नकम्मे खलु अयं पुरिसे उम्मत्तगभूते, तेण मे एस पुरिसे अक्कोसति वा अवहसति वा णिच्छोढेति वा णिब्भंछेति वा बंधति वा रुंभति वा छविच्छेतं करेति वा पमारं वा नेति उद्दवेइ वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणमच्छिंदति वा विच्छिंदति वा भिंदति वा अवहरति वा १, जक्खातिट्ठे खलु अयं पुरिसे, तेणं मे एस पुरिसे अक्कोसति वा तहेव जाव अवहरति वा २, ममं च णं तब्भववेयणिज्जे कम्मे उतिन्ने भवति, तेण मे एस पुरिसे अक्कोसति वा जाव अवहरति वा ३, ममं च णं सम्ममसहमाणस्स अखममाणस्स अतितिक्खमाणस्स अणधितासमाणस्स किं मन्ने कज्जति ?, एगंतसो मे पावे कम्मे कज्जति ४, ममं च णं सम्मं सहमाणस्स जाव अहियासेमाणस्स किं मन्ने कज्जति ?, एगंतसो मे णिज्जरा कज्जति ५, इच्चेतेहिं पंचहिं ठाणेहिं छउमत्थे उदिन्ने

परीसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा। पंचहिं ठाणेहिं केवली उदिन्ने परिसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा, तं०—खित्तचित्ते खलु अयं पुरिसे तेण मे एस पुरिसे अक्कोसति वा तहेव जाव अवहरति वा १ दित्तचित्ते खलु अयं पुरिसे तेण मे एस पुरिसे जाव अवहरति जाव वा० २ जक्खातिट्ठे खलु अयं पुरिसे तेण मे एस पुरिसे जाव अवहरति वा ३ ममं च णं तब्भववेयणिज्जे कम्मे उदिन्ने भवति तेण मे एस पुरिसे जाव अवहरति वा ४ ममं च णं सम्मं सहमाणं खममाणं तितिक्खमाणं अहियासेमाणं पासेत्ता बहवे अन्ने छउमत्था समणा णिग्गंथा उदिन्ने २ परीसहोवसग्गे एवं सम्मं सहिस्संति जाव अहियासिस्संति ५, इच्चेतेहिं पंचहिं ठाणेहिं केवली उदिन्ने परीसहोवसग्गे सम्मं सहेज्जा जाव अहियासेज्जा (सू० ४०९)।

स्फुटं, किन्तु छाद्यते येन तच्छद्म—ज्ञानावरणादिघातिकर्म्मचतुष्टयं तत्र तिष्ठतीति छद्मस्थः सकषाय इत्यर्थः, उदीर्णान्—उदितान् परीषहोपसर्गान्—अभिहितस्वरूपान् सम्यक्—कषायोदयनिरोधादिना सहेत—भयाभावेनाविचलनाद् भटं भटवत् क्षमेत क्षान्त्या तितिक्षेत अदीनतया अध्यासीत परीषहादावेवाधिक्येनासीत न चलेदिति, उदीर्णं—उदितं प्रबलं वा कर्म्म—मिथ्यात्वमोहनीयादि यस्य स उदीर्णकर्म्मा खल्वित्यलङ्कारे अयं—प्रत्यक्षः पुरुषः उन्मत्तको—मदिरादिना विप्लुतचित्तः स इव उन्मत्तकभूतो, भूतशब्दस्योपमानार्थत्वात्, उन्मत्तक एव वा उन्मत्तकभूतो, भूतशब्दस्य प्रकृत्यर्थत्वात्, उदीर्णकर्म्मा यतोऽयमुन्मत्तकभूतः पुरुषः तेन कारणेन 'मे' इति मां एषः—अयमाक्रोशति—शपति अपहसति—उपहासं करोति अपघर्षति वा—अपघर्षणं करोति निश्छोटयति—सम्बन्ध्यन्तरसम्बद्धं हस्तादौ गृहीत्वा बलात् क्षिपति निर्भर्त्सयति दुर्वचनैः बध्नाति रज्ज्वादिना रुणद्धि कारागारप्रवेशादिना छवेः—शरीरावयवस्य हस्तादेः

छेदं करोति मरणप्रारम्भः प्रमारो–मूर्च्छाविशेषो मारणस्थानं वा तं नयति–प्रापयतीति अपद्रावयति–मारयति अथवा प्रमारं–मरणमेव 'उवद्दवेइ'त्ति उपद्रवयति उपद्रवं करोतीति, पतद्ग्रहं–पात्रं कम्बलं–प्रतीतं पादप्रोञ्छनं–रजोहरणं आच्छिनत्ति–बलादुद्दालयति 'विच्छिनत्ति' विच्छिन्नं करोति, दूरे व्यवस्थापयतीत्यर्थः, अथवा वस्त्रमीषच्छिनत्ति आच्छिनत्ति, विशेषेण छिनत्ति विच्छिनत्ति, भिनत्ति–पात्रं स्फोटयति अपहरति–चोरयति, वाशब्दाः सर्व्व विकल्पार्था इत्येकं परीषहादिसहनालम्बनस्थानं, इदं चाक्रोशादिकं, इह प्राय आक्रोशवधाभिधानपरीषहद्वयरूपं मन्तव्यमुपसर्गविवक्षायां तु मानुष्यकप्राद्वेषिकाद्युपसर्गरूपमिति १। तथा यक्षाविष्टो–देवाधिष्ठितोऽयं तेनाक्रोशतीत्यादि द्वितीयं २,तथा अयं हि परीषहोपसर्गकारी मिथ्यात्वादिकर्म्मवशवर्त्ती 'मम्मं च णं'ति मम पुनस्तेनैव–मानुष्यकेण भवेन–जन्मना वेद्यते–अनुभूयते यत्तत्तद्भववेदनीयं कर्म्म उदीर्णं भवति–अस्ति तेनैष मामाक्रोशतीत्यादि तृतीयं ३, तथा एष बालिशः पापाभीतत्वात्करोतु नामाक्रोशनादि मम पुनरसहमानस्य 'किं मन्ने'त्ति मन्ये इति निपातो वितर्कार्थः 'कज्जइ'त्ति सम्पद्यते, इह विनिश्चयमाह—'एगंतसो'त्ति एकान्तेन सर्वथा पापं कर्म्म–असातादि 'क्रियते' संपद्यत इति चतुर्थं, तथा अयं तावत् पापं बध्नाति मम चेदं सहतो निर्जरा क्रियत इति पञ्चमं, 'इच्चेएहीं'त्यादि निगमनमिति, शेषं सुगमं। छद्मस्थविपर्ययः केवलीति तत्सूत्रं, तत्र च क्षिप्तचित्तः, पुत्रशोकादिना नष्टचित्तः, दृप्तचित्तः–पुत्रजन्मादिना दर्प्पवच्चित्त उन्मत्त एवेति, मां च सहमानं दृष्ट्वा अन्येऽपि सहिष्यन्ति, उत्तमानुसारित्वात् प्राय इतरेषां, यदाह—"जो उत्तमेहिं मग्गो पहओ सो दुकरो न सेसाणं। आयरियंमि जयंते तयणुचरा केण सीएज्जा? ॥१॥" इति, [यो मार्ग उत्तमैः प्रहतः स शेषाणां न दुष्करः आचार्ये यतमाने तदनुचराः केन सीदेयुः? ॥१॥ ] 'इच्चेएहीं'त्याद्यत्रापि निगमनं, शेषं सुगममिति।

छद्मस्थकेवलिनोरनन्तरं स्वरूपमुक्तमिदानीमपि तयोरेव तदाह—

पंच हेऊ पं० तं०—हेउं न जाणति हेउं ण पासति हेउं ण बुज्झति हेउं णाभिगच्छति हेउं अन्नाणमरणं मरति १ पंच हेऊ पं० तं०—हेउणा ण जाणति जाव हेउणा अन्नाणमरणं मरति ५, २, पंच हेऊ पं० तं०—हेउं जाणइ जाव हेउं छउमत्थमरणं मरइ ३, पंच हेऊ पं० तं०—हेउणा जाणइ जाव हेउणा छउमत्थमरणं मरइ, पंच अहेऊ पं० तं०—अहेउं ण याणति जाव अहेउं छउमत्थमरणं मरति ५, पंच अहेऊ पं० तं०—अहेउणा न जाणति जाव अहेउणा छउमत्थमरणं मरति ६, पंच अहेऊ पं० तं०—अहेउं जाणति जाव अहेउं केवलिमरणं मरति ७, पंच अहेऊ पं० तं०—अहेउणा ण जाणति जाव अहेउणा केवलिमरणं मरति ८, केवलिस्स णं पंच अणुत्तरा पं० तं०—अणुत्तरे नाणे अणुत्तरे दंसणे अणुत्तरे चरित्ते अणुत्तरे तवे अणुत्तरे वीरिते ९. (सू० ४१०)।

'पंच हेऊ' इत्यादि सूत्रनवकं, तत्र भगवतीपञ्चमशतसप्तमोद्देशकचूर्ण्यनुसारेण किमपि लिख्यते, पञ्च हेतवः, इह यः छद्मस्थत्वादनुमानव्यवहारी अनुमानाङ्गतया हेतुं-लिङ्गं धूमादिकं जानाति स हेतुरेवोच्यते, एवं यः पश्यति २ श्रद्धत्ते ३ प्राप्नोति चेति ४ तदेव हेतुचतुष्टयं मिथ्यादृष्टिमाश्रित्य कुत्साद्वारेणाह-हेतुं न जानाति-न सम्यग्विशेषतो गृह्णाति, नञः कुत्सार्थत्वादसम्यगवैतीत्यर्थः, एवं न पश्यति सामान्यतः, न बुध्यते-न श्रद्धत्ते, बोधेः श्रद्धानपर्यायत्वात्, तथा न समभिगच्छति-भवनिस्तरणकारणतया न

प्राप्नोति, एवं चायं चतुर्विधो हेतुर्भवतीति, तथा हेतुम्-अध्यवसानादिमरणहेतुजन्यत्वेनोपचाराद् अज्ञानमरणं मिथ्यादृष्टित्वेनाज्ञातद्धेतुतद्भम्यभावस्य मरणं तन्म्रियते-करोति यश्चैवंविधः सोऽपि हेतुरेवेति पञ्चमो हेतुर्विधित एवोक्त इति १। तथा पंच हेतवस्तत्र यो हेतुना-धूमादिनाऽनुमेयमर्थं जानाति स हेतुरेव, एवं यः पश्यतीत्यादि। तदेव कुत्साद्वारेण मिथ्यादृष्टिमाश्रित्य हेतुचतुष्टयमाह-हेतुना न जानात्यनुमेयं, नञः कुत्सार्थत्वादेवासम्यगवगच्छतीत्यर्थः, एवं न पश्यतीत्यादि, तथा हेतुना-मरणकारणेन योऽज्ञानमरणं म्रियते स हेतुरेवेति पञ्चमो हेतुरिति २। तथा पञ्च हेतवो यो हि सम्यग्दृष्टितया हेतुं सम्यग्जानाति स हेतुरेवेत्येवमन्येऽपि, नवरं हेतुं-हेतुमत् छद्मस्थमरणं सम्यग्दृष्टित्वान्नाज्ञानमरणमनुमातृत्वाच्च न केवलिमरणमिति, एवं तृतीयान्तसूत्रमपि ३। इह सूत्रद्वयेऽपि हेतवः स्वरूपत उक्ताः ४, [ मिथ्यादृष्टिसम्यग्दृष्टियुग्मापेक्षया सूत्रयुगलता अन्यथा सूत्रचतुष्टयं ] तथा पञ्चाहेतवः यः सर्वज्ञतया अनुमानानपेक्षः स धूमादिकं हेतुं नायं हेतुर्ममानुमानोत्थापक इत्येवं जानातीत्यतोऽहेतुभूतं तं जानन्नहेतुरेवासावुच्यते, एवं दर्शनबोधाभिसमागमापेक्षयाऽपि। तदेवम (व अ) हेतुचतुष्टयं छद्मस्थमाश्रित्य देशनिषेधत आह—'अहेतु'मिति, धूमादिकं हेतुमहेतुभावेन न जानाति-न सर्वथाऽवगच्छति, कथञ्चिदेवावगच्छतीत्यर्थः, नञो देशनिषेधार्थत्वात् , ज्ञातुश्चावध्यादिकेवलित्वेनानुमानाव्यवहर्तृत्वादित्येकोऽयमहेतुर्देशप्रतिषेधत उक्तः, एवमहेतुं कृत्वा धूमादिकं न पश्यतीति द्वितीयो, न बुध्यते-न श्रद्धत्ते इति तृतीयो, नाभिसमागच्छतीति चतुर्थः, तथा अहेतुं-अध्यवसानादिहेतुनिरपेक्षं निरुपक्रमतया छद्मस्थमरणम्-अनुमानव्यवहर्तृत्वेऽप्यकेवलित्वात् तस्य, अयं च स्वरूपत एव पञ्चमोऽहेतुरुक्तः ५। तथा पञ्चाहेतवो योऽहेतुना-हेत्वभावेन केवलित्वात् जानात्यसावहेतुरेवेत्येवं पश्यतीत्यादयोऽपि, एवं च छद्मस्थमाश्रित्य पदचतुष्टयेनाहेतुचतुष्टयं देशप्रतिषेधत आह-तथा अहेतुना-उपक्रमाभावेन छद्मस्थमरणं म्रियत इति पञ्चमोऽहेतुः

सवत्र एवोक्तः ६। तथा पञ्चाहेतवः अहेतुं न हेतुभावेन विकल्पितं धूमादिकं जानाति केवलितया योऽनुमानाव्यवहारित्वात् सोऽहेतुरेव, एवं यः पश्यतीत्यादि, तथा अहेतुं-निर्हेतुकमनुपक्रमत्वात् केवलिमरणमनुमानाव्यवहारित्वान्म्रियते-यात्यसावहेतुः पञ्चमः, एते पञ्चापीह सन्देव उक्ताः, ७। एवं तृतीयान्तसूत्रमप्यनुसर्त्तव्यमिति ८। गमनिकामात्रमेतत्, तत्त्वं तु बहुश्रुता विदन्तीति। तथा न सन्त्युत्तराणि-प्रधानानि येभ्यस्तान्यनुत्तराणि, यथास्वं सर्वथाऽऽवरणक्षयात्, तत्राद्ये ज्ञानदर्शनावरणक्षयाद्, अनन्तरे मोहक्षयात्, तपसश्चारित्रभेदत्वात्, तपश्च केवलिनामनुत्तरं शैलेश्यवस्थायां शुक्लध्यानभेदस्वरूपं, ध्यानस्याभ्यन्तरतपोभेदत्वात्, वीर्यं तु वीर्यान्तरायक्षयादिति ९।

केवलाधिकारात् तीर्थकरसूत्राणि चतुर्दश,

पउमप्पहे णमरहा पंचचित्ते हुत्था, तं०—चित्ताहिं चुते चइत्ता गब्भं वक्कंते चित्ताहिं जाते चित्ताहिं मुंडे भवित्ता अगाराओ अणगारितं पव्वइए चित्ताहिं अणंते अणुत्तरे णिव्वाघाए णिरावरणे कसिणे पडिपुन्ने केवलवरनाणदंसणे समुप्पन्ने चित्ताहिं परिणिव्वुते, पुप्फदंते णं अरहा पंचमूले हुत्था, मूलेणं चुते चइत्ता गब्भं वक्कंते, एवं चेव एवमेतेणं अभिलावेणं इमातो गाहातो अणुगंतव्वातो। पउमप्पभस्स चित्ता १ मूले पुण होइ पुप्फदंतस्स २। पुव्वाइं आसाढा ३ सीयलस्सुत्तर विमलस्स भद्दवता ४ ॥१॥ रेवतिता अणंतजिणो ५ पूसो धम्मस्स ६ संतिणो भरणी ७। कुंथुस्स कत्तियाओ ८ अरस्स तह रेवतीतो य ९ ॥२॥ मुणिसुव्वयस्स सवणो १०

आसिणि णमिणो ११ य नेमिणो चित्ता १२। पासस्स विसाहाओ १३ पंच य हत्थुत्तरो वीरो १४॥३॥ समणे भगवं महावीरे पंचहत्थुत्तरे होत्था—हत्थुत्तराहिं चुए चइत्ता गब्भं वक्कंते हत्थुत्तराहिं गब्भाओ गब्भं साहरिते हत्थुत्तराहिं जाते हत्थुत्तराहिं मुंडे भवित्ता जाव पव्वइए हत्थुत्तराहिं अणंते अणुत्तरे जाव केवलवरनाणदंसणे समुप्पन्ने॥ (सू० ४११) इति पंचमट्ठाणस्स पढमो उद्देसओ समत्तो॥

कण्ठ्यानि चैतानि, नवरं पद्मप्रभः—ऋषभादिषु षष्ठः, पञ्चसु च्यवनादिदिनेषु चित्रा—नक्षत्रविशेषो यस्य स पञ्चचित्रः, चित्राभिरिति रूढ्या बहुवचनं, च्युतः—अवतीर्णः उपरिमोपरिमग्रैवेयकादेकत्रिंशत्सागरोपमस्थितिकात् च्युत्वा च 'गब्भं'ति गर्भे कुक्षौ व्युत्क्रान्तः उत्पन्नः, कौशाम्ब्यां धराभिधानमहाराजभार्यायाः सुसीमानामिकायाः माघमासबहुलषष्ठ्यां, जातो गर्भनिर्गमनेन कार्त्तिकबहुलद्वादश्यां, तथा मुण्डो भूत्वा केशकषायाद्यपेक्षया अगारान्निष्क्रम्यानगारितां—श्रमणतां प्रव्रजितो—गतः अनगारितया वा प्रव्रजितः कार्त्तिकशुद्धत्रयोदश्यां, तथाऽनन्तं पर्यायानन्तत्वात् अनुत्तरं सर्वज्ञानोत्तमत्वात् निर्व्याघातमप्रतिपातित्वात् निरावरणं सर्वथा स्वावरणक्षयात् कटकुड्याद्यावरणाभावाद्वा कृत्स्नं सकलपदार्थविषयत्वात् परिपूर्णं स्वावयवापेक्षया अखण्डं पौर्णमासीचन्द्रबिम्बवत्, किमित्याह—केवलं ज्ञानान्तरासहायत्वात् संशुद्धत्वाद्वा अत एव वरं—प्रधानं केवलवरं ज्ञानं च—विशेषावभासं दर्शनं च—सामान्यावभासं ज्ञानदर्शनं तच्च तत्त्वेति केवलवरज्ञानदर्शनं समुत्पन्नं—जातं चैत्रशुद्धपञ्चदश्यां, तथा परिनिर्वृतो—निर्वाणं गतः मार्गशीर्षबहुलैकादश्यामादेशान्तरेण फाल्गुनबहुलचतुर्थ्यामिति। 'एवं चेव'त्ति पद्मप्रभसूत्रमिव पुष्पदन्तसूत्रमप्यध्येतव्यं, 'एवं' अनन्तरोक्तस्वरूपेण एतेन—अनन्तरत्वात् प्रत्यक्षेणाभिलापेन सूत्रपाठेनेमास्तिस्रः सूत्रसंग्रहणीगाथा अनुगन्तव्याः—अनुसर्त्तव्याः। शेषसूत्राभिलापनिष्पादनार्थं 'पउमप्पभस्से'-

त्यादि, तत्र पद्मप्रभस्य चित्रानक्षत्रं च्यवनादिषु पञ्चसु स्थानकेषु भवतीत्यादि गाथाक्षरार्थो वक्तव्यः, सूत्राभिलापस्त्वाद्यसूत्रद्वयस्य साक्षाद्दर्शित एव, इतरेषां त्वेवं-'सीयले णं अरहा पंचपुव्वासाढे होत्था, तंजहा-पुव्वासाढाहिं चुए चइत्ता गब्भं वक्कंते, पुव्वासाढाहिं जाए' इत्यादि, एवं सर्वाण्यपि इति, व्याख्या त्वेवं-पुष्पदन्तो-नवमतीर्थकरः आनतकल्पादेकोनविंशतिसागरोपमस्थितिकात् फाल्गुनबहुलनवम्यां मूलनक्षत्रे च्युतश्च्युत्वा काकन्दीनगर्यां सुग्रीवराजभार्यायाः रामाभिधानाया गर्भत्वेन व्युत्क्रान्तः, मूलनक्षत्रे मार्गशीर्षबहुलपञ्चम्यां जातः, तथा मूल एव ज्येष्ठशुद्धप्रतिपदि मतान्तरेण मार्गशीर्षबहुलषष्ठ्यां निष्क्रान्तः, तथा मूल एव कार्त्तिकशुद्धतृतीयायां केवलज्ञानमुत्पन्नं, तथा अश्वयुजः शुद्धनवम्यामादेशान्तरेण वैशाखबहुलषष्ठ्यां निर्वृत इति २। तथा शीतलो-दशमजिनः प्राणतकल्पाद्विंशतिसागरोपमस्थितिकाद्वैशाखबहुलषष्ठ्यां पूर्वाषाढानक्षत्रे च्युतः च्युत्वा च भद्दिलपुरे दृढरथनृपतिभार्याया नन्दाया गर्भतया व्युत्क्रान्तः, तथा पूर्वाषाढास्वेव माघबहुलद्वादश्यां जातः, तथा पूर्वाषाढास्वेव माघबहुलद्वादश्यां निष्क्रान्तः, तथा पूर्वाषाढास्वेव पौषस्य शुद्धे मतान्तरेण बहुले पक्षे चतुर्दश्यां ज्ञानमुत्पन्नं, तथा तत्रैव नक्षत्रे श्रावणशुद्धपञ्चम्यां मतान्तरेण श्रावणबहुलद्वितीयायां निर्वृत इति, एवं गाथात्रयोक्तानां शेषाणामपि सूत्राणां प्रथमानुयोगपदानुसारेणोपयुज्य व्याख्या कार्या, नवरं चतुर्दशसूत्रे अभिलापविशेषोऽस्तीति तद्दर्शनार्थमाह—'समणे'त्यादि, हस्तोपलक्षिता उत्तरा हस्तो वोत्तरो यासां ता हस्तोत्तराः-उत्तराः फाल्गुन्यः, पञ्चसु च्यवनगर्भहरणादिषु हस्तोत्तरा यस्य स तथा 'गर्भात्' गर्भस्थानात् 'गर्भं'न्ति गर्भे गर्भस्थानान्तरे संहृतो-नीतः, निर्वृतस्तु स्वातिनक्षत्रे कार्त्तिकामावास्यायामिति ॥

इति पञ्चमस्थानकस्य प्रथमोद्देशको विवरणतः समाप्तः ॥

उक्तः प्रथमोद्देशकः, साम्प्रतं द्वितीय आरभ्यते, अस्य चायमभिसम्बन्धः—अनन्तरोद्देशके विविधा जीववक्तव्यतोक्ता इहापि सैवोच्यत इत्येवमभिसम्बन्धस्यास्येदमादिसूत्रम्—

नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाओ उद्दिट्ठाओ गणियाओ वितंजितातो पंच महण्णवातो महाणदीओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा, तं०—गंगा जउणा सरऊ एरावती मही, पंचहिं ठाणेहिं कप्पति, तं०—भतंसि वा १ दुब्भिक्खंसि वा २ पव्वहेज्ज व णं कोई ३ दओघंसि वा एज्जमाणंसि महता वा ४ अणारितेसु ५। (सू० ४१२) णो कप्पइ णिग्गंथाण वा णिग्गथीण वा पढमपाउसंसि गामाणुगामं दूइज्जित्तए, पंचहिं ठाणेहिं कप्पइ, तं०—भयंसि वा दुब्भिक्खंसि वा जाव महता वा अणारितेहिं ५। वासावासं पज्जोसवितानं णो कप्पइ णिग्गंथाण वा २ गामाणुगामं दूइज्जित्तए, पंचहिं ठाणेहिं कप्पइ, तं०—णाणट्ठयाए दंसणट्ठयाए चरित्तट्ठयाए आयरियउवज्झाया वा से वीसुंभेज्जा आयरितउवज्झायाण वा बहिता वेआवच्चं करणताते (सू० ४१३)

अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः—पूर्वसूत्रे केवलिनिर्ग्रन्थगतं वस्तूक्तमिह तु छद्मस्थनिर्ग्रन्थगतं तदुच्यत इत्येवमस्याराद्भसूत्राद् अन्येषां च सम्बन्धानां नो कप्पईत्यादीनां व्याख्या सुकरैव, नवरं 'नो कप्पइ'त्ति न कल्पन्ते—न युज्यन्ते, एकवचनस्य बहुवचनार्थत्वात् 'वत्थगन्धमलङ्कार'मित्यादाविवेति, निर्गता ग्रन्थादिति निर्ग्रन्थाः—साधवस्तेषां, तथा निर्ग्रन्थीनां—साध्वीनां, इह

ग्राथम्तुन्यातुम्कानलम्भुमयेपामपीति दशनार्थों नाशब्दो, 'इमा' इति वक्ष्यमाणनामतः प्रत्यक्षासन्ना उद्दिष्टाः–सामान्यतोऽभिहिता यथा महानद्य इति गणिताः यथा पञ्चेति व्यञ्जिता–व्यक्तीकृताः यथा गङ्गेत्यादि विशेषणोपादानाद्वा यथा महार्णवा इति, तत्र महार्णव इव या बहूदकत्वात् महार्णवगामिन्यो वा यास्ता वा महार्णवा महानद्यो–गुरुनिम्नगाः अन्तः–मध्ये मासस्य द्विकृत्वो वा–द्वौ वारौ, त्रिकृत्वो वा–त्रीन्वारान् उत्तरीतुं–लङ्घयितुं बाहुजङ्घादिना सन्तरीतुं–साङ्गत्येन नावादिनेत्यर्थः लङ्घयितुमेव, सकृद्वोत्तरीतुमनेकशः सन्तरीतुमिति, अकल्प्यता चात्मसंयमोपघातसम्भवात् शबलचारित्रभावाद्, यत आह–"मासब्भंतर तिन्नि दगलेवा उ करेमाणे" त्ति [मासान्तस्त्रीणि दकलेपनानि नाभिप्रमाणजलोत्तरणानि कुर्वन्] [उदकलेपो–नाभिप्रमाणजलावतरणमिति > इह सूत्रे कल्पभाष्यगाथा— "इमाउत्ति सुत्तउत्ता १ उद्दिट्ठ नईओ २ गणिय पंचेव ३। गंगादि वंजियाओ ४ बहूदय महन्नवाओ य ५ ॥१॥ पंचण्हं गहणेणं सेसावि उ सूइया महासलिला ॥" इति, [इमा इति सूत्रोक्ता उद्दिष्टा नद्यः गणिताः पंचैव व्यंजिता गंगादिकाः बहूदका महार्णवाः ॥१॥ पंचानां ग्रहणेन शेषा अपि महासलिलाः सूचिताः] प्रत्यपायाश्चेह—"ओहारमगराइया, घोरा तत्थ उ सावया। सरीरोवहिमाईया, णावातेणा व कत्थइ ॥१॥" इति. अपहारः (मत्स्यः) मकरादिका घोरास्तत्र श्वापदाः एवं शरीरोपधिस्तेना वा नौस्तेना वा कुत्रचित् ॥१॥ [अपवादमाह—'पंचे'त्यादि, भये–राजप्रत्यनीकादेः सकाशादुपध्याद्यपहारविषये सति १ दुर्भिक्षे वा भिक्षाभावे सति २, 'पव्वहेज्ज'त्ति प्रव्यथेत–पातयेत् अन्तर्भूतकारितार्थत्वाद्वा प्रवाहयेत् कश्चित् प्रत्यनीकः, तत्रैव गङ्गादौ प्रक्षिपेदित्यर्थः ३ 'दओघंसी'त्ति उदकौघे वा गङ्गादीनामुन्मार्गगामित्वेनागच्छति सति तेन प्लाव्यमानानामित्यर्थः, महता च आटोपेनेति शेषः ४; 'अणारिएसु'त्ति विभक्तिव्यत्ययादनार्यैः–म्लेच्छादिभिर्जीवितचारित्रापहारिभिरभिभूतानामिति शेषः, म्लेच्छेषु वा आगच्छत्स्विति शेषः, एतानि पुष्टालम्बनानीति तत्तरणेऽपि न दोष

इति। उक्तं च "सालंबणो पडंतोवि अप्पयं दुग्गमेऽवि धारेइ। इय सालंबणसेवी धारेइ जई असढभावं॥१॥ आलंबणहीणो पुण निवडइ खलिओ अहे दुरुत्तारे। इय निक्कारणसेवी पडइ भवोहे अगाहम्मि ॥२॥" इति, [पतन्नपि सालम्बन आत्मानं दुर्गमेऽपि धारयति एवं सालंबनसेवी यतिरशठभावं धारयति ॥१॥आलम्बनहीनः पुनः स्खलितोऽधो दुरुत्तरे निपतति एवं निष्कारणसेवी अगाधे भवौघे पतति ॥१॥] तथा 'पढमपाउसंसि'त्ति इह आषाढश्रावणौ प्रावृट्, आषाढस्तु प्रथमप्रावृट् ऋतूनां वा प्रथमेति प्रथमप्रावृट्, अथवा चतुर्मासप्रमाणो वर्षाकालः प्रावृडिति विवक्षितः, अत्र सप्ततिदिनप्रमाणे प्रावृषो द्वितीये भागे तावन्न कल्पत एव गन्तुं प्रथमभागेऽपि पञ्चाशद्दिनप्रमाणे विंशतिदिनप्रमाणे वा न कल्पते जीवव्याकुलभूतत्वाद्, उक्तं च-एत्थ य अणभिग्गहियं वीसइराइं सवीसयं मासं। तेण परमभिग्गहियं गिहिनायं कत्तियं जाव ॥१॥"त्ति [विंशतिं रात्रिंदिवानां सविंशतिरात्रिंदिवं मासं। अत्रानभिगृहीतं ततः परमभिगृहीतं गृहिज्ञातं कार्त्तिकं यावत् ॥१॥] अनभिगृहीतं-अनिश्चितमशिवादिभिर्निर्गमभावाद्, आह च-"असिवादिकारणेहिं अहवा वासं न सुट्ठु आरद्धं। अभिवड्ढियंमि वीसा इयरेसु सवीसई मासो ॥१॥" इति, [अशिवादिभिः कारणैरथवा वर्षणं न सुष्ठु आरब्धं। अभिवर्धिते विंशतिः इतरेषु सविंशतिर्मासः ॥१॥] यत्र संवत्सरे अधिकमासो भवति तत्र आषाढ्या विंशतिर्दिनानि यावदनभिग्रहिक आवासोऽन्यत्र सविंशतिरात्रं मासं-पञ्चाशतं दिनानीति, अत्र चैते दोषाः-"छक्कायविराहणया आवडणं विसमखाणुकंटेसु। वुज्झण अभिहण रुक्खोल्लसावए तेण उवचरए ॥१। अक्खुन्नेसु पहेसु पुढवी उदगं च होइ दुविहं तु। उल्लपयावणअगणी इहरा पणओ हरियकुंथू ॥२॥" इति, [षट्कायविराधनाऽऽपतनं विषमस्थाणुकण्टकेषु वहनमभिहननं वृक्षादावार्द्रताश्वापदाः स्तेनो उपचरकशंका ॥१॥ अक्षुण्णेषु पथिषु पृथिव्युदकं (भौमांतरिक्षभेदं) भवति द्विविधं आर्द्रप्रतापनेऽग्निः इतरथा पनको हरिते कुंथुस्त्रसे ॥१॥] ततस्तत्र प्रावृषि किमत आह-एकस्माद् ग्रामाद्-

वधिभूताद्नग्रामाणामनतिक्रमो ग्रामानुग्रामं तेन ग्रामपरम्परयेत्यर्थः, अथवा एकग्रामाल्लघुपश्चाद्भावाभ्यां ग्रामोऽणुग्रामो, गामो य अणुगामो य गामाणुगामं, तत्र 'दूइज्जित्तए'त्ति द्रोतुं-विहर्तुमित्युत्सर्गः, अपवादमाह—'पंचे'त्यादि, तथैव, नवरमिह प्रव्यथेत-ग्रामाद्यालयेभ्निष्कासयेत् कश्चित् उदकौघे वा आगच्छति ततो नश्येदिति, उक्तं च—"आबाहे दुब्भिक्खे भए दओघंसि वा महंतंसी। परिभवणतालणं वा जया परो वा करेज्जासि ॥१॥" इति, [आबाहे दुर्भिक्षे भये महति दकौघे परिभवनं ताडनं वा यदा परः करिष्यति ॥१॥] तथा वर्षासु-वर्षाकाले वर्षा-वृष्टिर्वर्षावर्षा वर्षासु वा आवासः-अवस्थानं वर्षावासस्तं, स च जघन्यतः आकार्त्तिक्याः दिनसप्ततिप्रमाणो मध्यवृत्त्या चतुर्मासप्रमाणः उत्कृष्टतः षण्मासमानः, तदुक्तम्—"इअ सत्तरी जहन्ना असिइ नउई वीसुत्तरसयं व। जइ वासे मग्गसिरे दस राया तिन्नि उक्कोसा ॥१॥" [मासमित्यर्थः—"काऊण मासकप्पं तत्थेव ठियाण तीत मग्गसिरे। सालंबणाण छम्मासिओ उ जेट्ठुग्गहो होइ ॥१॥" [इति सप्ततिर्जघन्योऽशीतिर्नवतिर्विंशत्युत्तरं शतं च। यदि मार्गशीर्षे वर्षेत् दशरात्राणि त्रीणि यावदुत्कृष्टः ॥१॥ कृत्वा मासकल्पं तत्रैव स्थितानां मार्गशीर्षेऽतीते सालंबनानां षाण्मासिकस्तु ज्येष्ठावग्रहो भवति ॥१॥] 'पज्जोसवियाणं' ति परीति-सामस्त्येनोषितानां पर्युषणाकल्पेन नियमवद्धस्तुमारब्धानामित्यर्थः, पर्युषणाकल्पश्च न्यूनोदरताकरणं विकृतिनवकपरित्यागः, पीठफलकादिसंस्तारकादानमुच्चारादिमात्रकसंग्रहणं लोचकरणं शैक्षाप्रव्राजनं प्राग्गृहीतानां भस्मडगलकादीनां परित्यजनमितरेषां ग्रहणं द्विगुणवर्षोपग्रहोपकरणधरणमभिनवोपकरणाग्रहणं सक्रोशयोजनात् परतो गमनवर्जनमित्यादिकः, उक्तं च—"दव्वट्ठवणाऽऽहारे विगई संथारमत्तए लोए। सच्चित्ते अच्चित्ते वोसिरणं गहणधरणाइ ॥१॥"इति [द्रव्यस्थापनाऽऽहारे विकृतिः संस्तारकमात्रकलोचाः। सचित्तेऽचित्ते व्युत्सर्जनं ग्रहणं धारणं इत्यादि ॥१॥] 'दव्वट्ठवण'त्ति निशीथे द्वारपरामर्श इति ॥ ज्ञानमेवार्थो यस्य स ज्ञानार्थस्तद्भाव-

स्तत्ता तया ज्ञानार्थतया-ज्ञानार्थत्वेन तत्रापूर्वः श्रुतस्कन्धोऽन्यस्याचार्यादेरस्ति स च भक्तं प्रत्याख्यातुकामस्ततो यद्यसौ तत्सकाशान्न गृह्यते ततोऽसौ व्यवच्छिद्यते अतस्तद्ग्रहणार्थं ग्रामानुग्रामं द्रोतुं कल्पते, एवं दर्शनार्थतया-दर्शनप्रभावकशास्त्रार्थित्वेन, चारित्रार्थतया तु तस्य क्षेत्रस्यानेषणास्त्र्यादिदोषदुष्टतया तद्रक्षणार्थं, तथा 'आयरियउवज्झाए'त्ति समाहारद्वन्द्वत्वादाचार्योपाध्यायं वा 'से' तस्य भिक्षोः 'वीसुंभेज्ज'त्ति विष्वक्-शरीरात् पृथग्भवेत् जायेत म्रियेतेत्यर्थः, ततस्तत्र गच्छे अन्यस्याचार्यादेरभावाद् गणान्तराश्रयणार्थं अथवा 'वीसुंभेज्ज'त्ति विश्रम्भेत तस्य साधोराचार्यादिर्विश्रब्धो भवेत् ततोऽत्यन्तरहस्यकार्यकरणायेति, तथा आचार्योपाध्यायानां वा बहिस्ताद् वर्षाक्षेत्रस्य वर्त्तमानानां वैयावृत्त्यकरणतायै प्रेषितस्याचार्यादिना द्रोतुं कल्पत इति, उक्तं च—"असिवे ओमोयरिए, रायदुट्ठे भए व गेलन्ने। नाणाइतिगस्सट्ठा ३ वीसुंभण ४ पेसणेणं च ५ ॥१॥" इति । [अशिवेऽवमौदर्ये राजद्विष्टे भये ग्लानत्वे वा ज्ञानादित्रिकार्थं विष्वग्भवनेन प्रेषणेन च ॥१॥]

**पंच अणुग्घातिता पं० तं०—हत्थाकम्मं करेमाणे मेहुणं पडिसेवेमाणे रातीभोयणं भुंजेमाणे सागारितपिंडं भुंजेमाणे रायपिंडं भुंजेमाणे (सू० ४१४)।**

'अणुघाइय'त्ति न विद्यते उद्घातो-लघूकरणलक्षणो यस्य तपोविशेषस्य तदनुद्घातं यथाश्रुतदानमित्यर्थः तद्येषां प्रतिषेवाविशेषतोऽस्ति तेऽनुद्घातिकाः, 'हस्तकर्म'समयप्रसिद्धं तत्कुर्वाणः, मैथुनम्-अब्रह्म अतिक्रमादिना सेवमानः, तथा भुज्यत इति भोजनं रात्रौ भोजनं रात्रिभोजनं तच्च द्रव्यतोऽशनादि, क्षेत्रतः समयक्षेत्रे कालतो दिवा गृहीतं दिवा भुक्तं दिवा गृहीतं रात्रौ भुक्तं रात्रौ गृहीतं

दिवा भुक्तं रात्रौ गृहीतं रात्रौ भुक्तमित्येवं चतुर्भङ्गरूपं भावतो रागद्वेषाभ्यां तद्भुञ्जानोऽश्नन्नित्यर्थः, अत्र दोषाः—"संतिमे सुहुमा पाणा" इत्यादिश्लोकत्रयं, तथा—"जइवि हु फासुगदव्वं कुंथू पणगा तहावि दुप्पस्सा । पच्चक्खं नाणीविहु राईभत्तं परिहरंति ॥१॥" जइवि य पिवीलिगाइ दीसंति पईवजोइउज्जोए । तहवि खलु अणाइन्नं मूलवयविराहणा जेणं ॥२॥" [यद्यपि द्रव्यं प्रासुकमेव तथापि कुंथुपनका दुर्दर्शाः । प्रत्यक्षज्ञान्यपि रात्रिभक्तं परिहरति ॥१॥ यद्यपि च पिपीलिकादयो दृश्यन्ते प्रदीपज्योतिष उद्योते तथापि अनाचीर्णमेव मूलव्रतविराधना येन ॥१॥] तथा अगारं-गृहं सह तेन वर्त्तत इति सागारः स एव सागारिकः-शय्यातरस्तस्य पिण्डः-आहारोपधिरूपः, अन्यस्तत्परो न भवति, उक्तं च—"तणछारडगलमल्लगसेज्जासंथारपीढलेवाई । सेज्जायरपिंडो सो न होइ सेहो य सोवहिओ ॥१॥" इति, [तृणक्षारडगलमल्लकशय्यासंस्तारकपीठलेपादिः । शय्यातरपिंडो न स भवति सोपधिकः शैक्षश्च ॥१॥] सागारिकपिण्डस्तं भुञ्जानः, तद्भोजने चामी दोषाः—"तित्थकरपडिक्कुट्ठो अन्नायं [अज्ञातोंछो न भवतीत्यर्थः-उग्गमोऽविय न सुज्झे [परिचयात् । अविमुत्तिय ऽलाघवया दुल्लहसेज्जा य वोच्छेदो ॥१॥ पडिबंधनिराकरणं केई अन्ने उ गिही अगहणस्स । तस्साउट्टण [शय्यातरावर्जनमित्यर्थः आणं इत्थऽवरे बेंति भावत्थं ॥१॥"इति, [तीर्थंकरप्रतिकुष्टोऽज्ञातत्वमुद्गमोऽपि च न शुध्येत् । लोभिताऽलाघवता दुर्लभ शय्या न व्युच्छेदो वा ॥१॥ केचित् प्रतिबन्धनिराकरणं अन्ये तु अग्रहणस्य गृद्धिः शय्यातरस्यावर्जनं अपरेऽत्राज्ञां भावार्थं ब्रुवन्ति ॥१॥] तथा राज्ञः पिण्डो राजपिण्डः तं भुञ्जानः, राजा चेह चक्रवर्त्यादिर्यत आह—"जो मुद्धाअभिसित्तो पंचहिं सहिओ य भुंजए रज्जं । तस्स उ पिंडो वज्जो तव्विवरीयंमि भयणा उ ॥१॥" पिंडस्वरूपं च—"असणाईया चउरो वत्थे पाए य कंबले चेव । पाउंछणए य तहा अट्ठविहो रायपिंडो उ ॥२॥" [यो मूर्धाऽभिषिक्तः पञ्चभिः सहितश्च राज्यं भुंक्ते । तस्यैव पिंडो वर्ज्यस्तद्विपरीते भजनैव ॥१॥ अश-

नादिकाश्चत्वारो वस्त्रं पात्रं कंबलश्चैव । पादप्रोञ्छनं च तथाऽष्टविध एव राजपिण्डः ॥१॥] दोषा आज्ञादयः, ईश्वरादिप्रवेशादौ व्याघातः अमंगलधिया प्रेरणा लोभ एषणाव्याघातश्चौरादिशङ्का चेत्यादय इति ॥

पंचहिं ठाणेहिं समणे निग्गंथे रायंतेउरमणुपविसमाणे नाइक्कमति, तं०—नगरं सिता सव्वतो समंता गुत्ते गुत्तदुवारे, बहवे समणमाहणा णो संचाएंति भत्ताते वा पाणाते वा निक्खमित्तते वा पविसित्तते वा तेसिं विन्नवणट्ठताते रातंतेउरमणुपविसेज्जा १ पाडिहारितं वा पीढफलगसेज्जासंथारगं पच्चप्पिणमाणे रायंतेउरमणुपवेसेज्जा २ हतस्स वा गयस्स वा दुट्ठस्स आगच्छमाणस्स भीते रायंतेउरमणुपवेसिज्जा ३ परो व णं सहसा वा बलसा वा बाहाते गहाय अंतेउरमणुपवेसेज्जा ४ बहिता व णं आरामगयं वा उज्जाणगयं वा रायंतेउरजणो सव्वतो समंता संपरिक्खिवित्ता णं निवेसिज्जा । इच्चेतेहिं पंचहिं ठाणेहिं समणे निग्गंथे जाव णातिक्कमइ (सू० ४१५)।

नाइक्कमति आज्ञामाचारं वेति, नगरं स्यात्—भवेत् सर्वतः—सर्वासु दिक्षु समन्ताद्—विदिक्षु, अथवा सर्वतः किमुक्तं भवति ?—समन्तादिति, गुप्तं प्राकारवेष्टितत्वात् गुप्तद्वारं द्वाराणां स्थगितत्वात् श्राम्यन्ति—तपस्यन्तीति श्रमणाः मा वधीरिति प्रवृत्तिर्येषां ते माहनाः—उत्तरगुणमूलगुणवन्तः संयता इत्यर्थः अथवा श्रमणाः—शाक्यादयः माहना—ब्राह्मणा 'नो संचाएन्ति'त्ति न शक्नुवन्ति, भक्ताय पानाय वा निष्क्रमितुं वा—निर्गन्तुं नगरात् तद्बहिर्भिक्षाकुलेषु भिक्षित्वा तथैव प्रवेष्टुं चेति, ततस्तेषां श्रमणादीनां प्रयोजने विज्ञापनाय राज्ञोऽन्तःपुरस्थस्य प्रमाणभूतराज्ञ्या वा राजान्तःपुरमनुप्रविशेद्, इह च शाक्यादीनां प्रयोजने यद्राज्ञो विज्ञापनं तदपवादापवादरूपं,

अर्थपतादिगतानीणां, एतच किञ्चिदान्यन्तिकं सङ्गादिप्रयोजनमवलम्बमानानां भवतीति ममत्तसेयमित्येकं, तथा कृतप्रयोजनैः प्रतिहि-शने-शनिनीगते यतःप्रतिहारप्रयोजनत्वात् प्रातिहारिकं पीठ-पट्टादिकं फलकं-अवष्टम्भफलकं शय्या-सर्व्वाङ्गीणा फलकादिरूपा संस्ता-रको-कम्बलोऽथवा शय्या-शयनं तदर्थः संस्तारकः शय्यासंस्तारको द्वन्द्वैकवद्भावात् पीठफलकशय्यासंस्तारकं 'पच्चप्पिणमाणे' त्ति आर्पणात् प्रत्यर्पयितु तत्प्रविशेत् यस्मात् यदानीतं तत्तत्रैव निक्षेप्तव्यमितिकृत्वेति द्वितीयं, हयादेर्दुष्टादागच्छतो भीत इति तृतीयं, परः-आत्मव्यतिरिक्तः 'सहस'त्ति अकस्मात् 'बलस'त्ति बलेन हठाद् सकारस्त्वागमिको बाहौ गृहीत्वेति चतुर्थं, 'बहिया य'त्ति नगराद्बहिरारामगतं वा उद्यानगतं वा निर्ग्रन्थं, तत्र आरामो विविधपुष्पजात्युपशोभितउद्यानं तु चम्पकवनाद्युपशोभितमिति, 'संपरिक्खिवित्त'त्ति संपरिक्षिप्य परिवार्य सन्निविशेत्-क्रीडाद्यर्थं गत आवासं कुर्यादिति पञ्चममिति, 'इच्चेहीं'त्यादिना निगमनं, इह च पीठादीनामर्पणस्य ग्रहणव्यतिरेकेणासम्भवात् तद्ग्रहणमप्यनेनैव संगृहीतं द्रष्टव्यमिति, भवन्ति चात्र गाथाः—"थंतेउरं च तिविहं जुन्नं नवयं च कन्नगाणं च। एक्केक्कंपि य दुविहं सट्ठाणे चेव परठाणे ॥१॥ एतेसामन्नयरं रन्नो अंतेउरं तु जो पविसे। सो आणाऽणवत्थं मिच्छत्तविराहणं पावे ॥२॥ सद्दाइइंदियत्थोवओगदोसा न एसणं सोहे। सिंगारकहाकहणे एगयरुभए य बहुदोसा ॥३॥ बहियावि [निर्गमस्येत्यर्थः होंति दोसा केरिसिगा कहणगिण्हणाईआ। गव्वो बाउसिअत्तं सिंगाराणं च संभरणं ॥४॥ [स्यन्तः-पुरं च त्रिविधं जीर्णं नारूणं च कन्यकानां च। एकैकमपि च द्विविधं स्वस्थाने परस्थाने चैव ॥१॥ एतेषामन्यतरद्राज्ञोन्तःपुरं य एव प्रविशेत् स आज्ञानवस्थामिथ्यात्वविराधनाः प्राप्नुयात् ॥२॥ शब्दादिभिरिन्द्रियार्थोपयोगदोषैरेषणां न शोधयेत् शृंगारकथाकथने एकतरो-भयदोषाः बहुदोषाश्च ॥३॥ बहिरपि दोषा भवन्ति कीदृशाः कथनग्रहणादिकाः गर्वो बाकुशिकत्वं शृंगाराणां स्मरणं च ॥४॥ ] "निति-

यपद [अपवाद इत्यर्थः > मणाभोगा १ वसहि परिक्खेव २ सेज्जसंथारे ३ । हयमाई दुट्ठाणं आवयमाणाण ४ कज्जेसु ५ ॥५॥" इति । [अनाभोगाद्वसतिपरिक्षेपात् शय्यासंस्तारकार्थाय दुष्टानां हयादीनां आपततां (रक्षार्थं) कार्येषु प्रवेशे द्वितीयं पदं ॥१॥

अनन्तरमन्तःपुरसूत्रत्वात् स्त्रीगतमुक्तमधुनाऽपि तद्गतमेव क्रियाविशेषमाह—

पंचहिं ठाणेहिमित्थी पुरिसेण सद्धिं असंवसमाणीवि गब्भं धरेज्जा, तं०—इत्थी दुव्वियडा दुन्निसण्णा सुक्कपोग्गले अधिट्ठिज्जा, सुक्कपोग्गलसंसिट्ठे व से वत्थे अंतो जोणीते अणुपवेसेज्जा, सइं वा सा सुक्कपोग्गले अणुपवेसेज्जा, परो व से सुक्कपोग्गले अणुपवेसेज्जा, सीओदगवियडेण वा से आयममाणीते सुक्कपोग्गला अणुपवेसेज्जा, इच्चेतेहिं पंचहिं ठाणेहिं जाव धरेज्जा १। पंचहिं ठाणेहिं इत्थी पुरिसेण सद्धिं संवसमाणावि गब्भं नो धरेज्जा, तं०—अप्पत्तजोवणा १ अतिकंतजोवणा २ जातिवंझा ३ गेलन्नपुट्ठा ४ दोमणंसिया ५ इच्चेतेहिं पंचहिं ठाणेहिं जाव नो धरेज्जा २। पंचहिं ठाणेहिमित्थी पुरिसेण सद्धिं संवसमाणीवि नो गब्भं धरेज्जा, तं०—निच्चोउया अणोउया वावन्नसोया वाविद्धसोया अणंगपडिसेवणी, इच्चेतेहिं पंचहिं ठाणेहिमित्थी पुरिसेण सद्धिं संवसमाणीवि गब्भं णो धरेज्जा ३। पंचहिं ठाणेहिं इत्थी० तं०—उउंमि णो णिगामपडिसेविणी तावि भवति, समागता वा से सुक्कपोग्गला पडिविद्धंसंति उदिन्ने वा से पित्तसोणिते पुरा वा देवकम्मणा पुत्तफले वा नो निद्दिट्ठे भवति, इच्चेतेहिं जाव नो धरेज्जा ४। (सू० ४१६)।

'पंचहिं'इत्यादि सूत्रचतुष्टयं कण्ठ्यं, नवरं 'दुव्वियड'त्ति विवृता-अनावृता, सा चोत्तरीयापेक्षयाऽपि स्यादतो दुःशब्देन विशेष्यते दुष्ठु विवृता दुर्विवृता परिधानवर्जितेत्यर्थः अथवा विवृतोरुका-दुर्व्विवृता, दुर्व्विवृता या सती दुर्न्निषण्णा-दुष्ठु विरूपतयोपविष्टा गुह्यप्रदेशेन कथञ्चित्पुरुषनिसृष्टशुक्रपुद्गलवद्भूमिपट्टादिकमासनमाक्रम्य निविष्टा सा दुर्व्विवृतदुर्न्निषण्णेति शुक्रपुद्गलान् कथञ्चित्पुरुषनिसृष्टानागमस्थानधिनिष्ठेन्-योन्याकर्षणेन संगृह्णीयात्, तथा शुक्रपुद्गलसंसृष्टं 'से' तस्याः स्त्रिया वस्त्रमन्तः-मध्ये योनावनुप्रविशेत्, इह च वस्त्रमिव्युपलक्षणं तथाविधमन्यदपि केशिमातुः केशवत्कण्डूयनार्थं रक्तनिरोधनार्थं वा तया प्रयुक्तं सदनुप्रविशेद् अनाभोगेन वा तथाविधं वस्त्रं परिहितं सत् योनिमनुप्रविशेत्, तथा 'स्वयं' मिति पुत्रार्थिनीत्वाच्छीलरक्षिकत्वाच्च 'से'ति सा शुक्रपुद्गलान् योनावनुप्रवेशयेत्, तथा 'परो व'त्ति श्वश्रूप्रभृतिकः पुत्रार्थमेव 'से' तस्या योनाविति गम्यते, तथा 'वियडं'ति समयभाषया जलं तच्चानेकत्वेन उत्पन्नं-शीतोदकलक्षणं यद्विकटं-पल्वलादिगतमित्यर्थः तेन वा 'से' तस्या आचामत्याः पूर्वपतिता-उदकमध्यवर्तिनः शुक्रपुद्गलाः अनुप्रविशेयुरिति, 'इच्चेएहीं'त्यादि निगमनमिति। अप्राप्तयौवना प्राय आवर्षद्वादशकादार्त्तवाभावात् तथाऽतिक्रान्तयौवना वर्षाणां पञ्चपञ्चाशतः पञ्चाशतो वा आर्त्तवाभावादेव, यतोऽवाचि—"मासि मासि रजः स्त्रीणामजस्रं स्रवति त्र्यहम्। वत्सराद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥१॥ पूर्णषोडशवर्षा स्त्री, पूर्णविंशेन संगता। शुद्धे गर्भाशये १ मार्गे २, रक्ते ४ शुक्रे ५ ऽनिले ५ हृदि ६ ॥२॥ वीर्यवन्तं सुतं सूते, ततो न्यूनाब्दयोः पुनः। रोग्यल्पायुरधन्यो वा, गर्भो भवति नैव वा ॥३॥" इति, शुद्धे-निर्दोषे गर्भाशयादिषट्क इत्यर्थः, तथा जातेः-जन्मत आरभ्य वन्ध्या-निर्बीजा जातिवन्ध्या, तथा ग्लान्येन-ग्लानत्वेन स्पृष्टा ग्लान्यस्पृष्टा-रोगार्दिता, तथा दौर्मनस्यं-शोकादयस्ति यस्याः सा दौर्मनस्यिका तद्वा सञ्जातमस्या इति दौर्मनस्यितेति, 'इच्चेएही'त्यादि निगमनं। 'नित्यं' सदा

न्यहमेव ऋतू–रक्तप्रवृत्तिलक्षणो यस्याः सा नित्यर्तुका, तथा न विद्यते ऋतू–रक्तरूपः शास्त्रप्रसिद्धो वा यस्याः सा अनृतुका, तथाहि—"ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रोऽत्र निन्दिताः। एकादशी च युग्मासु, स्यात्पुत्रोऽन्यासु कन्यका ॥१॥ पद्मं सङ्कोचमायाति, दिनेऽतीते यथा तथा। ऋतावतीते योनिः सा, शुक्रं नैव प्रतीच्छति ॥२॥ मासेनोपचितं रक्तं, धमनीभ्यामृतौ पुनः। ईषत्कृष्णं विगन्धं च, वायुर्योनिमुखान्नुदेद् ॥३॥" इति, तथा व्यापन्नं–विनष्टं रोगतः श्रोतो–गर्भाशयच्छिद्रलक्षणं यस्याः सा व्यापन्नश्रोताः, तथा व्यादिग्धं व्याविद्धं वा–वातादिव्याप्तं विद्यमानमप्युपहतशक्तिकं श्रोतः–उक्तरूपं यस्याः सा व्यादिग्धश्रोता व्याविद्धश्रोता वा, तथा मैथुने प्रधानमङ्गं मेहनं भगश्च तत्प्रतिषेधोऽनङ्गं तेनानङ्गेन–अहार्यलिङ्गादिना अनङ्गे वा–मुखादौ प्रतिषेवाऽस्ति यस्याः अनङ्ग वा–काममपरापरपुरुषसम्पर्कतोऽतिशयेन प्रतिषेवत इत्येवंशीलाऽनङ्गप्रतिषेविणी, तथाविधवेश्यावदिति, ऋतौ–ऋतुकाले नो–नैव निकामम्–अत्यर्थं बीजपातं यावद् पुरुषं प्रतिषेवत इत्येवंशीला निकामप्रतिषेविणी 'वाऽपी'ति उत्तरविकल्पापेक्षया समुच्चये समागता वा 'से' तस्यास्ते प्रतिविध्वंसन्ते–योनिदोषादुपहतशक्तयो भवन्ति, मेहनविश्रोतसा वा योनेर्बहिः पतन्तो विध्वंसन्ते इति, उदीर्णं च–उत्कटं तस्याः पित्तप्रधानं शोणितं स्यात् तच्चाबीजमिति, पुरा वा–पूर्वं वा गर्भावसरात् देवकर्म्मणा–देवक्रियया देवतानुभावेन शक्त्युपघातः स्यादिति शेषः, अथवा देवश्च कार्मणं च–तथाविधद्रव्यसंयोगो देवकार्म्मणं तस्मादिति, पुत्रलक्षणं फलं पुत्रो वा फलं यस्य कर्मणस्तत्पुत्रफलं तद्वा नो निर्विष्टं भवति, अलब्धं अनुपात्तं स्यादित्यर्थः, 'थेवं बहुनिव्वेसं' इत्यादौ निर्वेशशब्दस्य लाभार्थस्य दर्शनादथवा पुत्रः फलं यस्य तत्पुत्रफलं–दानं तज्जन्मान्तरेऽनिर्विष्टं–अदत्तं भवति, निर्विष्टस्य दत्तार्थत्वात्, यथा 'नानिविट्ठं लब्भइ'त्ति।

सूत्राधिकारादेव साध्वीवक्तव्यताप्रतिबद्धं सूत्रद्वयमिदमाह—

पंचहिं ठाणेहिं निग्गंथा निग्गंथीओ य एगंतओ ठाणं वा सिज्जं वा निसीहियं वा चेतेमाणे णातिक्कमंति, तं०—अत्थेगइया निग्गंथा निग्गंथीओ य एगं महं अगामितं छिन्नावायं दीहमद्धमडविमणुपविट्ठा तत्थेगयतो ठाणं वा सेज्जं वा निसीहियं वा चेतेमाणे णातिक्कमंति १, अत्थेगइया णिग्गंथा २ गामंसि वा णगरंसि वा जाव रायहाणिंसि वा वासं उवागता एगतिया यत्थ उवस्सयं लभंति एगतिता णो लभंति तत्थेगतितो ठाणं वा जाव नातिक्कमंति २, अत्थेगतिता निग्गंथा य २ नागकुमारावासंसि वा (सुवण्णकुमारावासंसि वा)० वासं उवागता तत्थेगयओ जाव णातिक्कमंति ३, आमोसगा दीसंति ते इच्छंति निग्गंथीओ चीवरपडिताते पडिगाहित्तते तत्थेगयओ ठाणं वा जाव णातिक्कमंति ४, जुवाणा दीसंति ते इच्छंति निग्गंथीओ मेहुणपडिताते पडिगाहित्तते तत्थेगयओ ठाणं वा जाव णातिक्कमंति ५, इच्चेतेहिं पंचहिं ठाणेहिं जाव नातिक्कमंति। पंचहिं ठाणेहिं समणे निग्गंथे अचेलए सचेलियाहिं निग्गंथीहिं सद्धिं संवसमाणे नाइक्कमति, तं०—खित्तचित्ते समणे णिग्गंथे निग्गंथेहिमविज्जमाणेहिं अचेलए सचेलियाहिं निग्गंथीहिं सद्धिं संवसमाणे णातिक्कमति १, एवमेतेणं गमएणं दित्तचित्ते जक्खाइट्ठे उम्मायपत्ते निग्गंथीपव्वावियते समणे णिग्गंथेहिं अविज्जमाणेहिं अचेलए सचेलियाहिं णिग्गंथीहिं सद्धिं संवसमाणे णातिक्कमति (सू० ४१७)।

'पंचहिं' इत्यादि सुगमं, नवरं 'एगयओ'त्ति एकत्र 'ठाणं'ति कायोत्सर्गं उपवेशनं वा 'सेज्जं'ति शयनं 'निसीहियं'ति गमनागमनं 'चेतयन्तः' कुर्वन्तो 'नातिक्रामन्ति' न लङ्घयन्ति, आज्ञामिति गम्यते, 'अत्थि'त्ति सन्ति भवन्ति 'एगयय'त्ति एके

केचन 'एकां' अद्वितीयां 'महतीं' विपुलामग्रामिकामकामिकां वा-अनभिलषणीयां छिन्ना आपाताः सार्थगोकुलादीनां यस्यां सा तथा तां दीर्घोऽध्वा-मार्गो यस्यां सा तथा तां दीर्घाध्वानं, मकारस्त्वागमिकः, दीर्घोऽद्धा वा-कालो निस्तरणे यस्याः सा दीर्घाद्धा तामटवीं-कान्तारमनुप्रविष्टा दुर्भिक्षादिकारणवशात् 'तत्र' अटव्यां 'एगयउ'त्ति एकतः एकत्रेत्यर्थः स्थानादि कुर्वन्तः आगमोक्तसामाचार्या नातिक्रामन्ति १, तथा राजधानी यत्र राजा अभिषिच्यते वासमुपागताः-निवासं प्राप्ता इत्यर्थः, 'एगइया यत्थ'त्ति एकका-एकतरा निर्ग्रन्था निर्ग्रथिका वा चः पुनरर्थः अत्र-ग्रामादौ उपाश्रयं-गृहपतिगृहादिकमिति, तथा 'अत्थे'ति अथ गृहपतिगृहादिकमुपाश्रयमलब्ध्वा 'एगइया' एके केचन नागकुमारावासादौ वासमुपागताः अथवा 'अत्थे'ति इह सम्बध्यते अस्ति सन्ति भवन्ति निवासमुपगता इति, तस्य च नागकुमारावासादेरतिशून्यत्वादथवा बहुजनाश्रयत्वादनायकत्वाच्च निर्ग्रन्थिकारक्षार्थमेकत एव स्थानादि कुर्वाणा नातिक्रामन्तीति, तथा आमुष्णन्तीत्यामोषकाः-चौरा दृश्यन्ते ते च इच्छन्ति निर्ग्रन्थिकाः 'चीवरपडियाए'त्ति चीवरप्रतिज्ञया-वस्त्राणि गृहीष्याम इत्यभिप्रायेण प्रतिगृहीतुं यत्रेति गम्यते तत्र निर्ग्रन्थास्तद्रक्षणार्थमेकतः स्थानादिकमिति ४ तथा मैथुनप्रतिज्ञया-मैथुनार्थमिति ५। इदमपवादसूत्रम्, उत्सर्गश्चापवादसहितो भाष्यगाथाभिरवसेयस्ताश्चेमाः—"भयणपयाण चउण्हं [एकः साधुरेका स्त्रीत्यादिभङ्गकानामित्यर्थः) अन्नतरजुए उ संजए संते। जे भिक्खू विहरेज्जा अहवावि करेज्ज सज्झायं ॥१॥ असणादिं वाऽऽहारे उच्चारादिं च आयरेज्जाहि। निट्ठुरमसाधुजुत्तं अन्नतरकहं च जो कहए ॥२॥ [चतुर्णां भजनापदानामन्यतरयुतः सन् संयतो यो भिक्षुर्विहरेत् अथवा स्वाध्यायमपि कुर्यात् ॥१॥ अशनादि वाऽऽहरेदुच्चारादि वाऽऽचरेत् असाधुयुक्तां निष्ठुरामन्यतरां कथां च कथयेद्यः ॥२॥] [स्त्रीभिः सहेति) "सो आणाअणवत्थं मिच्छत्तविराहणं तहा दुविहं। पावइ जम्हा तेणं एए उ पए विवज्जेज्जा

॥३॥" इति [ न आज्ञाभंगमनवस्थां मिथ्यात्वं विराधनां तथा द्विविधां। प्राप्नोति यस्मात्तत एतानि स्थानानि वर्जयेत् ॥३॥] "बीयपयमणप्पज्झे [ अपवादोऽनात्मवशे इत्यर्थः) गेलन्नुवसग्गरोहगद्धाणे। संभमभयवासासु य खंतियमाईण निक्खमणे ॥४॥" इति, [ अनात्मवशत्वे ग्लानत्वे उपसर्गे रोधकेऽध्वनि। संभ्रमे भये वर्षासु च क्षान्तिक ( वृद्ध )प्रभृतीनां निष्क्रमणे द्वितीयपदं ॥४॥] अवेलः क्षिप्तचित्तत्वादिना, क्षिप्तचित्तः शोकेन, तत्प्रतिजागरकाः साधवो न विद्यन्ते ततो निर्ग्रन्थिकाः पुत्रादिकमिव तं सङ्गोपायन्तीति न ततोऽपमानापमानिकामति १, दृप्तचित्तो दर्पातिरेकात् २, यक्षाविष्टो–देवाधिष्ठितः ३, उन्मादप्राप्तो वातादिक्षोभात् ४, निर्ग्रन्थिकया कारणवशात्पुत्रादिः प्रव्राजितः, स च बालत्वादचेलो महानपि वा तथाविधवृद्धत्वादिनेति। अत्र चोत्सर्गापवादौ भाष्याभिहितावेवम्—'जे भिक्खू य अचेले ठाणनिसीयण तुयट्टणं वावि। चेएज्ज सचेलाणं मज्झंमि य आणमाईणि ॥१॥ इय संदंसणसंभासणेहिं भिन्नकहविरहजोगेहिं॥ [ दोषा भवन्तीति) तथा–सिज्जातरादिपासण वोच्छेय दुद्दिट्ठधम्मत्ति ॥२॥' [ यो भिक्षुः सचेलोऽपि स्थानं निषीदनं त्वग्वर्तनं वा चेतयेत् अचेलानां साध्वीनां मध्ये तस्याज्ञादीनि ॥१॥ इह दर्शनसंभाषणैः भिन्नकथाभिर्विरहयोगैः। शय्यातरादिभिर्दर्शनं व्युच्छेदः दुर्दृष्टधर्म इति ( अवज्ञा ) ॥२॥] तथा–"संवरिएवि हु दोसा किं पुण एगतरणिगिण उभओ वा। दिट्ठमदिट्ठव्वं मे दिट्ठियारं भवे खोभो ॥३॥" [ संवृतेऽपि दोषा एव किं पुनरेकतरस्मिन्नग्ने उभयस्मिन् वा। ममाद्रष्टव्यं दृष्टमिति दृष्टिसचारे भवेत् क्षोभः ॥१॥ ] इत्युत्सर्गः—"बीयपदमणप्पज्झे गेलन्नुवसग्गरोहगद्धाणे। समणाणं असईए समणीपव्वाविए चेव ॥१॥" इति। [ द्वितीयं पदमनात्मवशे ग्लानत्वे उपसर्गे रोधकेऽध्वनि। श्रमणानामसति श्रमणीप्रव्राजिते चैव ॥१॥] धर्मं नातिक्रामतीत्यर्थः तदतिक्रमश्चाश्रवरूप इति तद्द्वाराणि तस्यैव च प्रतिपक्षत्वात् संवरद्वाराणि पुनराश्रवविशेषांश्च दण्डक्रियालक्षणाना-

परिज्ञासूत्रादाह—

पंच आसवदारा पं० तं०—मिच्छत्तं अविरती पमादे कसाया जोगा। पच संवरदारा पं० तं०—सम्मत्तं विरती अपमादो अकसातित्तमजोगित्तं। पंच दंडा पं० तं०—अट्ठादंडे अणट्ठादंडे हिंसादंडे अकम्हा(स्मात्)दंडे दिट्ठीविप्परियासितादंडे (सू० ४१८) आरंभिया पंच किरिताओ प० तं०—आरंभिता १ परिग्गहिता २ मातावत्तिता ३ अपच्चक्खाणकिरिया ४ मिच्छादंसणवत्तिता ५, मिच्छदिट्ठियाण नेरइयाणं पंच किरियाओ पं० तं०—जाव मिच्छादंसणवत्तिया, एवं सव्वेसिं निरन्तरं जाव मिच्छदिट्ठिताणं वेमाणिताणं, नवरं विगलिंदिता मिच्छदिट्ठी ण भन्नंति, सेसं तहेव। पंच किरियातो पं० तं०—कातिता १ अहिगरणिता २ पातोसिया ३ पारितावणिया ४ पाणातिवातकिरिया ५, णेरइयाणं पंच एवं चेव निरन्तरं जाव वेमाणियाणं १। पंच किरिताओ पं० तं०—आरंभिता १ जाव मिच्छादंसणवत्तिता ४, णेरइयाणं पंच किरिता निरंतरं जाव वेमाणियाणं २। पंच किरियातो पं० तं०—दिट्ठिता १ पुट्ठिता २ पाडोचिता ३ सामंतोवणिवाइया ४ साहत्थिता ५, एवं णेरइयाणं जाव वेमाणियाणं २४, ३। पंच किरियातो पं० तं०—णेसत्थिता १ आणवणिता २ वेयारणिया ३ अणाभोगवत्तिता ४ अणवकंखवत्तिता ५, एवं जाव वेमाणिया णं २४, ४। पंच किरियाओ पं० तं०—पेज्जवत्तिता १ दोसवत्तिया २ पओगकिरिया ३ समुदाणकिरिया ४ ईरियावहिया ५, एवं मणुस्साणवि, सेसाणं नत्थि ५। (सू० ४१९)।

'पंचे'त्यादि सुगमं, नवरं आश्रवणं—जीवतडागे कर्म्मजलस्य सङ्कलनमाश्रवः, कर्म्मनिबन्धनमित्यर्थः, तस्य द्वाराणीव द्वाराणि—उपाया आश्रवद्वाराणीति । तथा संवरणं—जीवतडागे कर्म्मजलस्य निरोधनं संवरस्तस्य द्वाराणि—उपायाः संवरद्वाराणि—मिथ्यात्वादीनामाश्रवाणां क्रमेण विपर्ययाः सम्यक्त्वविरत्यप्रमादाकषायित्वायोगित्वलक्षणाः प्रथमाध्ययनवद्व्याख्या इति । दण्डयते आत्माऽन्यो वा प्राणी येन स दण्डः, तत्र त्रसानां स्थावराणां वा आत्मनः परस्य वोपकाराय हिंसाऽर्थदण्डः विपर्ययादनर्थदण्डः हिंसितवान् हिनस्ति हिंसिष्यत्ययमित्यभिसन्धेर्यः सर्प्पवैरिकादिवधः स हिंसादण्ड इति 'अकस्माद्दंड''त्ति मगधदेशे गोपालबालाबलादिप्रसिद्धोऽकस्मादिति शब्दः स इह प्राकृतेऽपि तथैव प्रयुक्त इति तत्रान्यवधार्थं प्रहारे मुक्तेऽन्यस्य वधोऽकस्माद्दण्ड इति यो मित्रस्याप्यमित्रोऽयमितिबुद्ध्या वधः स दृष्टिविपर्यासदण्ड इति। एते हि दण्डास्त्रयोदशानां क्रियास्थानानां मध्येऽधीता इति प्रसङ्गतः शेषाण्यष्टौ क्रियास्थानान्यभिधीयन्ते, तत्र मृषाक्रिया—आत्मज्ञात्याद्यर्थं यदलीकभाषणं १ तथा अदत्तादानक्रिया आत्माद्यर्थमदत्तग्रहणं २ तथा अध्यात्मक्रिया यत्केनापि कथञ्चनाप्यपरिभूतस्य दौर्मनस्यकरणं ३ तथा मानक्रिया यज्जात्यादिमदमत्तस्य परेषां हीलनादिकरणं ४ तथा अमित्रक्रिया यत् मातापितृस्वजनादीनामल्पेऽप्यपराधे तीव्रदण्डस्य दहनाङ्कनताडनादिकस्य करणं ५ तथा मायाक्रिया यच्छठतया मनोवाक्कायप्रवर्तनं ६ तथा लोभक्रिया यल्लोभाभिभूतस्य सावद्यारम्भपरिग्रहेषु महत्सु प्रवर्त्तनं ७ तथेर्यापथिकक्रिया यदुपशान्तमोहादेरेकविधकर्म्मबन्धनमिति ८। अत्र गाथा—''अट्ठा १ णट्ठा २ हिंसा ३ ऽकम्हा ४ दिट्ठी य ५ मोस ६ ऽदिन्ने य ७। अज्झत्थ ८ माण ९ मित्ते १० माया ११ लोभे १२ रियावहिया १३ ॥१॥'' इति, [अर्थोऽनर्थो हिंसाऽकस्माद् दृष्टिर्मृषाऽदत्तं च। अध्यात्मस्था मानः मित्रं माया लोभ ईर्यापथिकी (इति क्रियाः) १३ ॥१॥] नवरं 'विगलिंदिए'' त्यादि एकद्वित्रिचतुरिन्द्रियेषु मिथ्यादृष्टिविशेषणं न वाच्यं, तेषां सदैव सम्यक्त्वा-

भावेन व्यवच्छेद्याभावात्, सासादनस्य चाल्पत्वेनाविवक्षितत्वादिति। कायिकी—कायचेष्टा १ अधिकरणिकी—खड्गादिनिर्वर्त्तनी २ प्राद्वेषिकी—मत्सरजन्या ३ पारितापनिकी—दुःखोत्पादनरूपा ४ प्राणातिपातः प्रतीतः ५) 'दिट्ठिया' अश्वादिचित्रकर्म्मादिदर्शनार्थं गमनरूपा १ 'पुट्ठिया' जीवादीन् रागादिना पृच्छतः स्पृशतो वा २ 'पाडुच्चिया' जीवादीन् प्रतीत्य या ३ 'सामंतोवणिवाइया' अश्वादिरथादिकं लोके श्लाघयति हृष्यतो अश्वादिपतेरिति ४ 'साहत्थिया' स्वहस्तगृहीतजीवादिना जीवं मारयतः ५। 'नेसत्थिया' यन्त्रादिना जीवाजीवान् निसृजतः १ 'आणवणिया' जीवाजीवानानाययतः २ 'वियारणिया' तानेव विदारयतः ३ 'अणाभोगवत्तिया' अनाभोगेन पात्राद्याददतो निक्षिपतो वा ४ 'अणवकंखवत्तिया' इहपरलोकापायानपेक्षस्येति ५। 'पेज्जवत्तिया' रागप्रत्यया १ 'दोसवत्तिया' द्वेषप्रत्यया २ 'प्रयोगक्रिया' कायादिव्यापाराः ३ 'समुदानक्रिया' कर्म्मोपादानं ४ 'ईरियावहिया' योगप्रत्ययो बन्धः ५। इदं च प्रेमादिक्रियापञ्चकं सामान्यपदे, चतुर्विंशतिदण्डके तु मनुष्यपद एव सम्भवति, ईर्यापथक्रियाया उपशान्तमोहादित्रयस्यैव भावादित्याह—'एव' मित्यादि, इहैकेन्द्रियादीनामविशेषेण क्रियोक्ता, सा च पूर्वभवापेक्षया सर्वापि सम्भवतीति भावनीयं, द्विद्विस्थानके द्वित्वेन क्रियाप्रकरणमुक्तमिह तु पञ्चकत्वेन नारकादिचतुर्विंशतिदण्डकाश्रयेण चेति विशेषः, क्रियाणां च विस्तरव्याख्यानं द्विस्थानकप्रथमोद्देशकाद् वाच्यमिति।

अनन्तरं कर्म्मणो बन्धनिबन्धनभूताः क्रिया उक्ताः, अधुना तस्यैव निर्जरोपायभूतां परिज्ञामाह—

पंचविहा परिन्ना पं० तं०—उवहिपरिन्ना उवस्सयपरिन्ना कसायपरिन्ना जोगपरिन्ना भत्तपाणपरिन्ना (सू०

५२०) पंचविहे ववहारे पं० तं०—आगमे सुते आणा धारणा जीते, जहा से तत्थ आगमे सिता आगमेणं ववहारं पट्ठवेज्जा णो से तत्थ आगमे सिया जहा से तत्थ सुते सिता सुतेणं ववहारं पट्ठवेज्जा णो से तत्थ सुते सिता एवं जाव जहा से तत्थ जीए सिया जीतेणं ववहारं पट्ठवेज्जा, इच्चेतेहिं पंचहिं ववहारं पट्ठवेज्जा आगमेणं जाव जीतेणं, जधा २ से तत्थ आगमे जाव जीते तहा २ ववहारं पट्ठवेज्जा, से किमाहु भंते? आगमबलिया समणा निग्गंथा?, इच्चेतं पंचविधं ववहारं जता जहिं जहिं तया तता तहिं तहिं अणिस्सितोवस्सितं सम्मं ववहरमाणे समणे णिग्गंथे आणाते आराधते भवति (सू० ४२१)।

'पंचविहे'त्यादि, सुगमं, नवरं परिज्ञानं परिज्ञा–वस्तुस्वरूपस्य ज्ञानं तत्पूर्वकं प्रत्याख्यानं च, इयं च द्रव्यतो भावतश्च, तत्र द्रव्यतोऽनुपयुक्तस्य भावतस्तूपयुक्तस्येति, आह च–"भावपरिन्ना जाणण पच्चक्खाणं च भावेणं" इति, [ज्ञानं भावेन प्रत्याख्यानं च भावपरिज्ञा॥] तत्रोपधी–रजोहरणादिस्तस्यातिरिक्तस्याशुद्धस्य सर्वस्य वा परिज्ञा उपधिपरिज्ञा, एवं शेषपदान्यपि, नवरमुपाश्रीयते–सेव्यते संयमाभावात्तदर्थमुपाश्रयः॥ परिज्ञा च व्यवहारवतां भवतीति व्यवहारं प्ररूपयन्नाह–'पंचे'त्यादि, व्यवहरणं व्यवहारः, व्यवहारो–मुमुक्षुप्रवृत्तिनिवृत्तिरूपः, इह तु तन्निबन्धनत्वात् ज्ञानविशेषोऽपि व्यवहारः, तत्र आगम्यन्ते–परिच्छिद्यन्ते अर्था अनेनेत्यागमः–केवलमनःपर्यायावधिपूर्वचतुर्दशकदशकनवकरूपः १ तथा शेषं श्रुतं–आचारप्रकल्पादिश्रुतं, नवादिपूर्वाणां श्रुतत्वेऽप्यतीन्द्रियार्थज्ञानहेतुत्वेन सातिशयत्वादागमव्यपदेशः केवलवदिति २ यदगीतार्थस्य पुरतो गूढार्थपदैर्देशान्तरस्थगीतार्थनिवेदनायातिचारालोचनमितरस्यापि तथैव शुद्धिदानं साऽऽज्ञा ३ गीतार्थसंविग्नेन द्रव्याद्यपेक्षया यत्रापराधे यथा या विशुद्धिः कृता तामवधार्य यदन्यस्तत्रैव तथैव तामेव प्रयुङ्क्ते सा धारणा

वैयावृत्त्यकरादेर्वा गच्छोपग्रहकारिणो अशेषानुचितस्योचितप्रायश्चित्तपदानां प्रदर्शितानां धरणं धारणेति ४ तथा द्रव्यक्षेत्रकालभावपुरुषप्रतिषेवानुवृत्त्या संहननधृत्यादिपरिहाणिमपेक्ष्य यत्प्रायश्चित्तदानं यो वा यत्र गच्छे सूत्रातिरिक्तः कारणतः प्रायश्चित्तव्यवहारः प्रवर्त्तितो बहुभिरन्यैश्चानुवर्त्तितस्तज्जीतमिति, अत्र गाथाः—"आगमसुयववहारो सुणह जहा धीरपुरिसपन्नत्तो । पच्चक्खो य परोक्खो सोऽविअ दुविहो मुणेयव्वो ॥१॥ पच्चक्खोवि य दुविहो इंदियजो चेव नो य इंदियओ । इंदियपच्चक्खोविय पंचसु विसएसु नेयव्वो ॥२॥ नोइंदियपच्चक्खो ववहारो सो समासओ तिविहो । ओहिमणपज्जवे या केवलनाणे य पच्चक्खो ॥३॥ पच्चक्खागमसरिसो होइ परोक्खोवि आगमो जस्स । चंदमुहीव उ सोवि हु आगमववहारवं होइ ॥४॥ पारोक्खं ववहारं आगमओ सुयहरा ववहरंति । चोद्दसदसपुव्वधरा नवपुव्विग गंधहत्थी य ॥५॥' [शृणुत यथा धीरपुरुषप्रज्ञप्तं आगमश्रुतव्यवहारं सोऽपि च द्विविधः प्रत्यक्षः परोक्षश्च ज्ञातव्यः ॥१॥ प्रत्यक्षोऽपि च द्विविधः इंद्रियजश्चैव नोइंद्रियजश्चैव इंद्रियप्रत्यक्षोऽपि च पंचसु विषयेषु ज्ञातव्यः ॥२॥ स नोइंद्रियप्रत्यक्षो व्यवहारः संक्षेपतस्त्रिविधः अवधिमनःपर्यवौ च केवलज्ञानं च प्रत्यक्षः ॥३॥ प्रत्यक्षागमसदृशो भवति परोक्षेऽप्यागमो यस्य चंद्रमुखीव सोऽपि आगमव्यवहारवानेव भवति ॥४॥ श्रुतधरा आगमतः परोक्षं व्यवहारं व्यवहरन्ति चतुर्दशदशपूर्वधरा नवपूर्वी गंधहस्ती च ॥५॥] (एते गन्धहस्तिसमाः) "जं जहमोल्लं रयणं तं जाणइ रयणवाणिओ निउणं । इय जाणइ पच्चक्खी जो सुज्झइ जेण दिन्नेणं ॥६॥ कप्पस्स य निज्जुत्तिं ववहारस्सेव परमनिउणस्स । जो अत्थओ वियाणइ सो ववहारी अणुन्नाओ ॥७॥ तं चेवऽणुसज्जंते [अनुसरन्) ववहारविहिं पउंजइ जहुत्तं । एसो सुयववहारो पन्नत्तो वीअरागेहिं ॥८॥ अपरक्कमो तवस्सी गंतुं जो सोहिकारगसमीवे । न चएई आगंतुं सो सोहिकरोऽवि देसाओ ॥९॥ अह पट्ठवेइ सीसं देसंतरगमणनट्ठचेट्ठाओ । इच्छामऽज्जो ! काउं सोहिं तुब्भं सगासंमि ॥१०॥ सो ववहारविहिन्नू अणुसज्जित्ता सुओवएसेणं ।

सोहिकरा देइ आणं तस्स इमं देह पच्छित्तं ॥११॥ [गूढपदैरुपदिशतीति ) ३। जेणऽन्नयाइ दिट्ठं सोहीकरणं परस्स कीरंतं। तारिसयं चेव पुणो उप्पन्नं कारणं तस्स ॥१२॥ सो तंमि चेव दव्वे खेत्ते काले य कारणे पुरिसे। तारिसयं चेव पुणो करिंतु आराहओ होइ ॥१३॥ वेयावच्चकरो वा सीसो वा देसहिंडओ वावि। देसं अवधारेन्तो चउत्थओ होइ ववहारो ॥१४॥ इति ४, बहुसो बहुस्सुएहिं जो वत्तो नो निवारिओ होइ। वत्तणुवत्तपमाणं (वत्तो) जीएण कयं हवइ एयं ॥१५॥ [यथा यावन्मूल्यं यद्रत्नं तन्निपुणो रत्नवणिग्जानाति एवं प्रत्यक्षज्ञानी यो येन दत्तेन शुद्ध्यति तज्जानाति ॥६॥ कल्पस्य निर्युक्तिं व्यवहारस्यैव च परमनिपुणस्य योऽर्थतो विजानाति स व्यवहारी अनुज्ञातः ॥७॥ तमेवानुसरन् यथोक्तं व्यवहारविधिं प्रयुंक्ते एष श्रुतव्यवहारो वीतरागैः प्रज्ञप्तः ॥८॥ अपराक्रमस्तपस्वी गंतुं यः शोधिकारकसमीपे न शक्नोति आगंतु यः शोधिकरोऽपि देशात् ॥९॥ अथ प्रस्थापयति शिष्यं देशान्तरगमननष्टचेष्टाः इच्छाम आर्य! तव सकाशे शोधिं कर्तुं ॥१०॥ स व्यवहारविधिज्ञः श्रुतोपदेशमनुसृत्य शिष्यस्याज्ञां ददाति (गूढपदैः) तस्यैतत् प्रायश्चित्तं दद्याः ॥११॥ येन परस्य क्रियमाणं शोधिकरणमन्यदा दृष्टं पुनरपि तस्य कारणमुत्पन्नं तादृशं चैव ॥१२॥ स तस्मिंश्चैव द्रव्ये क्षेत्रे काले कारणे पुरुषे न तादृशं चैव पुनः कारयन्नाराधको भवति ॥१३॥ वैयावृत्त्यकरो वा देशहिंडको वापि शिष्यः देशमवधारयन् चतुर्थको भवति व्यवहारः ॥१४॥ बहुश्रुतैर्बहुशो वृत्तो न निवारितश्च भवति वृत्तानुवृत्तप्रवृत्तः एतज्जीतेन कृतं भवति ॥१५॥] तथा—"जं जस्स उ पच्छित्तं आयरियपरंपराए अविरुद्धं। जोगा य बहुविहीया एसो खलु जीयकप्पो उ ॥१६॥" इति [यद् यस्याचार्यपरम्परयाऽविरुद्धं प्रायश्चित्तं योगाश्च बहुविधिकाः एष खलु जीतकल्प एव ॥१६॥] जीतं-आचरितं इदं चास्य लक्षणं—"असढेण समाइन्नं जं कत्थइ केणई असावज्जं। न निवारियमन्नेहिं बहुमणुमयमेयमायरियं ॥१७॥" इति, [अशठेन समाचीर्णं यत्कुत्रचित्केनचिदसावद्यं। अन्यैर्न निवा-

रितं अनुमतं बहुगुणमेतदाचरितं ॥१॥] आगमादीनां व्यापारणे उत्सर्गापवादावाह—'यथे'ति यत्प्रकारः केवलादीनामन्यतमः 'से' तस्य व्यवहर्तुः स च उक्तलक्षणः 'तत्र' तेषु पञ्चसु व्यवहारेषु मध्ये तस्मिन् वा प्रायश्चित्तदानादिव्यवहारकाले व्यवहर्त्तव्ये वा वस्तुनि विषये आगमः—केवलादिः स्याद्—भवेत् तादृशेनेति शेषः आगमेन 'व्यवहारं' प्रायश्चित्तदानादिकं 'प्रस्थापयेत्' प्रवर्त्तयेत्, न शेषैः, आगमेऽपि षड्विधे केवलेनावन्ध्यबोधत्वात् तस्य तदभावे च मनःपर्यायेणैवं प्रधानतराभावे इतरेणेति, अथ 'नो' नैव 'से' तस्य स वा 'तत्र' व्यवहर्त्तव्यादावागमः स्यात् 'यथा' यत्प्रकारं तत्र श्रुतं स्यात् तादृशेन श्रुतेन व्यवहारं प्रस्थापयेदिति, 'इच्चेएहिं' इत्यादि निगमनं सामान्येनेति, यथा यथाऽसौ तत्रागमादि स्यात्तथा तथा व्यवहारं प्रस्थापयेदिति तु विशेषनिगमनं इति । एतैर्व्यवहर्तुः प्रश्नद्वारेण फलमाह—'से किमे'त्यादि, अथ किं हे भदन्त !—भट्टारका आहुः—प्रतिपादयन्ति, के ?—आगमबलिका—उक्तज्ञानविशेषबलवन्तः श्रमणा निर्ग्रन्थाः केवलिप्रभृतयः 'इच्चेयं'ति इत्येतद्वक्ष्यमाणं, अथवा किं तदित्याह — 'इत्येवं' इति उक्तरूपं एतं—प्रत्यक्षं कं ?—पञ्चविधं व्यवहारं—प्रायश्चित्तदानादिरूपं 'संमं ववहरमाणे'त्ति सम्बध्यते व्यवहरन्—प्रवर्त्तयन्नित्यर्थः कथं ?—'संमं'ति सम्यक् तदेव कथमित्याह—'यदा यदा' यस्मिन् यस्मिन्नवसरे 'यत्र यत्र' प्रयोजने क्षेत्रे वा यो यः उचितस्तमिति शेषः तदा तदा काले तस्मिंस्तस्मिन् प्रयोजनादौ, कथंभूतमित्याह—'अनिश्रितैः' सर्वाशंसारहितैरुपाश्रितः—अङ्गीकृतोऽनिश्रितोपाश्रितस्तं अथवा निश्रितश्च—शिष्यत्वादिप्रतिपन्नः उपाश्रितश्च—स एव वयावृत्त्यकरत्वादिना प्रत्यासन्नतरस्तौ अथवा निश्रितं च रागः उपाश्रितं च द्वेषस्ते अथवा निश्रितं च—आहारादिलिप्सा उपाश्रितं च—शिष्यप्रतीच्छककुलाद्यपेक्षया ते न स्तो यत्र तत्तथेति क्रियाविशेषणं, सर्वथा पक्षपातवर्जितत्वेन यथावदित्यर्थः, इह पूज्यव्याख्या—"रागो उ होइ निस्सा उवस्सिओ दोससंजुत्तो ॥१॥ अहव ण आहाराई दाही मज्झं तु एस

निस्सा उ। सीसो पडिच्छओ वा होइ उवस्सा कुलाईया॥१॥" इति, [रागस्तु भवति निश्रा द्वेषसंयुक्त उपाश्रितः। अथवा आहारादि ददाति एष निश्रा तु १ शिष्यः प्रतीच्छको वा भविष्यत्युपश्रा कुलादिका ]॥ आज्ञाया–जिनोपदेशस्याराधको भवतीति हन्त आकुर्वंति गुरावनं गम्यमिति।

श्रमणप्रस्तावात् तद्व्यतिकरमेव सूत्रद्वयेनाह—

संजतमणुस्साणं सुत्ताणं पंच जागरा पं० तं०—सद्दा जाव फासा, संजतमणुस्साणं जागराणं पंच सुत्ता पं० तं०—सद्दा जाव फासा। असंजयमणुस्साणं सुत्ताणं वा जागराणं वा पंच जागरा पं० तं०—सद्दा जाव फासा (सू० ४२२) पंचहिं ठाणेहिं जीवा रतं आदिज्जंति, तं०—पाणातिवातेणं जाव परिग्गहेणं। पंचहिं ठाणेहिं जीवा रतं वमंति, तं०—पाणातिवातवेरमणेणं जाव परिग्गहवेरमणेणं (सू० ४२३) पंचमासियं णं भिक्खुपडिमं पडिवन्नस्स अणगारस्स कप्पंति पंच दत्तीओ भोयणस्स पडिगाहेत्तते पंच पाणगस्स (सू० ४२४) पंचविधे उवघाते पं० तं०—उग्गमोवघाते उप्पायणोवघाते एसणोवघाते परिकम्मोवघाते परिहरणोवघाते। पंचविहा विसोही पं० तं०—उग्गमविसोही उप्पायणविसोधी एसणाविसोही परिकम्मविसोही परिहरणविसोधी (सू० ४२५)।

स्पष्टं, नवरं 'संजये'त्यादि 'संयतमनुष्याणां' साधूनां 'सुप्तानां' निद्रावतां जाग्रतीति जागराः–असुप्ता जागरा इव जागराः, इयमत्र भावना–शब्दादयो हि सुप्तानां संयतानां जाग्रद्वद्विदप्रतिहतशक्तयो भवन्ति, कर्मबन्धाभावकारणस्याप्रमादस्य तदानीं तेषाम-

भावात्, कर्म्मबन्धकारणं भवन्तीत्यर्थः। द्वितीयसूत्रभावना तु जागराणां शब्दादयः सुप्ता इव सुप्ताः भस्मच्छन्नाग्निवत् प्रतिहतशक्तयो भवन्ति, कर्म्मबन्धकारणस्य प्रमादस्य तदानीं तेषामभावात्, कर्म्मबन्धकारणं न भवन्तीत्यर्थः। संयतविपरीता ह्यसंयता इति तानधिकृत्याह—'असंजए'त्यादि व्यक्तं, नवरमसंयतानां प्रमादितया अवस्थाद्वयेऽपि कर्म्मबन्धकारणतया अप्रतिहतशक्तित्वाच्छब्दादयो जागरा इव जागरा भवन्तीति भावना। संयतासंयताधिकारात् तद्व्यतिकराभिधायि सूत्रद्वयं सुगमं, नवरं 'जीव'त्ति असंयतजीवाः 'रयं'ति जीवस्वरूपोपरञ्जनाद्रज इव रजः-कर्म्म 'आईयंति' त्ति आददति गृह्णन्ति बध्नन्तीत्यर्थः, 'जीव' त्ति संयतजीवाः 'वमंति'त्ति त्यजन्ति क्षपयन्तीत्यर्थः। संयताधिकारादेवापरं सूत्रद्वयं 'पंचमासिए'त्यादि व्यक्तं, नवरं उपघातः-अशुद्धता, उद्गमोपघातः उद्गमदोषैराधाकर्मादिभिः षोडशप्रकारैर्भक्तपानोपकरणालयानामशुद्धता, एवं सर्वत्र, नवरं उत्पादनया-उत्पादनादोषैः षोडशभिः धात्र्यादिभिः एषणया-तद्दोषैर्दशभिः शङ्कितादिभिरिति, परिकर्म्म-वस्त्रपात्रादेः छेदनसीवनादि तेन तस्योपघातः-अकल्प्यता, तत्र वस्त्रस्य परिकर्म्मोपघातो यथा—"तिण्हुवरि फालियाणं वत्थं जो फालियं तु संसीवे। पंचण्हं एगतरं [ ऊर्णिकाद्यन्यतरत्) सो पावइ आणमाईणि ॥१॥ [ यस्तिसृणां थिग्गलिकानां उपरि थिग्गलिकां वस्त्रे संसीव्येत् पंचविधानामेकतरस्मिन् स प्राप्नोत्याज्ञादीनि ॥१॥ ] तथा पात्रस्य "अवलक्खणेगबंधे दुगतिगअइरेगबंधणं वावि। जो पायं परियट्टइ [ परिभुङ्क्ते) परं दिवड्ढाओ मासाओ ॥१॥" [ अपलक्षणमेकबंधं द्वित्रिविशेषबन्धनं वापि। य एतत् पात्रं परिभुंक्ते सार्धात् मासात्परतः ॥१॥ ] स आज्ञादीनाप्नोतीति, तथा

१ स्वाभाविकाः शब्दादयः सुप्तदशायां स्वतन्त्रतया प्रवर्त्तन्ते जाग्रतां तु यतनयेति शब्दादीनां सुप्ते जाग्रदितरते अथवा स्वप्नजाग्रत्ते अवबोधानवबोधौ.

गतेः "धूमिय धूमिय वासिय उज्जोइय बलिकडा अवत्ता य। सित्ता संमट्ठाविय विसोहिकोडिं गया वसही ॥१॥" इति [ दूमिता धवलिता वासिता उद्योतिता बलिकृताऽव्यक्ता च सिक्ता संमृष्टापि च वसतिर्विशोधिकोटिं गता ॥१॥ ] [ दूमिता धवलिता बलिकृता कूरादिना अव्यक्ता छगणादिना लिप्ता संमृष्टा सम्मार्जितेत्यर्थः–तथा परिहरणा–आसेवा तयोर्वध्यादेरकल्प्यता, तत्रोपधेर्यथा एकाकिना हिंडकमाथुना यदासेवितमुपकरणं तदुपहतं भवतीति समयव्यवस्था, "जग्गण अप्पडिबज्झण जइवि चिरेणं न उवहंमे" [ जागरणमप्रतिबन्धः ( मस्तदा ) यद्यपि चिरेणागच्छति गच्छे न तथाप्युपहन्यात् ॥ ] इति वचनात्, अस्य चायमर्थः–एकाकी गच्छभ्रष्टो यदि जागर्ति दुग्धादिषु च न प्रतिबध्यते तदा यद्यप्यसौ गच्छे चिरेणागच्छति तथाप्युपधिर्नोपहन्यते अन्यथा तूपहन्यत इति, वसतेरपि मासचतुर्मासयोरुपरि कालातिक्रान्तेति तथा मासद्वयं चतुर्मासद्वयं चावर्जयित्वा पुनस्तत्रैव वसतामुपस्थानेति च तद्दोषाभिधानात्, उक्तं च—"उउवासा समईता कालातीता उ सा भवे सेज्जा। सा चेव उवट्ठाणा दुगुणा दुगुणं अवज्जित्ता ॥१॥" इति [ ऋतुवर्षयोर्मासचतुर्मास्योरगतः कालातीता भवेच्छय्या। सा चैवोपस्थाना द्विगुणं २ अवर्जयित्वा ॥१॥ ] तथा भक्तस्यापि परिष्ठापनिकाकारं प्रत्यकल्प्यता, तदुक्तम्—"विहिगहियं विहिभुत्तं अइरेगं भत्तपाण भोत्तव्वं। विहिगहिए विहिभुत्ते एत्थ य चउरो भवे भंगा ॥१॥ अहवाविय विहिगहियं विहिभुत्तं तं गुरुहऽणुन्नायं। सेसा नाणुन्नाया गहणे दिन्ने च निज्जुहणं ॥२॥" [ विधिगृहीतं विधिभुक्तमतिरेकं भक्तपानं भोक्तव्यं विधिगृहीते विधिभुक्ते अत्र च भवेयुः चत्वारो भंगाः ॥१॥ अथवा विधिगृहीतं विधिभुक्तं तद्गुरुभिरनुज्ञातं शेषा नानुज्ञाता गृहीते दत्ते वा निर्यूहणा (त्यागः) ॥२॥] उद्गमादिभिरेव भक्तानां कल्प्यताः–विशुद्धय इति।

उपपातविशुद्धिभृतयश्च जीवा निर्द्धर्मधार्मिकत्वाभ्यां शोधेरलाभलाभस्थानेषु प्रवर्त्तन्त इति तत्प्रतिपादनाय सूत्रद्वयम्—

पंचहिं ठाणेहिं जीवा दुल्लभबोधियत्ताए कम्मं पकरेंति, तं०—अरहंताणं अवन्नं वदमाणे १ अरहंतपन्नत्तस्स धम्मस्स अवन्नं वदमाणे २ आयरियउवज्झायाण अवन्नं वदमाणे ३ चाउवन्नस्स संघस्स अवन्नं वयमाणे ४ विवक्कतवबंभचेराणं देवाणं अवन्नं वदमाणे ५। पंचहिं ठाणेहिं जीवा सुलभबोधियत्ताए कम्मं पगरेंति, तं०—अरहंताणं वन्नं वदमाणे जाव विवक्कतवबंभचेराणं देवाणं वन्नं वदमाणे (सू० ४२६)।

'पंचही'त्यादि सुगमं, नवरं दुर्लभा बोधिः—जिनधर्म्मो यस्य स तथा तद्भावस्तत्ता तया दुर्लभबोधिकतया तस्य वा कर्म्म—मोहनीयादि प्रकुर्वन्ति—बध्नन्ति, अर्हतामवर्णं—अश्लाघां वदन्, यथा—"नत्थी अरहंतत्ती जाणं वा कीस भुंजए भोए?। पाहुडियं तुवजीवइ [ समवसरणादिरूपां ) एमाइ जिणाण उ अवन्नो ॥१॥" [ नास्त्यर्हन् जानानो वा कथं भोगान् भुनक्ति? प्राभृतिकां वोपजीवति इत्यादि तु जिनानामवर्णः ॥१॥] न च ते नाभूवन् तत्प्रणीतप्रवचनोपलब्धेः, नापि भोगानुभवनादिदोषः, अवश्यवेद्यसातस्य तीर्थकरनामादिकर्म्मणश्च निर्जरणोपायत्वात् तस्य, तथा वीतरागत्वेन समवसरणादिषु प्रतिबन्धाभावादिति, तथा अर्हत्प्रज्ञप्तस्य धर्मस्य—श्रुतचारित्ररूपस्य प्राकृतभाषानिबद्धमेतत् तथा किं चारित्रेण दानमेव श्रेय इत्यादिकमवर्णं वदन्, उत्तरं चात्र प्राकृतभाषात्वं श्रुतस्य न दुष्टं बालादीनां सुखाध्येयत्वेनोपकारित्वात्, तथा चारित्रमेव श्रेयो, निर्वाणस्यानन्तरहेतुत्वादिति, आचार्योपाध्यायानामवर्णं वदन् यथा बालोऽयमित्यादि, न च बालत्वादिर्दोषो बुद्ध्यादिभिर्वृद्धत्वादिति, तथा चत्वारो वर्णाः—प्रकारा श्रमणादयो यस्मिन् स तथा स एव स्वार्थिकाण्विधानाच्चातुर्वर्णस्तस्य सङ्घस्यावर्णं वदन्, यथा—कोऽयं सङ्घो? यः समवायबलेन पशुसङ्घ इवामार्गमपि मार्गीकरोतीति, न चैतत्साधु, ज्ञानादिगुणसमुदायात्मकत्वात् तस्य, तेन च मार्गस्यैव मार्गीकरणादिति, तथा विपक्कं—सुपरिनिष्ठितं प्रकर्षपर्यन्तमुपगत-

५ स्थानाध्ययने उद्देशः २ अर्हदवर्णादिना दुर्लभसुलभबोधिता सू० ४२६

मित्यर्थः, तपश्च ब्रह्मचर्यं च भवान्तरे येषां विपक्वं वा-उदयागतं तपोब्रह्मचर्यं तद्धेतुकं देवायुष्कादि कर्म्म येषां ते तथा तेषामवर्णं वदन्, न सन्त्येव देवाः, कदाचनाप्यनुपलभ्यमानत्वात्, किं वा तैर्विटैरिव कामासक्तमनोभिरविरतैस्तथा निर्निमेषैरचेष्टैश्च म्रियमाणैरिव प्रवचनकार्यानुपयोगिभिश्चेत्यादिकं ?, इहोत्तरं-सन्ति देवाः, तत्कृतानुग्रहोपघातादिदर्शनात्, कामासक्तता च मोहसातकर्मोदयादित्यादि, अभिहितं च—"एत्थ पसिद्धी मोहणीयसायवेयणियकम्मउदयाओ। कामपसत्ता विरई कम्मोदयओ चिय न तेसिं ॥१॥ अणिमिस देवसहावा निच्चेट्ठाऽणुत्तरा उ कयकिच्चा। कालणुभावा तित्थुन्नइंपि अन्नत्थ कुव्वंति ॥२॥" [ अत्र समाधानं-मोहनीयसातवेदनीयकर्मणोरुदयात् कामसक्ता इति तेषां कर्मोदयतो विरतिरपि न ॥१॥ देवस्वभावादनिमेषाः निश्चेष्टा अनुत्तरास्तु कृतकृत्याः। कालानुभावात्तीर्थोन्नतिमप्यन्यत्र कुर्वन्ति ॥२॥ ] तथा अर्हतां वर्णवादो यथा—"जियरागदोसमोहा सव्वन्नू तियसनाहकयपूया। अच्चंतसच्चवयणा सिवगइगमणा जयंति जिणा ॥१॥" इति [ जितरागद्वेषमोहाः सर्वज्ञाः त्रिदशनाथकृतपूजाः। अत्यंतसत्यवचनाः शिवगतिगामिनो जयंति जिनाः ॥१॥ ] अर्हत्प्रणीतधर्म्मवर्णो यथा—"वत्थुपयासणसूरो अइसयरयणाण सायरो जयइ। सव्वजयजीववंधुर-वंधू दुविहोऽवि जिणधम्मो ॥१॥" [ वस्तुप्रकाशनसूर्यः अतिशयरत्नानां सागरो जयति। सर्वजगज्जीवस्नेहलबंधुर्द्विविधोऽपि जिनधर्म्मः ॥१॥] आचार्यवर्णवादो यथा—"तेसिं नमो तेसिं नमो भावेण पुणोवि तेसि चेव नमो। अणुवकयपरहियरया जे नाणं देंति भव्वाणं ॥१॥" [ तेभ्यो नमस्तेभ्यो नमो भावेन पुनरपि तेभ्य एव नमः अनुपकृतपरहितरता ये ज्ञानं ददति भव्येभ्यः ॥१॥ ]

१ ज्ञानादिकमोक्षकारणाया समुपादानात्। २ पूर्वपुरुषाणां तथाविधकारणाभावात् तथाविधाचरणाभावात् अमार्गत्वं तथा क्वापि व्युत्पत्तौ विशेषो न।

चतुर्वर्णश्रमणसङ्घवर्णो यथा—"एयंमि पूइयंमि नत्थि तयं जं न पूइयं होइ। भुवणेवि पूअणिज्जो न गुणी संघाओ जं अन्नो ॥१॥" [एतस्मिन् पूजिते नास्ति तद्यत्पूजितं न भवति यद्भुवनेऽपि संघादन्यो गुणी न पूजनीयः ॥१॥"] देववर्णवादो यथा—"देवाण अहो सीलं विसयविसमोहियावि जिणभवणे। अच्छरसाहिंपि समं हासाई जेण न करिंति ॥१॥" इति। [देवानामहो शीलं विषयविषमोहिता अपि जिनभवने। अप्सरोभिरपि समं येन हास्यादि न कुर्वंति॥१॥]

संयतासंयतव्यतिकरमेव पंचपडिसंलीणेत्यादिना आरोपणसूत्रपर्यन्तेन ग्रन्थेनाह—

पंच पडिसंलीणा पं० तं०—सोइंदियपडिसंलीणे जाव फासिंदियपडिसंलीणे। पंच अप्पडिसंलीणा पं० तं०—सोतिंदियअप्पडिसंलीणे जाव फासिंदियअप्पडिसंलीणे। पंचविधे संवरे पं० तं०—सोतिंदियसंवरे जाव फासिंदियसंवरे, पंचविहे असंवरे पं० तं—सोइंदियअसंवरे जाव फासिंदियअसंवरे। (सू० ४२७) पंचविधे संजमे पं० तं०—सामातितसंजमे छेदोवट्ठावणियसंजमे परिहारविसुद्धितसंजमे सुहुमसंपरागसंजमे अहक्खायचरित्तसंजमे (सू० ४२८) एगिंदिया णं जीवा असमारभमाणस्स पंचविधे संजमे कज्जति, तं०—पुढविकातियसंजमे जाव वणस्सतिकातितसंजमे। एगिंदिया णं जीवा समारभमाणस्स पंचविहे असंजमे कज्जति, तं०—पुढविकानितअसंजमे जाव वणस्सतिकातितअसंजमे। (सू० ४२९) पंचिंदिया णं जीवा असमारभमाणस्स पंचविधे संजमे कज्जति, तं०—सोतिंदितसंजमे जाव फासिंदियसंजमे, पंचिंदिया णं जीवा समारभमाणस्स पंचविधे असंजमे कज्जति,

तं०—सोतिंदियअसंजमे जाव फासिंदियअसंजमे, सव्वपाणभूयजीवसत्ता णं असमारभमाणस्स पंचविधे संजमे कज्जति, तं०—एगिंदियसंजमे जाव पंचिंदियसंजमे। सव्वपाणभूतजीवसत्ता णं समारभमाणस्स पंचविधे असंजमे कज्जति, तं०—एगिंदितअसंजमे जाव पंचिंदियअसंजमे (सू० ४३०) पंचविधा तणवणस्सतिकातिता पं० तं०—अग्गबीया मूलबीया पोरबीया खंधबीया बीयरुहा (सू० ४३१)।

सुगमोऽर्थः, नवरं श्रोत्रेन्द्रियादिक्रमो यथाप्राधान्यात्, प्राधान्यं च क्षयोपशमबहुत्वकृतं। तथा प्रतिसंलीनेतरसूत्रयोः पुरुषो धर्मी उक्तः, संवरेतरसूत्रयोस्तु धर्म एवेति। तथा संयमनं संयमः पापोपरम इत्यर्थः, तत्र समो–रागादिरहितस्तस्य अयो–गमनं प्रवृत्तिरित्यर्थः समायः समाय एव समाये भवं समायेन निर्वृत्तं समायस्य विकारोंऽशो वा समायो वा प्रयोजनमस्येति सामायिकं, उक्तं च—"रागद्दोसविरहिओ समोत्ति अयणं अउत्ति गमणंति। समगमणंति समाओ स एव सामाइयं नाम ॥१॥ अहवा भवं समाए निव्वत्तं तेण तंमयं वावि। जं तप्पओयणं वा तेण व सामाइयं नेयं ॥२॥" इति, [रागद्वेषविरहितः सम इति अयनमय इति गमनमिति समगमनमिति समायः स एव सामायिकं नाम ॥१॥ अथवा समाये भवं तेन निर्वृत्तं तन्मयं वापि यत्तत्प्रयोजनं वा तेन वा सामायिकं ज्ञेयं ॥२॥] अथवा समानि–ज्ञानादीनि तेषु तैर्वा अयनमयः समायः स एव सामायिकमिति, अवादि च–"अहवा समाइ सम्मत्तनाणचरणाइ तेसु तेहिं वा। अयणं अओ समाओ स एव सामाइयं नाम ॥१॥" इति, [अथवा समानि सम्यक्त्वज्ञानचरणानि तेषु तैर्वाऽयनं अयः समायः स एव सामायिकं नाम ॥१॥] अथवा समस्य–रागादिरहितस्याऽऽयो–गुणानां लाभः समानां वा–ज्ञाना-

१ श्रोत्रस्य शब्दग्राहकत्वात्तु दूरस्थानां चतु:स्पर्शानां ग्रहणसामर्थ्योपेतत्वात् शेषाणि सर्वाणि त्वष्टस्पर्शग्राहीणि तेषु तु चक्षुरादिक्रमेण प्राधान्यं।

दीनामायः समायः स एव सामायिकं, अभाणि च–अहवा समस्स आओ गुणाण लाभोत्ति जो समाओ सो। अहवा समाणमाओ णेओ सामाइयं नाम ॥१॥''इति, [अथवा समस्यायस्तु गुणानां लाभ इति यः स समायः अथवा समानामायो ज्ञेयः सामायिकं नाम ॥१॥] अथवा साम्नि–मैत्र्यां साम्ना वा अयस्तस्य वा आयः सामायः स एव सामायिकं, अभ्यधायि च—अहवा सामं मेत्ती तत्थ अओ तेण वत्ति सामाओ। अहवा सामस्साओ लाभो सामाइयं नाम ॥१॥'' इति [अथवा साम मैत्री तत्रायस्तेन वाऽय इति सामायः अथवा साम्न आयो लाभः सामायिकं नाम ॥१॥] सावद्ययोगविरतिरूपं सर्वमपि चारित्रमविशेषतः सामायिकमेव, छेदादिविशेषैस्तु विशिष्यमाणमर्थतः शब्दतश्च नानात्वं भजते, तत्र प्रथमं विशेषणाभावात् सामान्यशब्द एवावतिष्ठते सामायिकमिति, तच्च द्विधा–इत्वरकालिकं यावज्जीविकं च, तत्रेत्वरकालिकं सर्वेषु प्रथमपश्चिमतीर्थंकरतीर्थेष्वनारोपितव्रतस्य यावज्जीविकं तु मध्यमविदेहतीर्थंकरतीर्थेषु भवति इति, तेषूपस्थापनाऽभावादिति, सामायिकं च तत्संयमश्चेत्येवं सर्वत्र वाक्यं कार्यमिति, भवन्ति चात्र गाथाः—''सव्वमिणं सामाइय छेदादिविसेसओ पुण विभिन्नं। अविसेसियमादिमयं ठियमिह सामन्नसन्नाए ॥१॥ सावज्जजोगविरइत्ति तत्थ सामाइयं दुहा तं च। इत्तरमावकहंतिय पढमं पढमंतिमजिणाणं ॥२॥ तित्थेसु अणारोवियवयस्स सेहस्स थोवकालीयं। सेसाणमावकहियं तित्थेसु विदेहयाणं च ॥३॥'' इति, [सर्वमिदं सामायिकं छेदादिविशेषतः पुनर्विभिन्नं अविशेषितमादिमं स्थितं चैतदिह सामान्यसंज्ञया ॥१॥ सावद्ययोगविरतिरिति तत्र सामायिकं द्विधा तच्च इत्वरं यावत्कथिकमिति च प्रथमं प्रथमान्तिमजिनयोः ॥२॥ तीर्थयोरनारोपितव्रतस्य शैक्षस्य स्तोककालीनं। शेषाणां यावत्कथिकं तीर्थेषु विदेहगानां च ॥३॥] तथा छेदश्च पूर्वपर्यायस्योपस्थापनं च व्रतेषु यत्र तच्छेदोपस्थापन तदेव छेदोपस्थापनिकं ते वा विद्येते यत्र तच्छेदोपस्थापनिकमथवा पूर्वपर्यायच्छेदेनोपस्थाप्यते–आरोप्यते यन्महाव्रतलक्षणं चारित्रं

तच्छेदोपस्थापनीयं, तदपि द्विधा—अनतिचारं सातिचारं च, तत्रानतिचारं यदित्वरसामायिकस्य शिक्षकस्यारोप्यते पार्श्वनाथसाधोर्वा तीर्थान्तरसंक्रमे वा तद्व्रतेन्। मूलगुणघातिनः सातिचारमुभयं च स्थितकल्पे ॥१॥] (प्रथमपश्चिमतीर्थयोरित्यर्थः), तथा परिहरणं परिहारः—तपोविशेषः तेन विशुद्धं परिहारे वा विशेषेण शुद्धो यस्मिंस्तत्परिहारविशुद्धं तदेव परिहारविशुद्धिकं, परिहारेण वा विशुद्धिर्यस्मिंस्तत्परिहारविशुद्धिकं, तच्च द्विधा—निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानकानां च तदासेवकानां यत्तन्निर्विशमानकं, यत्तु निर्विष्टकायिकानामासेवितविवक्षितचारित्रकायानां तन्निर्विष्टकायिकमिति, इहापि गाथे—"परिहारेण विसुद्धं सुद्धो य तवो जहिं विसेसेणं। तं परिहारविसुद्धं परिहारविसुद्धियं नाम ॥१॥ तं दुविकप्पं निव्विस्समाणनिव्विट्ठकाइयवसेणं। परिहारियाणुपरिहारियाण कप्पट्ठियस्सवि य ॥२॥" इति। [परिहारेण विशुद्धं यत्र विशेषेण शुद्धं च तपः। तत्परिहारविशुद्धं परिहारविशुद्धिकं नाम ॥१॥ तद् द्विविकल्पं निर्विशमाननिर्विष्टकायिकवशात् परिहारिकानुपरिहारिकाणां कल्पस्थितस्यापि च ॥२॥] इह च नवको गणो भवति, तत्र चत्वारः परिहारिका अपरे तु तद्वैयावृत्त्यकराश्चत्वार एवानुपरिहारकाः, एकस्तु कल्पस्थितो वाचनाचार्यो गुरुभूत इत्यर्थः, एतेषां च निर्विशमानकानामयं परिहारः—ग्रीष्मे जघन्यादीनि चतुर्थषष्ठाष्टमादीनि शिशिरे तु षष्ठाष्टमदशमानि वर्षास्वष्टमदशमद्वादशानि पारणके चायामं, इतरेषां सर्वेषामायाममेव, एवमेते चत्वारः षण्मासान् पुनरन्ये चत्वारः षडेव पुनर्वाचनाचार्यः षडिति सर्व एवायमष्टादशमासिकः कल्प

इति । तथा सूक्ष्माः-लोभकिट्टिकारूपाः सम्परायाः-कषाया यत्र तत्सूक्ष्मसम्परायं, तदपि द्विधा-विशुद्ध्यमानकं संक्लिश्यमानकं च, तत्राद्यं क्षपकोपशमश्रेणिद्वयं समारोहतः, संक्लिश्यमानकं तूपशमश्रेणितः प्रच्यवमानस्येति, तत्रोक्तम्—"कोधाइ संपराओ तेण जओ संपरीई संसारं। तं सुहुमसंपरायं सुहुमो जत्थावसेसो से ॥१॥ सेढिं विलग्गओ तं विसुज्झमाणं तओ चयंतस्स। तह संकिलिस्समाणं परिणामवसेण विन्नेयं ॥२॥" इति [ क्रोधादिः संपरायो यतस्तेन संसारं संपरैति यत्र स सूक्ष्मोऽवशिष्टः तत्सूक्ष्मसंपरायं ॥१॥ श्रेणिं विलगतस्तद्विशुद्ध्यमानं ततश्च्यवमानस्य तथा संक्लिश्यमानं परिणामवशेन विज्ञेयं ॥२॥ ] अथशब्दो यथार्थः, यथैवाकषायतयेत्यर्थः, आख्यात-अभिहितं अथाख्यातं तदेव संयमोऽथाख्यातसंयमः, अयं च छद्मस्थस्योपशान्तमोहस्य क्षीणमोहस्य च स्यात् केवलिनः सयोगस्यायोगस्य च स्यादिति, इहाभ्यधायि—"अहसद्दो जाहत्थो आङोऽभिविहीऍ कहियमक्खायं। चरणमकसायमुदियं तमहक्खायं अहक्खायं ॥१॥ तं दुविगप्पं छउमत्थकेवलिविहाणओ पुणेक्केकं। खयसमजसजोगाजोगि केवलिविहाणओ दुविहं ॥२॥" इति [अथशब्दो याथार्थ्ये आङभिविधौ कथितं आख्यातं चरणमकषायमुदितं तद्यथाख्यातं अथाख्यातं ॥१॥ तद् द्विविकल्पं छद्मस्थकेवलिविधानतः पुनरेकैकं क्षयशमजसयोग्ययोगिकेवलिविधानाद् द्विविधम् ॥२॥ ] 'एगिंदीया णं जीव'त्ति एकेन्द्रियान् णमित्यलङ्कारे जीवान् असमारभमाणस्य-सङ्घट्टादीनामविषयीकुर्वतः सप्तदशप्रकारस्य संयमस्य मध्ये पञ्चविधः संयमो-व्युपरमोऽनाश्रवः 'क्रियते' भवति तद्यथा-पृथिवीकायिकेषु संयमः-सङ्घट्टाद्युपरमः पृथिवीकायिकसंयमः, एवमन्यान्यपि पदानि, असंयमसूत्रं संयमसूत्रवद् विपर्ययेण व्याख्येयमिति। 'पंचेंदियाण'मित्यादि, इह सप्तदशप्रकारसंयमभेदस्य पञ्चेन्द्रियसंयमलक्षणस्येन्द्रियभेदेन भेदविवक्षणात् पञ्चवि-

१ पुढविदगअगणिमारुय वणस्सइबितिचउपणिंदिअज्जीवा। पेहुप्पेहपमज्जण परिट्ठवणमणोवईकाए ॥१॥ इत्यत्रैकभेदत्वात् पञ्चेन्द्रियसंयमस्य।

गमं, तत्र पञ्चेन्द्रियानारम्भे श्रोत्रेन्द्रियस्य व्याघातपरिवर्जनं श्रोत्रेन्द्रियसंयमः एवं चक्षुरिन्द्रियसंयमादयोऽपि वाच्याः, असंयमसूत्रमेतद्विपर्यासेन बोद्धव्यमिति। 'सव्वपाणे'त्यादि, पूर्वमेकेन्द्रियपञ्चेन्द्रियजीवाश्रयेण संयमासंयमावुक्ताविह तु सर्वजीवाश्रयेणात एव सर्वग्रहणं कृतमिति, प्राणादीनां चायं विशेषः—"प्राणा द्वित्रिचतुः प्रोक्ताः, भूतास्तु तरवः स्मृताः। जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा इतीरिताः ॥१॥" इति, इह सप्तदशप्रकारसंयमस्याद्या नव भेदाः संगृहीताः, एकेन्द्रियसंयमग्रहणेन पृथिव्यादिसंयमपञ्चकस्य गृहीतत्वादिति एतत्प्रत्ययेनासंयमसूत्रं। 'तणवणस्सइ'त्ति तृणवनस्पतयो–बादरा वनस्पतयोऽग्रबीजादयः क्रमेण कोरण्टका उत्पलकन्दा वंशाः शल्लक्यो वटा एवमादयो, व्याख्यातं चैतत्प्रागिति।

पंचविधे आयारे पं० तं०—णाणायारे दंसणायारे चरित्तायारे तवायारे वीरियायारे (सू० ४३२) पंचविधे आयारपकप्पे पं० तं०—मासिते उग्घातिते मासिए अणुग्घाइए चउमासिए उग्घाइए चाउम्मासिए अणुग्घातीते आरोवणा। आरोवणा पंचविहा पं० तं०—पट्ठविया ठविया कसिणा अकसिणा हाडहडा (सू० ४३३)

आचरणमाचारो–ज्ञानादिविषयाऽऽसेवेत्यर्थः ज्ञानाचारः–कालादिरष्टधा दर्शनं–सम्यक्त्वं तदाचारो–निःशङ्कितादिरष्टधैव चारित्राचारः–समितिगुप्तिभेदोऽष्टधा तपआचारोऽनशनादिभेदो द्वादशधा वीर्याचारो वीर्यागोपनमेतेष्वेवेति। आचारस्य–प्रथमाङ्गस्य पदविभागसामाचारीलक्षणप्रकृष्टकल्पाभिधायकत्वात् प्रकल्प आचारप्रकल्पः–निशीथाध्ययनं, स च पञ्चविधः–पञ्चविधप्रायश्चित्ताभिधायक-

१ [illegible] सह नव भेदा पृथ्व्याद्येकेन्द्रियादिसंयमानां।

त्वात्, तथाहि-तत्र केषुचिदुद्देशकेषु लघुमासप्रायश्चित्तापत्तिरुच्यते १ केषुचिच्च गुरुमासापत्तिः २ एवं लघुचतुर्मास ३ गुरुचतुर्मासा ४ ऽऽरोपणाश्चेति ५, तत्र मासेन निष्पन्नं मासिकं तपः, तच्च उद्घातो-भागपातो यत्रास्ति तदुद्घातिकं लघ्वित्यर्थः, यत उक्तम्—"अद्धेण छिन्नसेसं पुव्वद्धेण तु संजुयं काउं। देज्जाहि लहुयदाणं गुरुदाणं तत्तियं चेव ॥१॥" इति, एतद्भावना मासिकतपोऽधिकृत्योपदर्श्यते-मासस्यार्द्धछिन्नस्य शेषं दिनानां पञ्चदशकं तत् मासापेक्षया च पूर्वस्य-पञ्चविंशतिकस्यार्द्धेन-सार्धद्वादशकेन संयुतं कृतं सार्द्धसप्तविंशतिर्भवतीति। आरोपणा तु चडावणत्ति भणियं होइ, यो हि यथाप्रतिषेवितमालोचयति तस्य प्रतिषेवानिष्पन्नमेव मासलघुमासगुरुप्रभृतिकं दीयते, यस्तु न तथा तस्य तत्तावद्दीयते एव मायानिष्पन्नं चान्यदारोप्यते इत्यारोपणेति। 'आरोवणे'ति आरोपणोक्तस्वरूपा, तत्र 'पट्ठविय'त्ति बहुष्वारोपितेषु यन्मासगुर्वादिप्रायश्चित्तं प्रस्थापयति-वोढुमारभते तदपेक्षयाऽसौ प्रस्थापितेत्युक्ता १, 'ठविय'त्ति यत्प्रायश्चित्तमापन्नस्तत्तस्य स्थापितं कृतं, न वाहयितुमारब्ध इत्यर्थः, आचार्यादिवैयावृत्त्यकरणार्थं, तद्धि वहन्न शक्नोति वयावृत्त्यं कर्तुं, वैयावृत्त्यसमाप्तौ तु तत्करिष्यतीति स्थापितोच्यत इति २, कृत्स्ना पुनर्यत्र झोषो न क्रियते, झोषस्त्वयं-इह तीर्थ षण्मासान्तमेव तपस्ततः षण्णां मासानामुपरि यान् मासानापन्नोऽपराधी तेषां क्षपणं-अनारोपणं प्रस्थे चतुःसेतिकाऽतिरिक्तधान्यस्येव झाटनमित्यर्थः, झोषाभावेन सा परिपूर्णेति कृत्स्नेत्युच्यत इति भावः ३, अकृत्स्ना तु यस्यां षण्मासाधिकं झोष्यते, तस्या हि तदतिरिक्तझाटनेनापरिपूर्णत्वादिति ४, 'हाडहडे'ति यत् लघुगुरुमासादिकमापन्नस्तत् सद्य एव यस्यां दीयते सा हाडहडोक्तेति ५। एतत्स्वरूपं च विशेषतो निशीथविंशतितमोद्देशकादवगन्तव्यमिति।

अयं च संयतासंयतगतवस्तुविशेषाणां व्यतिकरो मनुष्यक्षेत्र एव भवतीति मनुष्यक्षेत्रवर्त्तिनो वस्तुविशेषान् 'जंबुद्दीवे'त्यादिना

'उसुयारा नत्थि'त्ति पर्यवसानेन ग्रन्थेनाह–

जंबूद्दीवे २ मंदरस्स पव्वयस्स पुरत्थिमे णं सीयाए महानईए उत्तरेणं पंच वक्खारपव्वता पं० तं०—मालवंते चित्तकूडे पम्हकूडे णलिणकूडे एगसेले १ जंबूमंदरस्स पुरओ सीताए महानदीए दाहिणेणं पञ्च वक्खारपव्वता पं० तं०—तिकूडे वेसमणकूडे अंजणे मायंजणे सोमणसे २ जंबूमंदरस्स पचत्थिमेणं सीओताते महाणदीए दाहिणेणं पञ्च वक्खारपव्वता पं० तं०–विज्जुप्पभे अंकावती पम्हावती आसीविसे सुहावहे ३ जंबूमंदरपचत्थिमेणं सीओताते महानदीते उत्तरेणं पञ्च वक्खारपव्वता पं० तं०–चंदपव्वते सूरपव्वते णागपव्वते देवपव्वते गंधमादणे ४ जंबूमंदरदाहिणेणं देवकुराए कुराए पञ्च महद्दहा पं० तं०–निसहदहे देवकुरुदहे सूरदहे सुलसदहे विज्जुप्पभदहे ५ जंबूमंदरउत्तरकुराते कुराए पञ्च महद्दहा पं० तं०—नीलवंतदहे उत्तरकुरुदहे चंददहे एरावणदहे मालवंतदहे ६ सव्वेऽवि णं वक्खारपव्वया (तेणं) सीया सीओयाओ महाणईओ मंदरं वा पव्वतंतेणं पंच जोयणसताइं उड्ढं उच्चत्तेणं पञ्चगाउयसताइं उव्वेहेणं ७। धायइसंडे दीवे पुरच्छिमद्धेणं मंदरस्स पव्वयस्स पुरच्छिमेणं सीताते महाणदीते उत्तरेणं पंच वक्खारपव्वता पं० तं०—मालवंते एवं जधा जंबुद्दीवे तधा जाव पुक्खरवरदीवड्ढपचत्थिमद्धे वक्खारा दहा य उच्चत्तं भाणियव्वं। समयक्खेत्ते णं पंचभरहाइं पंच एरवताइं, एवं जधा चउट्ठाणे बितीयउद्देसे तहा एत्थवि भाणियव्वं जाव पञ्च मंदरा पञ्च मंदरचूलिताओ, णवरं उसुयारा णत्थि (सू० ४३४) उसभे णं अरहा कोसलिए पञ्चधणुसताइं उड्ढं उच्चत्तेणं होत्था १। भरहे णं राया चाउरंतचक्कवट्टी पंच धणु-

सयाइं उड्ढं उच्चत्तेणं हुत्था २। बाहुबली णमणगारे एवं चेव ३ बम्भीणामज्जा एवं चेव ४ एवं सुंदरीवि ५, (सू०४३५)

कण्ठ्यश्चायं, नवरं मालवं (व)तो गजदन्तकात् प्रदक्षिणया सूत्रचतुष्टयोक्ता विंशतिर्वक्षस्कारगिरयोऽवगन्तव्या इति, इह च देवकुरुषु निषधवर्षधरपर्वतादुत्तरेणाष्टौ योजनानां शतानि चतुस्त्रिंशदधिकानि योजनस्य चतुरश्च सप्तभागानतिक्रम्य शीतोदाया महानद्याः पूर्वापरकूलयोर्विचित्रकूटचित्रकूटाभिधानौ योजनसहस्रोच्छ्रितौ मूले सहस्रायामविष्कम्भावुपरि पञ्च योजनशतायामविष्कम्भौ प्रासादमण्डितौ स्वसमाननामदेवनिवासभूतौ पर्वतौ स्तः, ततस्ताभ्यामुत्तरतोऽनन्तरोदितान्तरः शीतोदामहानदीमध्यभागवर्त्ती दक्षिणोत्तरतो योजनसहस्रमायतः पूर्वापरतः पञ्च योजनशतानि विस्तीर्णः वेदिकावनखण्डद्वयपरिक्षिप्तो दश योजनावगाहो नानामणिमयेन दशयोजननालेनार्द्धयोजनबाहल्येन योजनविष्कम्भेनार्द्धयोजनविस्तीर्णया क्रोशोच्छ्रितया कर्णिकया युक्तेन निषधाभिधानदेवनिवासभूतभवनभासितमध्येन तदर्द्धप्रमाणाष्टोत्तरशतसङ्ख्यपद्मैस्तदन्येषां च सामानिकादिदेवनिवासभूतानां पद्मानामनेकलक्षैः समन्तात् परिवृतेन महापद्मेन विराजमानमध्यभागो निषधो महाह्रदः, एवमन्येऽपि निषधसमानवक्तव्यताः स्वसमानाभिधानदेवनिवासा उक्तान्तराः समवसेयाः, नवरं नीलवन्महाह्रदो विचित्रकूटचित्रकूटपर्वतसमवक्तव्यताभ्यां यमकाभिधानाभ्यां स्वसमाननामदेवावासाभ्यां पर्वताभ्यामनन्तरं द्रष्टव्यस्ततो दक्षिणतः शेषाश्चत्वार इति, एते च सर्वेऽपि प्रत्येकं दशभिर्दशभिः काञ्चनकाभिधानैः योजनशतोच्छ्रितैर्योजनशतमूलविष्कम्भैः पञ्चाशद्योजनमानमस्तकविस्तारैः स्वसमाननामदेवाधिवासैः प्रत्येकं दशयोजनान्तरैः पूर्वापरव्यवस्थितैः गिरिभिरुपेताः, एतेषां च विचित्रकूटादिपर्वतह्रदनिवासिदेवानामसंख्येयतमजम्बूद्वीपे द्वादशयोजनसहस्रप्रमाणास्तन्नामिका नगर्यो भवन्तीति, 'सव्वेवि ण'मित्यादि, सर्वेऽपि जम्बूद्वीपादिसम्बन्धिनः, 'तेणं'ति शीताशीतोदे महानद्यौ प्रतीते लक्षणीकृत्य नदीदिशीत्यर्थः, मन्दरं वा—मेरुं वा पर्वतं प्रति

नदीत्यर्थः, तत्र माल्यवत्सौमनसविद्युत्प्रभगन्धमादना गजदन्ताकारपर्वता मेरुं प्रति यथोक्तस्वरूपाः, शेषास्तु वक्षारपर्वता महानद्यौ प्रतीति, इयं चानन्तरोदिता सप्तसूत्री धातकीखण्डस्य पुष्करार्द्धस्य च पूर्वापरार्द्धयोर्द्रष्टव्येत्यत एवोक्तम्—'एवं जहा जंबू' इत्यादि। समयः-कालस्तद्विशिष्टं क्षेत्रं समयक्षेत्रं-मनुष्यक्षेत्रं तस्यैवादित्यगतिसमभिव्यङ्ग्यऋत्वयनादिकालयुक्तत्वात्, 'जाव पंच मंदर'त्ति इह यावत्करणात् पञ्च हैमवतानि पञ्च हैरण्यवतानीत्यादि पञ्च शब्दापातिन इत्यादि चोपयुज्य सर्वं चतुःस्थानकद्वितीयोद्देशकानुसारेण वाच्यं, नवरं 'उसुयार'त्ति चतुःस्थानके चत्वार इषुकारपर्वता उक्ताः इह तु ते न वाच्याः, पञ्चस्थानकत्वादस्येति। अनन्तरं मनुष्यक्षेत्रे वस्तून्युक्तानीति तदधिकाराद्भरतक्षेत्रवर्त्तमानावसर्पिणीभूषणभूतऋषभजिनवस्तुतत्सम्बन्धादन्यानि च पञ्चस्थानकेऽवतारयन् सूत्रपञ्चकमाह—'उसभे णं'मित्यादिः कण्ठ्यं, नवरं 'कोसलिए'त्ति कोशलदेशोत्पन्नत्वात् कौशलिको, भरतादयश्च ऋषभापत्यानि।

बुद्धाश्चैते, बुद्धश्च भावतो मोहक्षयाद् द्रव्यतो निद्राक्षयादिति द्रव्यबोधं कारणत उपदर्शयन्नाह—

पंचहिं ठाणेहिं सुत्ते विबुज्झेज्जा, तं०—सद्देणं फासेणं भोयणपरिणामेणं णिद्दक्खएणं सुविणदंसणेणं (सू० ४३३) पंचहिं ठाणेहिं समणे णिग्गंथे णिग्गंथिं गिण्हमाणे वा अवलंबमाणे वा णातिक्कमति, तं०—निग्गंथिं च णं अन्नयरे पसुजातिए वा पक्खिजातिए वा ओहातेज्जा तत्थ णिग्गंथे णिग्गंथिं गिण्हमाणे वा अवलंबमाणे वा नातिक्कमति १ णिग्गंथे णिग्गंथिं दुग्गंसि वा विसमंसि वा पक्खलमाणिं वा पवडमाणिं वा गिण्हमाणे वा अवलंबमाणे वा णातिक्कमति २ णिग्गंथे णिग्गंथिं सेतंसि वा पंकंसि वा पणगंसि वा उदगंसि वा उक्कसमाणीं

वा उवुज्झमाणीं वा गिण्हमाणे वा अवलंबमाणे वा णातिक्कमति ३ निग्गंथे निग्गथिं नावं आरुभमाणे वा ओरोहमाणे वा णातिक्कमति ४, खेत्तइत्तं दित्तइत्तं ज़क्खाइट्ठं उम्मायपत्तं उवसग्गपत्तं साहिगरणं सपायच्छित्तं जाव भत्तपाणपडियातिक्खियं अट्ठजायं वा निग्गंथे निग्गंथिं गेण्हमाणे वा अवलंबमाणे वा णातिक्कमति ५॥ (सू० ४३७)।

'पंचही'त्यादि कण्ठयं, नवरमिह निद्राक्षयोऽनन्तरकारणं शब्दादयस्तु तत्कारणत्वेन तत्कारणतयोक्ताः, भोजनपरिणामो बुभुक्षा। अनन्तरं द्रव्यप्रबुद्धः कारणत उक्तो, अथ भावप्रबुद्धमनुष्ठानत आज्ञानतिक्रमिणं दर्शयितुमाह-'पंचही'त्यादि सुगमं, नवरं 'गिण्हमाणे'त्ति बाह्वादावङ्गे गृह्णन् अवलम्बमानः पतन्तीं बाह्वादौ गृहीत्वा धारयन् अथवा 'सव्वंगियं तु गहणं करेण अवलंबणं तु देसंमि' त्ति [सर्वाङ्गिकं तु ग्रहणं करेण अवलम्बनं तु देशे] नातिक्रामति स्वाचारमाज्ञां वा गीतार्थस्थविरो निर्ग्रन्थिकाऽभावे न यथाकथञ्चित्, पशुजातीयो दृप्तगवादिः पक्षिजातीयो गृध्रादिः, 'ओहाएज्ज'त्ति उपहन्यात् तत्रेति-उपहनने गृह्णन्नातिक्रामति कारणिकत्वात् निष्कारणत्वे तु दोषाः, यदाह—"मिच्छत्तं उड्डाहो विराहणा फास भावसंबंधो। पडिगमणाई दोसा भुत्ताभुत्ते य नायव्वा॥१॥ [मिथ्यात्वमुड्डाहो विराधना स्पर्शे भावप्रतिबंधः प्रतिगमनादयो दोषा भुक्ताभुक्तयोश्च ज्ञातव्याः॥१॥] इत्येकं, तथा दुःखेन गम्यत इति दुर्ग्गः, स च त्रिधा-वृक्षदुर्ग्गः श्वापददुर्ग्गो म्लेच्छादिमनुष्यदुर्ग्गः, तत्र वा मार्गे, उक्तं च—"तिविहं च होइ दुग्गं रुक्खे सावयमणुस्सदुग्गं च" इति [दुर्गं त्रिविधं च भवति वृक्षश्वापदमनुष्यदुर्गभेदात्॥] तथा विषमे वा-गर्तपाषाणाद्याकुले पर्वते वा प्रस्खलंती वा गत्या प्रपतन्ती वा भुवि, अथवा "भूमीए असंपत्तं पत्तं वा हत्थजाणुगादीहिं। पक्खलणं नासव्वं पवडण भूमीएँ गत्तेहिं॥१॥" [भूमावसं-

प्राप्तिः प्राप्तिर्वा हस्तजान्वादिभिः । प्रस्खलनं ज्ञातव्यं प्रपतनं भूमौ गात्रैः ॥१॥"] गृह्णन्नातिक्रामतीति द्वितीयं, तथा पङ्कः पनको वा सजलो यत्र निमज्ज्यते स सेकस्तत्र वा, पङ्कः-कर्दमस्तत्र वा, पनके वा आगन्तुकप्रतनुद्रवरूपे कर्दम एव ओल्यां वा, 'अपकसंतीं' पङ्कपनकयोः परिहसन्तीं अपोह्यमानां वा-सेके उदके वा नीयमानां गृह्णन्नातिक्रामतीति, गाथे चेह—"पंको खलु चिक्खिल्लो आगंतु पतणुओ दवो पणओ । सोच्चिय सजलो सेओ सीइज्जइ जत्थ दुविहेवि ॥१॥" इति, पंकपणएसु नियमा ओसगणं वुज्झण सिया सेए । निमिरांमि निमज्जणया सजले सेए सिया दोवि ॥२॥ [पंकः खलु चिक्खिल्ल आगंतुकः प्रतनुको द्रवः पनकः । सोऽपि च सजलः सेकः यत्र द्विविधेऽपि सीद्यते ॥१॥ पंकपनकयोर्नियमादधोगमनं सेके स्याद्वहनं (निमृदि स्तिमिते) निमज्जनता सजले सेके स्यातां द्वावपि ॥२॥] इति तृतीयं, तथा नावं 'आरुहमाणे'त्ति आरोहयन् 'ओरुहमाणे'त्ति अवरोहयन्नुत्तारयन्नित्यर्थो नातिक्रामतीति चतुर्थं, तथा क्षिप्तं-नष्टं रागभयापमानैश्चित्तं यस्याः सा क्षिप्तचित्ता तां वा, उक्तं च—"रागेण वा भएण वा अहवा अवमाणिया महंतेणं । एतेहिं खित्तचित्त"त्ति [रागेण वा भयेन वाऽथवा महताऽपमानिता एतैः क्षिप्तचित्ता ॥] तथा दृप्तं सन्मानात् दर्प्पवच्चित्तं यस्याः सा दृप्तचित्ता तां वा, उक्तं च—"इति एस असंमाणा खित्तो सम्माणओ भवे दित्तो । अग्गीव इंधणेणं दिप्पइ चित्तं इमेहिं तु ॥१॥ लाभमएण व मत्तो अहवा जेऊण दुज्जयं सत्तुं"ति ॥ [इत्येषोऽसन्मानात्क्षिप्तः सन्मानाद्भवेद्दृप्तः । अग्निरिवेन्धनैर्दीप्यति चित्तमेभिरेव ॥१॥ लाभमदेन वा मत्तः अथवा जित्वा दुर्जयं शत्रुं ॥] यक्षेण-देवेन आविष्टा-अधिष्ठिता यक्षाविष्टा तां वा, अत्रोक्तम्—"पुव्वभववेरिएणं अहवा रागेण रागिया संती । एएहि जक्खइट्ठ"त्ति [पूर्वभववैरिणाऽथवा रागेण रागवती सती । एतैर्यक्षाविष्टा ॥] उन्मादं-उन्मत्ततां प्राप्ता उन्मादप्राप्ता तां वा, अत्राप्युक्तम्—"उम्माओ खलु दुविहो जक्खाएसो य मोहणिज्जो य । जक्खाएसो वुत्तो मोहेण

इमं तु वोच्छामि ॥१॥ रूवंगं दट्ठुणं उम्माओ अहव पित्तमुच्छाए''त्ति, [उन्मादः खलु द्विविधः यक्षावेशश्च मोहनीयश्च। यक्षावेश उक्तो मोहेनैनं तु वक्ष्यामि ॥१॥ रूपमंगं च दृष्ट्वा उन्मादोऽथवा पित्तमूर्च्छया ॥] उपसर्ग्गं–उपद्रवं प्राप्ता उपसर्गप्राप्ता तां वा, इहाप्युक्तम्—''तिविहे य उवस्सग्गे दिव्वे माणुस्सए तिरिक्खे य। दिव्वे य पुव्वभणिए माणुस्से आभिओगे य ॥१॥ विज्जाए मंतेण य चुन्नेण व जोइया अणप्पवसा'' इति [त्रिविधाश्चोपसर्गाः दिव्या मानुष्यास्तैरश्चश्च। दिव्याश्च पूर्वं भणिता मानुष्या आभियोगाश्च ॥१॥ विद्यया मंत्रेण चूर्णेन वा योजिता अनात्मवशा॥] तथा सहाधिकरणेन साधिकरणा–युद्धार्थमुपस्थिता तां वा सह प्रायश्चित्तेन सप्रायश्चित्ता तां वा, भावना चेह—''अहिगरणंमि कयंमि उ खामेउमुवट्ठियाए पच्छित्तं। तप्पढमयाभएणं होइ किलंता व वहमाणी ॥१॥'' [अधिकरणे कृते क्षामयितुमुपस्थिताया अथवा तत्प्रथमतया प्रायश्चित्तं वहंती किल भयेन वा क्लान्ता भवति ॥१॥] तथा भक्तपाने आभवं प्रत्याख्याते यया सा भक्तपानप्रत्याख्याता तां वा, इह गाथा—''अट्ठं वा हेउं वा समणीणं विरहिए कहिंतस्स। मुच्छाए विवडियाए कप्पइ गहणं परिन्नाए ॥१॥'' इति [अर्थं वा हेतुं वा विरहे श्रमणीभ्यः कथयतः। मूर्च्छया विपतितायाः परिज्ञायां (अनशने) ग्रहणं कल्पते ॥१॥] तथा अर्थः–कार्यमुत्पव्राजनतः स्वकीयपरिणेत्रादेर्जातं यया साऽर्थजाता पतिचौरादिना संयमाच्चाल्यमानेत्यर्थस्तां वा, इह गाथा—''अट्ठोत्ति जीएँ कज्जं संजायं एस अट्ठजायाउ। तं पुण संजमभावा चालिज्जंतं समवलंबं ॥१॥'' ति [यस्या अर्थः कार्यं संजातं एषा एवाऽर्थजाता। तां पुनः संयमभावाच्चाल्यमानां समवलंबयन्ति ॥१॥] पञ्चममिति ५॥

अनन्तरं येषु स्थानेषु वर्त्तमानो निर्ग्रन्थो धर्म्मं नातिक्रामति तान्युक्तानि, अधुना तद्विशेष आचार्यो येष्वतिशयेषु वर्त्तमानस्तं नातिक्रामति तानाह—

आयरियउवज्झायस्स णं गणंसि पंच अतिसेसा पं० तं०—आयरियउवज्झाए अंतो उवस्सगस्स पाए निगिज्झिय २ पप्फोडेमाणे वा पमज्जेमाणे वा णातिक्कमति १ आयरियउवज्झाए अंतो उवस्सगस्स उच्चारपासवणं विगिंचमाणे वा विसोधेमाणे वा णातिक्कमति २ आयरियउवज्झाए पभू इच्छा वेयावडियं करेज्जा इच्छा णो करेज्जा ३, आयरियउवज्झाए अंतो उवस्सगस्स एगरायं वा दुरातं वा एगागी वसमाणे णा० ४ आयरियउवज्झाए बाहिं उवस्सगस्स एगरातं वा दुरातं वा वसमाणे णातिक्कमति ५ (सू० ४३८)।

'आयरिए'त्यादि, आचार्यश्चासावुपाध्यायश्चेत्याचार्योपाध्यायः, स हि केषाञ्चिदर्थदायकत्वादाचार्योऽन्येषां सूत्रदायकत्वादुपाध्याय इति तस्य, आचार्योपाध्याययोर्वा, न शेषसाधूनां, 'गणे' साधुसमुदाये वर्त्तमानस्य वर्त्तमानयोर्वा गणविषये वा शेषसाधुसमुदायापेक्षयेत्यर्थः पञ्चातिशेषाः—अतिशयाः प्रज्ञप्ताः, तद्यथा—आचार्योपाध्यायोऽन्तः—मध्ये 'उपाश्रयस्य' वसतेः 'पादौ निगृह्य २' पादधूलेरुद्धूयमानाया निग्रहं यत्नेन कारयित्वा यथाऽन्ये धूल्या न भ्रियन्ते तथेत्यर्थः, प्रस्फोटयित्वा आभिग्रहिकेनान्येन वा साधुना स्वकीयरजोहरणेन ऊर्णिकपादप्रोञ्छनेन वा प्रस्फोटनं कारयन् झाटयन्नित्यर्थः, प्रमार्जयन्वा शनैर्लूषयन् नातिक्रामतीति, इह च भावार्थ इत्थमास्थितः—आचार्यः कुलादिकार्येण निर्गतः प्रत्यागत उत्सर्गेण तावद्वसतेर्बहिरेव पादौ प्रस्फोटयति, अथ तत्र सागारिको भवेत्तदा वसतेरन्तः प्रस्फोटयेत्, प्रस्फोटनं च प्रमार्जनविशेषस्तच्च चक्षुर्व्यापारलक्षणप्रत्युपेक्षणपूर्वकमितीह सप्त भङ्गाः, तत्र न प्रत्युपेक्षते न प्रमार्ष्टि चेत्येकः, न प्रत्युपेक्षते प्रमार्ष्टीति द्वितीयः, प्रत्युपेक्षते न प्रमार्ष्टीति तृतीयः, प्रत्युपेक्षते प्रमार्ष्टि चेति चतुर्थः, यत्तत्प्रत्युपेक्ष्यते प्रमार्ज्यते च तद्दुष्प्रत्युपेक्षितं दुष्प्रमार्जितं ४ दुष्प्रत्युपेक्षितं सुप्रमार्जितं वा ४ सुप्रत्युपेक्षितं दुष्प्रमार्जितं वा ६ सुप्रत्युपेक्षितं

सुप्रमार्जितं वा ७ करोति, इह च सप्तमः शुद्धः शेषेष्वसमाचारीति, यदि तु सागारिकश्चलस्ततः सप्ततालमात्रं सप्तपदावक्रमणमात्रं वा कालं बहिरेव स्थित्वा तस्मिन् गते पादौ प्रस्फोटयेत्, उक्तं च—"अइवाइगंमि बाहिं अच्छंति मुहुत्तगं थेर" त्ति । [अतिपातिकेऽस्थिरे बहिर्मुहूर्त्तकं तिष्ठन्ति स्थविराः ॥ ] अल्पार्थके सप्ततालमानं ( अतिपातितोऽस्थिरः ), ततो वसतौ प्रविशेत्, कः केन चास्य पादौ प्रमार्जयतीत्युच्यते—"अभिग्गहियस्स असई तस्सेव रओहरेण अन्नयरो"। ( तस्यैवेत्याचार्यस्यैव ) पाउंछणुन्निएण व पुंछइ उ अणन्नभुत्तेणं ॥१॥" ति । [ आभिग्रहिकस्यासति तस्यैव रजोहरणेनान्यतरः। पादप्रोंछनेनौर्णिकेन वा पुंछति त्वनन्यभुक्तेन ॥१॥ ] वसतेरन्तःप्रविष्टस्य चायं विधिः—विपुलायां वसतावपरिभोगस्थाने सङ्कटायां चात्मसंस्तारकावकाशे उपविष्टस्य पादौ प्रमार्जनीयौ, अन्यस्यापि गणावच्छेदकादेरयमेव विधिः, केवलमन्यो बहिश्चिरतरं तिष्ठतीति, उक्तं च—"विपुलाए अपरिभोगे अत्तणओवासए व बेट्ठस्स । एमेव य भिक्खुस्सवि नवरं बाहिं चिरयरं तु ॥१॥" [ विपुलायामपरिभोगे आत्मनोऽवकाशे वोपविष्टस्य । एवमेव भिक्षोरपि नवरं बहिश्चिरतरमेव ॥१॥ ] एतावानेव चायमतिशयो यदसौ न चिरं बहिरास्ते, अथ चिरं तिष्ठतः के दोषा इति ?, उच्यते—"तण्हुण्हभावियस्सा ( सुकुमाराचार्यस्य ) पडिच्छमाणस्स [ बहिस्तात् >मुच्छमाईया । खद्धाइयणगिलाणे [ प्रचुरद्रवपाने ग्लानत्वे ) सुत्तत्थविराहणा चेव ॥१॥" इत्यादि, [ तृषोष्णभावितस्य प्रतीच्छतः मूर्छादिकाः । प्रचुरद्रवपाने ग्लानत्वं सूत्रार्थविराधना चैव ॥१॥ ] शेषसाधवस्तु चिरमपि बहिस्तिष्ठन्ति न च दोषाः स्युः, जितश्रमत्वाद्, आह च—"दसविहवेयावच्चे सग्गाम बहिं च निच्चवायामो । सीउण्हसहा भिक्खू ण य हाणी वायणाईया ॥१॥" ] दशविधवैयावृत्त्ये स्वग्रामे बहिर्वा नित्यं व्यायामः । शीतोष्णसहा भिक्षवो न च हानिर्वाचनादिकाः ॥१॥ ] इत्येकोऽतिशयः, तथाऽन्तः—मध्ये उपाश्रयस्य उच्चारं—पुरीषं प्रश्रवणं—मूत्रं विवेचयन्—सर्वं परिष्ठापयन्

विशोधयन्-पादादिलग्नस्य निरवयवत्वं कुर्वन् शौचभावेन वेति, अथवा सकृद्विवेचनं बहुशो विशोधनं, उक्तं च—"सव्वस्स छड्डण विगिंचणा उ पुयपादहत्थलग्गस्स। फुसणधुवणा विसोहण सइं च बहुसो य नाणत्तं ॥१॥" इति. [पुतपादहस्तलग्नस्य सर्वस्य त्यजनं विवेचनं स्पर्शने धावनं विशोधनं सकृद्बहुशश्चेति नानात्वं ॥१॥] नातिक्रामति, इह च भावार्थ एवं—आचार्यो नोत्सर्गतो विचारभूमिं गच्छति दोषसम्भवात्, तथाहि—श्रुतवानयमित्यादिगुणतः पूर्वं वीथिषु वणिजो बहुमानादभ्युत्थानादि कृतवन्तस्ततो विचारभूमौ सकृत्कृतिर्गाऽन्यानस्य गमने आलस्यात्तन्न कुर्वन्ति पराङ्मुखाश्च भवन्ति, एतच्चेतरे दृष्ट्वा शङ्कन्ते—यदुतायमिदानीं पतितो वणिजानामभ्युत्थानाद्यकरणादित्येवं मिथ्यात्वगमनादयो दोषाः, उक्तं च—"सुयवं तवस्सि परिवारवं च वणियंतरावणुट्ठाणे। (अंतरापणो वीथी), दुट्ठाणनिग्गमंमि य (द्विर्निर्गमे) हाणी य (विनयस्य) परंमुहाऽवन्नो ॥१॥" [श्रुतवांस्तपस्वी परिवारवांश्चेति वणिजोऽन्तरापणे उत्थाने (प्रायनिगत) द्विर्निर्गमे च हानिर्विनयस्य पराङ्मुखेऽवर्णः ॥१॥] [अवर्णो नूनं द्विर्भुङ्क्ते इति] गुणवंत जतो वणिया पूइंतऽन्ने निग्गया तंमि। पडिओत्ति अणुट्ठाणे (अनुत्थाने) दुविहनियत्ती अभिमुहाणं ॥१॥" [यतो वणिजो गुणवतः पूजयन्ति अन्यानपि संज्ञार्थं यान्तः पतित इत्यनुत्थानेऽभिमुखानां निवृत्तिर्द्विविधा ॥१॥] (श्रावकत्वप्रव्रजितत्वाभ्यां निवृत्तिरिति) तथा मत्सरिभ्यः सकाशान्मरणबन्धनापभ्राजनादयोऽन्येऽपि व्यवहारभाष्यादवगन्तव्या इति द्वितीयोऽतिशयः, तथा प्रभुः—समर्थः इच्छा—अभिलाषो वैयावृत्त्यकरणे यदि भवेत्तदा वैयावृत्त्यं—भक्तपानगवेषणग्रहणतः साधुभ्यो दानलक्षणं कुर्यात्, अथेच्छा—अभिलापस्तदकरणे तन्न कुर्यादिति. भावार्थस्त्वयं—आचार्यस्य भिक्षाभ्रमणं न कल्पते, यतोऽवाचि—"उप्पन्ननाणा जह नो अडंति, चोत्तीसबुद्धाइसया जिणिंदा। एवं गणी अट्ठगुणोववेओ, सत्था व नो हिंडइ इड्ढिमं तु ॥१॥" [चतुस्त्रिंशद्बुद्धातिशया जिनेन्द्रा यथा न भिक्षामटन्ति एवमष्टगुणो-

पपेतो गण्यपि शास्ता इव ऋद्धिमान्नो हिंडते ॥१॥ ] दोषास्त्वमी—"भारेण वेदणा वा हिंडंते उच्चनीयसासो वा। आइयणछड्डणाइं (प्रचुरपानकादेरापानादौ छर्द्यादयो) गेलन्न पोरिसीभंगो ॥१॥" इति, [भारेण वेदना हिंडमाने उच्चनीचश्वासो वा। आदाने पानकच्छर्दनाद्याः ग्लानत्वे पौरुषीभङ्गश्च ॥१॥ ] एवमादयोऽनेके दोषा व्यवहारभाष्योक्ताः समवसेयाः, एते च सामान्यसाधोरपि प्रायः समानास्तथापि गच्छस्य तीर्थस्य वा महोपकारित्वेन रक्षणीयत्वेनाचार्यस्यायमतिशय उक्तः, उक्तं च—"जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खिज्जा। न हु तुंबंमि विणट्ठे अरया साहारया होंति ॥१॥" त्ति [ यस्यायत्तं कुलं तं पुरुषं आदरेण रक्षयेत् नेमौ विनष्टायां साधारका अरका नैव भवन्ति ॥१॥ ] तृतीयः, तथा अन्तरुपाश्रय एका चासौ रात्रिश्चेत्येकरात्रं तद्वा द्वयो रात्र्योः समाहारो द्विरात्रं तद्वा, विद्यादिसाधनार्थमेकाकी एकान्ते वसन्नातिक्रामति, तत्र तस्य वक्ष्यमाणदोषासम्भवाद्, अन्यस्य तु तद्भावादिति चतुर्थः, एवं पञ्चमोऽपि, भावार्थश्चायमनयोः–अन्तरुपाश्रयस्य वक्षारके विष्वग्वसति बहिर्वोपाश्रयस्य शून्यगृहादिषु वसति यदि तदा असामाचारी, दोषाश्चैते–पुंवेदोपयोगेन जनरहिते हस्तकर्मादिकरणेन संयमे भेदो भवति, मर्यादा मया लङ्घितेति निर्वेदेन वैहायसादिमरणं च प्रतिपद्यत इति, इह गाथा—"तब्भावुवओगेणं रहिए कंमादि संजमे भेदो। मेरा व लंघिया मे वेहाणसमादि निव्वेया ॥१॥ जइवि य निग्गयभावो तहावि रक्खिज्जइ स अन्नेहिं। वंसकडिल्लेवि छिन्नोऽवि वेणुओ पावए न महिं ॥२॥ वीसुं वसओ दप्पा गणियायरिए य होइ एमेव। सुत्तं पुण कारणियं भिक्खुस्सवि कारणेऽणुन्ना ॥३॥ विज्जाणं परिवाडिं पव्वे पव्वे करेंति आयरिया। दिट्ठंतो महपाणे अन्तो बाहिं च वसहीए ॥४॥" इति, [ जनरहिते तद्भावोपयोगेन कर्मादिना संयमभेदः। मया मर्यादा लंघितेति निर्वेदाद्वैहायसादि ॥१॥ यद्यपि च निर्गतभावस्तथापि सोऽन्यैः। रक्ष्यते वंशसमुदाये छिन्नोऽपि वेणुर्न प्राप्नोति महीं ॥२॥ विष्वक् वसतो दर्पात् गण्या-

चार्यगोर्भगवेयमेव । सूत्रं पुनः कारणिकं भिक्षोरपि कारणेऽनुज्ञा ॥३॥ आचार्याः पर्वणि पर्वणि विद्यानां परिपाटीं कुर्वन्ति । दृष्टान्तो महाप्राणेन अन्वयेऽहिश्च नमत्याः ॥४॥]

आचार्यस्य गणे अतिशया उक्ताः, अधुना तस्यैवातिशयविपर्ययभूतानि गणान्निर्गमनकारणान्याह—

पंचहिं ठाणेहिं आयरियउवज्झायस्स गणावक्कमणे पं० तं०—आयरियउवज्झाए गणंसि आणं वा धारणं वा नो सम्मं पउंजित्ता भवति १ आयरियउवज्झाए गणंसि अधारायणियाते कितिकम्मं वेणइयं णो सम्मं पउंजित्ता भवति २ आयरियउवज्झाते गणंसि जे सुयपज्जवजाते धारिंति ते काले नो सम्ममणुपवादेत्ता भवति ३ आयरियउवज्झाए गणंसि सगणिताते वा परगणियाते वा निग्गंथीते बहिल्लेसे भवति ४ मित्ते णातीगणे वा से गणातो अवक्कमेज्जा तेसिं संगहोवग्गहट्ठयाते गणावक्कमणे पन्नत्ते ५ (सू० ४३९) पंचविहा इड्ढीमंता मणुस्सा पं० तं०—अरहंता चक्कवट्टी बलदेवा वासुदेवा भावियप्पाणो अणगारा (सू० ४४०) पंचमट्ठाणस्स बिइओ उद्देसो।

'पंचही'त्यादि सुगमं, नवरं आचार्योपाध्यायस्य आचार्योपाध्याययोर्वा गणाद्-गच्छात् अपक्रमणं-निर्गमो गणापक्रमणं आचार्योपाध्यायो 'गणे' गच्छविषये 'आज्ञां वा' योगेषु प्रवर्त्तनलक्षणां धारणां वा-विधेयेषु निवर्त्तनलक्षणां, 'नो' नैव सम्यग्-यथौचित्यं प्रयोक्ता-तयोः प्रवर्त्तनशीलो भवति, इदमुक्तं भवति-दुर्विनीतत्वाद् गणस्य ते प्रयोक्तुमशक्नुवन् गणादपक्रामति कालिकाचार्यवदिति एकं, तथा गणविषये यथारत्नाधिकतया-यथाज्येष्ठं कृतिकर्म्म तथा वैनयिकं-विनयं 'नो' नैव सम्यक् प्रयोक्ता भवति,

आचार्यसम्पदा साभिमानत्वात्, यतः आचार्येणापि प्रतिक्रमणक्षामणादिषूचितानामुचितविनयः कर्त्तव्य एवेति द्वितीयं, तथा असौ यानि श्रुतपर्यवजातानि–यान् श्रुतपर्यायप्रकारानुद्देशकाध्ययनादीन् धारयति हृद्यविस्मरणतस्तानि काले २–यथाऽवसरे नो सम्यगनुगवाचयिता–तेषां पाठयिता भवति, 'गणे'त्ति इह सम्बध्यते, तेन गणे–गणविषये गणमित्यर्थः, तस्याविनीतत्वात् तस्य वा सुखलम्पटत्वान्मन्दप्रज्ञत्वाद्वेति गणादपक्रामतीति तृतीयं, तथा असौ गणे वर्त्तमानः 'सगणियाए'त्ति स्वगणसम्बन्धिन्यां 'परगणियाए'त्ति परगणसत्कायां निर्ग्रन्थ्यां तथाविधाशुभकर्मवशवर्त्तितया सकलकल्याणाश्रयसंयमसौधमध्याद् बहिर्लेश्या–अन्तःकरणं यस्यासौ बहिर्लेश्यः, आसक्तो भवतीत्यर्थः, एवं गणादपक्रामतीति, न चेदमधिकगुणत्वेन अस्यासम्भाव्यं, यतः पठ्यते—"कम्माइं नूणं घणचिक्कणाइं गरुयाइं वज्जसाराइं। नाणड्ढयंपि पुरिसं पंथाओ उप्पहं निंति ॥१॥" [गुरुकाणि वज्रसाराणि चिक्कणानि कर्माणि घनानि ज्ञानाढ्यमपि पुरुषं नूनं पथ उत्पथं नयंति ॥१॥] इति चतुर्थं, तथा मित्रज्ञातिगणो वा–सुहृत्स्वजनवर्गो वा 'से' तस्याचार्यादेः कुतोऽपि कारणाद् गणादपक्रामेदतस्तेषां सुहृत्स्वजनानां सङ्ग्रहाद्यर्थं गणादपक्रमणं प्रज्ञप्तं, तत्र सङ्ग्रहस्तेषां स्वीकारः, उपग्रहो वस्त्रादिभिरुपष्टम्भ इति पञ्चमं। अनन्तरमाचार्यस्य गणापक्रमणमुक्तं, स च ऋद्धिमन्मनुष्यविशेष इत्यधिकाराद् ऋद्धिमन्मनुष्यविशेषानाह—'पंचविहे'-त्यादि कण्ठ्यं, नवरं ऋद्धिः–आमर्षौषध्यादिका सम्पत्, तद्यथा–आमर्षौषधिर्विप्रुडोषधिः खेलौषधि(र्जल्लौषधि)र्जल्लो–मलः सर्वौषधिः आसीविषत्वं–शापानुग्रहसामर्थ्यमित्यर्थः आकाशगामित्वमक्षीणमहानसिकत्वं वैक्रियकरणमाहारकत्वं तेजोनिसर्जनं पुलाकत्वं क्षीराश्रवत्वं मध्वाश्रवत्वं सर्पिराश्रवत्वं कोष्ठबुद्धिता बीजबुद्धिता पदानुसारिता सम्भिन्नश्रोतृत्वं–युगपत्सर्वशब्दश्रावितेत्यर्थः, पूर्वधरता अवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानं अर्हत्ता गणधरता चक्रवर्त्तिता बलदेवता वासुदेवता चेत्येवमादिका, उक्तं च—"उदयखयखओव-

गमोवसमसमुत्था बहुप्पगाराओ। एवं परिणामवसा लद्धीओ होंति जीवाणं ॥१॥" इति, [उदयक्षयक्षयोपशमोपशमसमुत्था बहुप्रकाराः परिणामवशाज्जीवानां लब्धय एवं भवन्ति ॥१॥] तदेवंरूपा प्रचुरा-प्रशस्ता अतिशायिनी वा ऋद्धिर्विद्यते येषां ते ऋद्धिमन्तः भावितः-ज्ञानतया भावितः आत्मा यैस्ते भावितात्मानोऽनगारा इति, एतेषां च ऋद्धिमत्त्वमामर्षौषध्यादिभिरर्हदादीनां तु चतुर्णां यथासम्भवमामर्षौषध्यादिनाऽर्हत्त्वादिना चेति ॥

पञ्चमस्थानकस्य विवरणतो द्वितीयोद्देशकः समाप्त इति ॥

---

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीय आरभ्यते, अस्य चायमभिसम्बन्धः-अनन्तरोद्देशके जीवधर्म्माः प्रायः प्ररूपिताः, इह त्वजीवजीवधर्मा उच्यन्ते, इत्येवंसम्बन्धस्यास्येदमादिसूत्रम्—

पंच अत्थिकाया पं० तं०—धम्मत्थिकाते अधम्मत्थिकाते आगासत्थिकाते जीवत्थिकाते पोग्गलत्थिकाए, धम्मत्थिकाए अवन्ने अगंधे अरसे अफासे अरूवी अजीवे सासए अवट्ठिए लोगदव्वे, से समासओ पंचविधे पं० तं०—दव्वओ खित्तओ कालओ भावओ गुणओ, दव्वओ णं धम्मत्थिकाए एगं दव्वं खेत्ततो लोगपमाणमेत्ते कालओ ण कयाति णासी न कयाइ न भवति ण कयाइ ण भविस्सइत्ति भुविं भवति य भविस्सति त धुवे णितिते सासते अक्खए अव्वते अवट्ठिते णिचे भावतो अवन्ने अगंधे अरसे अफासे गुणतो गमणगुणे य १।

अधम्मत्थिकाए अवन्ने एवं चेव, णवरं गुणतो ठाणगुणो २। आगासत्थिकाए अवन्ने एवं चेव, णवरं खेत्तओ लोगालोगपमाणमित्ते गुणतो अवगाहणागुणे, सेसं तं चेव ३। जीवत्थिकाए णं अवन्ने एवं चेव, णवरं दव्वओ णं जीवत्थिगाते अणंताइं दव्वाइं, अरूवि जीवे सासते, गुणतो उवओगगुणे सेसं तं चेव ४। पोग्गलत्थिगाते पंचवन्ने पंचरसे दुग्गंधे अट्ठफासे रूवी अजीवे सासते अवट्ठिते जाव दव्वओ णं पोग्गलत्थिकाए अणंताइं दव्वाइं खेत्तओ लोगपमाणमेत्ते कालतो ण कयाइ णासि जाव णिच्चे भावतो वन्नमंते गंधमंते रसमंते फासमंते, गुणतो गहणगुणे (सू० ४४१)। पंच गतीतो पं० तं०—निरयगती तिरियगती मणुयगती देवगती सिद्धिगती (सू० ४४२)।

'पंचे'त्यादि, अस्य चायमभिसम्बन्धः—अनन्तरसूत्रे जीवास्तिकायविशेषा ऋद्धिमन्त उक्ताः इह त्वसंख्येयानन्तप्रदेशलक्षणऋद्धिमन्तः समस्तास्तिकाया उच्यन्त इत्येवंसम्बन्धस्यास्य व्याख्या प्रथमाध्ययनवदनुसर्त्तव्या, नवरं धर्मास्तिकायादयः किमर्थमित्थमेवोपन्यस्यंत इति, उच्यते, धर्मास्तिकायादिपदस्य माङ्गलिकत्वात् प्रथमं धर्मास्तिकायोपन्यासः पुनर्द्धर्मास्तिकायप्रतिपक्षत्वादधर्मास्तिकायस्य पुनस्तदाधारत्वादाकाशास्तिकायस्य पुनस्तदाधेयत्वाज्जीवास्तिकायस्य पुनस्तदुपग्राहकत्वात् पुद्गलास्तिकायस्येति, धर्म्मास्तिकायादीनां क्रमेण स्वरूपमाह—'धम्मत्थिकाए'त्यादि वर्णगन्धरसस्पर्शप्रतिषेधाद् 'अरूवि'त्ति रूपं—मूर्तिर्वर्णादिमत्त्वं तदस्यास्तीति रूपी न रूपी अरूपी अमूर्त्त इत्यर्थः, तथा अजीवः—अचेतनः, शाश्वतः प्रतिक्षणं सत्ताऽऽलिङ्गितत्वादवस्थितः अनेन रूपेण नित्यत्वादिति, लोकस्यांशभूतं द्रव्यं लोकद्रव्यं, यत उक्तम्—"पंचत्थिकायमइयं लोगमणाइनिहणं।" इति, [पञ्चास्तिकायमयं लोकमनादिनिधनं] अथैतत्स्वरूपस्योक्तस्य प्रपञ्चनायानुक्तस्य चाभिधानायाह—'समासतः' संक्षेपतः पञ्चविधो, विस्तरस्त्वन्यथापि स्यात्, कथमित्याह—

'द्रव्यतो' द्रव्यतामधिकृत्य 'क्षेत्रतः' क्षेत्रमाश्रित्य एवं कालतो भावतश्च 'गुणतः' कार्यतः कार्यमाश्रित्येत्यर्थः, तत्र द्रव्यतोऽसावेकं द्रव्यं तथाविधैकपरिणामादेकसंख्याया एवेह भावात्, क्षेत्रतो लोकस्य प्रमाणं लोकप्रमाणं—असंख्येयाः प्रदेशास्तत्परिमाणमस्येति लोकप्रमाणमात्रः, कालतो न कदाचिन्नासीदित्यादि कालत्रयनिर्देशः, एतदेव सुखार्थं व्यतिरेकेणाह—अभूच्च भवति च भविष्यति चेति, एवं त्रिकालभावित्वाद् ध्रुवो, मा भूदेकसर्गापेक्षयैव ध्रुवत्वमिति सर्वदैवंभावान्नियतो, मा भूदनेकसर्गापेक्षयैव नियतत्वमिति प्रलयाभावात् शाश्वतः, एवं सदाभावेनाक्षयः, पर्यायापगमेऽप्यनन्तपर्यायतयाऽव्ययः, एवमुभयरूपतया अवस्थितः, अनेन प्रकारेणौघतो नित्य इति पूर्वव्याख्या. अथवा यत एव त्रैकालिकोऽसावत एव ध्रुवोऽवश्यंभावित्वादादित्योदयवत्, नियत एकरूपत्वात्, शाश्वतः प्रतिक्षणं सत्त्वादत एवाक्षयोऽव्ययविद्रव्यापेक्षया अक्षतो वा परिपूर्णत्वात्, अव्ययोऽवयवापेक्षया अवस्थितो निश्चलत्वात्, तात्पर्यमाह—नित्य इति, अथवा इन्द्रशक्रादिशब्दवत्पर्यायशब्दा ध्रुवादयो नानादेशजविनेयप्रतिपत्त्यर्थमुपन्यस्ता इति, तथा गुणतः गमनं—गतिस्तद् गुणो गतिपरिणामपरिणतानां जीवपुद्गलानां सहकारिकारणभावतः कार्यं मत्स्यानां जलस्येव यस्यासौ गमनगुणो गमने वा गुणः—उपकारो जीवादीनां यस्मादसौ गमनगुण इति, "एवं चेव'त्ति यथा धर्मास्तिकायोऽधीत एवमधर्मास्तिकायोऽपीति, नवरं केवलमेतावान् विशेषो यदुत—'ठाणगुणे'त्ति स्थानं—स्थितिर्गुणः—कार्यं यस्य स स्थानगुणः, स हि स्थितिपरिणतानां जीवादीनामपेक्षाकारणतया स्थानं कार्यं करोति स्थाने वा—स्थितौ गुणः—उपकारो यस्मात् स तथा, 'लोगालोगे'त्यादि लोकालोकयोस्तन्व्यक्त्योर्यत्प्रमाणं—अनन्ताः प्रदेशास्तदेव परिमाणमस्येति लोकालोकप्रमाणमात्रः, अवगाहना—जीवादीनामाश्रयो गुणः—कार्यं यस्य तस्यां वा गुणः—उपकारो यस्मात्सोऽवगाहनागुणः, 'अणंताइं दव्वाइं'ति अनन्ता जीवास्तेषां च प्रत्येकं द्रव्यत्वादिति, 'अरूवी जीवे'त्ति जीवास्तिकायोऽमूर्त्तस्तथा चेतना-

वानिति, उपयोगः—साकारानाकारभेदं चैतन्यं गुणो—धर्म्मो यस्य स तथा, शेषं तदेव यदधर्म्मास्तिकायादीनामिति, लोकप्रमाणो जीवास्तिकायः पुद्गलास्तिकायश्च, तयोस्तत्रैव भावादिति, 'गहणगुणे'त्ति ग्रहणं—औदारिकशरीरादितया ग्राह्यता इन्द्रियग्राह्यता वा वर्णादिमत्त्वात् परस्परसम्बन्धलक्षणं वा तद्गुणो—धर्म्मो यस्य स तथा । अनन्तरमस्तिकाया उक्ता इति तद्विशेषस्य जीवास्तिकायस्य सम्बन्धिवस्तून्याह—अध्ययनपरिसमाप्तिं यावदिति महासम्बन्धः, तत्र 'पंचे'त्यादि गतिसूत्रं कण्ठ्यं, नवरं गमनं गति १ गम्यत इति वा गतिः क्षेत्रविशेषः २ गम्यते वा अनया कर्म्मपुद्गलसंहत्येति गतिः—नामकर्मोत्तरप्रकृतिरूपा ३ तत्कृता वा जीवावस्थेति ४, तत्र निरये—नरके गति ४[1] निरयश्चासौ गतिश्चेति वा २ निरयप्रापिका वा गतिः ३ निरयगतिः, एवं तिर्यक्षु ४[1] तिरश्चां २ तिर्यक्त्वप्रसाधिका वा गति ३ स्तिर्यग्गतिः, एवं मनुष्यदेवगती, सिद्धौ गतिः सिद्धिश्चासौ गतिश्चेति वा सिद्धिगतिः, गतिरिह नामप्रकृतिर्नास्तीति ।

अनन्तरं सिद्धिगतिरुक्ता, सा चेन्द्रियार्थान् कषायादींश्चाश्रित्य मुण्डितत्वे सति भवतीतीन्द्रियार्थानिन्द्रियकषायादिमुण्डांश्चाभिधित्सुः सूत्रत्रयमाह—

**पंच इंदियत्था पं० तं०—सोतिंदियत्थे जाव फासिंदियत्थे १ । पंच मुंडा पं० तं०—सोतिंदियमुंडे जाव फासिंदियमुंडे २, अहवा पंच मुंडा पं० तं०—कोहमुंडे माणमुंडे मायामुंडे लोभमुंडे सिरमुंडे ३ (सू० ४४३) अहेलोगे णं पंच बायरा पं० तं०—पुढविकाइया आउ० वाउ० वणस्सइ ओराला तसा पाणा १, उड्ढलोगे णं पंच**

१ व्युत्पत्तिचतुष्कग्रहणसूत्रणाय चतुष्कः, आद्ये रत्नप्रभाद्यामाश्रित्य गमनं द्वितीये तत्क्षेत्रविषये तृतीये नरकावस्थाया हेतुः कर्म तुर्ये नरकभवः.

थावरा पं० तं०—एवं तं चेव २, तिरियलोगे णं पंच थावरा पं० तं०—एगिंदिया जाव पंचिंदिता ३। पंचविधा बायरतेउकाइया पं० तं०—इंगाले जाला मुम्मुरे अच्ची अलाते १, पंचविधा बादरवाउकाइया पं० तं०—पाईणवाते पडीणवाते दाहिणवाते उदीणवाते विदिसवाते २, पंचविधा अचित्ता वाउकाइया पं० तं०—अक्कंते धंते पीलिए सरीराणुगते संमुच्छिमे ३ (सू० ४४४)।

'पंचे'त्यादि सुगमं, नवरं इन्दनादिन्द्रो—जीवः सर्वविषयोपलब्धिभोगलक्षणपरमैश्वर्ययोगात् तस्य लिङ्गं तेन दृष्टं सृष्टं जुष्टं दत्तमिति वा इन्द्रियं—श्रोत्रादि, तच्चतुर्विधं नामादिभेदात्, तत्र नामस्थापने सुज्ञाने, निर्वृत्त्युपकरणे द्रव्येन्द्रियं, लब्ध्युपयोगौ भावेन्द्रियं, तत्र निर्वृत्तिराकारः, सा च बाह्याऽभ्यन्तरा च, तत्र बाह्या अनेकप्रकारा, अभ्यन्तरा पुनः क्रमेण श्रोत्रादीनां कदम्बपुष्प १ धान्यमसूरा २ तिमुक्तकपुष्पचन्द्रिका ३ क्षुरप्र ४ नानाप्रकार ५ संस्थाना, उपकरणेन्द्रियं विषयग्रहणे सामर्थ्यं, छेद्यच्छेदने खड्गस्येव धारा. यस्मिन्नुपहते निर्वृत्तिसद्भावेऽपि विषयं न गृह्णातीति, लब्धीन्द्रियं यस्तदावरणक्षयोपशमः, उपयोगेन्द्रियं यः स्वविषये व्यापार इति, इह च गाथाः—"इंदो जीवो सव्वोवलद्धिभोगपरमेसरत्तणओ। सोत्तादिभेदमिंदियमिह तल्लिंगादिभावाओ ॥१॥ तन्नामादि चउद्धा दव्वं निव्वत्तिओवकरणं च। आकारो निव्वत्ती चित्ता वज्झा इमा अंतो ॥२॥ पुप्फं कलंबुयाए धन्नमसूराऽतिमुत्तचंदो य। होइ खुरप्पो नाणागिई य सोइंदियाईणं ॥३॥ विसयग्गहणसमत्थं उवगरणं इंदियंतरं तंपि। जं नेह तदुवघाए गिण्हइ निव्वित्तिभावेवि॥४॥ लद्धुवओगा भाविंदियं तु लद्धित्ति जो खओवसमो। होइ तयावरणाणं तल्लाभे चेव सेसंपि ॥५॥ जो सविसयवावारो सो उवओगो स एगकालम्मि। एगेण चेव तम्हा उवओगेगिंदिओ सव्वो ॥६॥ एगिंदियादिभेदा पडुच्च सेसिंदियाइं जीवाणं। अहवा पडुच्च लद्धिंदि-

'पि पंचिंदिया सव्वे ॥७॥ जं किर बउलाईणं दीसइ सेसिंदिओवलंभोवि । तेणऽत्थि तदावरणक्खओवसमसंभवो तेसिं ॥७॥ इति, [सर्वोपलब्धिभोगपरमैश्वर्यत्वादिन्द्रो जीवः तल्लिंगादिभावादिंद्रियमिह श्रोत्रादिभेदम् ॥१॥ तन्नामादिभेदेन चतुर्द्धा निर्वृत्तिरुपकरणं च द्रव्यं आकारो निर्वृत्तिः बाह्या चित्रा अंतरिमा ॥२॥ कलंबुकायाः पुष्पं मसूरीधान्यं अतिमुक्तकपुष्पचन्द्रः भवति क्षुरप्रो नानाकृतिश्च श्रोत्रेन्द्रियादीनाम् ॥३॥ विषयग्रहणसमर्थमुपकरणमिन्द्रियान्तरं तदपि यन्नेह तदुपघाते निर्वृत्तिभावेऽपि गृह्णाति ॥४॥ लब्ध्युपयोगौ भावेन्द्रियमेव यः तदावरणानां क्षयोपशमो भवति स लब्धिः तल्लाभे एव शेषाण्यपि ॥५॥ यः स्वविषयव्यापारः स उपयोगः स चैककाले एकेनैव तस्मादुपयोगेनैकेन्द्रियः सर्वः ॥६॥ एकेन्द्रियादयो भेदाः शेषाणीन्द्रियाणि प्रतीत्य जीवानां अथवा लब्धीन्द्रियं प्रतीत्य सर्वेऽपि पंचेन्द्रियाः ॥७॥ यत्किल बकुलादीनां शेषेन्द्रियोपलम्भोऽपि दृश्यते तेन तेषां तदावरणक्षयोपशमसम्भवोऽप्यस्ति ॥८॥] अर्थ्यन्ते-अभिलष्यन्ते क्रियार्थिभिरर्यन्ते वा-अधिगम्यन्त इत्यर्था इन्द्रियाणामर्थाः इन्द्रियार्थाः-तद्विषयाः शब्दादयः, श्रूयतेऽनेनेनि श्रोत्रं, तच्च तदिन्द्रियं च श्रोत्रेन्द्रियं तस्यार्थो-ग्राह्यः श्रोत्रेन्द्रियार्थः-शब्दः, एवं क्रमेण रूपगन्धरसस्पर्शाश्चक्षुराद्यर्था इति। मुण्डनं मुण्डः-अपनयनं, स च द्वेधा-द्रव्यतो भावतश्च, तत्र द्रव्यतः शिरसः केशापनयनं, भावतस्तु चेतस इन्द्रियार्थगतप्रेमाप्रेम्णोः कषायाणां वाऽपनयनमिति मुण्डलक्षणधर्मयोगात् पुरुषो मुण्ड उच्यते, तत्र श्रोत्रेन्द्रिये श्रोत्रेन्द्रियेण वा मुण्डः,पादेन खञ्ज इत्यादिवत् श्रोत्रेन्द्रियमुण्डः शब्दे रागादिखण्डनाच्छ्रोत्रेन्द्रियार्थमुण्ड इति भाव इत्येवं सर्वत्र, तथा क्रोधे मुण्डः क्रोधमुण्डस्तच्छेदनादेवमन्यत्रापि, तथा शिरसि शिरसा वा मुण्डः

१ यद्यपि 'यद्भेदैस्तद्वदाख्ये'ति २-२-४६ श्रीसिद्धहेमचन्द्रानुगतयाऽत्र न विरोधस्तथापि पाणिनीयानुसारिणां स्याद्विरोधाभासः परं तत्रापि अप्रवृत्त्या अरञ्जनाद्वा विकृतता गम्या.

त्रिशेमुण्ड इति। इदं च मुण्डितत्वं बादरजीवविशेषाणां भवतीति लोकत्रयापेक्षया बादरजीवकायान् प्ररूपयन् सूत्रत्रयमाह–'अहे'त्यादि सुगमं नवरमधऊर्द्ध्वलोकयोस्तेजसा बादरा न सन्तीति पंच ते उक्ताः, अन्यथा षट् स्युरिति, अधोलोकग्रामेषु ये बादरास्तैजसास्ते अल्पतया न विवक्षिताः, ये चोर्द्ध्वकपाटद्वये ते उत्पत्तुकामत्वेनोत्पत्तिस्थानास्थितत्वादिति, 'ओरालतस'त्ति त्रसत्वं तेजोवायुष्वपि प्रसिद्धं अतस्तद्व्यवच्छेदेन द्वीन्द्रियादिप्रतिपत्त्यर्थमोरालग्रहणं, ओरालाः–स्थूला एकेन्द्रियापेक्षयेति, एकमिन्द्रियं–करणं स्पर्शनलक्षणमेकेन्द्रियज्ञानिनामकर्मोदयात्तदावरणक्षयोपशमाच्च येषां ते एकेन्द्रियाः–पृथिव्यादयः, एवं द्वीन्द्रियादयोऽपि, नवरमिन्द्रियविशेषो जातिविशेषश्च वाच्य इति। एकेन्द्रिया इत्युक्तमिति तान् पञ्चस्थानकानुपातिनो विशेषतः सूत्रत्रयेणाह–'पंचविहे'त्यादि, अङ्गारः प्रतीतः ज्वाला–अग्निशिखा छिन्नमूला सैवाच्छिन्नमूलाऽर्चिः मुर्म्मुरो–भस्ममिश्राग्निकणरूपः अलातं–उल्मुकमिति। प्राचीनवातः–पूर्ववातः प्रतीचीनः–पश्चिमः दक्षिणः प्रतीतः उदीचीनः–उत्तरः तदन्यस्तु विदिग्वात इति। आक्रान्ते पादादिना भूतलादौ यो भवति स आक्रान्तो यस्तु ध्माते दृत्यादौ स ध्मातः जलार्द्रवस्त्रे निष्पीड्यमाने पीडितः उद्गारोच्छ्वासादिः शरीरानुगतः व्यजनादिजन्यः सम्मूर्च्छिमः, एते च पूर्वमचेतनास्ततः सचेतना अपि भवन्तीति।

एवं पञ्चेन्द्रिया उक्ता इति पञ्चेन्द्रियविशेषानाह, अथवा अनन्तरं सचेतनाचेतना वायव उक्ताः, तांश्च रक्षन्ति निग्रन्था एवेति तानाह—

पंच निग्गंथा पं० तं०—पुलाते बउसे कुसीले णिग्गंथे सिणाते १, पुलाए पंचविहे पं० तं०—णाणपुलाते

दंसणपुलाते चरित्तपुलाते लिंगपुलाते अहासुहुमपुलाते नामं पंचमे २, बउसे पंचविधे पं० तं०—आभोगबउसे अणाभोगबउसे संवुडबउसे असंवुडबउसे अहासुहुमबउसे नामं पंचमे ३, कुसीले पंचविधे पं० तं०—णाणकुसीले दंसणकुसीले चरित्तकुसीले लिंगकुसीले अहासुहुमकुसीले नामं पंचमे ४, नियंठे पंचविहे पं० तं०—पढमसमयनियंठे अपढमसमयनियंठे चरिमसमयनियंठे अचरिमसमयनियंठे अहासुहुमनियंठे ५, सिणाते पंचविधे पं० तं०—अच्छवी १ असबले २ अकम्मंसे ३ संसुद्धणाणदंसणधरे अरहा जिणे केवली ४ अपरिस्सावी ५, ६ (सू० ४४५)।

'पंच नियंठे'त्यादि, सूत्रषट्कं सुगमं, नवरं ग्रन्थादाभ्यन्तरान्मिथ्यात्वादेर्बाह्याच्च धर्मोपकरणवर्जाद्धनादेर्निर्गता निर्ग्रन्थाः, पुलाकः—तदुलकणशून्या पलंजि तद्वद् यः तपःश्रुतहेतुकायाः सङ्घादिप्रयोजने चक्रवर्त्यादेरपि चूर्णनसमर्थायाः लब्धेरुपजीवनेन ज्ञानाद्यतिचारासेवनेन वा संयमसाररहितः स पुलाकः, अत्रोक्तम्—"जिनप्रणीतादागमात् सदैवाप्रतिपातिनो ज्ञानानुसारेण क्रियानुष्ठायिनो लब्धिमुपजीवन्तो निर्ग्रन्थपुलाका भवन्ती"ति, बकुशः शबलः कर्बुर इत्यर्थः, शरीरोपकरणविभूषानुवर्त्तितया शुद्ध्यशुद्धिव्यतिकीर्णचरण इति, अयमपि द्विविधः, यदाह—"मोहनीयक्षयं प्रति प्रस्थिताः शरीरोपकरणविभूषानुवर्त्तिनः—तत्र शरीरे अनागुप्तव्यतिकरेण करचरणवदनप्रक्षालनमक्षिकर्णनासिकाद्यवयवेभ्यो विदूषिकामलाद्यपनयनं दन्तपावनलक्षणं केशसंस्कारं च देहविभूषार्थमाचरन्तः शरीरबकुशाः, उपकरणबकुशास्तु अकाल एव प्रक्षालितचोलपट्टकान्तरकल्पादिचोक्षवासःप्रियाः पात्रदण्डकाद्यपि तैलमात्रयोज्ज्वलीकृत्य विभूषार्थमनुवर्त्तमाना बिभ्रति, उभयेऽपि च ऋद्धियशस्कामाः—तत्र ऋद्धिं प्रभूतवस्त्रपात्रादिकां ख्यातिं च गुणवन्तो विशिष्टाः साधव इत्यादि-

प्रवादरूपां कामयन्ते, सातगौरवमाश्रिताः नातीवाहोरात्राभ्यन्तरानुष्ठेयासु क्रियास्वभ्युद्यताः, अविविक्तपरिवाराः—नासंयमात् पृथग्भूतः घृष्टजङ्घः तैलादिकृतशरीरमृजः कर्त्तरिकाकल्पितकेशश्च परिवारो येषामिति भावः, बहुच्छेदशबलयुक्ताः—सर्वदेशच्छेदार्हातिचारजनितशबलत्वेन युक्ता निर्ग्रन्थबकुशा इति" तथा कुत्सितं उत्तरगुणप्रतिषेवया सञ्ज्वलनकषायोदयेन वा दूषितत्वात् शीलं—अष्टादशशीलाङ्गसहस्रभेदं यस्य स कुशील इति, एषोऽपि द्विविध एव, अत्राप्युक्तम्—"द्विविधाः कुशीलाः—प्रतिसेवनकुशीलाः कषायकुशीलाश्च, तत्र ये नैर्ग्रन्थ्यं प्रति प्रस्थिताः अनियतेन्द्रियाः कथञ्चित्किञ्चिदेवोत्तरगुणेषु—पिण्डविशुद्धिसमितिभावनातपःप्रतिमाभिग्रहादिषु विराधयन्तः सर्वज्ञाज्ञोल्लङ्घनमाचरन्ति ते प्रतिसेवनाकुशीलाः, येषां तु संयतानामपि सतां कथञ्चित्सञ्ज्वलनकषाया उदीर्यन्ते ते कषायकुशीलाः," निर्गतो ग्रन्थान्मोहनीयाख्यात् निर्ग्रन्थः क्षीणकषाय उपशान्तमोहो वा, क्षालितसकलघातिकर्ममलपटलत्वात् स्नात इव स्नातः स एव स्नातकः, सयोगोऽयोगो वा केवलीति। अधुनैत एव भेदत उच्यन्ते, तत्र पुलाक इत्यासेवापुलाकः पञ्चविधो, लब्धिपुलाकस्यैकविधत्वात्, तत्र स्खलितमिलितादिभिरतिचारैर्ज्ञानमाश्रित्यात्मानं असारं कुर्वन् ज्ञानपुलाकः, एवं कुदृष्टिसंस्तवादिभिर्दर्शनपुलाकः, मूलोत्तरगुणप्रतिसेवनातश्चरणपुलाकः, यथोक्तलिङ्गाधिकग्रहणात् निष्कारणेऽन्यलिङ्गकरणाद्वा लिङ्गपुलाकः, किञ्चित्प्रमादान्मनसाऽकल्प्यग्रहणाद्वा यथासूक्ष्मपुलाको नाम पञ्चम इति। बकुशो द्विविधोऽपि पञ्चविधः, तत्र शरीरोपकरणभूषयोः सञ्चिन्त्यकारी आभोगबकुशः, सहसाकारी अनाभोगबकुशः, प्रच्छन्नकारी संवृतबकुशः, प्रकटकारी असंवृतबकुशः, मूलोत्तरगुणाश्रितं वा संवृतासंवृतत्वं, किञ्चित्प्रमादी अक्षिमलाद्यपनयन् वा यथासूक्ष्मबकुशो नाम पञ्चम इति, कुशीलो द्विविधोऽपि पञ्चविधः, तत्र ज्ञानदर्शनचारित्रलिङ्गान्युपजीवन् प्रतिषेवणतो ज्ञानादिकुशीलो, लिङ्गस्थाने क्वचित्तपो दृश्यते, तथा अयं तपश्चरतीत्येवमनुमोद्यमानो हर्षं गच्छन् यथासूक्ष्मकुशीलः प्रतिषेवणयैवेति,

कषायकुशीलोऽप्येवं नवरं क्रोधादिना विद्यादिज्ञानं प्रयुञ्जानो ज्ञानकुशीलः, दर्शनग्रन्थं प्रयुञ्जानो दर्शनतः शापं ददत् चारित्रतः कषायैर्लिङ्गान्तरं कुर्वन् लिङ्गतः मनसा कषायान् कुर्वन् यथासूक्ष्मः। चूर्णिकारव्याख्या त्वेवम्—"सम्यगाराधनविपरीता प्रतिगता वा सेवना प्रतिसेवना, सा पञ्चसु ज्ञानादिषु येषां ते प्रतिसेवनाकुशीलाः, कषायकुशीलास्तु पञ्चसु ज्ञानादिषु येषां कषायैर्विराधना क्रियत इति। अन्तर्मुहूर्त्तप्रमाणाया निर्ग्रन्थाद्धायाः प्रथमे समये वर्त्तमान एकः शेषेषु द्वितीयः अन्तिमे तृतीयः शेषेषु चतुर्थः सर्वेषु पञ्चम इति विवक्षया भेद एषामिति। छविः—शरीरं तदभावात्काययोगनिरोधे सति अच्छविर्भवति अव्यथको वा १ निरतिचारत्वादशबलः २ क्षपितकर्म्मत्वादकर्म्मांश इति तृतीयः ३, ज्ञानान्तरेणासम्पृक्तत्वात् संशुद्धज्ञानदर्शनधरः पूजार्हत्वादर्हन् नास्य रहो—रहस्यमस्तीत्यरहा वा जितकषायत्वाज्जिनः, केवलं—परिपूर्णं ज्ञानादित्रयमस्यास्तीति केवलीति चतुर्थः ४, निष्क्रियत्वात्सकलयोगनिरोधे अपरिश्रावीति पञ्चमः, ५, क्वचित्पुनरर्हन् जिन इति पञ्चमः। अत्र भाष्यगाथाः—"होइ पुलाओ दुविहो लद्धिपुलाओ तहेव इयरो य। लद्धिपुलाओ संघाइकज्जे इयरो य पंचविहो ॥१॥ नाणे दंसण चरणे लिंगे अहसुहुमए य नायव्वो। नाणे दंसणचरणे तेसिं तु विराहण असारो ॥२॥ लिंगपुलाओ अन्नं निक्कारणओ करेइ सो लिंगं। मणसा अकप्पियाणं निसेवओ होइऽहासुहुमो ॥३॥ सारीरे उवकरणे वाउसियत्तं दुहा समक्खायं। सुक्किलवत्थाणि धरे देसे सव्वे सरीरंमि ॥४॥ आभोगमणाभोगे संवुडमस्संवुडे अहासुहुमे। सो दुविहो वा बउसो पंचविहो होइ नायव्वो ॥५॥ आभोगे जाणंतो करेइ दोसं तहा अणाभोगे। मूलुत्तरेहिं संवुड विवरीय असंवुडो होइ ॥६॥ अच्छिमुहं मज्जमाणो होइ अहासुहुमओ तहा बउसो। पडिसेवणा कसाए होइ कुसीलो दुहा एसो ॥७॥ नाणे दंसणचरणे तवे य अहसुहुमए य बोद्धव्वे। पडिसेवणाकुसीलो पंचविहो ऊ मुणेअव्वो ॥८॥ नाणादी उवजीवइ अहसुहुमो अह इमो मुणेयव्वो।

माइज्जंतो रागं वचइ एसो तवचरणी ॥९॥ [ एप तपश्चरणीत्येवमनुमोद्यमानो हर्षं व्रजतीत्यर्थः ) "एमेव कसायंमिवि पंचविहो चेव होइ कुसीलो उ। कोहेणं विज्जाई पउंजएमेव माणाई ॥१०॥" [ एवमेव मानादिभिरित्यर्थः ) "एमेव दंसणतवे सावं पुण देइ उ चरित्तंमि। मणगा कोहाईणं करेइ अह सो अहासुहुमो ॥११॥ पढमा १ पढमे २ चरम ३ अचरिमे ४ अहसुहुमे ५ होइ निग्गंथे। अच्छवि १ अस्सवले या २ अकम्म ३ संसुद्ध ४ अरहजिणा ५ ॥१२॥" इति, [ भवति पुलाको द्विविधो लब्धिपुलाकस्तथैवेतरश्च। लब्धिपुलाकः संघादिकार्ये इतरश्च पंचविधः ॥१॥ ज्ञाने दर्शने चारित्रे लिंगे यथासूक्ष्मश्च ज्ञातव्यः। ज्ञाने दर्शने चरणे तेषां विराधनयैवासारः ॥२॥ निष्कारणतो लिंगपुलाकोऽन्यद् लिंगं स करोति। मनसा अकल्पितानां निसेवको भवति यथासूक्ष्मः ॥३॥ शरीरे उपकरणे च बाकुशिकत्वं द्विधा समाख्यातं शुक्लवस्त्राणि धारयन् देशे सर्वस्मिन् शरीरे ॥४॥ आभोगोऽनाभोगः संवृतोऽसंवृतो यथासूक्ष्मः। स द्विविधो वा बकुशः पंचविधो भवति ज्ञातव्यः ॥५॥ आभोगो जानन् दोषं करोति तथाऽनाभोगः। मूलोत्तरगुणेषु संवृतः विपरीतोऽसंवृतो भवति ॥६॥ अक्षिमुखं मार्जयन् भवति यथासूक्ष्मस्तथा बकुशः। प्रतिसेवनाकषाययोर्भवति द्विधैषः कुशीलः ॥७॥ ज्ञाने दर्शने चरणे तपसि च यथासूक्ष्मश्च बोद्धव्यः। प्रतिसेवनाकुशीलः पंचविधस्तु ज्ञातव्यः ॥८॥ ज्ञानाद्युपजीवति अथैष यथासूक्ष्मो ज्ञातव्यो यो यं तपश्चारीति स्वादयन् रागं व्रजति ॥९॥ एवमेव कषायेऽपि पञ्चविधो भवति कुशीलस्तु। क्रोधेन विद्यादि प्रयुंक्ते एवमेव मानादिभिः ॥१०॥ एवमेव दर्शनतपसोः चारित्रे पुनः शापं ददाति। अथ मनसा क्रोधादीन् करोति स यथासूक्ष्मः ॥११॥ प्रथमोऽप्रथमः चरमोऽचरमो यथासूक्ष्मो भवति निर्ग्रन्थः अच्छविः अशबलः अकर्मा संशुद्धः अर्हज्जिनः ॥१२॥ ]

निर्ग्रन्थानामेवोपाधिविशेषप्रतिपादनाय सूत्रद्वयमाह—

कप्पइ णिग्गंथाण वा णिग्गंथीण वा पंच वत्थाइं धारित्तए वा परिहरेत्तते वा, तंजहा—जंगिते भंगिते साणते पोत्तिते तिरीडपट्टते णामं पंचमए। कप्पइ निग्गंथाण वा निग्गंथीण वा पंच रयहरणाइं धारित्तए वा परिहरित्ततें वा—तंजहा—उण्णिए उट्टिते साणते पच्चापिच्चियते मुंजापिच्चिते नामं पंचमए (सू० ४४६)।

'कप्पंती'त्यादि कण्ठ्यं, नवरं कल्पन्ते–युज्यन्ते धारयितुं परिग्रहे परिहर्तुं–आसेवितुमिति, अथवा 'धारणया उवभोगो परिहरणा होइ परिभोगो'त्ति, 'जंगिए'त्ति जङ्गमाः–त्रसास्तदवयवनिष्पन्नं जाङ्गमिकं–कम्बलादि, 'भंगिए'त्ति भंगा–अतसी तन्मयं भाङ्गिकं, 'साणए'त्ति सनसूत्रमयं सानकं, 'पोत्तिए'त्ति पोतमेव पोतकं–कार्प्पासिकं, 'तिरीडवट्टे'त्ति वृक्षत्वङ्मयमिति, इह गाथाः "जंगमजायं जंगिय तं पुण विगलिंदियं च पंचिंदिं। एक्केकंपि य इत्तो होइ विभागेण णेगविहं॥१॥ पट्टसुवन्ने मलए अंसुयचीणंसुए य विगलिंदी। उन्नोट्टियमियलोमे कुतवे किट्टी य पंचिंदी॥२॥ [जंगमाज्जातं जाङ्गमिकं तत्पुनर्विकलेन्द्रियजं पंचेन्द्रियजं च। इत एकैकमपि विभागेनानेकविधं भवति॥१॥ पट्टः सुवर्णं मलयं अंशुकं चीनांशुकं च विकलेन्द्रियजः और्णिकौष्ट्रिके मृगलोमजं कुतुपजं पंचेंद्रियं च॥१॥) (पट्टः प्रतीतः सुवर्ण–सुवर्णवर्णसूत्रं कृमिकाणां मलयं–मलयविष एव अंशुकं–श्लक्ष्णपट्टः चीनांशुकं कोशीरः चीनविषये वा यद्भवति श्लक्ष्णात्पट्टादिति मृगरोमजं–शशलोमजं मूषकरोमजं वा कुतपः–छागलं किट्टिजमेतेषामेवावयवनिष्पन्नमिति), "अयसी वंसीमाइय भंगियं साणयं तु सणवक्को। पोत्तं कप्पासमयं तिरीडरुक्खा तिरीडपट्टो॥१॥ [अतसीवंश्यादिजं भांगिकं सणवल्कलं तु साणकं कर्प्पासमयं पोतं तिरीडवृक्षात्तिरीडपट्टः॥१॥] इह पञ्चविधे वस्त्रे प्ररूपितेऽप्युत्सर्गतः कार्प्पासिकौर्णिके एव ग्राह्ये, यतोऽवाचि—"कप्पासिया उ दोन्नी उन्निय एको य परिभोगो।" इति, "कप्पासियस्स असई वागयपट्टो य कोसियारो य। असई

य उन्नियस्सा ग्गगय कोसेज्जपट्टो य ॥१॥" इति. [कार्पासिकस्यासति वल्वजपट्टश्च कोशिकारश्च। असति चौर्णिकस्य वल्वजः कौशेयपट्टश्च ॥१॥] तदप्यमहामूल्यमेव ग्राह्यं, महामूल्यता च पाटलीपुत्रीयरूपकाष्टादशकादारभ्य रूपकलक्षं यावदिति। रजो ह्रियते -अपनीयते येन तद्रजोहरणं, उक्तं च-"हरइ रयं जीवाणं वज्झं अब्भंतरं च जं तेणं। रयहरणंति पवुच्चइ कारणकज्जोवयाराओ ॥१॥" इति. [ह्रियते रजो जीवानां बाह्यमभ्यन्तरं च यत्तेन रजोहरणमित्युच्यते कारणे कार्योपचारात् ॥१॥] तत्र 'उन्नियं'ति अविलोममयं 'उट्टियं'ति उष्ट्रलोममयं 'सानकं' सनसूत्रमयं 'पच्चापिच्चियए'त्ति वल्वजः-तृणविशेषः तस्य 'पिच्चियं'ति कुट्टितत्वक् तन्मय 'मुञ्जः' शरपर्णीति, इह गाथाः—"पाउंछणयं दुविहं ओसग्गियमाववाइयं चेव। एक्केक्कंपि य दुविहं निव्वाघायं च वाघायं ॥१॥" (व्याघातवच्चितरदिति), औत्सर्गिकं रजोहरणं पट्टनिपद्याद्वययुक्तमापवादिकमनावृतदंडं, निर्व्याघातिकमौर्णिकदशिकं व्याघातिकं त्वितरदिति—"जं तं निव्वाघायं तं एगं उन्नियंति नायव्वं। (औत्सर्गिकश्च) उस्सग्गियवाघायं उट्टियसणपच्चमुंजं च ॥२॥ निव्वाघायववाइ दारुगदंडुण्णियाहिं दसियाहिं। अववाइय वाघायं उट्टीसणवच्चमुंजमयं ॥३॥" ति [पादप्रोञ्छनकं द्विविधमौत्सर्गिकमापवादिकं चैव एकैकमपि च द्विविधं निर्व्याघातं च व्याघातं ॥१॥ यत्तन्निर्व्याघातं तदेकं और्णिकमिति ज्ञातव्यं। औत्सर्गिकव्याघातिकमौष्ट्रिकं शणं वल्वजं मुंजं च ॥२॥ निर्व्याघातमपवादिकं दारुदण्डान्विताभिर्दशाभिः आपवादिकव्याघातं औष्ट्रिकवल्वमुंजमयं ॥३॥]

श्रमणानां यथा वस्त्ररजोहरणे धर्म्मोपग्राहके तथा पराण्यपि कायादीनि, तान्येवाह—

धम्मं चरमाणस्स पंच णिस्साथाणा पं० तं०—छक्काए गणे राया गिहवती सरीरं (सू० ४४७) पंच णिही पं०

तं०—पुत्तनिही मित्तनिही सिप्पनिही धणणिही धन्नणिही ( सू० ४४८ ) सोए पंचविहे पं० तं०--पुढविसोते आउसोते तेउसोते मंतसोते बंभसोते (सू० ४४९) ।

'धम्म'मित्यादि, धर्म्मं–श्रुतचारित्ररूपं, णमित्यलङ्कारे चरतः–सेवमानस्य पंच निश्रास्थानानि–आलम्बनस्थानानि उपग्रहहेतव इत्यर्थः, षट्कायाः–पृथिव्यादयः, तेषां च संयमोपकारिताऽऽगमप्रसिद्धा, तथाहि–पृथिवीकायमाश्रित्योक्तम्—"ठाणनिसीयतुयट्टण उच्चाराईण गहण निक्खेवे। घट्टगडगलगलेवो एमाइ पओयणं बहुहा ॥१॥" अप्कायमाश्रित्य–परिसेयपियणहत्थाइधोयणे चीरधोयणे चेव। आयमणभाणधुवणे एमाइ पओयणं बहुहा ॥२॥ [स्थानं निषीदनं त्वग्वर्त्तनं उच्चारादीनां ग्रहणे निक्षेपे घट्टके डगले लेपो बहुधैवमादिप्रयोजनं पृथ्व्याः ॥१॥ परिषेकः पानं हस्तादिधावनं चीरधावनं चैव आचमनं भांडधावनं बहुधैवमादिप्रयोजनमद्भिः ॥२॥] तेजःकायं प्रति–ओयण वंजणपाणग आयामुसिणोदगं च कुम्मासो। डगलगसरक्खसूइय पिप्पलमाई य उवओगो ॥३॥ वायुकायमधिकृत्य–दइएण बत्थिणा वा पओयणं होज्ज वाउणा मुणिणो। गेलन्नम्मिवि होज्जा सचित्तमीसे परिहरेज्जा ॥४॥ [ओदनं व्यञ्जनं पानकं आचाम उष्णोदकं च कुल्माषादिः डगलकाः भस्म सूचिश्च पिप्पलकमादि उपयोगः ॥३॥ दृतिकेन भस्त्रया प्रयोजनं भवेद्वायुना मुनेः ग्लानत्वेऽपि भवेत् सचित्तमिश्रौ परिहरेत् ॥४॥] वनस्पतिं प्रति–संथारपायदंडगखोमियकप्पा य पीठफलगाइ। ओसहभेसज्जाणि य एमाइ पओयणं तरुसु ॥५॥ त्रसकाये पञ्चेन्द्रियतिरश्च आश्रित्योक्तं–चम्मट्ठि दंतनहरोमसिंगअमिलाइछगणगोमुत्ते। खीरदहिमाइयाणं पंचेंदियतिरियपरिभोगे ॥६॥ [संस्तारकपात्रदण्डकक्षौमिककार्पासपीठफलकादिऔषधभैषज्यानि चैवमादि तरुषु प्रयोजनं ॥५॥ चर्म्मास्थिदन्तनखरोमशृंगाम्लान(अव्यादि) गोमयगोमूत्रैः क्षीरदध्यादिकैः पञ्चेन्द्रियतिर्यक्परिभोगः ॥६॥] एवं विकलेन्द्रियमनुष्यदे-

न्नानामप्युपग्रहकारिता वाच्या, तथा गणो-गच्छः तस्य चोपग्राहिता—'एकस्स कओ धम्मो' इत्यादिगाथापूगादवसेया, तथा "गुरुपरिवारो गच्छो तत्थ वसंताण निज्जरा विउला। विणयाउ तहा सारणमाईहिं न दोसपडिवत्ती ॥१॥ अन्नोन्नावेक्खाए जोगम्मि तहिं तहिं पयट्टन्तो। नियमेण गच्छवासी असंगपयसाहगो नेओ ॥२॥" इति, [गुरुपरिवारो गच्छस्तत्र वसतां विपुला निर्जरा विनयात्तथा सारणादिभिर्न दोषप्रतिपत्तिः ॥१॥ अन्योऽन्यापेक्षया योगे तत्र तत्र प्रवर्त्तमानः गच्छवासी नियमेनासंगपदसाधको ज्ञेयः ॥२॥] तथा राजा-नरपतिस्तस्य धर्म्मसहायकत्वं दुष्टेभ्यः साधुरक्षणाद्, उक्तं च लौकिकैः—"क्षुद्रलोकाकुले लोके, धर्म्मं कुर्युः कथं हि ते। क्षान्ता दान्ता अर्हतारश्चेद्राजा तान्न रक्षति ॥१॥ तथा 'अराजके हि लोकेऽस्मिन्, सर्वतो विद्रुते भयात्। रक्षार्थमस्य सर्वस्य, राजानमसृजत् प्रभुः ॥२॥" इति, तथा गृहपतिः-शय्यादाता, सोऽपि निश्रास्थानं, स्थानदानेन संयमोपकारित्वात्, तदुक्तम्—"धृतिस्तेन दत्ता मतिस्तेन दत्ता, गतिस्तेन दत्ता सुखं तेन दत्तम्। गुणश्रीसमालिङ्गितेभ्यो वरेभ्यो, मुनिभ्यो मुदा येन दत्तो निवासः ॥१॥" तथा "जो देइ उवस्सयं जइवराण तवनियमजोगजुत्ताणं। तेणं दिन्ना वत्थन्नपाणसयणासणविगप्पा ॥२॥" इति [यो ददात्युपाश्रयं यतिवरेभ्यस्तपोनियमयोगयुक्तेभ्यः। तेन दत्ता वस्त्रान्नपानशयनासनविकल्पाः ॥१॥] तथा शरीरं-कायः, अस्य च धर्म्मोपग्राहिता स्फुटैव, यतोऽवाचि—"शरीरं धर्मसंयुक्तं, रक्षणीयं प्रयत्नतः। शरीराच्छ्रवते धर्मः, पर्वतात् सलिलं यथा ॥१॥" इति, भवति चात्रार्या—"धर्म्मं चरतः साधोर्लोके निश्रापदानि पञ्चैव। राजा गृहपतिरपरः षट्काया गणशरीरे च ॥२॥" इति, शेषं सुगमं। श्रमणस्य निश्रास्थानान्युक्तानि, अथ लौकिकं निधिलक्षणं निश्रास्थानं पञ्चधा प्रतिपादयन्नाह—'पंच निही'त्यादि सुगमं, नवरं नितरां धीयते-स्थाप्यते यस्मिन् स निधिः-विशिष्टरत्नसुवर्णादिद्रव्यभाजनं तत्र निधिरिव निधिः पुत्रश्चासौ निधिश्च पुत्रनिधिः, द्रव्योपार्जकत्वेन पित्रोर्निर्वाहहेतुत्वादत एव स्वभावेन

च तयोरानन्दसुखकरत्वाच्च, अत्रोक्तं परैः—"जन्मान्तरफलं पुण्यं, तपोदानसमुद्भवम्। सन्ततिः शुद्धवंश्या हि, परत्रेह च शर्म्मणे ॥१॥" इति, तथा मित्रं—सुहृत्तच्च तन्निधिश्चेति मित्रनिधिरर्थकामसाधकत्वेनानन्दहेतुत्वात्, तदुक्तम्—"कुतस्तस्यास्तु राज्यश्रीः, कुतस्तस्य मृगेक्षणाः। यस्य शूरं विनीतं च, नास्ति मित्रं विचक्षणम्? ॥१॥" शिल्पं—चित्रादिविज्ञानं तदेव निधिः शिल्पनिधिः, एतच्च विद्योपलक्षणं, तेन विद्या निधिरिव पुरुषार्थसाधनत्वाद्, अत्रोक्तम्—"विद्यया राजपूज्यः स्याद्विद्यया कामिनीप्रियः। विद्या हि सर्वलोकस्य, वशीकरणकार्म्मणम् ॥१॥" इति, तथा धननिधिः—कोशो धान्यनिधिः—कोष्ठागारमिति। अनन्तरं निधिरुक्तः, स च द्रव्यतः पुत्रादिर्भावतस्तु कुशलानुष्ठानरूपं ब्रह्म, तत्पुनः शौचतया विभणिषुः प्रसङ्गेन शेषाण्यपि शौचान्याह—'पंचविहे'त्यादि व्यक्तं, नवरं शुचेर्भावः शौचं, शुद्धिरित्यर्थः तच्च द्विधा—द्रव्यतो भावतश्च, तत्राद्यं चतुष्टयं द्रव्यशौचं, पञ्चमं तु भावशौचं, तत्र पृथिव्या—मृत्तिकया शौचं—जुगुप्सितमलगन्धयोरपनयनं शरीरादिभ्यो घर्षणोपलेपनादिनेति पृथिवीशौचं, इह च पृथिवीशौचाभिधानेऽपि यत्परैस्तल्लक्षणमभिधीयते, यदुत—'एका लिंगे गुदे तिस्रस्तथैकत्र करे दश। उभयोः सप्त विज्ञेया, मृदः शुद्धौ मनीषिभिः ॥१॥ एतच्छौचं गृहस्थानां, द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं वानप्रस्थानां, यतीनां च चतुर्गुणम् ॥२॥" इति, तदिह नाभिमतं, गन्धाद्युपघातमात्रस्य शौचत्वेन विवक्षितत्वात्, तस्यैव च युक्तियुक्तत्वात् इति १ तथा अद्भिः शौचमप्शौचं प्रक्षालनमित्यर्थः २, तेजसाऽग्निना तद्विकारेण वा भस्मना शौचं तेजःशौचं ३, एवं मन्त्रशौचं शुचिविद्यया ४ ब्रह्म ब्रह्मचर्यादिकुशलानुष्ठानं तदेव शौचं ब्रह्मशौचं ५, अनेन च सत्यादिशौचं चतुर्विधमपि संगृहीतं, तच्चेदम्—"सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः। सर्वभूतदया शौचं जलशौचश्च पञ्चमम् ॥१॥" इति, लौकिकैः पुनरिदं सप्तधोक्तम्—यदाह—"सप्त स्नानानि प्रोक्तानि, स्वयमेव स्वयंभुवा। द्रव्यभावविशुद्ध्यर्थमृषीणां ब्रह्म-

चारिणाम् ॥१॥ आग्नेयं वारुणं ब्राह्मं, वायव्यं दिव्यमेव च। पार्थिवं मानसं चैव, स्नानं सप्तविधं स्मृतम् ॥२॥ आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणं। आपोहिष्ठामयं ब्राह्मं, वायव्यं तु गवां रजः ॥३॥ सूर्यदृष्टं तु यद्दृष्टं, तद्दिव्यमृषयो विदुः। पार्थिवं तु मृदा स्नानं, मनःशुद्धिस्तु मानसम् ॥४॥" इति।

अनन्तरं ब्रह्मशौचमुक्तं, तच्च जीवशुद्धिरूपं, जीवं च छद्मस्थो न जानाति केवली तु जानातीति सम्बन्धाच्छद्मस्थकेवलिनोरज्ञेयज्ञेयवस्तुप्रतिपादनाय सूत्रद्वयमाह—

पञ्च ठाणाइं छउमत्थे सव्वभावेणं ण जाणति ण पासति, तं०—धम्मत्थिकातं अधम्मत्थिकातं आगासत्थिकायं जीवं असरीरपडिबद्धं परमाणुपोग्गलं, एयाणि चेव उप्पन्ननाणदंसणधरे अरहा जिणे केवली सव्वभावेणं जाणति पासति धम्मत्थिकातं जाव परमाणुपोग्गलं (सू० ४५०) अधोलोगे णं पञ्च अणुत्तरा महतिमहालता महानिरया पं० तं०—काले महाकाले रोरुते महारोरुते अप्पतिट्ठाणे १। उड्ढलोगे णं पञ्च अणुत्तरा महतिमहालता महाविमाणा पं० तं०—विजये विजयन्ते जयन्ते अपराजिते सव्वट्ठसिद्धे २ (सू० ४५१) पञ्च पुरिसजाता पं० तं०—हिरिसत्ते हिरिमणसत्ते चलसत्ते थिरसत्ते उदतणसत्ते (सू० ४५२) पञ्च मच्छा पं० तं०—अणुसोतचारी पडिसोतचारि अंतचारी मज्झचारी सव्वचारी, एवमेव पञ्च भिक्खागा पं० तं०—अणुसोयचारी जाव सव्वसोयचारी (सू० ४५३) पञ्च वणीमगा पं० तं०—अतिहिवणीमते किविणवणीमते माहणवणीमते साणवणीमते सम-

णवणीमते (सू० ४५४)।

'छउमत्थे'त्यादि सुगमं, नवरं छद्मस्थ इहावध्याद्यतिशयविकलो गृह्यते, अन्यथा अमूर्त्तत्वेन धर्मास्तिकायादीन् अजानन्नपि परमाणुं जानात्येवासौ मूर्त्तत्वात्तस्य, अथ सर्वभावेनेत्युक्तं ततश्च तं कथञ्चिज्जानन्नप्यनन्तपर्यायतया न जानातीति, एवं तर्हि संख्यानियमो व्यर्थः स्यात्, घटादीनां सुबहूनामर्थानामकेवलिना सर्वपर्यायतया ज्ञातुमशक्यत्वादिति, 'सव्वभावेणं'ति च साक्षात्कारेण, श्रुतज्ञानेन त्वसाक्षात्कारेण जानात्येव, जीवमशरीरप्रतिबद्धं-देहमुक्तं, परमाणुश्चासौ पुद्गलश्चेति विग्रहः, द्व्यणुकादीनामुपलक्षणमिदं ॥ यथैतान्यतीन्द्रियाणि जिनः पञ्च जानाति तथाऽन्यदप्यतीन्द्रियं जानातीत्यधोलोकोर्द्ध्वलोकवर्त्त्यतीन्द्रियं पञ्चस्थानकावतारि दर्शयन् सूत्रद्वयमाह—'अहो' इत्यादि व्यक्तं, नवरं 'अहोलोए'त्ति सप्तमपृथिव्यां अनुत्तराः—सर्वोत्कृष्टा उत्कृष्टवेदनादित्वात्ततः परं नरकाभावाद्वा, महत्त्वं च चतुर्णां क्षेत्रतोऽप्यसंख्यातयोजनत्वादप्रतिष्ठानस्य तु योजनलक्षप्रमाणत्वेऽप्यायुषोऽतिमहत्त्वान्महत्त्वमिति, एवमूर्ध्वलोकेऽपि। कालादिषु विजयादिषु च सत्त्वाधिकपुरुषा एव गच्छन्तीति तत्प्रतिपादनायाह— 'पंच पुरिसे'त्यादि, 'हिरिसत्ति'त्ति ह्रिया-लज्जया सत्त्वं-परीषहेषु साधोः सङ्ग्रामादावितरस्य वा अवष्टम्भो-अविचलत्वं यस्यासौ ह्रीसत्त्वः, तथा ह्रियाऽपि मनस्येव सत्त्वं यस्य न देहे शीतादिषु कम्पादिविकारभावात् स ह्रीमनःसत्त्वः, चलं-भङ्गुरं सत्त्वं यस्य स तथा, एतद्विपर्ययात् स्थिरसत्त्वः, उदयनं-उदयगामि प्रवर्द्धमानं सत्त्वं यस्य स तथा। अनन्तरं सत्त्वपुरुष उक्तः, स च भिक्षुरेवेति तत्स्वरूपप्रतिपादनाय दृष्टान्तदार्ष्टान्तिकसूत्र पंच मच्छेत्यादिके आह-तत्र मत्स्यः प्राग्वत् भिक्षाकस्तु अनुश्रोतश्चारिवदनुश्रोतश्चारि-प्रतिश्रयादारभ्य भिक्षाचारी स च प्रथमः, प्रतिश्रोतश्चारीव प्रतिश्रोतश्चारी दूरादारभ्य प्रतिश्रयाभिमुखचारीत्यर्थः, स च द्वितीयः, अन्तचारी-पार्श्वचारीति तृतीयः, शेषौ प्रतीतौ।

भिक्षाकाधिकारात्तद्विशेषं पञ्चधाऽऽह—'पंचे'त्यादि व्यक्तं, किन्तु परेषामात्मदुःस्थत्वदर्शनेनानुकूलभाषणतो यल्लभ्यते द्रव्यं सा वनी प्रतीता तां पिबति—आस्वादयति पातीति वेति वनीपः स एव वनीपको—याचकः, इह तु यो यस्यातिथ्यादेर्भक्तो भवति तं तत्प्रशंसनेन यो दानाभिमुखं करोति स वनीपक इति, तत्र भोजनकालोपस्थायी प्राघूर्णकोऽतिथिस्तद्दानप्रशंसनेन तद्भक्तात् यो लिप्सति सोऽतिथि-माश्रित्य वनीपकोऽतिथिवनीपकः, यथा—"पाएण देइ लोगो उवगारिसु परिजिए व जुसिए वा । जो पुण अद्धाखिन्नं अतिहिं पूएइ तं दाणं ॥१॥" इति, [प्रायेण ददाति लोक उपकारिभ्यः परिचितेभ्यो वा प्रीतेभ्यः । यः पुनरध्वखिन्नमतिथिं पूजयति तद्दानम् ॥१॥] ('जुसिए'त्ति प्रीते तमिति तस्य दानं महाफलमिति शेषः), एवमन्येऽपि नवरं कृपणाः—रङ्कादयो दुःस्थाः, उदाहरणम्—"किमिणेसु दुम्मणेसु य अबन्धवायंकिजुंगियंगेसु । पूयाहिज्जे लोए दाणपडागं हरइ देंतो ॥१॥ [कृपणेभ्यो दुर्मनोभ्योऽबन्धुभ्य आतंकिभ्यो व्यङ्गितांगेभ्यः । पूजाहार्ये लोके ददत् दानपताकां हरति ॥१॥] ('आयंकि'त्ति रोगी 'जुंगियंगो' व्यङ्गितः 'पूजाहार्ये'ति पूजितपूजके) माहना—ब्राह्मणाः, तत्रोदाहरणं—लोयाणुग्गहकारिसु भूमीदेवेसु बहुफलं दाणं । अवि नाम बंभबंधुसु किं पुण छक्कम्मनिरयाणं ॥१॥ [लोकानुग्रहकारिषु ब्राह्मणेषु दानं बहुफलं ब्रह्मबंधुमात्रेष्वपि नाम किं पुनः षट्कर्मनिरतेभ्यः ॥१॥] (बंभबंधुसुत्ति—जन्ममात्रेण ब्रह्मबान्धवेषु निर्गुणेष्वपीत्यर्थः, यजनादीनि षट् कर्माणीति) श्ववनीपको यथा—"अवि नाम होज्ज सुलभो गोणाईणं तणाइ आहारो। छिच्छिक्कारहयाणं नहु सुलभो होज्ज सुणताणं ॥१॥ केलासभवणा एए, गुज्झगा आगया महिं। चरंति जक्खरूवेणं, पूयाऽपूया हिताऽहिता ॥२॥ [अपि नाम गवादीनां तृणाद्याहारः सुलभो भवेत् । शीत्कारकरणहतानां शुनां नैव सुलभो भवेत् ॥१॥ एते कैलासभवना गुह्यका महीं आगता यक्षरूपेण चरन्ति ते पूजिता अपूजिता हिता अहिताः ॥२॥] (पूजया हिता अपूजया त्वहिता इत्यर्थः),

श्रमणाः-पञ्चधा—निर्ग्रन्थाः शाक्यास्तापसा गैरिका आजीविकाश्चेति, तत्र शाक्यवनीपको यथा—"भुंजंति चित्तकम्मट्ठिया व कारुणियदाणरुइणो य। अवि कामगद्दभेसुवि न नस्सए किं पुण जतीसु? ॥१॥"इति, [चित्रकर्मस्थिताः इव कारुणिका दानरुचयश्च भुञ्जन्ति नाम। कामगर्दभेष्वपि न नश्यति किं पुनर्यतिषु? ॥१॥] एवमन्येऽपि तापसवनीपकादयो द्रष्टव्या इति।

योऽयं वनीपक उक्तः स साधुविशेषः, साधुश्चाचेलो भवतीत्यचेलत्वस्य प्रशंसास्थानान्याह—

**पंचहिं ठाणेहिं अचेलए पसत्थे भवति, तं०—अप्पा पडिलेहा १ लाघविए पसत्थे २ रूवे वेसासिते ३ तवे अणुन्नाते ४ विउले इंदियनिग्गहे ५ (सू० ४५५) पंच उक्कला पन्नत्ता तं०—दंडुक्कले रज्जुक्कले तेणुक्कले देसुक्कले सव्वुक्कले (सू० ४५६) पंच समितीतो पं० तं०—ईरियासमिती भासा० जाव पारिठावणियासमिती (सू०४५७)।**

'पंचही'त्यादि प्रतीतं, नवरं न विद्यन्ते चेलानि-वासांसि यस्यासावचेलकः, स च जिनकल्पिकविशेषस्तदभावादेव तथा जिनकल्पिकविशेषः स्थविरकल्पिकश्चाल्पाल्पमूल्यसप्रमाणजीर्णमलिनवसनत्वादिति, 'प्रशस्तः' प्रशंसितस्तीर्थंकरगणधरादिभिरिति गम्यते, अल्पा प्रत्युपेक्षाऽचेलकस्य स्यादिति गम्यम्, प्रत्युपेक्षणीयतथाविधोपधेरभावाद्, एवं च न स्वाध्यायादिपरिमन्थ इति, तथा लघोर्भावो लाघवं तदेव लाघविकं द्रव्यतो भावतोऽपि रागविषयाभावात् प्रशस्तं-अनिन्द्यं स्यात्, तथा रूपं-नेपथ्यं वैश्वासिकं-विश्वासप्रयोजनमलिप्सुतासूचकत्वात् स्यादिति, तथा तपः-उपकरणसंल्लीनतारूपमनुज्ञातं-जिनानुमतं स्यात्, तथा विपुलो-महानिन्द्रियनिग्रहः

१ रजोहरणमुखवस्त्रिकारूपद्विविधोपकरणधारकः। २ शेषाः सर्वेऽपि त्रिविधाद्युपकरणधारिणः।

स्याद्, उपकरणं विना स्पर्शनप्रतिकूलशीतवातातपादिसहनादिति। इन्द्रियनिग्रहश्च सत्त्वेनोत्कटैरेव कर्त्तुं शक्य इत्युत्कटभेदानाह— 'पंचे'त्यादि सुगमं, नवरं 'उक्कल'त्ति उत्कटा उत्कला वा, तत्र दण्डः–आज्ञा अपराधे दण्डनं वा सैन्यं वा उत्कटः–प्रकृष्टो यस्य तेन वोत्कटो यः स दण्डोत्कटः, दण्डेन वोत्कलति–वृद्धिं याति यः स दण्डोत्कलः, इत्येवं सर्वत्र, नवरं राज्यं–प्रभुता स्तेनाः–चौराः देशो–मण्डलं सर्वं–एतत्समुदय इति। असंयतो दण्डादिभिरुत्कटो भवति, संयतस्तु समितिभिरिति समितीः प्राह—'पंचे'त्यादि सुगमं, नवरं सम्–एकीभावेनेतिः–प्रवृत्तिः समितिः शोभनैकाग्रपरिणामस्य चेष्टेत्यर्थः, ईरणमीर्या गमनमित्यर्थः तत्र समितिरीर्यासमितिः, उक्तं च—"ईर्यासमितिर्नाम रथशकटयानवाहनाक्रान्तेषु मार्गेषु सूर्यरश्मिप्रतापितेषु प्रासुकविविक्तेषु युगमात्रदृष्टिना भूत्वा गमनागमनं कर्त्तव्य" मिति, तथा भाषणं भाषा तस्यां समितिर्भाषासमितिः, उक्तं च—"भाषासमितिर्नाम हितमितासन्दिग्धार्थभाषणं" तथा एषणमेषणा गवेषणग्रहणग्रासैषणाभेदा शङ्कादिलक्षणा वा तस्यां समितिरेषणासमितिः, उक्तं च—"एषणासमितिर्नाम गोचरगतेन मुनिना सम्यगुपयुक्तेन नवकोटीपरिशुद्धं ग्राह्यम्" इति, तथा 'आदानभाण्डमात्रनिक्षेपणासमितिः' भाण्डमात्रे आदाननिक्षेपविषया सुंदरचेष्टेत्यर्थः, इह चाप्रत्युपेक्षिताप्रमार्जिताद्याः सप्त भङ्गाः पूर्वोक्ता भवन्तीति, तथा उच्चारप्रश्रवणखेलसिंघाणजल्लानां परिष्ठापनिका–त्याग स्तत्र समितिर्या सा तथेति, तत्रोच्चारः–पुरीषं प्रश्रवणं–मूत्रं खेलः–श्लेष्मा जल्लो–मलः सिंघानो–नासिकोद्भवः श्लेष्मा, अत्रापि त एव सप्त भङ्गा इति।

समितिप्ररूपणं च जीवरक्षार्थमिति जीवस्वरूपप्रतिपादनाय सूत्राष्टकमाह—

**पंचविधा संसारसमावन्नगा जीवा पं० तं०—एगिंदिता जाव पंचिंदिता १। एगिंदिया पंचगतिइया पंचा-**

गतिता पं० तं०—एगिंदिए एगिंदितेसु उववज्जमाणे एगिंदितेहिंतो जाव पंचिंदिएहिंतो वा उववज्जेज्जा, से चेव णं से एगिंदिए एगिंदितत्तं विप्पजहमाणे एगिंदित्ताते वा जाव पंचिंदित्ताते वा गच्छेज्जा २। बेंदिया पंचगतिता पंचागइया एवं चेव ३। एवं जाव पंचिंदिया पंचगतिता पंचागइया पं० तं०—पंचिंदिया जाव गच्छेज्जा ४-५-६। पंचविधा सव्वजीवा पं० तं०—कोहकसाई जाव लोभकसाई अकसाती ७। अहवा पंचविधा सव्वजीवा पं० तं०—नेरइया जाव देवा सिद्धा ७ (सू० ४५८) अह भंते! कलमसूरतिलमुग्गमासणिप्फावकुलत्थआलिसंदगसतीणपलिमंथगाणं एतेसि णं धन्नाणं कुट्ठाउत्ताणं जधा सालीणं जाव केवतितं कालं जोणी संचिट्ठति?, गोयमा! जहण्णेणं अंतोमुहुत्तं उक्कोसेणं पंच संवच्छराइं, तेण परं जोणी पमिलायति जाव तेण परं जोणीवोच्छेदे पण्णत्ते (सू० ४५९) पंच संवच्छरा पं० तं०—णक्खत्तसंवच्छरे जुगसंवच्छरे पमाणसंवच्छरे लक्खणसंवच्छरे सणिंचरसंवच्छरे १, जुगसंवच्छरे पंचविहे पं० तं०—चंदे चंदे अभिवड्ढिते चंदे अभिवड्ढिते चेव २, पमाणसंवच्छरे पंचविहे पं० तं०—नक्खत्ते चंदे ऊऊ आदिच्चे अभिवड्ढिते ३, लक्खणसंवच्छरे पंचविहे पं० तं०—समगं नक्खत्ता जोगं जोयंति समगं उदू परिणमंति। णच्चुण्हं णातिसीतो बहूदतो होति नक्खत्ते ॥१॥ ससिसगलपुण्णमासी जोतेती विसमचारणक्खत्ते। कडुतो बहूदतो (या) तमाहु संवच्छरं चंदं ॥२॥ विसमं पवालिणो परिणमन्ति अणुदूसु देंति पुप्फफलं। वासं ण सम्म वासति तमाहु संवच्छरं कम्मं ॥३॥ पुढविदगाणं तु रसं पुप्फफलाणं तु देइ आदिच्चो। अप्पेणवि वासेणं सम्मं निप्फज्जए सस्सं ४ ॥४॥ आदिच्चतेयतविता खणलवदिवसा उऊ परिणमंति।

५ स्थानाध्ययने उद्देशः ३ सर्वजीवाः कलादीनामचित्तता संवत्सराः सू-४५८-४६०

पूरिंति रेणुथलताइं तमाहु अभिवड्डितं जाण ॥५॥ (सू० ४६०)।

'पंचविहे'त्यादि स्फुटार्थं, नवरं संसारसमापन्ना–भववर्त्तिनः, विप्रजहत्–परित्यजन्, सर्वजीवाः–संसारिसिद्धाः, अकषायिणः–उपशान्तमोहादयः। जीवाधिकाराद्वनस्पतिजीवानाश्रित्य पञ्चस्थानकमाह—'अहे'त्यादि, त्रिस्थानकवद् व्याख्येयं, नवरं कला–वट्टचणगा मसूरा–चणईयाओ तिलमुग्गमासाः प्रतीताः निप्फावा–वल्लाः कुलत्थाः–चवलगसरिसा चिप्पिडया भवन्ति आलिसिंदिया–चवलया सईणा–तुवरी पलिमन्थाः–कालचणगा इति। अनन्तरं संवत्सरप्रमाणेन योनिव्यतिक्रम उक्तः, अधुना स एव संवत्सरश्चिन्त्यते इति, 'पंच संवच्छरे'त्यादिसूत्रचतुष्टयं, तत्र 'नक्खत्तसंवच्छरे'त्ति, इह चन्द्रस्य नक्षत्रमण्डलभोगकालो नक्षत्रमासः, स च सप्तविंशतिः दिनानि एकविंशतिः सप्तषष्टिभागा दिवसस्येति २७$\frac{२१}{६७}$, एवंविधद्वादशमासो नक्षत्रसंवत्सरः, स चायं–त्रीणि शतान्यह्नां सप्तविंशत्युत्तराणि एकपञ्चाशच्च सप्तषष्टिभागा इति ३२७ $\frac{५१}{६७}$–१, एवं पञ्चसंवत्सरात्मकं युगं तदेकभूदेशभूतो वक्ष्यमाणलक्षणश्चन्द्रादिर्युगसंवत्सरः २, प्रमाणं–परिमाणं दिवसादीनां तेनोपलक्षितो वक्ष्यमाण एव नक्षत्रसंवत्सरादिः प्रमाणसंवत्सरः ३, स एव लक्षणानां वक्ष्यमाणस्वरूपाणां प्रधानतया लक्षणसंवत्सरः ४, यावता कालेन शनैश्चरो नक्षत्रमेकमथवा द्वादशापि राशीन् भुंक्ते स शनैश्चरसंवत्सर इति, यतश्चन्द्रप्रज्ञप्तिसूत्रम्–"सनिच्छरसंवच्छरे अट्ठावीसविहे पन्नत्ते–अभीई सवणे जाव उत्तरासाढा, जं वा सनिच्छरे महग्गहे तीसाए संवच्छरेहिं सव्वं नक्खत्तमंडलं समाणेइ"त्ति। [शनैश्चरसंवत्सरोऽष्टाविंशतिविधः प्रज्ञप्तोऽभिजित् श्रवणः यावदुत्तराषाढा यद्वा शनैश्चरमहाग्रहः त्रिंशता वर्षैः सर्वं नक्षत्रमण्डलं पूरयति ५] युगसंवत्सरः पञ्चविधः, तद्यथा—'चंदे'त्ति एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्विषष्टिभागा दिवसस्येत्येवंप्रमाणः २९$\frac{३२}{६२}$ कृष्णप्रतिपदारब्धः पूर्णमासीनिष्ठितश्चन्द्रमासस्तेन मासेन द्वादशमासपरिमाणश्चन्द्रसंवत्सरः तस्य च

प्रमाणमिदं–त्रीणि शतान्यह्नां चतुःपञ्चाशदुत्तराणि द्वादश च द्विषष्टिभागाः ३५४$\frac{12}{62}$, एवं द्वितीयचतुर्थावपि चन्द्रसंवत्सरौ, 'अभिवड्ढिए'त्ति एकत्रिंशद्दिनानि एकविंशत्युत्तरशतं चतुर्विंशत्युत्तरशतभागानामभिवर्द्धितमासः ३१$\frac{121}{124}$, एवंविधेन मासेन द्वादशमासप्रमाणोऽभिवर्द्धितसंवत्सरः, स च प्रमाणेन–त्रीणि शतान्यह्नां त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्विषष्टिभागाः ३८३$\frac{44}{62}$ इत्येवं पञ्चमोऽपि, एभिश्चन्द्रादिभिः पञ्चभिः संवत्सरैरेकं युगं भवति, तेषां च पञ्चानां संवत्सराणां मध्ये अभिवर्द्धिताख्ये संवत्सरे अधिकमासः पततीति, प्रमाणसंवत्सरः पञ्चविधः, तत्र 'नक्षत्र' इति नक्षत्रसंवत्सरः, स च उक्तलक्षणः, केवलं तत्र नक्षत्रमण्डलस्य चन्द्रभोगमात्रं विवक्षितमिह तु दिनदिनभागादिप्रमाणमिति, तथा चन्द्राभिवर्द्धितावप्युक्तलक्षणावेव किन्तु तत्र युगावयवतामात्रमिह तु प्रमाणमिति विशेषः, 'उऊ' इति ऋतुसंवत्सरः, त्रिंशदहोरात्रप्रमाणैर्द्वादशभिः ऋतुमासैः सावनमासकर्म्ममासपर्यायैर्निष्पन्नः, षष्ट्यधिकाहोरात्रशतत्रयमान इति ३६०, 'आइच्चे'त्ति आदित्यसंवत्सरः, स च त्रिंशद्दिनान्यर्द्धं चेति, एवंविधमासद्वादशकनिष्पन्नः षट्षष्ट्यधिकाहोरात्रशतत्रयमान इति ३६६, अयमेवानन्तरोक्तो नक्षत्रादिसंवत्सरो लक्षणप्रधानतया लक्षणसंवत्सर इति । तत्र नक्षत्रमाह—'समगं' गाहा, समकं–समतया नक्षत्राणि–कृत्तिकादीनि योगं–कार्त्तिकीपौर्णमास्यादितिथ्या सह सम्बन्धं योजयन्ति–कुर्वन्ति, इदमुक्तं भवति–यानि नक्षत्राणि यासु तिथिषूत्सर्गतो भवन्ति, यथा कार्त्तिक्यां कृत्तिकाः, तानि तास्वेव यत्र भवन्ति यथोक्तम्–"जेट्ठो वच्चइ मूलेण सावणो धणिट्ठाहिं । अद्दासु य मग्गसिरो सेसा नक्खत्तनामिया मासा ॥१॥" इति [ज्येष्ठो व्रजति मूलेन श्रावणो व्रजति धनिष्ठाभिः । आर्द्रया च मार्गशीर्षः शेषा नक्षत्रनामानः मासाः ॥१॥] तथा यत्र समतयैव ऋतवः परिणमन्ति, न विषमतया, कार्त्तिक्या अनन्तरं हेमन्तर्तुः पौष्या अनन्तरं शिशिरर्त्तुरित्येवमवतरन्तीति भावः, यश्च न–नैव अतीव उष्णं–घर्मो यत्र सोऽत्युष्णः, न–नैवातिशीतः–अतिहिमः, बहूदकं

यत्र स बहूदकः, स च भवति लक्षणतो नक्षत्र इति, नक्षत्रचारलक्षणलक्षितत्वान्नक्षत्रसंवत्सर इति, अस्यां च गाथायां पञ्चमाष्टमावंशकौ पञ्चकलावितीयं विचित्रेति छन्दोविद्भिरुपदिश्यते, 'बहुला विचित्त'त्ति गाथालक्षणात् पत्ति-पंचकलो गण इति। 'ससि' गाहा 'ससि' त्ति विभक्तिलोपात् शशिना-चन्द्रेण सकलपौर्णमासीं-समस्तराका यः संवत्सर इति गम्यते अथवा यत्र शशी सकलां पौर्णमासीं योजयति-आत्मना सम्बन्धयति। तथा विषमचारीणि-यथास्वतिथिष्ववर्त्तीनि नक्षत्राणि यत्र स विषमचारिनक्षत्रः, तथा कटुकोऽतिशीतोष्णसद्भावात् बहूदकश्च, दीर्घत्वं प्राकृतत्वात्, तमेवंविधमाहुर्लक्षणतो ब्रुवते तद्विदः संवत्सरं चन्द्रं चन्द्रचारलक्षणलक्षितत्वादिति। 'विसमं' गाहा, विषमं-वैषम्येण प्रवालं-पल्वाङ्कुरस्तद्विद्यते येषां ते प्रवालिनो वृक्षा इति गम्यते, परिणमन्ति प्रवालवत्तालक्षणया अवस्थया जायन्ते, अथवा प्रवालिनो-वृक्षाः परिणमन्ति-अंकुरोद्भेदाद्यवस्थां यान्ति, तथा अनृतुपु-अस्वकालं ददति-प्रयच्छन्ति पुष्पफलं, यथा चैत्रादिषु कुसुमादिदायिनोऽपि स्वरूपेण चूताः माघादिषु पुष्पादि यच्छन्तीति, तथा वर्षं-वृष्टिं मेघो न सम्यग्वर्षति यत्रेति गम्यते, तमाहुर्लक्षणतः संवत्सरं कार्मणं, यस्य ऋतुसंवत्सरः सावनसंवत्सरश्चेति पर्यायौ ॥ 'पुढवि' गाहा, यत्र त्विति गम्यते, तथा च यत्र तु संवत्सरे पृथिव्युदकयो रसं-माधुर्यस्निग्धतालक्षणं पुष्पफलानां च ददात्यादित्यः तथास्वभावत्वात्, तथाविधोदकाभावेऽपीति भावः, अत एवाल्पेनापि वर्षेण सम्यक्-यथाभिमतं निष्पद्यते सस्यं-शाल्यादिधान्यं स लक्षणत आदित्यसंवत्सर उच्यत इति शेष इति। 'आइच्च' गाहा, आदित्यतेजसा तप्ताः पृथिव्यादितापेऽप्युपचारात् क्षणादयस्तप्ता इति मन्तव्यं, तत्र क्षणो-मुहूर्त्तः लवः-एकोनपञ्चाशदुच्छ्वासप्रमाणो दिवसः-अहोरात्रः ऋतुः-मासद्वयप्रमाणः 'परिणमन्ति' अतिक्रामन्ति यत्रेति गम्यते, यश्च पूरयति वायूत्खातरेणुभिः स्थलानि-भूमिप्रदेशविशेषान् तमाहुराचार्या लक्षणतः संवत्सरमभिवर्द्धितं 'जाण'त्ति त्वमपि शिष्य! तं तथैव जानीहीति।

संवत्सरव्याख्यानमिदं तत्त्वार्थटीकाद्यनुसारेण प्रायो लिखितमिति।

अनन्तरं संवत्सर उक्तः, स च कालः, कालात्यये च शरीरिणां शरीरान्निर्गमो भवतीत्यतस्तन्मार्गं निरूपयन्नाह—

पंचविधे जीवस्स णिज्जाणमग्गे पं० तं०—पातेहिं ऊरूहिं उरेणं सिरेणं सव्वंगेहिं, पाएहिं णिज्जाणमाणे निरयंगामी भवति, ऊरूहिं णिज्जाणमाणे तिरियगामी भवति, उरेणं निज्जायमाणे मणुयगामी भवति, सिरेणं णिज्जायमाणे देवगामी भवति, सव्वेहिं निज्जायमाणे सिद्धिगतिपज्जवसाणे पण्णत्ते (सू० ४६१) पंचविहे छेयणे पं० तं०—उप्पाछेयणे वियच्छेयणे बंधच्छेयणे पएसच्छेयणे दोधारच्छेयणे। पंचविधे आणंतरिए पं० तं०—उप्पातयणंतरिते वितणंतरिते पतेसाणंतरिते समताणंतरिए सामण्णाणंतरिते। पंचविधे अणंते पं० तं०—णामणंतते ठवणाणंतते दव्वाणंतते गणणाणंतते पदेसाणंतते, अहवा पंचविहे अणंतते पं० तं०—एगंतोऽणंतते दुहतोणंतए देसवित्थारणंतए सव्ववित्थाराणंतते सासयाणंतते (सू० ४६२)।

'पंचविहे'त्यादि व्यक्तं, किन्तु निर्याणं–मरणकाले शरीरिणः शरीरान्निर्गमस्तस्य मार्गो निर्याणमार्गः–पादादिकः, तत्र 'पाएहिं'ति पादाभ्यां मार्गभूताभ्यां करणताऽऽपन्नाभ्यां जीवः शरीरान्निर्यातीति शेषः, एवं ऊरुभ्यामित्यादावपि, अथ क्रमेणास्य निर्याणमार्गस्य फलमाह–पादाभ्यां शरीरान्निर्यान् जीवो 'निरयंगामि'त्ति प्राकृतत्वादनुस्वार इति, निरयगामी भवति, एवमन्यत्रापि, नवरं सर्वाणि च तान्यङ्गानि च सर्वाङ्गानि तैर्निर्यान् सिद्धिगतिः पर्यवसानं–संसरणपर्यन्तो यस्य स सिद्धिगतिपर्यवसानः प्रज्ञप्त इति। निर्याणं ॥३२८॥

चायुष्कच्छेदने भवतीति छेदनं प्ररूपयन्नाह—'पंचविहे'त्यादि कण्ठयं, केवलं 'उप्प'त्ति उत्पादो देवत्वादिपर्यायान्तरस्य तेन छेदो-जीवादिद्रव्यस्य विभाग उत्पादच्छेदनं, तथा 'विय'त्ति व्ययो विगमो मानुषत्वादिपर्यायस्य तेन छेदनं जीवादेरेवेति व्ययच्छेदनं, तथा बन्धनस्य-जीवापेक्षया कर्म्मणः स्कन्धापेक्षया तु सम्बन्धस्य छेदनं-विनशनं बन्धच्छेदनमिति, तथा तस्यैव प्रदेशतो निर्विभागावयवतो बुद्धया छेदनं-विभजनं प्रदेशच्छेदनं, तथा जीवादेरेव द्रव्यस्य द्विधाकरणं द्विधाकारः स एव छेदनं द्विधाकारच्छेदनं, उपलक्षणं चैतत्त्रिधाकारादीनां, अनेन च देशतः छेदनमुक्तं, अथवोत्पादस्य-उत्पत्तेः छेदनं-विरहो यथा नरकगतौ द्वादश मुहूर्त्ताः, व्ययच्छेदनं-उद्वर्त्तनाविरहः, सोऽप्येवं, बन्धनविरहो यथोपशान्तमोहस्य सप्तविधकर्म्मबन्धनापेक्षया, प्रदेशच्छेदनं-प्रदेशविरहो यथा विसंयोजितानामनन्तानुबन्ध्यादिकर्मप्रदेशानां, तथा द्वे धारे यस्य तद् द्विधारं तच्च तच्छेदनं च द्विधारच्छेदनमुपलक्षणत्वादस्यैकधाराद्यपि दृश्यम्, तच्च क्षुरखड्गचक्राद्यं, तच्च छेदनशब्दसाम्यादिहोपात्तमिति, प्रदेशच्छेदनस्थाने क्वचित् 'पंथच्छेयणे'त्ति पठ्यते, तत्र पथिच्छेदनं-मार्गच्छेदनं मार्गातिक्रमणमित्यर्थः ॥ छेदनस्य च विपर्यय आनन्तर्यमिति तदाह—'पंचविहे'त्यादि, आनन्तर्यं-सातत्यमच्छेदनमविरह इत्यर्थः, तत्रोत्पादस्य यथा निरयगतौ जीवानामुत्कर्षतः असंख्येयाः समयाः, एवं व्ययस्यापि, प्रदेशानां च समयानां च तत्प्रतीतमेव, अविवक्षितोत्पादव्ययादिविशेषणमानन्तर्यमात्रं सामान्यानन्तर्यं, श्रामण्यस्य वा आकर्षविरहेणानन्तर्यं श्रामण्यानन्तर्यमिति बहुजीवापेक्षया वा श्रामण्यप्रतिपत्त्यानन्तर्यं, तच्चाष्टौ समया इति ॥ अनन्तरसूत्रे समयप्रदेशानामानन्तर्यमुक्तं, ते चानन्ता इत्यनन्तकमेव प्ररूपयन्नाह—'पंचविहे'त्यादि सूत्रद्वयं प्रतीतार्थं, नवरं नाम्ना अनन्तकं नामानन्तकं अनन्तकमिति यस्य नाम, यथा समयभाषया वस्त्रमिति, स्थापनैव स्थापनया वा अनन्तकं स्थापनानन्तकं-अनन्तकमिति कल्पनयाऽक्षादिन्यासः, ज्ञभव्यशरीरादिव्यतिरिक्तं द्रव्याणामण्वादीनां गणनी-

यानामनन्तकं, द्रव्यानन्तकं, गणना—सङ्ख्यानं तल्लक्षणमनन्तकमविवक्षिताण्वादिसंख्येयविषयः संख्याविशेषो गणनानन्तकं, प्रदेशानां संख्येयानामनन्तकं प्रदेशानन्तकमिति, एकतः-एकेनांशेनायामलक्षणेनानन्तकमेकतोऽनन्तकम्-एकश्रेणीकं क्षेत्रं, द्विधा-आयामविस्ताराभ्यामनन्तकं द्विधानन्तकं-प्रतरक्षेत्रं, क्षेत्रस्य यो रुचकापेक्षया पूर्वाद्यन्यतरदिग्लक्षणो देशस्तस्य विस्तारो-विष्कम्भस्तस्य प्रदेशापेक्षया अनन्तकं देशविस्तारानन्तकं, सर्वाकाशस्य तु चतुर्थं, शाश्वतं च तदनन्तकं च शाश्वतानन्तकम्-अनाद्यपर्यवसितं यज्जीवादिद्रव्यमनन्तसमयस्थितिकत्वादिति।

एवंभूतार्थपरिच्छेदो ज्ञानाद्भवतीति ज्ञानस्वरूपनिरूपणायाह—

**पंचविहे णाणे पं० तं०—आभिणिबोहियणाणे सुयनाणे ओहिणाणे मणपज्जवणाणे केवलणाणे (सू० ४६३) पंचविहे णाणावरणिज्जे कम्मे पं० तं०—आभिणिबोहियणाणावरणिज्जे जाव केवलनाणावरणिज्जे (सू० ४६४)।**

'पंचविहे'त्यादि, पञ्चेति-पञ्चसंख्या विधाः-भेदा यस्य तत्पञ्चविधं, ज्ञातिर्ज्ञानमिति भावसाधनः संविदित्यर्थः, ज्ञायते वाऽनेनास्माद्वेति ज्ञानं-तदावरणस्य क्षयः क्षयोपशमो वा, ज्ञायते वाऽस्मिन्निति ज्ञानं-आत्मा तदावरणक्षयक्षयोपशमपरिणामयुक्तो, जानातीति वा ज्ञानं तदेव स्वविषयग्रहणरूपत्वादिति, 'प्रज्ञप्तं' प्ररूपितमर्थतस्तीर्थकरैः सूत्रतो गणधरैः, उक्तं च—"अत्थं भासइ अरिहा सुत्तं गंथंति गणहरा निउणं। सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ ॥१॥" इति [ अर्हन् भाषतेऽर्थं सूत्रं ग्रथ्नन्ति गणधराः निपुणं। शासनस्य हितार्थाय ततः सूत्रं प्रवर्तते ॥१॥] अथवा प्राज्ञात्-तीर्थकरात् प्राज्ञैर्वा प्रज्ञया वा आप्तं-प्राप्तमात्तं वा प्राज्ञाप्तं प्रज्ञाप्तं प्राज्ञात्तं प्रज्ञात्तं वा,

तद्यथा—अर्थाभिमुखोऽविपर्ययरूपत्वान्नियतोऽसंशयरूपत्वाद्बोधः-संवेदनमभिनिबोधः स एव स्वार्थिकप्रत्ययोपादानादाभिनिबोधिकं, अभिनिबोधे वा भवं तेन वा निर्वृत्तं तन्मयं तत्प्रयोजनं वेत्याभिनिबोधिकं, अभिनिबुध्यते वा तद् कर्म्मभूतमित्याभिनिबोधिकं—अवग्रहादिरूपं मतिज्ञानमेव, तस्य स्वसंविदितरूपत्वात्, भेदोपचारादित्यर्थः, अभिनिबुध्यते वा अनेनास्मादस्मिन् वेत्याभिनिबोधिकं—तदावरणकर्म्मक्षयोपशम इति भावार्थः, आत्मैव वा अभिनिबोधोपयोगपरिणामानन्यत्वादभिनिबुध्यत इत्याभिनिबोधिकं, तच्च तज्ज्ञानं चेत्याभिनिबोधिकज्ञानमिति, आह च—"अत्थाभिमुहो नियओ बोहो जो सो मओ अभिनिबोहो। सो चेवाभिणिबोहियमहव जहाजोग्गमाजोज्जं ॥१॥ तं तेण तओ तम्मि य सो वाऽभिणिबुज्झए तओ वा तं ॥" इति [ अर्थाभिमुखो नियतो बोधः यः सोऽभिनिबोधो मतः। स एवाभिनिबोधिकमथवा यथायोग्यं आयोज्यं ॥१॥ तत्तेन ततस्तस्मिंश्च स वाऽभिनिबुध्यते ततो वा तत् ॥ ] तथा श्रूयत इति श्रुतं-शब्द एव, भावश्रुतकारणत्वात् कारणे कार्योपचारादिति भावार्थः, श्रूयते वा अनेनास्मादस्मिन्वेति श्रुतं, तदावरणकर्म्मक्षयोपशम इत्यर्थः, आत्मैव वा श्रुतोपयोगपरिणामानन्यत्वाच्छृणोतीति श्रुतं, श्रुतं च तज्ज्ञानं च श्रुतज्ञानम्, आह च—"तं तेण तओ तम्मि य सुणेइ सो वा सुयं च तेणंति ॥" इति [तत्तेन ततस्मिंश्च शृणोति स वा श्रुतं तेन ] तथा अवधीयतेऽनेनास्मादस्मिन्वेत्यवधिः, अवधीयत इत्यधोऽधो विस्तृतं परिच्छिद्यते मर्यादया वेत्यर्थः, स चावधिज्ञानावरणक्षयोपशम एव, तदुपयोगहेतुत्वादिति, अवधानं वा अवधिर्विषयपरिच्छेदनमित्यर्थः, अवधिश्चासौ ज्ञानं चेत्यवधिज्ञानं, उक्तं च—"तेणावधीयते तंमि वाऽवहाणं च तोऽवही सो य। मज्जाया जं तीए दव्वाइपरोप्परं मुणइ ॥१॥" इति, [ तेनावधीयते तस्मिन् वाऽवधानं ततोऽवधिः स च मर्यादा तस्मिन् द्रव्यादिपरः क्षेत्रादि परं जानाति ॥१॥] तथा परिः-सर्वतोभावे अवनं अवः अयनं वा अयः आयो वा गमनं वेदनमिति पर्यायाः परि

अवः अयः आयो वा पर्यवः पर्ययः पर्यायो वा मनसि मनसो वा पर्यवः पर्ययः पर्यायो वा मनःपर्यवो मनःपर्ययो मनःपर्यायो वा, सर्वतस्तत्परिच्छेद इत्यर्थः, स एव ज्ञानं मनःपर्यवज्ञानं मनःपर्ययज्ञानं मनःपर्यायज्ञानं वा, अथवा मनसः पर्यायाः पर्यया पर्यवा वा भेदा धर्मा बाह्यवस्त्वालोचनादिप्रकारा इत्यर्थस्तेषु तेषां वा ज्ञानं मनःपर्यायज्ञानं मनःपर्ययज्ञानं मनःपर्यवज्ञानमिति, आह च—"पज्जवणं पज्जयणं पज्जाओ वा मणंमि मणसो वा। तस्स व पज्जायादिन्नाणं मणपज्जवन्नाणं ॥१॥" इति [ पर्यवनं पर्ययनं पर्यायो वा मनसि मनसो वा। तस्य वा पर्यायादिज्ञानं मनःपर्यायज्ञानं ॥१॥ ] केवलं-असहायं मत्यादिज्ञाननिरपेक्षत्वात् शुद्धं वा आवरणमलकलङ्करहितत्वात् सकलं वा तत्प्रथमतयैवाशेषतदावरणाभावतः सम्पूर्णोत्पत्तेः असाधारणं वा अनन्यसदृशत्वात् अनन्तं वा ज्ञेयानन्तत्वात् यथावस्थिताशेषभूतभवद्भाविभावस्वभावावभासीति भावना तच्च तत् ज्ञानं चेति केवलज्ञानं, उक्तं च—"केवलमेगं सुद्धं सगलमसाहारणं अणंतं च। पायं च नाणसद्दो नाणसमाणाहिगरणोऽयं ॥१॥" इति, [ केवलं एकं शुद्धं सकलं असाधारणं अनंतं च। प्रायेणायं ज्ञानशब्दः ज्ञानसमानाधिकरणः ॥१॥ ] प्राय इति मनःपर्यायज्ञाने तत्पुरुषस्यापि दर्शितत्वात्। इह च स्वामिकालकारणविषयपरोक्षत्वसाधर्म्यात्तद्भावे च शेषज्ञानसद्भावादादावेव मतिज्ञानश्रुतज्ञानयोरुपन्यास इति, तथाहि-य एव मतिज्ञानस्य स्वामी स एव श्रुतज्ञानस्य, "जत्थ मतिनाणं तत्थ सुयनाणं" इति [यत्र मतिज्ञानं तत्र श्रुतज्ञानं] वचनात्, तथा यावान् मतिज्ञानस्य स्थितिकालस्तावानेवेतरस्य, प्रवाहापेक्षया अतीतादिः सर्व एव, अप्रतिपतितैकजीवापेक्षया तु षट्षष्टिसागरोपमाण्यधिकानीति, तथा यथा मतिज्ञानं क्षयोपशमहेतुकं तथा श्रुतज्ञानमपि यथा च मतिज्ञानमोघतः सर्वद्रव्यादिविषयमेवं श्रुतज्ञानमपि यथा च मतिज्ञानं परोक्षं एवं श्रुतज्ञानमपि तथा मतिज्ञानश्रुतज्ञानभावे चावध्यादिभावादिति, आह च—"जं सामिकालकारणविसयपरोक्खत्तणेहिं तुल्लाइं। तब्भावे सेसाइं तेणा-

ईए मइसुयाइं ॥१॥" इति [स्वामिकालकारणविषयपरोक्षत्वैर्यत्तुल्यानि तद्भावे शेषाणि च तेनादौ मतिश्रुते ॥१॥] मतिपूर्वकत्वात् श्रुतस्य विशिष्टमत्यंशरूपत्वाद्वा श्रुतस्यादौ मतेरुपन्यास इति, उक्तं च—"मइपुव्वं जेण सुयं तेणाईए मई विसिट्ठो वा। मइभेओ चेव सुयं तो मइसमणंतरं भणियं ॥१॥" इति [मतिपूर्वं येन श्रुतं तेनादौ मतिर्विशिष्टो वा मतिभेद एव श्रुतं ततः मतिसमनन्तरं भणितं श्रुतं ॥१॥] तथा कालविपर्ययस्वामिलाभसाधर्म्यान्मतिज्ञानश्रुतज्ञानानन्तरमवधिज्ञानस्योपन्यासः, तथाहि—यावानेव मतिज्ञानश्रुतज्ञानयोः स्थितिकालः प्रवाहापेक्षया अप्रति तितैकसत्त्वाधारापेक्षया च तावानेवावधिज्ञानस्यापि, तथा यथैव मतिज्ञानश्रुतज्ञानयोर्विपर्ययज्ञाने भवतः एवमिदमपि मिथ्यादृष्टेर्विभङ्गज्ञानं भवतीति, तथा य एव तयोः स्वामी स एवास्यापि भवतीति, तथा विभङ्गज्ञानिनस्त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपदेव ज्ञानत्रयलाभसम्भव इति, उक्तं च—"कालविवज्जयसामित्तलाभसाहम्मओऽवही तत्तो।" [कालविपर्ययस्वामित्वलाभसाधर्म्यतोऽवधिस्ततः ॥] तथा छद्मस्थविषयभावाध्यक्षत्वसाधर्म्यादवधिज्ञानानन्तरं मनःपर्यवज्ञानस्योपन्यासः, तथाहि—यथाऽवधिज्ञानं छद्मस्थस्य भवति एवं मनःपर्यायज्ञानमपि, तथा यथाऽवधिज्ञानं रूपिद्रव्यविषयमेवमेतदपि, तथा यथाऽवधिज्ञानं क्षायोपशमिके भावे तथेदमपि, तथा यथाऽवधिज्ञानं प्रत्यक्षं तथेदमपीति, उक्तं च—"माणसमेत्तो छउमत्थविसयभावादिसामन्ना" इति [ मनोज्ञानमतश्छाद्मस्थ्यविषयभावादिसामान्यात् ] तथा मनःपर्यायज्ञानानन्तरं केवलज्ञानोपन्यासः तस्य सकलज्ञानोत्तमत्वात् तथा अप्रमत्तयतिस्वामिसाधर्म्यात्, तथाहि—यथा मनःपर्यायज्ञानमुत्तमयतेरेव भवति एवमिदमपि, तथा अवसानलाभात्, यो हि सर्वज्ञानानि समासादयति स खल्वन्त एवेदमाप्नोतीति, तथा विपर्ययाभावसाधर्म्यात्, तथाहि—यथा मनःपर्यायज्ञानं सविपर्ययं न भवत्येवं केवलमपीति, उक्तं च—अंते केवलमुत्तमजइसामित्तावसाणलाभाओ। एत्थं च मतिसुयाइं परोक्खमियरं च

पच्चक्खं ॥१॥" इति [केवलमन्ते उत्तमयतिस्वामित्वादवसानलाभात् अत्र च मतिश्रुते परोक्षं इतराणि प्रत्यक्षं ॥१॥] उक्तस्वरूपस्य ज्ञानस्य यदावारकं कर्म्म तत्स्वरूपाभिधानाय सूत्रं-'पंचे'त्यादि सुगमं ।

उक्तं ज्ञानावरणमिति तत्क्षपणोपायविशेषस्य स्वाध्यायस्य भेदानाह--

**पंचविहे सज्झाए पं तं०—वायणा पुच्छणा परियट्टणा अणुप्पेहा धम्मकहा (सू० ४६५) पंचविहे पच्चक्खाणे पं० तं०—सद्दहणसुद्धे विणयसुद्धे अणुभासणासुद्धे अणुपालणासुद्धे भावसुद्धे (सू० ४६६) पंचविहे पडिक्कमणे पं० तं०—आसवदारपडिक्कमणे मिच्छत्तपडिक्कमणे कसायपडिक्कमणे जोगपडिक्कमणे भावपडिक्कमणे (सू०४६७)।**

'पंचविहे' इत्यादि सुगमं, नवरं शोभनं आ-मर्यादया अध्ययनं-श्रुतस्याधिकमनुसरणं स्वाध्यायः, तत्र वक्ति शिष्यस्तं प्रति गुरोः प्रयोजकभावो वाचना पाठनमित्यर्थः, गृहीतवाचनेनापि संशयाद्युत्पत्तौ पुनः प्रष्टव्यमिति पूर्वाधीतस्य सूत्रादेः शङ्कितादौ प्रश्नः प्रच्छनेति, प्रच्छनाविशोधितस्य सूत्रस्य मा भूद्विस्मरणमिति परिवर्त्तना, सूत्रस्य गुणनमित्यर्थः, सूत्रवदर्थेऽपि सम्भवति विस्मरणमतः सोऽपि परिभावनीय इत्यनुप्रेक्षणमनुप्रेक्षा, चिन्तनिकेत्यर्थः, एवमभ्यस्तश्रुतेन धर्मकथा विधेयेति धर्मस्य-श्रुतरूपस्य कथा-व्याख्या धर्मकथेति। धर्मकथामन्थनिर्मथितमिथ्याभावाश्च भव्याः शुद्धं प्रत्याख्यानं प्रपद्यन्त इति तदाह—'पंचविहे'इत्यादि, प्रति-प्रतिषेधत आख्यानं-मर्यादया कथनं-प्रतिज्ञानं प्रत्याख्यानं, तत्र श्रद्धानेन-तथेतिप्रत्ययलक्षणेन शुद्धं-निरवद्यं श्रद्धानशुद्धं, श्रद्धानाभावे हि तदशुद्धं भवति, एवं सर्वत्र, इह निर्युक्तिगाथा—"पच्चक्खाणं सव्वन्नुदेसियं जं जहिं जया काले । तं जो सद्दहइ नरो तं जाणसु सद्-

दृणशुद्धं ॥१॥" [यद्यदा यत्र काले (स्थविरकल्पादौ भरतादौ) सर्वज्ञेन प्रत्याख्यानं देशितं तद्यः श्रद्धाति नरः तत् श्रद्धानशुद्धं जानीहि ॥१॥] विनयशुद्धं यथा—"किइकम्मस्स विसोहिं पउंजए जो अहीणमइरित्तं । मणवयणकायगुत्तो तं जाणसु विणयओ सुद्धं ॥२॥" [कृतिकर्मणो विशुद्धिं योऽहीनातिरिक्तं प्रयुंजीत मनोवचनकायगुप्तस्तत् विनयशुद्धं जानीहि ॥१॥] अनुभाषणाशुद्धं यथा—"अणुभासइ गुरुवयणं अक्खरपयवंजणेहिं परिसुद्धं । पंजलिउडो अभिमुहो तं जाणणुभासणासुद्धं ॥३॥" [अनुभाषते गुरुवचनमक्षरपदव्यञ्जनैः परिशुद्धम् । कृतप्राञ्जलिरभिमुखस्तत् जानीहि अनुभाषणाशुद्धं ॥१॥] नवरं गुरुर्भणति—वोसिरिति, शिष्यस्तु वोसिरामित्ति, अनुपालनाशुद्धं यथा—"कंतारे दुब्भिक्खे आयंके वा महया (ई) (महतीत्यर्थः) समुप्पन्ने। जं पालियं न भग्गं तं जाणऽणुपालणासुद्धं ॥१॥" [कान्तारे दुर्भिक्षे आतंके वा महति समुत्पन्ने । यन्न भग्नं पालितं तदनुपालनाशुद्धं जानीहि ॥१॥] भावशुद्धं, यथा—"रागेण व दोसेण व परिणामेण व (इहलोकाद्याशंसालक्षणेन) न दूसियं जं तु । तं खलु पचक्खाणं भावविसुद्धं मुणेयव्वं ॥१॥" इति [रागेण वा द्वेषेण वा परिणामेन वा(इच्छादिना) न दूषितं यत्तु तत्खलु प्रत्याख्यानं भावविशुद्धं ज्ञातव्यं ॥१॥] ५, अन्यदपि षष्ठं ज्ञानशुद्धमिति निर्युक्तावुक्तं, यदाह—"पचक्खाणं जाणइ कप्पे जं जम्मि होइ कायव्वं । मूलगुणउत्तरगुणे तं जाणसु जाणणासुद्धं ॥१॥" ति [यस्मिन् काले यत्प्रत्याख्यानं मूलगुणेषूत्तरगुणेषु वा कर्तव्यं भवति तत् जानाति तज्ज्ञानशुद्धं जानीहि ॥१॥] इह तु पञ्चस्थानकानुरोधान्नेदमुक्तं, श्रद्धानशुद्धेन वा संगृहीतत्वात्, ज्ञानविशेषत्वात् श्रद्धानस्येति । प्रत्याख्याने च कृते कदाचिदतिचारः सम्भवति, तत्र च प्रतिक्रमणं कर्त्तव्यमिति प्रतिक्रमणं निरूपयन्नाह—'पंचविहे' इत्यादि, प्रतीपं क्रमणं प्रतिक्रमणं, एतदुक्तं भवति—शुभयोगेभ्योऽशुभयोगानुपक्रान्तस्य शुभेष्वेव गमनमिति, उक्तं च—स्वस्थानाद्यत्परस्थानं, प्रमादस्य वशाद्गतः । तत्रैव क्रमणं भूयः,

प्रतिक्रमणमुच्यते ॥१॥ क्षायोपशमिकाद्भावादौदयिकस्य वशं गतः। तत्रापि च स एवार्थः, प्रतिकूलगमात् स्मृतः ॥२॥" इति, इद च विषयभेदात् पञ्चधेति, तत्र आश्रवद्वाराणि–प्राणातिपातादीनि तेभ्यः प्रतिक्रमणं–निवर्त्तनं पुनरकरणमित्यर्थः आश्रवद्वारप्रतिक्रमणं, असंयमप्रतिक्रमणमिति हृदयं, मिथ्यात्वप्रतिक्रमणं यदाभोगानाभोगसहसाकारैर्मिथ्यात्वगमनं तन्निवृत्तिः, एवं कषायप्रतिक्रमणं, योगप्रतिक्रमणं तु यत् मनोवचनकायव्यापाराणामशोभनानां व्यावर्त्तनमिति, आश्रवद्वारादिप्रतिक्रमणमेवाविवक्षितविशेषं भावप्रतिक्रमणमिति, आह च—"मिच्छत्ताइ न गच्छइ न य गच्छावेइ नाणुजाणाइ। जं मणवइकाएहिं तं भणियं भावपडिकमणं ॥१॥" इति, [मिथ्यात्वादि न गच्छति न च गमयति नानुजानाति। यन्मनोवाक्कायैः तद्भणितं भावप्रतिक्रमणं ॥१॥] विशेषविवक्षायां तूक्ता एव चत्वारो भेदाः, यदाह—"मिच्छत्तपडिकमणं तहेव अस्संजमे पडिक्कमणं। कसायाण पडिकमणं जोगाण य अप्पसत्थाणं ॥१॥" इति। [मिथ्यात्वात्प्रतिक्रमणं तथैव चासंयमात्प्रतिक्रमणं कषायेभ्यः प्रतिक्रमणं योगेभ्योऽप्रशस्तेभ्यश्च ॥१॥]

भावप्रतिक्रमणं च श्रुतभावितमतेरेव भवतीति श्रुतं वाचनीयं शिक्षणीयं चेत्येतद्द्वयोपदर्शनार्थं सूत्रे—

**पंचहिं ठाणेहिं सुत्तं वाएज्जा, तं०—संगहट्टयाते उवग्गहणट्टयाते णिज्जरणट्टयाते सुत्ते वा मे पज्जवयाते भविस्सति सुत्तस्स वा अवोच्छित्तिणयट्टयाते। पंचहिं ठाणेहिं सुत्तं सिक्खिज्जा, तं०—णाणट्टयाते दंसणट्टयाते चरित्तट्टयाते वुग्गहविमोतणट्टयाते अहत्थे वा भावे जाणिस्सामीतिकट्टु (सू० ४६८)।**

'पञ्चही'त्यादि सुगम, नवरं सुत्तं–श्रुतं सूत्रमात्रं वा 'वाचयेत्' पाठयेत्, तत्र सङ्ग्रहः–शिष्याणां श्रुतोपादानं स एवार्थः–प्रयोजनं

तस्मै सङ्ग्रहार्थाय सङ्ग्रह एव वाऽर्थो यस्य स सङ्ग्रहार्थस्तद्भावस्तत्ता तया सङ्ग्रहार्थतया श्रुतसङ्ग्रहो भवत्वेषामिति प्रयोजनेनेति भावः अथवैत एव मया संगृहीता भवन्ति-शिष्यीकृता भवन्तीति सङ्ग्रहार्थतया, तत्सङ्ग्रहायेति भावः, एवमुपग्रहार्थयोपग्रहार्थतया वा, एवं ह्येते भक्तपानवस्त्राद्युत्पादनसमर्थतयोपष्टम्भिता भवन्त्विति भावः, निर्जरार्थाय-निर्जरणमेवं मे कर्म्मणां भवत्विति, श्रुतं वा-ग्रन्थो 'मे' मम वाचयत इति गम्यते 'पर्यवजातं' जातविशेषं स्फुटतया भविष्यतीति, अव्यवच्छित्त्या नयनं-श्रुतस्य कालान्तरप्रापणं अव्यवच्छित्तिनयः स एवार्थस्तस्मै इति। ज्ञानं-तत्त्वानां परिच्छेदो दर्शनं-तेषामेव श्रद्धानं चारित्रं-सदनुष्ठानं व्युद्ग्रहो-मिथ्याभिनिवेशस्तस्य तस्माद्वा परेषां विमोचनं व्युद्ग्रहविमोचनं तदर्थाय तदर्थतया वा, 'अहत्थे'त्ति यथास्थान्-यथावस्थितान् यथार्थान् वा-यथाप्रयोजनान् भावान्-जीवादीन् यथार्थान् वा-यथाद्रव्यान् भावान्-पर्यायान् ज्ञास्यामीतिकृत्वा-इतिहेतोः शिक्षत इति।

यथावस्थिताश्च भावा उद्र्ध्वलोके सौधर्म्मादय इति तद्विषयं सूत्रत्रयं, तथाऽधोलोके नारकादयश्चतुर्विंशतिरिति तद्गतां चतुर्विंशतिसूत्रीं तथा तिर्यग्लोके जम्बूद्वीपादय इति तद्गतवस्तुविषयं च सूत्रचतुष्टयमाह—

**सोहम्मीसाणेसु णं कप्पेसु विमाणा पंचवण्णा पं० तं०-किण्हा जाव सुक्किला १, सोहम्मीसाणेसु णं कप्पेसु विमाणा पंचजोयणसयाइं उड्ढं उच्चत्तेणं पन्नत्ता २, बंभलोगलंततेसु णं कप्पेसु देवाणं भवधारणिज्जसरीरगा उक्को-**

१ अधोलोकेऽपि ज्योतिष्कवैमानिकयोः स्वयं गमनं भवत्येव, विमानानि मा भूवन्, पुद्गलोपचित्यादि तु तेषामेव निर्विमानानामपि, इति नारतोऽधोलोकादौ लोके इति क्वचिद्विद्यमानोऽपि पाठः।

सेणं पंचरयणी उड्ढं उच्चत्तेणं पं० ३। नेरइया णं पंचवन्ने पंचरसे पोग्गले बंधेंसु वा बंधंति वा बंधिस्संति वा तं०— किण्हा जाव सुक्किल्ले तित्ते जाव मधुरे, एवं जाव वेमाणिता २४।४ (सू० ४६९) जंबुदीवे २ मंदरस्स पव्वयस्स दाहिणेणं गंगा महानदी पंच महानदीओ समप्पेंति, तं०—जउणा सरऊ आदी कोसी मही १। जंबूमंदरस्स दाहिणेणं सिंधुमहाणदी पंच महानदीओ समप्पेंति तं०—सतद्दू विभासा वितत्था एरावती चंदभागा २ जंबूमंदरस्स उत्तरेणं रत्तामहानई पंच महानईओ समप्पेंति, तं०—किण्हा महाकिण्हा नीला महानीला महातीरा ३, जंबूमंदरस्स उत्तरेणं रत्तावतीमहानई पंच महानईओ समप्पेंति, तं०—इंदा इंदसेणा सुसेणा वारिसेणा महाभोया ४ (सू० ४७०) पंच तित्थगरा कुमारवासमज्झे वसित्ता (ज्झावसित्ता) मुंडा जाव पव्वतिता, तं०—वासुपुज्जे मल्ली अरिट्ठनेमी पासे वीरे (सू० ४७१) चरमचंचाए रायहाणीए पंच सभा पं० तं०—सभा सुधम्मा उववातसभा अभिसेयसभा अलंकारितसभा ववसातसभा, एगमेगे णं इंदट्ठाणे णं पंच सभाओ पं० तं०—सभा सुहम्मा जाव ववसातसभा (सू० ४७२) पंच णक्खत्ता पंचतारा पं० तं०—धणिट्ठा रोहिणी पुणव्वसू हत्थो विसाहा (सू० ४७३) जीवाणं पंचट्ठाणणिव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा चिणंति वा चिणस्संति वा, तं०—एगिंदितनिव्वत्तिते जाव पंचिंदितनिव्वत्तिते, एवं—चिण उवचिण बंध उदीर वेद तह णिज्जरा चेव'। पंचपतेसिता खंधा अणंता पण्णत्ता पंचपतेसोगाढा पोग्गला अणंता पण्णत्ता जाव पंचगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ४७४) पंचमट्ठाणस्स तईओ उद्देसो। पंचममज्झयणं समत्तं ॥

सर्वाण्येतानि सुगमानि, नवरं 'थंभिसु'त्ति शरीरादितयेति, 'दक्षिणेने'ति भरते 'समप्पेंति समाप्नुवन्ति, 'उत्तरेणे'ति एरवत इति । पूर्वतरसूत्रे भरतवक्तव्यतोक्तेति तत्प्रस्तावात्तदुत्पन्नतीर्थकरसूत्रं सुगमं, नवरं कुमाराणामराजभावेन वासः कुमारवासः तं 'अज्झावसित्त'त्ति अध्युष्येति । तथा भरतादिक्षेत्रप्रस्तावात् क्षेत्रभूतचमरचञ्चादिवक्तव्यताभिधायि सूत्रद्वयं । चमरचञ्चा रत्नप्रभापृथिव्यां चमरस्यासुरकुमारराजस्येति, सुधर्म्मा सभा यस्यां शय्या, उपपातसभा यस्यामुत्पद्यते, अभिषेकसभा यस्यां राज्याभिषेकेणाभिषिच्यते, अलङ्कारिका यस्यामलंक्रियते, व्यवसायसभा यत्र पुस्तकवाचनतो व्यवसायं—तत्त्वनिश्चयं करोति, एताश्च यथाक्रममुत्तरपूर्वस्यां द्रष्टव्या इति । देवनिवासाधिकारान्नक्षत्रसूत्रं । नक्षत्रादिदेवरूपता च सत्त्वानां कर्म्मपुद्गलचयादेरिति चयादिसूत्रषट्कं । पुद्गलाश्च विविधपरिणामा इति पुद्गलसूत्राणीति, व्याख्या च प्राग्वदध्ययनसमाप्तिं यावत्सुकरैवेति । पञ्चमस्थानकस्य तृतीयः ॥

॥ इति श्रीमदभयदेवाचार्यविरचिते स्थानाख्यतृतीयाङ्गविवरणे चतुःस्थानकाख्यं पञ्चममध्ययनं समाप्तम् ॥

# अथ षष्ठस्थानकमध्ययनम् ।

व्याख्यातं पञ्चममध्ययनमधुना संख्याक्रमसम्बद्धमेव षट्स्थानकाख्यं षष्ठमारभ्यते, अस्य चायं विशेषसम्बन्धः—इहानन्तराध्ययने जीवादिपर्यायप्ररूपणा कृता इहापि सैव क्रियते इत्येवंसम्बन्धस्यास्य चतुरनुयोगद्वारस्येदमादिसूत्रम्—

छहिं ठाणेहिं संपन्ने अणगारे अरिहति गणं धारित्तते, तं०—सड्ढी पुरिसज्जाते १ सच्चे पुरिसजाते २ मेहावी पुरिसजाते ३ बहुस्सुते पुरिसजाते ४ सत्तिमं ५ अप्पाधिकरणे ६ ( सू० ४७५ ) छहिं ठाणेहिं निग्गंथे निग्गंथिं गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ, तं०—खित्तचित्तं दित्तचित्तं जक्खातिट्ठं उम्मातपत्तं उवसग्गपत्तं साहिकरणं ( सू० ४७६) छहिं ठाणेहिं निग्गंथा निग्गंथीओ य साहम्मितं कालगतं समायरमाणा णाइक्कमंति, तं०—अंतोहिंतो वा बाहिं णीणेमाणा १ बाहीहिंतो वा निब्बाहिं णीणेमाणा २ उवेहमाणा वा ३ उवासमाणा वा ४ अणुन्नवेमाणा वा ५ तुसिणीते वा संपव्वयमाणा ६ (सू० ४७७)।

अस्य चायमभिसम्बन्धः, पूर्वसूत्रे 'पञ्चगुणरूक्षाः पुद्गला अनन्ताः प्रज्ञप्ता' इत्युक्तं, प्रज्ञापकाश्चैषामर्थतोऽर्हन्तः सूत्रतो गणधराः, गणधराश्च यैर्गुणैर्युक्तस्यानगारस्य गणधरणार्हत्वं भवति तद्युक्ता एवेति तेषां गुणानामुपदर्शनायेदमुक्तमित्येवंसम्बन्धस्यास्य व्याख्या, संहितादिचर्चस्तु प्रतीत एवेति, नवरं षड्भिः स्थानैः—गुणविशेषैः 'सम्पन्नो' युक्तोऽनगारो—भिक्षुः 'अर्हति' योग्यो भवति, 'गणं'

गच्छं धारयितुं मर्यादायामिति गम्यते, पालयितुं वेत्यर्थः 'सद्धि'त्ति श्रद्धावान्, अश्रद्धावतो हि स्वयममर्यादावर्त्तितया परेषां मर्यादास्थापनायामसमर्थत्वात् गणधारणानर्हत्वं, एवं सर्वत्र भावना कार्या, 'पुरुषजातं' पुरुषप्रकारः, इह च षड्भिः स्थानैरित्युक्त्वापि यदुक्तं श्राद्धं पुरुषजातमिति तद्धर्म्मधर्म्मवतोरभेदाद् अन्यथा श्राद्धत्वं सत्यत्वमित्यादि वक्तव्यं स्यादिति १, तथा 'सत्यं' सद्भ्यो—जीवेभ्यो हिततया प्रतिज्ञातशूरतया वा, एवंभूतो हि पुरुषो गणपालक आदेयश्च स्यादिति २, तथा 'मेधावि' मर्यादया धावतीत्येवंशीलमिति निरुक्तिवशात्, एवंभूतो हि गणस्य मर्यादाप्रवर्त्तको भवति, अथवा मेधा—श्रुतग्रहणशक्तिस्तद्वत्, एवंभूतो हि श्रुतमन्यतो झगिति गृहीत्वा शिष्याध्यापने समर्थो भवतीति ३ तथा बहु—प्रभूतं श्रुतं—सूत्रार्थरूपं यस्य तत्तथा, अन्यथा हि गणानुपकारी स्यात्, उक्तं च —"सीसाण कुणइ कह सो तहाविहो हंदि नाणमाईणं। अहियाहियसंपत्तिं संसारुच्छेयणं परमं? ॥१॥" [कथं शिष्याणां परमां संसारोच्छेदिनीं ज्ञानादीनामधिकाधिकां संपत्तिं तथाविधः स करिष्यति? ॥१॥] तथा "कह सो जयउ अगीओ कह वा कुणउ अगीयनिस्साए। कह वा करेउ गच्छं सबालवुड्ढाउलं सो उ ॥२॥" इति ४, [कथं सोऽगीतार्थो यततां कथं वाऽगीतार्थनिश्रया करोतु स बालवृद्धाकुलं गच्छं च स कथं करोतु (प्रवर्त्तयतु)? ॥१॥] तथा 'शक्तिमत्' शरीरमन्त्रतन्त्रपरिवारादिसामर्थ्ययुक्तं, तद्धि विविधास्वापत्सु गणस्यात्मनश्च निस्तारकं भवतीति ५, तथा 'अप्पाहिगरण'न्ति अल्पं—अविद्यमानमधिकरणं—स्वपक्षपरपक्षविषयो विग्रहो यस्य तत्तथा, तद्ध्यनुवर्त्तकतया गणस्याहानिकारकं भवतीति ६' ग्रन्थान्तरे त्वेवं गणिनः स्वरूपमुक्तम्—"सुत्तत्थे निम्माओ पियदढधम्मोऽणुवत्तणाकुसलो। जाईकुलसंपन्नो गम्भीरो लद्धिमंतो य ॥१॥ संगहुवग्गहनिरओ कयकरणो पवयणाणुरागी य। एवंविहो उ भणिओ गणसामी जिणवरिंदेहिं ॥२॥" [सूत्रार्थे निष्णातः प्रियदृढधर्मः अनुवर्त्तनाकुशलः। जातिकुलसंपन्नो गंभीरो लब्धिमांश्च ॥१॥ संग्रहोपग्रहनिरतः

कृतकरणः प्रवचनानुरागी च । एवंविध एव भणितो गणस्वामी जिनवरेन्द्रैः ॥२॥] इति । अनन्तरं गणधरगुणा उक्ताः, गणधरकृतमर्यादया च वर्त्तमानो निर्ग्रन्थो नाज्ञामतिक्रामतीत्येतत् सूत्रद्वयेनाह–तत्र प्रथमं पञ्चस्थानके व्याख्यातमेव तथापि किञ्चिदुच्यते–गृह्णन्–ग्रीवादाववलम्बयन् हस्तवस्त्राञ्चलादौ गृहीत्वा नातिक्रामत्याज्ञामिति गम्यते, क्षिप्तचित्तां शोकेन दृप्तचित्तां हर्षेण यक्षाविष्टां–देवताधिष्ठितां उन्मादप्राप्तां वातादिना उपसर्गप्राप्तां–तिर्यङ्मनुष्यादिना नीयमाना साधिकरणां–कलहयन्तीं ॥ षड्भिः स्थानैः वक्ष्यमाणैर्निर्ग्रन्थाः–साधवो निर्गन्थ्यश्च–साध्व्यस्तथाविधनिर्ग्रन्थाभावे मिश्राः सन्तः साधर्मिकं–समानधर्म्मयुक्तं साधुमित्यर्थः 'समायरमाणे'ति समाद्रियमाणाः साधर्मिकं प्रत्यादरं कुर्वाणाः समाचरन्तो वा–उत्पाटनादिव्यवहारविषयीकुर्वन्तो नातिक्रामन्त्याज्ञां–स्त्रीभिः सह विहारस्वाध्यायावस्थानादि न कार्यमित्यादिरूपां, पुष्टालम्बनत्वादिति, 'अंतोहिंतो व'त्ति गृहादेर्मध्याद् बहिर्नयन्तो वाशब्दा विकल्पार्थाः, 'बाहिहिंतो व'त्ति गृहादेर्बहिस्तात् निर्बहिः–अत्यन्तबहिर्बहिस्तात्तरां नयन्तः, 'उपेक्षमाणा' इति, उपेक्षा द्विविधा–व्यापारोपेक्षा अव्यापारोपेक्षा च, तत्र व्यापारोपेक्षया तमुपेक्षमाणाः, तद्विषयायां छेदनबन्धनादिकायां समयप्रसिद्धक्रियायां व्याप्रियमाणा इत्यर्थः, अव्यापारोपेक्षया च मृतकस्वजनादिभिस्तं सत्क्रियमाणमुपेक्षमाणाः तत्रोदासीना इत्यर्थः, तथा 'उवासमाण'त्ति पाठान्तरेण 'भयमाण'त्ति वा रात्रिजागरणात्तदुपासनां विदधानाः, 'उवसामेमाण'त्ति पाठान्तरे तं क्षुद्रव्यन्तराधिष्ठितं समयप्रसिद्धविधिनोपशमयन्त इति, तथा 'अणुन्नवेमाण'त्ति तत्स्वजनादींस्तत्परिष्ठापनायानुज्ञापयन्तः, 'तुसिणीए'त्ति तूर्णीभावेन संप्रव्रजन्तस्तत्परिष्ठापनार्थमागमानुज्ञातत्वात् सर्वमिदमाज्ञातिक्रमाय न भवतीति ।

छाद्मस्थिकश्चायं व्यवहारः प्राय उक्त इति छद्मस्थप्रस्तावादिदमाह—

छ ठाणाइं छउमत्थे सव्वभावेणं ण जाणति ण पासति, तंजहा—धम्मत्थिकायमधम्मत्थिकातं आयासं जीवमसरीरपडिबद्धं परमाणुपोग्गलं सद्दं, एताणि चेव उप्पन्ननाणदंसणधरे अरहा जिणे जाव सव्वभावेणं जाणति पासति तं०—धम्मत्थिकातं जाव सद्दं (सू० ४७८) छहिं ठाणेहिं सव्वजीवाणं णत्थि इड्ढीति वा जुत्तीति वा, [जसेइ वा बलेति वा वीरिएइ वा पुरिसकार] (जाव) परक्कमेति वा, तं०—जीवं वा अजीवं करणताते १ अजीवं वा जीवं करणताते २ एगसमएणं वा दो भासातो भासित्तते ३ सयं कडं वा कम्मं वेदेमि वा मा वा वेएमि ४ परमाणुपोग्गलं वा छिंदित्तए वा भिंदित्तए वा अगणिकातेण वा समोदहित्तते ५ बहिता वा लोगंता गमणताते ६ (सू० ४७९) छज्जीवनिकाया पं० तं०—पुढविकाइया जाव तसकाइया (सू० ४८०) छ तारग्गहा पं० तं०—सुक्के बुहे बहस्सति अंगारते सनिचरे केतू (सू० ४८१) छव्विहा संसारसमावन्नगा जीवा पं० तं०—पुढविकाइया जाव तसकाइया, पुढविकाइया छगइया छआगतिता पं० तं०—पुढविकातिते पुढविकाइएसु उववज्जमाणे पुढविकाइएहिंतो वा जाव तसकाइएहिंतो वा उववज्जेज्जा, सो चेव णं से पुढविकातिते, पुढविकातितत्तं विप्पजहमाणे पुढविकातितत्ताते वा जाव तसकातितत्ताते वा गच्छेज्जा, आउकातियावि छगतिता छआगतिता, एवं चेव जाव तसकातिता (सू० ४८२) छव्विहा सव्वजीवा पं० तं०—आभिणिबोहियणाणी जाव केवलणाणी अन्नाणी, अहवा छव्विधा सव्वजीवा पं० तं०—एगिंदिया जाव पंचिंदिया अणिंदिया, अहवा छव्विहा सव्वजीवा पं० तं०—ओरालियसरीरी वेउव्वियसरीरी आहारगसरीरी तेअगसरीरी कम्मगसरीरी असरीरी

(सू० ४८३) छव्विहा तणवणस्सतिकातिता पं० तं०—अग्गबीया मूलबीया पोरबीया खंधबीया बीयरुहा संमुच्छिमा (सू० ४८४)।

'छही'त्यादि, इह छद्मस्थो–विशिष्टावध्यादिविकलो न त्वकेवली, यतो यद्यपि धर्माधर्माकाशान्यशरीरं जीवं च परमावधिर्न जानाति तथापि परमाणुशब्दौ जानात्येव, रूपित्वात् तयोः, रूपिविषयत्वाच्चावधेरिति, एतच्च सूत्रं सविपर्ययं प्राग्व्याख्यातप्रायमेवेति। छद्मस्थस्य धर्मास्तिकायादिषु ज्ञानशक्तिर्नास्तीत्युक्तमधुना सर्वजीवानां येषु यथा शक्तिर्नास्ति तानि तथाऽऽह—'छही'त्यादि, षट्सु स्थानेषु सर्वजीवानां–संसारिमुक्तरूपाणां नास्ति ऋद्धिः–विभूतिः, इतीति–एवंप्रकारा यया जीवादिरजीवादिः क्रियते, वा विकल्पे, एवं द्युतिः–प्रभा माहात्म्यमित्यर्थः, यावत्करणात् 'जसेइ वा बलेइ वा वीरिएइ वा पुरिसकारपरक्कमे इ वे'ति, इदं च व्याख्यातमनेकश इति न व्याख्यायते, तद्यथा—'जीवं वे'त्यादि, जीवस्याजीवस्य करणतायां, जीवमजीवं कर्त्तुमित्यर्थः १, अजीवस्य वा जीवस्य करणतायां २ 'एगसमयेण व'त्ति युगपद्वा द्वे भाषे सत्यासत्यादिके भाषितुमिति ३ स्वयंकृतं वा कर्म्म वेदयामि वा मा वा वेदयामीत्यत्रेच्छावशे वेदनेऽवेदने वा नास्ति बलमिति प्रक्रमः, अयमभिप्रायो–न हीच्छावशतः प्राणिनां कर्म्मणः क्षपणाक्षपणे स्तो बाहुबलिन इव, अपि त्वनाभोगनिर्वर्त्तिते ते भवतः अन्यत्र केवलिसमुद्घातादिति अन्यथा वा भावनीयं ४ परमाणुपुद्गलं वा छेत्तुं वा खड्गादिना द्विधाकृत्य भेत्तुं वा शूच्यादिना वा विध्वा, छेदादौ परमाणुत्वहानेः अग्निकायेन वा समवदग्धुमिति, सूक्ष्मत्वेनादाह्यत्वात्तस्येति ५, बहिस्ताद्वा लोकान्ताद्गमनतायां ६, अलोकस्यापि लोकताऽऽपत्तेरिति ॥ जीवमजीवं कर्त्तुमित्युक्तमतो जीवपदार्थस्यैव बहुधा प्ररूपणाय 'छज्जीवनिकाये'त्यादि सूत्रप्रपञ्चमाह–सुगमश्चायं, नवरं जीवानां निकाया–राशयो जीवनिकायाः, इह च जीवनिकायानभिधाय यत् पृथिवी-

कायिकादिशब्दैर्निकायवन्त उक्ताः तत्तेषामभेदोपदर्शनाथ, न ह्येकान्तेन समुदायात् समुदायिनो व्यतिरिच्यन्ते, व्यतिरेकेणाप्रतीयमानत्वादिति ॥ तारकाकारा ग्रहास्तारकग्रहाः, लोके हि नव ग्रहाः प्रसिद्धाः, तत्र च चन्द्रादित्यराहूणामतारकाकारत्वादन्ये पट् तथोक्ता इति, 'सुक्के'त्ति शुक्रः 'वहस्सइ'त्ति बृहस्पतिः 'अंगारको' मङ्गलः 'सनिच्छरे'त्ति शनैश्चर इति। संसारसमापन्नकजीवसूत्रे पृथ्वीकायिकादयो जीवतयोक्ताः पूर्वसूत्रे तु निकायत्वेनेति विशेषान्न पुनरुक्ततेति। ज्ञानिसूत्रे अज्ञानिनस्त्रिविधा मिथ्यात्वोपहतज्ञानाः। इन्द्रियसूत्रेऽनिन्द्रियाः–अपर्याप्ताः केवलिनः सिद्धाश्चेति। शरीरसूत्रे यद्यप्यन्तरगतौ कार्मणशरीरिसम्भवस्तद्व्यतिरिक्तस्य तैजसशरीरिणोऽसम्भवस्तथाप्येकतराविवक्षया भेदो व्याख्यातव्यः तथा अशरीरी सिद्ध इति। तृणवनस्पतिकायिका वादरा इत्यर्थो, मूलबीजा–उत्पलकन्दादयः इत्यादि व्याख्यातमेव, नवरं सम्मूर्च्छिमाः–दग्धभूमौ बीजासत्त्वेऽपि ये तृणादय उत्पद्यन्ते।

यथाधिकृताऽध्ययनावतारं प्ररूपिता जीवाः, अथ तेषामेव च ये पर्यायविशेषा दुर्लभास्तांस्तथैवाह—

छट्ठाणाइं सव्वजीवाणं णो सुलभाइं भवंति, तं०—माणुस्सए भवे १ आयरिए खित्ते जम्मं २ सुकुले पच्चायाती ३ केवलिपन्नत्तस्स धम्मस्स सवणता ४ सुयस्स वा सद्दहणता ५ सद्दहितस्स वा पत्तितस्स वा रोइतस्स वा सम्मं काएणं फासणया ६ (सू० ४८५) छ इंदियत्था पं० तं—सोइंदियत्थे जाव फासिंदियत्थे नोइंदियत्थे (सू० ४८६) छव्विहे संवरे पं० तं०—सोतिंदियसंवरे जाव फासिंदियसंवरे, णोइंदितसंवरे, छव्विहे असंवरे, पं० तं०–सोइंदिअअसंवरे जाव फासिंदितअसंवरे णोइंदितअसंवरे (सू० ४८७) छव्विहे साते पं० तं०–सोइंदि-

यसाते जाव नोइंदियसाते, छव्विहे असाते पं० तं०—सोतिंदितअसाते जाव नोइंदितअसाते (सू० ४८८) छव्विहे पायच्छित्ते पं० तं०—आलोयणारिहे पडिक्कमणारिहे तदुभयारिहे विवेगारिहे विउस्सग्गारिहे तवारिहे (सू०४८९)।

'छट्ठाणाई'त्यादि, षट् स्थानानि—षट् वस्तूनि सर्वजीवानां 'नो' नैव 'सुलभानि' सुप्रापाणि भवन्ति, कृच्छ्रलभ्यानीत्यर्थो, न पुनरलभ्यानि केषाञ्चिज्जीवानां तल्लाभोपलम्भादिति, तद्यथा—मानुष्यको—मनुष्यसम्बन्धी भवो—जन्म स नो सुलभ इति प्रक्रमः, आह च—"ननु पुनरिदमतिदुर्लभमगाधसंसारजलधिविभ्रष्टम्। मानुष्यं खद्योतकतडिल्लताविलसितप्रतिमम् ॥१" इति, एवमार्ये क्षेत्रे—अर्द्धषड्विंशतिजनपदरूपे जन्म—उत्पत्तिः, इहाप्युक्तम्—'सत्यपि च मानुषत्वे दुर्लभतरमार्यभूमिसम्भवनम्। यस्मिन् धर्माचरणप्रवणत्वं प्राप्नुयात् प्राणी ॥१॥" इति, तथा सुकुले—इक्ष्वाकादिके प्रत्यायातिः—जन्म नो सुलभमिति, अत्राभिहितम्—"आर्यक्षेत्रोत्पत्तौ सत्यामपि सत्कुलं न सुलभं स्यात्। सच्चरणगुणमणीनां पात्रं प्राणी भवति यत्र ॥१॥" इति, तथा केवलिप्रज्ञप्तस्य धर्म्मस्य श्रवणता दुर्लभा, यतोऽवाचि—"सुलभा सुरलोयसिरी रयणायरमेहला मही सुलहा। निव्वुइसुहजणियरुई जिणवयणसुई जए दुलहा ॥१॥"इति, [सुरलोकश्रीः सुलभा रत्नाकरमेखला मही सुलभा। निर्वृतिसुखजनितरुचिः जिनवचनश्रुतिर्जगति दुर्लभा ॥१॥] श्रुतस्य वा श्रद्धानता दुर्लभा, उक्तं च—"आहच्च सवणं लद्धुं, सद्धा परमदुल्लहा। सोच्चा नेआउयं मग्गं, बहवे परिभस्सइ ॥१॥" [कदाचिच्छ्रवणं लब्ध्वा श्रद्धा परमदुर्लभा। यतः बहवो न्यायोपपन्नं मार्गं श्रुत्वाऽपि परिभ्रश्यन्ति ॥१॥] तथा श्रद्धितस्य वा सामान्येन प्रतीतस्य वोपपत्तिभिरथवा प्रीतिकस्य—स्वविषये उत्पादितप्रीतेः रोचितस्य वा—चिकीर्षितस्य सम्यग्—यथावत् कायेन—शरीरेण न मनोरथमात्रेणाविरतवत् स्पर्शनता—स्पर्शनमिति, यदाह—धम्मंपिहु सद्दहंतया, दुल्लहया काएण फासया। इह कामगुणेसु मुच्छिया, समयं गोयम! मा पमायए ॥१॥" इति,

[धर्मं तु श्रद्दधतां दुर्लभा ततः कायेन स्पर्शनता। संसारे कामगुणेषु मूर्च्छितानां तन्मा समयमपि प्रमाद्येः गौतम! ॥१॥] मनुष्यभवादीनां च दुर्लभत्वं प्रमादादिप्रसक्तप्राणिनामेव न सर्वेषामिति, यतो मनुष्यभवमाश्रित्याभिहितम्–"एयं पुग एवं खलु अन्नाणपमायदोसओ नेयं। जं दीहा कायठिई भणिया एगिंदियाईणं ॥१॥ एसा य असइदोसासेवणओ धम्मवज्जचित्ताणं। ता धम्मे जइयव्वं सम्मं सइ धीरपुरिसेहिं ॥२॥" ति, [एतत् पुनरेवं खलु असकृत्प्रमाददोषतो ज्ञेयं। यद्दीर्घा कायस्थितिर्भणितैकेन्द्रियादीनां ॥१॥ एषा चासकृद्दोषासेवनतो धर्मवर्जितचित्तानां। तत् धर्मे यतितव्यं सम्यक् सदा धीरपुरुषैः ॥२॥] मानुषत्वादीनि च सुलभानि दुर्लभानि च भवन्तीन्द्रियार्थानां संवरे असंवरे च सति, तयोश्च सतोः सातासाते स्तत्तत्क्षयश्च प्रायश्चित्ताद् भवतीतीन्द्रियार्थानिन्द्रियसंवरासंवरौ सातासाते प्रायश्चित्तं च प्ररूपयन् सूत्रषट्कमाह–सुगमश्चेदं, 'छ इंदियत्थ'त्ति मनस आन्तरकरणत्वेन करणत्वात् करणस्य चेन्द्रियत्वात् तन्त्रान्तररूढ्या वा मनस इन्द्रियत्वात् तद्विषयस्येन्द्रियार्थत्वेन षडिन्द्रियार्था इत्युक्तं, तत्र श्रोत्रेन्द्रियादीनामर्था–विषयाः शब्दादयः, 'नोइंदियत्थ'त्ति औदारिकादित्वार्थपरिच्छेदकत्वलक्षणधर्मद्वयोपेतमिन्द्रियं तस्यौदारिकादित्वधर्मलक्षणदेशनिषेधात् नोइन्द्रियं–मनः सादृश्यार्थत्वाद्वा नोशब्दस्यार्थपरिच्छेदकत्वेनेन्द्रियाणां सदृशमिति तत्सहचरमिति वा नोइन्द्रियं–मनस्तस्यार्थो–विषयो जीवादिः नोइन्द्रियार्थ इति। श्रोत्रेन्द्रियद्वारेण मनोज्ञशब्दश्रवणतो यत्सातं–सुखं तच्छ्रोत्रेन्द्रियसातमेवं शेषाण्यपि, तथा यदिष्टचिन्तनतस्तन्नोइन्द्रियसातमिति। आलोचनार्हं यद् गुरुनिवेदनया शुद्ध्यति, प्रतिक्रमणार्हं यद् मिथ्यादुष्कृतेन, तदुभयार्हं यदालोचनामिथ्यादुष्कृताभ्यां, विवेकार्हं यत्परिष्ठापिते आधाकर्मादौ शुद्ध्यति, व्युत्सर्गार्हं यत्कायचेष्टानिरोधतः, तपोऽर्हं यन्निर्विकृतिकादिना तपसेति।

प्रायश्चित्तस्य च मनुष्या एव वोढार इति मनुष्याधिकारवत् 'छव्विहा मणुस्सा' इत्यादिसूत्रादारभ्य आ लोकस्थितिसूत्रात्

प्रकरणमाह—

छव्विहा मणुस्सगा प० तं०—जंबूदीवगा धायइसंडदीवपुरच्छिमद्धगा धाततिसंडदीवपच्चत्थिमद्धगा पुक्खरवरदीवड्ढपुरत्थिमद्धगा पुक्खरवरदीवड्ढपच्चत्थिमद्धगा अंतरदीवगा, अहवा छव्विहा मणुस्सा पं० तं०—संमुच्छिममणुस्सा ३—कम्मभूमगा १ अकम्मभूमगा २ अंतरदीवगा ३, गब्भवक्कंतिअमणुस्सा ३—कम्मभूमिगा १ अकम्मभूमिगा २ अंतरदीवगा ३ (सू० ४९०) छव्विहा इड्ढीमंता मणुस्सा पं० तं०—अरहंता चक्कवट्टी बलदेवा वासुदेवा चारणा विज्जाह॰ । छव्विहा अणिड्ढीमंता मणुस्सा पं० तं०—हेमवंतगा हेरन्नवंतगा हरिवंसगा रम्मगवंसगा कुरुवासिणो अंतरदीवगा (सू० ४९१) छव्विहा ओसप्पिणी पं० तं०—सुसमसुसमा जाव दूसमदूसमा, छव्विहा ओसप्पिणी पं० तं०—दुस्समदुस्समा जाव सुसमसुसमा (सू० ४९२) जंबुद्दीवे २ भरहेरवएसु वासेसु तीताए उस्सप्पिणीते सुसमसुसमाते समाए मणुया छच्च धणुसहस्साइं उड्ढमुच्चत्तेणं हुत्था, छच्च अद्धपलिओवमाइं परमाउं पालयित्था १, जंबुद्दीवे २ भरहेरवतेसु वासेसु इमीसे ओसप्पिणीते सुसमसुसमाते समाए एवं चेव २, जंबू० भरहेरवते आगमेस्साते उस्सप्पिणीते सुसमसुसमाते समाए एवं चेव जाव छच्च अद्धपलिओवमाइं परमाउं पालतिस्संति ३, जंबुद्दीवे २ देवकुरुउत्तरकुरासु मणुया छधणुस्सहस्साइं उड्ढं उच्चत्तेणं पं० छच्च अद्धपलिओवमाइं परमाउं पालेंति ४, एवं धायइसंडदीवपुरच्छिमद्धे चत्तारि आलावगा जाव पुक्खरवरदीवड्ढपच्चच्छिमद्धे चत्तारि आलावगा (सू०४९३) छव्विहे संघयणे पं० तं०—वतिरोसभणारातसंघयणे उसभणारायसंघयणे नारायसंघयणे

अद्धनारायसंघयणे खीलितासंघयणे छेवट्ठसंघयणे (सू०४९४) छव्विहे संठाणे पं० तं०—समचउरंसे णग्गोहपरि-
मंडले साती खुज्जे वामणे हुंडे (सू० ४९५)।

गतार्थं चैतत्, नवरं 'अहवा छव्विहे'त्यत्र सम्मूर्च्छनजमनुष्यास्त्रिविधाः कर्म्मभूमिजादिभेदेन, तथा गर्भव्युत्क्रान्तिकास्त्रिधा तथै-
वेति षोढा। 'चारण'त्ति जङ्घाचारणा विद्याचारणाश्च, विद्याधरा—वैताढ्यादिवासिनः। 'छच्चधणुसहस्साइं'ति त्रीन् क्रोशानित्यर्थः,
'छच्च अद्धपलिओवमाइं'ति त्रीणि पल्योपमानीत्यर्थः। संहननं—अस्थिसञ्चयः, वक्ष्यमाणोपमानोपमेयः शक्तिविशेष इत्यन्ये, तत्र
वज्रं—कीलिका ऋषभः—परिवेष्टनपट्टः नाराचः—उभयतो मर्कटबन्धः, यत्र द्वयोरस्थ्नोरुभयतोमर्कटबन्धेन बद्धयोः पट्टाकृतिना तृतीये-
नास्थ्ना परिवेष्टितयोरुपरि तदस्थित्रितयभेदि कीलिकाकारं वज्रनामकमस्थि भवति तद्वज्रऋषभनाराचं प्रथमं, यत्र तु कीलिका नास्ति
तत् ऋषभनाराचं द्वितीयं, यत्र तूभयोर्मर्कटबन्ध एव तन्नाराचं तृतीयं, यत्र त्वेकतो मर्कटबन्धो द्वितीयपार्श्वे कीलिका तदर्द्धनाराचं
चतुर्थं, कीलिकाविद्धास्थिद्वयसञ्चितं कीलिकाख्यं पञ्चमं, अस्थिद्वयपर्यन्तस्पर्शनलक्षणां सेवामार्त्तं सेवामागतमिति सेवार्त्तं षष्ठं, शक्ति-
विशेषपक्षे त्वेवंविधदार्वादेरिव दृढत्वं संहननमिति, इह गाथे—"वज्जरिसभनारायं पढमं बीयं च रिसभनारायं। नाराय अद्धनारायं की-
लिया तहय छेवट्ठं ॥१॥ रिसहो य होइ पट्टो वज्जं पुण खीलियं वियाणाहि। उभयो मक्कडबंधं नारायं तं वियाणाहि ॥२॥" [वज्रर्ष-
भनाराचं प्रथमं द्वितीयं च ऋषभनाराचं नाराचमर्द्धनाराचं कीलिकां तथा सेवार्त्तं च ॥१॥ ऋषभो भवति च पट्टः वज्रं पुनः कीलिकां
विजानीहि उभयतो मर्कटबन्धं नाराचं विजानीहि तत् ॥२॥] संस्थानं—शरीराकृतिरवयवरचनात्मिका, तत्र समाः—शरीरलक्षणोक्तप्रमा-
णाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत् समचतुरस्रं, अश्रिस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवास्ततश्च सर्वेऽप्यवयवाः शरीरल-

क्षणोक्तप्रमाणाव्यभिचारिणो यस्य न तु न्यूनाधिकप्रमाणास्तत्तुल्यं समचतुरस्रं, तथा न्यग्रोधवत्परिमण्डलं न्यग्रोधपरिमण्डलं, यथा न्यग्रोध उपरि सम्पूर्णावयवः अधस्तनभागे पुनर्न तथा तथेदमपि नाभेरुपरि विस्तरबहुलं शरीरलक्षणोक्तप्रमाणभाग् अधस्तु हिनाधिकः प्रमाणमिति, तथा 'सादीति आदिरिहोत्सेधाख्यो नाभेरधस्तनो देहभागो गृह्यते तेनादिना शरीरलक्षणोक्तप्रमाणभाजा सह वर्त्तते यत्तत् सादि, सर्वमेव हि शरीरमविशिष्टेनादिना सह वर्त्तत इति विशेषणान्यथानुपपत्तेरिह विशिष्टता लभ्यते, अतः सादि—उत्सेधबहुलं परिपूर्णोत्सेधमित्यर्थः, 'खुज्जे'त्ति अधस्तनकायमडभं, इहाधस्तनकायशब्देन पादपाणिशिरोग्रीवमुच्यते तद् यत्र शरीरलक्षणोक्तप्रमाणव्यभिचारि यत्पुनः शेषं तद्यथोक्तप्रमाणं तत्कुब्जमिति, 'वामण'त्ति मडहकोष्ठं यत्र हि पाणिपादशीरोग्रीवं यथोक्तप्रमाणोपेतं यत्पुनः शेषं कोष्ठं तन्मडभं—न्यूनाधिकप्रमाणं तद्वामनं, 'हुंडे'त्ति सर्वत्रासंस्थितं, यस्य हि प्रायेणैकोऽप्यवयवः शरीरलक्षणोक्तप्रमाणेन न संवदति तत्सर्वत्रासंस्थितं हुंडमिति, उक्तं च—"तुल्लं १ वित्थरबहुलं २ उस्सेहबहुलं च ३ मडहकोट्ठं च ४ हेट्ठिल्लकायमडहं ५ सव्वत्थासंठियं हुंडं ॥१॥" इति, [तुल्यं १ विस्तारबहुलं २ उत्सेधबहुलं ३ मडभकोष्ठं च ४ अधस्तनकायमडभं ५ सर्वत्रासंस्थितं हुंडं ६ ॥१॥] इह गाथायां सूत्रोक्तक्रमापेक्षया चतुर्थपञ्चमयोर्व्यत्ययो दृश्यत इति।

छठाणा अणत्तवओ अहिताते असुभाते अखमाते अनीसेसाए अणाणुगामियत्ताते भवंति, तं—परिताते परिताले सुते तवे लाभे पूतासक्कारे, छट्ठाणा अत्तवतो हिताते जाव आणुगामियत्ताते भवंति, तं—परिताते परिताले जाव पूतासक्कारे (सूत्रं ४९६) छव्विहा जाइआरिया मणुस्सा पं० तं—अंबट्ठा य कलंदा य, वेदेहा वेदिगातिता। हरिता चुंचुणा चेव, छप्पेता इब्भजातिओ ॥१॥ छव्विधा कुलारिता मणुस्सा पं० तं—उग्गा भोगा राइन्ना इ-

क्खागा णाला कोरव्वा (सूत्रं ४९७) छव्विधा लोगट्ठिती पं० तं०—आगासपतिठिते वाए वायपतिट्ठिए उदही उदधिपतिट्ठिता पुढवी पुढविपइट्ठिया तसा थावरा पाणा अजीवा जीवपइट्ठिया जीवा कम्मपतिट्ठिया (सू० ४९९)।

'अणत्तवओ'त्ति अकषायो ह्यात्मा आत्मा भवति स्वस्वरूपावस्थितत्वात्तद्वान्न भवति यः सोऽनात्मवान् सकषाय इत्यर्थः, तस्य 'अहिताय' अपथ्याय 'अशुभाय' पापाय असुखाय वा–दुःखाय 'अक्षमाय' असङ्गतत्वाय अक्षान्त्यै वा 'अनिःश्रेयसाय' अकल्याणाय 'अननुगामिकत्वाय' अशुभानुबन्धाय भवन्ति, मानकारणतयैहिकामुष्मिकापायजनकत्वादिति, 'पर्यायो' जन्मकालः प्रव्रज्याकालो वा, स च महानेव मानकारणं भवतीति महानिति विशेषणं द्रष्टव्यं, अथवा गृहस्थापेक्षया अल्पोऽपि प्रव्रज्यापर्यायो मानहेतुरेवेति, तत्र जन्मपर्यायो महानहिताय, यथा बाहुबलिनः, एवमन्येऽपि यथासम्भवं वाच्याः, नवरं 'परियाले'त्ति परिवारः शिष्यादिः 'श्रुतं' पूर्वगतादि, उक्तं च—"जह जह बहुस्सुओ संमओ य सीसगणसंपरिवुडो य। अविणिच्छिओ य समए तह तह सिद्धंतपडिणीओ ॥१॥" इति, [यथा यथा बहुश्रुतः संमतश्च शिष्यगणसंपरिवृतश्च। अविनिश्चितश्च समये तथा तथा सिद्धान्तप्रत्यनीकः ॥१॥] तपः–अनशनादि लाभोऽन्नादीनां पूजा–स्तवादिरूपा तत्पूर्वकः सत्कारो–वस्त्राभ्यर्चनं पूजायां वा आदरः पूजासत्कार इति। जातिः–मातृकः पक्षः तया आर्याः–अपापा निर्दोषा जात्यार्याः विशुद्धमातृका इत्यर्थः, अंबट्ठेत्याद्यनुष्टुप्प्रतिकृतिः, षडप्येता इभ्यजातय इति, इभमर्हन्तीतीभ्याः, यद्द्रव्यस्तूपान्तरित उच्छ्रितकदलिकादण्डो हस्ती न दृश्यते ते इभ्या इति श्रुतिः, तेषां जातय इभ्यजातयस्ता एता इति, कुलं पैतृकः पक्षः, उग्रा आदिराजेनारक्षकत्वेन ये व्यवस्थापितास्तद्वंश्याश्च, ये तु गुरुत्वेन ते भोगास्तद्वंश्याश्च ये तु वयस्यतयाऽऽचरितास्ते राजन्यास्तद्वंश्याश्च इक्ष्वाकवः प्रथमप्रजापतिवंशजाः ज्ञाताः कुरवश्च महावीरशांतिजिनपूर्वजाः, अथवैते लो-

करूढितो ज्ञेयाः । इयं च जातिकुलार्यादिका लोकस्थितिरिति लोकस्थितिप्रत्यासत्त्या तामेवाह—'छव्विहे'त्यादि, इदं पूर्वमेव व्याख्यातं, नवरमजीवा–औदारिकादिपुद्गलास्ते जीवेषु प्रतिष्ठिताः–आश्रिताः- इदं चानवधारणं बोद्धव्यं, जीवविरहेणापि बहुतराणामजीवानामवस्थानात्, पृथिवीविरहतोऽपि त्रसस्थावरवदिति, तथा जीवाः–कर्म्मसु ज्ञानावरणादिषु प्रतिष्ठिताः, प्रायस्तद्विरहितानां तेषामभावादिति ।

अनन्तरं कर्म्मप्रतिष्ठिता जीवा उक्ताः, तेषां च दिक्ष्वेव गत्यादयो भवन्तीति दिशस्तासु गत्यादींश्च प्ररूपयन्नाह—

छद्दिसाओ पं० तं०—पातीणा पडीणा दाहिणा उतीणा उड्ढा अधा, छहिं दिसाहिं जीवाणं गती पवत्तति, तं०—पाणाते जाव अधाते १ एवमागई २ वक्कंती ३ आहारे ४ वुड्ढी ५ निवुड्ढी ६ विगुव्वणा ७ गतिपरिताते ८ समुग्घाते ९ कालसंजोगे १० दंसणाभिगमे ११ णाणाभिगमे १२ जीवाभिगमे १३ अजीवाभिगमे १४, एवं पंचिंदियतिरिक्खजोणियाणवि मणुस्साणवि (सू० ४९९) छहिं ठाणेहिं समणे निग्गंथे आहारमाहारमाणे णातिक्कमति, तं०—वेयणवेयावच्चे ईरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥१॥ छहिं ठाणेहिं समणे निग्गंथे आहारं वोच्छिंदमाणे णातिक्कमति, तं०—आतंके उवसग्गे तितिक्खणे बंभचेरगुत्तीते । पाणिदयातवहेउं सरीरवुच्छेयणट्ठाए ॥१॥ (सू० ५००) ।

छद्दिसाओ' इत्यादि सूत्रकदम्बकं, इदं च त्रिस्थानक एव व्याख्यातं, तथापि किञ्चिदुच्यते–प्राचीना–पूर्वा प्रतीचीना–पश्चिमा

दक्षिणा—प्रतीता उदीचीना—उत्तरा ऊर्ध्वमधश्चेति प्रतीते, विदिशो न दिशो विदित्त्वादेवेति षडेवोक्ताः, अथवा एभिरेव जीवानां वक्ष्यमाणा गतिप्रभृतयः पदार्थाः प्रायः प्रवर्त्तन्ते, षट्स्थानकानुरोधेन वा विदिशो न विवक्षिता इति षडेव दिश उक्ता इति । षड्भिर्दिग्भिर्जीवानां गतिः—उत्पत्तिस्थानगमनं प्रवर्त्तते, अनुश्रेणिगमनात्तेषामित्येवमेतानि चतुर्दश सूत्राणि नेयानि, नवरं गतिरागतिश्च प्रज्ञापकस्थानापेक्षिण्यौ प्रसिद्ध एव, व्युत्क्रान्तिः—उत्पत्तिस्थानप्राप्तस्योत्पादः, साऽपि ऋजुगतौ षट्स्वेव दिक्षु, तथा आहारः प्रतीतः, सोऽपि षट्स्वेव दिक्षु, एतद्व्यवस्थितप्रदेशावगाढपुद्गलानामेव जीवेन स्पर्शनात् स्पृष्टानामेव चाहरणादिति, एवं षड्दिक्ता यथासम्भवं वृद्ध्यादिष्वप्यूह्येति, तथा वृद्धिः शरीरस्य निवृद्धिः—हानिस्तस्यैव विकुर्वणा—वैक्रियकरणं गतिपर्यायो—गमनमात्रं न परलोकगमनरूपः तस्य गत्यागतिग्रहणेन गृहीतत्वादिति, समुद्घातो—वेदनादिकः सप्तविधः कालसंयोगः—समयक्षेत्रमध्ये आदित्यादिप्रकाशसम्बन्धलक्षणः, 'दर्शनं' सामान्यग्राही बोधः, तचेह गुणप्रत्ययावध्यादि प्रत्यक्षरूपं तेनाभिगमो—वस्तुनः परिच्छेदस्तत्प्राप्तिर्वा दर्शनाभिगमः, एवं ज्ञानाभिगमोऽपि, जीवाभिगमः—सत्त्वाधिगमो गुणप्रत्ययावध्यादिप्रत्यक्षतः, अजीवाभिगमः—पुद्गलास्तिकायाद्यधिगमः, सोऽपि तथैवेति, 'एव'मिति यथा 'छहिं दिसाहिं जीवाणं गई पवत्तई'त्यादिसूत्राण्युक्तानि एवं चतुर्विंशतिदण्डकचिन्तायां 'पंचेंदियतिरिक्खजोणियाणं छहिं दिसाहिं गई'त्यादीन्यपि वाच्यानि, तथा मनुष्यसूत्राण्यपि, शेषेषु नारकादिपदेषु षट्सु दिक्षु गत्यादीनां सामस्त्येनासम्भवः, तथाहि—नारकादीनां द्वाविंशतेर्जीवविशेषाणां नारकदेवेषूत्पादाभावादूर्ध्वाधोदिशोर्विवक्षया गत्यागत्योरभावः, तथा दर्शनज्ञानजीवाजीवाभिगमा गुणप्रत्ययावधिलक्षणप्रत्यक्षरूपा न संभवन्त्येव तेषां, भवप्रत्ययावधिपक्षे तु नारकज्योतिष्कास्तिर्यगवधयो भवन

१ रुचकविदिगपेक्षयाऽप्रवृत्तावपि प्रज्ञापकादिविदिगपेक्षया गत्यादीनां प्रवृत्तेः षट्स्थानकेत्यादि.

पतिव्यन्तरा ऊर्ध्वविषयो वैमानिकास्त्वधोऽवधयः शेषा निरवधय एवेति भावना, 'विवक्षाप्रधानानि च प्रायोऽन्यत्रापि सूत्राणी'ति। अनन्तरसूत्रे मनुष्याणामजीवाधिगम उक्त इति मनुष्यप्रत्यासत्त्या संयतमनुष्याणामाहारग्रहणाग्रहणकारणानि सूत्रद्वयेनाह—'छही' त्यादि कण्ठ्यं नवरमाहारं—अशनादिकमाहारयन्—अभ्यवहरन्नातिक्रामत्याज्ञां,पुष्टकारणत्वाद् ,अन्यथा त्वतिक्रामत्येव, रागादिभावात् ,तद्यथा—'वेयणगाहा, वेदना च क्षुद्वेदना वैयावृत्त्यं च—आचार्यादिकृत्यकरणं वेदनावैयावृत्त्यं तत्र विषये भुञ्जीत,वेदनोपशमनार्थं वैयावृत्त्यकरणार्थं चेति भावः,ईर्या—गमनं तस्या विशुद्धिर्युगमात्रनिहितदृष्टित्वमीर्याविशुद्धिस्तस्यै इदमीर्याविशुद्ध्यर्थं, इह च विशुद्धिशब्दलोपादीयर्थमित्युक्तं, बुभुक्षितो हीर्याशुद्धावशक्तः स्यादिति तदर्थमिति, चः समुच्चये, संयमः—प्रेक्षोत्प्रेक्षाप्रमार्जनादिलक्षणः तदर्थं, 'तथे'ति कारणान्तरसमुच्चये, प्राणाः—उच्छ्वासादयो बलं वा प्राणस्तेषां तस्य वा वृत्तिः—पालनं तदर्थं प्राणसंधारणार्थमित्यर्थः, षष्ठं पुनः कारणं धर्मचिन्तायै गुणनानुप्रेक्षार्थमित्यर्थः, इत्येतानि षट्कारणानीति, अत्र भाष्यगाथे—"नत्थि छुहाए सरिसा वियणा भुंजिज्ज तप्पसमणट्ठा। छाओ ( बुभुक्षितः ) वेयावच्चं न तरइ काउं अओ भुंजे ॥१॥ इरियं न य सोहेइ जहोवइट्ठं च संजमं काउं। थामो वा परिहायइ गुणणुप्पेहासु य असत्तो ॥२॥" त्ति, [ नास्ति क्षुधा सदृशी वेदना भुञ्जीत तत्प्रशमनार्थम्। बुभुक्षितः वैयावृत्त्यं न शक्नोति कर्त्तुं अतो भुञ्जीत ॥१॥ ईर्यां न च शोधयति यथोपदिष्टं च संयमं कर्त्तुं (न शक्तः)। बलं परिहीयते गुणनानुप्रेक्षयोरशक्तश्च ॥२॥] 'वोच्छिंदमाणे'त्ति परित्यजन् आतङ्के—ज्वरादावुपसर्गे—राजस्वजनादिजनिते प्रतिकूलानुकूलस्वभावे तितिक्षणे—अधिसहने कस्याः? —ब्रह्मचर्यगुप्तेः—मैथुनव्रतसंरक्षणस्य, आहारत्यागिनो हि ब्रह्मचर्यं सुरक्षितं स्यादिति, प्राणिदया च—संपातिमत्रसादिसंरक्षणं तपः—चतु-

१ गुणप्रत्यय एव ग्राह्यो वाच्याश्च पञ्चेन्द्रियतिर्यङ्नराः न च ग्राह्यो भवप्रत्ययो न वाच्याश्च देवनारका इत्यत्र को नियम इत्याह विवक्षेत्यादि.

५ स्थानाध्ययने उद्देशः ३ दिशातद्रत्यादि आहारानाहारकारणानि सू—४९९ ५००

र्थादि षण्मासान्तं प्राणिदयातपस्तच्च तद्धेतुश्च प्राणिदयातपोहेतुस्तस्मात् प्राणिदयातपोहेतोर्दयादिनिमित्तमित्यर्थः, तथा शरीरव्यवच्छेदार्थं—देहत्यागाय आहारं व्यवच्छिन्दन्नातिक्रामत्याज्ञामिति प्रक्रमः, इह गाथे—"आयंको जरमाई राया सन्नायगा य उवसग्गे। बंभवयपालणट्ठा पाणिदया वासमहियाई॥१॥ तवहेउ चतुत्थाई जाव य छम्मासिओ तवो होइ। छट्ठं सरीरवोच्छेयणट्ठया होअणाहारो ॥२॥" इति, [आतङ्को ज्वरादिः राजा सज्ञातीयाश्चोपसर्गे। ब्रह्मव्रतपालनार्थं प्राणिदया वर्षामहिकादेः॥१॥ तपोहेतुः चतुर्थादि यावच्च षाण्मासिकं तपो भवति। षष्ठं शरीरव्युच्छेदनार्थं भवत्यनाहारः ॥२॥]

अनन्तरं श्रमणस्याहाराग्रहणकारणान्यभिहितानीति श्रमणादेर्जीवस्यानुचितकारिण उन्मादस्थानान्याह—

छहिं ठाणेहिं आया उम्मायं पाउणेज्जा, तं०—अरहंताणमवण्णं वदमाणे १ अरहंतपन्नत्तस्स धम्मस्स अवन्नं वदमाणे २ आयरियउवज्झायाणमवन्नं वदमाणे ३ चाउव्वन्नस्स संघस्स अवन्नं वदमाणे ४ जक्खावेसेण चेव ५ मोहणिज्जस्स चेव कम्मस्स उदएणं (सू० ५०१) छव्विहे पमाते पं० तं०—मज्जपमाए णिद्दपमाते विसयपमाते कसायपमाते जूतपमाते पडिलेहणापमाए (सू० ५०२)

'छही'त्यादि इदं च सूत्रं पञ्चस्थानक एव व्याख्यातप्रायं, नवरं षड्भिः स्थानैरात्मा—जीवः उन्मादं—उन्मत्ततां प्राप्नुयात्, उन्मादश्च महामिथ्यात्वलक्षणस्तीर्थंकरादीनामवर्णं वदतो भवत्येव तीर्थकराद्यवर्णवदनकुपितप्रवचनदेवतातो वा असौ ग्रहणरूपो भवेदिति, पाठान्तरेण 'उम्मायपमाय'न्ति उन्मादः—सग्रहत्वं स एव प्रमादः—प्रमत्तत्वं आभोगशून्यतोन्मादप्रमादः, अथवोन्मादश्च प्रमादश्च—

अहितप्रवृत्तिहिताप्रवृत्ती उन्मादप्रमादं प्राप्नुयादिति, 'अवन्नं'ति अवर्णं–अश्लाघामवज्ञां वा वदन् व्रजन् वा–कुर्वन्नित्यर्थः, 'धम्मस्स'त्ति श्रुतस्य चारित्रस्य वा, आचार्योपाध्यायानां च, चतुर्वर्णस्य–श्रमणादिभेदेन चतुष्प्रकारस्य, यक्षावेशेन चैव–निमित्तान्तरकुपितदेवाधिष्ठितत्वेन, मोहनीयस्य–मिथ्यात्ववेदशोकादेरुदयेनेति । उन्मादसहचरः प्रमाद इति तमाह—"छव्विहे'त्यादि षड्विधः–षट्प्रकारः प्रमदनं प्रमादः प्रमत्तता सदुपयोगाभाव इत्यर्थः, प्रज्ञप्तः, तद्यथा–मद्यं–सुरादि तदेव प्रमादकारणत्वात् प्रमादो मद्यप्रमादो, यत आह—"चित्तभ्रान्तिर्जायते मद्यपानाच्चित्ते भ्रान्ते पापचर्यामुपैति । पापं कृत्वा दुर्ग्गतिं यान्ति मूढास्तस्मान्मद्यं नैव देयं न पेयम् ॥१॥" इति, एवं सर्वत्र, नवरं निद्रा प्रतीता तद्दोषश्चायं—"निद्राशीलो न श्रुतं नापि वित्तं, लब्धुं शक्तो हीयते चैष ताभ्याम् । ज्ञानद्रव्याभावतो दुःखभागी, लोकद्वैते स्यादतो निद्रयाऽलम् ॥१॥" इति, विषयाः–शब्दादयस्तेषां चैवं प्रमादता—"विषयव्याकुलचित्तो हितमहितं वा न वेत्ति जन्तुरयम् । तस्मादनुचितचारी चरति चिरं दुःखकान्तारे ॥१॥" कषायाः–क्रोधादयस्तेषामप्येवं प्रमादता—"चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते । यस्य तन्मुषितं दोषैस्तस्य शिष्टा विपत्तयः ॥१॥" इति, द्यूतं प्रतीतं तदपि प्रमाद एव, यतः—"द्यूतासक्तस्य सच्चित्तं, धनं कामाः सुचेष्टितम् । नश्यन्त्येव परं शीर्षं, नामापि च विनश्यति ॥१॥" तथा प्रत्युपेक्षणं प्रत्युपेक्षणा, सा च द्रव्यक्षेत्रकालभावभेदाच्चतुर्धा, तत्र द्रव्यप्रत्युपेक्षणा वस्त्रपात्राद्युपकरणानामशनपानाद्याहाराणां च चक्षुर्निरीक्षणरूपा, क्षेत्रप्रत्युपेक्षणा कायोत्सर्गनिषदनशयनस्थानस्य स्थण्डिलानां मार्गस्य विहारक्षेत्रस्य च निरूपणा, कालप्रत्युपेक्षणा उचितानुष्ठानकरणाथ कालविशेषस्य पर्यालोचना, भावप्रत्युपेक्षणा धर्म्मजागरिकादिरूपा, यथा—"किं कय किं वा सेसं किं करणिज्जं तवं च न करेमि ? पुव्वावरत्तकाले ज़ागरओ भावपडिलेहणा ॥१॥" इति, तत्र प्रत्युपेक्षणायां प्रमादः–शैथिल्यमाज्ञाऽतिक्रमो वा प्रत्युपेक्षणाप्रमादः, अ·

नेन च प्रमार्जनाभिक्षाचर्यादिषु इच्छाकारमिथ्याकारादिषु च दशविधसामाचारीरूपव्यापारेषु यः प्रमादोऽसावुपलक्षितः, तस्यापि सामाचारीगतत्वेन षष्ठप्रमादलक्षणाव्यभिचारित्वादिति ।

अनन्तरं प्रत्युपेक्षाप्रमाद उक्तः, अथ तामेव तद्विशिष्टामाह—

छव्विधा पमायपडिलेहणा पं० तं—आरभडा संमद्दा वज्जेयव्वा य मोसली ततिता । पप्फोडणा चउत्थी वक्खित्ता वेतिया छट्टी ॥१॥ छव्विहा अप्पमायपडिलेहणा पं० तं०—अणच्चावितं अवलितं अणाणुबंधिं अमोसलिं चेव । छप्पुरिमा नव खोडा पाणी पाणविसोहणी ॥२॥ (सू० ५०३) छ लेसाओ पं तं०—कण्हलेसा जाव सुक्कलेसा, पंचिंदियतिरिक्खजोणियाणं छ लेसाओ पं० तं०—कण्हलेसा जाव सुक्कलेसा, एवं मणुस्सदेवाणवि (सू० ५०४) सक्कस्स णं देविंदस्स देवरन्नो सोमस्स महारन्नो छ अग्गमहिसीतो पं०, सक्कस्स णं देविंदस्स देवरण्णो जमस्स महारन्नो छ अग्गमहिसीओ पं० (सू० ५०५) ईसाणस्स णं देविंदस्स मज्झिमपरिसाए देवाणं छ पलिओवमाइं ठीती पं० (सू० ५०६) छ दिसिकुमारिमहत्तरितातो पं० तं०—रूता रूतंसा सुरूवा रूपवती रूपकंता रूतप्पभा, छ विज्जुकुमारिमहत्तरितातो पं० तं०—आला सक्का सतेरा सोतामणी इंदा घणविज्जुया (सू० ५०७) धरणस्स णं नागकुमारिंदस्स नागकुमाररन्नो छ अग्गमहिसीओ पं० तं०—आला सक्का सतेरा सोतामणी इंदा घणविज्जुया । भूताणंदस्स णं नागकुमारिंदस्स नागकुमाररन्नो छ अग्गमहिसीओ, पं० तं०—रूवा

रूवंसा सुरूवा रूववती रूवकंता रूवप्पभा, जधा धरणस्स तधा सव्वेसिं दाहिणिल्लाणं जाव घोसस्स, जधा भूताणंदस्स तधा सव्वेसिं उत्तरिल्लाणं जाव महाघोसस्स (सू० ५०८) धरणस्स णं नागकुमारिंदस्स नागकुमाररन्नो छस्सामाणियस्साहस्सीओ पण्णत्तातो, एवं भूताणंदस्सवि जाव महाघोसस्स (सू० ५०९)।

'छव्विहे'त्यादि, षड्विधा–षड्भेदा प्रमादेन–उक्तलक्षणेन प्रत्युपेक्षा प्रमादप्रत्युपेक्षा प्रज्ञप्ता, तद्यथा—'आरभड'गाहा, आरभटा–वितथकरणरूपा, अथवा त्वरितं सर्वमारभमाणस्य, अथवा अर्द्धप्रत्युपेक्षित एवैकत्र यदन्यान्यवस्त्रग्रहणं सा आरभटा, सा च वर्जनीया सदोषत्वादिति सर्वत्र सम्बन्धनीयमिति, सम्मर्दा–यत्र वस्त्रस्य मध्यप्रदेशे संवलिताः कोणा भवन्ति, यत्र वा प्रत्युपेक्षणीयोपधिवेण्टिकायामेवोपविश्य प्रत्युपेक्षते सा सम्मर्देति, मोसली प्रत्युपेक्ष्यमाणवस्त्रभागेन तिर्यगूर्ध्वमधो वा घट्टनरूपा 'तइय'त्ति तृतीया प्रमादप्रत्युपेक्षणेति, क्वचिद् 'अट्ठाणट्ठवणा य'त्ति दृश्यते, तत्र गुर्ववग्रहादिके अस्थाने प्रत्युपेक्षितोपधेः स्थापनं–निक्षेपोऽस्थानस्थापना, प्रस्फोटना–प्रकर्षेण धूननं रेणुगुण्डितस्येव वस्त्रस्येति, इयं च चतुर्थी, 'विक्खित्त'त्ति वस्त्रं प्रत्युपेक्ष्य ततोऽन्यत्र यवनिकादौ प्रक्षिपति यद् अथवा वस्त्राञ्चलादीनां यदूर्ध्वक्षेपणं सा विक्षिप्तोच्यते ५, 'वेइय'त्ति वेदिका पञ्चप्रकारा, तत्र ऊर्ध्ववेदिका यत्र जानुनोरुपरि हस्तौ कृत्वा प्रत्युपेक्षते १ अधोवेदिका जानुनोरधो हस्तौ निवेश्य २, एवं तिर्यग्वेदिका जानुनोः पार्श्वतो हस्तौ नीत्वा ३, द्विधावेदिका बाह्वोरन्तरे द्वे अपि जानुनी कृत्वा ४, एकतोवेदिका एकं जानु बाह्वोरन्तरे कृत्वेति ५ षष्ठी प्रमादप्रत्युपेक्षणेति प्रक्रमः, इह गाथे—"वितहकरणंमि तुरियं अन्नं अन्नं च गिण्ह आरभडा। अंतो व होज्जा कोणा निसियण तत्थेव संमद्दा ॥१॥ गुरुउग्गहादठाणं पप्फोडण रेणुगुंडिए चेव। विक्खेव तु क्खेवो वेइयपणगं च छद्दोसा ॥२॥" इति। [वितथकरणे त्वरितं अन्योऽन्यग्रहणे आरभटा कोणा

वस्त्रान्तः भवेयुस्तत्र निषीदनं वा संमर्दा ॥१॥ गुर्वग्रहादौ अस्थानं रेणुगुंडितस्येव प्रस्फोटना विक्षेपस्तूत्क्षेपो यवनिकादौ वेदिकापंचकं च षड् दोषाः ॥२॥] उक्तविपरीतां प्रत्युपेक्षणामेवाह—'छव्विहे'त्यादि, षड्विधा अप्रमादेन—प्रमादविपर्ययेण प्रत्युपेक्षणा अप्रमादप्रत्युपेक्षणा प्रज्ञप्ता, तद्यथा—'अणच्चावि'गाहा, वस्त्रमात्मा वा न नर्त्तितं—न नृत्यदिव कृतं यत्र तदनर्त्तितं प्रत्युपेक्षणं, वस्त्रं नर्त्तयत्यात्मानं चेत्येवमिह चत्वारो भङ्गाः १ तथा वस्त्रं शरीरं वा न वलितं कृतं यत्र तदवलितमिहापि तथैव चतुर्भङ्गी २ तथा न विद्यतेऽनुबन्धः—सातत्यप्रस्फोटकादीनां यत्र तदननुबन्धि, इत्समासान्तो दृश्यः, नानुबन्धि अननुबन्धीति वा ३ तथा न विद्यते मोसली उक्तलक्षणा यत्र तदमोसलि ४ 'छप्पुरिमा नव खोड'त्ति तत्र वस्त्रे प्रसारिते सति चक्षुषा निरूप्य तदर्वाग्भागं तत्परावर्त्य निरूप्य च त्रयः पुरिमाः कर्त्तव्याः, प्रस्फोटका इत्यर्थः, तथा तत्परावर्त्य चक्षुषा निरूप्य च पुनरपरे त्रयः पुरिमा एवमेते षट्, तथा नव खोटका ते च त्रयस्त्रयः प्रमार्जनानां त्रयेण त्रयेणान्तरिताः कार्या इति, पदद्वयेनापि पञ्चमी अप्रमादप्रत्युपेक्षणोक्ता, पुरिमखोटकानां सदृशत्वादिति, तथा पाणेः—हस्तस्योपरि प्राणानां—प्राणिनां कुन्थ्वादीनामित्यर्थः 'विसोहणि'त्ति विशोधना प्रमार्जना प्रत्युपेक्ष्यमाणवस्त्रेणैव कार्या नवैव वाराः, उक्तन्यायेन खोटकान्तरितेति षष्ठी अप्रमादप्रत्युपेक्षणेति, इह गाथे—"वत्थे अप्पाणंमि य चउहा अणच्चावियं अवलियं च । अणुबंधि निरंतरया तिरिउड्ढऽहघट्टणा मुसली ॥१॥ छप्पुरिमा तिरियकए नव खोडा तिन्नि तिन्नि अंतरिया । ते पुण वियाणियव्वा हत्थंमि पमज्जणतिएणं ॥२॥" [वस्त्रे आत्मनि चानर्त्तितं अवलितं च चतुर्धा अनुबंधिता निरंतरता तिर्यगूर्ध्वाधोघट्टना मोसलिः ॥१॥ तिर्यक्कृताः षट् पुरिमा त्रित्र्यंतरिता नव स्फोटकाः ते पुनर्विज्ञातव्या हस्ते प्रमार्जनात्रिकेण ॥१॥] इयं च प्रमादाप्रमादप्रत्युपेक्षा लेश्याविशेषतो भवतीति लेश्यासूत्रं, लेश्याधिकारादेव पञ्चेन्द्रियतिर्यग्मनुष्यदेवलेश्यासूत्राणि, देवप्रत्यासत्त्या सक्रेत्यादि-

कान्यग्रमहिष्यादिसूत्राणि चावग्रहमतिसूत्रादर्वाग्वर्त्तीनि, कण्ठ्यानि च, नवरं देवानां जात्यपेक्षया अवस्थितरूपाः षड् लेश्या अवगन्तव्या इति ।

अनन्तरं देववक्तव्यतोक्ता, देवाश्च भवप्रत्ययादेव विशिष्टमतिमन्तो भवन्तीति मतिभेदान् सूत्रचतुष्टयेनाह—

छव्विहा उग्गहमती पं० तं०—खिप्पमोगिण्हति बहुमोगिण्हति बहुविधमोगिण्हति धुवमोगिण्हति अणिस्सियमोगिण्हइ असंदिद्धमोगिण्हइ। छव्विहा ईहामती पं० तं०—खिप्पमीहति बहुमीहति जाव असंदिद्धमीहति। छव्विधा अवायमती पं० तं०—खिप्पमवेति जाव असंदिद्धं अवेति, छव्विधा धारणा पं० तं०—बहुं धारेइ बहुविहं धारेइ पोराणं धारेति दुद्धरं धारेति अणिस्सितं धारेति असंदिद्धं धारेति (सू० ५१०)।

'छव्विहा उग्गहे'त्यादि मतिः—आभिनिबोधिकं, सा चतुर्विधा, अवग्रहेहापायधारणाभेदात्, तत्रावग्रहः प्रथमं सामान्यार्थग्रहणं तद्रूपा मतिरवग्रहमतिः, इयं च द्विविधा—व्यञ्जनावग्रहमतिरर्थावग्रहमतिश्च, तत्रार्थावग्रहमतिर्द्विधा—निश्चयतो व्यवहारतश्च, तत्र व्यञ्जनावग्रहोत्तरकालमेकसामयिकी प्रथमा, द्वितीया त्वन्तर्मुहूर्त्तप्रमाणा अवायरूपा अपि सा ईहापाययोरुत्तरयोः कारणत्वादवग्रहमतिरित्युपचरितेति, यत आह—''सामन्नमेत्तगहणं नेच्छइओ समयमोग्गहो पढमो। तत्तोऽणंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥१॥ सो पुण ईहावायावेक्खाउ अवग्गहोत्ति उवयरिओ। एस विसेसावेक्खं सामन्नं गेण्हए जेण ॥२॥ तत्तोऽणंतरमीहा तत्तोऽवाओ य तव्विसेसस्स। इय सामन्नविसेसावेक्खा जावंतिमो भेओ ॥३॥ सव्वत्थेहावाया निच्छयओ मोत्तुमाइ सामन्नं। संववहारत्थं पुण सव्वत्था-

ग्गहोवाओ ॥४॥ तरतमजोगाभावेऽवाउच्चिय धारणा तदंतंमि । सव्वत्थ वासणा पुण भणिया कालंतरसइत्ति ॥५॥" [सामान्यमात्रग्रहणमवग्रहः प्रथमो नैश्चयिकः समयं ततोऽनन्तरमीहितवस्तुविशेषस्य योऽपायः ॥१॥ स पुनरीहापायापेक्षयाऽवग्रह इत्युपचरितः येनैष विशेषापेक्षया सामान्यं गृह्णाति ॥२॥ ततोऽनन्तरमीहा ततोऽपायस्तद्विशेषस्य एवं सामान्यविशेषापेक्षया (ज्ञेयं) यावदन्तिमो भेदः ॥३॥ आदिसामान्यं मुक्त्वा निश्चयतः सर्वत्रेहापायौ संव्यवहारार्थं पुनः अपायः सर्वत्रावग्रहः ॥४॥ तरतमयोगाभावेऽपाय एव तदन्ते च धारणा सर्वत्र पुनः कालान्तरस्मृतिर्वासनेति भणिता ॥५॥] तत्र व्यवहारावग्रहमतिमाश्रित्य प्रायः षड्विधत्वं व्याख्येयमिति, तद्यथा—क्षिप्रमवगृह्णाति—तूल्यादिस्पर्शं क्षयोपशमपटुत्वादचिरेणैव वेत्ति मतिस्तद्विशिष्टः पुरुषो वेति, 'बहुं'ति शय्यायां ह्युपविशन्पुमांस्तत्रस्थयोषित्पुष्पचन्दनवस्त्रादिस्पर्शं बहुं—भिन्नजातीयं सन्तमेकैकं भेदेनावबुध्यते अयं योषित्स्पर्श इत्यादि, बहुविहं'ति बह्वयो विधा—भेदा यस्य स बहुविधस्तं, योषिदादिस्पर्शमेकैकं शीतस्निग्धमृदुकठिनादिरूपमवगृह्णातीति, 'धुवं'ति ध्रुवमत्यन्तं सर्वदेत्यर्थः, यदा यदा अस्य तेन स्पर्शेन योषिदादिना योगो भवति तदा तदा तमवच्छिनत्तीत्यर्थः, एतदुक्तं भवति—सतीन्द्रिये सति चोपयोगे यदाऽसौ विषयः स्पृष्टो भवति तदा तमवगृह्णात्येवेति, 'अणिस्सियं'ति निश्रितो—लिङ्गप्रमितोऽभिधीयते, यथा यूथिकाकुसुमानामत्यन्तं शीतमृदुस्निग्धादिरूपः प्राक् स्पर्शोऽनुभूतः तेनानुमानेन—लिङ्गेन तं विषयमपरिच्छिन्दत् यदा ज्ञानं प्रवर्त्तते तदा अनिश्रितमलिङ्गमवगृह्णातीत्यभिधीयते, 'असंदिद्धं'ति असंदिग्धं—निश्चितं सकलसंशयादिदोषरहितमिति, यथा तमेव योषिदादिस्पर्शमवगृह्णत् योषित एवायं चन्दनस्यैवायमित्येवमवगृह्णातीति । एवमीहापायधारणामतीनां षड्विधत्वं, नवरं धारणायां क्षिप्रध्रुवपदे परित्यज्य पुराणदुर्द्धरपदाभ्यां सह षड्विधत्वमुक्तं, तत्र च पुराणं—बहुकालीनं दुर्द्धरं—गहनं चित्रादीनि, क्षिप्रबहुबहुविधादिपदषट्कविपर्ययेणापि षड्विधा अवग्रहादि-

मतिर्भवतीति मतिभेदानामष्टाविंशतेर्द्वादशभिर्गुणनात् त्रीणि शतानि षट्त्रिंशदधिकानि भवन्ति, अभाणि च भाष्यकारेण–"जं बहु १ बहुविह २ खिप्पा ३ अणिस्सिय ४ निच्छिय ५ धुवे ६ यर १२ विभिन्ना । पुणरोग्गहादओ तो तं छत्तीसत्तिसयभेदं ॥१॥" इति, "नानासद्दसमूहं बहुं पिहं मुणइ भिन्नजाइयं १। बहुविहमणेगभेदं एक्केकं निद्धमहुरादि २॥२॥ खिप्पमचिरेण ३ तं चिय सरूवओ जं अनिस्सियमलिंगं ४ । निच्छयमसंसयं जं ५ धुवमच्चंतं न उ कयाइ ६ ॥ ३ ॥ एत्तो च्चिय पडिवक्खं साहेज्जा निस्सिए विसेसो वा । परधम्मेहि विमिस्सं निस्सियमविनिस्सियं इयरं ॥४॥" इति । ["बहुबहुविधक्षिप्रानिश्रितनिश्रितध्रुवेतरविभिन्ना यत्पुनरवग्रहादयोऽतस्तत्षट्त्रिंशदधिकत्रिशतभेदं ॥१॥ नानाशब्दसमूहं बहु पृथग् जानाति भिन्नजातीयं । बहुविधमनेकभेदं स्निग्धमधुराद्येकैकं ॥२॥ क्षिप्रमचिरेण तदेव अनिश्रितमलिंगं निश्रितं यदसंशयं ध्रुवमत्यन्तं न तु कदाचित् ॥३॥ एतावत एव प्रतिपक्षान् साधयेत् निश्रिते च विशेषः परधर्मैर्विमिश्रं निश्रितमविनिश्रितमितरत् ॥४॥" इह भावना–अक्षिप्रं चिरेण निश्रितं लिङ्गात् अनिश्रितं- सन्दिग्धं अध्रुवं कदाचित् अथवा निश्रितानिश्रितयोरयमपरो विशेषः–निश्रितं गृह्णाति गवादिकमर्थं सारङ्गादिधर्म्मविशिष्टमवग्रह्णाति अनिश्रितं गोधर्मैरेव विशिष्टं गृह्णाति, यदिह न स्पृष्टं तत्स्पष्टमेवेति ।

अनन्तरं मतिरुक्ता तद्विशेषवन्तश्च तपस्यन्तीति तपोऽभिधानाय सूत्रद्वयम्—

छव्विहे बाहिरते तवे पं० तं०—अणसणं ओमोदरिया भिक्खातरिता रसपरिचाते कायकिलेसो पडिसंलीनता । छव्विधे अब्भंतरिते तवे पं० तं०—पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ झाणं विउस्सग्गो

(सू० ५११) छव्विहे विवादे पं० तं०—ओसक्कतित्ता उस्सक्कइत्ता अणुलोमइत्ता पडिलोमतित्ता भइत्ता भेलनित्ता (सू० ५१२)।

'छव्विहे'त्यादि गतार्थमेतत् तथापि किञ्चिदुच्यते, 'बाहिरए तवे'त्ति बाह्यमित्यासेव्यमानस्य लौकिकैरपि तपस्तया ज्ञायमानत्वात् प्रायो बहिः शरीरस्य तापकत्वाद्वा तपति–दुनोति शरीरकर्माणि यत्तत्तप इति, तत्रानशनं–अभोजनमाहारत्याग इत्यर्थः, तद् द्विधा–इत्वरं यावत्कथिकं च, तत्रेत्वरं चतुर्थादि षण्मासान्तमिदं तीर्थमाश्रित्येति, यावत्कथिकं त्वाजन्मभावि त्रिधा–पादपोपगमनेङ्गितमरणभक्तपरिज्ञाभेदादिति, एतच्च प्राग्व्याख्यातमिति १, 'ओमोयरिय'त्ति अवमं–ऊनमुदरं–जठरं अवमोदरं तस्य करणमवमोदरिकेति, सा च द्रव्यत उपकरणभक्तपानविषया प्रतीता, भावतस्तु क्रोधादित्याग इति २, तथा भिक्षार्थं चर्या–चरणमटनं भिक्षाचर्या तपो निर्जराङ्गत्वादनशनवद् अथवा सामान्योपादानेऽपि विशिष्टा विचित्राभिग्रहयुक्तत्वेन वृत्तिसंक्षेपरूपा सा ग्राह्या, यत इहैव वक्ष्यति—'छव्विहा गोयरचरिय'त्ति, न चेयं ततोऽत्यन्तभिन्नेति, भिक्षाचर्यायां चाभिग्रहा द्रव्यादिविषयतया चतुर्विधाः, तत्र द्रव्यतोऽलेपकार्याद्येव द्रव्यं ग्रहीष्ये, क्षेत्रतः परग्रामगृहपञ्चकादिलब्धं, कालतः पूर्वाह्णादौ, भावतो गानादिप्रवृत्ताल्लब्धमिति ३, रसाः–क्षीरादयस्तत्परित्यागो रसपरित्यागः ४, कायक्लेशः–शरीरक्लेशनं स च वीरासनादिरनेकधा ५, प्रतिसंलीनता–गुप्तता, सा चेन्द्रियकषाययोगविषया विविक्तशयनासनता वेति ६। 'अब्भिंतरए'त्ति लौकिकैरनभिलक्ष्यत्वात् तन्त्रान्तरीयैश्च परमार्थतोऽनासेव्यमानत्वान्मोक्षप्राप्त्यन्तरङ्गत्वाच्चाभ्यन्तरमिति, प्रायश्चित्तं–उक्तनिर्वचनमालोचनादि दशविधमिति १, विनीयते कर्म येन स विनयः, उक्तं च—"जम्हा विणयइ कम्मं अट्ठविहं चाउरंतमोक्खाए। तम्हा उ वयंति विऊ विणयंति विलीणसंसारा॥१॥" इति, [यस्माद् विनयति कर्म

अष्टविधं चातुरन्तमोक्षाय। तस्मात्तु वदन्ति विद्वांसो विनय इति विलीनसंसाराः-केवलिनः ॥१॥] स च ज्ञानादिभेदात् सप्तधा वक्ष्यते २ तथा व्यावृत्तभावो वैयावृत्त्यं धर्मसाधनार्थमन्नादिदानमित्यर्थः, आह च—"वेयावच्चं वावडभावो इह धम्मसाहणणिमित्तं। अण्णाइयाण विहिणा संपायणमेस भावत्थो ॥१॥" इति, [वैयावृत्त्यं व्यापृतभाव इह धर्मसाधननिमित्तं। अन्नादिकानां संपादनमेष भावार्थः ॥१॥] तच्च दशधा—"आयरिय उवज्झाए थेरतवस्सीगिलाणसेहाणं। साहम्मियकुलगणसंघसंगयं तमिह कायव्वं ॥१॥" इति ३ [आचार्योपाध्यायस्थविरतपस्विग्लानशैक्षाणां। साधर्मिककुलगणसंघानां सङ्गतं तदिह कर्त्तव्यं ॥१॥] सुष्ठु आ-मर्यादया अध्यायः-अध्ययनं स्वाध्यायः, स च पञ्चधा-वाचना प्रच्छना परावर्त्तना अनुप्रेक्षा धर्मकथा चेति ४, ध्यातिर्ध्यानं एकाग्रचिन्तानिरोधस्तच्चतुर्द्धा प्राग् व्याख्यातं, तत्र धर्मशुक्ले एव तपसी निर्जरार्थत्वात् नेतरे बन्धहेतुत्वादिति ५, व्युत्सर्गः-परित्यागः, स च द्विधा-द्रव्यतो भावतश्च, तत्र द्रव्यतो गणशरीरोपध्याहारविषयः, भावतस्तु क्रोधादिविषय इति ६। एते च तपःसूत्रे दशकालिकाद्विशेषतोऽवसेये इति। अनन्तरोदितार्थेषु विवदते कश्चिदिति विवादस्वरूपमाह—'छव्विहे'त्यादि, षड्विधः-षड्भेदो विप्रतिपन्नयोः क्वचिदर्थे वादो-जल्पो विवादः प्रज्ञप्तः, तद्यथा—'ओसक्कइत्त'त्ति अवष्वष्क्य-अपसृत्यावसरलाभाय कालहरणं कृत्वा यो विधीयते स तथोच्यते, एवं सर्वत्र, क्वचिच्च 'ओसक्कावइत्त'त्ति पाठस्तत्र प्रतिपन्थिनं केनापि व्याजेनापसर्प्य-अपसृतं कृत्वा पुनरवसरमवाप्य विवदते, 'ओसक्कइत्त'त्ति उत्ष्वष्क्य उत्सृत्य लब्धावसरतयोत्सुकीभूय 'उस्सक्कावइत्त'त्ति पाठान्तरे परमुत्सुकीकृत्य लब्धावसरो जयार्थी विवदते, तथा 'अणुलोमइत्त'त्ति विवादाध्यक्षान् सामनीत्याऽनुलोमान् कृत्वा प्रतिपन्थिनमेव वा पूर्वं तत्पक्षाभ्युपगमेनानुलोमं कृत्वा 'पडिलोमइत्ता' प्रतिलोमान् कृत्वा अध्यक्षान् प्रतिपन्थिनं वा, सर्वथा सामर्थ्ये सतीति, तथा 'भइत्त'त्ति अध्यक्षान् भक्त्वा-संसेव्य, तथा

'मेलइत्त'त्ति स्वपक्षपातिभिर्मिश्रान् कारणिकान् कृत्वेति भावः क्वचित्तु 'भेयइत्त'त्ति पाठः तत्र भेदयित्वा केनाप्युपायेन प्रतिपन्थिनं प्रति कारणिकान् द्वेषिणो विधाय स्वपक्षग्राहिणो वेति भावः।

विवादं च कृत्वा ततोऽप्रतिक्रान्ताः केचित् क्षुद्रसत्त्वेषूत्पद्यन्त इति तान्निरूपयन्नाह—

**छव्विहा खुड्डा पाणा पं० तं०—बेंदिता तेइंदिता चउरिंदिता संमुच्छिमपंचिंदिततिरिक्खजोणिता तेउकातिता वाउकातिता (सू० ५१३) छव्विधा गोयरचरिता पं० तं०—पेडा अद्धपेडा गोमुत्तिता पतङ्गविहिता संबुक्कवट्टा गंतुंपच्चागता (सू० ५१४) जम्बुद्दीवे २ मन्दरस्स पव्वयस्स य दाहिणेणमिमीसे रतणप्पभाते पुढवीए छ अवक्कन्तमहानिरता पं० तं०—लोले लोलुए उदड्ढे निदड्ढे जरते पज्जरते, चउत्थीए णं पङ्कप्पभाए पुढवीते छ अवक्कन्ता महानिरता पं० तं०—आरे वारे मारे रोरे रोरुते खाडखडे (सू० ५१५)।**

'छव्विहे'त्यादि सुगमं, परमिह क्षुद्राः—अधमाः, यदाह—"अल्पमधमं पणस्त्रीं क्रूरं सरघां नटीं च षट् क्षुद्रान्। ब्रुवते" इति, अधमत्वं च विकलेन्द्रियतेजोवायूनामनन्तरभवे सिद्धिगमनाभावाद्, यत उक्तम्—"भूदगपंकप्पभवा चउरो हरिया उ छच्च सिज्झेज्जा। विगला लभेज्ज विरइं नउ किंचि लभेज्ज सुहुमतसा ॥१॥" [भूदकपङ्कप्रभवाश्चत्वारः वनस्पतेः षट् सिद्ध्यन्ति। विकला लभन्ते विरतिं नतु किमपि सूक्ष्मत्रसाः ॥१॥] (सूक्ष्मत्रसाः तेजोवायू इति) तथा एतेषु देवानुत्पत्तेश्च, यत उक्तम्—"पुढवीआउवणस्सइगब्भे पज्जत्तसंखजीवीसु। सग्गच्चुयाण वासो सेसा पडिसेहिया ठाणा ॥१॥" इति [पृथ्व्यब्वनस्पतिगर्भजपर्याप्तसङ्ख्यजीविषु स्वर्गच्युतानां वासः

शेषाणि स्थानानि प्रतिषेधितानि ॥१॥] सम्मूर्च्छिमपञ्चेन्द्रियतिरश्चां चाधमत्वं तेषु देवानुत्पत्तेः, तथा पञ्चेन्द्रियत्वेऽप्यमनस्कतया विवेकाभावेन निर्गुणत्वादिति, वाचनान्तरे तु सिंहाः व्याघ्रा वृका दीपिका ऋक्षास्तरक्षा इति क्षुद्रा उक्ताः क्रूरा इत्यर्थः। अनन्तरं सत्त्वविशेषा उक्ताः, सत्त्वानां चानपायतः साधुना भिक्षाचर्या कार्येति, सा च षोढेति दर्शयन्नाह—'छव्विहे'त्यादि, 'गोयरचरिय'त्ति गोः—बलीवर्दस्य चरणं—चरः गोचरस्तद्वद्या चर्या—चरणं सा गोचरचर्या, इदमुक्तं भवति—यथा गोरुच्चनीचतृणेष्वविशेषतश्चरणं प्रवर्त्तते तथा यत्साधोररक्तद्विष्टस्योच्चनीचमध्यमकुलेषु धर्मसाधनदेहपरिपालनाय भिक्षार्थं चरणं सा गोचरचर्येति, इयं चैकस्वरूपाऽप्यभिग्रहविशेषात् षोढा, तत्र प्रथमा पेटा—वंशदलमयं वस्त्रादिस्थानं जनप्रतीतं, सा च चतुरस्रा भवति, स्थापना ततश्च साधुरभिग्रहविशेषाद्यस्यां चर्यायां ग्रामादिक्षेत्रं पेटावच्चतुरस्रं विभजन्विहरति सा पेटेत्युच्यते, एवमर्द्धपेटाऽपि एतदनुसारेण वाच्या, गोर्मूत्रणं गोमूत्रिका तद्वद्या सा तथा, इयं हि परस्पराभिमुखगृहपङ्क्त्योरेकस्यां गत्वा पुनरितरस्यां पुनस्तस्यामेवेत्येवं क्रमेण भावनीया, पतङ्गः—शलभस्तस्य वीथिका—मार्गः तद्वद्या सा तथा, पतङ्गगतिर्हि अनियतक्रमा भवति एवं याऽनाश्रितक्रमा सा तथा, 'संवुक्कवट्ट'त्ति संवुकः—शङ्खस्तद्वच्छङ्खभ्रमिवदित्यर्थो या वृत्ता सा संवुकवृत्तेति, इयं च द्वेधा, तत्र यस्यां क्षेत्रवहिर्भागाच्छङ्खवृत्तत्वगत्याऽटन् क्षेत्रमध्यभागमायाति साऽभ्यन्तरसंबुका, यस्यां तु मध्यभागाद् बहिर्याति सा बहिःसम्बुकेति, 'गन्तुं पच्चागय'त्ति उपाश्रयान्निर्गतः सन्नेकस्यां गृहपङ्क्तौ भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयायां गृहपङ्क्तौ यस्यां भिक्षते सा गत्वाप्रत्यागता, गत्वा प्रत्यागतं यस्यामिति च विग्रह इति। अनन्तरं साधुचर्योक्तेति चर्याप्रस्तावादसाधुचर्याफलभोक्तृस्थानविशेषाभिधानाय सूत्रद्वयं—'जंबूदीवे'त्यादि सुगमं, नवरं अवक्कंत'त्ति अपक्रान्ताः—सर्वशुभभावेभ्योऽपगता—अप्राप्तास्तदन्येभ्योऽतिनिकृष्टा इत्यर्थः, अपक्रान्ता वा—अकमनीयाः, सर्वेऽप्येवमेव नरकाः,

विशेषतश्चैते इति दर्शनाथ विशेषणमिति सम्भाव्यते, ते च ते महानरकाश्चेति विग्रहः, एतेषां चैवं प्ररूपणा—"तेरिक्कारस नव सत्त पञ्च तिन्नेव हुंति एक्को य। पत्थडसङ्खा एसा सत्तसुवि कमेण पुढवीसुं ॥१॥" [त्रयोदशैकादश नव सप्त पञ्च त्रयो भवति एक एव सप्तस्वपि पृथ्वीषु क्रमेणैषा प्रस्तटसंख्या ॥१॥] एवमेकोनपञ्चाशत्प्रस्तटाः, एतेषु क्रमेणैतावन्त एव सीमन्तकादयो वृत्ताकारा नरकेन्द्रकाः, तत्र सीमन्तकस्य पूर्वादिदिक्षु एकोनपञ्चाशत्प्रमाणा नरकावली विदिक्षु चाष्टचत्वारिंशत्प्रमाणेति प्रतिप्रस्तटमुभयैकैकहान्या सप्तम्यां दिक्ष्वेकैक एव विदिक्षु न सन्त्येवेति, उक्तं च—"एगूणवन्ननिरया सेढी सीमन्तगस्स पुव्वेणं। उत्तरओ अवरेण य दाहिणओ चेव बोद्धव्वा ॥ १ ॥ अडयालीसं निरया सेढी सीमन्तगस्स बोद्धव्वा। पुव्वुत्तरेण नियमा एवं सेसासु विदिसासु ॥ २ ॥ एक्केक्को य दिसासुं मज्झे निरओ भवेऽपइट्ठाणो। विदिसानिरयविरहियं तं पयरं पञ्चगं जाण ॥ ३ ॥" [एकोनपंचाशन्निरयाणां श्रेणिः सीमन्तकस्य पूर्वस्यां उत्तरस्यामपरस्यां दक्षिणतश्च बोद्धव्या ॥१॥ सीमन्तकस्य पूर्वोत्तरस्यां अष्टचत्वारिंशतो नरकाणां श्रेणिर्नियमाद् बोद्धव्या एवं शेषास्वपि विदिशासु ॥२॥ दिक्ष्वेकैको मध्ये च अप्रतिष्ठानो निरयवासो भवेत् विदिग्नरकविरहितं तत्प्रस्तरं पंचमयं जानीहि ॥३॥] सीमन्तकस्य च पूर्वादिषु दिक्षु सीमन्तकप्रभादयो नरका भवन्ति, तदुक्तम्—"सीमंतकप्पभो खलु निरओ सीमंतगस्स पुव्वेण। सीमंतगमज्झिमओ उत्तरपासे मुणेयव्वो ॥१॥ सीमंतावत्तो पुण निरओ सीमंतगस्स अवरेणं। सीमंतगावसिट्ठो दाहिणपासे मुणेयव्वो ॥२॥" इति, [सीमन्तकप्रभः खलु निरयः सीमन्तकस्य पूर्वस्यां सीमन्तकमध्यमः उत्तरपार्श्वे ज्ञातव्यः ॥१॥ सीमन्तावर्त्तः पुनर्निरयः सीमन्तकस्यापरस्यां सीमन्तकावशिष्टो दक्षिणपार्श्वे ज्ञातव्यः ॥२॥ ततः पूर्वादिषु चतसृषु दिक्षु सीमन्तकापेक्षया तृतीयादयः प्रत्येकमावलिकासु विलयादयो नरका भवन्तीति, एवं चैते लोलादयः षडप्या-

वलिकागतानां मध्ये अधीता विमाननरकेन्द्रकाख्ये ग्रन्थे, यतस्तत्रोक्तम्—"लोले तह लोलुए चेव" इति, [लोलस्तथा लोलुपश्चैव] एतौ चावलिकायाः पर्यन्तिमौ तथा 'उद्दड्ढे चेव निदड्ढे'त्ति [उद्दग्धश्चैव निर्दग्धः] एतौ सीमन्तकप्रभाद्विंशतितमैकविंशाविति, तथा 'जरए तह चेव पज्जरए'त्ति [जरकस्तथैव प्रजरकः] पञ्चत्रिंशत्तमषट्त्रिंशत्तमौ, केवलं लोलो लोलुप इत्येवं शुद्धपदैः सर्वनरकाणां पूर्वावलिकायामेवाभिलापः, उत्तरदिगाद्यावलिकासु पुनरेभिरेव सविशेषैर्नामभिर्नरका अभिलप्यन्ते, तद्यथा—उत्तरायां लोलमध्यो लोलुपमध्य इत्यादि, एवं पश्चिमायां लोलावर्त्तो दक्षिणायां लोलावशिष्ट इत्यादि, उक्तं च—"मज्झा उत्तरपासे आवत्ता अवरओ मुणेयव्वा। सिट्ठा दाहिणपासे पुव्विल्लाओ विभइयव्वा ॥१॥"इति [उत्तरपार्श्वे लोलमध्या अपरस्यां लोलावर्त्ताः ज्ञातव्याः दक्षिणपार्श्वे लोलशिष्टाः पूर्वदिका विभक्तव्याः ॥१॥] इह तु दक्षिणानामेषां विवक्षितत्वेन लोलावशिष्ट इत्यादिवक्तव्येऽपि सामान्याभिधानमेव निर्विशेषं विवक्षितमिति सम्भाव्यते। 'चउत्थीए'त्ति पङ्कप्रभायां अपक्रान्ता अपकान्ता वेत्यादि तथैव, इह च सप्त प्रस्तटाः सप्तैव नरकेन्द्रकाः, यथोक्तम्—"आरे मारे नारे तत्थे तमए य होइ बोद्धव्वे। खाडखडे य खडखडे इंदयनिरया चउत्थीए ॥२॥ इति, [आरो मारो नारस्ताम्रः तमसकश्च भवति बोद्धव्यः। खाडखडश्च खंडखडः इंद्रकनिरयाश्चतुर्थ्यां ॥१॥] तदेवं आरा मारा खाडखडा नरकेन्द्रकाः, अन्ये तु वाररोररोरुकाख्यास्त्रयः प्रकीर्णकाः, अथवा इन्द्रका एव नामान्तरैरुक्ता इति सम्भाव्यत इति।

अनन्तरमसाधुचर्याफलभोक्तृस्थानान्युक्तानीतश्च साधुचर्याफलभोक्तृस्थानविशेषानाह—

बम्भलोगे णं कप्पे छ विमाणपत्थडा पं० तं०—अरते विरते णीरते निम्मले वितिमिरे विसुद्धे (सू० ५१६)

चंदस्स णं जोतिसिंदस्स जोतिसरन्नो छ णक्खत्ता पुव्वंभागा समखेत्ता तीसतिमुहुत्ता पं० तं०—पुव्वाभद्दवया
कत्तिता महा पुव्वाफग्गुणी मूलो पुव्वासाढा । चंदस्स णं जोतिसिंदस्स जोतिसरण्णो छ णक्खत्ता णत्तंभागा
अवड्ढक्खेत्ता पन्नरसमुहुत्ता पं० तं०—सयभिसता भरणी अद्दा अस्सेसा साती जेट्ठा । चंदस्स णं जोइसिंदस्स
जोतिसरन्नो छ नक्खत्ता उभयम्भागा दिवड्ढखेत्ता पणयालीसमुहुत्ता पं० तं०—रोहिणी पुणव्वसू उत्तराफग्गुणी
विसाहा उत्तरासाढा उत्तराभद्दवया (सू० ५१७) ।

'बंभे'त्यादि, 'बंभलोए'त्ति पञ्चमदेवलोके षडेव विमानप्रस्तटाः प्रज्ञप्ताः, आह च—"तेरस १/२ बारस ३/४ छ ५ पञ्च चेव ६ च-
त्तारि ७ ८ १० ११ १२ चउसु कप्पेसु । गेवेज्जेसु तिय तिय ३-३-३ एगो य अणुत्तरेसु १ भवे ॥१॥" त्ति, [त्रयोदश १/२ द्वादश ३/४ षट्
५, पञ्च ६ चैव चत्वारः ७-८-९/१० ११/१२ चतुर्षु कल्पेषु ग्रैवेयकेषु त्रयस्त्रयः एकश्चानुत्तरेषु भवेत् ॥१॥"] १३-१२-६ ५-१६-९-१=सर्वे-
ऽपि ६२, तद्यथा—अरजा इत्यादि सुगममेवेति । अनन्तरं विमानवक्तव्यतोक्तेति तत्प्रस्तावान्नक्षत्रविमानवक्तव्यतां सूत्रत्रयेणाह—'चंद-
स्से'त्यादि व्यक्तं, नवरं 'पुव्वंभाग'त्ति पूर्वमिति—पूर्वभागेनाग्रेणेत्यर्थो भज्यन्ते अप्राप्तेनैव चन्द्रेण सेव्यन्ते—युज्यन्ते इतियावदिति
पूर्वभागानि, अनुस्वारश्च प्राकृतत्वादिति, चन्द्रस्याग्रयोगीनि, चन्द्र एतान्यप्राप्तो भुङ्क्ते इति लोकश्रीप्रोक्ता भावनेति, उक्तं च तत्रैव
—"पुव्वा तिन्नि य मूलो मह कित्तिय अग्गिमा जोगा" इति, [त्रीणि च पूर्वाणि मूलं मघा कृत्तिका एतान्यग्रिमयोगानि] 'समं' स्थूलन्या-
यमाश्रित्य त्रिंशन्मुहूर्त्तभोग्यं क्षेत्रं—आकाशदेशलक्षणं येषां तानि समक्षेत्राणि, अत एवाह—'त्रिंशन्मुहूर्त्तानि' त्रिंशतं मुहूर्त्तांश्चन्द्रभोगो
येषां तानि तथा, 'णत्तंभाग'त्ति नक्तंभागानि चंद्रस्य समयोगीनीत्यर्थः, उक्तं च—"अद्दाऽसेसा साई सयभिसमभिई य जेट्ठ समजोगा"[आ-

द्रोऽश्लेषा स्वातिः शतभिषक् अभिजित् ज्येष्ठा समयोगानि ॥] केवलं भरणीस्थाने लोकश्रीसूत्रे अभिजिदुक्तेति मतविशेषो दृश्यत इति, अपार्द्ध-समक्षेत्रापेक्षया अर्द्धमेव क्षेत्रं येषां तानि तथा, अर्द्धक्षेत्रत्वमेवाह–'पंचदशमुहूर्त्तानी'ति, 'उभयभाग'त्ति चन्द्रेणोभयतः–उभयभागाभ्यां पूर्वतः पश्चाच्चेत्यर्थो भज्यन्ते–भुज्यन्ते यानि तान्युभयभागानि, चन्द्रस्य पूर्वतः पृष्ठतश्च भोगमुपगच्छन्तीत्यर्थः इति भावना लोकश्रीभणितेति, उक्तं च—"उत्तरतिन्नि विसाहा पुणव्वसू रोहिणी उभयजोगा ॥" इति, [त्रीण्युत्तराणि विशाखा पुनर्वसू रोहिणी उभययोगानि ॥] द्वितीयमपार्द्धं यत्र तत् द्व्यपार्द्धं सार्द्धमित्यर्थः, क्षेत्रं येषा तानि तथा, यतः पञ्चचत्वारिंशन्मुहूर्त्तानीति, अन्यानि दश पश्चिमयोगानि, पूर्वभागादिनक्षत्राणां गुणोऽयं,–उक्तक्रमेण नक्षत्रैर्युज्यमानस्तु चन्द्रमाः । सुभिक्षकृद्विपरीतं युज्यमानोऽन्यथा भवेत् ॥१॥' इति ।

अनन्तरं चन्द्रव्यतिकर उक्त इति किञ्चिच्छब्दसाम्यात्तद्वर्णसाम्याद्वा अभिचन्द्रकुलकरसूत्रं, तद्वंशजन्मसम्बन्धाद्भरतसूत्रं पार्श्वनाथसूत्रं च, जिनसाधर्म्याद्वासुपूज्यसूत्रं चन्द्रप्रभसूत्रं चाह—

अभिचन्दे णं कुलकरे छ धणुसयाइं उड्ढ उच्चत्तेणं हुत्था (सू० ५१८) भरहे णं राया चाउरंतचक्कवट्टी छ पुव्वसतसहस्साइं महाराया हुत्था (सू० ५१९) पासस्स णं अरहओ पुरिसादाणियस्स छ सता वादीणं सदेवमणुयासुराते परिसाते अपराजियाणं संपया होत्था। वासुपुज्जे णं अरहा छहिं पुरिससतेहिं सद्धिं मुण्डे जाव पव्वइते। चन्दप्पभे णं अरहा छम्मासे छउमत्थे हुत्था (सू० ५२०) तेतिंदिया जीवाणं असमारभमाणस्स छव्विहे

संजमे कज्जति, तं०—घाणामातो सोक्खातो अववरोवेत्ता भवति घाणामएणं दुक्खेणं असंजोएत्ता भवति, जिब्भामातो सोक्खातो अवरोवेत्ता भवइ० एवं चेव फासामातोवि। तेइंदियाणं जीवाणं समारभमाणस्स छव्विहे असंजमे कज्जति, तं०—घाणामातो सोक्खातो ववरोवेत्ता भवति, घाणामएणं दुक्खेणं संजोगेत्ता भवति, जाव फासमतेणं दुक्खेणं संजोगेत्ता भवति (सू० ५२१)।

'अभिचंदे' त्यादि, सुगमानि चैतानि, नवरं अभिचन्द्रोऽमुष्यामवसर्पिण्यां चतुर्थः कुलकरः। 'चाउरंत'त्ति चत्वारोऽन्ताः—समुद्रत्रयहिमवल्लक्षणा यस्यां सा चतुरन्ता—पृथ्वी तस्या अयं स्वामीति चातुरन्तः स चासौ चक्रवर्त्ती चेति चातुरन्तचक्रवर्त्ती, षट् पूर्वशतसहस्राणि—तल्लक्षाणि, पूर्वं तु चतुरशीतिर्वर्षलक्षाणां तद्गुणेति। 'आदाणीयस्स'त्ति आदीयते—उपादीयते इत्यादानीयः उपादेय इत्यर्थः, पुरुषाणां मध्ये आदानीयः पुरुषश्चासावादानीयश्चेति वा पुरुषादानीयस्तस्य। चन्द्रप्रभस्य षण्मासानिह छद्मस्थपर्यायो दृश्यते आवश्यके तु पद्मप्रभस्यासौ पठ्यते, चन्द्रप्रभस्य तु त्रीनिति मतान्तरमिदमिति। छद्मस्थश्चेन्द्रियोपयोगवान् भवतीतीन्द्रियप्रत्यासत्त्या त्रीन्द्रियाश्रितं संयममसंयमं च प्रतिपादयन् सूत्रद्वयमाह—'तेइंदिए'त्यादि कण्ठ्यं, नवरं 'असमारभमाणस्स'त्ति अव्यापादयतः, 'घाणामाउ'त्ति घ्राणमयात्सौख्यात् गन्धोपादानरूपात् अव्यपरोपयिता—अभ्रंशकः, घ्राणमयेन—गन्धोपलम्भाभावरूपेण दुःखेनासंयोजयिता भवति, इह चाव्यपरोपणमसंयोजनं च संयमोऽनाश्रवरूपत्वादितरदसंयम इति।

इयं च संयमासंयमप्ररूपणा मनुष्यक्षेत्र एवेति मनुष्यक्षेत्रगतपद्स्थानकावतारि वस्तुप्ररूपणाप्रकरणं 'जंबुद्दीवे'त्यादिकं पञ्चपञ्चा-

शत्सूत्रप्रमाणमाह—

जंबुद्दीवे २ छ अकम्मभूमीओ पं० तं०—हेमवते हेरण्णवते हरिवस्से रम्मगवासे देवकुरा उत्तरकुरा १। जंबुद्दीवे २ छव्वासा पं० तं०—भरहे एरवते हेमवते हेरन्नवए हरिवासे रम्मगवासे २। जंबुद्दीवे २ छ वासहरपव्वता पं० तं०—चुल्लहिमवंते महाहिमवंते निसढे नीलवंते रूप्पि सिहरी ३। जंबूमंदरदाहिणे णं छ कूडा पं० तं०—चुल्लहिमवंतकूडे वेसमणकूडे महाहिमवंतकूडे वेरुलितकूडे निसढकूडे रुयगकूडे ४। जंबूमंदरउत्तरे णं छ कूडा पं० तं—नेलवंतकूडे उवदंसणकूडे रुप्पिकूडे मणिकंचणकूडे सिहरिकूडे तिगिच्छकूडे ५। जंबूदीवे २ छ महद्दहा पं० तं०—पउमदहे महापउमदहे तिगिच्छदहे केसरिदहे महापोंडरीयदहे पुंडरीयदहे ६। तत्थ णं छ देवयाओ महड्ढियाओ जाव पलिओवमट्ठितातो परिवसंति, तं०—सिरि हिरि धिति कित्ति बुद्धि लच्छी ७। जंबूमंदरदाहिणे णं छ महानईओ पं० तं०—गंगा सिंधू रोहिया रोहितंसा हरी हरिकंता ८। जंबूमंदरउत्तरे णं छ महानतीतो पं० तं०—नरकंता नारिकंता सुवन्नकूला रुप्पकूला रत्ता रत्तवती ९। जंबूमंदरपुरच्छिमे णं सीताते महानदीते उभयकूले छ अंतरनईओ पं० तं०—गाहावती दहावती पंकवती तत्तजला मत्तजला उम्मत्तजला १०। जंबूमंदरपच्चत्थिमे णं सीतोदाते महानतीते उभयकूले च अंतरनदीओ पं० तं०—खीरोदा सीहसोता अंतोवाहिणी उम्मिमालिणी फेणमालिणी गंभीरमालिणी ११। धायइसंडदीवपुरच्छिमद्धेणं छ अकम्मभूमीओ पं० तं०—हेमवए, एवं जहा जंबुद्दीवे २ तहा नदी जाव अंतरणदीतो २२ जाव पुक्खरवरदीवद्धपचत्थिमद्धे भाणितव्वं

५५ (सू० ५२२) छ उऊ पं० तं०—पाउसे वरिसारत्ते सरए हेमंते वसंते गिम्हे १ (सू० ५२३) छ ओमरत्ता पं० तं०—ततिते पव्वे सत्तमे पव्वे एक्कारसमे पव्वे पन्नरसमे पव्वे एगूणवीमइमे पव्वे तेवीसइमे पव्वे २। छ अइरत्ता पं० तं०—चउत्थे पव्वे अट्ठमे पव्वे दुवालसमे पव्वे सोलसमे पव्वे वीसइमे पव्वे चउवीसइमे पव्वे ३ (सू० ५२४)।

सुबोधं चैतत्, नवरं कूटसूत्रे हिमवदादिषु वर्षधरपर्व्वतेषु द्विस्थानकोक्तक्रमेण द्वे द्वे कूटे समवसेये इति। अनन्तरोपवर्णितरूपे च क्षेत्रे कालो भवतीति कालविशेषनिरूपणाय 'छ उऊ' इत्यादि सूत्रत्रयं, सुगमं चेदं, नवरं 'उऊ'त्ति द्विमासप्रमाणकालविशेष ऋतुः, तत्राषाढश्रावणलक्षणा प्रावृट् एवं शेषाः क्रमेण, लौकिकव्यवहारस्तु श्रावणाद्याः वर्षाशरद्धेमन्तशिशिरवसन्तग्रीष्माख्या ऋतव इति, 'ओमरत्त'त्ति अवमा–हीना रात्रिरवमरात्रो–दिनक्षयः, 'पव्व'त्ति अमावास्या पौणमासी वा तदुपलक्षितः पक्षोऽपि पर्व, तत्र लौकिक-ग्रीष्मर्त्तौ यत्तृतीयं पर्व–आषाढकृष्णपक्षस्तत्र, सप्तमं पर्व्व–भाद्रपदकृष्णपक्षस्तत्र, एवमेकान्तरितमासानां कृष्णपक्षाः सर्वत्र पर्व्वाणीति, उक्तं च—"आसाढबहुलपक्खे भद्दवए कत्तिए अ पोसे य। फग्गुणवइसाहेसु य बोद्धव्वा ओमरत्ताउ ॥१॥" [आषाढासितपक्षे भाद्रपदे कार्त्तिके च पौषे च फाल्गुनवैशाखयोश्च बोद्धव्या अवमरात्रयः ॥१॥] 'अइरत्त'त्ति अतिरात्रः अधिकदिनं दिनवृद्धिरितियावत् चतुर्थं पर्व्व–आषाढशुक्लपक्षः, एवमिहैकान्तरितमासानां शुक्लपक्षाः सर्वत्र पर्व्वाणीति।

अयं चातिरात्रादिकोऽर्थो ज्ञानेनावसीयन्त इत्यधिकृताध्ययनावतारिणो ज्ञानस्याभिधानाय सूत्रद्वयमाह—

आभिणिबोहियणाणस्स णं छव्विहे अत्थोग्गहे पं० तं०—सोइंदियत्थोग्गहे जाव नोइंदियत्थोग्गहे (सू० ५२५) छव्विहे ओहिणाणे पं० तं०—आणुगामिए अणाणुगामिते वड्ढमाणते हीयमाणते पडिवाती अपडिवाती (सू० ५२६) नो कप्पइ निग्गंथाण वा २ इमाइं छ अवतणा इं वदित्तते तं०—अलियवयणे हीलिअवयणे खिंसितवयणे फरुसवयणे गारत्थियवयणे विउसवितं वा पुणो उदीरित्तते (सू० ५२७)।

'आभी'त्यादि, सुगमं, नवरं अर्थस्य सामान्यस्य श्रोत्रेन्द्रियादिभिः प्रथममविकल्प्यं शब्दोऽयमित्यादिविकल्परूपं चोत्तरविशेषापेक्षया सामान्यस्यावग्रहणमर्थावग्रहः, स च नैश्चयिक एकसामयिको व्यावहारिकस्त्वान्तर्मौहूर्त्तिकः, अर्थविशेषितत्वाद् व्यञ्जनावग्रहव्युदासः, स हि चतुर्धा। 'आणुगामिए'त्ति अनुगमनशीलमनुगामि तदेवानुगामिकं—देशान्तरगतमपि ज्ञानिनं यदनुगच्छति लोचनवदिति, यत्तु तद्देशस्थस्यैव भवति तद्देशनिबन्धनक्षयोपशमजत्वात् स्थानस्थदीपवद् देशान्तरगतस्य त्वपैति तदनानुगामिकमिति, उक्तं च—"अणुगामिओऽणुगच्छइ गच्छन्तं लोअणं जहा पुरिसं। इयरो य नाणुगच्छइ ठिअप्पईवोव्व गच्छंतं ॥१॥" इति [आनुगामिकोऽवधिर्गच्छन्तमनुगच्छति यथा पुरुषं लोचनं इतरश्च स्थितप्रदीप इव गच्छन्तं नानुगच्छति ॥१॥] यत्तु क्षेत्रतोऽङ्गुलासंख्येयभागविषयं कालत आवलिकासंख्येयभागविषयं द्रव्यतस्तेजोभाषाद्रव्यान्तरालवर्त्तिद्रव्यविषयं भावतस्तद्गतसंख्येयपर्यायविषयं च जघन्यतः समुत्पद्य पुनर्वृद्धिं—विषयविस्तरणात्मिकां गच्छदुत्कर्षेणालोके लोकप्रमाणान्यसंख्येयानि खण्डान्यसंख्येया उत्सर्पिण्यवसर्पिणीः सर्वरूपिद्रव्याणि प्रतिद्रव्यमसंख्येयपर्यायांश्च विषयीकरोति तद्वर्द्धमानमिति, उक्तं च—"पइसमयमसंखेज्जभागहियं कोइ संखभागहियं। अन्नो संखेज्जगुणं खेत्तमसंखेज्जगुणमन्नो ॥१॥ पेच्छइ विवड्ढमाणं हायंतं वा तहेव कालंपि" इत्यादि, [प्रतिसमयमसंख्यभागाधिकं कोऽपि

संख्यभागाधिकं अन्यः संख्यातगुणं क्षेत्रमन्योऽसंख्यातगुणं ॥१॥ प्रेक्षते विवर्द्धमानेन हीयमानेन वा तथैव कालमपि ]-तथा यज्जघन्येनाङ्गुलासंख्येयभागविषयमुत्कर्षेण सर्वलोकविषयमुत्पद्य पुनः संक्लेशवशात् क्रमेण हानिं-विषयसङ्कोचात्मिकां याति यावदङ्गुलासंख्येयभागं तद्धीयमानमिति, तथा प्रतिपतनशीलं प्रतिपाति-उत्कर्षेण लोकविषयं भूत्वा प्रतिपतति, तथा तद्विपरितमप्रतिपाति, येनालोकस्य प्रदेशोऽपि दृष्टस्तदप्रतिपात्येवेति, आह च—"उक्कोस लोगमित्तो पडिवाइ परं अपडिवाइ" इति। [उत्कृष्टो लोकमात्रः प्रतिपाती परतोऽप्रतिपाती ॥] एवंविधज्ञातव्रतां च यानि वचनानि वक्तुं न कल्पन्ते तान्याह—'नो कप्पती'त्यादि कण्ठ्यं, नवरं 'अवयणाइं'ति नञः कुत्सार्थत्वात् कुत्सितानि वचनानि अवचनानि, तत्रालीकं-प्रचलायसे किं दिवेत्यादिप्रश्ने न प्रचलाये इत्यादि, हीलितं-सासूयं गणिन्! वाचक! ज्येष्ठार्येत्यादि, खिंसितं-जन्मकर्माद्युद्घट्टनतः परुषं-दुष्ट शैक्षेत्यादि 'गारं'ति अगारं-गेहं तद्वृत्तयो आगारस्थिता-गृहिणः तेषां यत्तदगारस्थितवचनं पुत्र मामक भागिनेयेत्यादि, उक्तं च—"अरिरे माहणपुत्ता अव्वो बप्पोत्ति भाय मामोत्ति। भट्टिय सामिय गोमिय (भोगि) (लहुओ लहुआ य गुरुआ य ॥१॥,त्ति [अरे रे ब्राह्मण पुत्र बप्प? भ्रातः माम इति भर्त्तः स्वामिन् भोगिन् लघुर्लघवो गुरवश्च ॥१॥] व्यवशमितं वा-उपशमितं वा पुनरुदीरयितुं न कल्पत इति प्रक्रमोऽवचनत्वादस्येति, अनेन च व्यवशमितस्य पुनरुदीरणवचनं नाम षष्ठमवचनमुक्तम्, गाथा—"खामिय वोसमियाइं अहिगरणाइं तु जे उदीरेंति। ते पावा नायव्वा तेसिं चारोवणा इणमो ॥१॥" इति, [क्षामयित्वा व्युपशमितान्यधिकरणानि य एवोदीरयन्ति। ते पापा ज्ञातव्यास्तेषां चैषाऽऽरोपणा ॥१॥

अवचनेषु प्रायश्चित्तप्रस्तारो भवतीति तानाह—

छ कप्पस्स पत्थारा पं० तं०—पागातिवायस्स वायं वयमाणे १ मुसावायस्स वादं वयमाणे २ अदिन्नादाणस्स वादं वयमाणे ३ अविरतिवायं वयमाणे ४ अपुरिसवातं वयमाणे ५ दासवायं वयमाणे ६ इच्चेते छ कप्पस्स पत्थारे पत्थरेत्ता सम्ममपरिपूरेमाणो तट्ठाणपत्ते (सू०५२८) छ कप्पस्स पलिमंथू पं० तं०—कोकुतिते संजमस्स पलिमंथू १ मोहरिते सच्चवयणस्स पलिमंथू २ चक्खुलोलुते ईरितावहितាते पलिमंथू ३ तिंतिणिते एसणागोतरस्स पलिमंथू ४ इच्छालोभिते मोत्तिमग्गस्स पलिमंथू ५ भिज्जाणिताणकरणे मोक्खमग्गस्स पलिमंथू ६ सव्वत्थ भगवता अणिताणता पसत्था (सू० ५२९) छव्विहा कप्पठिती पं० तं०—सामातितकप्पठिती छेतोवट्ठावणितकप्पठिती निव्विसमाणकप्पठिती णिव्विट्ठकप्पट्ठिती जिणकप्पठिती थिविरकप्पठिती (सू० ५३०) समणे भगवं महावीरे छट्ठेणं भत्तेणं अपाणएणं मुंडे जाव पव्वइए। समणस्स णं भगवओ महावीरस्स छट्ठेणं भत्तेणं अपाणएणं अणंते अणुत्तरे जाव समुप्पन्ने । समणे भगवं महावीरे छट्ठेणं भत्तेणं अपाणएणं सिद्धे जाव सव्वदुक्खप्पहीणे (सू० ५३१) सणंकुमारमाहिंदेसु णं कप्पेसु विमाणा छ जोयणसयाइं उड्ढं उच्चतेणं पन्नत्ता, सणंकुमारमाहिंदेसु णं कप्पेसु देवाणं भवधारणिज्जगा सरीरगा उक्कोसेणं छ रतणीओ उड्ढं उच्चत्तेणं पं० (सू० ५३२)।

'छ कप्पे'त्यदि कल्पः—साध्वाचारस्तस्य सम्बन्धिनस्तद्विशुद्ध्यर्थत्वात् प्रस्ताराः—प्रायश्चित्तस्य रचनाविशेषाः, तत्र प्राणातिपातस्य वादं—वार्त्तां वाचं वा वदति साधौ प्रायश्चित्तप्रस्तारो भवतीत्येकः, यथा अन्यजनविनाशितदर्दुरे न्यस्तपादं भिक्षुमुपलभ्य क्षुल्लक आह—साधो! दर्दुरो भवता मारितः, भिक्षुराह—नैवं, क्षुल्लक आह—द्वितीयमपि व्रतं ते नास्ति, ततः क्षुल्लको भिक्षाचर्यातो निवृत्त्याचार्यसमी-

पमागच्छतीत्येकं प्रायश्चित्तस्थानं, ततः साधयति यथा तेन दर्दुरो मारित इति प्रायश्चित्तान्तरं, ततोऽभ्याख्यातसाधुराचार्यणोक्तः–यथा दर्दुरो भवता मारितः? असावाह–नैवमिह क्षुल्लकस्य प्रायश्चित्तान्तरं, पुनः क्षुल्लक आह–पुनरप्यपलपसीति, भिक्षुराह–गृहस्था पृच्छयन्तां, वृषभा गत्वा पृच्छन्तीति प्रायश्चित्तान्तरमित्येवं योऽभ्याख्याति तस्य मृषावाददोप एव, यस्तु सत्यमारितं निह्नुते तस्य दोषद्वयमिति १, अत्रोक्तम्––"ओमो चोइज्जंतो दुपेहियाएसु संपसारेइ। (पर्यालोचयति) अहमवि णं चोइस्सं न य लभए तारिसं छिद्दं ॥१॥ अन्नेण घाइए दद्दुरंमि दट्ठुं चलण कय ओमो। वहिओ हा एसु तुमे नवत्ति वीयंपि ते णत्थि ॥२॥" इत्यादि, [अवमश्चोद्यमानो दुष्प्रेक्षितादिषु पर्यालोचयति अहमपि चोदयिष्ये न च लभते तादृशं छिद्रं ॥१॥ अन्येन घातितं दर्दुरं दृष्ट्वा चरणं कृतमवमः हा एष त्वया हतः नैवेति तव द्वितीयमपि नास्ति ॥२॥] तथा मृषावादस्य सत्कं वादं–विकल्पनं वार्त्तां वा वदति साधौ प्रायश्चित्तप्रस्तारो भवतीति, तथाहि–क्वचित् संखडयामकालत्वात् प्रतिषिद्धौ साधू अन्यत्र गतौ, ततो मुहूर्त्तान्तरे रत्नाधिकेनोक्तम्–व्रजामः संखड्यामिदानीं भोजनकालो यतस्तत्रेति, लघर्भणति–प्रतिषिद्धोऽहं न पुनर्व्रजामि, ततोऽसौ निवृत्त्याचार्यायेदमालोचयति यथा–अयं दीनकरुणवचनैर्याचते, प्रतिषिद्धोऽपि च प्रविशति एषणां प्रेरयतीत्यादि, ततो रत्नाधिकमाचार्यो भणति–साधो! भवानेवं करोति?, स आह–नैवमित्यादि, पूर्ववत्प्रस्तारः २, इहाप्युक्तम्––"मोसंमि संखडीए मोयगगहणं अदत्तदाणंमि। आरोवणपत्थारो तं चेव इमं तु नाणत्तं ॥१॥ दीणकलुणेहिं जायइ पडिसिद्धो विसइ एसणं हणइ। जंपइ मुहप्पियाणि य जोगतिगिच्छानिमित्ताइं ॥२॥" [मृषावादे संखड्यां अदत्तादाने मोदकग्रहणं आरोपणप्रस्तारः स एव इदं तु नानात्वं ॥१॥ दीनकरुणैर्याचते प्रतिषिद्धो विशत्येषणां च हन्ति जल्पति मुखप्रियाणि च योगचिकित्सानिमित्तानि युनक्ति ॥२॥ इत्यादि, एवमदत्तादानस्य वादं वदति, अत्र भावना–एकत्र गेहे भिक्षा

लब्धा सा अवमेन गृहीता यावदसौ भाजनं संमार्ष्टि तावद्रत्नाधिकेन संखड्यां मोदका लब्धास्तानवमो दृष्ट्वा निवृत्त्याचार्यस्यालोचयति–यथाऽनेनादत्ता मोदका गृहीता इत्यादि, प्रस्तारः प्राग्वदिति ३, एवमविरतिः–अब्रह्म तद्वादं वार्त्तां वा अथवा न विद्यते विरतिर्यस्याः अविरतिका–स्त्री तद्वादं तद्वार्त्तां वा, तदासेवाभणनरूपां वदति, तथाहि–अवमो भावयति एष रत्नाधिकतया मां स्खलितादिषु प्रेरयति, ततो रोषादभ्याख्याति–"जेट्ठज्जेण अकज्जं सज्जं अज्जाघरे कयं अज्ज । उवजीविओ य भंते ! मएवि संसट्ठकप्पोऽत्थ ॥१॥" [ज्येष्ठार्येणाकार्यं अद्यार्यागृहे सद्यः कृतं भदन्त मयापि अत्र संस्पृष्टकल्प उपजीवितः ॥१॥] (अहमपि तद्भुक्तां भुक्तवानित्यर्थः) प्रस्तारभावना प्राग्वत् ४, तथा अपुरुषो–नपुंसकोऽयमित्येवं वादं वाचं वार्त्तां वा वदतीति, इह समासः प्रतीत एव, भावनाऽत्र–आचार्यं प्रत्याह–अयं साधुर्नपुंसकं, आचार्य आह–कथं जानासि ?, स आह–एतन्निजकैरहमुक्तः–किं भवतां कल्पते प्रव्राजयितुं नपुंसकमिति, ममापि किञ्चित्तल्लिङ्गदर्शनाच्छङ्का अस्तीति, प्रस्तारः प्राग्वत्, अत्राप्युक्तम्–"तइओत्ति कहं जाणसि ? दिट्ठा णीया सि तेहि मे वुत्तं । वट्टइ तइओ तुब्भं पव्वावेउं ममवि संका ॥१॥ दीसइ य पाडिरूवं ठियचंकमियसरीरभासादि । बहुसो अपुरिसवयणे पत्थारारोवणं कुज्जा ॥२॥" इति, [तृतीय इति, कथं जानासि ? दृष्टा निजकास्तैरहं उक्तः वर्त्तते तृतीयः युष्माकं प्रव्राजयितुं ?, ममापि शंका ॥१॥ दृश्यते च प्रतिरूपं एव स्थितं च क्रमितशरीरभाषादि बहुशोऽपुरुषवचने प्रस्तारारोपणं कुर्यात् ॥१॥] ५, तथा दासवादं वदति, भावना–कश्चिदाह–दासोऽयं, आचार्य आह–कथं ?, देहाकाराः कथयन्ति दासत्वमस्येति, प्रस्तारः प्राग्वदिति, अत्राप्युक्तम्–"खरउत्ति कहं जाणसि ?, देहागारा कहिंति से हंदि । छिक्कोवण (शीघ्रकोपः) उब्भंडो णीयासी दारुणसहावो ॥१॥" देहेण वा विरूवो खुज्जो वडभो य बाहिरप्पाओ । फुडमेवं आगारा कहंति जह एस खरओ त्ति ॥२॥" [दास इति, कथं जाना-

न्ति ?, तस्य देहाकाराः कथयन्ति शीघ्रकोपः उद्धांडः नीचाशी दारुणस्वभावः ॥१॥ देहेन वा विरूपः कुब्जः मडभश्च वाह्यात्मा स्फुटमेवमाकाराः कथयन्ति यथैप दाम इति ॥२॥] आचार्य आह—"कोइ सुरूवविरूवा खुज्जा मडहा य वाहिरप्पा य। न हु ते परिभवियव्वा वयणं च अणारियं वोत्तुं ॥१॥"इत्यादि,[केऽपि सुरूपा विरूपाः कुब्जा मडभा वाह्यात्मानश्च नैव ते परिभवनीयाः वचनं चानार्यकं वक्तुं (योग्याः) ॥१॥] इति ६, एवंप्रकारान् एताननन्तरोदितान् पट् कल्पस्य—साध्वाचारस्य प्रस्तारान्—प्रायश्चित्तरचनाविशेषान् मासगुर्वादिपाराञ्चिकावसानान् प्रस्तार्य—अभ्युपगमतः आत्मनि प्रस्तुतान् विधाय प्रस्तारयिता वा—अभ्याख्यानदायकसाधुः सम्यगप्रतिपूरयन्—अभ्याख्येयार्थस्यासद्भूततया अभ्याख्यानसमर्थनं कर्त्तुमशक्नुवन् प्रत्यगिरं कुर्वन् सन् तस्यैव—प्राणातिपातादिकर्त्तुरेव स्थानं प्राप्तो—गतः तत्स्थानप्राप्तः स्यात्—प्राणातिपातादिकारीव दण्डनीयः स्यादिति भावः अथवा प्रस्तारान् प्रस्तीर्य—विरचय्याचार्येण अभ्याख्यानदाता अप्रतिपूरयन्—अपरापरप्रत्ययवचनैस्तमर्थमसत्यमकुर्वन् तत्स्थानप्राप्तः कार्य इति शेषः, यत्र प्रायश्चित्तपदे विवदमानोऽवतिष्ठते न पदान्तरमारभते तत्पदं प्रापणीय इति भावः, शेपं सुगममिति। कल्पाधिकारे सूत्रद्वयम्—'छ कप्पे' त्यादि, पट् कल्पस्य—कल्पोक्तसाध्वाचारस्य परिमथ्नन्तीति परिमन्थवः, उणादित्वात्, पाठान्तरेण परिमन्था वाच्याः, घातका इत्यर्थः, इह च मन्थो द्विधा द्रव्यतो भावतश्च, यत आह—"दव्वमि मंथओ खलु तेणामंथिज्जए जहा दहियं। दहितुल्लो खलु कप्पो मंथिज्जइ कुक्कुयाईहिं ॥१॥" त्ति, [द्रव्ये मन्थाः तेन यथा दध्यादि मथ्यते खलु दधितुल्यः कल्प एव स कौकुच्यादिना मथ्यते ॥१॥] तत्र 'कुक्कुइए'त्ति 'कुच अवस्पन्दन' इति वचनात् कुत्सितं—अप्रत्युपेक्षितत्वादिना कुचितं—अवस्यन्दितं यस्य स कुकुचितः स एव कौकुचितः, कुकुचा वा—अवस्यन्दनं प्रयोजनमस्येति कौकुचिकः, स च त्रिधा—स्थानशरीरभाषाभिः, उक्तं च—"ठाणे सरीर भासा तिविहो पुण कुक्कुई समा-

सेणं ॥" इति, [ स्थाने शरीरे भाषायां च त्रिविधः कौकुची समासेन ॥ ] तत्र स्थानतो यन्त्रकवत् नर्त्तिकावद्वा भ्राम्यतीति, शरीरतो यः करादिभिः पाषाणादीन् क्षिपति, उक्तं च—"करगोफणधणुपायाइएहि उच्छुहइ पत्थराईए। भमुहादाढियथणपुयत्रिकंपणं णट्ट-वाइत्तं ॥१॥" इति, [ करगोफणधनुःपादादिभिः क्षिपति प्रस्तरादीन् भ्रूदंष्ट्रास्तनपुतविकंपनं नर्त्तिका ॥१॥ ] भाषातो यः सेण्टितमुखवादित्रादि करोति, तथा च जल्पति यथा परे हसन्तीति, उक्तं च—"छेलिअ मुहवाइत्ते जंपइ य तहा जहा परो हसइ। कुणइ य रुए बहुविहे वग्घाडियदेसभासाओ ॥१॥" इति, [ सेंटितमुखवादित्र जल्पति च तथा यथा परो हसति करोति च बहुविधानि रुतानि अनायदेशभाषाः ॥१॥ ] अयं च त्रिविधोऽपि 'संयमस्य' पृथिव्यादिसंरक्षणादेः कायगुप्तिपर्यन्तस्य यथासम्भवं परिमन्थुर्भवत्येवेति १, 'मोहरिए'त्ति मुखं-अतिभाषणातिशयनवदस्तीति मुखरः स एव मौखरिको बहुभाषी, अथवा मुखेनारिमावहतीति निपातनात् मौखरिकः, उक्तं च—"मुखरिस्स गोन्ननामं आवहइ मुहेण भासंतो ।" इति, [ मौखर्यस्य गौणं नामावहति ( अरिं ) मुखेन भाषमाणः ( यत्तत् ) ॥ ] स च सत्यवचनस्य' मृषावादविरतेः परिमंथुः, मौखर्ये सति मृषावादसम्भवादिति २, 'चक्खुलोल'त्ति चक्षुषा लोलः-चञ्चलः चक्षुर्वा लोलं यस्य स तथा, स्तूपादीनालोकयन् व्रजति य इत्यर्थः, इदं च धर्मकथनादीनामुपलक्षणं, आह च—"आलोयतो वचइ थुभाईणि कहेइ वा धम्मं। परियट्टणाणुपेहण ण पेह पंथं अणुवउत्तो ॥१॥" इति, [स्तूपादीनालोकयन् व्रजति धर्म्मं वा कथयति परिवर्त्तनानुप्रेक्षे वाऽनुपयुक्तः पंथानं न प्रेक्षते ॥१॥ ] 'इरियावहिए'त्ति ईर्या-गमनं तस्याः पन्था-मार्ग ईर्यापथस्तत्र भवा या समितिरीर्यासमितिलक्षणा सा ईर्यापथिकी तस्याः परिमन्थुरिति, आह च—"छक्कायाण विराहण संजम आयाएँ कंटगाई या। आवडणभाणभेओ खद्धे उड्डाह परिहाणी ॥१॥" इति, ३, [ संयमे षट्कायानां विराधनाऽऽत्मनि च कंटकादयः।

आपतनं भाजनभेदः प्राचुय उड्डाहः परिहाणिश्च ॥१॥ ] 'तिंतिणिए'त्ति तिंतिणिकोऽलाभे सति खेदाद् यत्किञ्चनाभिधायी स च खेदप्रधानत्वादेषणा–उद्गमादिदोषविमुक्तभक्तपानादिगवेषणग्रहणलक्षणा तत्प्रधानो यो गोचरो–गोरिव मध्यस्थतया भिक्षार्थं चरणं स एषणागोचरस्तस्य परिमन्थुः, सखेदो हि अनेषणीयमपि गृह्णातीति भावः ४, 'इच्छालोभिए'त्ति इच्छा-अभिलाषः स चासौ लोभश्च इच्छालोभो, महालोभ इत्यर्थः, शुक्लशुक्लोऽतिशुक्लो यथा, स यस्यास्ति स इच्छालोभिको–महेच्छोऽधिकोपधिरित्यर्थः, उक्तं च–'इच्छा-लोभो उ उवहिमइरेगं'त्ति [ अतिरेकोपधिरिच्छालोभिकः ] स 'मुक्तिमार्गस्ये'ति मुक्तिः–निष्परिग्रहत्वमलोभत्वमित्यर्थः सैव मार्ग इव मार्गो निर्वृतिपुरस्येति ५, 'भिज्ज'त्ति लोभस्तेन यन्निदानकरणं–चक्रवर्त्तीन्द्रादिऋद्धिप्रार्थनं तन्मोक्षमार्गस्य–सम्यग्दर्शनादिरूपस्य परिमन्थुः, आर्त्तध्यानरूपत्वात्, भिध्याग्रहणाद्यत्पुनरलोभस्य भवनिर्व्वेदमार्गानुसारितादिप्रार्थनं तन्न मोक्षमार्गस्य परिमन्थुरिति दर्शितमिति, ननु तीर्थकरत्वादिप्रार्थनं न राज्यादिप्रार्थनवद्दुष्टमतस्तद्विषयं निदानं मोक्षस्यापरिमन्थुरिति, नैवं, यत आह—'सव्व-त्थे'त्यादि, 'सर्व्वत्र' तीर्थकरत्वचरमदेहत्वादिविषयेऽपि आस्तां राज्यादौ 'भगवता'जिनेन 'अनिदानता' अप्रार्थनमेव 'पसत्थ'त्ति प्रशंसिता–श्लाघितेति, तथा च—"इहपरलोगनिमित्तं अवि तित्थगरत्तचरमदेहत्तं। सव्वत्थेसु भगवया अणियाणत्तं पसत्थं तु ॥१॥" [ इहपरलोकार्थे तीर्थंकरत्वचरमदेहत्वे अपि ( प्रार्थनं निदानं ) सर्वार्थेषु भगवताऽनिदानत्वं एव प्रशस्तं ॥१॥ ] एवमेव हि सामायिक-शुद्धिः स्यादिति, उक्तं च—"पडिसिद्धेसु अ दोसे विहिएसु य ईसि रागभावेवि। सामाइयं असुद्धं सुद्धं समयाए दोण्हंपि ॥१॥"त्ति [ प्रतिषिद्धेषु च द्वेषे ईषद्रागभावेऽपि च विहितेषु सामायिकमविशुद्धं द्वयोरपि समतायामभावे शुद्धं ॥१॥ ] अयं चान्तिमपरिमन्थयो-र्विशेषः—"आहारोवहिदेहेसु, इच्छालोभो उ सज्जई। नियाणकारी संगं तु, कुरुते उद्धदेहिकं ॥१॥ [आहारोपधिदेहेषु इच्छालोभस्तु

सजति। निदानकारी त्वौर्ध्वदेहिकं संगं कुरुते ॥१॥] (पारलौकिकमित्यर्थः)॥ 'कप्पठिई'त्यादि, कल्पस्य—कल्पाद्युक्तसाध्वाचारस्य सामायिकच्छेदोपस्थापनीयादेः स्थितिः—मर्यादा कल्पस्थितिः, तत्र सामायिककल्पस्थितिः—"सिज्जायरपिंडे या १ चाउज्जामे य २ पुरिसजिट्ठे य ३। किइकम्मस्स य करणे ४ चत्तारि अवट्ठिया कप्पा ॥१॥" [सामायिकसाधूनामवश्यं भाविन इत्यर्थः) "आचेलक्कु १ द्देसिय २ सपडिकमणे ३ य रायपिंडे ४ य। मासं ५"] पज्जोसवणा ६ छप्पेतेऽणवट्ठिया कप्पा ॥२॥" नावश्यंभाविन इत्यर्थः, छेदोपस्थापनीयकल्पस्थितिः—"आचेल १ क्कु सिय २ सेज्जायर ३ रायपिंड ४ कियकम्मे ५। वय ६ जेट्ठ ७ पडिकमणे ८ मासं ९ पज्जोसवणकप्पे १० ॥१॥ एतानि च तृतीयाध्ययनवज्ज्ञेयानि, 'निव्विसमाणकप्पट्ठिई, निव्विट्ठकप्पट्ठिइ'त्ति परिहारविशुद्धिकल्पं वहमाना निर्विशमानका यैरसौ व्यूढस्ते निर्विष्टास्तेषां या स्थितिः—मर्यादा सा तथा तत्र, "परिहारिय छम्मासे तह अणुपरिहारियावि छम्मासे। कप्पट्ठिओ छमासे एते अट्ठारसवि मास ॥१॥" त्ति [परिहारकाः षण्मासाननुपरिहारिका अपि षण्मासान्। कल्पस्थितः षण्मासान् एतेऽष्टादश मासाः ॥१॥] तथा जिनकल्पस्थितिः—"गच्छम्मि उ निम्माया धीरा जाहे य गहियपरमत्था। अग्गहजोग्गअभिग्गह उविंति जिणकप्पियचरित्तं ॥१॥"इति [गच्छे निष्णातः धीरो यदा च गृहीतपरमार्थः। अग्रहयोग्याभिग्रहे उपैति जिनकल्पिकचारित्रं ॥१॥] एवमादिका (अग्गहजोग्गअभिग्गहे'त्ति कासाञ्चित्पिण्डैषणानामग्रहे योग्यानां चाभिग्रहे अनयैव ग्राह्यमित्येवंरूपे गृहीतपरमार्था इत्यर्थः) स्थविरकल्पस्थितिः—"संजमकरणुज्जोया (उद्योगाः) निप्फायगा नाणदंसणचरित्ते। दीहाउ वुड्ढवासे वसही दोसेहि य विमुक्का ॥१॥" [संयमकरणोद्योगा निष्पादका ज्ञानदर्शनाचारित्रेषु। दीर्घायुषो वृद्धवासे दोषैश्च विमुक्ता वसतिः॥१॥] इत्यादिका। इयं च कल्पस्थितिर्महावीरेण देशितेतिसम्बन्धान्महावीरवक्तव्यतासूत्रत्रयं, तथा अनेनेयमपरापि कल्पस्थितिर्दर्शितेति

कल्पसूत्रद्वयमुपन्यस्तं, सुगमं चैतत्पंचकमपि, नवरं पष्ठेन भक्तेन-उपवासद्वयलक्षणेनापानकेन-पानीयपानपरिहारवता यावत्करणात् 'निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे'त्ति दृश्यं, सिद्धे जावत्तिकरणात् 'बुद्धे मुत्ते अंतकडे परिनिव्वुडे'त्ति दृश्यं।

उक्तरूपेषु च देवशरीरेष्वाहारपरिणामोऽस्तीत्याहारपरिणामनिरूपणायाह—

छव्विहे भोयणपरिणामे पं० तं०—मणुन्ने रसिते पीणणिज्जे बिंहणिज्जे [मयणिज्जे दीवणिज्जे] दप्पणिज्जे। छव्विहे विसपरिणामे पं० तं०—डक्के भुत्ते निवतिते मंसाणुसारी सोणिताणुसारी अट्ठिमिंजाणुसारी (सू० ५३३) छव्विहे पट्ठे पं० तं० — संसयपट्ठे वुग्गहपट्ठे अणुजोगी अणुलोमे तहणाणे अतहणाणे (सू० ५३४) चमरचंचा णं रायहाणी उक्कोसेणं छम्मासा विरहिते उववातेणं। एगमेगे णं इंदट्ठाणे उक्कोसेणं छम्मासा विरहिते उववातेणं। अधेसत्तमा णं पुढवी उक्कोसेणं छम्मासा विरहिता उववातेणं। सिद्धिगती णं उक्कोसेणं छम्मासा विरहिता उववातेणं (सू० ५३५)।

'छव्विहे भोयणे'त्यादि, भोजनस्येति-आहारविशेषस्य परिणामः पर्यायः स्वभावो धर्म्म इतियावत्, तत्र 'मणुन्न'त्ति मनोज्ञमभिलषणीयं भोजनमित्येकस्तत्परिणामः, परिणामवता सहाभेदोपचारात्, तथा 'रसिकं' माधुर्याद्युपेतं, तथा 'प्रीणनीयं' रसादि

धातुसमताकारि, 'वृंहणीयं' धातूपचयकारि, 'दीपनीयं' अग्निबलजनकं, पाठान्तरे तु 'मदनीयं' मदनोदयकारि 'दर्प्पणीयं' बलकरमुत्साहवृद्धिकरमित्यन्ये इति, अथवा भोजनस्य परिणामो–विपाकः, स च मनोज्ञः शुभत्वान्मनोज्ञभोजनसम्बन्धित्वाद्वेत्येवमन्येऽपि । परिणामाधिकारदायातं विषपरिणामसूत्रमप्येवं, नवरं 'डक्के'त्ति दष्टस्य प्राणिनो दंष्ट्राविषादिना यत्पीडाकारि तद् दष्टं–जङ्गमविषं, यच्च भुक्तं सत्पीडयति तद् भुक्तमित्युच्यते, तच्च स्थावरं, यत्पुनर्निपतितं–उपरि पतितं सत् पीडयति तन्निपतितं–त्वग्विषं दृष्टिविषं चेति त्रि(द्वि) विधं स्वरूपतः, तथा किञ्चिन्मांसानुसारि–मांसान्तधातुव्यापकं किञ्चिच्छोणितानुसारी–तथैव किञ्चिचास्थिमिञ्जानुसारि तथैवेति त्रिविधं कार्यतः, एवं च सति षड्विधं तत्, ततस्तत्परिणामोऽपि षोढैवेति ॥ एवंभूतार्थानां च निर्णयो निरतिशयस्याप्तप्रश्नतो भवतीति प्रश्नविभागमाह—'छव्विहे'त्यादि, प्रच्छनं प्रश्नः तत्र संशयप्रश्नः क्वचिदर्थे संशये सति यो विधीयते यथा—"जइ तवसा वोदाणं संजमओऽणासवोत्ति ते कह णु । देवत्तं जंति ज ? गुरुराह सरागसंजमओ ॥१॥ इति [यदि तपसा व्यवदानं संयमतोऽनाश्रव इति तव मते कथं यतयो देवत्वं यांति, गुरुराह सरागसंयमतः ॥१॥] व्युद्ग्रहेण–मिथ्याभिनिवेशेन विप्रतिपत्त्येत्यर्थः, परपक्षदूषणार्थं यः क्रियते प्रश्नः स व्युद्ग्रहप्रश्नो, यथा–"सामन्नाउ विसेसो अन्नोऽणन्नो व होज्ज जइ अन्नो । सो नत्थि खपुप्फंपिव णन्नो सामन्नमेव तयं ॥१॥"ति [सामान्याद्विशेषोऽन्योऽनन्यो वा भवेत्? यद्यन्यः स नास्ति खपुष्पमिव अनन्यः सामान्यमेव सः ॥१॥] 'अनुयोगी'ति अनुयोगो–व्याख्यानं प्ररूपणेतियावत् स यत्रास्ति तदर्थं यः क्रियत इति भावो, यथा—'चउहिं समएहिं लोगो' इत्यादिप्ररूपणाय 'कइहिं समएहीं'त्यादि ग्रन्थकार एव प्रश्नयति, 'अनुलोमे' अनुलोमनार्थं–अनुकूलकरणाय परस्य यो विधीयते, यथा क्षेमं भवतामित्यादि, 'तहनाणे'त्ति यथा प्रच्छनीयार्थे प्रष्टव्यस्य ज्ञानं तथैव प्रच्छकस्यापि ज्ञानं यत्र प्रश्ने स तथाज्ञानो, जानत् प्रश्न इ-

त्यर्थः, स च गौतमादेः, यथा 'केवइकालेणं भंते ! चमरचञ्चा रायहाणी विरहिया उववाएण'मित्यादिरिति, एतद्विपरीतस्त्वतथाज्ञानोऽज्ञानतप्रश्न इत्यर्थः, क्वचित् 'छव्विहे अट्ठे' इति पाठस्तत्र संशयादिभिरर्थो विशेषणीय इति । इहानन्तरसूत्रेऽतथाज्ञानप्रश्नो दर्शितस्तत्र चोत्तरवस्तुना भाव्यमिति तद् दर्शयति—'चमरचंचे'त्यादि, 'चमरस्य' दाक्षिणात्यस्यासुरनिकायनायकस्य चञ्चा—चञ्चाख्या नगरी चमरचञ्चा, या हि जम्बूद्वीपमन्दरस्य पर्व्वतस्य दक्षिणेन तिर्यगसङ्ख्येयान् द्वीपसमुद्रान् व्यतिव्रज्यारुणवरद्वीपस्य बाह्याद् वेदिकान्तादरुणोद समुद्रं द्विचत्वारिंशद्योजनसहस्राण्यवगाह्य चमरस्यासुरराजस्य तिगिच्छिकूटो नामा य उत्पातपर्व्वतोऽस्ति सप्तदशैकविंशत्युत्तराणि योजनशतान्युच्चस्तस्य दक्षिणेन पट् योजनकोटीशतानि साधिकान्यरुणोदे समुद्रे तिर्यग्व्यतिव्रज्याधो रत्नप्रभायाः पृथिव्याः चत्वारिंशतं योजनसहस्राण्यवगाह्य व्यवस्थिता जम्बूद्वीपप्रमाणा च, सा चमरचञ्चा राजधानी उत्कृष्टेन षण्मासान् विरहिता—वियुक्ता उपपातेन, इहोत्पद्यमानदेवानां षण्मासान्यावद्विरहो भवतीति भावः । विरहाधिकारादिदं सूत्रत्रयं—'एगे'त्यादि, एकैकमिन्द्रस्थानं—चमरादिसम्बन्ध्याश्रयो भवननगरविमानरूपस्तदुत्कर्षेण षण्मासान् यावद्विरहितमुपपातेनेन्द्रापेक्षयेति । अधःसप्तमीत्यत्र सप्तमी हि रत्नप्रभापि कथञ्चिद्भवतीति तद्व्यवच्छेदार्थमधोग्रहणं अतस्तमस्तमेत्यर्थः, सा षण्मासान् विरहितोपपातेन, यदाह—"चउवीसइं मुहुत्ता १ सत्त अहोरत्त २ तह य पन्नरस ३ । मासो य ४ दो य ५ चउरो ६ छम्मासा विरहकालो उ ७ ॥१॥ इति, [चतुर्विंशतिर्मुहूर्त्ताः सप्ताहोरात्राणि तथव पंचदश मासश्च द्वौ चत्वारः षण्मासाः विरहकालः ॥१॥] सिद्धिगतावुपपातो—गमनमात्रमुच्यते न जन्म, तद्धेतूनां सिद्धस्याभावादिति, इहोक्तम्—"एगसमओ जहन्नं उक्कोसेणं हवंति छम्मासा । विरहो सिद्धिगईए उव्वट्टणवज्जिया नियमा ॥१॥" इति [जघन्येनैकः समय उत्कृष्टतो भवंति षण्मासाः विरहः सिद्धिगतौ सा उद्वर्त्तनवर्जिता नियमात् ॥१॥] शेषं सुगममिति ।

अनन्तरमुपपातस्य विरह उक्तः, उपपातश्चायुर्बन्धे सति भवतीत्यायुर्बन्धसूत्रप्रपञ्चं छव्विहेत्यादिकमाह—

छव्विधे आउयबंधे पं० तं०—जातिणामनिधत्ताउते गतिणामणिधत्ताउए ठितिनामनिधत्ताउते ओगाहणाणामनिधत्ताउते पएसणामनिधत्ताउए अणुभावणामनिहत्ताउते। नेरतियाणं छव्विहे आउयबंधे पं० तं०—जातिणामनिहत्ताउते जाव अणुभावनामणिहत्ताउए एवं जाव वेमाणियाणं। नेरइया णियमा छम्मासावसेसाउता परभवियाउयं पगरेंति, एवामेव असुरकुमाराविं जाव थणियकुमारा, असंखेज्जवासाउता सन्निपंचिंदियतिरिक्खजोणिया णियमं छम्मासावसेसाउया परभवियाउयं पगरेंति, असंखेज्जवासाउया सन्निमणुस्सा नियमं जाव पगरिंति, वाणमंतरा जोतिसवासिता वेमाणिता जहा णेरतिता (सू० ५३६) छव्विधे भावे पं० तं०—ओदतिते उवसमिते खतिते खतोवसमिते पारिणामिते सन्निवाइए (सू०, ५३७)।

सुगमश्चायं, नवरं आयुषो बन्धः आयुर्बन्धः, तत्र जातिः—एकेन्द्रियजात्यादिः पञ्चधा सैव नाम—नाम्नः कर्म्मण उत्तरप्रकृतिविशेषो जीवपरिणामो वा तेन सह निधत्तं—निषिक्तं यदायुस्तज्जातिनामनिधत्तायुः, निषेकश्च कर्म्मपुद्गलानां प्रतिसमयानुभवनरचनेति, उक्तश्च—"मोत्तूण सगमबाहं पढमाए ठिईऍ बहुतरं दव्वं। सेसे विसेसहीणं जावुक्कस्संति सव्वासिं॥१॥"इति, [मुक्त्वा स्वकीयामबाधां प्रथमायां स्थितौ बहुतरं द्रव्यं। शेषासु विशेषहीनं यावदुत्कृष्टा इति सर्वासां॥१॥] स्थापना चैवम्, तथा गतिः—नरकादिका चतुर्द्धा

शेषं तथैवेति गतिनामनिधत्तायुरिति, तथा स्थितिरिति—यत् स्थातव्यं केनचिद्विवक्षितेन भावेन जीवेनायुःकर्मणा वा सैव नामः—परिणामो धर्म्मः स्थितिनामस्तेन विशिष्टं निधत्तं यदायुः—दलिकरूपं तत्स्थितिनामनिधत्तायुः, अथवेह सूत्रे जातिनामगतिनामावगाहनानामग्रहणाज्जातिगत्यवगाहनानां प्रकृतिमात्रमुक्तं, स्थितिप्रदेशानुभागनामग्रहणात्तु तासामेव स्थित्यादय उक्ताः, ते च जात्यादिनामसम्बन्धित्वान्नामकर्म्मरूपा एवेति नामशब्दः सर्वत्र कर्मार्थो घटत इति स्थितिरूपं नामकर्म्म स्थितिनाम तेन सह निधत्तं यदायुस्तत् स्थितिनामनिधत्तायुरिति, तथा अवगाहते यस्यां जीवः स अवगाहना—शरीरमौदारिकादि तस्या नाम—औदारिकादिशरीरनामकर्मेत्यवगाहनानाम तेन सह यन्निधत्तमायुस्तदवगाहनानामनिधत्तायुरिति, तथा प्रदेशानां—आयुःकर्म्मद्रव्याणां नामः—तथाविधा परिणतिः प्रदेशनाम प्रदेशरूपं वा नाम—कर्म्मविशेष इत्यर्थः प्रदेशनाम तेन सह यन्निधत्तमायुस्तत्प्रदेशनामनिधत्तायुरिति, तथा अनुभागः—आयुर्द्रव्याणामेव विपाकस्तल्लक्षण एव नामः—परिणामोऽनुभागनामोऽनुभागरूपं वा नामकर्म्मानुभागनाम तेन सह निधत्तं यदायुस्तदनुभागनामनिधत्तायुरिति, अथ किमर्थं जात्यादिनामकर्म्मणाऽऽयुर्विशिष्यते?, उच्यते, आयुष्कस्य प्राधान्योपदर्शनार्थं, यस्मान्नारकाद्यायुरुदये सति जात्यादिनामकर्मणामुदयो भवति, नारकादिभवोपग्राहकं चायुरेव, यस्मादुक्तं प्रज्ञप्त्याम्—"नेरइए णं भंते! नेरइएसु उववज्जइ? अनेरइए नेरइएसु उववज्जइ?, गोयमा! नेरइए नेरइएसु उववज्जइ", एतदुक्तं भवति—नारकायुःसंवेदनप्रथमसमय एव नारक इत्युच्यते, तत्सहचारिणां च पञ्चेन्द्रियजात्यादिनामकर्म्मणामप्युदय इति, इह चायुर्बन्धस्य षड्विधत्वे उपक्षिप्ते यदायुषः षड्विधत्वमुक्तं तद् आयुषो बन्धाव्यतिरेकाद्बद्धस्यैव चायुर्व्यपदेशविषयत्वादिति। 'नियमं'ति अवश्यंभावादित्यर्थः.

भविक तच्च तदायुश्चेति परभविकायुः 'प्रकुर्वन्ति' बध्नन्ति, असंख्येयानि वर्षाण्यायुर्येषां ते तथा ते च ते संज्ञिनश्च-समनस्काः पञ्चेन्द्रियतिर्यग्योनिकाश्चेत्यसंख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिर्यग्योनिकाः, इह च संज्ञिग्रहणमसंख्येयवर्षायुष्काः संज्ञिन एव भवन्तीति नियमदर्शनार्थं, न त्वसंख्येयवर्षायुषामसंज्ञिनां व्यवच्छेदार्थं, तेषामसंभवादिति. इह च गाथे-"निरइसुरअसंखाऊ तिरिमणुआ सेसए उ छम्मासे। इगविगला निरुवक्कमतिरिमणुया आउयतिभागे ॥१॥ अवसेसा सोवक्कम तिभागनवभागसत्तवीसइमे। बंधंति परभवाउं नियभवे सव्वजीवा उ ॥२॥" इति, [ नैरयिकसुरा असंख्यायुषस्तिर्यग्मनुष्याः शेषेषु षट्सु मासेषु एकेन्द्रियविकलेन्द्रियनिरुपक्रमायुषस्तिर्यग्मनुष्या आयुष्कतृतीयभागे ॥१॥ अवशेषाः सोपक्रमास्तृतीयनवमसप्तविंशतितमे भागे परभवायुर्बध्नन्ति निजभवे सर्वे जीवाः ॥२॥] इदमेवान्यैरित्थमुक्तम्-इह तिर्यग्मनुष्या आत्मीयायुषस्तृतीयत्रिभागे परभवायुषो बन्धयोग्या भवन्ति, देवनारकाः पुनः षण्मासे शेषे, तत्र तिर्यग्मनुष्यैर्यदि तृतीयत्रिभागे आयुर्न बद्धं ततः पुनस्तृतीयत्रिभागस्य तृतीयत्रिभागे शेषे बध्नन्ति, एवं तावत् संक्षिपन्त्यायुर्यावत् सर्वजघन्य आयुर्बन्धकाल उत्तरकालश्च शेषस्तिष्ठति इह तिर्यग्मनुष्या आयुर्बध्नन्ति, अयं चाप्याक्षेपकाल उच्यते, तथा देवनैरयिकैरपि यदि षण्मासे शेषे आयुर्न बद्धं तत आत्मीयस्यायुषः षण्मासशेषं तावत्संक्षिपन्ति यावत्सर्वजघन्य आयुर्बन्धकाल उत्तरकालश्चावशेषोऽवतिष्ठते इह परभवायुर्देवनैरयिका बध्नन्तीत्ययमसंक्षेपकालः। अनन्तरमायुःकर्म्मबन्ध उक्तः, आयुः पुनरौदयिकभावहेतुरित्यौदयिकभावं भावसाधर्म्याच्छेषभावांश्च प्रतिपादयन्नाह—'छव्विहे भावे' इत्यादि, भवनं भावः पर्याय इत्यर्थः, तत्रौदयिको द्विविधः-उदय उदयनिष्पन्नश्च, तत्रोदयोऽष्टानां कर्मप्रकृतीनामुदयः-शान्तावस्थापरित्यागेनोदीरणावलिकामतिक्रम्योदयावलिकायामात्मीयात्मीयरूपेण विपाक इत्यर्थः, अत्र चैवं व्युत्पत्तिः-उदय एवौदयिकः, उदयनिष्पन्नस्तु कर्म्मोदयजनितो जीवस्य मानुषत्वादिः पर्यायः,

तत्र च उदयेन निर्वृत्तस्तत्र वा भव इत्यौदयिकः इत्येवं व्युत्पत्तिरिति, तथा औपशमिकोऽपि द्विविधः—उपशम उपशमनिष्पन्नश्च, तत्रोपशमो [दर्शन] मोहनीयकर्म्मणोऽनन्तानुबन्ध्यादिभिन्नस्योपशमश्रेणिप्रतिपन्नस्य [वा] मोहनीयभेदान् अनन्तानुबन्ध्यादीनुपशमयतः, उदयाभाव इत्यर्थः, उपशम एवौपशमिकः, उपशमनिष्पन्नस्तु उपशान्तक्रोध इत्यादि, उदयाभावफलरूप आत्मपरिणाम इति भावना, तत्र च व्युत्पत्तिः—उपशमेन निर्वृत्त औपशमिक इति, तथा क्षायिको द्विविधः—क्षयः क्षयनिष्पन्नश्च, तत्र क्षयोऽष्टानां कर्म्मप्रकृतीनां ज्ञानावरणादिभेदानां, क्षयः कर्म्माभाव एवेत्यर्थः, तत्र क्षय एव क्षायिकः, क्षयनिष्पन्नस्तु तत्फलरूपो विचित्र आत्मपरिणामः केवलज्ञानदर्शनचारित्रादिः, तत्र क्षयेण निर्वृत्तः क्षायिक इति व्युत्पत्तिः, तथा क्षायोपशमिको द्विविधः—क्षयोपशमः क्षयोपशमनिष्पन्नश्च, तत्र क्षयोपशमश्चतुर्णां घातिकर्म्मणां केवलज्ञानप्रतिबन्धकानां ज्ञानावरणदर्शनावरणमोहनीयान्तरायाणां, क्षयोपशम इह उदीर्णस्य क्षयोऽनुदीर्णस्य च विपाकमधिकृत्योपशम इति गृह्यते, आह—औपशमिकोऽप्येवंभूत एव, नैवं, तत्रोपशान्तस्य प्रदेशानुभवतोऽप्यवेदनाद् अस्मिंश्च वेदनादिति, अयं च क्षयोपशमः क्रियारूप एवेति, क्षयोपशम एव क्षायोपशमिकः, क्षयोपशमनिष्पन्नस्त्वाभिनिबोधिकज्ञानादिलब्धिपरिणाम आत्मन एव, क्षयोपशमेन निवृत्तः क्षायोपशमिक इति च व्युत्पत्तिरिति, तथा परिणमनं परिणामः—अपरित्यक्तपूर्वावस्थस्यैव तद्भावगमनमित्यर्थः, उक्तं च—"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम्। न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥१॥" स एव पारिणामिक इत्युच्यते, स च साद्यनादिभेदेन द्विविधः, तत्र सादिः जीर्णघृतादीनां, तद्भावस्य सादित्वादिति, अनादिपारिणामिकस्तु धर्मास्तिकायादीनां, तद्भावस्य तेषामनादित्वादिति, तथा सन्निपातो—मेलकस्तेन निर्वृत्तः सान्निपातिकः, अयं चैषां पञ्चानामौदयिकादिभावानां द्व्यादिसंयोगतः सम्भवासम्भवानपेक्ष्य षड्विंशतिभङ्गरूपः, तत्र द्विकसंयोगे दश त्रिकसंयोगेऽपि दशैव चतु-

ष्कसंयोगे पञ्च पञ्चकसंयोगे त्वेक एवेति, सर्वेऽपि षड्विंशतिरिति, इह चाविरुद्धाः पञ्चदश सन्निपातिकभेदा इष्यन्ते, ते चैवं भवन्ति— "उदइयखओवसमिए परिणामिक्केक्क गइचउक्केवि । खयजोगेणवि चउरो तयभावे उवसमेणंपि ॥१॥ उवसमसेढी एक्को केवलिणोवि य तहेव सिद्धस्स । अविरुद्धसन्निवाइय भेया एमेव पनरस ॥२॥" इति, [औदयिकः क्षायोपशमिकः पारिणामिकः एकैको गतिचतुष्केऽपि क्षायिकयोगेनापि चत्वारस्तदभावे औपशमिकेनापि ॥१॥ उपशमश्रेण्यामेकः केवलिनोऽपि च तथव सिद्धस्य अविरुद्धसांनिपातिकभेदा एवमेते पञ्चदश ॥२॥] औदयिकक्षायोपशमिकपारिणामिकनिष्पन्नः सान्निपातिक एकैको गतिचतुष्केऽपि, तद्यथा–औदयिको नारकत्वं क्षायोपशमिक इन्द्रियाणि पारिणामिको जीवत्वमिति, इत्थं तिर्यग्नरामरेष्वपि योजनीयमिति चत्वारो भेदाः, तथा क्षययोगेनापि चत्वार एव तास्वेव गतिषु, अभिलापस्तु औदयिको नारकत्वं क्षायोपशमिक इन्द्रियाणि क्षायिकः सम्यक्त्वं पारिणामिको जीवत्वमिति, एवं तिर्यगादिष्वपि वाच्यं, सन्ति चैतेष्वपि क्षायिकसम्यग्दृष्टयोऽधिकृतभङ्गान्यथानुपपत्तेरिति भावनीयमिति, 'तयभावे' त्ति क्षायिकाभावे चशब्दाच्छेषत्रयभावे चौपशमिकेनापि चत्वार एव, उपशममात्रस्य गतिचतुष्टयेऽपि भावादिति, अभिलापस्तथैव, नवरं सम्यक्त्वस्थाने उपशान्तकषायत्वमिति[1] वक्तव्यमेते चाष्टौ भङ्गाः, प्राक्तनाश्चत्वार इति द्वादश, उपशमश्रेण्यामेको भङ्गः तस्या मनुष्येष्वेव भावात् , अभिलापः पूर्ववत् , नवरं मनुष्यविषय एव, केवलिनश्चैक एव औदयिको मानुषत्वं क्षायिकः सम्यक्त्वं[2] पारिणामिको जीवत्वं, तथव सिद्धस्यैक एव, क्षायिकः सम्यक्त्वं पारिणामिको जीवत्वमिति, एवमेतैस्त्रिभिर्भङ्गैः सहिताः प्रागुक्ताः द्वादश

१ पूर्वमुपशान्तक्रोध इत्यादिनिर्देशादेवमाहुः पूज्याः. सूत्रानुकरणार्थं चैवमुभयत्रापि निर्देशः, शान्ते च क्रोधादौ अनन्तानुबन्धिनि स्यादेव सम्यक्त्वं. २ केवलज्ञानादेरुपलक्षणं ।

अविरुद्धसान्निपातिकमेदाः पञ्चदश भवन्तीति, अपि च—"उवसमिए २ खइएऽविय ९ खयउवसम १८ उदय २१ पारिणामे य ३। दो नव अट्ठारसगं इगविसा तिन्नि भेएणं ॥१॥ सम्म १ चरित्ते २ पढमे दंसण १ नाणे य २ दाण ३ लाभे य ४। उवभोग ५ भोग ६ वीरिय ७ सम्म ८ चरित्ते य ९ तह बीए २ ॥२॥ चउनाण ४ ऽन्नाणतियं ३ दंसणतिय ३ पंच दाणलद्धीओ ५। सम्मत्तं १ चारित्तं च १ संजमासंजमे १ तइए ॥३॥ चउगइ ४ चउकसाया ४ लिंगतियं ३ लेस छक्क ६ अन्नाणं १। मिच्छत्त १ मसिद्धत्तं १ असंजमे १ तह चउत्थे उ ४ ॥४॥ पंचमगम्मि य भावे जीव १ अभव्वत्त २ भव्वता ३ चेव। पंचण्हवि भावाणं भेया एमेव तेवन्ना ॥१॥" इति [ औपशमिकः क्षायिकोऽपि च क्षायोपशमिक औदयिकः पारिणामिकः द्विनवाष्टादशैकविंशतित्रिभेदेन ॥१॥ सम्यक्त्व-चारित्रे प्रथमे दर्शनज्ञानदानलाभोपभोगभोगवीर्यसम्यक्त्वचारित्राणि द्वितीये ॥२॥ ज्ञानचतुष्कमज्ञानत्रिकं दर्शनत्रिकं पंच दानाद्या लब्धयः सम्यक्त्वं चारित्रं च संयमासंयमस्तथा ॥३॥ गतिचतुष्कं कषायचतुष्कं लिंगत्रिकं लेश्यापट्कं अज्ञानं मिथ्यात्वमसिद्धत्वं असंयमश्चतुर्थे ॥४॥ पंचमे भावे जीवत्वं अभव्यत्वं भव्यत्वं पञ्चानामपि भावानां भेदा एवमेव त्रिपञ्चाशत् ॥५॥ ]

अनन्तरं भावा उक्तास्तेषु चाप्रशस्तेषु यद्वृत्तं यच्च प्रशस्तेषु न वृत्तं विपरीतश्रद्धानप्ररूपणे वा ये कृते तत्र प्रतिक्रमितव्यं भवतीति प्रतिक्रमणमाह—

छव्विहे पडिक्कमणे पं० तं०—उच्चारपडिक्कमणे पासवणपडिक्कमणे इत्तरिते आवकहिते जंकिंचिमिच्छा सोमणंतिते (सू० ५३८) कत्तिताणक्खत्ते छतारे पण्णत्ते, असिलेसाणक्खत्ते छत्तारे पं० (सू० ५३९) जीवाणं छट्ठाण-

निव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा ३, तं०-पुढविकाइयनिवत्तिते जाव तसकायणिवत्तिते, 'एवं चिण उवचिण बंधउदीरवेय तह निज्जरा चेव ४। छप्पतेसिया णं खंधा अणंता पण्णत्ता, छप्पतेसोगाढा पोग्गला अणंता पण्णत्ता, छसमयट्ठितीता पोग्गला अणंता, छगुणकालगा पोग्गला जाव छगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ५४०)। छट्ठाणं छट्ठमज्झयणं समत्तं॥

'छव्विहे पडिक्कमणे' इत्यादि, प्रतिक्रमणं-द्वितीयप्रायश्चित्तभेदलक्षणं मिथ्यादुष्कृतकरणमिति भावः, तत्रोच्चारोत्सर्गं विधाय यदीर्यापथिकीप्रतिक्रमणं तदुच्चारप्रतिक्रमणं, एवं प्रश्रवणविषयमपीति, उक्तं च—"उच्चारं पासवणं भूमीए वोसिरित्तु उवउत्तो। ओसरिऊणं तत्तो इरियावहियं पडिक्कमइ॥१॥ वोसिरइ मत्तगे जइ तो न पडिकमइ य मत्तगं जो उ। साहू परिट्ठवेई नियमेण पडिकमइ सो उ॥२॥" इति [उपयुक्तो भूमौ उच्चारं प्रश्रवणं व्युत्सृज्यापसृत्येर्यापथिकां प्रतिक्रामयेत्ततः॥१॥ मात्रके यदि व्युत्सृजति तदा न प्रतिक्राम्यति यस्तु साधुर्मात्रकं परिष्ठापयति स तु नियमात् प्रतिक्राम्यति॥२॥] 'इत्तरियं'ति इत्वरं-स्वल्पकालिकं दैवसिकरात्रिकादि, 'आवकहिय'न्ति यावत्कथिकं-यावज्जीविकं महाव्रतभक्तपरिज्ञादिरूपं, प्रतिक्रमणत्वं चास्य विनिवृत्तिलक्षणान्वर्थयोगादिति, 'जंकिंचिमिच्छ'त्ति खेलसिंघानाविधिनिसर्गाभोगानाभोगसहसाकाराद्यसंयमस्वरूपं यत्किञ्चिन्मिथ्या-असम्यक् तद्विषयं मिथ्येदमित्येवंप्रतिपत्तिपूर्वकं मिथ्यादुष्कृतकरणं यत्किञ्चिन्मिथ्याप्रतिक्रमणमिति, उक्तं च—"संजमजोगे अब्भुट्ठियस्स जं किंचि वितहमायरियं। मिच्छा एयंति वियाणिऊण मिच्छत्ति कायव्वं॥१॥" इति [संयमयोगेष्वभ्युत्थितेनापि यद् किंचिद्वितथमाचरितं एतन्मिथ्येति ज्ञात्वा मिथ्येति कर्त्तव्यं॥१॥] तथा—'खेलं सिंघाणं वा अप्पडिलेहापमज्जिउं तहय। वोसरिय पडिकमई तंपिय मिच्छुकडं देइ॥२॥'

इत्यादि, [ श्लेष्माणं संघानं चाप्रतिलिख्याप्रमृज्य तथा च व्युत्सृज्य प्रतिक्राम्यति तस्यापि मिथ्यादुष्कृतं ददाति ॥२॥ ] तथा 'सोमणंतिए'त्ति 'स्वापनान्तिकं' स्वपनस्य-सुप्तिक्रियाया अन्ते-अवसाने भवं स्वापनान्तिकं, सुप्तोत्थिता हि ईर्यां प्रतिक्रामंति साधव इति, अथवा स्वप्नो-निद्रावशविकल्पस्तस्यान्तो-विभागः स्वप्नान्तस्तत्र भवं स्वप्नान्तिकं, स्वप्नविशेषे हि प्रतिक्रमणं कुर्वन्ति साधवः, यदाह—'गमणागमणविहारे सुत्ते वा सुमिणदंसणे राओ। नावानइसंतारे इरियावहियापडिक्कमणं ॥१॥ [गमनागमनयोर्विहारे स्वप्ने वा स्वप्नदर्शने रात्रौ। नौनदीसंतारे ईर्यापथिकीप्रतिक्रमणं ॥१॥ ] यतः—'आउलमाउलाए सोवणवत्तियाए' इत्यादि प्रतिक्रमणसूत्रं, तथा स्वप्नकृतप्राणातिपातादिष्वन्वर्थगत्या प्रतीपक्रमणरूपया कायोत्सर्गलक्षणप्रतिक्रमणमेवमुक्तम्—"पाणिवहमुसावाए अदत्तमेहुणपरिग्गहे चेव। सयमेगं तु अणूणं उसासाणं हवेज्जाहि ॥१॥" इति, [ प्राणिवधे मृषावादेऽदत्ते मैथुने परिग्रहे चैव उच्छ्वासानामेवं शतमनूनं भवेत् ॥१॥ ] अनन्तरं प्रतिक्रमणमुक्तं, तच्चावश्यकमप्युच्यते, आवश्यकं च नक्षत्रोदयाद्यवसरे कुर्वन्तीति नक्षत्रसूत्रं शेषसूत्राणि वा अध्ययनपरिसमाप्तेः पूर्वाध्ययनवदवसेयानीति। इति श्रीमदभयदेवाचार्यविरचिते स्थानाख्यतृतीयाङ्गविवरणे षट्स्थानकाख्यं षष्ठमध्ययनं समाप्तम् ॥ ग्रंथाग्रं ७६५।

॥ इति श्रीमति स्थानाङ्गे चन्द्रकुलनभस्तलमृगाङ्कश्रीमदभयदेवाचार्यविहितविवरणयुतं षष्ठं स्थानकं समाप्तम् ॥

# अथ सप्तमस्थानकम्



व्याख्यातं षष्ठमध्ययनमधुना सप्तममारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने षट्सङ्ख्योपेताः पदार्थाः प्ररूपिताः, इह तु ते एव सप्तसङ्ख्योपेताः प्ररूप्यन्त इत्येवंसम्बन्धस्यास्य चतुरनुयोगद्वारस्येदमादिसूत्रम्—

**सत्तविहे गणावक्कमणे पं० तं०—सव्वधम्मा रोतेमि १ एगतिता रोएभि एगइया णो रोएमि २ सव्वधम्मा वितिगिच्छामि ३ एगतिया वितिगिच्छामि एगतिया नो वितिगिच्छामि ४ सव्वधम्मा जुहुणामि ५ एगतिया जुहुणामि एगतिया णो जुहुणामि ६ इच्छामि णं भंते! एगल्लविहारपडिमं उवसंपज्जित्ता णं विहरित्तते ७ (सू० ५४१)**

'सत्तविहे'त्यादि अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः—अनन्तरसूत्रे पुद्गलाः पर्यायत उक्ताः, इह तु पुद्गलविशेषाणामेव क्षयोपशमतो योऽनुष्ठानविशेषो जीवस्य भवति तस्य सप्तविधत्वमुच्यते इत्येवंसम्बन्धस्यास्य व्याख्या, संहितादिस्तु तत्क्रमः प्रतीत एव, नवरं सप्तविधं—सप्तप्रकारं प्रयोजनभेदेन भेदात् गणाद्—गच्छादपक्रमणं—निर्गमो गणापक्रमणं प्रज्ञप्तं तीर्थकरादिभिः, तद्यथा—सर्वान् 'धर्मान्' निर्जराहेतून् श्रुतभेदान्—सूत्रार्थोभयविषयान् अपूर्वग्रहणविस्मृतसन्धानपूर्वाधीतपरावर्त्तनरूपान् चारित्रभेदांश्च—क्षपणवैयावृत्त्यरूपान् 'रोचयामि' रुचिविषयीकरोमि चिकीर्षामि, ते चामुत्र परगणे सम्पद्यन्ते नेह स्वगणे, बहुश्रुतादिसामग्र्यभावाद्, अतस्त-

द्‌थ स्वगणादपक्रमामि भदन्त ! इत्येवं गुरुपृच्छाद्वारेणैकं गणापक्रमणमुक्तं १, अथ 'सर्वधर्मान् रोचयामी' त्युक्ते कथं पृच्छार्थोऽवगम्यते इति ?, उच्यते, 'इच्छामि णं भंते ! एकल्लविहारपडिम'मित्यादिपृच्छावचनसाधर्म्यादिति, रुचेस्तु करणेच्छार्थता 'पत्तियामि रोएमी'त्यत्र व्याख्यानवति, क्वचित्तु 'सव्वधम्मं जाणामि, एवंपि एगे अवक्कमे' इत्येवं पाठः, तत्र ज्ञानी अहमिति किं गणेनेति मदादपक्रामति ?, तथा 'एगइय'त्ति एककान् कांश्चन श्रुतधर्मांश्चारित्रधर्मान् वा रोचयामि–चिकीर्षामि एककांश्च श्रुतधर्मांश्चारित्रधर्मान् वा नो रोचयामि–न चिकीर्षामीत्यतश्चिकीर्षितधर्माणां स्वगणे करणसामर्थ्यभावादपक्रमामि भदन्त इति द्वितीयं २, तथा सव्वधम्मान्–उक्तलक्षणान् विचिकित्सामि–संशयविषयीकरोमीत्यतः संशयापनोदार्थं स्वगणादपक्रमामीति तृतीय ३, एवमेककान् विचिकित्सामि एककान् नो विचिकित्सामीति चतुर्थं ४, तथा 'जुहुणामि'त्ति जुहोमि–अन्येभ्यो ददामि, न च स्वगणे पात्रमस्त्यतोऽपक्रमामीति पञ्चमं ५, एवं षष्ठमपि ६, तथा इच्छामि णं भदन्त !–धर्माचार्य एकाकिनो गच्छनिर्गतत्वाज्जिनकल्पिकादितया यो विहारो–विचरणं तस्य या प्रतिमाप्रतिपत्तिः–प्रतिज्ञा सा एकाकि–विहारप्रतिमा तामुपसम्पद्य–अङ्गीकृत्य विहर्त्तुमिति सप्तममिति ७। अथवा सर्वधर्मान् रोचयामि–श्रद्दधे अहमिति तेषां स्थिरीकरणार्थमपक्रमामि, तथा एककान् रोचयामि श्रद्दधे एककांश्च नो रोचयामीत्यश्रद्धितानां श्रद्धानार्थमपक्रामामीत्यनेन पदद्वयेन सर्वविषयाय देशविषयाय च सम्यग्दर्शनाय गणापक्रमणमुक्तं १। एवं सर्वदेशविषयसंशयविनोदसूचकेन 'सव्वधम्मा विचिकिच्छामी'त्यादिपदद्वयेन ज्ञानार्थमपक्रमणमुक्तमिति, तथा 'सर्वधर्मान् जुहोमी'ति जुहोतेरदनार्थत्वाद् भक्षणार्थस्य चासेवावृत्तिदर्शनादाचराम्यासेवाम्यनुतिष्ठामीतियावद् तथा एककान्नासेवामीति सर्वेषामासेव्यमानानां विशेषार्थमनासेवितानां च क्षपणवैयावृत्त्यादीनां चारित्रधर्माणामासेवार्थमपक्रमामीत्यनेन पदद्वयेन तथैव चारित्रार्थमपक्रमणमुक्तमिति, उक्तं च—

"नाणट्ठ दंसणट्ठा चरणट्ठा एवमाइ संकमणं । संभोगट्ठा व पुणो आयरियट्ठा व णायव्वं ॥१॥" इति, [ज्ञानार्थं दर्शनार्थं चरणार्थं इत्याद्यर्थं संक्रमणं संभोगार्थं च पुनः आचार्यार्थं च ज्ञातव्यं ॥१॥] तत्र ज्ञानार्थं—"सुत्तस्स व अत्थस्स व उभयस्स व कारणा उ संकमणं । वीसज्जियस्स गमणं भीओ य नियत्तए कोइ ॥१॥" इति, [सूत्रस्य वार्थस्य वोभयस्य वा कारणात् संक्रमणं विसर्जितस्य गमनं भीतो वा निवर्त्तते कोऽपि ॥१॥] दर्शनप्रभावकशास्त्रार्थं दर्शनार्थं, चारित्रार्थं यथा—"चरितट्ठ देसि दुविहा, (देशे द्विविधा दोषा इत्यर्थः) एसणदोसा य इत्थिदोसा य । (ततो गणापक्रमणं भवति) गच्छंमि य सीयंते आयसमुत्थेहिं दोसेहिं ॥१॥" इति, [चारित्रार्थं देशे दोषेषु द्विविधास्ते एषणादोषाः स्त्रीदोषाश्च आत्मसमुत्थैर्दोषैर्गच्छे च सीदति ॥१॥ सम्भोगार्थं नाम यत्रोपसम्पन्नस्ततोऽपि विसम्भोगकारणे सदनलक्षणे सत्यपक्रामतीति, आचार्यार्थं नामाचार्यस्य महाकल्पश्रुतादि श्रुतं नास्त्यतस्तदध्यापनाय शिष्यस्य गणान्तरसंक्रमो भवतीति, इह च स्वगुरुं पृष्ट्वैव विसर्जितेनापक्रमितव्यमिति सर्वत्र पृच्छार्थो व्याख्येयः, उक्तकारणवशात् पक्षादिकालात्परतोऽविसर्जितोऽपि गच्छेदिति, निष्कारणं गणापक्रमणं त्वविधेयं, यतः—"आयरियाईण भया पच्छित्तभया न सेवइ अकिच्चं । वेयावच्चज्झयणेसु सज्जए तदुवओगेणं ॥१॥" [आचार्यादीनां भयात् प्रायश्चित्तभयान्न सेवतेऽकार्यं वैयावृत्त्याध्ययनयोः सज्यते तदुपयोगेन ॥१॥] (सूत्रार्थोपयोगेनेत्यर्थः) तथा—"एगो इत्थीगंमो तेणादिभया य अल्लियइ अगारे (गृहस्थान्) कोहादी च उदिन्न परिनिव्वावंति से अन्ने ॥१॥ त्ति, [एकः स्त्रीगम्यः स्तेनादिभयानि चाश्रयत्यगारिणः क्रोधादीनुदीरयंतं तमन्ये परिनिर्वापयन्ति ।१॥]

एवं श्रद्धास्थैर्याद्यर्थमन्यथा वा गणादपक्रान्तस्य कस्यापि विभङ्गज्ञानं स्यादिति तस्य भेदानाह—

**सत्तविहे विभंगणाणे पं० तं०—एगदिसिलोगाभिगमे १ पंचदिसिलोगाभिगमे २ किरियावरणे जीवे ३**

मुदग्गे जीवे ४ अमुदग्गे जीवे ५ रूवी जीवे ६ सव्वमिणं जीवा ७। तत्थ खलु इमे पढमे विभंगणाणे—जया णं तहारूवस्स समणस्स वा माहणस्स वा विभंगणाणे समुप्पज्जति, से णं तेणं विभंगणाणेण समुप्पन्नेणं पासति पातीणं वा पडिणं वा दाहिणं वा उदीणं वा उड्ढं वा जाव सोहम्मे कप्पे, तस्स णमेवं भवति—अत्थि णं मम अतिसेसे णाणदंसणे समुप्पन्न एगदिसिं लोगाभिगमे, संतेगतिया समणा वा माहणा वा एवमाहंसु पंचदिसिं लोगाभिगमे, जे ते एवमाहंसु मिच्छं ते एव माहंसु, पढमे विभंगनाणे १। अहावरे दोच्चे विभंगनाणे, जता णं तहारूवस्स समणस्स वा माहणस्स वा विभंगणाणे समुप्पज्जति, से णं तेणं विभंगणाणेणं समुप्पन्नेणं पासति पातीणं वा पडिणं वा दाहिणं वा उदीणं वा उड्ढं जाव सोहम्मे कप्पे, तस्स णमेवं भवति—अत्थि णं मम अतिसेसे णाणदंसणे समुप्पन्ने पंचदिसिं लोगाभिगमे, संतेगतिता समणा वा माहणा वा एवमाहंसु—एगदिसिं लोगाभिगमे, जे ते एवमाहंसु मिच्छं ते एवमाहंसु, दोच्चे विभंगणाणे २। अहावरे तच्चे विभंगणाणे, जया णं तहारूवस्स समणस्स वा माहणस्स वा विभंगणाणे समुप्पज्जति, से णं तेणं विभंगणाणेणं समुप्पन्नेणं पासति पाणे अतिवातेमाणा मुसं वतेमाणे अदिन्नमादितमाणे मेहुणं पडिसेवमाणे परिग्गहं परिगिण्हमाणे राइभोयणं भुंजमाणे वा पावं च णं कम्मं कीरमाणं णो पासति, तस्स णमेवं भवति—अत्थि णं मम अतिसेसे णाणदंसणे समुप्पन्ने, किरितावरणे जीवे, संतेगतिता समणा वा माहणा वा एवमाहंसु—नो किरितावरणे जीवे, जे ते एवमाहंसु मिच्छं ते एवमाहंसु, तच्चे विभंगणाणे ३। अहावरे चउत्थे विभंगणाणे जया णं तथारूवस्स समणस्स

वा माहणस्स वा जाव समुप्पज्जति, से णं तेणं विभंगणाणेणं समुप्पन्नेणं देवामेव पासति, बाहिरब्भंतरते पोग्गले परितादितित्ता पुढेगत्तं णाणत्तं फुसिया फुरेत्ता फुट्टित्ता विकुव्विता णं विकुव्विता णं चिट्ठित्तए, तस्स णमेवं भवति—अत्थि णं मम अतिसेसे णाणदंसणसमुप्पन्ने, मुदग्गे जीवे, संतेगतिता समणा वा माहणा वा एवमाहंसु—अमुदग्गे जीवे, जे ते एवमाहंसु मिच्छं ते एवमाहंसु, चउत्थे विभंगनाणे ४। अहावरे पंचमे विभंगणाणे, जया णं तधारूवस्स समणस्स जाव समुप्पज्जति, से णं तेणं विभंगणाणेणं समुप्पन्नेणं देवामेव पासति, बाहिरब्भंतरए पोग्गलए अपरितादितित्ता पुढेगत्तं णाणत्तं जाव विउव्विता णं चिट्ठित्तते तस्स णमेवं भवति—अत्थि जाव समुप्पन्ने अमुदग्गे जीवे, संतेगतिता समणा वा माहणा वा एवमाहंसु—मुदग्गे जीवे, जे ते एवमाहंसु, मिच्छं ते एवमाहंसु, पंचमे विभंगणाणे ५। अहावरे छट्ठे विभंगणाणे, जया णं तधारूवस्स समणस्स वा माहणस्स वा जाव समुप्पज्जति, से णं तेणं विभंगणाणेणं समुप्पन्नेणं देवामेव पासति, बाहिरब्भंतरते पोग्गले परितातित्ता वा अपरियादितित्ता वा पुढेगत्तं णाणत्तं फुसेत्ता जाव विकुव्विता चिट्ठित्तते, तस्स णमेवं भवति—अत्थि णं मम अतिसेसे णाणदंसणे समुप्पन्ने, रूवी जीवे, संतेगतिता समणा वा माहणा वा एवमाहंसु—अरूवी जीवे, जे ते एवमाहंसु मिच्छं ते एवमाहंसु, छट्ठे विभंगणाणे ६। अहावरे सत्तमे विभंगणाणे जया णं तहारूवस्स समणस्स वा माहणस्स वा विभंगणाणे समुप्पज्जति, से णं तेणं विभंगणाणेणं समुप्पन्नेणं पासइ सुहुमेणं वायुकातेणं फुडं पोग्गलकायं एतंतं वेतंतं चलंतं खुब्भंतं फंदंतं घट्टंतं उदीरेंतं तं तं भावं परिणमंतं,

तस्स णमेवं भवति—अत्थि णं मम अतिसेसे णाणदंसणे समुप्पन्ने, सव्वमिणं जीवा, संतेगतिता समणा वा माहणा वा एवमाहंसु—जीवा चेव अजीवा चेव, जे ते एवमाहंसु मिच्छं ते एव माहंसु, तस्स णमिमे चत्तारि जीवनिकाया णो सम्ममुवगता भवंति, तं०-पुढविकाइया आऊ तेऊ वाउकाइया, इच्चेतेहिं चउहिं जीवनिकाएहिं मिच्छादंडं पवत्तेइ सत्तमे विभंगणाणे ७ (सू० ५४२)।

'सत्तविहे'त्यादि, 'सप्तविधं' सप्तप्रकारं विरुद्धो वितथो वा अन्यथा वस्तुभङ्गो-वस्तुविकल्पो यस्मिंस्तद्विभङ्गं तच्च तज्ज्ञानं च साकारत्वादिति विभङ्गज्ञानं मिथ्यात्वसहितोऽवधिरित्यर्थः, 'एगदिसं'ति एकस्यां दिशि एकया दिशा पूर्वादिकयेत्यर्थः 'लोकाभिगमो' लोकावबोध इत्येकं विभङ्गज्ञानं, विभङ्गता चास्य शेषदिक्षु लोकस्यानभिगमेन तत्प्रतिषेधनादिति १, तथा पंचसु दिक्षु लोकाभिगमो नैकस्यां कस्यांचिदिति, इहापि विभङ्गता एकदिशि लोकनिषेधादिति २, क्रियामात्रस्यैव-प्राणातिपातादेर्जीवैः क्रियमाणस्य दर्शनात्तद्धेतुकर्म्मणश्चादर्शनात् क्रियैवावरणं-कर्म्म यस्य स क्रियावरणः, कोऽसौ ?-जीव इत्यवष्टम्भपरं यद्विभङ्गं तत्तृतीयं, विभङ्गता चास्य कर्म्मणोऽदर्शनेनानभ्युपगमादेवमुत्तरत्रापि विभङ्गताऽवसेयेति ३, 'मुयग्गे'ति बाह्याभ्यन्तरपुद्गलरचितशरीरो जीव इत्यवष्टम्भवत्, भवनपत्यादिदेवानां बाह्याभ्यन्तरपुद्गलपर्यादानतो वैक्रियकरणदर्शनादिति चतुर्थं ४, 'अमुदग्गे जीवे'त्ति देवानां बाह्याभ्यन्तरपुद्गलादानविरहेण वैक्रियवतां दर्शनाद् अबाह्याभ्यन्तरपुद्गलरचितावयवशरीरो जीव इत्यवसायवत्पञ्चमं ५, तथा 'रूवी जीवे'त्ति देवानां वैक्रियशरीरवतां दर्शनाद्रूप्येव जीव इत्येवमवष्टम्भवत् षष्ठमिति ६, तथा 'सव्वमिणं जीव'त्ति वायुना चलतः पुद्गलकायस्य दर्शनात् सर्वमेवेदं वस्तु जीवा एव, चलनधर्म्मोपेतत्वादित्येवं निश्चयवत्सप्तममिति सङ्ग्रहवचनमेतत्। 'तत्थे'त्यादि त्वेतस्यैव विवरण-

वचनमुत्तानार्थमेव नवरं 'तत्थ'त्ति तेषु सप्तसु मध्ये 'जया णं'ति यस्मिन् काले 'से णं'ति इह तदेति गम्यते स विभंगी 'पासइ'त्ति उपलक्षणत्वाज्जानातीति च, अन्यथा ज्ञानत्वं विभंगस्य न स्यादिति, पाईणं वे'त्यादि, वा विकल्पार्थः, 'उड्ढं जाव सोहम्मो कप्पो' इत्यनेन सौधर्मात् परतः किल प्रायो बालतपस्विनो न पश्यन्तीति दर्शितं, तथाऽवधिमतोऽप्यधोलोको दुरधिगमो विभङ्गज्ञानिनस्तु सुतरामित्यधोदिग्दर्शनमिह नाभिहितं, दुरधिगम्यता चाधोलोस्य त्रिस्थानकेऽभिहितेति 'एवं भवइ'ति एवंविधो विकल्पो भवति, यदुत–अस्ति मे अतिशेषं–शेषाण्यतिक्रान्तं सातिशयमित्यर्थो ज्ञानं च दर्शनं च ज्ञानेन वा दर्शनं ज्ञानदर्शनं, ततश्चैकदिशो दर्शनेन तत्रैव लोकस्योपलम्भादाह–एकदिशि लोकाभिगम इति, एकदिग्मात्र एव लोकस्तथोपलम्भादिति भावः, 'सन्ति' विद्यन्ते एकके श्रमणा वा ब्राह्मणा वा, ते चैवमाहुः–अन्यास्वपि पञ्चसु दिक्षु लोकाभिगमो भवति, तास्वपि तस्य विद्यमानत्वात् , ये ते एवमाहुः यदुत–पञ्चस्वपि दिक्षु लोकाभिगमो मिथ्या ते एवमाहुरिति प्रथमं विभङ्गज्ञानमिति १। अथापरं द्वितीयं, तत्र 'पाईणं वे'त्यादौ वाशब्दश्चकारार्थो द्रष्टव्यः विकल्पार्थत्वे तु पञ्चानां दिशां पश्यत्ता न गम्यते, एकस्या एव च गम्यते, तथा च प्रथमद्वितीययोर्विभङ्गयोर्भेदो न स्यादिति, क्वचिद्वाशब्दा न दृश्यन्त एवेति २, प्राणानतिपातयमानानित्यादिषु जीवानिति गम्यते, 'नो किरियावरणे'त्ति अपितु कर्म्मावरण इति ३, 'देवामेव'त्ति देवानेव भवनवास्यादीनेव 'बाहिरब्भंतरे'त्ति बाह्यान् शरीरावगाहक्षेत्राद् अभ्यन्तरान्–अवगाहक्षेत्रस्थान् पुद्गलान्–वैक्रियवर्गणारूपान् 'पर्यादाय' परि–समन्तात् वैक्रियसमुद्घातेनादाय–गृहीत्वा, 'पुढेगत्तं'ति पृथक्कालदेशभेदेन कदाचित्कचिदित्यर्थः, 'एकत्वं' एकरूपत्वं 'नानात्वं' नानारूपत्वं विकृत्य उत्तरवैक्रियतया 'चिट्ठित्तए'त्ति स्थातुं आसितुं प्रवृत्तानिति वाक्यशेष इति सम्बन्धः, कथं विकृत्येत्याह 'फुसित्ता'तानेव पुद्गलान् स्पृष्ट्वा तथाऽऽत्मना स्फुरित्वा वीर्यमुल्लास्य पु·

द्गलान् वा स्फोरयित्वा तथा 'स्फुटित्वा' प्रकाशीभूय, पुद्गलान् वा स्फोटयित्वा, वाचनान्तरे तु पदद्वयमपरमुपलभ्यते, तत्र संव-र्त्य-मारानेकीकृत्य निवर्त्य-असारान् पृथक्कृत्येति, अथवा पर्यात्तपुद्गलैरुत्तरवैक्रियशरीरस्यैकत्वं नानात्वं च कर्मतापन्नं स्पृष्ट्वा-प्रारभ्य तथा स्फुरत्कृत्वा-स्फुटं कृत्वा सम्-एकीभावेन वर्त्तितं-सामान्यनिष्पन्नं कृत्वा निर्वर्त्तितं कृत्वा-सर्वथा परिसमाप्य, किमुक्तं भवति ?-विकुर्व्य-वैक्रियं कृत्वा न त्वौदारिकतयेति, तस्येति विभङ्गज्ञानिनो बाह्याभ्यन्तरपुद्गलपर्यादानप्रवृत्तदेवान् पश्यत एवं भवति-इति विकल्पो जायते, 'मुदग्गे'त्ति बाह्याभ्यन्तरपुद्गलरचितशरीरो जीव इति ४, अथापरं पञ्चमं, तत्र बाह्याभ्यन्तरान् पुद्गलान्-अपर्यादायेत्यत्र निषेधस्य वैक्रियसमुद्घातापेक्षित्वादुत्पत्तिक्षेत्रस्थांस्तूत्पत्तिकाले गृहीत्वा भवधारणीयशरीरस्यैकत्वमेकदेवापेक्षया कण्ठाद्यवयवापेक्षया वा नानात्वं त्वनेकदेवापेक्षया हस्ताङ्गुल्याद्यवयवापेक्षया वा विकुर्व्य स्थातुं प्रवृत्तानित्यादि, शेषं प्राग्वत्, बाह्यपुद्गलपर्यादानं हि विनोत्तरवैक्रियैकत्वनानात्वे किल न भवत इति भवधारणीयमिहाधिकृतं, तदेवमबाह्याभ्यन्तरपुद्गलरचितशरीरदेवदर्शनात्तस्यैवं विकल्पो भवति-'अमुदग्गे'त्ति अबाह्याभ्यन्तरपुद्गलरचितावयवशरीरो जीव इति ५, 'रूवी जीवे'त्ति पुद्गलानां पर्यादानेऽपर्यादाने च वैक्रियरूपस्यैकानेकरूपस्य देवेषु दर्शनाद्रूपवानेव जीव इत्यवसायो जायते, तस्य अरूपस्य कदाचनाप्यदर्शनादिति ६, 'सुहुमे'त्यादि सूक्ष्मेण-मन्देन न तु सूक्ष्मनामकर्मोदयवर्तिना, तस्य वस्तुचलनासमर्थत्वात्, 'फुडं'ति स्पृष्टं 'पुद्गलकायं' पुद्गलराशिं 'एयंतं'ति एजमानं कम्पमानं 'व्येजमानं' विशेषेण कम्पमानं 'चलन्तं' स्वस्थानादन्यत्र गच्छन्तं 'क्षुभ्यन्तं' अधो निमज्जन्तं 'स्पन्दन्तं' ईषच्चलन्तं 'घट्टयन्तं' वस्त्वन्तरं स्पृशन्तमुदीरयन्तं-वस्त्वन्तरं प्रेरयन्तं तं तमनाख्येयमनेकविधं 'भावं, पर्यायं 'परिणमंतं' गच्छन्तं 'तं सव्वमिणंति सर्वमिदं चलत् पुद्गलजातं जीवाः स्पन्दनलक्षणजीवधर्मोपेतत्वात्, यच्च चलदपि श्रमणा-

दयो जीवाश्चाजीवाश्चेति प्राहुः तन्मिथ्येति तदध्यवसाय इति, 'तस्स णं' ति तस्य विभङ्गज्ञानवतः 'इमे'त्ति वक्ष्यमाणा न सम्यगुपगताः—अचलनावस्थायां जीवत्वेन न बोधविषयीभूताः, तद्यथा—पृथिव्यापस्तेजोवायवः, चलनदोहदादिधर्म्मवतां त्रसानामेव दोहदादित्रसधर्म्मवतां वनस्पतीनामेव च जीवतया प्रज्ञानात्, पृथ्व्यादीनां तु वायुचलनेन स्वतश्चलनेन च त्रसत्वेनैव प्रज्ञानात् स्थावरजीवतया तु तेषामनभ्युपगमाच्चेति, 'इच्चेएहिं'ति इतिहेतोरेतेषु चतुर्षु जीवनिकायेषु मिथ्यात्वपूर्वो दण्डो—हिंसा मिथ्यादण्डस्तं प्रवर्त्तयति, तद्रूपानभिज्ञः संस्तान् हिनस्ति निह्नुते चेति भाव इति सप्तमं विभङ्गज्ञानमिति ७।

मिथ्यादण्डं प्रवर्तयतीत्युक्तं, दण्डश्च जीवेषु भवतीति योनिसङ्ग्रहतो जीवानाह—

सत्तविधे जोणिसंगधे पं० तं०—अंडजा पोतजा जराउजा रसजा संसत्तगा संमुच्छिमा उब्भिगा, अंडगा सत्तगतिता सत्तागतित्ता पं० तं०—अंडगे अंडगेसु उववज्जमाणे अंडतेहिंतो वा पोतजेहिंतो वा जाव उब्भिएहिंतो वा उववज्जेज्जा, से चेव णं से अंडते अंडगत्तं विप्पजहमाणे अंडगत्ताते वा पोतगताते वा जाव उब्भियत्ताते वा गच्छेज्जा पोत्तगा सत्तगतिता सत्तागतित्ता, एवं चेव सत्तण्हवि गतिरागती भाणियव्वा, जाव उब्भियत्ति (सू० ५४३) आयरियउवज्झायस्स णं गणंसि सत्त संगहठाणा पं० तं०—आयरियउवज्झाए गणंसि आणं वा धारणं वा सम्मं पउंजित्ता भवति, एवं जधा पंचट्ठाणे जाव आयरियउवज्झाए गणंसि आपुच्छियचारि यावि भवति नो अणापुच्छियचारि यावि भवति, आयरियउवज्झाए गणंसि अणुप्पन्नाइं उवगरणाइं सम्मं उप्पाइत्ता

भवनि, आयरियउवज्झाए गणंसि पुव्वुप्पन्नाइं उवकरणाइं सम्मं सारक्खेत्ता संगोवित्ता भवनि णो असम्मं
भवनि, आयरियउवज्झाए गणंसि पुव्वुप्पन्नाइं उवकरणाइं सम्मं सारक्खेत्ता संगोवित्ता भवइ। आयरियउवज्झायस्स णं गणंसि सत्त असंगहठाणा पं० तं०—आयरियउवज्झाए
सारक्खेत्ता संगोवित्ता भवइ। आयरियउवज्झायस्स णं गणंसि सत्त असंगहठाणा पं० तं०—आयरियउवज्झाए
गणंसि आणं वा धारणं वा नो सम्मं पउंजित्ता भवति, एवं जाव उवगरणाणं नो सम्मं सारक्खेत्ता संगोवेत्ता
भवनि (सू० ५४४) सत्त पिंडेसणाओ पन्नत्ताओ। सत्त पाणेसणाओ पन्नत्ताओ। सत्त उग्गहपडिमातो पन्नत्तातो।
सत्तसत्तिकया पन्नत्ता। सत्त महज्झयणा पण्णत्ता। सत्तसत्तमिया णं भिक्खुपडिमा एकूणपण्णताते रातिं-
दिएहिं मेगेण य छण्णउएणं भिक्खासतेणं अहासुत्तं [अहा अत्थं] जाव आराहियावि भवति (सू० ५४५)।

'सत्तविहे' इत्यादि, योनिभिः-उत्पत्तिस्थानविशेषैर्जीवानां संग्रहः योनिसंग्रहः, स च सप्तधा, योनिभेदात् सप्तधा जीवा इत्यर्थः,
अण्डजाः-पक्षिमत्स्यसर्पादयः, पोतं-वस्त्रं तद्वज्जाताः पोतादिव वा बोहित्थाज्जाताः, अजरायुवेष्टिता इत्यर्थः, पोतजाः-हस्तिवल्गुलीप्र-
भृतयः, जरायौ-गर्भवेष्टने जाताः तद्वेष्टिता इत्यर्थो जरायुजाः-मनुष्या गवादयश्च, रसे-तीमनकाञ्जिकादौ जाता रसजाः, संस्वेदाज्जा-
ताः संस्वेदजाः-यूकादयः, सम्मूर्च्छनं निर्वृत्ताः सम्मूर्च्छिमाः-कृम्यादयः, उद्भिदो-भूमिभेदाज्जाता उद्भिज्जा-खञ्जनकादयः।
अथाण्डजादीनामेव गत्यागतिप्रतिपादनाय 'अंडये'त्यादि सूत्रसप्तकं, तत्र मृतानां सप्त गतयोऽण्डजादियोनिलक्षणा येषां ते सप्तगतयः
सप्तभ्य एवाण्डजादियोनिभ्य आगतिः-उत्पत्तिर्येषां ते सप्तागतयः, 'एवं चेव'त्ति यथाऽण्डजानां सप्तविधे गत्यागती भणिते तथा
पोतजादिभिः सह सप्तानामप्यण्डजादिजीवभेदानां गतिरागतिश्च भणितव्या 'जाव उब्भिय'त्ति सप्तमसूत्रं यावदिति, शेषं सुगमं॥
पूर्वं योनिसंग्रह उक्त इति संग्रहप्रस्तावात्संग्रहस्थानसूत्रम्—'आयरिए' त्यादि, आचार्योपाध्यायस्येति समाहारद्वन्द्वः कर्मधारयो

वा 'गणे' गच्छे संग्रहो ज्ञानादीनां शिष्याणां वा तस्य 'स्थानानि' हेतवः संग्रहस्थानानि, आचार्योपाध्यायो गणे आज्ञां वा-विधिविषयमादेशं धारणां वा-निपेधविषयमादेशमेव सम्यक् प्रयोक्ता भवति, एवं हि ज्ञानादिसंग्रहः शिष्यसंग्रहो वा स्याद्, अन्यथा तद्भ्रंश एवेति प्रतीतं, यतः—"जहि नत्थि सारणा वारणा य पडिचोयणा य गच्छंमि । सो उ अगच्छो गच्छो मोत्तव्वो संजमत्थीहिं ॥१॥" इति, [यत्र गच्छे सारणा वारणा च प्रतिचोदना च नास्ति स गच्छोऽगच्छ एव संयमार्थिभिर्मोक्तव्यश्च ॥१॥"] 'एवं जहा पंचठाणे' त्ति तच्चेदं—'आयरियउवज्झाए णं गणंसि आहाराइणियाए कितिकम्मं पउंजित्ता भवति २ आयरियउवज्झाए णं गणंसि जे सुयपज्जवजाते धारेइ ते काले काले सम्मं अणुप्पवाइत्ता भवइ ३ आयरियउवज्झाए णं गणंसि गिलाणसेहवेआवच्चं सम्मं अब्भुट्ठित्ता भवइ ४ आयरियउवज्झाए णं गणंसि आपुच्छियचारि यावि हवइ, नो अणापुच्छियचारी ५' स्थानद्वयं त्विहैवेति, व्याख्या तु सुकरैव, नवरमाप्रच्छनं गच्छस्य, यत उक्तम्—"सीसे जइ आमंते पडिच्छगा तेण बाहिरं भावं । अह इयरे तो सीसा ते व समत्तंमि गच्छंति ॥१॥ तरुणा बाहिरभावं न य पडिलेहोवही ण किइकम्मं । मूलगपत्तसरिसगा परिभूया वच्चिमो थेरा ॥२॥" इति, [शिष्यान् यद्यामंत्रयेत् प्रतीच्छकास्तेन बाह्यं भावं अथेतरांस्तदा शिष्यास्ते च समाप्ते व्रजन्ति ॥१॥ तरुणा बाह्यभावं न च प्रतिलेखनोपधेः कृतिकर्म मूलकपत्रसदृशकाः परिभूता व्रजामः ॥२॥] तथा 'अणुप्पन्नाइं'ति अनुत्पन्नानि-अलब्धानि 'उपकरणानि' वस्त्रपात्रादीनि सम्यग्-एषणादिशुद्ध्या 'उत्पादयिता' सम्पादनशीलो भवति, संरक्षयिता-उपायेन चौरादिभ्यः 'सङ्गोपयिता' अल्पसागारिककरणेन मलिनतारक्षणेन वेति। एवं संग्रहस्थानविपर्ययभूतसंग्रहसूत्रमपि भावनीयमिति। अनन्तरमाज्ञां न प्रयोक्ता भवतीत्युक्तमाज्ञा च पिण्डैषणादिविषयेति पिण्डैपणादिसूत्रपद्कम्—'सत्त पिंडेसणाउ'त्ति पिण्डः-समयभाषया भक्तं तस्यैषणा-ग्रहणप्रकाराः पिण्डैषणाः, ताश्चैताः—"संसट्ठ १

मसंसट्ठा २ उद्धड ३ तह अप्पलेविया चेव ४। उग्गहिया ५ पग्गहिया ६ उज्झियधम्मा य ७ सत्तमिया ॥१॥" अत्रासंसृष्टा हस्तमात्राभ्यां चिन्तनीया 'असंसट्ठे हत्थे असंसट्ठे मत्ते, अक्खरडियत्ति वुत्तं भवइ, एवं गृह्णतः प्रथमा भवति, गाथायां सुखमुखोच्चारणार्थो ऽन्यथा पाठः, संसृष्टा ताभ्यामेव चिन्त्या 'संसट्ठे हत्थे संसट्ठे मत्ते' खरडिएत्ति वुत्तं भवइ, एवं गृह्णतो द्वितीया, उद्धृता नाम स्थाल्यादौ स्वयोगेन भोजनजातमुद्धृतं, ततो असंसट्ठे हत्थे असंसट्ठे मत्त संसट्ठे वा मत्ते संसट्ठे वा हत्थे, एवं गृह्णतः तृतीया, अल्पलेपा नाम अल्पशब्दोऽभाववाचकः, निर्लेपं-पृथुकादि गृह्णतश्चतुर्थी, अवगृहीता नाम भोजनकाले शरावादिषूपहृतमेव भोजनजातं यत् ततो गृह्णतः पञ्चमी, प्रगृहीता नाम भोजनवेलायां दातुमभ्युद्यतेन करादिना प्रगृहीतं यद्भोजनजातं भोक्तुं वा स्वहस्तादिना तद् गृह्णत इति षष्ठी, उज्झितधर्म्मा नाम यत्परित्यागार्हं भोजनजातमन्ये च द्विपदादयो नावकांक्षन्ति तदर्द्धत्यक्तं वा गृह्णत इति हृदयं सप्तमीति। पानकैषणा एता एव, नवरं चतुर्थ्यां नानात्वं, तत्र ह्यायामसौवीरकादि निर्लेपं विज्ञेयमिति। 'उग्गहपडिम'त्ति अवगृह्यत इत्यवग्रहो-वसतिस्तत्प्रतिमाः-अभिग्रहा अवग्रहप्रतिमाः, तत्र पूर्वमेव विचिन्त्यैवंभूतः प्रतिश्रयो मया ग्राह्यो नान्यथाभूत इति तमेव याचित्वा गृह्णतः प्रथमा, तथा यस्य भिक्षोरेवंभूतोऽभिग्रहो भवति, तद्यथा-अहं च खल्वेषां साधूनां कृते अवग्रहं ग्रहीष्यामि, अन्येषां चावग्रहे गृहीते वत्स्यामीति तस्य द्वितीया, प्रथमा सामान्येन इयं तु गच्छान्तर्गतानां साम्भोगिकानामसाम्भोगिकानां चोद्युक्तविहारिणां, यतस्तेऽन्योऽन्यार्थं याचन्त इति, तृतीया त्वियं-अन्यार्थमवग्रहं याचिष्ये अन्यावगृहीतायां तु न स्थास्यामीति, एषा त्वहालन्दिकानां, यतस्ते सूत्रावशेषमाचार्यादभिकांक्षन्तः आचार्यार्थं तां याचन्त इति, चतुर्थी पुनरहमन्येषां कृते अवग्रहं न याचिष्ये अन्यावगृहीते तु वत्स्यामीति, इयं तु गच्छ एव अभ्युद्यतविहारिणां जिनकल्पाद्यर्थं परिकर्म्म कुर्वतां, पञ्चमी तु अहमात्मकृते अवग्रहमवग्रहीष्यामि न चापरेषां

द्वित्रिचतुःपञ्चानामिति, इयं तु जिनकल्पिकस्येति, षष्ठी पुनर्यदीयमवग्रहं ग्रहीष्यामि तदीयमेव चेत्कटादि संस्तारकं ग्रहीष्यामि, इतरथोत्कुटुको वा निषण्ण उपविष्टो वा रजनीं गमिष्यामीत्येषाऽपि जिनकल्पिकादेरिति, सप्तमी एषैव पूर्वोक्ताः, नवरं यथाऽऽस्तृतमेव शिलादिकं ग्रहीष्यामि नेतरदिति । अयं च सूत्रत्रयार्थः क्वचित्सूत्रपुस्तक एव दृश्यत इति । 'सत्तसत्तक्किय'त्ति अनुदेशकतयैकसरत्वेन एकका:-अध्ययनविशेषा आचाराङ्गस्य द्वितीयश्रुतस्कन्धे द्वितीयचूडारूपास्ते च समुदायतः सप्तेतिकृत्वा सप्तैकका अभिधीयन्ते, तेषामेकोऽपि सप्तैकक इति व्यपदिश्यते, तथैव नामत्वात्, एवं च ते सप्तेति, तत्र प्रथमः स्थानसप्तैकको, द्वितीयो नैषेधिकीसप्तैककः, तृतीय उच्चारप्रश्रवणविधिसप्तैककः, चतुर्थः शब्दसप्तैककः, पञ्चमो रूपसप्तैककः, षष्ठः परक्रियासप्तैककः, सप्तमोऽन्योन्यक्रियासप्तैकक इति । 'सत्त महज्झयण'त्ति सूत्रकृताङ्गस्य द्वितीयश्रुतस्कन्धे महान्ति-प्रथमश्रुतस्कन्धाध्ययनेभ्यः सकाशाद् ग्रन्थतो बृहन्ति अध्ययनानि महाध्ययनानि, तानि च-पुण्डरीकं १ क्रियास्थानं २ आहारपरिज्ञा ३ प्रत्याख्यानक्रिया ४ अनाचारश्रुतं ५ आर्द्रककुमारीयं ६ नालन्दीयं ७ चेति । 'सत्तसत्तमिय'त्ति सप्तमसप्तमानि दिनानि यस्यां सा सप्तसप्तमिका, सा हि सप्तसप्तभिर्दिनसप्तकैर्यथोत्तरं वर्द्धमानदत्तिभिर्भवति, तत्र प्रथमे सप्तके प्रतिदिनमेका भक्तस्य पानकस्य चैका दत्तिर्यावत्सप्तमे सप्त दत्तयः, भिक्षुप्रतिमा-साध्वभिग्रहविशेषः, सा चैकोनपञ्चाशता रात्रिन्दिवैः-अहोरात्रैर्भवति, यतः सप्त सप्तकान्येकोनपञ्चाशदेव स्यादिति, तथा एकेन च षण्णवत्यधिकेन भिक्षाशतेन, यतः प्रथमे सप्तके सप्तैव द्वितीयादिषु तद्द्विगुणाद्याः यावत्सप्तमे एकोनपञ्चाशदिति, सर्वाः सङ्कलिताः शतं षण्णवत्यधिकं भवति, भक्तभिक्षाश्चैताः पानकभिक्षा अप्येतावत्यो न चेह गणिता इति, एतत्स्वरूपमेवम्-"पडिमासु सत्तगा सत्त, पढमे तत्थ सत्तए । एक्केकं गिण्हए भिक्खं, बिइए दोन्नि दोन्नि ऊ ॥१॥ एवमेकेकियं भिक्खं, छुभेज्जकेकसत्तए । गिण्हई अंतिमे

७ स्थानाध्ययने उद्देशः ३ अण्डतादियोनिसंग्रहः गणसंग्रहेतरे पिण्डपानैषणावग्रहाद्याः सू० ५४३-५४५

जाव, मत्त मत्त दिणे दिणे ॥२॥ अहवा एक्केक्कियं दत्ति, जा सत्तेक्केक्कसत्तए। आएसो अत्थि एसोवि, सिंहविक्कमसन्निहो ॥३॥" इत्यादि, [प्रतिमाः सप्तसप्तिकाः प्रथमे तत्र सप्तके एकैकां भिक्षां गृह्णाति द्वितीये द्वे द्वे एव ॥ एवमेकैकां भिक्षां क्षिपेद्यावत् एकैकसप्तकेऽन्तिमे दिने सप्त सप्त गृह्णाति ॥२॥ अथवैकैकां दत्तिं (हापयेत्) एकैकसप्तके यावत् सप्त एषोऽप्यादेशोऽस्ति सिंहगतिसदृशः ॥३॥] 'अहासुत्तं'ति यथासूत्रं-सूत्रानतिक्रमेण यावत्करणात् 'अहाअत्थं' यथार्थं-निर्युक्त्यादिव्याख्यानानतिक्रमेणेत्यर्थः, 'अहातच्चं' यथातत्त्वं सप्तसप्तमिकेत्यभिधानार्थानतिक्रमेण अन्वर्थसत्यापनेनेत्यर्थः 'अहामग्गं' मार्गः-क्षायोपशमिको भावस्तदनतिक्रमेण, औदयिकभावागमनेनेत्यर्थः, 'अहाकप्पं' यथाकल्पं-कल्पनीयानतिक्रमेण प्रतिमासमाचारानतिक्रमेण वा 'सम्मं काएणं' कायप्रवृत्त्या न मनोमात्रेणेत्यर्थः, 'फासिया' स्पृष्टा प्रतिपत्तिकाले विधिना प्राप्ता, 'पालिय'त्ति पुनः पुनरुपयोगप्रतिजागरणेन रक्षिता, 'सोहिय'त्ति शोभिता तत्समाप्तौ गुर्वादिप्रदानशेषभोजनसेवनेन शोधिता वा-अतिचारवर्जनेन तदालोचनेन वा, 'तीरिय'त्ति तीरं-पारं नीता, पूर्णेऽपि कालावधौ किञ्चित्कालावस्थानेन, 'किट्टिय'त्ति कीर्तिता पारणकदिने अयमयं चाभिग्रहविशेषः कृत आसीद् अस्यां प्रतिमायां स चाराधित एवाधुना मुत्कलोऽहमिति गुरुसमक्षं कीर्त्तनादिति, 'आराहिय'त्ति एभिरेव प्रकारैः सम्पूर्णैर्निष्ठां नीता भवतीति, प्रत्याख्यानापेक्षया अन्यत्र व्याख्यानमेषामेवं—"उचिए काले विहिणा पत्तं जं फासियं तयं भणियं। तह पालियं तु असइं सम्मं उवओगपडियरियं ॥१॥ गुरुदाणसेसभोयणसेवणयाए उ सोहियं जाण। पुन्नेवि थेवकालावत्थाणा तीरियं होइ ॥२॥ भोयणकाले अमुगं पच्चक्खायंति भुंज किट्टिययं। आराहियं पयारेहिं संममेएहिं निट्ठवियं ॥३॥" इति। [विधिना यदुचिते काले प्राप्तं तत्स्पृष्टं भणितं असकृत्सम्यगुपयोगप्रतिचरितं पालितं तथैव ॥१॥ गुरुदानशेषभोजनसेवनतया शोधितं जानीहि पूर्णेऽपि स्तोककालावस्थानात्तीर्णं भवति

॥२॥ भोजनकालेऽभुक्तं प्रत्याख्यातमित्युपयुज्य भुनक्ति कीर्त्तितं सम्यगेभिः प्रकारैर्निष्ठितमाराधितं ॥३॥ ]

सप्तसप्तमिकादिप्रतिमाश्च पृथिव्यामेव विधीयन्त इति पृथ्वीप्रतिपादनायाह—

अहेलोगे णं सत्त पुढवीओ पं०, सत्त घणोदधीतो पं०, सत्त घणवाता सत्त तणुवाता पं० सत्त उवासंतरा पं०, एतेसु णं सत्तसु उवासंतरेसु सत्त तणुवाया पइट्ठिया, एतेसु णं सत्तसु तणुवातेसु सत्त घणवाता पइट्ठिया, एएसु णं सत्तसु घणवातेसु सत्त घणोदधी पतिट्ठिता, एतेसु णं सत्तसु घणोदधीसु पिंडलगपिहुणसंठाणसंठिआओ सत्त पुढवीओ पं० तं०—पढमा जाव सत्तमा, एतासि णं सत्तण्हं पुढवीणं सत्त णामधेज्जा पं० तं०—धम्मा वंसा सेला अंजणा रिट्ठा मघा माघवती, एतासि णं सत्तण्हं पुढवीणं सत्त गोत्ता पं० तं०—रयणप्पभा सक्करप्पभा वालुअप्पभा पंकप्पभा धूमप्पभा तमा तमतमा (सू० ५४६)।

'अहेलोए' इत्यादि, अधोलोकग्रहणादूर्ध्वलोकेऽपि पृथिवीसत्ताऽवगम्यते, तत्र चैका ईषत्प्राग्भाराख्या पृथिव्यस्तीति, इह च यद्यपि प्रथमपृथिव्या उपरितनानि नव योजनशतानि तिर्यग्लोके भवन्ति तथापि देशोनाऽपि पृथिवीतिकृत्वा न दोषायेति, एताश्च क्रमेण बाहल्यतो योजनलक्षमशीत्यादिसहस्राधिकं भवन्ति, उक्तं च—"पढमा असीइसहस्सा १ बत्तीसा २ अट्ठवीस ३ वीसा य ४। अट्ठार ५ सोल ६ अट्ठ य ७ सहस्स लक्खोवरिं कुज्जा ॥१॥" इति। अधोलोकाधिकारात्तद्गतवस्तुसूत्राण्याबादरसूत्रात्, सुगमानि चैतानि, नवरं घनोदधीनां बाहल्यं विंशतिर्योजनसहस्राणि घनतनुवाताकाशान्तराणामसङ्ख्यातानि तानि, आह च—"सव्वे वीससहस्सा

बाहल्लेणं घनोदधी नेया। सेसाणं तु असंखा अहो २ जाव सत्तमिया॥१॥" इति, [ विंशतिः सहस्राणि बाहल्येन सर्वत्र घनोदधयः शेषाणामसंख्येयानि एव अधोऽधो यावत्सप्तम्यां घनतनुवातान्तराणां ॥१॥ ] तथा छत्रमतिक्रम्य छत्रं छत्रातिच्छत्रं तस्य संस्थानं-आकारोऽधस्तनं छत्रं महदुपरितनं लघ्विति तेन संस्थिताः छत्रातिच्छत्रसंस्थानसंस्थिताः, इदमुक्तं भवति-सप्तमी सप्तरज्जुविस्तृता षष्ठ्यादयस्त्वेकैकरज्जुहीना इति, क्वचित्पाठः 'पिंडलगपिहुलसंठाणसंठिया' तत्र पिंडलगं-पटलकं पुष्पभाजनं तद्वत्पृथुलसंस्थानसंस्थिता इति पटलकपृथुलसंस्थानसंस्थिताः, 'पृथुलपृथुलसंस्थानसंस्थिता' इति क्वचित्पाठः, स च व्यक्त एव, 'नामधेज्ज'त्ति नामान्येव नामधेयानि, 'गोत्त'त्ति गोत्राणि तान्यपि नामान्येव, केवलमन्वर्थयुक्तानि गोत्राणि इतराणि त्वितराणि, अन्वर्थश्च सुखोन्नेयः।

सप्तावकाशान्तराणि प्राक् प्ररूपितानि, तेषु च बादरा वायवः सन्तीति तत्प्ररूपणायाह—

सत्तविहा बायरवाउकाइया पं० तं०—पातीणवाते पडीणवाते दाहिणवाते उदीणवाते उड्ढवाते अहोवाते विदिसिवाते (सू० ५४७) सत्त संठाणा पं० तं०—दीहे रहस्से वट्टे तंसे चउरंसे पिहुले परिमंडले (सू० ५४८) सत्त भयट्ठाणा पं० तं०—इहलोगभते परलोगभते आदाणभते अकम्हाभते वेयणभते मरणभते असिलोगभते (सू० ५४९) सत्तहिं ठाणेहिं छउमत्थं जाणेज्जा, तं०-पाणे अइवाएत्ता भवति मुसं वइत्ता भवति अदिन्नमादित्ता भवति सद्दफरिसरसरूवगंधे आसादेत्ता भवति पूतासक्कारमणुवूहेत्ता भवति इमं सावज्जंति पण्णवेत्ता पडिसेवेत्ता भवति णो जधावादी तधाकारी यावि भवति। सत्तहिं ठाणेहिं केवली जाणेज्जा, तं०—णो पाणे अइवाइत्ता

भवति जाव जधावाती तधाकारी यावि भवति (सू० ५५०)।

'सत्तविहा बायरे'त्यादि, सूक्ष्माणां न भेदोऽस्ति ततो बादरग्रहणं, भेदश्च दिग्विदिग्भेदात् प्रतीत एवेति। वायवो ह्यदृश्यास्तथापि संस्थानवन्तो भयवन्तश्चेति संस्थानभयसूत्रे, संस्थानानि च प्रतीतानि, तद्विशेषाः प्रतरघनादयोऽन्यतो ज्ञेयाः। 'सत्त भयट्ठाणे' त्यादि, भयं-मोहनीयप्रकृतिसमुत्थ आत्मपरिणामस्तस्य स्थानानि-आश्रया भयस्थानानि, तत्र मनुष्यादिकस्य सजातीयादन्यस्मान्मनुष्यादेरेव सकाशाद्यद्भयं तदिहलोकभयं, इहाधिकृतभीतिमतो जातौ लोक इहलोकस्ततो भयमिति व्युत्पत्तिः, तथा विजातीयात्-तिर्यग्देवादेः सकाशान्मनुष्यादीनां यद्भयं तत्परलोकभय, आदीयत इत्यादानं-धनं तदर्थं चौरादिभ्यो यद्भयं तदादानभयं, अकस्मादेव बाह्यनिमित्तानपेक्षं गृहादिष्वेव स्थितस्य रात्र्यादौ भयमकस्माद्भयं, वेदना-पीडा तद्भयं वेदनाभयं, मरणभयं प्रतीतं, अश्लोकभयं-अकीर्त्तिभयं, एवं हि क्रियमाणे महदयशो भवतीति तद्भयान्न प्रवर्त्तत इति। भयं च छद्मस्थस्यैव भवति, स च यैः स्थानैर्ज्ञायते तान्याह —'सत्तहिं ठाणेही'त्यादि, सप्तभिः स्थानैर्हेतुभूतैः छद्मस्थं जानीयात्, तद्यथा-प्राणान् अतिपातयिता, तेषां कदाचिद् व्यापादनशीलो भवति, इह च प्राणातिपातनमिति वक्तव्येऽपि धर्म्मधर्म्मिणोरभेदादतिपातयितेति धर्म्मी निर्दिष्टः, प्राणातिपातनाच्छद्मस्थोऽयमित्यवसीयते, केवली हि क्षीणचारित्रावरणत्वान्निरतिचारसंयमत्वादप्रतिषेवित्वान्न कदाचिदपि प्राणानामतिपातयिता भवतीत्येवं सर्वत्र भावना ज्ञेया, तथा मृषा वादिता भवति, अदत्तमादाता-गृहीता भवति, शब्दादीनास्वादयिता भवति, पूजासत्कारं-पुष्पार्चनवस्त्राद्यर्चने अणुबृंहयिता-परेण स्वस्य क्रियमाणस्य तस्यानुमोदयिता, तद्भावे हर्षकारीत्यर्थः, तथेदमाधाकर्मादि सावद्यं-सपापमित्येवं प्रज्ञाप्य तदेव प्रतिषेविता भवति, तथा सामान्यतो नो यथावादी तथाकारी अन्यथाभिधायान्यथा कर्त्ता भवति, 'चापी'ति समुच्चये।

एताऽन्येव विपर्यस्तानि केवलिगमकानि भवन्तीत्येतत्प्रतिपादनपरं केवलिसूत्रं, सुगममेव।

केवलिनश्च प्रायो गोत्रविशेषवन्त एव भवन्ति प्रव्रज्यायोग्यत्वान्नाभेयादिवदिति 'सत्त मूलगोत्ते'त्यादिना ग्रन्थेन गोत्रविभागमाह—

सत्त मूलगोत्ता पं० तं०—कासवा गोतमा वच्छा कोच्छा कोसिता मंडवा वासिट्ठा, जे कासवा ते सत्तविधा पं० तं०—ते कासवा ते संडेल्ला ते गोल्ला ते वाला ते मुंजतिणो ते पव्वपेच्छतिणो ते वरिसकण्हा, जे गोयमा ते सत्तविधा पं० तं०—ते गोयमा ते गग्गा ते भारद्दा ते अंगिरसा ते सक्कराभा ते भक्खराभा ते उदगत्ताभा, जे वच्छा ते सत्तविधा पं० तं०—ते वच्छा ते अग्गेया ते मित्तिया ते सामिलिणो ते सेलतता ते अट्ठिसेणा ते वीयकण्हा, जे कोच्छा ते सत्तविधा पं० तं०—ते कोच्छा ते मोग्गलायणा ते पिंगलायणा ते कोडीणा ते मंडलिणो ते हारिता ते सोमया, जे कोसिआ ते सत्तविधा पं० तं०–ते कोसिता ते कच्चातणा ते सालंकातणा ते गोलिकातणा ते पक्खिकायणा ते अग्गिच्चा ते लोहिया, जे मंडवा ते सत्तविहा पं० तं०—ते मंडवा ते अरिट्ठा ते समुता ते तेला ते एलावच्चा ते कंडिल्ला ते खारातणा, जे वासिट्ठा ते सत्तविहा पं० तं०—ते वासिट्ठा ते उंजायणा ते जारेकण्हा ते वग्घावच्चा ते कोडिन्ना ते सण्णी ते पारासरा (सू० ५५१)।

सुगमश्चायं, नवरं गोत्राणि तथाविधैकैकपुरुषप्रभवा मनुष्यसन्तानाः उत्तरगोत्रापेक्षया मूलभूतानि—आदिभूतानि गोत्राणि मूलगोत्राणि, काशे भवः काश्यः—रसस्तं पीतवानिति काश्यपस्तदपत्यानि काश्यपाः, मुनिसुव्रतनेमिवर्जा जिनाश्चक्रवर्त्यादयश्च क्षत्रियाः स-

सप्तमगणधरादयो द्विजाः जम्बूस्वाम्यादयो गृहपतयश्चेति, इह च गोत्रस्य गोत्रवद्भ्योऽभेदादेवं निर्देशः, अन्यथा काश्यपमिति वाच्यं स्यादेवं सर्वत्र, तथा गोतमस्यापत्यानि गौतमाः–क्षत्रियादयो यथा सुव्रतनेमी जिनौ नारायणपद्मवर्जवासुदेवबलदेवा इन्द्रभूत्यादिगणनाथत्रयं वैरस्वामी च, तथा वत्सस्यापत्यानि वत्साः–शय्यम्भवादयः, एवं कुत्सा–शिवभूत्यादयः "कोच्छं सिवभूइं पिय" इति वचनात्, एवं कौशिकाः षडुलूकादयः, मण्डोरपत्यानि मण्डवाः, वशिष्ठस्यापत्यानि वाशिष्ठाः–षष्ठगणधरार्यसुहस्त्यादयः, तथा ये ते काश्यपास्ते सप्तविधाः, एके काश्यपशब्दव्यपदेश्यत्वेन काश्यपा एवान्ये तु काश्यपगोत्रविशेषभूतशण्डिल्यादिपुरुषापत्यरूपाः शाण्डिल्यादयोऽवगन्तव्याः।

अयं च मूलगोत्रप्रतिगोत्रविभागो नयविशेषमताद्भवतीति नयविभागमाह—

**सत्त मूलनया पं० तं०—नेगमे संगहे ववहारे उज्जुसुते सद्दे समभिरूढे एवंभूते (सू० ५५२)।**

'सत्त मूले'त्यादि, मूलभूता नया मूलनयाः, ते च सप्त, उत्तरनया हि सप्त शतानि, यदाह—"एक्केक्को य सयविहो सत्त नयसया हवंति एवं तु। अन्नोऽविय आएसो पंचेव सया नयाणं तु ॥१॥" एकैकः शतविधः एवं सप्त नयशतानि भवन्ति अन्योऽपि चादेशो नयानां पंचैव शतानि ॥१॥] तथा—"जावइया वयणपहा तावइया चेव हुंति नयवाया। जावइया नयवाया तावइया चेव परसमय ॥२॥"त्ति, [यावन्तो वचनपंथानः तावन्तश्चैव भवन्ति नयवादाः यावन्तो नयवादास्तावन्तश्चैव परसमया इति ॥१॥] तत्रानन्तधर्माध्यासिते वस्तुन्येकधर्म्मसमर्थनप्रवणो बोधविशेषो नय इति, तत्र 'णेगमे'त्ति नैकैर्मानैर्महासत्तासामान्यविशेषविशेषज्ञानैर्मिमीते मिनोति वा

नैकमः, आह च—"णेगाइं माणाइं सामन्नोभयविसेसनाणाइं। जं तेहिं मिणइ तो णेगमो णओ णेगमाणोत्ति ॥१॥ [नैकानि मानानि सामान्योभयविशेषज्ञानानि यत्तैर्मिनोति ततो नैगमो नयो नैकमान इति ॥१॥] इति, निगमेषु वा–अर्थबोधेषु कुशलो भवो वा नैगमः, अथवा नैके गमाः-पन्थानो यस्य स नैकगमः, आह च—"लोगत्थनिबोहा वा निगमा तेसु कुसलो भवो वाऽयं। अहवा जं णेगगमो णेगपहा णेगमो तेणं ॥२॥" इति, लोकार्थनिबोधा वा निगमास्तेषु कुशलो भवो वाऽयं। अथवा यत् नैकगमोऽनेकपथो नैगमस्तेन ॥१॥ तत्रायं सर्वत्र सदित्येवमनुगताकारावबोधहेतुभूतां महासत्तामिच्छति अनुवृत्तव्यावृत्तावबोधहेतुभूतं च सामान्यविशेषं द्रव्यत्वादि व्यावृत्तावबोधहेतुभूतं च नित्यद्रव्यवृत्तिमन्त्यं विशेषमिति, आह–इत्थं तर्ह्ययं नैगमः सम्यग्दृष्टिरेवास्तु सामान्यविशेषाभ्युपगमपरत्वात् साधुवदिति, नैतदेवं, सामान्यविशेषवस्तूनामत्यन्तभेदाभ्युपगमपरत्वात्तस्येति, आह च भाष्यकारः—"जं सामन्नविसेसे परोप्परं वत्थुओ य सो भिन्ने। मन्नइ अच्चंतमओ मिच्छादिट्ठी कणादोव्व ॥१॥ दोहिवि नएहिं नीयं सत्थमुलूएण तहवि मिच्छत्तं जं सविसयपहाणत्तणेण अन्नोन्ननिरवेक्खा ॥१॥" इति, [यत्परस्परं वस्तुनश्च सामान्यविशेषौ भिन्नौ अत्यन्तं मनुतेऽतो मिथ्यादृष्टिः कणाद इव ॥ १ ॥ उलूकेन शास्त्रं द्वाभ्यां नयाभ्यां नीतमपि मिथ्यात्वं यत्स्वविषयप्रधानत्वेनान्योऽन्यनिरपेक्षौ (अङ्गीकृतौ) ॥१॥] तथा संग्रहणं भेदानां संगृह्णाति वा भेदान् संगृह्यन्ते वा भेदा येन स संग्रहः, उक्तश्च—"संगहणं संगिण्हइ संगिज्झंते व तेण जं भेया। तो संगहोत्ति" [ संग्रहणं संगृह्णाति संगृह्यंते वा तेन यस्माद् भेदास्ततः सङ्ग्रहः ॥ ] एतदुक्तं भवति–सामान्यप्रतिपादनपरः खल्वयं सदित्युक्ते सामान्यमेव प्रतिपद्यते न विशेषं, तथा च मन्यते–विशेषाः सामान्यतोऽर्थान्तरभूताः स्युरनर्थान्तरभूता वा?, यद्यर्थान्तरभूता न सन्ति ते, सामान्यादर्थान्तरत्वात् खपुष्पवत्, अथानर्थान्तरभूताः सामान्यमात्रं ते, तदव्यतिरिक्तत्वात्,

तत्स्वरूपवदिति, आह च—"सदिति भणियंमि जम्हा सव्वत्थाणुप्पवत्तए बुद्धी । तो सव्वं तम्मत्तं नत्थि तदत्थंतरं किंचि ॥१॥ कुंभो भावाऽणन्नो जइ तो भावो अहऽन्नहाऽभावो । एवं पडादओऽविहु भावाऽनन्नत्ति तम्मत्तं ॥२॥" इति, [सदिति भणिते यस्मात्सर्वत्रानुप्रवर्त्तते बुद्धिः ततः सर्वं तन्मात्रं नास्ति तदर्थान्तरं किंचित् ॥१॥ कुंभो भावादनन्यो यदि ततो भावोऽथान्यथाऽभावः एवं पटादयोऽपि भावादनन्या इति तन्मात्रं (सर्वं) ॥२॥] तथा व्यवहरणं व्यवहरतीति वा व्यवह्रियते वा–अपलप्यते सामान्यमनेन विशेषान् वाऽऽश्रित्य व्यवहारपरो व्यवहारः, आह च—"ववहरणं ववहरए स तेण ववहीरए व सामन्नं । ववहारपरो य जओ विसेसओ तेण ववहारो ॥१॥" इति, [व्यवहरणं व्यवहरति व्यपहरति वा सामान्यं व्यवहारपरो यतश्च विशेषतस्तेन व्यवहारः ॥१॥] अयं हि विशेषप्रतिपादनपरः, सदित्युक्ते विशेषानेव घटादीन् प्रतिपद्यते, तेषामेव व्यवहारहेतुत्वात्, न तदतिरिक्तं सामान्यं, तस्य व्यवहारापेतत्वात्, तथा च–सामान्यं विशेषेभ्यो भिन्नमभिन्नं वा स्यात् ?, यदि भिन्नं विशेषव्यतिरेकेणोपलभ्येत, न चोपलभ्यते, अथाभिन्नं विशेषमात्रं तत्तदव्यतिरिक्तत्वात्तत्स्वरूपवदिति, आह च—"उवलंभव्ववहाराभावाओ त(नि)व्विसेसभावाओ । तं नत्थि खपुप्फंपिव संति विसेसा सपच्चक्खं ॥१॥" इति, [उपलंभव्यवहाराभावात्तद्वि(न्निर्वि)शेषभावात् तन्नास्ति खपुष्पमिव विशेषाः सन्ति स्वप्रत्यक्षं ॥१॥] तथा लोकसंव्यवहारपरो व्यवहारः, तथाहि–असौ पञ्चवर्णेऽपि भ्रमरादिवस्तुनि बहुतरत्वात् कृष्णत्वमेव मन्यते, आह च—"बहुतरओत्तिय तं चिय गमेइ संतेवि सेसए मुयइ । संववहारपरतया ववहारो लोगमिच्छंतो ॥१॥" [संव्यवहारपरतया लोकमिच्छन् व्यवहारो बहुतरत्वादेव तं गमयति सतोऽपि शेषकान्मुंचत्येव ॥१॥] इति ३, ऋजु–वक्रविपर्ययादभिमुखं श्रुतं–ज्ञानं यस्यासौ ऋजुश्रुतः, ऋजु वा–वर्त्तमानमतीतानागतवक्रपरित्यागाद्वस्तु सूत्रयति–गमयतीति ऋजुसूत्रः, उक्तं च—"उज्जुं रिउं सुयं नाणमुज्जु सुयमस्स सोऽयमुज्जु-

मुओ। सुत्तयइ वा जमुज्जुं वत्थुं तेणुज्जुसुत्तोत्ति ॥१॥" [ऋजु–अवक्रं श्रुतं–ज्ञानं ऋजु श्रुतमस्य सोऽयमृजुश्रुतः सूत्रयति वा यदृजु वस्तु तेन ऋजुसूत्र इति ॥१॥] अयं हि वर्त्तमानं निजकं लिङ्गवचननामादिभिन्नमप्येकं वस्तु प्रतिपद्यते, शेषमवस्त्विति, तथाहि–अतीतमेष्यद्वा न भावो, विनष्टानुत्पन्नत्वाददृश्यत्वात्खपुष्पवत्, तथा परकीयमप्यवस्तु निष्फलत्वात् खकुसुमवत्, तस्माद्वर्त्तमानं स्वं वस्तु, तच्च न लिङ्गादिभिन्नमपि स्वरूपमुज्झति, लिङ्गभिन्नं तटस्तटी तटमिति वचनभिन्नमापो जलं नामादिभिन्नं नामस्थापनाद्रव्यभावभिन्नं आह च—"तम्हा निजगं संपयकालीयं लिंगवयणभिन्नंपि। नामादिभेयविहियं पडिवज्जइ वत्थुमुज्जुसुय ॥१॥"त्ति ४, [तस्मान्निजकं साम्प्रतकालीनं लिंगवचनभिन्नमपि नामादिभेदवदपि प्रतिपद्यते ऋजुसूत्रो वस्तु ॥१॥] तथा शपनं शपति वा असौ शप्यते वा तेन वस्त्विति शब्दस्तस्यार्थपरिग्रहादभेदोपचारान्नयोऽपि शब्द एव, यथा कृतकत्वादिलक्षणहेत्वर्थप्रतिपादकं पदं हेतुरेवोच्यत इति, आह च–"सवणं सवइ स तेणं व सप्पए वत्थु जं तओ सद्दो। तस्सऽत्थपरिग्गहओ नओवि सद्दोत्ति हेतुव्व ॥१॥" इति, [शपनं शपति स तेन वा शप्यते वस्तु यत्ततः शब्दः। तस्यार्थपरिग्रहात् नयोऽपि शब्द इति हेतुरिव हेत्वर्थप्रतिपादकः ॥१॥] अयं च नामस्थापनाद्रव्यकुम्भा न सन्त्येवेति मन्यते, तत्कार्याकरणात् खपुष्पवत्, न च भिन्नलिङ्गवचनमेकं, लिङ्गवचनभेदादेव, स्त्रीपुरुषवत् कुटा वृक्ष इत्यादिवत्, अतो घटः कुटः कुम्भ इति स्वपर्यायध्वनिवाच्यमेकमेवेति, आह च—"तं चिय रिउसुत्तमयं पच्चुप्पन्नं विसेसियतरं सो। इच्छइ भावघडं चिय जं न उ नामादओ तिन्नि ॥१॥" [तदेव ऋजुसूत्रमतं प्रत्युत्पन्नं विशेषिततरं स इच्छति भावघटमेव (मनुते) न नामादींस्त्रीन् यत् ॥१॥] ५, तथा नानार्थेषु नानासंज्ञासमभिरोहणात् समभिरूढः, उक्तं च—"जं जं सन्नं भासइ तं तं चिय समभिरोहए जम्हा। सन्नंतरत्थविमुहो तओ न(न)ओ समभिरूढोत्ति ॥१॥" [यां यां संज्ञां भाषते तां तां समभिरोहत्येव यस्मात्

संज्ञान्तरार्थविमुखस्ततो नयः समभिरूढ इति ॥१॥] अयं हि मन्यते-घटकुटादयः शब्दा भिन्नप्रवृत्तिनिमित्तत्वाद् भिन्नार्थगोचराः, घटपटादिशब्दवत्, तथा च घटनात् घटो विशिष्टचेष्टावानर्थो घट इति, तथा 'कुट कौटिल्ये' कुटनात् कुटः, कौटिल्ययोग्यात् कुट इति, घटोऽन्यः कुटोऽप्यन्य एवेति ६, तथा यथाशब्दार्थ एवं पदार्थो भूतः सन्निन्यथोऽन्यथाभूतोऽसन्निति प्रतिपत्तिपर एवंभूतो नयः, आह च—"एवं जहसद्दत्थो संतो भूओ तयऽन्नहाऽभूओ। तेणेवंभूयनओ सद्दत्थपरो विसेसेणं ॥१॥" इति, [एवं यथाशब्दार्थस्तथा भूतः सन्नन्यथाऽभूतः ततः (असन्) तेनैवंभूतनयः विशेषेण शब्दार्थपरः ॥१॥] अयं हि योषिन्मस्तकव्यवस्थितं चेष्टावन्तमेवार्थं घटशब्दवाच्यं मन्यते, न स्थानभरणादिक्रियान्तरापन्नमिति, भवन्ति चात्र श्लोकाः—"शुद्धं द्रव्यं समाश्रित्य, संग्रहस्तदशुद्धितः। नैगमव्यवहारौ स्तः, शेषाः पर्यायमाश्रिताः ॥१॥ अन्यदेव हि सामान्यमभिन्नज्ञानकारणम्। विशेषोऽप्यन्यमेवेति, मन्यते नैगमो नयः ॥२॥ सद्रूपतानतिक्रान्तस्वस्वभावामिदं जगत्। सत्तारूपतया सर्वं, संगृह्णन् संग्रहो मतः ॥३॥ व्यवहारस्तु तामेव, प्रतिवस्तु व्यवस्थिताम्। तथैव दृश्यमानत्वाद्, व्यवहारयति देहिनः ॥४॥ तत्रर्जुसूत्रनीतिः स्यात्, शुद्धपर्यायसंस्थिता। नश्वरस्यैव भावस्य, भावात् स्थितिवियोगतः ॥५॥ अतीतानागताकारकालसंस्पर्शवर्जितम्। वर्त्तमानतया सर्वमृजुसूत्रेण सूत्र्यते ॥६॥ विरोधिलिङ्गसंख्यादिभेदाद् भिन्नस्वभावताम्। तस्यैव मन्यमानोऽयं, शब्दः प्रत्यवतिष्ठते ॥७॥ तथाविधस्य तस्यापि, वस्तुनः क्षणवृत्तिनः। ब्रूते समभिरूढस्तु, संज्ञाभेदेन भिन्नताम् ॥८॥ एकस्यापि ध्वनेर्वाच्यं, सदा तन्नोपपद्यते। क्रियाभेदेन भिन्नत्वादेवंभूतोऽभिमन्यते ॥९॥"

अथ कथं सप्त नयशतान्यसंख्या वा नयाः सप्तसु नयेष्वन्तर्भवन्तीति ?, उच्यते, यथा वक्तृविशेषादसंख्येया अपि स्वराः सप्तसु स्वरेष्विति स्वराणामेव स्वरूपप्रतिपादनाय सत्त सरेत्यादि स्वरप्रकरणमाह—

सत्त सरा पं० तं०—सज्जे रिसभे गंधारे, मज्झिमे पंचमे सरे। धेवते चेव णिसाते, सरा सत्त वियाहिता ॥१॥ एएसि णं सत्तण्हं सराणं सत्त सरट्ठाणा पं० तं०—सज्जं तु अग्गजिब्भाते, उरेण रिसभं सरं। कंठुग्गतेण गंधारं, मज्झजिब्भाते मज्झिमं ॥२॥ णासाए पंचमं ब्रूया, दंतोट्ठेण य धेवतं। मुद्धाणेण य णेसातं, सरठाणा वियाहिता ॥३॥ सत्त सरा जीवनिस्सिता पं०, तं०—सज्जं रवति मयूरो, कुक्कुडो रिसहं सरं। हंसो णदति गंधारं, मज्झिमं तु गवेलगा ॥४॥ अह कुसुमसंभवे काले, कोइला पंचमं सरं। छट्ठं च सारसा कोंचा, णिसायं सत्तमं गजा ॥५॥ सत्त सरा अजीवनिस्सिता पं०, तं०—सज्जं रवति मुइंगो, गोमुही रिसभं सरं। संखो णदति गंधारं, मज्झिमं पुण झल्लरी ॥६॥ चउचलणपतिट्ठाणा, गोहिया पंचमं सरं। आडंबरो रेवतितं, महाभेरी य सत्तमं ॥७॥ एतेसि णं सत्तसराणं सत्त सरलक्खणा पं० तं०—"सज्जेण लभति वित्तिं, कतं च ण विणस्सति। गावो मित्ता य पुत्ता य, णारीणं चेव वल्लभो ॥८॥ रिसभेण उ एसज्जं, सेणावच्चं धणाणि य। वत्थगंधमलंकारं, इत्थिओ सयणाणि य ॥९॥ गंधारे गीतजुत्तिण्णा, वज्जवित्ती कलाहिता। भवंति कतिणो पन्ना, जे अन्ने सत्थपारगा ॥१०॥ मज्झिमसरसंपन्ना, भवंति सुहजीविणो। खायती पीयती देती, मज्झिमं सरमस्सितो ॥११॥ पंचमसरसंपन्ना, भवंति पुढवीपती। सूरा संगहकत्तारो, अणेगगणणातगा ॥१२॥ रेवतसरसंपन्ना, भवंति कलहप्पिया। साउणिता वग्गुरिया, सोयरिया मच्छबंधा य ॥१३॥ चंडाला मुट्ठिया सेया, जे अन्ने पावकम्मिणो। गोघातगा य जे चोरा, णिसायं सरमस्सिता ॥१४॥ एतेसिं सत्तण्हं सराणं तओ गामा पण्णत्ता, तं०—सज्जगामे मज्झिम-

गामे गंधारगामे, सज्जगामस्स णं सत्त मुच्छणातो पं० तं०—मंगी कोरव्वीया हरी य रयतणी य सारकंता य। छट्ठी य सारसी णाम सुद्धसज्जा य सत्तमा ॥१५॥ मज्झिमगामस्स णं सत्त मुच्छणातो पं०, तं०—उत्तरमंदा रयणी, उत्तरा उत्तरासमा। आसोकंता य सोवीरा, अभिरु हवति सत्तमा ॥१६॥ गंधारगामस्स णं सत्त मुच्छणातो पं०, तं०—णंदी त खुद्दिमा पूरिमा य चउत्थी य सुद्धगंधारा। उत्तरगंधाराचित, पंचमिता हवति मुच्छा उ १७॥ सुट्ठुतरमायामा सा छट्ठी णियमसो उ णायव्वा। अह उत्तरायता कोडीमातसा सत्तमी मुच्छा ॥१८॥ सत्त सराओ कओ संभवंति गेयस्स का भवंति जोणी ?। कतिसमता उस्सासा कति वा गेयस्स आगारा? ॥१९॥ सत्त सरा णाभीतो भवंति गीतं च रुयजोणीतं। पादसमा ऊसासा तिन्नि य गीयस्स आगारा ॥२०॥ आइमिउ आरभंता समुव्वहंता य मज्झगारंमि। अवसाणे तज्जविंतो तिन्नि य गेयस्स आगारा ॥२१॥ छद्दोसे अट्ठगुणे तिन्नि य वित्ताइं दो य भणितीओ। जाणाहिति सो गाहिइ सुसिक्खिओ रंगमज्झम्मि ॥२२॥ भीतं दुतं रहस्सं गायंतो मा त गाहि उत्तालं। काकस्सरमणुनासं च होंति गेयस्स छद्दोसा ॥२३॥ पुन्नं १ रत्तं २ च अलंकियं ३ च वत्तं ४ तहा अविघुट्ठं ५। मधुरं ६ सम ७ सुकुमारं ८ अट्ठ गुणा होंति गेयस्स ॥२४॥ उरकंठसिरपसत्थं च गेज्जंते मउरिभिअपदबद्धं। समतालपडुक्खेवं सत्तसरसीहरं गीयं ॥२५॥ निद्दोसं सारवंतं च, हेउजुत्तंमलकियं। उवणीय सोवयारं च, मियं मधुरमेव य ॥२६॥ सममद्धसमं चेव, सव्वत्थ विसमं च जं। तिन्नि वित्तप्पयाराइं, चउत्थं नोपलब्भती ॥२७॥ सक्कता पागता चेव, दुहा भणितीओ आहिया। सरमंडलंमि गिज्जंते,

पमत्था इसिभासिता ॥२८॥ केसी गातति य मधुरं केसी गातती खरं च रुक्खं च। केसी गायति चउरं केसि विलंबं दुतं केसी ॥२९॥ विस्सरं पुण केरिसी ? ॥ सामा गायइ मधुरं काली गायइ खरं च रुक्खं च। गोरी गानति चउरं काण विलंबं दुतं अंधा ॥३०॥ विस्सरं पुण पिंगला ॥ तंतिसमं तालसमं पादसमं लयसमं गहसमं च। नीससिऊससियसमं संचारसमा सरा सत्त ॥३१॥ सत्त सरा य ततो गामा, मुच्छणा एकवीसती। ताणा एगूणपण्णासा, समत्तं सरमंडलं ॥३२॥ (सू० ५५३) इति सरमंडलं समत्तं ॥

सुगमं चेदं, नवरं स्वरणानि स्वराः-शब्दविशेषाः, 'सज्जे'त्यादिश्लोकाः, षड्भ्यो जातः षड्जः, उक्तं हि—"नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः। षड्भिः सञ्जायते यस्मात्तस्मात् षड्ज इति स्मृतः ॥१॥" तथा ऋषभो-वृषभस्तद्वद् यो वर्त्तते स ऋषभ इति, आह च—"वायुः समुत्थितो नाभेः, कण्ठशीर्षसमाहतः। नर्दत्यृषभवद् यस्मात्, तस्मादृषभ उच्यते ॥१॥" तथा गन्धो विद्यते यत्र स गन्धारः स एव गान्धारो, गन्धवाहविशेषः इत्यर्थः, अभाणि हि—"वायुः समुत्थितो नाभेः, कण्ठशीर्षसमाहतः। नानागन्धावहः पुण्यो, गन्धारस्तेन हेतुना ॥१॥" तथा मध्ये कायस्य भवो मध्यमः, यदवाचि—"वायुः समुत्थितो नाभेरुरोहृदि समाहतः। नाभिं प्राप्तो महानादो, मध्यमत्वं समश्नुते ॥१॥" तथा पञ्चानां षड्जादिस्वराणां निर्देशक्रममाश्रित्य पूरणः पञ्चमः अथवा पञ्चसु नाभ्यादिस्थानेषु मातीति पञ्चमः स्वरः, यदभ्यधायि—"वायुः समुत्थितो नाभेरुरोहृत्कण्ठशिरोहतः। पञ्चस्थानोत्थितस्यास्य, पञ्चमत्वं विधीयते ॥१॥" तथा अभिसन्धयते-अनुसन्धयति शेषस्वरानिति निरुक्तिवशाद् धैवतः, यदुक्तम्—"अभिसन्धयते यस्मादेतान् पूर्वोत्थितान् स्वरान्। तस्मादस्य स्वरस्यापि, धैवतत्वं विधीयते ॥१॥" पाठान्तरेण रैवतश्चेवेति, तथा निषीदन्ति स्वरा यस्मिन् स निषादः,

यतोऽभिहितं—"निषीदन्ति स्वरा यस्मान्निषादस्तेन हेतुना। सर्वांश्चाभिभवत्येष, यदादित्योऽस्य दैवतम् ॥१॥" इति, तदेवं स्वराः सप्त 'वियाहिय'त्ति व्याख्याताः, ननु कार्यं हि कारणायत्तं जिह्वा च स्वरस्य कारणं सा चासंख्येयरूपा ततः कथं स्वराणां संख्यातत्वमिति, उच्यते, असंख्याता अपि विशेषतः स्वराः सामान्यतः सर्वेऽपि सप्तस्वन्तर्भवन्ति, अथवा स्थूलस्वरान् गीतं चाश्रित्य सप्त उक्ताः, आह च—"कज्जं करणायत्तं जीहा य सरस्स ता असंखेज्जा। सरसंखमसंखेज्जा करणस्सासंखयत्ताओ ॥१॥ सत्त य सुत्तनिबद्धा कह न विरोहो? तओ गुरू आह। सत्तणुवाई सव्वे बायरगहणं च गेयं वा ॥२॥" इति। कार्यं कारणायत्तं स्वरस्य च जिह्वा ता असंख्येयाः स्वराः संख्येया असंख्याताः कारणस्यासंख्यत्वात् ॥१॥ सप्त च सूत्रे निबद्धाः कथं न विरोधः ततो गुरुराह सर्वेऽपि सप्तानुपातिनः स्थूलग्रहणमाश्रित्य गेयं वा ॥२॥ ] स्वरान्नामतोऽभिधाय कारणतस्तन्निरूपणायोपक्रमते—'एएसि णं'मित्यादि, तत्र नाभिसमुत्थः स्वरोऽविकारी आभोगेन अनाभोगेन वा यं प्रदेशं प्राप्य विशेषमासादयति तत्स्वरस्योपकारकमिति स्वरस्थानमुच्यते, 'सज्ज'मित्यादिश्लोकद्वयं, ब्रूयादिति सर्वत्र क्रिया, षड्जं तु प्रथमस्वरमेव अग्रभूता जिह्वा अग्रजिह्वा जिह्वाग्रमित्यर्थः तया, यद्यपि षड्जभणने स्थानान्तराण्यपि व्याप्रियन्ते अग्रजिह्वा वा स्वरान्तरेषु व्याप्रियते तथापि सा तत्र बहुतरव्यापारवतीतिकृत्वा तया तमेव ब्रूयादित्यभिहितं, उरो–वक्षस्तेन ऋषभस्वरं 'कंठुग्गएणं'ति कण्ठश्चासावुग्रकश्च–उत्कटः कण्ठोग्रकस्तेन कण्ठस्य वोग्रत्वं यत्तेन कण्ठोग्रत्वेन कण्ठाद्वा यदुद्गतं–उद्गतिः स्वरोद्गमलक्षणा क्रिया तेन कण्ठोद्गतेन गन्धारं, जिह्वाया मध्यो भागो मध्यजिह्वा तया मध्यमं, तथा दन्ताश्च ओष्ठौ च दन्तोष्ठं तेन धैवतं रैवतं वेति। 'जीवनिस्सिय'त्ति जीवाश्रिताः जीवेभ्यो वा निःसृता–निर्गताः, 'सज्ज'मित्यादिश्लोकः, 'नदति'रौति 'गवेलग'त्ति गावश्च एलकाश्च–ऊरणका गवेलकाः अथवा गवेलका–ऊरणका एव इति, 'अह कुसुम' इत्यादिरूपकं

गाथाभिधानं, "विषमाक्षरपादं वा पादैरसमं दशधर्मवत्। तत्रेऽस्मिन् यदसिद्धं, गाथेति तत् पण्डितैर्ज्ञेयम् ॥१॥" इति वचनात्, 'अथे'त्ति विशेषार्थः, विशेषार्थता चैवं-यथा गवेलका अविशेषेण मध्यमं स्वरं नदन्ति न तथा कोकिलाः पञ्चमं, अपि तु कुसुमसम्भवे काल इति, कुसुमानां बाहुल्यतो वनस्पतिषु सम्भवो यस्मिन् स तथा तत्र, मधाविित्यर्थः। 'अजीवनिस्सिय'त्ति तथैव नवरं जीवप्रयोगादेत इति। 'सज्ज'मित्यादि श्लोकः, मृदङ्गो-मर्दलः गोमुखी-काहला यतस्तस्या मुखे गोशृङ्गमन्यद्वा क्रियत इति, 'चउ' इत्यादिश्लोकाः चतुर्भिश्चरणैः प्रतिष्ठानं भुवि यस्याः सा तथा, गोधाचर्मणा अवनद्धेति गोधिका-वाद्यविशेषो दर्दरिकेति यत्पर्यायः, आडम्बरः-पटहः सप्तममिति-निषादं। 'एएसि ण'मित्यादि, 'सत्त'त्ति स्वरभेदात् सप्त स्वरलक्षणानि यथास्वं फलं प्रति प्रापणाऽव्यभिचारीणि स्वरूपाणि भवन्ति, तान्येव फलत आह—'सज्जेणे'त्यादि श्लोकाः सप्त, षड्जेन लभते वृत्तिं, अयमर्थः-षड्जस्येदं लक्षणं-स्वरूपमस्ति येन वृत्तिं-जीवनं लभते षड्जस्वरयुक्तः प्राणी, एतच्च मनुष्यापेक्षया लक्ष्यते, मनुष्यलक्षणत्वादस्येति, कृतं च न विनश्यति तस्येति शेषः, निष्फलारम्भो न भवतीत्यर्थः, गावो मित्राणि पुत्राश्च भवन्तीति शेषः,। 'एसज्जं'ति ऐश्वर्यं गन्धारे गीतयुक्तिज्ञा गर्यवृत्तयः-प्रधानजीविकाः कलाभिरधिकाः कवयः-काव्यकारिणः प्राज्ञाः-सद्बोधाः, ये च उक्तेभ्यो गीतयुक्तिज्ञादिभ्योऽन्ये शास्त्रपारगाः-धनुर्वेदादिपारगामिनस्ते भवन्तीति, शकुनेन-श्येनलक्षणेन चरन्ति-पापर्द्धिं कुर्वन्ति शकुनान् वा घ्नन्ति शाकुनिकाः, वागुरा-मृगबन्धनं तया चरन्तीति वागुरिकाः, शूकरेण शूकरवधार्थं चरन्तीति शूकरान् वा घ्नन्तीति शौकरिकाः, मौष्टिका-मल्ला इति, 'एतेषा मित्यादि, तत्र व्याख्यानगाथा—'सज्जाइ तिहा गामो ससमूहो मुच्छनाण विन्नेओ। ता सत्त एक्कमेक्के तो सत्त सराण इगवीसा ॥१॥ अन्नन्नसरविसेसे उप्पायंतस्स मुच्छणा भणिया। कत्ता व मुच्छिओ इव कुणई मुच्छं व सो वत्ति ॥२॥" कर्त्ता वा मूर्च्छित इव करोति,

मूर्च्छेनिव वा स कर्त्तेत्यर्थः, इह च मङ्गीप्रभृतीनामेकविंशतिर्मूर्छनानां स्वरविशेषाः पूर्वगते स्वरप्राभृते भणिताः, अधुना तु तद्विनिर्गतेभ्यो भरतवैशाखिलादिशास्त्रेभ्यो विज्ञेया इति। 'सत्तस्सरा कओ' गाहा, इह चत्वारः प्रश्नाः, तत्र कुत इति स्थानात् का योनिरिति–का जातिः तथा कति समया तेषु ते कतिसमयाः, उच्छ्रासाः किंपरिमाणकाला इत्यर्थः, तथाऽऽकाराः–आकृतयः स्वरूपाणीत्यर्थः, 'सत्तसरा' गाहा प्रश्ननिर्वचनार्था स्पष्टा, नवरं रुदितं योनिः–जातिः समानरूपतया यस्य तद् रुदितयोनिकं, पादसमया उच्छ्रासा–यावद्भिः समयैः पादो वृत्तस्य नीयते तावत्समया उच्छ्रासा गीते भवन्तीत्यर्थः, आकारानाह—'आई' गाहा, आदौ–प्राथम्ये मृदु–कोमलमादिमृदु गीतमिति गम्यते, आरभमाणाः, इह समुदितत्रयापेक्षं बहुवचनमन्यथा एक एव आकारो द्वयमन्यद् वक्ष्यमाणलक्षणमिति, तथा समुद्वहन्तश्च महत्तां गीतध्वनेरिति गम्यते, मध्यकारे–मध्यभागे, तथा अवसाने च क्षपयन्तो–गीतध्वनिं मन्द्रीकुर्वन्तस्त्रयो गीतस्याकारा भवन्ति, आदिमध्यावसानेषु गीतध्वनिः मृदुतारमन्द्रस्वभावः क्रमेण भवतीति भावः, किं चान्यत्—'छ दोसे' दारगाहा, षड् दोषा वर्जनीयाः, तानाह—'भीयं'गाहा, भीतं–त्रस्तमानसं १ द्रुतं–त्वरितं २ 'रहस्सं'ति ह्रस्वस्वरं लघुशब्दमित्यर्थः, पाठान्तरेण 'उप्पिच्छं' श्वासयुक्तं त्वरितं चेति उत्तालं–उत्प्राबल्यार्थे इत्यतितालमस्थानतालं वा, तालस्तु कंशिकादिशब्दविशेष इति ४, 'काकस्वरं' श्लक्ष्णाश्रव्यस्वरं, अनुनासं च–सानुनासिकं नासिकाकृतस्वरमित्यर्थः, किमित्याह–गायन् गानप्रवृत्तस्त्वं हे गायन! मा गासीः, किमिति?, यत एते गेयस्य षड् दोषा इति। अष्टौ गुणानाह—'पुन्नं' गाहा, पूर्णं स्वरकलाभिः १ रक्तं गेयरागेणानुरक्तस्य २ अलङ्कृतमन्यान्यस्वरविशेषाणां स्फुटशुभानां करणात् ३ व्यक्तमक्षरस्वरस्फुटकरणत्वात् ४ 'अविघुट्ठं' विक्रोशनमिव यन्न विस्वरं ५ मधुरं–मधुरस्वरं कोकिलारुतवत् ६ समं–तालवंशस्वरादिसमनुगतं ७ सुकुमारं–ललितं ललतीव यत् स्वरघोलना-

प्रकारेण शब्दस्पर्शनेन श्रोत्रेन्द्रियस्य सुखोत्पादनाद्वेति ८, एभिरष्टाभिर्गुणैर्युक्तं गेयं भवति, अन्यथा विडम्बना। किञ्चान्यत्—'उर'-गाहा, उरःकण्ठशिरःसु प्रशस्तं—विशुद्धं, अयमर्थो—यद्युरसि स्वरो विशालस्तत उरोविशुद्धं, कण्ठे यदि स्वरो वर्त्तितोऽस्फुटितश्च ततः कण्ठविशुद्धं, शिरसि प्राप्तो यदि नानुनासिकस्ततः शिरोविशुद्धं, अथवा उरःकण्ठःशिरःसु श्लेष्मणा अव्याकुलेषु विशुद्धेषु—प्रशस्तेषु यत्त-त्रेति, चकारो गेयगुणान्तरसमुच्चये गीयते—उच्चार्यते गेयमिति सम्बध्यते, किंविशिष्टमित्याह?—'मृदुकं' मधुरस्वरं 'रिभितं' यत्रा-क्षरेषु घोलनया संचरन् स्वरो रङ्गतीव घोलनाबहुलमित्यर्थः, 'पदबद्धं' गेयपदैर्निबद्धमिति, पदत्रयस्य कर्मधारयः, 'समतालपडु-क्खेव'मिति समशब्दः प्रत्येकं संबध्यते तेन समास्ताला—हस्ततालाः उपचारात् तद्रवो यस्मिंस्तत्समतालं तथा समः प्रत्युत्क्षेपः प्रतिक्षेपो वा—मुरजकंशिकाद्यातोद्यानां यो ध्वनिस्तल्लक्षणः नृत्यत्पादक्षेपलक्षणो वा यस्मिंस्तत्समप्रत्युत्क्षेपं समप्रतिक्षेपं वेति, तथा 'सत्तसरसीभ-र'मिति सप्त स्वराः 'सीभर'न्ति अक्षरादिभिः समा यत्र तत्सप्तस्वरसीभरं, ते चामी—'अक्खरसमं १ पयसमं २ तालसमं ३ लयसमं ४ गहसमं च ५। नीससिऊससियसमं ६ सञ्चारसमं ७ सरा सत्त ॥१॥' त्ति, इयं च गाथा स्वरप्रकरणोपान्ते 'तंतिसम'मित्यादिरधी-तापि इहाक्षरसममित्यादि व्याख्यायते, अनुयोगद्वारटीकायामेवमेव दर्शनादिति, तत्र दीर्घे अक्षरे दीर्घः स्वरः क्रियते ह्रस्वे ह्रस्वः प्लुते प्लुतः सानुनासिके सानुनासिकः तदक्षरसमं, तथा यद् गेयपदं—नामिकादिकमन्यतरन्न्धेन बद्धं यत्र स्वरे अनुपाति भवति तत्तत्र यत्र गीते गीयते तत्पदसममिति, यत्परस्पराहतहस्ततालस्वरानुवर्त्ति भवति तत्तालसमं, शृङ्गदार्वाद्यन्यतरमयेनाङ्गुलिकोशकेना-हताया तन्त्र्याः स्वरप्रकारो लयस्तमनुसरतो गातुर्यद्गेयं तल्लयसमं, प्रथमतो वंशतन्त्र्यादिभिर्यः स्वरो गृहीतस्तत्समं गीयमानं ग्रह-समं, निःश्वसितोच्छ्वसितमानमनतिक्रामतो यद्गेयं तन्निःश्वसितोच्छ्वसितसमं, तैरेव वंशतन्त्र्यादिभिर्यदङ्गुलिसञ्चारसमं गीयते तत्सञ्चा-

मूर्च्छेन्निव वा स कर्त्तेत्यर्थः, इह च मङ्गीप्रभृतीनामेकविंशतिच्मूर्छनानां स्वरविशेषाः पूर्वगते स्वरप्राभृते भणिताः, अधुना तु तद्वि निर्गतेभ्यो भरतवैशाखिलादिशास्त्रेभ्यो विज्ञेया इति। 'सत्तस्सरा कओ' गाहा, इह चत्वारः प्रश्नाः, तत्र कुत इति स्थानात् का योनिरिति–का जातिः तथा कति समया तेषु ते कतिसमयाः, उच्छ्वासाः किंपरिमाणकाला इत्यर्थः, तथाऽऽकाराः–आकृतयः स्वरूपाणीत्यर्थः, 'सत्तसरा' गाहा प्रश्ननिर्वचनार्था स्पष्टा, नवरं रुदितं योनिः–जातिः समानरूपतया यस्य तद् रुदितयोनिकं, पादसमया उच्छ्वासा–यावद्भिः समयैः पादो वृत्तस्य नीयते तावत्समया उच्छ्वासा गीते भवन्तीत्यर्थः, आकारानाह—'आई' गाहा, आदौ–प्राथम्ये मृदु–कोमलमादिमृदु गीतमिति गम्यते, आरभमाणाः, इह समुदितत्रयापेक्षं बहुवचनमन्यथा एक एव आकारो द्वयमन्यद् वक्ष्यमाणलक्षणमिति, तथा समुद्वहन्तश्च महत्तां गीतध्वनेरिति गम्यते, मध्यकारे–मध्यभागे, तथा अवसाने च क्षपयन्तो–गीतध्वनिं मन्द्रीकुर्वन्तस्त्रयो गीतस्याकारा भवन्ति, आदिमध्यावसानेषु गीतध्वनिः मृदुतारमन्द्रस्वभावः क्रमेण भवतीति भावः, किं चान्यत्— 'छ द्दोसे' दारगाहा, षट् दोषा वर्जनीयाः, तानाह—'भीयं'गाहा, भीतं–त्रस्तमानसं १ द्रुतं–त्वरितं २ 'रहस्सं'ति ह्रस्वस्वरं लघुशब्दमित्यर्थः, पाठान्तरेण 'उप्पिच्छं' श्वासयुक्तं त्वरितं चेति उत्तालं–उत्प्राबल्यार्थे इत्यतितालमस्थानतालं वा, तालस्तु कंशिकादिशब्दविशेष इति ४, 'काकस्वरं' श्लक्ष्णाश्रव्यस्वरं, अनुनासं च–सानुनासिकं नासिकाकृतस्वरमित्यर्थः, किमित्याह–गायन् गानप्रवृत्तस्त्वं हे गायन! मा गासीः, किमिति?, यत एते गेयस्य षट् दोषा इति। अष्टौ गुणानाह—'पुन्नं' गाहा, पूर्णं स्वरकलाभिः १ रक्तं गेयरागेणानुरक्तस्य २ अलङ्कृतमन्यान्यस्वरविशेषाणां स्फुटशुभानां करणात् ३ व्यक्तमक्षरस्वरस्फुटकरणत्वात् ४ 'अविघुट्ठं' विक्रोशनमिव यन्न विस्वरं ५ मधुरं–मधुरस्वरं कोकिलारुतवत् ६ समं–तालवंशस्वरादिसमनुगतं ७ सुकुमारं–ललितं ललतीव यत् स्वरघोलना-

प्रकारेण शब्दस्पर्शनेन श्रोत्रेन्द्रियस्य सुखोत्पादनाद्वेति ८, एभिरष्टाभिर्गुणैर्युक्तं गेयं भवति, अन्यथा विडम्बना। किञ्चान्यत्—'उर'-गाहा, उरःकण्ठशिरःसु प्रशस्तं-विशुद्धं, अयमर्थो-यद्युरसि स्वरो विशालस्तत उरोविशुद्धं, कण्ठे यदि स्वरो वर्त्तितोऽस्फुटितश्च ततः कण्ठविशुद्धं, शिरसि प्राप्तो यदि नानुनासिकस्ततः शिरोविशुद्धं, अथवा उरःकण्ठःशिरःसु श्लेष्मणा अव्याकुलेषु विशुद्धेषु-प्रशस्तेषु यत्त-त्तथेति, चकारो गेयगुणान्तरसमुच्चये गीयते-उच्चार्यते गेयमिति सम्बध्यते, किंविशिष्टमित्याह ?—'मृदुकं' मधुरस्वरं 'रिभितं' यत्रा-क्षरेषु घोलनया संचरन् स्वरो रङ्गतीव घोलनाबहुलमित्यर्थः, 'पदबद्धं' गेयपदैर्निबद्धमिति, पदत्रयस्य कर्म्मधारयः, 'समतालपडु-क्खेवं'ति समशब्दः प्रत्येकं संबध्यते तेन समास्ताला-हस्तताला उपचारात् तद्रवो यस्मिंस्तत्समतालं तथा समः प्रत्युत्क्षेपः प्रतिक्षेपो वा-मुरजकंशिकाद्यातोद्यानां यो ध्वनिस्तल्लक्षणः नृत्यत्पादक्षेपलक्षणो वा यस्मिंस्तत्समप्रत्युत्क्षेपं समप्रतिक्षेपं वेति, तथा 'सत्तसरसीभ-रं'ति सप्त स्वराः 'सीभर'न्ति अक्षरादिभिः समा यत्र तत्सप्तस्वरसीभरं, ते चामी—'अक्खरसमं १ पयसमं २ तालसमं ३ लयसमं ४ गहसमं च ५। नीससिऊससियसमं ६ सञ्चारसमं ७ सरा सत्त ॥१॥' त्ति, इयं च गाथा स्वरप्रकरणोपान्ते 'तंतिसम'मित्यादिरधी-तापि इहाक्षरसममित्यादि व्याख्यायते, अनुयोगद्वारटीकायामेवमेव दर्शनादिति, तत्र दीर्घे अक्षरे दीर्घः स्वरः क्रियते ह्रस्वे ह्रस्वः प्लुते प्लुतः सानुनासिके सानुनासिकः तदक्षरसमं, तथा यद् गेयपदं-नामिकादिकमन्यतरबन्धेन बद्धं यत्र स्वरे अनुपाति भवति तत्तत्रैव यत्र गीते गीयते तत्पदसममिति. यत्परस्पराहतहस्ततालस्वरानुवर्त्ति भवति तत्तालसमं, शृङ्गदार्वाद्यन्यतरमयेनाङ्गुलिकोशकेना-हतायास्तन्त्र्याः स्वरप्रकारो लयस्तमनुसरतो गातुर्यद्गेयं तल्लयसमं, प्रथमतो वंशतन्त्र्यादिभिर्यः स्वरो गृहीतस्तत्समं गीयमानं ग्रह-समं, निःश्वसितोच्छ्वसितमानमनतिक्रामतो यद्गेयं तन्निःश्वसितोच्छ्वसितसमं, तैरेव वंशतन्त्र्यादिभिर्यदङ्गुलिसञ्चारसमं गीयते तत्सञ्चा-

रसमं, गेयं च सप्त स्वरास्तदात्मकमित्यर्थः। यो गेये सूत्रबन्धः स एवमष्टगुण एव कार्य इत्याह—'निद्दोस' सिलोगो, तत्र निर्दोषं—"अलियमुवघायजणयं" इत्यादिद्वात्रिंशत्सूत्रदोषरहितं १ सारवद्—अर्थेन युक्तं २ हेतुयुक्तं—अर्थगमककारणयुक्तं ३ अलङ्कृतं—काव्यालङ्कारयुक्तं ४ उपनीतं—उपसंहारयुक्तं ५ सोपचारं—अनिष्ठुराविरुद्धालज्जनीयाभिधानं सोत्प्रासं वा ६ मितं पदपादाक्षरैः नापरिमितमित्यर्थः ७ मधुरं त्रिधा शब्दार्थाभिधानतो ८ गेयं भवतीति शेषः। 'तिन्नि य वित्ताइं'ति यदुक्तं तद्व्याख्या—'सम'सिलोगो, तत्र समं पादैरक्षरैश्च, तत्र पादैश्चतुर्भिरक्षरैस्तु—गुरुलघुभिः, अर्द्धसमं त्वेकतरसमं, विषमं तु सर्वत्र पादाक्षरापेक्षयेत्यर्थः, अन्ये तु व्याचक्षते—समं—यत्र चतुर्ष्वपि पादेषु समान्यक्षराणि, अर्द्धसमं यत्र प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च समत्वं, तथा सर्वत्र—सर्वपादेषु विषमं च—विषमाक्षरं यद् यस्माद्वृत्तं भवति ततस्त्रीणि वृत्तप्रजातानि—पद्यप्रकाराः, अत एव चतुर्थं नोपलभ्यत इति, 'दोन्नि य भणिइओ'त्ति अस्य व्याख्या—'सक्कया' सिलोगो, भणितिः—भाषा 'आहिया' आख्याता स्वरमण्डले—षड्जादिस्वरसमूहे, शेषं कण्ठ्यं। कीदृशी स्त्री कीदृशं गायतीति प्रश्नमाह—'केसी' गाहा, 'केसि'त्ति कीदृशी 'खर'न्ति खरस्थानं रूक्षं—प्रसिद्धं चतुरं—दक्षं विलम्बं—परिमन्थरं द्रुतं—शीघ्रमिति, 'विस्सरं पुण केरिसि'त्ति विस्सरं पुण केरिसित्ति गाथाधिकमिति, उत्तरमाह—'सामा'गाहा कण्ठ्या, 'पिंगल'त्ति कपिला, 'तंति'गाहा तंत्रीसमं—वीणादितंत्रीशब्देन तुल्यं मिलितं च, शेषं प्राग्वत्, नवरं 'पादो' वृत्तपादः, तंत्रीसममित्यादिषु गेयं सम्बन्धनीयं, तथा गेयस्य स्वरानर्थान्तरत्वादुक्तं 'संचारसमा सरा सत्त'त्ति अन्यथा सञ्चारसममिति वाच्यं स्यात्, तंतिसमा तालसमेत्यादि वेति, अयं च स्वरमण्डलसंक्षेपार्थः, 'सत्त सरा' सिलोगो, तता तंत्री तानो भण्यते, तत्र षड्जादिः स्वरः प्रत्येकं सप्तभिस्तानैर्गीयत इत्येवमेकोनपञ्चाशत्तानाः सप्ततंत्रीकायां वीणायां भवन्तीति, एवमेकतंत्रीकायां त्रितन्त्रीकायां च, कण्ठेनापि गीयमाना एको-

नपश्चागदेवेति ।

अनन्तरं गानतो लौकिकः कायक्लेश उक्तोऽधुना लोकोत्तरं तमेवाह—

सत्तविधे कायकिलेसे पण्णत्ते, तं०—ठाणातिते उक्कुडुयासणिते पडिमठाती वीरासणिते णेसज्जिते दंडा-तिते लगंडसाती (सू० ५५४) जंबुद्दीवे २ सत्त वासा पं०, तं०—भरहे एरवते हेमवते हेरन्नवते हरिवासे रम्मगवासे महाविदेहे। जंबुद्दीवे २ सत्त वासहरपव्वता पं०, तं०—चुल्लहिमवंते महाहिमवंते निसभे(ढे)नीलवंते रुप्पी सिहरी मंदरे। जम्बुद्दीवे २ सत्त महानदीओ पुरत्थाभिमुहीओ लवणसमुद्दं समप्पेंति, तं०—गङ्गा रोहिता हिरी सीता णरकंता सुवण्णकूला रत्ता। जम्बुदीवे २ सत्त महानतीओ पच्चत्थाभिमुहीओ लवणसमुद्दं समुप्पेंति, तं० —सिंधू रोहितंसा हरिकन्ता सीतोदा णारीकंता रुप्पकूला रत्तवती। धायइसंडदीवपुरच्छिमद्धे णं सत्त वासा पं० तं०—भरहे जाव महाविदेहे, धायइसंडदीवपुरच्छिमे णं सत्त वासहरपव्वता पं० तं०—चुल्लहिमवंते जाव मंदरे, धायइसंडदीवपुर० सत्त महानतीओ पुरच्छाभिमुहीतो कालोयसमुद्दं समप्पेंति, तं-गङ्गा जाव रत्ता, धायइसंडदीवपुरच्छिमज्झेणं सत्त महानतीओ पच्चत्थाभिमुहीओ लवणसमुद्दं समप्पेंति, तं०—सिंधू जाव रत्तवती, धायइसंडदीवे पच्चत्थिमद्धे णं सत्त वासा एवं चेव, णवरं पुरत्थाभिमुहीओ लवणसमुद्दं समप्पेंति पच्चत्थाभिमुहाओ कालोदं, सेसं तं चेव, पुक्खरवरदीवड्ढपुरच्छिमद्धे णं सत्त वासा तहेव, णवरं पुरत्थाभिमुहीओ पुक्खरोदं

समुद्दं समप्पेंति पचत्थाभिमुहीतो कालोदं समुद्दं समप्पेंति, सेसं तं चेव, एवं पचत्थिमद्धेवि, णवरं पुरत्थाभिमुहीओ कालोदं समुद्दं सम० पचत्थाभिमुहीओ पुक्खरोदं समप्पेंति, सव्वत्थ वासा वासहरपव्वता णतीतो य भाणितव्वाणि। (सू० ५५५)। जम्बुद्दीवे २ भारहे वासे तीताते उस्सप्पिणीते सत्त कुलगरा हुत्था, तं०—मित्तदामे सुदामे य, सुपासे य सयंपभे। विमलघोसे सुघोसे त, महाघोसे य सत्तमे ॥१॥ जंबुद्दीवे २ भारहे वासे इमीसे ओसप्पिणीए सत्त कुलगरा हुत्था—पढमित्थ विमलवाहण १ चक्खुम २ जसमं ३ चउत्थमभिचंदे ४। तत्तो य पसेणइ ५ पुण मरुदेवे चेव ६ नाभी य ७ ॥१॥ एएसि णं सत्तण्हं कुलगराणं सत्त भारियाओ हुत्था, तं०—चंदजसा १ चंदकांता २ सुरूव ३ पडिरूव ४ चक्खुकंता ५ य। सिरिकंता ६ मरुदेवी ७ कुलकरइत्थीण नामाइं ॥२॥ जंबुद्दीवे २ भारहे वासे आगमिस्साए उस्सप्पिणीए सत्त कुलकरा भविस्संति—मित्तवाहण सुभोमे य, सुप्पभे य सयंपभे। दत्ते सुहुमे [सुहे सुरूवे य] सुबंधू य, आगमेस्सिण होक्खती ॥१॥ विमलवाहणे णं कुलकरे सत्तविधा रुक्खा उवभोगत्ताते हव्वमागच्छिंसु, तं०—मत्तंगता त भिंगा चित्तंगा चेव होंति चित्तरसा। मणियंगा त अणियणा सत्तमगा कप्परुक्खा य ॥१॥ (सू० ५५६) सत्तविधा दंडनीती पं० तं०—हक्कारे मक्कारे धिक्कारे परिभासे मंडलबंधे चारते छविच्छेदे (सू० ५५७) एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स णं सत्त एगिंदियरतणा पं०, तं०—चक्करयणे १ छत्तरयणे २ चम्मरयणे ३ दंडरयणे ४ असिरयणे ५ मणिरयणे ६ काकणिरयणे ७। एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स सत्त पंचिंदियरतणा पं०, तं०—सेणावतीरयणे १ गाहावतिरयणे २ वड्ढतिरयणे ३

पुरोहियरयणे ४ इत्थिरयणे ५ आसरयणे ६ हत्थिरयणे ७ (सू० ५५८) सत्तहिं ठाणेहिं ओगाढं दुस्समं जाणेज्जा, तं०—अकाले वरिसइ १ काले ण वरिसइ २ असाधू पुज्जंति ३ साधू ण पुज्जंति ४ गुरूहिं जणो मिच्छं पडिवन्नो ५ मणोदुहता ६ वतिदुहता ७। सत्तहिं ठाणेहिं ओगाढं सुसमं जाणेज्जा, तं०—अकाले न वरसइ १ काले वरिसइ २ असाधू ण पुज्जंति ३ साधू पुज्जंति ४ गुरूहिं जणो सम्मं पडिवन्नो ५ मणोसुहता ६ वतिसुहता ७ (सू० ५५९)।

'सत्तविहे'त्यादि, प्रायः प्रागेव व्याख्यातमिदं तथापि किंचिल्लिख्यते, कायस्य-शरीरस्य क्लेशः-खेदः पीडा कायक्लेशो-बाह्यतपोविशेषः, स्थानायतिकः स्थानातिगः स्थानातिदो वा-कायोत्सर्गकारी, इह च धर्मधर्मिणोरभेदादेवमुपन्यासः, अन्यथा कायक्लेशस्य प्रक्रान्तत्वात् स एव वाच्यः स्यात, न तद्वान्, इह तु तद्वान्निर्दिष्ट इति, एवं सर्वत्र, उत्कटुकासनिकः-प्रतीतः, तथा प्रतिमास्थायी-भिक्षुप्रतिमाकारी वीरासनिको-यः सिंहासननिविष्टमिवास्ते, नैषधिकः-समपदपुतादिनिषद्योपवेशी दण्डायतिकः-प्रसारितदेहो लगण्डशायी-भूम्यलग्नपृष्ठः। इदं च कायक्लेशरूपं तपो मनुष्यलोक एवास्तीति तत्प्रतिपादनपरं 'जम्बुद्दीवे'त्यादि प्रकरणं, गतार्थं चैतत्। मनुष्यक्षेत्राधिकारात्तद्गतकुलकरकल्पवृक्षनीतिरत्नदुष्षमादिलिङ्गसूत्राणि पाठसिद्धानि चैतानि, नवरं 'आगमिस्सेण होक्खइ' त्ति आगमिष्यता कालेन हेतुना भविष्यतीत्यर्थः, तथा विमलवाहने प्रथमकुलकरे सति सप्तविधा इति पूर्वं दशविधा अभूवन् 'रुक्ख' त्ति कल्पवृक्षाः 'उवभोगत्ताए'त्ति उपभोग्यतया 'हव्वं' शीघ्रमागतवन्तः, भोजनादिसम्पादनेनोपभोगं तत्कालीनमनुष्याणामागता इत्यर्थः, 'मत्तंगया य' गाहा, 'मत्तंगया' इति मत्तं-मदस्तस्य कारणत्वान्मद्यमिह मत्तशब्देनोच्यते तस्याङ्गभूताः-कारभूणतास्तदेव

वाऽङ्गं—अवयवो येषां ते मत्ताङ्गकाः, सुखपेयमद्यदायिन इत्यर्थः, चकारः पूरणे, 'भिंग'त्ति संज्ञाशब्दत्वाद् भृङ्गारादिविविधभाजनसम्पादका भृङ्गाः, 'चित्तंग'त्ति चित्रस्य—अनेकविधस्य माल्यस्य कारणत्वाच्चित्राङ्गाः, 'चित्तरस'त्ति चित्रा—विचित्रा रसा—मधुरादयो मनोहारिणो येभ्यः सकाशात् सम्पद्यन्ते ते चित्ररसाः, 'मणियंग'त्ति मणीनां—आभरणभूतानामङ्गभूताः—कारणभूताः मणयो वा अङ्गानि—अवयवा येषां ते मण्यङ्गाः, भूषणसम्पादका इत्यर्थः, 'अणियण'त्ति अनग्नकारकत्वादनग्ना—विशिष्टवस्त्रदायिनः, संज्ञाशब्दो वाऽयमिति, 'कप्परुक्ख,त्ति उक्तव्यतिरिक्तसामान्यकल्पितफलदायित्वेन कल्पना कल्पस्तत्प्रधाना वृक्षाः कल्पवृक्षा इति । 'दंडनीइ' त्ति दण्डनं दण्डः—अपराधिनामनुशासनं, तत्र तस्य वा स एव वा नीतिः—नयो दण्डनीतिः, 'हक्कारे'त्ति ह इत्यधिक्षेपार्थस्तस्य करणं हक्कारः, अयमर्थः—प्रथमद्वितीयकुलकरकालेऽपराधिनो दण्डो हक्कारमात्रं, तेनैवासौ हृतसर्वस्वमिवात्मानं मन्यमानः पुनरपराधस्थाने न प्रवर्त्तत इति तस्य दण्डनीतिता, एवं मा इत्यस्य निषेधार्थस्य करणं—अभिधानं माकारः, तृतीयचतुर्थकुलकरकाले महत्यपराधे माकारो दण्डः इतरत्र तु पूर्व एवेति, तथा धिगधिक्षेपार्थ एव तस्य करणं—उच्चारणं धिक्कारः, पञ्चमषष्ठसप्तमकुलकरकाले महापराधे धिक्कारो दण्डो जघन्यमध्यमापराधयोस्तु क्रमेण हक्कारमाकाराविति, आह च—"पढमबीयाण पढमा तइयचउत्थाण अभिनवा बीया । पंचमछट्ठस्स य सत्तमस्स तइया अभिणवा उ ॥१॥" इति, [प्रथमद्वितीययोः प्रथमा तृतीयचतुर्थयोरभिनवा द्वितीया । पञ्चमषष्ठसप्तमानां तृतीयाऽभिनवा तु ॥१॥] तथा परिभाषणं परिभाषा—अपराधिनं प्रति कोपाविष्कारेण मा यासीरित्यभिधानं, तथा 'मण्डलबन्धो' मण्डलं—इङ्गितं क्षेत्रं तत्र बन्धो—नास्मात् प्रदेशाद् गन्तव्यमित्येवं वचनलक्षणं, पुरुषमण्डलपरिवारणलक्षणो वा, 'चारकं' गुप्तिगृहं 'छविच्छेदो' हस्तपादनासिकादिच्छेदः, इयमनन्तरा चतुर्विधा भरतकाले बभूव, चतसृणामन्त्यानामाद्यद्वयमृषभकाले अन्ये तु भरत-

काले इत्यन्ये, आह च—"परिभासणा उ पढमा मंडलिबंधंमि होइ बीया उ । चारग छविछेदादि भरहस्स चउव्विहा नीई ॥१॥ इति । [प्रथमा परिभाषणैव देशनिर्वासे द्वितीया चारकं छविच्छेदादिश्च भरतस्य चतुर्विधा नीतिः ॥१॥] 'चक्करयणे'त्यादि, 'रत्नं निगद्यते तत् जातौ जातौ यदुत्कृष्ट'मितिवचनात् चक्रादिजातिषु यानि वीर्यत उत्कृष्टानि तानि चक्ररत्नादीनि मन्तव्यानि, तत्र चक्रादीनि सप्तैकेन्द्रियाणि-पृथिवीपरिणामरूपाणि, तेषां च प्रमाणं—"चक्कं छत्तं दंडो तिन्निवि एयाइं वामतुल्लाइं। चम्मं दुहत्थदीहं बत्तीसं अंगुलाइं असी ॥१॥ चउरंगुलो मणी पुण तस्सद्धं चेव होइ विच्छिन्नो । चउरंगुलप्पमाणा सुवन्नवरकागणी नेया ॥१॥" [चक्रं छत्रं दण्डः त्रीण्यप्येतानि वामतुल्यानि । चर्म द्विहस्तदीर्घं द्वात्रिंशदंगुलान्यसिः ॥१॥ मणिः पुनः चतुरंगुलः तदर्द्धमेव विस्तीर्णो भवति । सुवर्णवरकाकिणी चतुरंगुलप्रमाणा ज्ञेया ॥२॥] सेनापतिः-सैन्यनायको गृहपतिः-कोष्ठागारनियुक्तः वर्द्धकी-सूत्रधारः पुरोहितः-शान्तिकर्मकारीति, चतुर्दशाप्येतानि प्रत्येकं यक्षसहस्राधिष्ठितानीति। 'ओगाढं'ति अवतीर्णा अवगाढां वा प्रकर्षप्राप्तामिति, अकालः-अवर्षा, असाधवः-असंयताः गुरुषु-मातापितृधर्माचार्येषु 'मिच्छं' मिथ्याभावं विनयभ्रंशमित्यर्थः 'प्रतिपन्नः' आश्रितः, 'मणोदुहय'त्ति मनसो मनसा वा दुःखिता-दुःखितत्वं दुःखकारित्वं वा द्रोहकत्वं वा, एवं 'वयदुहये'त्यपि व्याख्येयमिति । 'सम्मं'ति सम्यग्भावं विनयमित्यर्थः । एते च दुष्षमासुषमे संसारिणां दुःखाय सुखाय चेति संसारिप्ररूपणायाह—

सत्तविहा संसारसमावन्नगा जीवा पं० तं०-नेरतिता तिरिक्खजोणिता तिरिक्खजोणिणितो मणुस्सा मणुस्सीओ देवा देवीओ (सू० ५६०) सत्तविधे आउभेदे पं०, तं०—'अज्झवसाणनिमित्ते आहारे वेयणा पराघाते। फासे आणापाणू सत्तविधं भिज्जए आउं ॥१॥' (सू० ५६१) सत्तविधा सव्वजीवा पं०, तं०-पुढविकाइया आउ०

तेउ० वाउ० वणस्सति० तसकातिता अकातिता; अहवा सत्तविहा सव्वजीवा पं०, तं०—कण्हलेसा जाव सुक्कलेसा अलेसा (सू० ५६२)।

'सत्ते'त्यादि कण्ठयं, संसारिणां च संसरणं आयुर्भेदे सति भवतीति तद्दर्शयन्नाह—'सत्ते'त्यादि, तत्र 'आउयभेदे'त्ति आयुषो-जीवितव्यस्य भेदः-उपक्रमः आयुर्भेदः, स च सप्तविधनिमित्तप्रापितत्वात् सप्तविध एवेति, 'अज्झवसाण'गाहा, अध्यवसानं-रागस्नेहभयात्मकोऽध्यवसायो निमित्तं-दण्डकशाशस्त्रादीनि समाहारद्वन्द्वस्तत्र सति आयुर्भिद्यत इति सम्बन्धः, तथा आहारे-भोजनेऽधिके सति, तथा वेदना-नयनादिपीडा पराघातो गर्त्तपातादिसमुत्थः, इहापि समाहारद्वन्द्व एव तत्र सति, तथा स्पर्शे-तथाविधभुजङ्गादिसम्बन्धिनि सति, तथा 'आणापाणु'त्ति उच्छ्वासनिःश्वासौ निरुद्धावाश्रित्येति, एवं च सप्तविधं यथा भवति तथा भिद्यते आयुरिति, अथवा अध्यवसानमायुरुपक्रमकारणमिति शेषः, एवं निमित्तमित्यादि, यावदाणापाणुत्ति व्याख्येयं, प्रथमैकवचनान्तत्वादध्यवसानादिपदानां, एवं सप्तविधत्वादायुर्भेदहेतूनां सप्तविधं यथा भवति तथा भिद्यते आयुरिति, अयं चायुर्भेदः सोपक्रमायुषामेव नेतरेषामिति, आह-यद्येवं भिद्यते आयुस्ततः कृतनाशोऽकृत्याभ्यागमश्च स्यात्, कथं? संवत्सरशतमुपनिबद्धमायुस्तस्य अपान्तराल एव व्यपगमात्कृतनाशो येन च कर्मणा तद्भिद्यते तस्याकृतस्यैवाभ्यागमः, एवं च मोक्षनाश्वासः ततश्चारित्राप्रवृत्त्यादयो दोषा इति, आह च—"कम्मोवक्कामिज्जइ अपत्तकालंपि जइ तओ पत्ता। अकयागमकयनासा मोक्खाणासासओ दोसा ॥१॥" [अप्राप्तकाले यदि कर्म उपक्रम्यते ततोऽकृतागमकृतनाशान्मोक्षेऽनाश्वासः दोषाः ॥१॥] अत्रोच्यते-यथा वर्षशतभोग्यभक्तमप्यग्निकव्याधितस्याल्पेनापि कालेनोपभुञ्जानस्य न कृतनाशो नाप्यकृताभ्यागमस्तद्वदिहापीति, आह च—"न हि दीहकालियस्सवि णासो तस्साणुभूइओ खिप्पं। बहुकालाहारस्स व दुयम-

ग्गियरोगिणो भोगो ॥१॥ सव्वं च पएसतया भुञ्जइ कम्ममणुभागओ भइयं । तेणवस्साणुभवे के कयनासादओ तस्स ? ॥२॥ किंचिदकालेवि फलं पाइज्जइ पचए य कालेणं । तह कम्मं पाइज्जइ कालेण वि पचए अन्नं ॥३॥ जह वा दीहा रज्जू डज्झइ कालेण पुंजिया खिप्पं । वितओ पडो उ सुस्सइ पिंडीभूओ उ कालेणं ॥४॥" इत्यादि [अग्निरोगिणो बहुकालाहारस्य भोग इव दीर्घकालिकस्यापि तस्य क्षिप्रमनुभूतितो नोक्तो नाशलक्षणो दोषः ॥१॥ सर्वं च कर्म प्रदेशतया भुज्यतेऽनुभागतो भक्तं तेनावश्यानुभवे कर्मणः के कृतनाशाद्यस्तस्य ? ॥२॥ किंचित्फलमकालेऽपि पाच्यतेऽन्यत्कालेन पच्यते तथा कर्म पाच्यतेऽन्यत्कालेनापि पाच्यते ॥३॥ यथा दीर्घा रज्जुः कालेन दह्यते पुंजिता क्षिप्रं क्षिप्रं विततः पटः शुष्यति पिण्डीभूतस्तु कालेन ॥४॥] अयं चायुर्भेदः कथञ्चित्सर्वजीवानामस्तीति तानाह—'सव्वे' त्यादि सूत्रद्वयं कण्ठ्यं, नवरं सर्वे च ते जीवाश्चेति सर्वजीवाः, संसारिमुक्ता इत्यर्थः, तथा 'अकाइय'त्ति सिद्धाः पड्विधकायान्यपदेश्यत्वादिति, अलेश्याः—सिद्धाः अयोगिनो वेति ॥

अनन्तरं कृष्णलेश्यादयो जीवभेदा उक्ताः, तत्र च कृष्णलेश्यः सन्नारकोऽप्युत्पद्यते ब्रह्मदत्तवदिति ब्रह्मदत्तस्वरूपाभिधानायाह—

बंभदत्ते णं राया चाउरंतचक्कवट्टी सत्त धणूइं उड्ढं उच्चत्तेणं सत्त य वाससयाइं परमाउं पालइत्ता कालमासे कालं किच्चा अधे सत्तमाए पुढवीए अप्पतिट्ठाणे णरए णेरतितत्ताए उववन्ने (सू० ५६२) मल्ली णं अरहा अप्पसत्तमे मुंडे भवित्ता अगारातो अणगारियं पव्वइए, तं०—मल्ली विदेहरायवरकन्नगा १ पडिबुद्धी इक्खागराया २ चंदच्छाये अंगराया ३ रुप्पी कुणालाधिपती ४ संखे कासीराया ५ अदीणसत्तू कुरुराता ६ जितसत्तू

पंचालराया, (सू० ५६४)।

'बंभदत्ते'त्यादि सुगमं ॥ ब्रह्मदत्त उत्तमपुरुष इति तदधिकारात् उत्तमपुरुषविशेषस्थानोत्पन्नमल्लिवक्तव्यतामाह—'मल्ली ण' मित्यादि, मल्लिरर्हन् 'अप्पसत्तमे'त्ति आत्मना सप्तमः–सप्तानां पूरणः आत्मा वा सप्तमो यस्यासावात्मसप्तमो, मल्लिशब्दस्य स्त्रीलिङ्गत्वेऽप्यर्हच्छब्दापेक्षया पुंनिर्देशः, विदेहजनपदराजस्य वरकन्या विदेहराजवरकन्या १, तथा प्रतिबुद्धिर्नाम्ना इक्ष्वाकुराजः साकेतनिवासी २, चन्द्रच्छायो नाम अङ्गजनपदराजश्चम्पानिवासी ३, रुक्मी नाम कुणालजनपदाधिपतिः श्रावस्तीवास्तव्यः ४, शङ्खो नाम काशीजनपदराजो वाराणसीनिवासी ५, अदीनशत्रुर्नाम्ना कुरुदेशनाथः हस्तिनागपुरवास्तव्यः ६, जितशत्रुर्नाम पञ्चालजनजपदराः काम्पिल्यनगरनायक इति ७, आत्मसप्तमत्वं च भगवतः प्रव्रज्यायामभिहितप्रधानपुरुषप्रव्रज्याग्रहणाभ्युपगमापेक्षयाऽवगन्तव्यं, यतः प्रव्रजितेन तेन ते प्रव्राजिताः, तथा त्रिभिः पुरुषशतैः बाह्यपरिषदा त्रिभिश्च स्त्रीशतैरभ्यन्तरपरिषदाऽसौ संपरिवृतः परिव्रजित इति ज्ञातेषु श्रूयत इति, उक्तं च—"पासो मल्ली तिहिं तिहिं सएहिं"ति, [पार्श्वो मल्ली च त्रिभिस्त्रिभिः शतैः] एवमन्येष्वपि विरोधाभासेषु विषयविभागाः सम्भवन्तीति निपुणैर्गवेषणीयाः, शेषं सुगममिति, इत्थं चैतच्चरितं मल्लिज्ञाताध्ययने श्रूयते—जम्बूद्वीपेऽपरविदेहे सलिलावतीविजये वीतशोकायां राजधान्यां महाबलाभिधानो राजा षड्भिर्बालवयस्यैः सह प्रव्रज्यां प्रतिपेदे, तत्र महाबलस्तैर्वयस्यानगारैरूचे–यद्भवांस्तपस्तपस्यति तद्वयमपीत्येवं प्रतिपन्नेषु तेषु यदा ते तमनुसरन्तश्चतुर्थादि विदधुस्तदाऽसावष्टमादि व्यधासीद् , एवं च स्त्रीनामगोत्रकर्मासौ बबन्ध अर्हदादिवात्सल्यादिभिश्च हेतुभिस्तीर्थकरनामेति, ततस्ते जीवितक्षयाज्ञयन्ताभिधानविमाने अनुत्तरसुरत्वेनोत्पेदिरे, ततश्च्युत्वा महाबलो विदेहेषु जनपदेषु मिथिलायां राजधान्यां कुम्भकराजस्य

प्रभावत्या देव्यास्तीर्थंकरीत्वेन समजनि, मल्लिरिति नाम च पितरौ चक्रतुः, तदन्ये तु यथोक्तेषु साकेतादिषु सञ्जज्ञिरे, ततो मल्ली देशोनवर्षशतजाता अवधिना तानाभोगयाञ्चकार, तत्प्रतिबोधनार्थं च गृहोपवने षड्गर्भगृहोपेतं तन्मध्यभागे च कनकमयीं शुषिरां मस्तकछिद्रां पद्मपिधानां स्वप्रतिमां कारयामास, तस्यां चानुदिवसं स्वकीयभोजनकवलं प्रक्षेपयामास, इतश्च साकेते प्रतिबुद्धिराजः पद्मावत्या देव्या कारिते नागयत्ने जलजादिभास्वरपञ्चवर्णकुसुमनिर्मितं श्रीदामगण्डकं दृष्ट्वा अहोऽपूर्वभक्तिकं इदमिति विस्मयादमात्यमुवाच–दृष्टं क्वापीदमीदृशमिति ?, सोऽवोचत्–मल्लिविदेहवरराजकन्यासत्कश्रीदामगण्डापेक्षयेदं लक्षांशेऽपि शोभया न वर्त्तते, ततो राजाऽवादि–सा पुनः कीदृशी ?, मन्त्री जगाद–अन्या नास्ति तादृशीत्युपश्रुत्य सञ्जातानुरागोऽसौ मल्लिवरणार्थं दूतं विससर्ज १। तथा चम्पायां चन्द्रच्छायराजः कदाचिदर्हन्नकाभिधानेन श्रावकेण पोतवणिजा चम्पावास्तव्येन यात्रामतिनिवृत्तेन दिव्ये कुण्डलयुग्मे कौशलिकतयोपनीते सति पप्रच्छ, यदुत–यूयं बहुशः समुद्रं लङ्घयथ, तत्र च किञ्चिदाश्चर्यमपश्यत ?, सोऽवोचत्–स्वामिन्नस्यां यात्रायां समुद्रमध्येऽस्माकं धर्मचालनार्थं देवः कश्चिदुपसर्गं चकार, अविचलने चास्माकं तुष्टेन तेन कुण्डलयुगलद्वितयमदायि, तदेकं कुम्भकस्य अस्माभिरुपनिन्ये, तेनापि मल्लिकन्यायाः कर्णयोः स्वकरेण विन्यासि, सा च कन्या त्रिभुवनाश्चर्यभूता दृष्टा, इति श्रुत्वा तथैव दूतं प्रेषयामास २। तथा श्रावस्त्यां रुक्मिराजः सुबाह्वभिधानायाः स्वदुहितुश्चातुर्मासिकमज्जनमहोत्सवे नगरीचतुष्पथनिवेशितमहामण्डपे विभूत्या मज्जितां तां तत्रैवोपविष्टस्य पितुः पादवन्दनार्थमागतां अङ्के निवेश्य तल्लावण्यमवलोकयन् व्याजहार, यदुत भो वर्षधर दृष्ट ईदृशोऽन्यस्याः कस्याश्चिदपि कन्यायाः मज्जनकमहोत्सवः ?, सोऽवोचद्–देव ! विदेहवरराजकन्यासत्कमज्जनोत्सवापेक्षया अयं लक्षांशेऽपि रमणीयतया न वर्त्तत इत्युपश्रुत्य तथैव दूतं प्रेषयति स्मेति ३। तथा अन्यदा मल्लिसत्कदिव्यकुण्डलयु-

ग्मसन्धिर्विजघटे, तत्सङ्घट्टनार्थं कुम्भकेन सुवर्णकाराः समादिष्टास्तथैव कर्त्तुं तमशक्नुवन्तश्च नगर्या निष्कासिताः, वाणारस्यां शङ्खराजमाश्रिताः, भणिताश्च ते तेन–केन कारणेन कुम्भेन निष्काशिता यूयं ?, तेऽभिदधुः–मल्लिकन्यासत्कविघटितकर्णकुण्डलसन्धानाशकनेनेति, ततः कीदृशी सेति पृष्टेभ्यस्तेभ्यो मल्लिरूपमुपश्रुत्य तथैव दूतं प्राहिणोत् ४। तथा कदाचिन्मल्लया मल्लदिन्नाभिधानोऽनुजो भ्राता सभां चित्रकरैश्चित्रयामास, तत्रैकेन चित्रकरयूना लब्धिविशेषवता यवनिकान्तरिताया मल्लिकन्यायाः पादाङ्गुष्ठमुपलभ्य तदनुसारेण मल्लिसदृशमिव तद्रूपं निर्वर्त्तितं, ततश्च मल्लदिन्नकुमारः सान्तःपुरश्चित्रसभायां प्रविवेश, विचित्राणि च चित्ररूपाण्यवलोकयन् मल्लिरूपं ददर्श, साक्षान्मल्लीयमिति मन्यमानो ज्येष्ठाया भगिन्या गुरुदेवभूताया अहमग्रतोऽविनयेनायात इति भावयन् परमव्रीडां जगाम, ततस्तद्धात्री चित्रमिदमिति न्यवेदयत्, ततोऽसावस्थाने तेनेदं लिखितमिति कुपितस्तं वध्यमाज्ञापितवान्, चित्रकरश्रेणी तु तं ततो मोचयामास, तथापि कुमारः सन्दशकं छेदयित्वा तं निर्विषयमादिदेश, स च हस्तिनागपुरे अदीनशत्रुराजमुपाश्रितः, ततो राजा तन्निर्गमकारणं पप्रच्छ, तेन च तथैव कथिते दूतं प्रहिणोति स्मेति ५। तथा कदाचिच्चोक्षाभिधाना परिव्राजिका मल्लिभवनं प्रविवेश, तां च दानधर्मं च शौचधर्मं चोद्ग्राहयन्तीं मल्लिस्वामिनी निर्जिगाय, निर्जिता च सती सा कुपिता काम्पिल्यपुरे जितशत्रुराजमुपाश्रिता, भणितं च नरपतिना–चोक्षे! बहुत्र त्वं संचरस्यतोऽद्राक्षीः काञ्चित्क्वचिदस्मदन्तःपुरपुरन्ध्रीसदृशीं ?, सा व्याजहार–विदेहवरराजकन्यापेक्षया युष्मत्पुरन्ध्रयो लक्षांशेऽपि रूपसौभाग्यादिभिर्गुणैर्न वर्त्तन्त इति श्रुत्वा तथैव दूतं विसर्जितवानिति ६। एवमेते षडपि दूताः कुम्भकं कन्यां याचितवन्तः, स च तानपद्वारेण निष्काशितवान्, दूतवचनाकर्णनाज्जातकोपाः षडपि अविक्षेपेण मिथिलां प्रति प्रतस्थुः, आगच्छतश्च तानुपश्रुत्य कुम्भकः सबलवाहनो देशसीमान्ते गत्वा रणरङ्गरसिकतया तान् प्रतीक्षमाणस्तस्थौ, आयातेषु तेषु लग्नमायोधनं, बहुत्वात्

परबलस्य निहतकतिपयप्रधानपुरुषमतिनिशितशरशतजर्जरितजयकुञ्जरमतिखरक्षुरप्रप्रहारोपप्लुतवाजिविसरविक्षिप्ताश्ववारमुत्तङ्गमत्तमतङ्गजर्नाशितचक्रिचक्रमुल्लूनच्छत्रं पतत्पताकं कान्दिशीककातरं कुम्भकसैन्यं भङ्गमगमत्, ततोऽसौ निवृत्त्य रोधकसज्जः सन्नासामासे, ततस्तज्जयोपायमलभमानमतिव्याकुलमानसं जनकमवलोक्य मल्ली समाश्वासयन्ती समादिदेश, यदुत–भवते दीयते कन्येत्येवं प्रतिपादनपरम्परप्रच्छन्नपुरुषप्रत्येकप्रेषणोपायेन पुरि पार्थिवाः षडपि प्रवेश्यन्तां, तथैव कृतं, प्रवेशितास्ते, पूर्वरचितगर्भगृहेषु मल्लिप्रतिमामवलोक्य च ते सेयं मल्लीति मन्यमानास्तद्रूपयौवनलावण्येषु मूर्च्छिता निर्निमेषदृष्ट्या तामेवावलोकयन्तस्तिष्ठन्ति स्म, ततो मल्ली तत्राजगाम, प्रतिमायाः पिधानं चापससार, ततस्तस्या गन्धः सर्पादिकमृतकगन्धातिरिक्त उद्धाव, ततस्ते नासिकां पिदधुः पराङ्मुखाश्च तस्थुः, मल्ली च तानेवमवादीत्–किन्तु भो भूपा! यूयमेवं पिहितनासिकाः पराङ्मुखीभूताः?, ते ऊचुः–गन्धेनाभिभूतत्वात्, पुनः साऽवोचत्–यदि भो देवानां प्रियाः! प्रतिदिनमतिमनोज्ञाहारकवलक्षेपेणैवंरूपः पुद्गलपरिणामः प्रवर्त्तते कीदृशः पुनरस्यौदारिकस्य शरीरस्य खेलवान्तपित्तशुक्रशोणितपूयाश्रवस्य दुरन्तोच्छ्वासनिश्वासस्य पूतिपुरीषपूर्णस्य चयापचयिकस्य शटनपतनविध्वंसनधर्म्मकस्य परिणामो भविष्यतीति?, ततो मा यूयं मानुष्यककामेषु सजत, किं च—"किं थ तयं पम्हुट्ठं जं थ तया भो जयंतपवरंमि। वुच्छा समयनिबद्धं देवा! तं संभरह जाइं ॥१॥" इति [किञ्च तद्विस्मृतं यत्तदा जयंतप्रवरे विमाने व्युषिताः समयनिबद्धं तां जातिं देवा भो संस्मरत ॥१॥] भणिते सर्वेषामुत्पन्नं जातिस्मरणं, अथ मल्लिरवादीत्–अहं भोः! संसारभयात् प्रव्रजिष्यामि, यूयं किं करिष्यथ?, ते ऊचुः–वयमप्येवं, ततो मल्लिरवोचत्–यद्येवं ततो गच्छत स्वनगरेषु स्थापयत पुत्रान् राज्येषु ततः प्रादुर्भवत ममान्तिकमिति, तेऽपि तथैव प्रतिपेदिरे, ततस्तान् मल्ली गृहीत्वा कुम्भकराजान्तिकमाजगाम, तस्य तान् पादयोः पातयामास, कुम्भकराजोऽपि तान् महता प्र-

मोदेनापूपुजत् स्वस्थानेषु च विससर्जेति, मल्ली च सांवत्सरिकमहादानानन्तरं पोषशुद्धैकादश्यामष्टमभक्तेनाश्विनीनक्षत्रे तैः षड्भिर्नृपतिभिर्नन्दनन्दिमित्रादिभिर्नागवंशकुमारैस्तथा बाह्यपर्षदा पुरुषाणां त्रिभिः शतैरभ्यन्तरपर्षदा च त्रिभिः शतैः सह प्रवव्राज, उत्पन्नकेवलश्च तान् प्रव्राजितवानिति ।

एते च सम्यग्दर्शने सति प्रव्रजिता इति सामान्यतो दर्शननिरूपणायाह—

सत्तविहे दंसणे पं० तं०—सम्मदंसणे मिच्छदंसणे सम्मामिच्छदंसणे चक्खुदंसणे अचक्खुदंसणे ओहिदंसणे केवलदंसणे (सू० ५६५) छउमत्थवीयरागे णं मोहणिज्जवज्जाओ सत्त कम्मपयडीओ वेयेति, तंजहा—णाणावरणिज्जं दंसणावरणिज्जं वेयणियं आउयं नामं गोतमंतराततिं (सू० ५६६) सत्त ठाणाइं छउमत्थे सव्वभावेणं न याणति न पासति, तं०—धम्मत्थिकायं अधमत्थिकायं आगासत्थिकायं जीवं असरीरपडिबद्धं परमाणुपोग्गलं सद्दं गंधं, एयाणि चेव उप्पन्नणाणे जाव जाणति पासति, तं०—धम्मत्थिगातं जाव गंधं (सू० ५६७) समणे भगवं महावीरे वयरोसभणारायसंघयणे समचउरंससंठाणसंठिते सत्त रयणीओ उड्ढं उच्चत्तेणं हुत्था (सू० ५६८) सत्त विकहाओ पं०, तं०—इत्थिकहा भत्तकहा देसकहा रायकहा मिउकालणिता दंसणभेयणी चरित्तभेयणी (सू० ५६९) आयरियउवज्झायस्स णं गणंसि सत्त अइसेसा पं०, तं०—आयरियउवज्झाए अंतो उवस्सगस्स पाते णिगिज्झिय २ पप्फोडेमाणे वा पमज्जमाणे वा णातिक्कमति, एवं जधा पश्चट्ठाणे जाव बाहिं उवस्सगस्स एगरातं

वा दुरातं वा वसमाणे नातिक्कमति. उवकरणातिसेसे भत्तपाणातिसेसे (सू० ५७०) सत्तविधे संजमे पं०, तं०—पुढविकानितसंजमे जाव तसकातितसंजमे अजीवकायसंजमे। सत्तविधे असंजमे पं० तं०—पुढविकातितअसंजमे जाव तसकातिनअसंजमे अजीवकायअसंजमे। सत्तविहे आरम्भे पं० तं०—पुढविकातितआरम्भे जाव अजीवकानआरंभे। एवमणारम्भेवि, एवं सारम्भेवि, एवमसारम्भेवि, एवं समारम्भेवि, एवं असमारम्भेवि, जाव अजीवकायअसमारंभे (सू० ५७१)।

'दंसणे'त्यादि सुगमं, परं सम्यग्दर्शनं-सम्यक्त्वं मिथ्यादर्शनं-मिथ्यात्वं सम्यग्मिथ्यादर्शनं-मिश्रमिति, एतच्च त्रिविधमपि दर्शनमोहनीयभेदानां क्षयक्षयोपशमोदयेभ्यो जायते तथाविधरुचिस्वभावं चेति, चक्षुर्दर्शनादि तु दर्शनावरणीयभेदचतुष्टयस्य यथासम्भवं क्षयोपशमक्षयाभ्यां जायते सामान्यग्रहणस्वभावं चेति, तदेवं श्रद्धानसामान्यग्रहणयोर्दर्शनशब्दवाच्यत्वाद्दर्शनं सप्तधोक्तमिति। अनन्तरं केवलदर्शनमुक्तं, तच्च छद्मस्थावस्थाया अनन्तरं भवतीति छद्मस्थप्रतिबद्धं सूत्रद्वयं, विपर्ययसूत्रं च 'छउमत्थे'त्यादि सुगमं, नवरं छद्मनि-आवरणद्वयरूपे अन्तराये च कर्म्मणि तिष्ठतीति छद्मस्थः-अनुत्पन्नकेवलज्ञानदर्शनः स चासौ वीतरागश्च-उपशान्तमोहत्वात् क्षीणमोहत्वाद्वा विगतरागोदय इत्यर्थः, 'सत्त'त्ति मोहस्य क्षयादुपशमाद्वा नाष्टावित्यर्थः, अत एवाह—'मोहणिज्जवज्जाउ'त्ति। एतान्येव च जिनो जानातीत्युक्तं, स च वर्त्तमानतीर्थे महावीर इति तत्स्वरूपं तत्प्रतिषिद्धविकथाभेदांश्चाह—'समणे' इत्यादि सूत्रद्वय सुगमं, नवरं 'विकहाउ'त्ति चतस्रः प्रसिद्धाः व्याख्याताश्चेति 'मिउकालुणिय'त्ति श्रोतृहृदयमार्दवजननात् मृद्वी सा चासौ कारुणिकी च-कारुण्यवती मृदुकारुणिकी-पुत्रादिवियोगदुःखदुःखितमात्रादिकृतकारुण्यरसगर्भप्रलापप्रधानेत्यर्थः, तद्यथा—"हा पुत्त पुत्त! हा

वच्छ ! वच्छ मुक्कामि कहमणाहाहं ? । एवं कलुणविलावा जलंतजलणेऽज्ज सा पडिया ॥१॥" इति, [हा पुत्र पुत्र हा वत्स वत्स ! कथमनाथाऽहं मुक्ताऽस्मि ? । एवं कारुणिकप्रलापा ज्वलज्ज्वलने साऽद्य पतिता ॥१॥] दर्शनभेदिनी ज्ञानाद्यतिशयितकुतीर्थिकप्रशंसादिरूपा, तद्यथा–'सूक्ष्मयुक्तिशतोपेतं, सूक्ष्मबुद्धिकरं परम् । सूक्ष्मार्थदर्शिभिर्दृष्टं, श्रोतव्यं बौद्धशासनम् ॥१' इत्यादि, एवं हि श्रोतॄणां तदनुरागात् सम्यग्दर्शनभेदः स्यादिति, चारित्रभेदिनी न संभवन्तीदानीं महाव्रतानि साधूनां प्रमादबहुलत्वादतिचारप्रचुरत्वादतिचारशोधकाचार्यतत्कारकसाधुशुद्धीनामभावादिति ज्ञानदर्शनाभ्यां तीर्थं वर्त्तत इति ज्ञानदर्शनकर्त्तव्येष्वेव यत्नो विधेय इति, भणितं च—"सोही य नत्थि नवि दिंत करेंता नविय केइ दीसन्ति । तित्थं च नाणदंसण निज्जवगा चेव वोच्छिन्ना ॥१॥" इत्यादि, [नास्ति च शोधिर्नापि दातारः नापि च केचिदपि कर्त्तारो दृश्यन्ते ज्ञानदर्शनाभ्यां तीर्थं च नियामका व्युच्छिन्नाः ॥१॥] अनया हि प्रतिपन्नचारित्रस्यापि तद्वैमुख्यमुपजायते किं पुनस्तदभिमुखस्येति चारित्रभेदिनीति ॥ विकथासु च वर्त्तमानान् साधूनाचार्या निषेधयन्ति सातिशयत्वात्तेषामिति तदतिशयप्रतिपादनायाह—'आयरिए'त्यादि, पञ्चस्थानके व्याख्यातप्रायं तथापि किञ्चिदुच्यते–आचार्योपाध्यायो निगृह्य निगृह्य-अन्तर्भूतकारितार्थत्वेन पादधूल्याः प्रसरन्त्या निग्रहं कारयित्वा २ प्रस्फोटयन्–पादप्रोञ्छनेन वैयावृत्त्यकरादिना प्रस्फोटनं कारयन् प्रमार्जयन्–प्रमार्जनं कारयन्नाज्ञामतिक्रामति, शेषसाधवः उपाश्रयाद्बहिरिदं कुर्वन्तीत्याचार्यादेरतिशयः, 'एव'मित्यादिनेदं सूचितं "आयरियउवज्झाए अन्तो उवस्सयस्स उच्चारपासवणं विगिंचेमाणे वा विसोहेमाणे वा णाइक्कमइ २ आयरियउवज्झाए पभू इच्छा वेयावडियं करेज्जा इच्छा नो करेज्जा ३, आयरियउवज्झाए अन्तो उवस्सयस्स एगरायं वा दुरायं वा संवसमाणे नाइक्कमइ ४ आयरियउवज्झाए बाहिं उवस्सयस्स एगरायं वा दुरायं वा संवसमाणे णाइक्कमइ ५" एतद् व्याख्यातमेवेति, इदमधिकं—

उपकरणातिशेषः-शेषसाधुभ्यः सकाशात् प्रधानोज्ज्वलवस्त्राद्युपकरणता, उक्तं च—"आयरियगिलाणाणं मइला मइला पुणोवि धोवंति। मा हु गुरूण अवन्नो लोगम्मि अजीरणं इयरे ॥१॥" इति, [आचार्याणां ग्लानानां च मलिनानि २ पुनः २ क्षालयन्ति गुरूणामवज्ञा मा भूत् लोके ग्लानानामजीर्णं च ॥१॥] (ग्लान इत्यर्थः) भक्तपानातिशेषः-पूज्यतरभक्तपानतेति, उक्तं च—"कलमोयणो उ पयसा परिहाणी जाव कोद्दवुब्भज्ञी। तत्थ उ मिउ तुप्पतरं जत्थ य जं अच्चियं दोसुं ॥१॥" [पयसा कलमौदनो यावत् परिहान्या कोद्रवोद्धाजी तत्रापि मृदु स्निग्धतरं यत्र क्षेत्रकालयोर्यदर्चितं च ॥१॥] ('कोद्दवुब्भज्जि'त्ति कोद्दवजाउलयं 'दोसु'त्ति क्षेत्रकालयोरिति) गुणाश्चैते—"सुत्तत्थथिरीकरणं विणओ गुरुपूय सेहबहुमाणो। दाणवइसद्धवुड्ढी बुद्धीबलवद्धणं चेव ॥१॥" इति। [सूत्रार्थस्थिरीकरणं विनयो गुरुपूजा शैक्षबहुमानः दानपतिश्रद्धावृद्धिः बुद्धिबलवर्द्धनं चैव ॥१॥]॥ एते चाचार्यातिशयाः संयमोपकारायैव विधीयन्ते न रागादिनेति संयमं तद्विपक्षभूतमसंयमं चासंयमभेदभूतारम्भादित्रयं च सविपक्षं प्रतिपादयन् सूत्राष्टकं सातिदेशमाह—'सत्तविहे' इत्यादि, सुगमं, नवरं संयमः-पृथिव्यादिविषयेभ्यः सङ्घट्टपरितापोपद्रावणेभ्यः उपरमः, 'अजीवकायसंजमे'त्ति अजीवकायानां-पुस्तकादीनां ग्रहणपरिभोगोपरमः, असंयमस्त्वनुपरमः, आरम्भादयोऽसंयमभेदाः, तल्लक्षणमिदं प्रागभिहितम्—"आरम्भो उद्दवओ परितावकरो भवे समारम्भो। संकप्पो संरम्भो सुद्धनयाणं तु सव्वेसिं ॥१॥" इति, [आरम्भ उपद्रवतः परितापकरो भवेत् समारम्भः। संरम्भः संकल्पः शुद्धनयानां च सर्वेषां ॥१॥] नन्वारम्भादयोऽपद्रावणपरितापादिरूपा उक्तास्ते चाजीवकायानामचेतनतया न युक्तास्तदयोगादजीवकायानारम्भादयोऽपीति. अत्रोच्यते, अजीवेषु पुस्तकादिषु ये समाश्रिता जीवास्तदपेक्षया अजीवकायप्राधान्यादजीवकायारम्भादयो न विरुद्ध्यन्त इति।

अनन्तरं संयमादय उक्तास्ते च जीवविपया इति जीवविशेषान् स्थितितः प्रतिपादयन् सूत्रचतुष्टयमाह—

अथ भंते ! अदसिकुसुम्भकोद्दवकंगुरालग[वराकोदूसगा]सणसरिसवमूलाबीयाणं एतेसि णं धन्नाणं कोट्ठाउत्ताणं पल्लाउत्ताणं जाव पिहियाणं केवतितं कालं जोणी संचिट्ठति ?, गो० ! जहण्णेणं अन्तोमुहुत्तं उक्कोसेणं सत्त संवच्छराइं, तेण परं जोणी पमिलायति जाव जोणीवोच्छेदे पण्णत्ते १ (सू० ५७२) बायरआउकाइयाणं उक्कोसेणं सत्त वाससहस्साइं ठिती पन्नत्ता २। तचाए णं वालुयप्पभाते पुढवीए उक्कोसेणं नेरइयाणं सत्त सागरोवमाइं ठिती पण्णत्ता ३, चउत्थीतेणं पंकप्पभाते पुढवीते जह० नेरइयाणं सत्त सागरोवमाइं ठिती पं० ४ (सू० ५७३) सक्कस्स णं देविंदस्स देवरन्नो वरुणस्स महारन्नो सत्त अग्गमहिसीतो पं०, ईसाणस्स णं देविंदस्स देवरन्नो सोमस्स महारन्नो सत्त अग्गमहिसीतो पं०, ईसाणस्स णं देविंदस्स देवरन्नो जमस्स महारन्नो सत्त अग्गमहिसीओ पं० (सू० ५७४) ईसाणस्स णं देविंदस्स देवरन्नो अब्भिंतरपरिसाते देवाणं सत्त पलिओवमाइं ठिती पं०, सक्कस्स णं देविंदस्स देवरन्नो अग्गमहिसीणं देवीणं सत्त पलिओवमाइं ठिती पं०, सोहम्मे कप्पे परिग्गहियाणं देवीणं उक्कोसेणं सत्त पलिओवमाइं ठिती पं० (सू० ५७५) सारस्सयमाइचाणं सत्त देवा सत्त देवसता पं०, गद्दतोयतुसियाणं देवाणं सत्त देवा सत्त देवसहस्सा पं० (सू० ५७६) सणंकुमारे कप्पे उक्कोसेणं देवाणं सत्त सागरोवमाइं ठिती पं०, माहिंदे कप्पे उक्कोसेणं देवाणं सातिरेगाइं सत्त सागरोवमाइं ठिती पं०, बंभलोगे कप्पे जहण्णेणं देवाणं सत्त सागरोवमाइं ठिती पं०। (सू० ५७७) बंभलोयलंततेसु णं कप्पेसु विमाणा सत्त जोयणसताइं

उड्ढं उच्चत्तेणं पं० (सू० ५७८) भवणवासीणं देवाणं भवधारणिज्जा सरीरगा उक्कोसेणं सत्त रयणीओ उड्ढं उच्चत्तेणं, एवं वाणमंतराणं एवं जोइसियाणं, सोहम्मीसाणेसु णं कप्पेसु देवाणं भवधारणिज्जगा सरीरा सत्त रयणीओ उड्ढं उच्चत्तेणं पं० (सू० ५७९) णंदिस्सरवरस्स णं दीवस्स अंतो सत्त दीवा पं० तं०—जंबुद्दीवे दीवे १ धायइसंडे दीवे २ पोक्खरवरे ३ वरुणवरे ४ खीरवरे ५ घयवरे ६ खोयवरे ७। णंदीसरवरस्स णं दीवस्स अंतो सत्त समुद्दा पं० तं०—लवणे कालोते पुक्खरोदे वरुणोए खीरोदे घओदे खोतोदे (सू० ५८०) सत्त सेढीओ पं० तं०—उज्जुआयता एगतोवंका दुहतोवंका एगतोखुहा दुहतोखुहा चक्कवाला अद्धचक्कवाला (सू० ५८१) चमरस्स णं असुरिंदस्स असुरकुमाररन्नो सत्त अणिता सत्त अणिताधिपती पं० तं०—पायत्ताणीए १ पीढाणिए २ कुंजराणिए ३ महिसाणिए ४ रहाणिए ५ नट्टाणिए ६ गंधव्वाणिए ७ दुमे पायत्ताणिताधिपती एवं जहा पंचट्ठाणे जाव किंनरे रधाणिताधिपती रिट्ठे णट्टाणियाहिवती गीतरती गंधव्वाणिताधिपती। बलिस्स णं वइरोयणिंदस्स वइरोयणरण्णो सत्ताणीया सत्त अणीयाधिपती पं० तं०—पायत्ताणिते जाव गंधव्वाणिते, महद्दुमे पायत्ताणिताधिपती जाव किंपुरिसे रधाणिताधिपती महारिट्ठे णट्टाणिताधिपती गीतजसे गंधव्वाणिताधिपती। धरणस्स णं नागकुमारिंदस्स नागकुमाररण्णो सत्त अणीता सत्त अणिताधिपती पं० तं०—पायत्ताणिते जाव गंधव्वाणिए रुद्दसेणे पायत्ताणिताधिपती जाव आणंदे रधाणिताधिपती नंदणे णट्टाणियाधिपती तेतली गंधव्वाणियाधिपती। भूताणंदस्स सत्त अणिया सत्त अणियाहिवई पं० तं०—पायत्ताणिते जाव गंधव्वाणीए दक्खे पायत्ताणीयाहिवती जाव

णंदुत्तरे रहाणि० रती णट्टाणि० माणसे गंधव्वाणियाहिवई, एवं जाव घोसमहाघोसाणं नेयव्वं । सक्कस्स णं देविंदस्स देवरन्नो सत्त अणिया सत्त अणियाहिवती पं० तं०—पायत्ताणिए जाव गंधव्वाणिए, हरिणेगमेसी पायत्ताणीयाधिपती जाव माढरे रधाणिताधिपती सेते णट्टाणिताहिवती तुंबुरू गंधव्वाणिताधिपती । ईसाणस्स णं देविंदस्स देवरन्नो सत्त अणीया सत्त अणियाहिवईणो पं० तं०—पायत्ताणिते जाव गंधव्वाणिते लहुपरक्कमे पायत्ताणियाहिवती जाव महासेते णट्टाणि० रते गंधव्वाणिताधिपती सेसं जहा पंचट्ठाणे, एवं जाव अच्चुतस्सवि नेतव्वं (सू० ५८२) चमरस्स णं असुरिंदस्स असुरकुमाररन्नो दुमस्स पायत्ताणिताहिवतिस्स सत्त कच्छाओ पं० तं०—पढमा कच्छा जाव सत्तमा कच्छा, चमरस्स णमसुरिंदस्स असुरकुमाररन्नो दुमस्स पायत्ताणिताधिपतिस्स पढमाए कच्छाए चउसट्ठि देवसहस्सा पं० जावतिता पढमा कच्छा तव्विगुणा दोचा कच्छा तव्विगुणा तचा कच्छा एवं जाव जावतिता छट्ठा कच्छा, तव्विगुणा सत्तमा कच्छा । एवं बलिस्सवि, णवरं महहुमे सट्ठिदेवसाहस्सितो, सेसं तं चेव, धरणस्स एवं चेव, णवरमट्ठावीसं देवसहस्सा, सेसं तं चेव, जधा धरणस्स एवं जाव महाघोसस्स, नवरं पायत्ताणिताधिपती अन्ने ते पुव्वभणिता । सक्कस्स णं देविंदस्स देवरन्नो हरिणेगमेसिस्स सत्त कच्छाओ पन्नत्ताओ पं०, तं०—पढमा कच्छा एवं जहा चमरस्स तहा जाव अच्चुतस्स, णाणत्तं पायत्ताणिताधिपतीणं ते पुव्वभणिता, देवपरीमाणमिमं सक्कस्स चउरासीतिं देवसहस्सा, ईसाणस्स असीती देवसहस्साइं, देवा इमाते गाथाते अणुगंतव्वा—'चउरासीति असीति बावत्तरि सत्तरी य सट्ठीया । पन्ना

चत्तालीसा तीसा वीसा दससहस्सा ॥१॥ जाव अच्चुतस्स लहुपरक्कमस्स दसदेवसहस्सा जाव जावतिता छट्ठा कच्छा तब्बिगुणा सत्तमा कच्छा (सू० ५८३)।

'अह'त्यादि सूत्रसिद्धं, नवरं अथेति परिप्रश्नार्थः भदन्तेति गुर्वामन्त्रणं 'अयसी'ति अतसी कुसुंभो-लट्टा रालकः कंगूविशेषः गनः-त्वक्प्रधानो धान्यविशेषः सर्षपाः-सिद्धार्थकाः मूलकः-शाकविशेषः तस्य बीजानि मूलकबीजानि, ककारलोपसन्धिभ्यां मूलाबीयत्ति प्रतिपादितमिति, शेषाणां पर्याया लोकरूढितो ज्ञेया इति, यावद्ग्रहणात् 'मंचाउत्ताणं मालाउत्ताणं ओलित्ताणं लित्ताणं लंछियाणं मुद्दियाणं'ति द्रष्टव्यं व्याख्याऽस्य प्रागिवेति, पुनर्यावत्करणात् 'पविद्धंसइ विद्धंसइ से बीए अबीए भवइ, तेण परं'ति दृश्यं ॥ 'बादरआउकाइयाणं'ति सूक्ष्माणां त्वन्तर्मुहूर्त्तमेवेति, एवमुत्तरत्रापि विशेषणफलं यथासम्भवं स्वधिया योजनीयं। अनन्तरं नारका उक्ता इति स्थितिशरीरादिभिस्तत्साधर्म्याद्देवानां वक्तव्यतामभिधित्सुः सूत्रप्रपञ्चमाह—'सक्कस्से'त्यादि सुगमश्चायं, नवरं 'वरुणस्स महारन्नो'त्ति लोकपालस्य पश्चिमदिग्वर्त्तिनः सोमस्य पूर्वदिग्लोकपालस्य यमस्य दक्षिणदिग्लोकपालस्य। अनन्तरं देवानामधिकार उक्तो देवानामाश्च द्वीपसमुद्रा इति तदर्थं 'नंदीसरे'त्यादि सूत्रद्वयं, कण्ठ्यं। एते च प्रदेशश्रेणीसमूहात्मकक्षेत्राधाराः श्रेण्याऽवस्थिता इति श्रेणिप्ररूपणायाह—'सत्त सेढी'त्यादि श्रेणयः-प्रदेशपङ्क्तयः ऋज्वी-सरला सा चासावायता च-दीर्घा ऋज्वायता, स्थापना— 'एगओवंका' एकस्यां दिशि वक्रा 'दुहओवंका' उभयतो वक्रा, स्थापना एगओखहा-एकस्यां दिश्यङ्कुशाकारा दुहओखहा-उभयतोऽङ्कुशाकारा चक्रवाला-वलयाकृतिः ० अर्द्धचक्कवाला-अर्द्धवलयाकारेति C एताश्चैकतो वक्राद्या लोकपर्यन्तप्रदेशापेक्षाः सम्भाव्यन्ते। चक्रवालार्द्धचक्रवालादिना गतिविशेषेण भ्रमणयुक्तानि दर्पितत्वाद्देवसैन्यानि भवन्तीति तत्प्रतिपादनाय 'चमरे'

त्यादि प्रकरणं सुगमं, नवरं पीठानीकं–अश्वसैन्यं, नाट्यानीकं–नर्त्तकसमूहो गन्धर्व्वानीकं–गायनसमूहः 'एवं जहा पंचमठाणए' त्ति अतिदेशात् 'सोमे आसराया पीढाणीयाहिवई २ वैकुंथू हत्थिराया कुंजराणियाहिवई ३ लोहियक्खे महिसाणियाहिवई ४ इति द्रष्टव्यमेवमुत्तरसूत्रेष्वपीति। तथा धरणस्येव सकलदाक्षिणात्यानां भवनपतीन्द्राणां सेना सेनाधिपतयः, औदीच्यानां तु भूतानन्दस्येवेति, 'कच्छ'त्ति समूहः, यथा धरणस्य तथा सर्वेषां भवनपतीन्द्राणां महाघोषान्तानां, केवलं पादातानीकाधिपतयोऽन्ये ज्ञेयाः, ते च पूर्वमनन्तरसूत्रे भणिताः, 'नाणत्तं'ति शक्रादीनामानतप्राणतेन्द्रान्तानामेकान्तरितानां हरिणैगमेषीपादातानीकाधिपतिरीशानादीनामारणाच्युतेन्द्रान्तानामेकान्तरितानां लघुपराक्रम इति, 'देवे'त्यादि, देवाः प्रथमकच्छासम्बन्धिनोऽनया गाथयाऽवगन्तव्याः, 'चतुरासी' गाहा, चतुरशीत्यादीनि पदानि सौधर्मादिषु क्रमेण योजनीयानि, नवरं विंशतिपदमानतप्राणतयोर्योजनीयं, तयोर्हि प्राणताभिधानस्येन्द्रस्यैकत्वात्, दशेति पदं त्वारणाच्युतयोर्योजनीयं, अच्युताभिधानस्येन्द्रस्यैकत्वादिति।

सकलमिदमनन्तरोदितं वचनप्रत्याय्यमिति वचनभेदानाह—

**सत्तविहे वयणविकप्पे पं० तं०—आलावे अणालावे उल्लावे अणुल्लावे संलावे पलावे विप्पलावे (सू० ५८४) सत्तविहे विणए पं० तं०—णाणविणए दंसणविणए चरित्तविणए मणविणए वतिविणए कायविणए लोगोवयारविणए। पसत्थमणविणए सत्तविधे पं० तं०—अपावते असावज्जे अकिरिते निरुवक्केसे अणण्हकरे अच्छविकरे अभूताभिसंकमणे, अप्पसत्थमणविणए सत्तविधे पं० तं०—पावते सावज्जे सकिरिते सउवक्केसे अण्हकरे छवि-**

करे भूताभिसंकमणे, पसत्थवइविणए सत्तविधे पं० तं०-अपावते असावज्जे जाव अभूताभिसंकमणे, अपसत्थवइविणते सत्तविधे पं० तं०—पावते जाव भूताभिसंकमणे, पसत्थकातविणए सत्तविधे पं० तं०-आउत्तं गमणं आउत्तं ठाणं आउत्तं निसीयणं आउत्तं तुअट्टणं आउत्तं उल्लंघणं आउत्तं पल्लंघणं आउत्तं सव्विंदितजोगजुंजणता, अपसत्थकातविणते सत्तविधे पं० तं०—अणाउत्तं गमणं जाव अणाउत्तं सव्विंदितजोगजुंजणता। लोगोवतारविणते सत्तविधे पं० तं०—अब्भासवत्तितं परच्छंदाणुवत्तितं कज्जहेउं कतपडिकितिता अत्तगवेसणता देसकालण्णुता सव्वत्थेसु यापडिलोमता (सू० ५८५)।

'सत्तविहे'त्यादि, सप्तविधो वचनस्य-भाषणस्य विकल्पो-भेदो वचनविकल्पः प्रज्ञप्तस्तद्यथा-आङ् ईषदर्थत्वादीषल्लपनमालापः, नञः कुत्सार्थत्वादशीलेत्यादिवत् कुत्सित आलापः अनालाप इति, उल्लापः-काक्वावर्णनं 'काक्वा वर्णनमुल्लाप' इति वचनात् स एव कुत्सितोऽनुल्लापः, क्वचित्पुनरनुलाप इति पाठस्तत्रानुलापः-पौनःपुन्यभाषणं "अनुलापो मुहुर्भाषा" इति वचनात्, सँल्लापः-परस्परभाषणं "संलापो भाषणं मिथः" इति वचनात्, प्रलापो निरर्थकं वचनं "प्रलापोऽनर्थकं वचः" इति वचनात् स एव विविधो विप्रलाप इति॥ एतेषां वचनविकल्पानां मध्ये केचिद्विकल्पा विनयार्था अपि स्युरिति विनयभेदप्रतिपादनायाह—'सत्तविहे'त्यादि, सप्तविधो विनीयतेऽष्टप्रकारं कर्मानेनेति विनयः प्रज्ञप्तस्तद्यथा-ज्ञानं-आभिनिबोधिकादि पञ्चधा तदेव विनयो ज्ञानविनयो ज्ञानस्य वा विनयो-भक्त्यादिकरणं ज्ञानविनयः, उक्तं च—"भत्ती १ तह बहुमाणो २ तद्दिट्ठत्थाण संम भावणया ३। विहिगहण ४ ब्भासोऽवि य ५ एसो विणओ जिणाभिहिओ॥१॥" [ भक्तिस्तथा बहुमानं तद्दृष्टार्थानां सम्यग्भावना विधिना ग्रहणं अभ्यासोऽपि च एष

विनयो जिनाख्यातः ॥१॥ ] दर्शनं—सम्यक्त्वं तदेव विनयो दर्शनविनयो दर्शनस्य वा—तदव्यतिरेकाद्दर्शनगुणाधिकानां शुश्रूषणाऽनाशातनारूपो विनयो दर्शनविनयः, उक्तं च—"सुस्सूसणा अणासायणा य विणओ उ दंसणे दुविहो। दंसणगुणाहिएसुं कज्जइ सुस्सूसणाविणओ ॥१॥ सक्कार १ ऽब्भुट्ठाणे २ सम्माणा ३ सणअभिग्गहो तह य ४। आसणमणुप्पयाणं ५ कीकम्मं ६ अंजलिगहो य ७ ॥२॥ इंतस्सऽणुगच्छणया ८ ठियस्स तह पज्जुवासणा भणिया ९। गच्छंताणुव्वयणं १० एसो सुस्सूसणाविणओ ॥३॥" इति, [ शुश्रूषणाऽनाशातना च विनयस्तु दर्शने द्विविधः। दर्शनगुणाधिकेषु क्रियते शुश्रूषणाविनयः ॥१॥ सत्कारोऽभ्युत्थानं सन्मान आसननिमन्त्रणा तथा च आसनसंक्रामणं कृतिकर्म अंजलिग्रहश्च ॥२॥ आगच्छतोऽभिव्रजनं स्थितस्य तथा पर्युपासना भणिता गच्छतोऽनुव्रजनं एष शुश्रूषणाविनयः ॥३॥ ] इह च सत्कारः—स्तवनवन्दनादि अभ्युत्थानं—विनयार्हस्य दर्शनादेवासनत्यजनं सन्मानो—वस्त्रपात्रादिपूजनं आसनाभिग्रहः पुनस्तिष्ठत आदरेण आसनानयनपूर्वकमुपविशतात्रेति भणनं आसनानुप्रदानं तु—आसनस्य स्थानात्स्थानान्तरसञ्चारणं कृतिकर्म्म—द्वादशावर्त्तवन्दनकं, शेषं प्रकटमिति। उचितक्रियाकरणरूपोऽयं दर्शने शुश्रूषणाविनयः, अनाशातनाविनयस्तु अनुचितक्रियाविनिवृत्तिरूपः, अयं पञ्चदशविधः, आह च—"तित्थगर १ धम्म २ आयरिय ३ वायगे ४ थेर ५ कुल ६ गणे ७ संघे ८। संभोगिय ९ किरियाए १० मइनाणाईण १५ य तहेव ॥१॥" [ तीर्थकराचार्यधर्मवाचकस्थविरकुलगणसंघानां सांभोगिकानां क्रियावादिनां मत्यादिज्ञानानां च तथैव ॥१॥ ] साम्भोगिका—एकसामाचारीकाः क्रिया—आस्तिकता, अत्र भावना—तीर्थकराणामनाशातनायां तीर्थकरप्रज्ञप्तधर्म्मस्यानाशातनायां, वर्त्तितव्यमित्येवं सर्वत्र द्रष्टव्यमिति, "कायव्वा पुण भत्ती बहुमाणो तहय वन्नवाओ य। अरहंतमाइयाणं केवलनाणावसाणाणं ॥१॥" [ अर्हदादीनां केवलज्ञानावसानानां पंचदशानां भक्तिः कर्त्तव्या पुनर्बहुमानः तथा च

वर्णनादश्च ॥१॥ ] उक्तो दर्शनविनयः, साम्प्रतं चारित्रविनय उच्यते, तत्र चारित्रमेव विनयश्चारित्रस्य वा श्रद्धानादिरूपो विनयश्चारित्रविनयः, आह च—"सामाइयादिचरणस्स सद्दहणया १ तहेव काएणं। संफासणं २ परूवण ३ मह पुरओ भव्वसत्ताणं ॥१॥" इति, [सामायिकादिचारित्रस्य श्रद्धानं तथैव कायेन स्पर्शना अथो भव्यानां पुरतः प्ररूपणा सत्त्वानां ॥१॥] मनोवाक्कायविनयास्तु मनःप्रभृतीनां विनयार्हेषु कुशलप्रवृत्त्यादिः, उक्तं च—"मणवइकाइयविणओ आयरियाईण सव्वकालंपि। अकुसलाण निरोहो कुसलाणमुईरणं तहय ॥१॥" [सर्वकालमपि आचार्याणां मनोवाक्कायिकविनयः यदकुशलानां निरोधः कुशलानां उदीरणं च तथा ॥१॥] लोकानामुपचारो—व्यवहारस्तेन स एव वा विनयो लोकोपचारविनयः। मनोवाक्कायविनयान् प्रशस्ताप्रशस्तभेदान् प्रत्येकं सप्तप्रकारान् लोकोपचारविनयं च सप्तधवाह—'पसत्थमणे'त्यादि, सूत्रसप्तकं सुगमं, नवरं प्रशस्तः—शुभो मनसो विनयनं विनयः प्रवर्त्तनमित्यर्थः प्रशस्तमनोविनयः, तत्र अपापकः—शुभचिन्तारूपः असावद्यः—चौर्यादिगर्हितकर्मानालम्बनः अक्रियः—कायिक्याधिकरणिक्यादिक्रियावर्जितो निरुपक्लेशः—शोकादिबाधावर्जितः 'स्नु प्रश्रवण' इति वचनात् आस्रवः—आश्रवः कर्मोपादानं तत्करणशील आस्रवकरस्तन्निषेधादनास्रवकरः—प्राणातिपाताद्याश्रववर्जित इत्यर्थः, अक्षयिकरः—प्राणिनां न क्षयेः—व्यथाविशेषस्य कारकः, अभूताभिशङ्कनो—न भूतान्यभिशङ्कन्ते—बिभ्यति यस्मात् स तथा, अभयङ्कर इत्यर्थः, एतेषां च प्रायः सदृशार्थत्वेऽपि शब्दनयाभिप्रायेण भेदोऽवगन्तव्योऽन्यथा नेति, एवं शेषमपि। आयुक्तं गमनं आयुक्तस्य—उपयुक्तस्य सँल्लीनयोगस्य यदिति, एवं सर्वत्र, नवरं स्थानं—ऊर्ध्वस्थानं कायोत्सर्गादि 'निसीयणं'ति निषदनं—उपवेशनं 'तुयट्टणं' शयनं 'उल्लङ्घनं' डेवनं देहल्यादेः प्रलङ्घनं—अर्गलादेः सर्वेषामिन्द्रियाणां योगा—व्यापाराः सर्वे वा ये इन्द्रिययोगास्तेषां योजनता—करणं सर्वेन्द्रिययोगयोजनता। 'अब्भासवत्तियं' ति प्रत्यासत्तिवर्त्तित्वं, श्रुताद्यर्थिना हि

आचार्यादिसमीपे आसितव्यमित्यर्थः, 'परच्छंदाणुवत्तिय'न्ति पराभिप्रायानुवर्त्तित्वं, 'कज्जहेउं'ति कार्यहेतोः, अयमर्थः—कार्यं—श्रुतप्रापणादिकं हेतुं कृत्वा, श्रुतं प्रापितोऽहमनेनेति हेतोरित्यर्थो, विशेषेण विनये तस्य वर्त्तितव्यं तदनुष्ठानं च कर्त्तव्यमिति, तथा 'कृतप्रतिकृतिता' कृते भक्तादिनोपचारे प्रसन्ना गुरवः प्रतिकृतिं—प्रत्युपकरणं सूत्रादिदानतः करिष्यन्तीति भक्तादिदानं प्रति यतितव्यमिति, आर्त्तस्य दुःखार्त्तस्य गवेषणं औषधादेरित्यार्त्तगवेषणं तदेवार्त्तगवेषणतेति, पीडितस्योपकार इत्यर्थः, आत्मना आप्तेन वा भूत्वा गवेषणं—सुस्थदुःस्थतयोरन्वेषणं कार्यमिति, देशकालज्ञता—अवसरज्ञता, सर्वार्थेष्वप्रतिलोमता—आनुकूल्यमिति।

विनयात्कर्मघातो भवति, स च समुद्घाते विशिष्टतर इति समुद्घातप्ररूपणायाह—

**सत्त समुग्घाता पं० तं०—वेयणासमुग्घाए कसायसमुग्घाए मारणंतियसमुग्घाए वेउव्वियसमुग्घाते तेजससमुग्घाए आहारगसमुग्घाते केवलिसमुग्घाते, मणुस्साणं सत्त समुग्घाता पं० एवं चेव (सू० ५८६)।**

'सत्त समुग्घाए'त्यादि, 'हन् हिंसागत्योः' हननं घातः समित्येकीभावे उत्—प्राबल्ये तत एकीभावेन प्राबल्येन च घातो—निर्जरा समुद्घातः, कस्य केन सहैकीभावगमनं ?, उच्यते, आत्मनो वेदनाकषायाद्यनुभवपरिणामेन, यदा ह्यात्मा वेदनीयाद्यनुभवज्ञानपरिणतो भवति तदा नान्यज्ञानपरिणत इति, प्राबल्येन घातः कथं ?, यस्माद्वेदनीयादिसमुद्घातपरिणतो बहून् वेदनीयादिकर्म्मप्रदेशान् कालान्तरानुभवयोग्यानुदीरणाकरणेनाकृष्य उदये प्रक्षिप्यानुभूय निर्जरयति, आत्मप्रदेशैः सह संश्लिष्टान् शातयतीत्यर्थः, उक्तं च—"पुव्वकयकम्मसाडणं तु निज्जरा" इति [ पूर्वकृतकर्मशाटनं तु निर्जरा ॥ ] स च वेदनादिभेदेन सप्तधा भवतीत्याह—सप्त

समुद्घाताः प्रज्ञप्ताः, तद्यथा—वेदनासमुद्घात इत्यादि, तत्र वेदनासमुद्घातोऽसद्वेद्यकर्म्माश्रयः, कषायसमुद्घातः कषायाख्यचारित्रमोहनीयकर्माश्रयः, मारणान्तिकसमुद्घातोऽन्तर्मुहूर्त्तशेषायुष्ककर्माश्रयः, वैक्रुर्विकतैजसाहारकसमुद्घाताः शरीरनामकर्माश्रयाः, केवलिसमुद्घातस्तु सदसद्वेद्यशुभाशुभनामोच्चनीचैर्गोत्रकर्माश्रय इति, तत्र वेदनासमुद्घातसमुद्धत आत्मा वेदनीयकर्म्मपुद्गलशातं करोति, कषायसमुद्घातसमुद्धतः कषायपुद्गलशातं मारणान्तिकसमुद्घातसमुद्धतः आयुष्ककर्मपुद्गलघातं वैक्रुर्विकसमुद्घातसमुद्धतस्तु जीवप्रदेशान् शरीराद्बहिर्निष्काश्य शरीरविष्कम्भबाहल्यमात्रमायामतश्च संख्येयानि योजनानि दण्डं निसृजति निसृज्य च यथास्थूलान् वैक्रियशरीरनामकर्मपुद्गलान् प्राग्बद्धान् शातयति, यथोक्तम्—"वेउव्वियसमुग्घाएणं समोहन्नइ समोहणित्ता संखेज्जाइं जोयणाइं दंडं निसरइ २ त्ता अहाबायरे पुग्गले परिसाडेइ"त्ति [वैक्रियसमुद्घातेन समवहन्ति समवहत्य संख्येययोजनप्रमाणं दंडं निसृजति निसृज्य प्राग्बद्धान् यथास्थूलान् पुद्गलान् परिशाटयति ॥१॥] एवं तैजसाहारकसमुद्घातावपि व्याख्येयौ, केवलिसमुद्घातेन समुद्धतः केवली वेदनीयादिकर्मपुद्गलान् शातयतीति, इहान्त्योऽष्टसामयिकः शेषास्त्वसंख्यातसामयिका इति । चतुर्विंशतिदण्डकचिन्तायां सप्तापि समुद्घाता मनुष्याणामेव भवन्तीत्याह—'मणुस्साणं सत्ते'त्यादि, 'एवं चेव'त्ति सामान्यसूत्र इव सप्तापि समुच्चारणीया इति ।

एतच्च समुद्घातादिकं जिनाभिहितं वस्त्वन्यथा प्ररूपयन् प्रवचनबाह्यो भवति यथा निह्नवा इति तद्वक्तव्यतां सूत्रत्रयेणाह—

समणस्स णं भगवओ महावीरस्स तित्थंसि सत्त पवतणनिण्हगा पं०, तं०—बहुरता जीवपतेसिता अवत्तिता सामुच्छेइता दोकिरिता तेरासिता अबद्धिता एएसि णं सत्तण्हं पवयणनिण्हगाणं सत्त धम्मातरिता हुत्था,

तं०—जमालि तीसगुत्ते आसाढे आसमित्ते गंगे छलुए गोट्ठामाहिले, एतेसि णं सत्तण्हं पवयणनिण्हगाणं सत्तुप्पत्तिनगरा होत्था, तं०—सावत्थी उसभपुरं सेतविता मिहिलमुल्लगातीरं। पुरिमंतरंजि दसपुर णिण्हगउप्पत्तिनगराइं ॥१॥ (सू० ५८७)।

'समणे'त्यादि कण्ठ्यं, नवरं प्रवचनं—आगमं निह्नुवते—अपलपन्त्यन्यथा प्ररूपयन्तीति प्रवचननिह्नवाः प्रज्ञप्ता जिनैः, तत्र 'बहुरय'त्ति एकेन समयेन क्रियाध्यासितरूपेण वस्तुनोऽनुत्पत्तेः प्रभूतसमयैश्चोत्पत्तेः बहुषु समयेषु रताः—सक्ता बहुरताः, दीर्घकालद्रव्यप्रसूतिप्ररूपिण इत्यर्थः, तथा जीवः प्रदेश एव येषां ते जीवप्रदेशास्त एव जीवप्रादेशिकाः अथवा जीवप्रदेशो जीवाभ्युपगमतो विद्यते येषां ते तथा, चरमप्रदेशजीवप्ररूपिण इति हृदयं, तथा अव्यक्तं—अस्फुटं वस्तु अभ्युपगमतो विद्यते येषां तेऽव्यक्तिकाः, संयताद्यवगमे सन्दिग्धबुद्धय इति भावना, तथा समुच्छेदः—प्रसूत्यनन्तरं सामस्त्येन प्रकर्षेण च छेदः समुच्छेदो—विनाशः समुच्छेदं ब्रुवत इति सामुच्छेदिकाः, क्षणक्षयिकभावप्ररूपका इत्यर्थः, तथा द्वे क्रिये समुदिते द्विक्रियं तदधीयते तद्वेदिनो वा द्वैक्रियाः, कालाभेदेन क्रियाद्वयानुभवप्ररूपिण इत्यर्थः, तथा जीवाजीवनोजीवभेदास्त्रयो राशयः समाहृतास्त्रिराशि तत्प्रयोजनं येषां ते त्रैराशिकाः, राशित्रयख्यापका इत्यर्थः, तथा स्पृष्टं जीवेन कर्म्म न स्कन्धबन्धवद्बद्धमबद्धं तदेषामस्तीत्यबद्धिकाः, स्पृष्टकर्मविपाकप्ररूपका इति हृदयं, 'धम्मायरिय'त्ति धर्म्मः—उक्तप्ररूपणादिलक्षणः श्रुतधर्मस्तत्प्रधानाः प्रणायकत्वेनाचार्या धर्म्माचार्यास्तन्मतोपदेष्टार इत्यर्थः, तत्र जमाली क्षत्रियकुमारो, यो हि श्रमणस्य भगवतो महावीरस्य भागिनेयो भगवद्दुहितुः सुदर्शनाभिधानाया भर्त्ता पुरुषपञ्चशतीपरिवारो भगवत्प्रव्राजित आचार्यत्वं प्राप्तः श्रावस्त्यां नगर्यां तेन्दुके चैत्ये विहरन्ननुचिताहारादुत्पन्नरोगो वेदनाभिभूततया शयनार्थं समादिष्टसंस्तारकसंस्तरणः कृतः

संस्तारकः ? इतिविहितपरिप्रश्नः संस्तारककारिसाधुना संस्त्रियमाणत्वेऽपि संस्तृत इतिदत्तप्रतिवचनो गत्वा च दृष्टक्रियमाणसंस्तारकः कर्मोदयाद्विपर्यस्तबुद्धिः प्ररूपयामास-यत् क्रियमाणं कृतमिति भगवान् दिदेश तदसत् प्रत्यक्षविरुद्धत्वाद् अश्रावणशब्दवत्, प्रत्यक्षविरुद्धता चास्यार्द्धसंस्तृतसंस्तारकासंस्तृतत्वदर्शनात्, ततश्च क्रियमाणत्वेन प्रत्यक्षसिद्धेन कृतत्वधर्मोऽपनीयत इति भावना, आह च— 'जम्हा चिय संथारो ण कज्जमाणो कडोत्ति मे जम्हा। वेइ जमाली सच्चं न कज्जमाणं कयं तम्हा ॥१॥" इति, [मम संस्तारकः क्रियमाणः साक्षान्न कृत एवेति यस्माद् जमालिर्ब्रवीति तस्मात् क्रियमाणं कृतं न सत्यं ॥१॥] यथैवं प्ररूपयन् स्थविरैरेवमुक्तः-हे आचार्य! क्रियमाणं कृतमिति नाध्यक्षविरुद्धं, यदि हि क्रियमाणं-क्रियाविष्टं कृतं नेष्यते ततः क्रियानारम्भसमय इव पश्चादपि क्रियाऽभावे कथं तदिष्यत इति सदा प्रसङ्गः, क्रियाऽभावस्याविशिष्टत्वात्, यदप्युक्तं 'अर्द्धसंस्तृतसंस्तारकासंस्तृतत्वदर्शनात्' तदप्ययुक्तं यतो यद्यदा यत्राकाशदेशे वस्त्रमास्तीर्यते तत्तदा तत्रास्तीर्णमेव, एवं पाश्चात्यवस्त्रास्तरणसमये खल्वसावास्तीर्ण एवेति, आह च—"जं जत्थ नभोदेसे अत्थुव्वइ जत्थ जत्थ समयम्मि। तं तत्थ तत्थमत्थुयमत्थुव्वंतंपि तं चेव ॥१॥" इति, [यत्र नभोदेसे यस्मिन् यस्मिन् समये यदास्तीर्यते तस्मिंस्तस्मिंस्तदास्तीर्णं आस्तीर्यमानमपि तदेव ॥१॥] तदेवं विशिष्टसमयापेक्षीणि भगवद्वचनानीति, एवमपि प्रत्युक्तो यो न तत् प्रतिपन्नवान्, सोऽयं बहुरतधर्म्माचार्यः १। तथा तिष्यगुप्तः वसुनामधेयाचार्यस्य चतुर्दशपूर्वधरस्य शिष्यो, यो हि राजगृहे विहरन्नात्मप्रवादाभिधानपूर्वस्य 'एगे भंते! जीवप्पएसे जीवेत्ति वत्तव्वं सिया?, नो इणमट्ठे समट्ठे, एवं दो तिन्नि संखेज्जा वा असंखेज्जा जाव एगेणावि पएसेण ऊणे नो जीवेत्ति वत्तव्वं सिया, जम्हा कसिणे पडिपुन्ने लोगागासपएसतुल्लप्पएसे जीवेति वत्तव्वं सिया' [एको भदन्त! जीवप्रदेशो जीव इति वक्तव्यः स्यात्?, नैषोऽर्थः समर्थः, एवं द्वौ त्रयः संख्येया असंख्येया वा यावदेकेनापि

प्रदेशेनोनः जीव इति नो वक्तव्यः स्यात्, यस्मात् कृत्स्नः प्रतिपूर्णः लोकाकाशप्रदेशतुल्यप्रदेशः जीव इति वक्तव्यः स्यात् ॥] इत्येवमादिकमालापकमधीयानः कर्मोदयादुत्थितः सन्नित्थमभिहितवान्–यद्येकादयो जीवप्रदेशाः खल्वेकप्रदेशहीना अपि न जीवाख्यां लभन्ते किन्तु चरमप्रदेशयुक्ता एव लभन्त इति, ततः स एवैकः प्रदेशो जीव इति, तद्भावभावित्वाज्जीवत्वस्येति, आह च—"एगादओ पएसा न य जीवो न य पएसहीणोवि । जं तो स जेण पुन्नो स एव जीवो पएसोत्ति ॥१॥" [एकादयः प्रदेशा जीवो न न च प्रदेशहीनोऽपि यत्तस्स येन पूर्णः स एव प्रदेशो जीव इति ॥] यश्चैवमभिदधानो गुरुणोक्तो–नैतदेवं, जीवाभावप्रसङ्गात्, कथं ?, भवदभिमतोऽन्त्यप्रदेशोऽप्यजीवः, आद्यप्रदेशतुल्यपरिणामत्वात्, प्रथमादिप्रदेशवत्, प्रथमादिप्रदेशो वा जीवः शेषप्रदेशतुल्यपरिणामत्वादन्त्यप्रदेशवत्, न च पूरण इतिकृत्वा तस्य जीवत्वं युज्यते, एकैकस्य पूरणत्वाविशेषाद्, एकमपि विना तस्यासम्पूर्णत्वमिति, आह च—"गुरुणाऽभिहिओ जइ ते पढमपएसो न सम्मओ जीवो । तो तप्परिणामो च्चिय जीवो कहमंतिमपएसो ? ॥१॥" [गुरुणाऽभिहितः स यदि ते प्रथमप्रदेशो जीव इति न सम्मतस्तत्परिणाम एवान्त्यप्रदेशः कथं जीवः ? ॥१॥] इत्यादि, एवमुक्तोऽपि न प्रतिपन्नवान्, ततः सङ्घाद्बहिष्कृतो, यश्चामलकल्पायां मित्रश्रीनाम्ना श्रमणोपासकेन सङ्खड्यां भक्तादिग्रहणार्थं गृहमानीयाग्रतश्च विविधानि खाद्यकादिद्रव्याण्युपनिधाय तत एकैकमवयवं दत्त्वा पादेषु निपत्याहो धन्योऽहं मया साधवः प्रतिलम्भिता इत्यभिदधानेनाहो अहं भवता धर्षित इति वदन् भवत्सिद्धान्तेन भवान् प्रतिलम्भितो मया यदि परं वर्द्धमानस्वामिसिद्धान्तेन नेति प्रतिभणता प्रतिबोधितः, सोऽयं जीवप्रदेशिकानां धर्माचार्य इति २ । तथा आषाढः, येन हि श्वेतव्यां नगर्यां पोलासे उद्याने स्वशिष्याणां प्रतिपन्नागाढयोगानां रात्रौ हृदयशूलेन मरणमासाद्य देवेन भूत्वा तदनुकम्पया स्वकीयमेव कडेवरमधिष्ठाय सर्वां सामाचारीं अनुप्रवर्त्तयता योगसमाप्तिः शीघ्रं

कृता, वन्दित्वा तानभिहितं च-क्षमणीयं भदन्ताः ! यन्मया यूयं वन्दनं कारिताः, यस्य च शिष्या इयच्चिरमसंयतो वन्दितोऽस्माभिरिति विचिन्त्याव्यक्तमतमाश्रिताः, तथाहि—"को जाणइ किं साहू देवो वा तो न वंदणिज्जोत्ति। होज्जाऽसंजयनमणं होज मुसावायममुगो त्ति॥१॥" [को जानाति किमयं साधुर्देवो वाऽतो न वंदनीय इति भवेदसंयतनमनं भवेद्वा मृषावादोऽमुकोऽयमिति॥१॥] इति, यच्छिष्यांश्च प्रति—"थेरवयणं जइ परे संदेहो किं सुरोत्ति साहुत्ति। देवे कहन्न सङ्का? किं सो देवो अदेवोत्ति॥२॥ तेण कहियन्ति व मई देवोऽहं देवदरिसणाओ य। साहुत्ति अहं कहिए समाणरूवंमि किं संका?॥३॥ देवस्स व किं वयणं सच्चंति न साहुरूवधारिस्स। न परोप्परम्पि वंदह जं जाणंताऽवि जयओत्ति॥४॥" [स्थविरवचनं यदि परं किमयं सुरः साधुरिति परस्मिन् संदेहः देवे न कथं शंका किं स देवोऽदेवो वेति॥१॥ तेन देवोऽहमिति कथितं दर्शनाच्च देव इति मतिः अहं साधुरिति कथिते समानरूपे का शंका?॥२॥ देवस्य वा वचनं किं सत्यं इति साधुरूपधारिणो न यत्परस्परं यतयोऽपि जानन्तो न वंदध्वे॥१॥] एवं चोच्यमाना अप्यप्रतिपद्यमाना यद्विनेया सङ्घाद्बहिष्कृता विहरन्तश्च राजगृहे बलभद्राभिधानराजेन कटकमर्दनं मारणमादिश्य कथमस्मान् यतीन् श्रावकस्त्वं मारयसीति ब्रुवाणा न वयं जानीमः के यूयं चौरा वा चारिका वेति प्रत्युत्तरदानतः प्रतिबोधिताः, सोऽयमव्यक्तमतधर्माचार्यो, न चायं तन्मतप्ररूपकत्वेन किन्तु प्रागवस्थायामिति ३। तथा अश्वमित्रो, यो हि महागिरिशिष्यस्य कौण्डिन्याभिधानस्य शिष्यो मिथिलायां नगर्यां लक्ष्मीगृहे चैत्ये अनुप्रवादाभिधाने पूर्वे नैपुणिके वस्तुनि छिन्नच्छेदननयवक्तव्यतायां 'पडुप्पन्नसमयनेरइया वोच्छिज्जिस्संति, एवं जाव वेमाणियत्ति, एवं बिइयाइसमएसु वत्तव्व'मित्येवंरूपमालापकमधीयानो मिथ्यात्वमुपगतः, बभाण च—यदि सर्वे एव वर्त्तमानसमयसञ्जाता व्यवच्छेत्स्यन्ति तदा कुतः कर्मणां वेदनमिति, आह च—"एवं च कओ कम्माण वेयणं सुकयदुकयाणंति?। उप्पायाणंतरओ सव्वस-

वि णाससब्भावा ॥१॥" [एवं च सुकृतदुष्कृतकर्मणां कुतो वेदनं इति, उत्पादानन्तरं सर्वस्यापि नाशसद्भावात् ॥१॥] यश्चैवं प्ररूपयन् गुरुणा भणितः—"एगनयमएणमिदं सुत्तं वचाहि मा हु मिच्छत्तं। निरवेक्खो सेसाणवि नयाण हिययं वियारेहि ॥१॥ न हि सव्वहा विणासो अद्धापज्जायमेत्तनासंमि। (अद्धापर्यायाः—कालकृतधर्माः) सपरपज्जायाणंतधम्मिणो वत्थुणो जुत्तो ॥२॥ अह सुत्ताउत्ति मई नणु सुत्ते सासयंपि निद्दिट्ठं। वत्थुं दव्वट्ठाए असासयं पज्जयट्ठाए ॥३॥ तत्थवि न सव्वनासो समयादिविसेसणं जओऽभिहियं। इहरा न सव्वणासे समयादिविसेसणं जुत्त ॥४॥" न्ति [इदमेकनयमतेन सूत्रं मा व्रजीर्मिथ्यात्वं निरपेक्षः शेषाणामपि नयानां (मतं) हितदं हृदयं वा विचारय ॥१॥ स्वपरपर्यायैरनन्तधर्मिणो वस्तुनोऽद्धापर्यायमात्रनाशे सर्वथा विनाशो न युक्तः ॥२॥ अथ सूत्रादितिमतिः ननु सूत्रे शाश्वतमपि निर्दिष्टं वस्तु। द्रव्यार्थतया पर्यायार्थतया अशाश्वतं ॥३॥ तत्रापि न सर्वथा नाशः समयादिविशेषणं यतोऽभिहितं। इतरथा सर्वनाशे समयादिविशेषणं न युक्तम् ॥४॥] इदं चाप्रतिपद्यमान उद्घाटितः, यश्च काम्पिल्ये शुल्कपालश्रावकैर्मार्यमाणोऽस्माभिर्यूयं श्रावकाः श्रुताः तत्कथं साधून् मारयथेति वदन् युष्मत्सिद्धान्तेन प्रव्रजिताः श्रावकाश्च ये ते व्यवच्छिन्ना यूयं वयं चान्ये इति दत्तप्रत्युत्तरः सम्यक्त्वं प्रतिपन्नः, सोऽयं सामुच्छेदिकानां धर्माचार्य इति ४। तथा 'गंग' इति, यो हि आर्यमहागिरिशिष्यस्य धनगुप्तस्य शिष्यः उल्लुकातीराभिधाननगराच्छरद्याचार्यवन्दनार्थं प्रस्थित उल्लुकां नदीमुत्तरन् खलतिना शिरसा दिनकरकरनिकरसम्पातसञ्जातमुष्णं पादाभ्यां च शीतलजलजनितनितान्तशीतं वेदयंश्चिन्तयामास—सूत्रेऽभिहितमेका क्रियैकदा वेद्यते शीता वोष्णा वा, अहं च द्वे क्रिये वेदयामि अतो द्वे क्रिये समयेनैकेन वेद्येते इति, गत्वा च गुर्वन्तिके वन्दित्वाऽभिदधावभिप्रायमात्मीयमाचार्याय, तेन चावाचि—मैवं वोचः, यतो नास्त्येकदा क्रियाद्वयवेदनं, केवलं समयमनसोरतिसूक्ष्मतया भेदो न लक्ष्यते,

उत्पलपरशतव्याप्तिभेदवत् , एवं च प्रतिपादितः सन्नप्रतिपद्यमानो बहिष्कृतः अन्यदा राजगृहे महातपस्तीरप्रभाभिधाने नंदविशेषे मणिनागनाम्नो नागस्य चैत्ये पर्षन्मध्ये समतमावेदयन् मणिनागेन विसर्प्पद्दर्पेणभया भारत्याऽभिहितो—रे रे दुष्टशैक्ष! कस्मादस्मागु मन्स्वैवमप्रज्ञापनीयं प्रज्ञापयसि?, यत इहैव स्थाने स्थितेन भगवता वर्द्धमानस्वामिना प्रणिन्ये—यथैकदैकैव क्रिया वेद्यत इति, ततस्त्वं ततोऽपि लष्टतरो जातः?, छर्दयैनं नादं, मा ते दोषात् नाशयिष्यामीति भयमापन्नः प्रतिबुद्धः, सोऽयं द्वैक्रियाणां धर्माचार्य इति ५। 'छलुग'त्ति, द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणपद्पदार्थप्ररूपकत्वाद् गोत्रेण च कौशिकत्वात् पडुलुको, यो हि नामान्तरेण रोहगुप्तो, यश्चान्तरञ्ज्यां पुर्यां भूतगुहाभिधानव्यन्तरायतने व्यवस्थितानां श्रीगुप्ताभिधानानामाचार्याणां वन्दनार्थं ग्रामान्तरादागच्छन् प्रवादिप्रदापितपटहकध्वनिमाकर्ण्य सदर्प्पं च तं निषेध्याचार्यस्य तन्निवेद्य ततो मायूर्यादिविद्या उपादाय राजकुलमतिगत्य बलश्रीनाम्नो नरनायकस्याग्रतः पोट्टशालाभिधानपरिव्राजकप्रवादिनमाहूय तेन च जीवाजीवलक्षणे राशिद्वये स्थापिते तत्प्रतिभाप्रतिघाताय नोजीवलक्षणं तृतीयं राशिं व्यवस्थाप्य तद्विद्यानां स्वविद्याभिः प्रतिघातकरणेन तं निगृह्य गुरुसमीपमागत्य तन्निवेदितवान् , यश्च गुरुणा अभिहितो, यथा—गच्छ राजसभामनुप्रविश्य ब्रूहि राशित्रयप्ररूपणमपसिद्धान्तरूपं वादिपरिभवाय मया कृतमिति, ततो योऽभिमानादाचार्यं प्रत्यवादित्—यथा राशित्रयमेवास्ति, तथाहि—जीवाः-संसारस्थादयः अजीवाः—घटादयः नोजीवास्तु दृष्टान्तसिद्धाः, यथा हि दण्डस्यादिमध्याग्राणि भवन्तीत्येवं सर्वभावानां त्रैविध्यमिति, यश्च राजसमक्षमाचार्येण कुत्रिकापणे जीवयाचने पृथिव्यादिजीवलाभात् अजीवयाचने अचेतनलेष्ट्वादिलाभात् नोजीवयाचनेऽचेतनलेष्ट्वादिलाभाच्च निगृहीतः, सोऽयं त्रैराशिकधर्माचार्य इति ६। तथा गोष्ठामाहिल इति, यो हि दशपुरनगरे आर्यरक्षितस्वामिनि दिवं गते आचार्यश्रीदुर्बलिकापुष्पमित्रे

गणं परिपालयति विन्ध्याभिधानसाधोरष्टमं कर्मप्रवादाभिधानं पूर्वमाचार्यादुपश्रुत्य प्रत्युच्चारयतः कर्म्मबन्धाधिकारे किञ्चित्कर्म जीवप्रदेशैः स्पृष्टमात्रं कालान्तरस्थितिमप्राप्य विघटते शुष्ककुडयापतितचूर्णमुष्टिवत् किञ्चित्पुनः स्पृष्टं वद्धं च कालान्तरेण विघटते आर्द्रलेपकुडये सस्नेहचूर्णवत् किंञ्चिपुनः स्पृष्टं वद्धं निकाचितं जीवेन सहैकत्वमापन्नं कालान्तरेण वेद्यते इत्येवमाकर्ण्योक्तवान्–नन्वेवं मोक्षाभावः प्रसजति, कथं ?, जीवात् कर्म्म न वियुज्यते, अन्योऽन्याविभागबद्धत्वात्, स्वप्रदेशवत्, उक्तं च—"सोउ भणइ सदोसं वक्खाणमिणंति पावइ जओ ते । मोक्खाभावो जीवप्पएसकम्माविभागाओ ॥१॥ नहि कम्मं जीवाओ अवेइ अविभागओ पएसव्व । तदणवगमादमोक्खो जुत्तमिणं तेण वक्खाणं ॥२॥"इति [श्रुत्वा भणति इदं व्याख्यानं सदोषमिति यतो भवतां प्राप्नोति मोक्षाभावो जीवप्रदेशकर्मणोरविभागात् ॥१॥ नैव कर्म जीवादपैति प्रदेश इवाविभागात्तदनपगमादमोक्षस्तेनेदं व्याख्यानं युक्तं (स्पृष्टमात्रतारूपं) ॥२॥] तथा–जीवः कर्म्मणा स्पृष्टो न तु बद्ध्यते, वियुज्यमानत्वात्, कञ्चुकेनेव तद्वानिति, ततो विन्ध्यसाधुनैतस्मिन्नाचार्यायार्थे निवेदिते यस्तेनाभिहितो–(आचार्यादवधार्याथ गोष्ठामाहिलो विन्ध्येनोक्तः,) भद्र ! यदुक्तं त्वया जीवात् कर्म्म न वियुज्यत इति, तत्र प्रत्यक्षबाधिता प्रतिज्ञा आयुःकर्म्मवियोगात्मकस्य मरणस्य प्रत्यक्षत्वाद्, हेतुरप्यनैकान्तिकोऽन्योऽन्याविभागसम्बद्धानामपि क्षीरोदकादीनामुपायतो वियोगदर्शनात्, दृष्टान्तोऽपि न साधनधर्मानुगतः, स्वप्रदेशस्य वियुतत्वासिद्धस्तद्रूपेणानादिरूपत्वात् भिन्नं च जीवात् कर्म्मेति, यच्चोक्तं—"जीवः कर्म्मणा स्पृष्टो न बध्यते इत्यादि," तत्र किं प्रतिप्रदेशं स्पृष्टो नभसेवोत त्वङ्मात्रे कञ्चुकेनेव ?, यद्याद्यः पक्षः तदा दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं कञ्चुकेन प्रतिप्रदेशमस्पृष्टत्वाद्, अथ द्वितीयः, ततो नापान्तरालगत्यनुयायि कर्म, पर्यन्तवर्त्तित्वाद्, बाह्याङ्गमलवद्, एवं सर्वो मोक्षभाक् कर्मानुगमरहितत्वात् मुक्तवद्, इत्यादि प्रतिपाद्यमानो यो नैतत्प्रतिपन्नवानुद्-

घाटिकेति सोऽयमबद्धिकधर्माचार्यः इति। उत्पत्तिनगराणि सप्तानां क्रमेण सप्तैव 'होत्थ'त्ति सामान्येन वर्त्तमानत्वेऽपि नगराणां तद्विशेषगुणातीतत्वेनातीतनिर्देशः, 'सावत्थी'गाहा ऋषभपुरं–राजगृहं उल्लुका नदी तत्तीरवर्त्तिनगरमुल्लुकातीरं 'पुरी'ति नगरी अन्तरंजीति तन्नाम, इह च मकारोऽलाक्षणिकः, 'दसपुर'त्ति अनुस्वारलोपादिति।

एते च निह्नवाः संसारं पर्यटन्तः सातासातभोगिनो भविष्यन्तीति तत्स्वरूपं सूत्रद्वयेनाह—

सातावेयणिज्जस्स कम्मस्स सत्तविधे अणुभावे पं०, तं०—मणुन्ना सद्दा मणुण्णा रूवा जाव मणुन्ना फासा मणोसुहता वतिसुहता। असातावेयणिज्जस्स णं कम्मस्स सत्तविधे अणुभावे पं०, तं०—अमणुन्ना सद्दा जाव वतिदुहता (सू० ५८८) महाणक्खत्ते सत्ततारे पं०, अभितीयादिता सत्त णक्खत्ता पुव्वदारिता पं० तं०—अभिती सवणो धणिट्ठा सतभिसता पुव्वाभद्दवता उत्तराभद्दवत्ता रेवती, अस्सणितादिता णं सत्त णक्खत्ता दाहिणदारिता पं०, तं०—अस्सिणी भरणी कित्तिता रोहिणी मिगसिरे अद्दा पुणव्वसू, पुस्सादिता णं सत्त णक्खत्ता अवरदारिता पं०, तं०—पुस्सो असिलेसा मघा पुव्वाफग्गुणी उत्तराफग्गुणी हत्थो चित्ता, सातितातिया णं सत्त णक्खत्ता उत्तरदारिता पं०, तं०—साति विसाहा अणुराहा जेट्ठा मूलो पुव्वासाढा उत्तरासाढा (सू० ५८९) जंबूदीवे दीवे २ सोमणसे वक्खारपव्वते सत्त कूडा पं० तं०—सिद्धे १ सोमणसे २ तह बोद्धव्वे मंगलावतीकूडे ३। देवकुरु ४ विमल ५ कंचण ६ विसिट्ठकूडे ७ त बोद्धव्वे॥१॥ जंबूदीवे २ गंधमायणे वक्खारपव्वते

सत्त कूडा पं० तं०—सिद्धे त गंधमातण बोद्धव्वे गंधिलावतीकूडे । उत्तरकुरू फलिहे लोहितक्ख आणंदणे चेव ॥१॥ (सू० ५९०) बिर्तिदिताणं सत्त जातीकुलकोडिजोणीपमुहसयसहस्सा पन्नत्ता (सू० ५९१) जीवा णं सत्तट्ठाणनिव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा चिणंति वा चिणिस्संति वा तं०—नेरतियनिव्वत्तिते जाव देवनिव्वत्तिए एवं चिण जाव णिज्जरा चेव (सू० ५९२) सत्तपतेसिता खंधा अणंता पण्णत्ता सत्तपतेसोगाढा पोग्गला जाव सत्तगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ५९३) सत्तमट्ठाणं सत्तमं सत्तमं अज्झयणं सम्मत्तं ॥

'साये'त्यादि कण्ठ्यं, नवरं, 'अणुभावे'त्ति विपाकः उदयो रस इत्यर्थः, मनोज्ञाः शब्दादयः सातोदयकारणत्वादनुभावा एवोच्यन्ते, तथा मनसः शुभता मनःशुभता, साऽपि सातानुभावकारणत्वात्सातानुभाव उच्यते, एवं वचःशुभताऽपि, मनःसुखता वा सातानुभावः, तत्स्वरूपत्वात् तस्याः, एवं वाक्सुखताऽपीति, एवमसातानुभावोऽपि ॥ सातासाताधिकारात् तद्वतां देवविशेषाणां प्ररूपणाय सूत्रपञ्चकमाह—'महे'त्यादि सुगमं, नवरं पूर्वं द्वारं येषामस्ति तानि पूर्वद्वारिकाणि, पूर्वस्यां दिशि गम्यते येष्वित्यर्थः, एवं शेषाण्यपि सप्त सप्तेति, इह चार्थे पञ्च मतानि सन्ति, यत आह चंद्रप्रज्ञप्त्याम्—"तत्थ खलु इमाओ पंच पडिवत्तीओ पन्नत्ताओ, तत्थेगे एवमाहंसु—कत्तिआइआ सत्त नक्खत्ता पुव्वदारिया पन्नत्ता" एवमन्ये मघादीन्यपरे धनिष्ठादीनि इतरेऽश्विन्यादीनि अपरे भरण्यादीनि, दक्षिणापरोत्तरद्वाराणि च सप्त सप्त यथामतं क्रमेणैव समवसेयानीति, 'वयं पुण एवं वयामो—अभियाइया णं सत्त नक्खत्ता पुव्वदारिया पन्नत्ता,' एवं दक्षिणद्वारिकादीन्यपि क्रमेणैवेति, तदिह षष्ठं मतमाश्रित्य सूत्राणि प्रवृत्तानि, लोके तु प्रथमं मतमाश्रित्यैतद-

भिधीयते, यदुत—"दहनाद्यमृक्षसप्तकमैन्द्र्यां तु मघादिकं च याम्यायाम्। अपरस्यां मैत्रादिकमथ सौम्यां दिशि धनिष्ठादि ॥१॥ भवति गमने नगाणामभिमुखमुपसर्पतां शुभप्राप्तिः। अथ पूर्वमृक्षसप्तकमुद्दिष्टं मध्यममुदीच्याम् ॥२॥ पूर्वायामौदीच्यां प्रातीच्यां दक्षिणाभिधानायां। याम्यां तु भवति मध्यममपरस्यां यातुराशायाम् ॥३॥ येऽतीत्य यान्ति मूढाः परिघाख्यामनिलदहनदिग्रेखाम्। निपतन्ति ते ऽनिगादपि दुर्व्यसने निष्फलारम्भाः ॥४॥" इति ॥ देवाधिकाराद्देवनिवासकूटसूत्रद्वयं—'जंबू' इत्यादि कण्ठ्यं, केवलं 'सोमणसे'त्ति सौमनसे गजदन्तके देवकुरूणां प्राचीने 'कूटानि' शिखराणि, 'सिद्धे' गाहा, सिद्धायतनोपलक्षितं सिद्धकूटं मेरुप्रत्यासन्नमेवं सर्व्वगजदन्तकेषु सिद्धायतनानि, शेषाणि ततः परंपरयेति, 'सोमणसे'त्ति सौमनसकूटं तत्समाननामकतदधिष्ठातृदेवभवनोपलक्षितं, मङ्गलावतीविजयसमनामदेवस्य मङ्गलावतीकूटं, एवं देवकुरुदेवनिवासो देवकुरुकूटमिति, विमलकाञ्चनकूटे यथार्थे क्रमेण च वत्सावत्समित्राभिधानाधोलोकवासिदिक्कुमारीद्वयनिवासभूते, वशिष्ठकूटं तन्नामदेवनिवासः, एवमुत्तरत्रापि, गन्धमादनो गजदन्तक एवोत्तरकुरूणां प्रतीचीनः, तत्र 'सिद्धे' गाहा, कण्ठ्या, नवरं स्फाटिककूटे लोहिताक्षकूटे अधोलोकनिवासिभोगङ्कराभोगवत्यभिधानदिक्कुमारीद्वयनिवासभूते इति ॥ कूटेष्वपि पुष्करिणीजले द्वीन्द्रियाः सन्तीति द्वीन्द्रियसूत्रम् 'बेइंदियाण'मित्यादि, जातौ—द्वीन्द्रियजातौ याः कुलकोटयः तास्तथा ताश्च ता योनिप्रमुखाश्च—द्विलक्षसंख्यद्वीन्द्रियोत्पत्तिस्थानद्वारकास्ता जातिकुलकोटियोनिप्रमुखाः, इह च विशेषणं परपदं प्राकृतत्वात्, तासां शतसहस्राणि—लक्षाणीति, इदमुक्तं भवति—द्वीन्द्रियजातौ या योनयस्तत्प्रभवा याः कुलकोटयस्तासां लक्षाणि सप्त भवन्तीति, तत्र योनिर्यथा गोमयः तत्र चैकस्यामपि कुलानि विचित्राकाराः कृम्यादय इति। शेषा ध्रुवगण्डिका ससम्बन्धा पूर्ववद्व्याख्येयेति ॥

॥ इति श्रीमदभयदेवाचार्यविरचिते स्थानाख्यतृतीयाङ्गविवरणे सप्तस्थानकाभिधानं सप्तममध्ययनं समाप्तम् ॥

# अथाष्टमस्थानकाख्यमष्टमाध्ययनं

व्याख्यातं सप्तममध्ययनमधुना संख्याक्रमसम्बद्धमेवाष्टस्थानकाख्यमष्टममध्ययनमारभ्यते, तस्य चेदमादिसूत्रम्—

अट्ठहिं ठाणेहिं संपन्ने अणगारे अरिहति एगल्लविहारपडिमं उवसंपज्जित्ताणं विहरित्तते, तं०—सड्ढी पुरिसजाते सच्चे पुरिसजाए मेहावी पुरिसजाते बहुस्सुते पुरिसजाते सत्तिमं अप्पाहिकरणे धितिमं वीरितसंपन्ने। (सू० ५९४) अट्ठविधे जोणिसंगहे पं० तं०—अंडगा पोतगा जाव उब्भिगा उववातिता, अंडगा अट्ठगतिता अट्ठागइआ पं०, तं०—अंडए अंडएसु उववज्जमाणे अंडएहिंतो वा पोततेहिंतो वा जाव उववातितेहिंतो वा उववज्जेज्जा, से चेव णं से अंडते अंडगत्तं विप्पजहमाणे अंडगत्ताते वा पोतगत्ताते वा जाव उववातितत्ताते वा गच्छेज्जा, एवं पोतगावि, जराउजावि, सेसाणं गतीरागती णत्थि। (सू० ५९५) जीवा णमट्ठ कम्मपगडीतो चिणिंसु वा चिणंति वा चिणिस्संति वा, तं०—णाणावरणिज्जं दरिसणावरणिज्जं वेयणिज्जं मोहणिज्जं आउयं नामं गोत्तं अंतराातितं, नेरइया णं अट्ठ कम्मपगडीओ चिणिंसु वा ३, एवं चेव, एवं निरंतरं जाव वेमाणियाणं २४, जीवा णमट्ठ कम्मपगडीओ उवचिणिंसु वा ३ एवं चेव, 'एवं चिण १ उवचिण २ बंध ३ उदीर ४ वेय ५ तह णिज्जरा ६ चेव।' एते छ चउवीसा २४ दंडगा भाणियव्वा। (सू० ५९६)

'अट्ठही'त्यादि, अस्य च पूर्वसूत्रेण सहायं सम्बन्धः-अनन्तरं पुद्गला उक्ताः, ते च कार्म्मणाः प्रतिमाविशेषप्रतिपत्तिमतो विशेषेण निर्ज्जीर्यन्त इत्येकाकिविहारप्रतिमायोग्यः पुरुषो निरूप्यते, इत्येवंसम्बन्धस्यास्य व्याख्या, संहितादिचर्चस्तु प्रसिद्ध एव, नवरं अष्टाभिः स्थानैः-गुणविशेषैः सम्पन्नो-युक्तोऽनगारः-साधुरर्हति-योग्यो भवति 'एगल्ल'त्ति एकाकिनो विहारो-ग्रामादिचर्या स एव प्रतिमा-अभिग्रहः एकाकिविहारप्रतिमा जिनकल्पप्रतिमा मासिक्यादिका वा भिक्षुप्रतिमा तामुपसम्पद्य-आश्रित्य णमित्यलङ्कारे 'विहर्त्तुं' ग्रामादिषु चरितुं, तद्यथा—'सड्ढि'त्ति श्रद्धा-तत्त्वेषु श्रद्धानमास्तिक्यमित्यर्थोऽनुष्ठानेषु वा निजोऽभिलापस्तद्वत् सकलनाकिनायकैरप्यचलनीयसम्यक्त्वचारित्रमित्यर्थः, पुरुषजातं-पुरुषप्रकारः १, तथा सत्यं-सत्यवादि, प्रतिज्ञाशूरत्वात्, सद्भ्यो हितत्वाद्वा सत्यं २, तथा मेधा-श्रुतग्रहणशक्तिस्तद्वत् मेधावि, अथवा मेराए धावतित्ति मेधावि-मर्यादावर्त्ति ३, तथा मेधावित्वाद्बहु-प्रचुरं श्रुतं-आगमः सूत्रतोऽर्थतश्च यस्य तद्बहुश्रुतं, तच्चोत्कृष्टतोऽसम्पूर्णदशपूर्वधरं जघन्यतो नवमस्य तृतीयवस्तुवेदीति ४, तथा शक्तिमत्-समर्थं पञ्चविधकृततुलनमित्यर्थः, तथाहि—"तवेण सत्तेण सुत्तेण, एगत्तेण बलेण य। तुलणा पंचहा वुत्ता, जिणकप्पं पडिवज्जओ ॥१॥" ५, [तपसा सत्त्वेन सूत्रेणैकत्वेन बलेन च पंचधा तुलना उक्ता जिनकल्पं प्रतिपद्यमानस्य ॥१॥] 'अल्पाधिकरणं' निष्कलहं ६ 'धृतिमत्' चित्तस्वास्थ्ययुक्तमरतिरत्यनुलोमप्रतिलोमोपसर्गसहमित्यर्थः ७, वीर्यं-उत्साहातिरेकस्तेन संपन्नमिति ८, इहाद्यानामेव चतुर्णां पदानां प्रत्येकमन्ते पुरुषजातशब्दो दृश्यते ततोऽन्त्यानामप्ययं सम्बन्धनीय इति। अयं चैवंविधोऽनगारः सर्वप्राणिनां रक्षणक्षमो भवतीति तेषामेव योन्याः सङ्ग्रहं गत्यागती चाह—'अट्ठविहे'त्यादि सूत्रचतुष्टयं सुगमं, नवरमौपपातिका देवनारकाः, 'सेसाणं'ति अण्डजपोतजजरायुजवर्जितानां रसजादीनां गतिरागतिश्च नास्तीत्यष्टप्रकारेति शेषः, यतो रसजादयो नौपपातिकेषु सर्व्वेषूत्पद्यन्ते, पञ्चेन्द्रि-

याणामेव तत्रोत्पत्तेः, नाप्यौपपातिका रसजादिषु सर्वेष्वप्युपपद्यन्ते, पञ्चेन्द्रियैकेन्द्रियेष्वेव तेषामुपपत्तेरिति अण्डजपोतजजरायुजसूत्राणि त्रीण्येव भवन्तीति। अण्डजादयश्च जीवा अष्टविधकर्म्मचयादेर्भवन्तीति चयादीन् षट् क्रियाविशेषान् सामान्यतो नारकादिपदेषु च प्रतिपादयन्नाह—'जीवा ण'मित्यादि, प्रागिव व्याख्येयं, नवरं चयनं व्याख्यानान्तरेणासकलनं उपचयनं-परिपोषणं बन्धनं-निर्मापणं उदीरणं-करणेनाकृष्य दलिकस्योदये दानं वेदनं-अनुभव उदय इत्यर्थः, निर्जरा-प्रदेशेभ्यः शटनमिति, लाघवार्थमतिदिशन्नाह—'एवं चेव'त्ति यथा चयनार्थः कालत्रयविशेषतः सामान्येन नारकादिषु चोक्तः एवमुपचयार्थोऽपीति भावः, 'एवं चिणे'त्यादिगाथोत्तरार्द्ध प्राग्वत् 'एए छे'त्यादि, यतश्चयनादिपदानि षड् अतः सामान्यसूत्रपूर्वकाः षडेव दण्डका इति।

अष्टविधकर्मणः पुनश्चयादिहेतुमासेव्य तद्विपाकं जानन्नपि कर्म्मगुरुत्वात् कश्चिन्नालोचयतीति दर्शयन्नाह—

अट्ठहिं ठाणेहिं माती मायं कट्टु नो आलोतेज्जा नो पडिक्कमेज्जा जाव नो पडिवज्जेज्जा, तं०—करिंसु वाऽहं १ करेमि वाऽहं २ करिस्सामि वाऽहं ३ अकित्ती वा मे सिया ४ अवण्णे वा मे सिया ५ अवणए वा मे सिया ६ कित्ती वा मे परिहाइस्सइ ७ जसे वा मे परिहाइस्सइ ८। अट्ठहि ठाणेहिं माई मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा, तंजहा—मातिस्स णं अस्सिं लोए गरहिते भवति १ उववाए गरहिते भवति २ आजाती गरहिता भवति ३ एगमवि माती मातं कट्टु नो आलोएज्जा जाव नो पडिवज्जेज्जा णत्थि तस्स आराहणा ४ एगमवि मायी मायं कट्टु आलोएज्जा जाव पडिवज्जेज्जा अत्थि तस्स आराहणा ५ बहुतोवि माती मायं कट्टु नो आलोएज्जा जाव

णण ३ जाव चइत्ता इहेव माणुस्सए भवे जाइं इमाइं कुलाइं भवन्ति, इड्ढाइं जाव बहुजणस्स अपरिभूताइं तहप्पगारेसु कुलेसु पुमत्ताते पच्चायाति, से णं तत्थ पुमे भवति सुरूवे सुवन्ने सुगंधे सुरसे सुफासे इट्ठे कंते जाव मणामे अहीणस्सरे जाव मणामस्सरे आदेज्जवतणे पच्चायाते, जाऽविय से तत्थ बाहिरब्भन्तरिता परिसा भवति सावि त णं आढाति जाव बहुमज्जउत्ते। भासउ २। (सू० ५९७)

'अट्ठही'त्यादि, मायीति मायावान् 'मायं'ति गुप्तत्वेन मायाप्रधानोऽतिचारो मायैव तां 'कृत्वा' विधाय 'नो आलोचयेद्' गुरवे न निवेदयेत्, नो प्रतिक्रामेत्-न मिथ्यादुष्कृतं दद्यात् जावकरणात् नो निंदेज्जा-स्वसमक्षं, नो गरहेज्जा-गुरुसमक्षं, नो विउट्टेज्जा-न व्यावर्त्तेतातिचारात् नो विसोहेज्जा-न विशोधयेदतिचारकलङ्कं शुभभावजलेन नो अकरणतया-अपुनःकरणेनाभ्युत्तिष्ठेद्-अभ्युत्थानं कुर्यात् नो यथार्हं तपःकर्म्म-प्रायश्चित्तं प्रतिपद्येतेति, तद्यथा—'करेसुं वाऽहं'ति कृतवांश्चाहमपराधं, कृतत्वाच्च कथं तस्य निन्दादि युज्यते, तथा 'करेमि वाऽहं'ति साम्प्रतमपि तमहमतिचारं करोमीति कीदृश्यनिवृत्तस्यालोचनादिक्रिया ?, तथा करिष्यामि चाऽहमिति न युक्तमालोचनादीति ३, शेषं स्पष्टम्, नवरमकीर्त्तिः-एकदिग्गामिन्यप्रसिद्धिरवर्णः-अयशः सर्वदिग्गामिन्यप्रसिद्धिरेव, एतद्वयमविद्यमानं मे भविष्यतीति, अपनयो वा-पूजासत्कारादेरपनयनं मे स्यादिति, तथा कीर्त्तिर्यशो वा विद्यमानं मे परिहास्यतीति॥ उक्तार्थस्य विपर्ययमाह—'अट्ठही'त्यादि सुगमं, नवरं मायीत्यासेवावसर एव नालोचनाद्यवसरेऽपि, मायिन आलोचनाद्यप्रवृत्तेः, मायां-अपराधलक्षणां कृत्वा आलोचयेदित्यादि, मायिनो ह्यनालोचनादावयमनर्थः, यदुत-'अस्सिं'ति अयं लोको-जन्म गर्हितो भवति, सातिचारतया निन्दितत्वादित्युक्तं च—"भीउव्विग्गनिलुक्को पायडपच्छन्नदोससयकारी। अप्पच्चयं जणन्तो जडस्स धी जीवियं

वा किवणकुलाणि वा तहप्पगारेसु कुलेसु पुमत्ताते पच्चायाति, से णं तत्थ पुमे भवति दुरूवे दुवन्ने दुग्गंधे दुरसे दुफासे अणिट्ठे अकन्ते अप्पिते अमणुण्णे अमणामे हीणस्सरे दीणस्सरे अणिट्ठसरे अकंतसरे अपितस्सरे अमणुण्णस्सरे अमणामस्सरे अणाएज्जवयणपच्चायाते, जाविय से तत्थ बाहिरब्भंतरिता परिसा भवति सावि त णं णो आढाति णो परिताणति नो महरिहेणं आसणेणं उवणिमन्तेनि, भासंपि त से भासमाणस्स जाव चत्तारि पंच जणा अवुत्ता चेव अब्भुट्ठेंति—मा बहुं अज्जउत्तो! भासउ २। माती णं मानं कट्टु आलोचितपडिकंते कालमासे कालं किच्चा अण्णतरेसु देवलोगेसु देवत्ताए उववत्तारो भवंति, तं०—महिड्ढिएसु जाव चिरट्ठितीसु, से णं तत्थ देवे भवति महिड्ढीए जाव चिरट्ठितीते हारविरातितवच्छे कडकतुडितथंभितभुते अङ्गदकुण्डलमउडगंडतलकन्नपीढधारी विचित्तहत्थाभरणे विचित्तवत्थाभरणे विचित्तमालामउली कल्लाणगपवरवत्थपरिहिते कल्लाणगपवरगंधमल्लाणुलेवणधरे भासुरबोंदी पलंबवणमालधरे दिव्वेणं वन्नेणं दिव्वेणं गंधेणं दिव्वेणं रसेणं दिव्वेणं फासेणं दिव्वेणं संघातेणं दिव्वेणं संठाणेणं दिव्वाए इड्ढीते दिव्वाते जूतीते दिव्वाते पभाते दिव्वाते छायाते दिव्वाए अच्चीए दिव्वेणं तेएणं दिव्वाते लेस्साए दस दिसाओ उज्जोवेमाणा पभासेमाणा महयाऽहतणट्टगीतवातिततंतीतलतालतुडितघणमुतिंगपडुप्पवातितरवेण दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ जावि त से तत्थ बाहिरब्भन्तरता परिसा भवति सावि त णमाढाइ परियाणाति महारिहेण आसणेणं उवनिमन्तेति भासंपि त से भासमाणस्स जाव चत्तारि पंच देवा अवुत्ता चेव अब्भुट्ठिंति—बहुं देवे! भासउ २, से णं तओ देवलोगातो आउक्ख-

येन् माई पमेप इत्युल्लेखेनेत्येवं भयादालोचयतीत्यष्टमं, शेषं सूत्रं 'अयं लोक उपपात आजातिश्च गर्हिते'त्यस्य पदत्रयस्य विवरणतया अवगन्तव्यं, तत्र मायी मायां कृत्वेति, इह कीदृशो भवेदुच्यत इति वाक्यशेपो दृश्यः, 'स' इति यो भवतोऽपि प्रसिद्धः यथेति दृष्टान्तोपन्यासे 'नामए'त्ति संभावनायामलङ्कारे वा अयआकरो-लोहाकरः यत्र लोहं ध्मायते इतिरुपदर्शने वा विकल्पे तिला-धान्यविशेपास्तेपामग्यवा अपि तिलास्तेपामग्निः-तद्दहनप्रवृत्तो वह्निस्तिलाग्निः, एवं शेपा अप्यग्निविशेपाः, नवरं तुपाः कोद्रवादीनां वुसं-यवादीनां कडङ्गरो नलः-शुपिरसराकारः दलानि-पत्राणि सुण्डिकाः-पिटकाकाराणि सुरापिष्टस्वेदनभाजनानि कवेल्ल्यो वा संभाव्यन्ते तासां लिञ्छाणि-चुल्लीस्थानानि संभाव्यन्ते, उक्तं च वृद्धैः-"गोलियसोंडियभंडियलिच्छाणि अग्नेराश्रयाः" अन्यैस्तु देशभेदरूढ्या एते पिष्टपाचकाग्न्यादिभेदा इत्युक्तं, मयाऽप्येतदुपजीव्यैव संभावितमिति, तथा डिका-स्थाल्यः ता एव महत्यो गोलिकाः, प्रतीतं चैतच्छब्दद्वयं, लिञ्छानि तान्येवेति, कुंभकारस्यापाको-भाण्डपचनस्थानं कवेल्लुकानि-प्रतीतानि तेपामापाकः-प्रतीत एव 'जंतवाडचुल्ली' इक्षुयंत्रपाटचुल्ली 'लोहारंवरिसाणि च'त्ति लोहकारस्याम्वरीपा-भ्राष्ट्रा आकरणानीति लोहकाराम्वरीपा इति, तप्तानि-उष्णानि समानि-तुल्यानि जाज्वल्यमानत्वात् ज्योतिपा-वह्निना भूतानि-जातानि यानि तानि समज्योतिर्भूतानि, किंशुकफुल्लं-पलासकुसुमं तत्समानानि रक्ततया उल्का इव उल्का-अग्निपिंडास्तत्सहस्राणीति प्राचुर्यख्यापकं विनिर्मुञ्चन्ति विनिर्मुञ्चन्तीति भृशार्थे द्विर्वचनं अङ्गारा-लघुतराग्निकणास्तत्सहस्राणि प्रविकिरन्ति २'अंतो अंतो' अन्तरन्तः'झियायंति' ध्मायन्ति इन्धनैर्दीप्यन्त इति दृष्टान्तो, दार्ष्टान्तिकस्त्वेवमेवेत्यादि, पश्चात्तापाग्निना ध्मायति-जाज्वल्यते.'अहमेसे'त्ति अहमेपोऽभिशंक्ये अहमेपोऽभिशंक्य इति-एभिरहं दोपकारितया आशंक्ये-संभाव्ये इति, उक्तं हि-"निच्चं संकियभीओ गम्मो सव्वस्स खलियचारित्तो। साहुजणस्स अवमओ मओऽवि पुण दुग्गइं जाइ ॥१॥"[नित्यं शङ्कितभीतो गम्यः सर्वस्य स्ख-

जियइ ॥१॥" इति, [भीतोद्विग्नो गोपायन् प्रकटं प्रच्छन्नं च दोषशतकारकः। अप्रत्ययं जडस्य जनयन् धिग् जीवितं जीवति ॥१॥] इत्येकं १, तथा 'उपपातो' देवजन्म गर्हितः किल्बिषिकादित्वेनेति, उक्तं च—"तवतेणे वइतेणे, रूवतेणे य जे नरे। आयारभावतेणे य, कुव्वई देवकिब्बिसं ॥१॥" [तपःस्तेनो वचस्स्तेनः रूपस्तेनश्च यः नरः। आचारभावस्तेनश्च करोति देवकिल्बिषं ॥१॥] इति द्वितीयं, आजातिः—ततश्च तस्य मनुष्यजन्म गर्हिता जात्यैश्वर्यरूपादिरहिततयेति, उक्तं च—"तत्तोवि से चइत्ताणं, लब्भिही एलमूअगं। नरगं तिरिक्खजोणिं वा, बोही जत्थ सुदुल्लहा ॥१॥" [ततोऽपि स च्युत्वा प्राप्स्यत्येडकमूकतां नरकं तिर्यग्योनिं च यत्र सुदुर्लभा बोधिः ॥१॥] तृतीयं, तथा एकामपि मायी मायां—अतिचाररूपां कृत्वा यो नालोचयेदित्यादि, नास्ति तस्याराधना ज्ञानादिमोक्षमार्गस्येत्यनर्थ इति, उक्तं च—"लज्जाए गारवेण य बहुस्सुयमएण वावि दुच्चरियं। जे न कहिंति गुरूणं न हु ते आराहगा होंति ॥१॥" [लज्जया गौरवेन च बहुश्रुतत्वमदेन वा दुश्चरितमपि ये गुरुभ्यो न कथयन्ति ते नैवाराधका भणिताः ॥१॥] तथा—"नवि तं सत्थ व विसं व दुप्पउत्तो व कुणइ वेयालो। जंतं व दुप्पउत्तं सप्पो व पमाइओ कुद्धो ॥२॥ जं कुणइ भावसल्लं अणुद्धियं उत्तमट्ठकालम्मि। दुल्लहबोहीअत्तं अणंतसंसारियत्तं वा ॥३॥" इति [शस्त्रं वा विषं वा दुष्प्रयुक्तो वेतालो वा नैव तत्करोति दुष्प्रयुक्तं यंत्रं वा प्रमादिनः क्रुद्धः सर्पो वा ॥१॥ यदनुद्धृतं भावशल्यमुत्तमार्थकाले करोति दुर्लभबोधिकत्वमनन्तसंसारिकत्वं च ॥२॥] चतुर्थं, तथा एकामपीत्यादिना त्वर्थप्राप्तिरुक्तेति, यदाह—"उद्धरियसव्वसल्लो भत्तपरिन्नाएँ धणियमाउत्तो। मरणाराहणजुत्तो चंदगवेज्झं समाणेइ ॥१॥" इति, [उद्धृतसर्वशल्यः भक्तपरिज्ञायां गाढमायुक्तः मरणाराधनायुक्तः चन्द्रकवेध्यं संपूरयति ॥१॥] पञ्चममपि, एवं बहुत्वेनापि अनालोचनादावालोचनादौ वाऽनर्थोऽर्थश्च षष्ठसप्तमे, तथाऽऽचार्योपाध्यायस्य वा मे अतिशेषं ज्ञानदर्शनं समुत्पद्येत, स च मामालोक-

तथाप्रकारेऽन्तकुलादिष्वित्यर्थः, प्रत्यायाति प्रत्याजायते वा 'पुमि'त्ति पुमान् 'अणिट्ठे'त्यादि इष्यते स्म प्रयोजनवशादितीष्टः कान्तः—कान्तियोगात् प्रियः—प्रेमविषयः मनोज्ञः—शुभस्वभावः मनसा अम्यते—गम्यते सौभाग्यतोऽनुस्मर्यत इति मनोऽमः एतन्निषेधात् प्रकृतविशेषणानि तथा हीनस्वरः—ह्रस्वस्वरस्तथा दीनो—दैन्यवान् पुरुषस्तत्सम्बन्धित्वात्स्वरोऽपि दीनः स स्वरो यस्य स तथा, अनादेय-वचनश्चासौ प्रत्याजातश्चेति अथवा प्रथमैकवचनलोपादनादेयवचनो भवति प्रत्याजातः सन्निति, शेषं कण्ठ्यं यावद् 'भासउ'त्ति, अनेन प्रत्याजातिगर्हितत्वमुक्तमिति, 'माथी'त्यादिना आलोचकस्येहलोकादिस्थानत्रयागर्हितत्वमुक्तविपर्ययस्वरूपमाह—हारेण विराजितं वक्षः—उरो यस्य स तथा कटकानि प्रतीतानि तुटितानि बाह्वाभरणविशेषास्तैः स्तम्भितौ स्तब्धीकृतौ भुजौ—बाहू यस्य स तथा। 'अंगदे'त्यादि, कर्णाविव पीठे—आसने कुण्डलाधारत्वात्कर्णपीठे, मृष्टे—घृष्टे गण्डतले च—कपोलतले च कर्णपीठे च याभ्यां ते मृष्टगण्डतल-कर्णपीठे ते च ते कुण्डले चेति विशेषणोत्तरपदः प्राकृतत्वात्कर्मधारयः, अङ्गदे च—केयूरे बाह्वाभरणविशेषावित्यर्थः, कुण्डलमृष्टगण्डतलकर्णपीठे च धारयति यः स तथा, अथवा अङ्गदे च कुण्डले च मृष्टगण्डतले कर्णपीठे च कर्णाभरणविशेषभूते धारयति यः स तथा विचित्राणि—विविधानि हस्ताभरणानि अङ्गुलीयकादीनि यस्य स तथा, तथा विचित्राणि वस्त्राणि चाभरणानि च यस्य वस्त्राण्येव वाऽऽभरणानि—भूषणानि अवस्थाभरणानि वा—अवस्थोचितानीत्यर्थो यस्य स तथा, विचित्रा मालाश्च—पुष्पमाला मौलिश्च—शेखरो यस्य विचित्रमालानां वा मौलिर्यस्य स तथा, कल्याणकानि—माङ्गल्यानि प्रवराणि—मूल्यादिना वस्त्राणि परिहितानि—निवसितानि येन तान्येव वा परिहितो—निवसितो यः स तथा, कल्याणकं, प्रवरं च पाठान्तरेण प्रवरगन्धं च माल्यं—मालायां साधु पुष्पमित्यर्थः अनुलेपनं च—श्रीखण्डादिविलेपनं यो धारयति स तथा,भास्वरा—दीप्रा बोन्दी—शरीरं यस्य स तथा, प्रलम्बा या वनमाला—आभरणविशेषस्तां धारयति

लितचारित्रः साधुजनेनावमतः मृतोऽपि पुनर्दुर्गतिं याति ॥१॥]अनेनानालोचकस्यायं लोको गर्हितो भवतीति दर्शितं,'से णं तस्से'त्यादिना पाठान्तरेण मायी णं मायं कट्टु इत्यादिना वा उपपातो गर्हितो भवतीति दर्श्यते,'कालमासे'त्ति मरणमासे उपलक्षणत्वान्मरणदिवसे मरणमुहूर्त्त 'कालं किच्चा' मरणं कृत्वा अन्यतरेषु व्यन्तरादीनां 'देवलोकेषु' देवजनेषु मध्ये 'उववत्तारो'त्ति वचनव्यत्ययादुपपत्ता भवतीति, नो महर्द्धिकेषु परिवारादिऋद्ध्या नो महाद्युतिषु शरीराभरणादिदीप्त्या नो महानुभागेषु वैक्रियादिशक्तितः नो महाबलेषु–प्राणवत्सु नो महासौख्येषु नो महेशाख्येषु वा नो दूरंगतिकेषु–न सौधर्म्मादिगतिषु नो चिरस्थितिकेषु–एकद्व्यादिसागरोपमस्थितिकेषु यापि च 'से' तस्य 'तत्र' देवलोकेषु 'बाह्या' अप्रत्यासन्ना दासादिवत् 'अभ्यन्तरा' प्रत्यासन्ना पुत्रकलत्रादिवत् 'परिषत्' परिवारो भवति सापि 'नो आद्रियते' नादरं करोति, 'नो परिजानाति' स्वामितया नाभिमन्यते 'नो' नैव महच्च तदर्हं च–योग्यं महार्हं तेनासनेनोपनिमन्त्रयते, किं बहुना ?, दौर्भाग्यातिशयात्तस्य यावच्चतुःपञ्चाः देवा भाषणनिषेधायाभ्युत्तिष्ठन्ति–प्रयतन्ते, कथं ? 'मा बहु'मित्यादि, अनेनोपपातगर्होक्ता, आजातिगर्हितत्वं तु 'से ण'मित्यादिनाऽऽचष्टे, 'से'त्ति सोऽनालोचकस्ततोऽन्यन्तरादिरूपाद् देवलोकादवधेः आयुःकर्म्मपुद्गलनिर्जरणेन भवक्षयेण–आयुःकर्मादिनिबन्धनदेवपर्यायनाशेन स्थितिक्षयेण–आयुःस्थितिबन्धक्षयेण देवभवनिबन्धनशेषकर्म्मणां वा, अनन्तरं–आयुःक्षयादेः समनन्तरमेव 'च्यवं' च्यवनं 'च्युत्वा' कृत्वा 'इहैव' प्रत्यक्षे मानुष्यके भवे पुंस्तया प्रत्याजायत इति सम्बन्धः, केषु कुलेषु कुटुम्बकेषु अन्वयेषु वा किंविधेषु ?–'यानि इमानि' वक्ष्यमाणतया च प्रत्यक्षाणि भवन्ति, तद्यथा—अन्तकुलाणि–वरुटछिंपकादीनां प्रान्तकुलानि–चण्डालादीनां तुच्छकुलानि–अल्पमानुषाणि अगम्भीराशयानि वा दरिद्रकुलानि–अनीश्वराणि कृपणकुलानि–तर्कणवृत्तीनि नटनग्नाचार्यादीनां भिक्षाककुलानि–भिक्षणवृत्तीनि तथाविधलिङ्गिकानां च

तथाप्रकारेष्वन्तकुलादिष्वित्यर्थः, प्रत्यायाति प्रत्याजायते वा 'पुमि'त्ति पुमान् 'अणिट्ठे'त्यादि इष्यते स्म प्रयोजनवशादितीष्टः कान्तः-कान्तियोगात् प्रियः-प्रेमविषयः मनोज्ञः-शुभस्वभावः मनसा अम्यते-गम्यते सौभाग्यतोऽनुसर्यत इति मनोऽमः एतन्निषेधात् प्रकृतविशेषणानि तथा हीनस्वरः-ह्रस्वस्वरस्तथा दीनो-दैन्यवान् पुरुषस्तत्सम्बन्धित्वात्स्वरोऽपि दीनः स स्वरो यस्य स तथा, अनादेयवचनश्चासौ प्रत्याजातश्चेति अथवा प्रथमैकवचनलोपादनादेयवचनो भवति प्रत्याजातः सन्निति, शेषं कण्ठ्यं यावद् 'भासउ'त्ति, अनेन प्रत्याजातिगर्हितत्वमुक्तमिति, 'मायी'त्यादिना आलोचकस्येहलोकादिस्थानत्रयागर्हितत्वमुक्तविपर्ययस्वरूपमाह-हारेण विराजितं वक्षः-उरो यस्य स तथा कटकानि प्रतीतानि तुटितानि बाह्वाभरणविशेषास्तैः स्तम्भितौ स्तब्धीकृतौ भुजौ-बाहू यस्य स तथा। 'अंगदे' त्यादि, कर्णाविव पीठे-आसने कुण्डलाधारत्वात्कर्णपीठे, मृष्टे-घृष्टे गण्डतले च-कपोलतले च कर्णपीठे च यकाभ्यां ते मृष्टगण्डतलकर्णपीठे ते च ते कुण्डले चेति विशेषणोत्तरपदः प्राकृतत्वात्कर्मधारयः, अङ्गदे च-केयूरे बाह्वाभरणविशेषावित्यर्थः, कुण्डलमृष्टगण्डतलकर्णपीठे च धारयति यः स तथा, अथवा अङ्गदे च कुण्डले च मृष्टगण्डतले कर्णपीठे च कर्णाभरणविशेषभूते धारयति यः स तथा विचित्राणि-विविधानि हस्ताभरणानि अङ्गुलीयकादीनि यस्य स तथा, तथा विचित्राणि वस्त्राणि चाभरणानि च यस्य वस्त्राण्येव वाऽऽभरणानि-भूषणानि अवस्थाभरणानि वा-अवस्थोचितानीत्यर्थो यस्य स तथा, विचित्रा मालाश्च-पुष्पमाला मौलिश्च-शेखरो यस्य विचित्रमालानां वा मौलिर्यस्य स तथा, कल्याणकानि-माङ्गल्यानि प्रवराणि-मूल्यादिना वस्त्राणि परिहितानि-निवसितानि येन तान्येव वा परिहितो-निवसितो यः स तथा, कल्याणकं, प्रवरं च पाठान्तरेण प्रवरगन्धं च माल्यं-मालायां साधु पुष्पमित्यर्थः अनुलेपनं च-श्रीखण्डादिविलेपनं यो धारयति स तथा,भास्वरा-दीप्रा बोन्दी-शरीरं यस्य स तथा, प्रलम्बा या वनमाला-आभरणविशेषस्तां धारयति

यः स तथा, दिव्येन–स्वर्गसम्बन्धिना प्रधानेनेत्यर्थो वर्णादिना युक्त इति गम्यते, सङ्घातेन संहननेन–वज्रर्षभनाराचलक्षणेन संस्थानेन–समचतुरस्रलक्षणेन ऋद्ध्या–विमानादिरूपया युक्त्या–अन्यान्यभक्तिभिस्तथाविधद्रव्ययोजनेन प्रभया–प्रभावेन माहात्म्येनेत्यर्थः, छायया–प्रतिबिम्बरूपया अर्चिषा–शरीरनिर्गततेजोज्वालया तेजसा–शरीरस्थकान्त्या लेश्यया–अन्तःपरिणामरूपया शुक्लादिकया उद्योतयमानः–स्थूलवस्तूपदर्शनतः प्रभासयमानस्तु–सूक्ष्मवस्तूपदर्शनत इति, एकार्थिकत्वेऽपि चैतेषां न दोषः, उत्कर्षप्रतिपादकत्वेनाभिहितत्वादिति, महता–प्रधानेन बृहता वा रवेणेति सम्बन्धः, अहतः–अनुबद्धो रवस्यैतद्विशेषणं नाटचं नृत्तं तेन युक्तं गीतं नाटयगीतं तच्च वादितानि च–तानि शब्दवन्ति कृतानि तन्त्री च–वीणा तलौ च–हस्तौ तालाश्च–कंशिकाः 'तुडिय'त्ति तूर्याणि च–पटहादीनि वादिततन्त्रीतलतालतूर्याणि तानि च तथा घनो मेघस्तदाकारो यो मृदङ्गो ध्वनिगाम्भीर्यसाधर्म्यात् स चासौ पटुना–दक्षेण प्रवादितश्च यः स घनमृदङ्गपटुप्रवादितः स चेति द्वन्द्वे तेषां रवः–शब्दस्तेन करणभूतेन, अथवा 'आह–य'त्ति आख्यानकप्रतिबद्धं यन्नाटचं तेन युक्तं यत्तद्गीतं, शेषं तथैव, इह च मृदङ्गग्रहणं तूर्येषु मध्ये तस्य प्रधानत्वात्, यत उच्यते—'मद्दलसाराइं तूरा'ति, भोगार्हा भोगाः–शब्दादयो भोगभोगास्तान् भुञ्जानः–अनुभवन् विहरति–क्रीडति तिष्ठति वेति, भाषामपि च 'से' तस्य भाषमाणस्यास्तामेको द्वौ वा सौभाग्यातिशयात् यावच्चत्वारः पञ्च वा देवा अनुक्ता एव–केनाप्यप्रेरिता एव भाषणप्रवर्त्तनाय बहोरपि भाषितस्य स्वबहुमतत्वख्यापनाय चाभ्युत्तिष्ठन्ति, ब्रुवते च 'बहु'मित्यादि, अभिमतमिदं भवदीयं भाषणमिति हृदयं, अनेनालोचकस्योपपातागर्हितत्वमुक्तं, एतद्गुणनादिहलोकागर्हितत्वलघुताह्लादादि आलोचनागुणसद्भावेन वाच्यं, आलोचनागुणाश्चैते—"लहुयाल्हाइयजणणं अप्पपरनियत्ति अज्जवं सोही। दुक्करकरणं आढा निस्सल्लत्तं च सोहिगुणा ॥१॥" [लघुताऽऽह्लादिताजननं आत्मपरनियंतृताऽऽर्जवं शोधिः दुष्करकरणं

एसणा० आयाणभंडमत्त० उच्चारपासवण० मणस० वइस० कायसमिती (सू०६०३)

'अट्ठविहा गणिसंपये'त्यादि गणः-समुदायो भूयानतिशयवान् वा गुणानां साधूनां वा यस्यास्ति स गणी-आचार्यस्तस्य सम्पत्-समृद्धिर्भावरूपा गणिसम्पत् तत्राचरणमाचारः-अनुष्ठानं स एव सम्पत्-विभूतिस्तस्य वा सम्पत्-सम्पत्तिः प्राप्तिः आचारसम्पत्, सा च चतुर्द्धा, तद्यथा-संयमध्रुवयोगयुक्तता, चरणे नित्यं समाध्युपयुक्ततेत्यर्थः १ असंप्रग्रहः आत्मनो जात्याद्युत्सेकरूपग्रहवर्जनमिति भावः २ अनियतवृत्तिः अनियतविहार इति योऽर्थः ३ वृद्धशीलता वपुर्मनसो निर्विकारतेतियावत् ४, एवं श्रुतसम्पत्, साऽपि चतुर्धा, तद्यथा-बहुश्रुतता युगप्रधानागमतेत्यर्थः १ परिचितसूत्रता २ विचित्रसूत्रता स्वसमयादिभेदात् ३ घोषविशुद्धिकरता च उदात्तादिविज्ञानादिति ४, शरीरसम्पच्चतुर्द्धा, तद्यथा-आरोहपरिणाहयुक्तता उचितदैर्घ्यविस्तरतेत्यर्थः १ अनवत्रपता अलज्जनीयाङ्गतेत्यर्थः २ परिपूर्णेन्द्रियता ३ स्थिरसंहननता चेति ४, वचनसम्पच्चतुर्द्धा, तद्यथा-आदेयवचनता १ मधुरवचनता २ अनिश्रितवचनता मध्यस्थवचनतेत्यर्थः ३ असन्दिग्धवचनता चेति ४, वाचनासम्पच्चतुर्द्धा, तद्यथा-विदित्वोद्देशनं १ विदित्वा समुद्देशनं परिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः २ परिनिर्वाप्य वाचना, पूर्वदत्तालापकानधिगमय्य शिष्यं पुनः सूत्रदानमित्यर्थः ३ अर्थनिर्यापणा, अर्थस्य पूर्वापरसाङ्गत्येन गमनिकेत्यर्थः ४, मतिसम्पच्चतुर्द्धा, अवग्रहेहापायधारणाभेदादिति, प्रयोगसम्पच्चतुर्द्धा, इह प्रयोगो वादविषयस्तत्रात्मपरिज्ञा वादादिसामर्थ्यविषये १ पुरुषपरिज्ञानं किंनयोऽयं वाद्यादिः २ क्षेत्रपरिज्ञानं ३ वस्तुपरिज्ञानं वस्त्विह वादकाले राजामात्यादि ४, सङ्ग्रहपरिज्ञा सङ्ग्रहः-स्वीकरणं तत्र परिज्ञा-ज्ञानं नाम-अभिधानमष्टमीसम्पत्, सा च चतुर्विधा, तद्यथा-बालादियोग्यक्षेत्रविषया १ पीठफलकादिविषया २ यथासमयं स्वाध्यायभिक्षादिविषया ३ यथोचितविनयविषया चेति ४ ॥ आचार्या हि गुणरत्ननिधानमिति

असंवरे पं० तं०—सोतिंदिअअसंवरे जाव कायअसंवरे (सू० ५९९) अट्ठ फासा पं० तं०—कक्खडे मउते गरुते लहुते सीते उसिणे निद्धे लुक्खे (सू० ५९९) अट्ठविधा लोगठिती पं० तं०—आगासपतिट्ठिते वाते २ वातपतिट्ठिते उदही २ एवं जधा छट्ठाणे जाव जीवा कम्मपतिट्ठिता अजीवा जीवसंगहीता जीवा कम्मसंगहीता (सू०६००)

'अट्ठविहे,त्यादि सूत्रद्वयं कण्ठ्यं, अनन्तरं कायसंवर उक्तः, कायश्चाष्टस्पर्शो भवतीति स्पर्शसूत्रं, कण्ठ्यं चेति, स्पर्शाश्चाष्टावेवेति लोकस्थितिरियमितो लोकस्थितिविशेषमाह—'अट्ठविहे'त्यादि, कण्ठ्यं, 'एवं जहा छट्ठाणे' इत्यादि, तत्र चैवं–उदधिपइट्ठिया पुढवी, घनोदधावित्यर्थः ३ पुढविपइट्ठिया तसा थावरा पाणा मनुष्यादय इत्यर्थः ४ अजीवा जीवपइट्ठिया, शरीरादिपुद्गला इत्यर्थः ५ जीवा कम्मपइट्ठिया कर्मवशवर्त्तित्वादिति ६ अजीवाः पुद्गलाकाशादयो जीवैः संगृहीताः–स्वीकृताः अजीवान् विना जीवानां सर्वव्यवहाराभावात् ७ जीवाः कर्म्मभिः–ज्ञानावरणादिभिः संगृहीता बद्धाः ८, षष्ठपदे जीवोपग्राहकत्वेन कर्म्मण आधारता विवक्षितेह तु तस्यैव जीवबन्धनतेति विशेषः ॥

इदं च लोकस्थित्यादि स्वसम्पदुपेतगणिवचनात् ज्ञायत इति गणिसम्पदमाह—

अट्ठविहा गणिसंपता पं० तं०—आचारसंपया १ सुयसंपता २ सरीरसंपता ३ वतणसंपता ४ वातणासंपता ५ मतिसंपता ६ पतोगसंपता ७ संगहपरिण्णा णाम अट्ठमा ८ (सू० ६०१) एगमेगे णं महानिही अट्ठचक्कवालपतिट्ठाण अट्ठट्ठजोयणाइं उड्ढं उच्चत्तेणं पन्नत्ते (सू० ६०२) अट्ठ समितीतो पं० तं०—ईरियासमिति भासासमिति

एसणा० आयाणभंडमत्त० उच्चारपासवण० मणस० वइस० कायसमिती (सू०६०३)

'अट्ठविहा गणिसंपये'त्यादि गणः-समुदायो भूयानतिशयवान् वा गुणानां साधूनां वा यस्यास्ति स गणी-आचार्यस्तस्य सम्पत्-समृद्धिर्भावरूपा गणिसम्पत् तत्राचरणमाचारः-अनुष्ठानं स एव सम्पत्-विभूतिस्तस्य वा सम्पत्-सम्पत्तिः प्राप्तिः आचारसम्पत् , सा च चतुर्द्धा, तद्यथा-संयमध्रुवयोगयुक्तता, चरणे नित्यं समाध्युपयुक्ततेत्यर्थः १ असंप्रग्रहः आत्मनो जात्याद्युत्सेकरूपग्राहवर्जनमिति भावः २ अनियतवृत्तिः अनियतविहार इति योऽर्थः ३ वृद्धशीलता वपुर्मनसो निर्विकारतेतियावत् ४, एवं श्रुतसम्पत् , साऽपि चतुर्धा, तद्यथा-बहुश्रुतता युगप्रधानागमतेत्यर्थः १ परिचितसूत्रता २ विचित्रसूत्रता स्वसमयादिभेदात् ३ घोषविशुद्धिकरता च उदात्तादिविज्ञानादिति ४, शरीरसम्पच्चतुर्द्धा, तद्यथा-आरोहपरिणाहयुक्तता उचितदैर्घ्यविस्तरतेत्यर्थः १ अनवत्रपता अलज्जनीयाङ्गतेत्यर्थः २ परिपूर्णेन्द्रियता ३ स्थिरसंहननता चेति ४, वचनसम्पच्चतुर्द्धा, तद्यथा-आदेयवचनता १ मधुरवचनता २ अनिश्रितवचनता मध्यस्थवचनतेत्यर्थः ३ असन्दिग्धवचनता चेति ४, वाचनासम्पच्चतुर्द्धा, तद्यथा-विदित्वोद्देशनं १ विदित्वा समुद्देशनं परिणामिकादिकं शिष्यं ज्ञात्वेत्यर्थः २ परिनिर्वाप्य वाचना, पूर्वदत्तालापकानधिगमय्य शिष्यं पुनः सूत्रदानमित्यर्थः ३ अर्थनिर्यापणा, अर्थस्य पूर्वापरसाङ्गत्येन गमनिकेत्यर्थः ४, मतिसम्पच्चतुर्द्धा, अवग्रहेहापायधारणाभेदादिति, प्रयोगसम्पच्चतुर्द्धा, इह प्रयोगो वादविषयस्तत्रात्मपरिज्ञा वादादिसामर्थ्यविषये १ पुरुषपरिज्ञानं किंनयोऽयं वाद्यादिः २ क्षेत्रपरिज्ञानं ३ वस्तुपरिज्ञानं वस्त्विह वादकाले राजामात्यादि ४, सङ्ग्रहपरिज्ञा सङ्ग्रहः-स्वीकरणं तत्र परिज्ञा-ज्ञानं नाम-अभिधानमष्टमीसम्पत् , सा च चतुर्विधा, तद्यथा-बालादियोग्यक्षेत्रविषया १ पीठफलकादिविषया २ यथासमयं स्वाध्यायभिक्षादिविषया ३ यथोचितविनयविषया चेति ४ ॥ आचार्या हि गुणरत्ननिधानमिति

निधानप्रस्तावान्निधिव्यतिकरमाह—'एके'त्यादि, एकैको महानिधिश्चक्रवर्त्तिसम्बन्धी अष्टचक्रवालप्रतिष्ठानः—अष्टचक्रप्रतिष्ठितः, मञ्जूषावत्, तत्स्वरूपं चेदम्—"नवजोयणविच्छिन्ना बारसदीहा समूसिया अट्ठ। जक्खसहस्सपरिवुडा चक्कट्ठपइट्ठिया नववि ॥१॥" [नवापि नवयोजनविस्तीर्णानि द्वादशदीर्घाणि अष्टसमुच्छ्रितानि यक्षसहस्रपरिवृतानि चक्राष्टकप्रतिष्ठितानि ॥१॥] द्रव्यनिधानवक्तव्यतोक्ता, भावनिधानभूतसमितिस्वरूपमाह—'अट्ठ समिई'त्यादि, सम्यगितिः—प्रवृत्तिः समितिः, ईर्यायां गमने समितिश्चक्षुर्व्यापारपूर्वतयेतीर्यासमितिः, एवं भाषायां निरवद्यभाषणतः, एषणायामुद्गमादिदोषवर्जनतः, आदाने—ग्रहणे भाण्डमात्रायाः—उपकरणमात्राया भाण्डस्य वा—वस्त्राद्युपकरणस्य मृन्मयादिपात्रस्य वा मात्रस्य च—साधुभाजनविशेषस्य निक्षेपणायां च समितिः सुप्रत्युपेक्षितसुप्रमार्जितक्रमेणेति, उच्चारप्रश्रवणखेलसिङ्घानजल्लानां पारिष्ठापनिकायां समितिः स्थण्डिलविशुद्ध्यादिक्रमेण, खेलो—निष्ठीवनं सिंघानो—नासिकाश्लेष्मेति, मनसः कुशलतायां समितिः, वाचोऽकुशलत्वनिरोधे समितिः, कायस्य स्थानादिषु समितिरिति ॥

समितिष्वतिचारादावालोचना देयेत्यालोचनाचार्यस्यालोचकसाधोः प्रायश्चित्तस्य च स्वरूपाभिधानाय सूत्रत्रयमाह—

अट्ठहिं ठाणेहिं संपन्ने अणगारे अरिहति आलोतणा पडिच्छित्तए, तं०—आतारवं आहारवं ववहारवं ओवीलए पकुव्वते अपरिस्साती निज्जावते अवातदंसी। अट्ठहिं ठाणेहिं संपन्ने अणगारे अरिहति अत्तदोसमालोइत्तते, तं०—जातिसंपन्ने कुलसंपन्ने विणयसंपन्ने णाणसंपन्ने दंसणसंपन्ने चरित्तसंपन्ने खंते दंते (सू० ६०४) अट्ठविहे पायच्छित्ते पं० तं०—आलोयणारिहे पडिक्कमणारिहे तदुभयारिहे विवेगारिहे विउसग्गारिहे तवारिहे

छेयारिहे मूलरिहे (सू० ६०५) अट्ठ मतट्ठाणा पं० तं०—जातिमते कुलमते बलमते रूवमते तव० सुत० लाभ० इस्सरितमते (सू० ६०६)

'अट्ठही'त्यादि सुगमं, नवरं 'आयारवं'ति ज्ञानादिपञ्चप्रकाराचारवान् ज्ञानासेवनाभ्यां, 'आहारव'न्ति अवधारणावान् आलोचकेनालोच्यमानानामतीचाराणामिति, आह च—"आयारवमायारं पंचविहं मुणइ जो अ आयरइ। आहारवमवहारे आलोइंतस्स सव्वंति ॥१॥" [आचारवानाचारं पंचविधं जानाति यश्चाचरति आधारवानवधारयत्यालोचयतः सर्वमपि॥१॥] 'ववहारवं'ति आगमश्रुताज्ञाधारणाजीतलक्षणानां पञ्चानामुक्तरूपाणां व्यवहाराणां ज्ञातेति, ओवीलए'त्ति अपव्रीडयति–विलज्जीकरोति यो लज्जया सम्यगनालोचयन्तं सन्तं यथा सम्यगालोचयति तथा करोतीत्यपव्रीडकः, अभिहितं च—"ववहारवं ववहारं आगममाई उ मुणइ पंचविहं। ओवीलुवगूहंतं जह आलोएइ तं सव्वं ॥१॥" ति [व्यवहारवान् व्यवहारमागमादिपंचविधं जानाति अपव्रीडयत्यनालोचयन्तमालोचयति यथा तत् सर्वं ॥१॥] 'पकुव्वए'त्ति आलोचिते सति यः शुद्धिं प्रकर्षेण कारयति स प्रकारीति, भणितं च–"आलोइयंमि सोहिं जो कारावेइ सो पकुव्वीओ॥" इति, [आलोचिते यः शोधिं कारयति स प्रकारी।] 'अपरिस्साइ'त्ति न परिश्रवति–नालोचकदोषानुपश्रुत्यान्यस्मै प्रतिपादयति य एवंशीलः सोऽपरिश्रावीति, यदाह–"जो अन्नस्स उ दोसे न कहेई य अपरिसाई सो होइ॥" [योऽन्यस्य दोषान् न कथयति एषोऽपरिश्रावी भवति॥१॥] इति, 'निज्जवए'त्ति निर्यापयति तथा करोति यथा गुर्वपि प्रायश्चित्तं शिष्यो निर्वाहयतीति निर्यापक इति, यथाह च—"निज्जवओ तह कुणई निव्वहई जेण पच्छित्त'न्ति, [निर्यापकस्तथा करोति निर्वाहयति येन प्रायश्चित्तं] 'अवायदंसि'त्ति अपायान्-अनर्थान् शिष्यचित्तभङ्गानिर्वाहादीन् दुर्भिक्षदौर्बल्यादिकृतान् पश्यतीत्येवंशीलः, सम्यगनालोचनायां वा

दुर्लभबोधिकत्वादीन् अपायान् शिष्यस्य दर्शयतीति अपायदर्शीति, भणितं च—"दुब्भिक्खदुब्बलाई इहलोए जाणए अवाए उ। दंसेइ य परलोए दुल्लहबोहित्ति संसारे ॥१॥" इति, [दुर्भिक्षदुर्बलत्वादिकानिह लोकेऽपायान् ज्ञापयेत् दर्शयति च परलोके च संसारे दुर्लभबोधित्वमिति ॥१॥] 'अत्तदोस'त्ति आत्मापराधमिति, जातिकुले मातापितृपक्षौ, तत्सम्पन्नः प्रायोऽकृत्यं न करोति, कृत्वापि पश्चात्तापादालोचयतीति तद्ग्रहणं, यदाह—"जाईकुलसम्पन्नो पायमकिच्चं न सेवई किंचि। आसेविउं च पच्छा तग्गुणओ संममालोए ॥१॥ इति, [जातिकुलसम्पन्नः प्रायः किंचिदकृत्यं न सेवते आसेव्य च पश्चात् तद्गुणतः सम्यगालोचयेत् ॥१॥] विनयसम्पन्नः सुखेनैवालोचयति, तथा ज्ञानसम्पन्नो दोषविपाकं प्रायश्चित्तं वाऽवगच्छति, यतोऽवाचि—"नाणेण उ संपन्नो दोसविवागं वियाणिउं घोरं। आलोएइ सुहं चिय पायच्छित्तं च अवगच्छे ॥१॥" इति, [ज्ञानसंपन्नस्तु घोरं दोषविपाकं विज्ञाय सुखमेवालोचयति प्रायश्चित्तं वाऽवगच्छति ॥१॥] दर्शनसम्पन्नः शुद्धोऽहमित्येवं श्रद्धत्ते, चारित्रसम्पन्नो भूयस्तमपराधं न करोति सम्यगालोचयति प्रायश्चित्तं च निर्वाहयतीति, उक्तं च—"सुद्धो तहत्ति सम्मं सद्दहई दंसणेण संपन्नो। चरणेण उ संपन्नो न कुणइ भुज्जो तमवराहं ॥१॥" इति, [तथा शुद्ध इति सम्यक् श्रद्धत्ते दर्शनसम्पन्नः चरणसंपन्नस्तु भूयस्तमपराधं न करोति ॥१॥] क्षान्तः परुषं भणितोऽप्याचार्यैर्न रुष्यतीति, आह च—"खंतो आयरिएहिं फरुसं भणिओऽवि नवि रूसे"त्ति, [क्षान्तः आचार्यैः परुषं भणितोऽपि नैव रुष्येत् ॥] दान्तः प्रायश्चित्तं दत्तं वोढुं समर्थो भवतीति, आह च—"दंतो समत्थो वोढुं पच्छित्तं जमिह दिज्जए तस्स" इति, [दान्तः वोढुं समर्थः प्रायश्चित्तं यदिहापराधे दत्तं तस्य ॥ ] 'आलोयणे'त्यादि, व्याख्यातं प्रायः, जात्यादिमदेषु सत्स्वालोचनायां न प्रवर्त्तत इति मदस्थानसूत्रं, गतार्थं, नवरं मदस्थानानि—मदभेदाः, इह च दोषाः 'जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह। जात्यादिहीनतां परभवे च निःसंशयं

लमते ॥१॥' इति ॥

वादिनां हि प्रायः श्रुतमदो भवतीति वादिविशेषान् दर्शयन्नाह—

**अट्ठ अकिरियावाती पं० तं०—एगावाती १ अणेगावाती २ मितवादी ३ निम्मितवादी ४ सायवाती ५ समुच्छेदवाती ६ णितावादी ७ ण संति परलोगवाती ८ (सू० ६०७)**

'अट्ठ अकिरिए'त्यादि क्रिया–अस्तीतिरूपा सकलपदार्थसार्थव्यापिनी सैवायथावस्तुविषयतया कुत्सिता अक्रिया नञः कुत्सार्थत्वात्तामक्रियां वदन्तीत्येवंशीलाः अक्रियावादिनो, यथावस्थितं हि वस्त्वनेकान्तात्मकं तन्नास्त्येकान्तात्मकमेव चास्तीति प्रतिपत्तिमन्त इत्यर्थः, नास्तिका इति भावः, एवंवादित्वाच्चैते परलोकसाधकक्रियामपि परमार्थतो न वदन्ति, तन्मतवस्तुसत्त्वे हि परलोकसाधकक्रियाया अयोगादित्यक्रियावादिन एव ते इति, तत्रैक एवात्मादिरर्थ इत्येवं वदतीत्येकवादी, दीर्घत्वं च प्राकृतत्वादिति, उक्तं चैतन्मतानुसारिभिः—"एक एव हि भूतात्मा, भूते भूते व्यवस्थितः। एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥१॥" इति, अपरस्त्वात्मैवास्ति नान्यदिति प्रतिपन्नः, तदुक्तम्—"पुरुष एवेदं ग्नि सर्व्वं यद्भूतं यच्च भाव्यम्, उतामृतत्वस्येशानो यदन्नेनाधिरोहति यदेजति यन्नैजति यद्दूरे यदु अन्तिके यदन्तरस्य सर्वस्यास्य बाह्यत" इति, तथा "नित्यज्ञानविवर्त्तोऽयं, क्षितितेजोजलादिकः। आत्मा तदात्मकश्चेति, सङ्गिरन्ते परे पुनः ॥१॥" इति, शब्दाद्वैतवादी तु सर्व्वं शब्दात्मकमिदमित्येकत्वं प्रतिपन्नः, उक्तं च—"अनादिनिधनं ब्रह्म, शब्दतत्त्वं यदक्षरम्। विवर्त्ततेऽर्थभावेन, प्रक्रिया जगतो यतः ॥१॥" इति, अथवा सामान्यवादी सर्वमेवैकं प्रतिपद्यते, सामा-

न्यस्यैकत्वादित्येवमनेकधैकवादी, अक्रियावादिता चास्य सद्भूतस्यापि तदन्यस्य नास्तीति प्रतिपादनात् आत्माद्वैतपुरुषाद्वैतशब्दाद्वैतादीनां युक्तिभिरघटमानानामस्तित्वाभ्युपगमाच्च, एवमुत्तरत्रापीति १, तथा सत्यपि कथञ्चिदेकत्वे भावानां सर्वथा अनेकत्वं वदतीत्यनेकवादी, परस्परविलक्षणा एव भावास्तथैव प्रमीयमाणत्वात्, यथा रूपं रूपतयेति, अभेदे तु भावानां जीवाजीवबद्धमुक्तसुखितदुःखितादीनामेकत्वप्रसङ्गात् दीक्षादिवैयर्थ्यमिति, किञ्च–सामान्यमङ्गीकृत्यैकत्वं विवक्षितं परैः, सामान्यं च भेदेभ्यो भिन्नाभिन्नतया चिन्त्यमानं न युज्यते, एवमवयवेभ्योऽवयवी धर्मेभ्यश्च धर्मीत्येवमनेकवादी, अस्याप्यक्रियावादित्वं सामान्यादिरूपतयैकत्वे सत्यपि भावानां सामान्यादिनिषेधेन तन्निषेधनादिति, न च सामान्यं सर्वथा नास्ति, अभिन्नज्ञानाभिधानाभावप्रसङ्गात्, सर्वथा वैलक्षण्ये चैकपरमाणुमन्तरेण सर्वेषामपरमाणुत्वप्रसङ्गात्, तथा अवयविनं धर्म्मिणं च विना न प्रतिनियतावयवधर्म्मव्यवस्था स्याद्, भेदाभेदविकल्पदूषणं च कथञ्चिद्वादाभ्युपगमनेन निरवकाशमिति २, तथा अनन्तानन्तत्वेऽपि जीवानां मितान्–परिमितान् वदति 'उत्सन्नभव्यकं भविष्यति भुवन'मित्यभ्युपगमात्, मितं वा जीवं–अङ्गुष्ठपर्वमात्रं श्यामाकतन्दुलमात्रं वा वदति न त्वपरिमितमसंख्येयप्रदेशात्मकतया अंगुलासंख्येयभागादारभ्य यावल्लोकमापूरयतीत्येवमनियतप्रमाणतया वा, अथवा मितं सप्तद्वीपसमुद्रात्मकतया लोकं वदत्यन्यथाभूतमपीति मितवादीति, तस्याप्यक्रियावादित्वं वस्तुतत्त्वनिषेधनादेवेति ३, तथा निर्म्मितं–ईश्वरब्रह्मपुरुषादिना कृतं लोकं वदतीति निर्म्मितवादी, तथा चाहुः—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं, प्रसुप्तमिव सर्वतः॥१॥ तस्मिन्नेकार्णवीभूते, नष्टस्थावरजङ्गमे। नष्टामरनरे चैव, प्रणष्टोरगराक्षसे॥२॥ केवलं गह्वरीभूते, महाभूतविवर्जिते। अचिन्त्यात्मा विभुस्तत्र शयानस्तप्यते तपः॥३॥ तत्र तस्य शयानस्य, नाभेः पद्म विनिर्गतम्। तरुणरविमण्डलनिभं, हृद्यं काञ्चनकर्णिकम्॥४॥ तस्मिन्

पद्मे न भगवान् दण्डी यज्ञोपवीतसंयुक्तः। ब्रह्मा तत्रोत्पन्नस्तेन जगन्मातरः सृष्टाः ॥५॥ अदितिः सुरसंघानां दितिरसुराणां मनुर्मनुष्याणाम्। विनता विहङ्गमानां माता विश्वप्रकाराणाम् ॥६॥ कद्रुः सरीसृपाणां सुलसा माता तु नागजातीनाम्। सुरभिश्चतुष्पदानामिला पुनः सर्वबीजानाम् ॥७॥" इति, प्रमाणयति चासौ—बुद्धिमत्कारणकृतं भुवनं संस्थानवत्त्वात् घटवदित्यादि, अक्रियावादिना चास्य 'न कदाचिदनीदृशं जगदि'ति वचनादकृत्रिमभुवनस्याकृत्रिमतानिषेधात्, न चेश्वरादि-कर्तृकत्वं जगतोऽस्ति, कुलालादिकाक्रर्तृत्वप्रसङ्गात् कुलालादिवचेश्वरादेर्बुद्धिमत्कारणस्यानीश्वरताप्रसङ्गात्, किञ्च—ईश्वरस्याशरीरतया कारणाभावात् क्रियास्वप्रवृत्तिः स्यात्, सशरीरत्वे च तत्शरीरस्यापि कर्त्रन्तरेण भाव्य, एवं चानवस्थाप्रसङ्ग इति ४, तथा सातं—सुखमभ्यसनीयमिति वदतीति सातवादी, तथाहि—सातवादी कश्चित्—सुखमेवानुशीलनीयं सुखार्थिना, न त्वसातरूपं तपोनियमब्रह्मचर्यादि, कारणानुरूपत्वात् कार्यस्य नहि शुक्लतन्तुभिरारब्धः पटो रक्तो भवति अपि तु शुक्ल एव, एवं सुखासेवनात् सुखमेवेति, उक्तं च—"मृद्वी शय्या प्रातरुत्थाय पेया, भक्तं मध्ये पानकं चापराह्णे। द्राक्षाखण्डं शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥१॥" अक्रियावादिता चास्य संयमतपसोः पारमार्थिकप्रशमसुखरूपयोः दुःखत्वेनाभ्युपगमात् कारणानुरूपकार्याभ्युपगमस्य च विषयसुखादननुरूपस्य निर्वाणसुखस्याभ्युपगमेन बाधितत्वादिति ५, तथा समुच्छेदं—प्रतिक्षणं निरन्वयनाशं वदति यः स समुच्छेदवादी, तथाहि—वस्तुनः सत्त्वं कार्यकारित्वं, कार्याकारिणोऽपि वस्तुत्वे खरविषाणस्यापि सत्त्वप्रसङ्गात्, कार्यं च नित्यं वस्तु क्रमेण न करोति, नित्यस्यैकस्वभावतया कालान्तरभाविसकलकार्यापातप्रसङ्गात्, न चैवं प्रतिक्षणं स्वभावान्तरोत्पत्त्या नित्यत्वहानिरिति, यौगपद्येनापि न करोति अध्यक्षसिद्धत्वाद्यौगपद्याकरणस्य, तस्मात् क्षणिकमेव वस्तु कार्यं करोतीति, एवं च अर्थक्रियाकारित्वात् क्षणिकं वस्त्विति, अक्रियावादी चायमित्थमवसेयः—

निरन्वयनाशाभ्युपगमे हि परलोकाभावः प्रसजति, फलार्थिनां च क्रियास्वप्रवृत्तिरिति, तथा सकलक्रियासु प्रवर्त्तकस्यासंख्येयसमयसम्भव्यनेकवर्णोल्लेखवतो विकल्पस्य प्रतिसमयक्षयित्वे एकाभिसन्धिप्रत्ययाभावात् सकलव्यवहारोच्छेदः स्यादत एवैकान्तक्षणिकात् कुलालादेः सकाशादर्थक्रिया न घटत इति, तस्मात् पर्यायतो वस्तुसमुच्छेदवद् द्रव्यतस्तु न तथेति ६, तथा नियतं-नित्यं वस्तु वदति यः स तथा, तथाहि-नित्यो लोकः,आविर्भावतिरोभावमात्रत्वादुत्पादविनाशयोः, तथा असतोऽनुत्पादाच्छशविषाणस्येव सतश्चाविनाशात् घटवत्, नहि सर्वथा घटो विनष्टः, कपालाद्यवस्थाभिस्तस्य परिणतत्वात्, तासां चापारमार्थिकत्वात्, मृत्सामान्यस्यैव पारमार्थिकत्वात्, तस्य चाविनष्टत्वादिति, अक्रियावादी चायमेकान्तनित्यस्य स्थिरैकरूपतया सकलक्रियाविलोपाभ्युपगमादिति ७, तथा 'न सन्ति परलोगे वा' इति नेति-न विद्यते शान्तिश्च-मोक्षः परलोकश्च-जन्मान्तरमित्येवं यो वदति स तथा, तथाहि-नास्त्यात्मा प्रत्यक्षादिप्रमाणाविषयत्वात् खरविषाणवत्, तदभावान्न पुण्यपापलक्षणं कर्म्म, तदभावान्न परलोको नापि मोक्ष इति, यच्चैतच्चैतन्यं तद्भूतधर्म्म इति, अस्याक्रियावादिता स्फुटैव, न चैतस्य मतं सङ्गच्छते, प्रत्यक्षाद्यप्रवृत्त्याऽऽत्मादीनां निराकर्त्तुमशक्यत्वात्, सत्यपि वस्तुनि प्रमाणाप्रवृत्तिदर्शनादागमविशेषसिद्धत्वाच, भूतधर्मतापि न चैतन्यस्य, [अविकृतपित्ताद्याधारभूतभूता इति भावः] विवक्षितभूताभावेऽपि जातिस्मरणादिदर्शनादिति, एषां चेह वादिनामष्टानामपि दिग्मात्रमुपदर्शितं, विशेषस्त्वन्यतो ज्ञेय ऊह्यो वेति ॥

एते च वादिनः शास्त्राभिसंस्कृतबुद्धयो भवन्तीत्यष्टस्थानकावतारीणि शास्त्राण्याह—

**अट्ठविहे महानिमित्ते पं० तं०—भोमे उप्पाते सुविणे अंतलिक्खे अंगे सरे लक्खणे वंजणे (सू० ६०८) अट्ठ-**

विभा वयणविभत्ती पं० तं०—निद्देसे पढमा होती, बीतिया उवतेसणे। ततिता करणंमि कता, चउत्थी संपदावणे ॥१॥ पंचमी त अवाताणे, छट्टी सस्सामिवादणे। सत्तमी सन्निहाणत्थे, अट्ठमी आमंतणी भवे ॥२॥ तत्थ पढमा विभत्ती निद्देसे सो इमो अहं वत्ति १। बितीता उण उवतेसे भण कुण व निमं व तं वत्ति ॥३॥ ततिता करणंमि कया णीतं च कतं च तेण व मते वा ३। हंदि णमो साहाते हवति चउत्थी पदाणंमि ॥४॥ अवणे गिण्हसु तत्तो इत्तोत्ति व पंचमी अवादाणे। छट्टी तस्स इमस्स व गतस्स वा सामिसंबंधे ॥५॥ हवइ पुण सत्तमी तमिमंमि आहारकालभावे त। आमंतणी भवे अट्ठमी उ जह हे जुवाणत्ती ॥६॥ (सू० ६०९) अट्ठ ठाणाइं छउमत्थेणं सव्वभावेणं ण याणति न पासति, तं०—धम्मत्थिगातं जाव गंधं वातं, एताणि चेव उप्पन्ननाणदंसणधरे अरहा जिणे केवली जाणइ पासइ जाव गंधं वातं (सू० ६१०) अट्ठविधे आउवेदे पं० तं०—कुमारभिच्चे कायतिगिच्छा सालाती सल्लहत्ता जंगोली भूतवेज्जा खारतंते रसायणे (सू० ६११)

'अट्ठमहानिमित्ते'त्यादि, अतीतानागतवर्त्तमानानामतीन्द्रियभावानामधिगमे निमित्तं-हेतुर्यद्वस्तुजातं तन्निमित्तं, तदभिधायकशास्त्राण्यपि निमित्तानीत्युच्यन्ते, तानि च प्रत्येकं सूत्रवृत्तिवार्त्तिकतः क्रमेण सहस्रलक्षकोटीप्रमाणानीतिकृत्वा महान्ति च तानि निमित्तानि चेति महानिमित्तानि, तत्र भूमिविकारो भौमं-भूकम्पादि तदर्थं शास्त्रमपि भौममेवमन्यान्यपि वाच्यानि १, नवरमुदाहरणमिह—'शब्देन महता भूमिर्यदा रसति कम्पते। सेनापतिरमात्यश्च, राजा राज्यं च पीड्यते ॥१॥' इत्यादि, उत्पादः-सहजरुधिरवृष्ट्यादिः २, स्वप्नो यथा 'मूत्रं वा कुरुते स्वप्ने, पुरीषं वाऽतिलोहितम्। प्रतिबुद्ध्येत् तदा कश्चिल्लभते सोऽर्थनाशनम् ॥१॥' इति ३,

अन्तरिक्षं–आकाशं तत्र भवमान्तरिक्षं–गन्धर्व्वनगरादि, यथा 'कपिलं सस्यघाताय, माञ्जिष्ठं हरणं गवाम् । अव्यक्तवर्णं कुरुते, बलक्षोभं न संशयः ॥१॥ गन्धर्व्वनगरं स्निग्धं, सप्राकारं सतोरणम् । सौम्यां दिशं समाश्रित्य, राज्ञस्तद्विजयंकरम् ॥२॥' इत्यादि ४, अङ्ग–शरीरावयवस्तद्विकार आङ्गं–शिरःस्फुरणादि, यथा 'दक्षिणपार्श्वे स्पन्दनमभिधास्ये तत्फलं स्त्रिया वामे । पृथिवीलाभः शिरसि स्थानविवृद्धिर्ललाटे स्याद् ॥१॥' इत्यादि ५, स्वरः–शब्दः षड्जादिः, स च निमित्तं यथा—'सज्जेण लब्भई वित्तिं, कयं च न विणस्सइ । गावो मित्ता य पुत्ता य, नारीणं चेव वल्लभो ॥१॥' इत्यादि, शकुनरुतं वा यथा—"चिविचिविसद्दो पुन्नो, सामाए सूलिसूलि धन्नो उ । चेरी चेरी दित्तो चिक्कुत्ती लाभहेउत्ति ॥१॥" इत्यादि ६, लक्षणं स्त्रीपुरुषादीनां, यथा—"अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु । गतौ यानं स्वरे चाज्ञा, सर्व्वं सत्त्वे प्रतिष्ठितम् ॥१॥" इत्यादि ७, व्यञ्जनं–मषादि, यथा—'ललाटकेशः प्रभुत्वाये'त्यादि ८ ॥ एतानि च शास्त्राणि वचनविभक्तियोगेनाभिधेयप्रतिपादकानीति वचनविभक्तिस्वरूपमाह—'अट्ठविहा वयणविभत्ती'त्यादि, उच्यते एकत्वद्वित्वबहुत्वलक्षणोऽर्थो यैस्तानि वचनानि विभज्यते कर्तृत्वकर्मत्वादिलक्षणोऽर्थो यया सा विभक्तिः वचनात्मिका विभक्तिर्वचनविभक्तिः, 'सु औ जसि'त्यादि, 'निद्देसे'सिलोगो, निर्देशनं निर्देशः–कर्मादिकारकशक्तिभिरनधिकस्य लिङ्गार्थमात्रस्य प्रतिपादनं तत्र प्रथमा भवति, यथा स वा अयं वाऽऽस्ते अहं वा आसे १, तथा उपदिश्यत इत्युपदेशनं–उपदेशक्रियाया व्याप्यमुपलक्षणत्वादस्य क्रियाया यद्व्याप्यं तत् कर्म्मेत्यर्थस्तत्र द्वितीया, यथा भण इमं श्लोकं कुरु वा तं घटं ददाति तं याति ग्रामं २, तथा क्रियते येन तत्करणं–क्रियां प्रति साधकतमं करोतीति वा करणः–कर्त्ता 'कृत्यल्युटो बहुल' (पा० ३–३–११३) मिति वचनादिति, तत्र करणे तृतीया कृता–विहिता, यथा नीतं सस्य तेन शकटेन कृतं कुण्डं मयेति ३, तथा 'संपदावणे'त्ति सत्कृत्य प्रदाप्यते यस्मै

उपलक्षणत्वात् सम्प्रदीयते वा यस्मै स सम्प्रदापनं सम्प्रदानं वा, तत्र चतुर्थी, यथा भिक्षवे भिक्षां दापयति ददाति वेति, सम्प्रदापनस्योपलक्षणत्वादेव नमःस्वस्तिस्वाहास्वधाऽलंवषड्युक्ताच्च चतुर्थी भवति, नमः शाखायै-वैरादिकायै, नमःप्रभृतियोगोऽपि कैश्चित्सम्प्रदानत्वेनाभ्युपगम्यते इति चतुर्थी ४, 'पञ्चमी'ति श्लोकः, अपादीयते अपायतो-विश्लेषत आ-मर्यादया दीयते 'दो अवखण्डन' इति वचनात् खण्ड्यते-भिद्यते आदीयते वा-गृह्यते यस्मात्तदपादानमवधिमात्रमित्यर्थस्तत्र पञ्चमी भवति, यथा-अपनय ततो गृहाद्धान्यमितो वा कुशूलाद् गृहाणेति ५, 'छट्ठी सस्सामिवायणे'त्ति स्वं च स्वामी च स्वस्वामिनौ तयोर्वचनं-प्रतिपादनं तत्र स्वस्वामिवचने-स्वस्वामिसम्बन्धे इत्यर्थः, षष्ठी भवति, यथा तस्यास्य वा गतस्य वाऽयं भृत्यः, 'वायणे'त्तीह प्राकृतत्वाद् दीर्घत्वं ६, सन्निधीयते क्रिया अस्मिन्निति सन्निधानं-आधारस्तदेवार्थः सन्निधानार्थस्तत्र सप्तमी, विषयोपलक्षणत्वाच्चास्य काले भावे च क्रियाविशेषणे, तत्र सन्निधाने तद्धृतकमिह पात्रे, तत्सप्तच्छदवनमिह शरदि पुष्यति, पुष्यनक्रिया शरदा विशेषिता, तत् कुटुम्कमिह गवि दुह्यमानायां गतं, इह गमनक्रिया गोदोहनभावेन विशेषितेति ७, अष्टम्यामन्त्रणी भवेदिति, सु औ जसिति, प्रथमाऽपीयं विभक्तिरामन्त्रणलक्षणस्यार्थस्य कर्मकरणादिवत् लिङ्गार्थमात्रातिरिक्तस्य प्रतिपादकत्वेनाष्टम्युक्ता, यथा हे युवनिति श्लोकद्वयार्थः । उदाहरणगाथास्तु व्याख्यातानुसारेण भावनीयाः, 'तत्थ'गाहा 'तइया' गाहा, इह 'हंदी'त्युपदर्शने 'पयाणंमि'त्ति सम्प्रदाने, 'अवणे'गाहा 'अवणे'त्ति अपनयेत्यर्थः, इदं चानुयोगद्वारानुसारेण व्याख्यातं, आदर्शेषु तु 'अमणे' इति दृश्यते, तत्र च रूयामन्त्रणतया गमनीय, हे अमनस्के इत्यर्थः ॥ अथ वचनविभक्तियुक्तशास्त्रसंस्कारात् किं छद्मस्थाः साक्षाद्दृश्यार्थान् विदन्ति ?, उच्यते, नेत्याह-'अट्ठाणे'त्यादि व्याख्यानं प्राक्, नवरं यावत्करणात् 'अधम्मत्थिकायं २ आगासत्थिकायं ३ जीवमसरीरपडिबद्धं ४ परमाणुपोग्गलं ५ सद्द ६ मिति द्रष्ट-

न्यमिति, एतान्येव जिनो जानातीत्याह च—'एयाणी'त्यादि, सुगमं ॥ यथा धर्मास्तिकायादीन् जिनो जानाति तथाऽऽयुर्व्वेदमपि जानाति, स चायं—'अट्ठविहे आउव्वेए'इत्यादि, आयुः–जीवितं तद्विदन्ति रक्षितुमनुभवन्ति चोपक्रमरक्षणे विदन्ति वा–लभन्ते यथाकालं तेन तस्मात्तस्मिन् वेत्यायुर्वेदः–चिकित्साशास्त्रं तदष्टविधं, तद्यथा–कुमाराणां–बालकानां भृतौ–पोषणे साधु कुमारभृत्यं, तद्धि तन्त्रं कुमारभरणक्षीरदोषसंशोधनार्थं दुष्टशून्यनिमित्तानां व्याधीनामुपशमनार्थं चेति १कायस्य ज्वरादिरोगग्रस्तस्य चिकित्साप्रतिपादकं तन्त्रं कायचिकित्सा, तत्तन्त्रं हि मध्याङ्गसमाश्रितानां ज्वरातीसाररक्तशोफोन्मादप्रमेहकुष्ठादीनां शमनार्थमिति २ शलाकायाः कर्म शालाक्यं तत्प्रतिपादकं तन्त्रं शालाक्यं, एतद्धि ऊर्द्ध्ववक्त्रगतानां रोगाणां श्रवणवदननयनघ्राणादिसंश्रितानामुपशमनार्थमिति ३ शल्यस्य हत्या–हननमुद्धारः शल्यहत्या तत्प्रतिपादकं तन्त्रमपि शल्यहत्येत्युच्यते, तद्धि तृणकाष्ठपाषाणपांसुलोहलोष्ठास्थिनखप्रायाऽङ्गान्तर्गतशल्योद्धरणार्थमिति ४ जङ्गोली ति विषविघाततन्त्रमगदतन्त्रमित्यर्थः, तद्धि सर्प्पकीटलूतादष्टविषनाशनार्थं विविधविषसंयोगोपशमनार्थं चेति ५ भूतादीनां निग्रहार्थं विद्यातन्त्रं भूतविद्या, सा हि देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिकरणादिग्रहोपशमनार्थेति ६ 'क्षारतन्त्र'मिति क्षरणं क्षारः शुक्रस्य तद्विषयं तन्त्रं यत्र तत्तथा, इदं हि सुश्रुतादिषु वाजीकरणतन्त्रमुच्यते, अवाजिनो वाजीकरणं रेतोवृद्ध्या अश्वस्येव करणमित्यनयोः शब्दार्थः सम एवेति, तत् तन्त्रं हि अल्पक्षीणविशुष्करेतसामाप्यायनप्रसादोपजनननिमित्तं प्रहर्षजननार्थमिति ७ रसः–अमृतरसस्तस्यायनं–प्राप्तिः रसायनं, तद्धि वयःस्थापनमायुर्मेधाकरणं रोगापहरणसमर्थं च तत्प्रतिपादकं शास्त्रं रसायनतन्त्रमिति ॥

कृतरसायनश्च देववन्निरुपक्रमायुर्भवतीति देवप्रस्तावाद्देवानामष्टकान्याह—

सक्कस्स णं देविंदस्स देवरन्नो अट्ठग्गमहिसीओ पं० तं०—पउमा सिवा सती अंजू अमला अच्छरा णवमिया रोहिणी १ ईसाणस्स णं देविंदस्स देवरन्नो अट्ठग्गमहिसीओ पं० तं०—कण्हा कण्हराती रामा रामरक्खिता वसू वसुगत्ता वसुमित्ता वसुंधरा २ सक्कस्स णं देविंदस्स देवरन्नो सोमस्स महारन्नो अट्ठग्गमहिसीओ पं० ३ ईसाणस्स णं देविंदस्स देवरन्नो वेसमणस्स महारन्नो अट्ठग्गमहिसीओ पं० ४ अट्ठ महग्गहा पं० तं०—चंदे सूरे सुक्के बुहे बहस्सती अंगारे सणिंचरे केऊ ५ (सू० ६१२) अट्ठविधा तणवणस्सतिकातिया पं० तं०—मूले कंदे खंधे तया साले पवाले पत्ते पुप्फे (सू० ६१३) चउरिंदिया णं जीवा असमारभमाणस्स अट्ठविधे संजमे कज्जति, तं०—चक्खुमातो सोक्खातो अववरोवित्ता भवति, चक्खुमतेणं दुक्खेणं असंजोएत्ता भवति, एवं जाव फासामातो सोक्खातो अववरोवेत्ता भवति फासामएणं दुक्खेणं असंजोगेत्ता भवति। चउरिंदिया णं जीवा समारभमाणस्स अट्ठविधे असंजमे कज्जति, तं०—चक्खुमातो सोक्खाओ ववरोवेत्ता भवति, चक्खुमतेणं दुक्खेणं संजोगेत्ता भवति, एवं जाव फासामातो सोक्खातो (सू० ६१४) अट्ठ सुहुमा पं० तं०—पाणसुहुमे १ पणगसुहुमे २ बीयसुहुमे ३ हरितसुहुमे ४ पुप्फसुहुमे ५ अंडसुहुमे ६ लेणसुहुमे ७ सिणेहसुहुमे ८ (सू० ६१५) भरहस्स णं रन्नो चाउरंतचक्कवट्टिस्स अट्ठ पुरिसजुगाइं अणुबद्धं सिद्धाइं जाव सव्वदुक्खप्पहीणाइं, तं०—आदिच्चजसे महाजसे अतिबले महाबले तेतवीरिते कित्तवीरिते दंडवीरिते जलवीरिते (सू० ६१६) पासस्स णं अरहओ पुरिसादाणियस्स अट्ठ गणा अट्ठ गणहरा होत्था, तं०—सुभे अज्जघोसे वसिट्ठे बंभचारी सोमे सिरि-

धरिते वीरिते भद्दजसे (सू० ६१७)

तत्र 'सक्कस्से'त्यादि सूत्रपञ्चकं सुगमं, नवरं महाग्रहा–महार्थानर्थसाधकत्वादिति। महाग्रहाश्च मनुष्यतिरश्चामुपघातानुग्रहकारिणो बादरवनस्पत्युपघातादिकारित्वेनेति बादरवनस्पतीनाह–'अट्ठविहे'त्यादि, सुगमं, नवरं 'तणवणस्सइ'त्ति बादरवनस्पतिः, कन्दः–स्कन्धस्याधः स्कन्धः स्थुडमिति प्रतीतं त्वक्–छल्ली शाला–शाखा प्रवालं–अंकुरः पत्रपुष्पे प्रतीते । एतदाश्रयाश्चतुरिन्द्रियादयो जीवा भवन्तीति चतुरिन्द्रियानाश्रित्य संयमासंयमसूत्रे, ते च प्रागिवेति। सूक्ष्माण्यप्याश्रित्य संयमासंयमौ स्त इति तान्याह—'अट्ठ सुहुमे' त्यादि, सूक्ष्माणि श्लक्ष्णत्वादल्पाधारतया च, तत्र प्राणसूक्ष्मं–अनुद्धरिः कुन्थुः स हि चलन्नेव विभाव्यते न स्थितः सूक्ष्मत्वादिति १ पनकसूक्ष्मं पनकः–उल्ली, स च प्रायः प्रावृट्काले भूमिकाष्ठादिषु पञ्चवर्णस्तद्द्रव्यलीनो भवति, स एव सूक्ष्ममिति एवं सर्वत्र २ तथा बीजसूक्ष्मं–शाल्यादिबीजस्य मुखमूले कणिकाः लोके या तुषमुखमित्युच्यते ३ हरितसूक्ष्मं–अत्यन्ताभिनवोद्भिन्नपृथिवीसमानवर्णं हरितमेवेति ४ पुष्पसूक्ष्मं–वटोदुम्बराणां पुष्पाणि तानि तद्वर्णानि सूक्ष्माणीति न लक्ष्यन्ते ५ अण्डसूक्ष्मं–मक्षिकाकीटिकागृहकोकिलाब्राह्मणीकृकलास्याद्यण्डकमिति ६ लयनसूक्ष्मं लयनं–आश्रयः सत्त्वानां, तच्च कीटिकानगरादि, कीटिकाश्चान्ये च सूक्ष्माः सत्त्वा भवंतीति ७ स्नेहसूक्ष्ममवश्यायहिममहिकाकरकहरतनुरूपमिति ८। अनन्तरोक्तसूक्ष्मविषयसंयममासेव्य ये अष्टकतया सिद्धास्तानाह—'भरहस्से'त्यादि कण्ठयं, किन्तु 'पुरिसजुगाइ'ति पुरुषा युगानीव–कालविशेषा इव क्रमवृत्तित्वात् पुरुषयुगानि 'अनुबद्धं' सन्ततं यावत्करणात् 'बुद्धाइं मुक्काइं परिनिव्वुडाइं'ति, एतेषां चादित्ययशःप्रभृतीनामिहोक्तक्रमस्यान्यथात्वमप्युपलभ्यते, तथाहि—"राया आइच्चजसे महाजसे अइबले अ बलभद्दे। बलविरियकत्तविरिए जलविरिए दंडविरिए य ॥१॥"इति [आदित्ययशा राजा महायशा अति-

८ स्थानाध्ययने उद्देशः ३ अग्रमहिष्याद्या मूलाद्या चतुरक्षसंयमेतरौ सूक्ष्माणि सूर्ययशआद्या पार्श्वगणिनः सू–६१२-६१७

बलः बलभद्रः बलवीर्यः कात्तवीर्यः जलवीर्यः दंडवीर्यः ॥१॥] इह चान्यथात्वमेकस्यापि नामान्तरभावाद् गाथानुलोम्याच्च सम्भाव्यत इति। संयमवदधिकारात् संयमवतामेवाष्टकान्तरमाह—'पासे'त्यादि व्यक्तं, किंतु 'पुरिसादाणीयस्स'त्ति पुरुषाणां मध्ये आदीयत इत्यादानीय उपादेय इत्यर्थः, गणा-एकक्रियावाचनानां साधूनां समुदायाः गणधराः-तन्नायका आचार्याः भगवतः सातिशयानन्तरशिष्याः, आवश्यके तूभयेऽपि दश श्रूयन्ते, "दस नवगं गणाण माणं जिणिंदाणं" [दश नैव जिनेन्द्राणां गणानां मानं ॥] इति वचनात् 'जावइया जस्स गणा तावइया गणहरा तस्से'ति [यस्य यावन्तो गणास्तावन्त एव गणधरास्तस्य ॥१॥] वचनाच्च, तदिहाल्पायुष्कत्वादिकं कारणमपेक्ष्य द्वयोरविवक्षणमिति सम्भाव्यते, न चाष्टस्थानकानुरोध इह समाधानं वक्तुं शक्यते, पर्युषणाकल्पेऽप्यष्टानामेवाभिधानादिति।

गणधराश्च दर्शनवन्त इति दर्शनं निरूपयन्नाह—

अट्ठविधे दंसणे पं० तं०—सम्मद्दंसणे मिच्छदंसणे सम्मामिच्छदंसणे चक्खुदंसणे जाव केवलदंसणे सुविणदंसणे (सू० ६१८) अट्ठविधे अद्धोवमिते पं० तं०—पलितोवमे सागरोवमे उस्सप्पिणी ओसप्पिणी पोग्गलपरियट्टे तीतद्धा अणागतद्धा सव्वद्धा (सू० ६१९) अरहतो णं अरिट्ठनेमिस्स जाव अट्ठमातो पुरिसजुगातो जुगंतकरभूमी दुवासपरियाते अंतमकासी (सू० ६२०)। समणेणं भगवता महावीरेणं अट्ठ रायाणो मुंडे भवेत्ता अगारातो अणगारितं पव्वाविता, तं०—वीरंगय वीरजसे संजय एणिज्जते य रायरिसी। सेयसिवे उदायणे [तह संखे

कासिवद्धणे] (सू० ६२१)

'अट्ठविहे दंसणे' इत्यादि कण्ठ्यं, केवलं स्वप्नदर्शनस्याचक्षुर्दर्शनान्तर्भावेऽपि सुप्तावस्थोपाधितो भेदो विवक्षित इति। सम्यग्दर्शनादेश्च स्थितिप्रमाणमौपम्याद्धया भवतीति तां प्ररूपयन्नाह—'अट्ठविहे अद्धोवमिए' इत्यादि सुगमं, नवरं औपम्यमुपमा पल्यसागररूपा तत्प्रधाना अद्धा-कालोऽद्धौपम्यं राजदन्तादिदर्शनात् पल्येनोपमा यत्र काले परिमाणतः स पल्योपमं, रूढितो नपुंसकलिङ्गता, एवं सागरोपमं, अवसर्पिण्यादीनां तु सागरोपमनिष्पन्नत्वादुपमाकालत्वं भावनीयं, समयादिस्तु शीर्षप्रहेलिकान्तः कालोऽनुपमाकाल इति। कालाधिकारादिदमपरमाह—'अरहओ इत्यादि, जाव अट्ठमाउ'त्ति अष्टमं पुरुषयुगं-अष्टपुरुषकालं यावत् युगान्तकरभूमिः पुरुपलक्षणयुगापेक्षयाऽन्तकराणां-भवक्षयकारिणां भूमिः-कालः सा आसीदिति, इदमुक्तं भवति-नेमिनाथस्य शिष्यप्रशिष्यक्रमेणाष्टौ पुरुषान् यावन्निर्वाणं गतवन्तो न परत इति, तथा पर्यायापेक्षयाऽप्यन्तकरभूमिः प्रसङ्गादुच्यते—'दुवास'त्ति द्विवर्षमात्रे केवलिपर्याये नेमिनाथस्य जाते सति साधवो भवान्तमकार्षुरिति। तीर्थकरवक्तव्यताधिकारादिदमाह—'समणेण'मित्यादि सुगमं, नवरं 'भवित्त'त्ति अन्तर्भूतकारितार्थत्वात् मुण्डान् भावयित्वेति दृश्यं, 'वीरंगए' इत्यादि 'तह संखे कासितवद्धणए इत्येवं' चतुर्थपादे सति गाथा भवति, न चैवं दृश्यते पुस्तकेष्विति, एते च यथा प्रव्राजितास्तथोच्यते, तत्र वीराङ्गको वीरयशाः संजय इत्येते प्रतीताः, एणेयको गोत्रतः, स च केतकार्द्धजनपदश्वेतवीनगरीराजस्य प्रदेशिनाम्नः श्रमणोपासकस्य निजकः कश्चिद्राजर्षिः, तथा सेये आमलकल्पानगर्याः स्वामी, यस्यां हि सूर्यकाभो देवः सौधर्मात् देवलोकाद् भगवतो महावीरस्य वन्दनार्थमवततार नाट्यविधिं चोपदर्शयामास, यत्र च प्रदेशिराजचरितं भगवता प्रत्यपादीति, तथा शिवः हस्तिनागपुरराजो, यो ह्येकदा चिन्तयामास-अहमनुदिनं

हिरण्यादिना वृद्धिमुपगच्छामि यतस्ततोऽस्ति पुराकृतकर्म्मणां फलमतोऽधुनापि तदर्थमुद्यच्छामीति, ततो व्यवस्थाप्य राज्ये पुत्रं कृत्वोचितमखिलकर्त्तव्यं दिक्प्रोक्षिततापसतया प्रवव्राज, ततः षष्ठंषष्ठेन तपस्यतस्तथोचितमातापयतः परिशटितपत्रादिना पारयतो विभङ्गज्ञानमुत्पेदे, तेन च विलोकयाञ्चकार सप्त द्वीपान् सप्त समुद्रानिति, उत्पन्नं च मे दिव्यज्ञानमित्यवष्टम्भादागत्य नगरे बहुजनस्य यथोपलब्धं तत्त्वमुपदिदेश, तदा च तत्र भगवान् विजहार गौतमश्च भिक्षां भ्राम्यन् जनाच्छिवप्ररूपणां शुश्राव, गत्वा च भगवन्तं प्रपच्छ, भगवांस्त्वसंख्येयान् द्वीपसमुद्रान् प्रज्ञापयामास, भगवद्वचनं च जनात् श्रुत्वा शिवः शङ्कितः, ततस्तस्य विभङ्गः प्रतिपपात, ततोऽसौ भगवति जातभक्तिर्भगवत्समीपं जगाम, स भगवता प्रकटिताकूतो जातसर्वज्ञप्रत्ययः प्रवव्राज, एकादश चाङ्गानि पपाठ सिद्धश्चेति, तथा उदायनः सिन्धुसौवीरादीनां षोडशानां जनपदानां वीतभयप्रमुखानां त्रयाणां त्रिषष्ट्यधिकानां नगरशतानां दशानां च मुकुटबद्धानां राज्ञां स्वामी श्रमणोपासकः, येन चण्डप्रद्योतमहाराज उज्जयनीं गत्वा उभयबलसमक्षं रणाङ्गणे रणकर्म्मकुशलेन करिगिरेर्निपात्य बद्धो मयूरपिच्छेन ललाटपट्टे अङ्कितश्च, तथाऽभिजिन्नामानं स्नेहानुगतानुकम्पया राज्यगृद्धोऽयं मा दुर्गतिं यासीदिति भावयता स्वपुत्रं राज्ये अव्यवस्थाप्य केशिनामानं च भागिनेयं राजानं विधाय महावीरसमीपे प्रवव्राज, यश्चैकदा तत्रैव नगरे विजहार, उत्पन्नरोगश्च वैद्योपदेशाद्दधि बुभुजे राज्यापहाराशङ्किना च केशिराजेन विषमिश्रदधिदापनेन पञ्चत्वं गमितः यद्गुणपक्षपातिन्या च कुपितदेवतया पाषाणवर्षेण कुम्भकारशय्यातरवर्जं सर्वं तन्नगरं न्यघातीति, तथा शङ्खः काशीवर्द्धनो वाणारसीनगरीसम्भविजनपदवृद्धिकर इत्यर्थः, अयं च न प्रतीतः, केवलमलकाभिधानो राजा वाराणस्यां भगवता प्रव्राजितोऽन्तकृद्दशासु श्रूयते स यदि परं नामान्तरेणायं भवतीति ॥

एते चाहारादौ मनोज्ञामनोज्ञे समनुत्तय इति प्रस्तावादाहारस्वरूपमाह—

अट्ठविहे आहारे पं० तं०—मणुण्णे असणे पाणे खाइमे साइमे अमणुण्णे जाव साइमे (सू० ६२२) उप्पिं सणंकुमारमाहिंदाणं कप्पाणं हेट्ठिं बंभलोगे कप्पे रिट्ठविमाणे पत्थडे एत्थ णमक्खाडगसमचउरंससंठाणसंठितातो अट्ठ कण्हरातीतो पं० तं०—पुरच्छिमेणं दो कण्हरातीतो दाहिणेणं दो कण्हराइओ पचच्छिमेणं दो कण्हराइओ उत्तरेणं दो कण्हराइओ, पुरच्छिमा अब्भंतरा कण्हराती दाहिणं बाहिरं कण्हराइं पुट्ठा, दाहिणा अब्भंतरा कण्हराती पचच्छिमगं बाहिरं कण्हराइं पुट्ठा, पचच्छिमा अब्भंतरा कण्हराती उत्तरं बाहिरं कण्हराइं पुट्ठा, उत्तरा अब्भंतरा कण्हराती पुरच्छिमं बाहिरं कण्हरातीं पुट्ठा, पुरच्छिमपचच्छिमिल्लाओ बाहिराओ दो कण्हरातीतो छलंसातो, उत्तरदाहिणाओ बाहिराओ दो कण्हरातीतो तंसाओ, सव्वाओऽवि णं अब्भंतरकण्हरातीतो चउरंसाओ १ एतासि णं अट्ठण्हं कण्हरातीणं अट्ठ नामधेज्जा पं० तं०—कण्हरातीति वा मेहरातीति वा मघाति वा माघवतीति वा वातफलिहेति वा वातपलिक्खोभेति वा देवपलिहे वा देवपलिक्खोभेति वा २ एतासि णं अट्ठण्हं कण्हरातीणं अट्ठसु उवासंतरेसु अट्ठ लोगंतितविमाणा पं० तं०—अची अचिमाली वतिरोअणे पभंकरे चंदाभे सूराभे सुपइट्ठाभे अग्गिचाभे ३ एतेसु णं अट्ठसु लोगंतितविमाणेसु अट्ठविधा लोगंतिता देवा पं० तं०—सारसतमाइचा वण्ही वरुणा य गद्दतोया य। तुसिता अव्वाबाहा अग्गिचा चेव बोद्धव्वा ॥१॥ ४ एतेसि णमट्ठण्हं लोगंतितदेवाणं अजहण्णमणुक्कोसेणं अट्ठ सागरोवमाइं ठिती पण्णत्ता ५ (सू० ६२३)

अट्ठ धम्मत्थिगातमज्झपतेसा पं० अट्ठ अधम्मत्थिगात० एवं चेव अट्ठ आगासत्थिगा० एवं चेव अट्ठ जीवमज्झपएसा पं० (सू० ६२४)

'अट्ठविहे'त्यादि सुगमं। आहारद्रव्याणि रसपरिणामविशेषवन्त्यमनोज्ञान्यनन्तरमुक्तान्यथ क्षेत्रविशेषान् पुद्गलगतवर्णपरिणामविशेषवत्त्वेनामनोज्ञान् कृष्णराज्यभिधानान् प्रतिपादयन् सूत्रपञ्चकमाह—'उप्पिं'इत्यादि सुगमं, नवरं 'उप्पिं'ति उपरि 'हेट्ठिं'ति अधस्तात् ब्रह्मलोकस्य रिष्टाख्यो यो विमानप्रस्तटस्तस्येति भावः, आखाटकवत्समं-तुल्यं सर्व्वासु दिक्षु चतुरस्रं-चतुष्कोणं यत्संस्थानं-आकारस्तेन संस्थिताः आखाटकसमचतुरस्रसंस्थानसंस्थिताः कृष्णराजयः-कालकपुद्गलपङ्क्तयस्तद्युक्तक्षेत्रविशेषा अपि तथोच्यन्त इति, यथा च ता व्यवस्थितास्तथा दर्श्यंते—'पुरच्छिमे णं'ति पुरस्तात् पूर्वस्यां दिशीत्यर्थः, द्वे कृष्णराजी, एवमन्यास्वपि द्वे द्वे, तत्र प्राक्तनी यकाऽभ्यन्तरा कृष्णराजी सा दाक्षिणात्यां बाह्यां तां 'स्पृष्टा' स्पृष्टवती, एवं सर्वा अपि वाच्याः, तथा पौरस्त्यपाश्चात्ये द्वे बाह्ये कृष्णराजी षडस्रे-षट्कोटिके औत्तरदाक्षिणात्ये द्वे बाह्ये कृष्णराज्यौ त्र्यस्रे सर्वाश्चतस्रोऽपीत्यर्थोऽभ्यन्तराश्चतुरस्राः, नामान्येव नामधेयानि, कृष्णराजी कृष्णपुद्गलपङ्क्तिरूपत्वात् इतिरुपप्रदर्शने वा विकल्पे मेघराजीव या सा मेघराजीति चाभिधीयते कृष्णत्वात् तथा मघा—षष्ठपृथिवी तद्वदतिकृष्णतया सा मघेति वा माघवती-सप्तमपृथिवी तद्वद्या सा माघवतीति वातपरिघादीनि तु तमस्कायसूत्रवद्व्याख्येयानीति। एतासामष्टानां कृष्णराजीनामष्टस्ववकाशान्तरेषु-राजीद्वयमध्यलक्षणेष्वष्टौ लोकान्तिकविमानानि भवन्ति, एतानि चैवं भज्ञस्या- गुन्यन्तो-अभ्यन्तरपूर्वाया अग्रे अर्चिविमानं तत्र सारस्वता देवाः, पूर्वयोः कृष्णराज्योर्मध्ये अर्चिर्मालीविमाने आदित्या देवाः, अभ्यन्तरदक्षिणाया अग्रे वैरोचने विमाने वह्नयः, दक्षिणयोर्मध्ये शुभङ्करे विमाने वरुणाः, अभ्यन्तरपश्चिमाया अग्रे चन्द्राभे गर्द-

तोयाः, अपरयोर्मध्ये सूराभे तुषिताः, अभ्यन्तरोत्तराया अग्रे अङ्काभेऽव्याबाधाः, उत्तरयोर्मध्ये सुप्रतिष्ठाभे आग्नेयाः, बहुमध्यभागे




रिष्टाभे विमाने रिष्टा देवा इति, स्थापना चेयं 'अजहन्नुक्कोसेणं'ति जघन्यत्वोत्कर्षाभावेनेत्यर्थः, ब्रह्मलोके हि जघन्यतः सप्त सागरोपमाण्युत्कृष्टतस्तु दशेति लोकान्तिकानां त्वष्टाविति। कृष्णराजयो ह्यूर्ध्वलोकस्य मध्यभागवृत्तय इति धर्म्मादीनामपि मध्यभागवृत्तिकस्याष्टकचतुष्टयस्याविष्करणाय सूत्रचतुष्टयं—'अट्ठ धम्मे'त्यादि, स्फुटं, नवरं धर्म्माधर्माकाशानां मध्यप्रदेशास्ते ये रुचकरूपा इति, जीवस्यापि केवलिसमुद्घाते रुचकस्था एव ते अन्यदा त्वष्टावविचला ये ते मध्यप्रदेशाः, शेषास्त्वावर्त्तमानजलमिवानवरतमुद्वर्त्तनपरिवर्त्तनपरास्तत्स्वभावाद्ये ते अमध्यप्रदेशा इति।

जीवमध्यप्रदेशादिपदार्थप्रतिपादकास्तीर्थंकरा भवन्तीति प्रकृताध्ययनावतारिणीं तीर्थङ्करवक्तव्यतां सूत्रद्वयेनाह—

**अरहंता णं महापउमे अट्ठ रायाणो मुण्डा भवित्ता अगारातो अणगारितं पव्वावेस्सति, तं०—पउमंपउमगुम्मं नलिणं नलिनगुम्मं पउमद्धतं धणुद्धतं कणगरहं भरहं १ (सू० ६२५) कण्हस्स णं वासुदेवस्स अट्ठ अग्गमहिसीओ अरहतो णं अरिट्ठनेमिस्स अन्तिते मुण्डा भवेत्ता आगारातो अणगारितं पव्वतिता सिद्धाओ जाव सव्वदुक्खप्पहीणाओ, तं०—पउमावती गोरी गंधारी लक्खणा सुसीमा जम्बवती सच्चभामा रुप्पिणी कण्हअ-**

ग्गमहिसीओ २, (सू० ६२६) वीरितपुव्वस्स णं अट्ठ वत्थू अट्ठ चूलिआवत्थू पं० (सू० ६२७)।

'अरहा णं'मित्यादि सुगमं, नवरं 'महापउमे'त्ति महापद्मो भविष्यदुत्सर्पिण्यां प्रथमतीर्थकरः श्रेणिकराजजीव इति इहैव नवस्थानके वक्ष्यमाणव्यतिकर इति, 'मुण्डा भवित्त'त्ति मुण्डान् भावयित्वेति। कृष्णाग्रमहिषीवक्तव्यता त्वन्तकृद्दशाङ्गादवसेया, सा चेयं-किल द्वारकावत्यां कृष्णो वासुदेवो बभूव, पद्मावत्यादिकास्तस्य भार्या अभूवन्, अरिष्टनेमिस्तत्र विहरति स्म, कृष्णः सपरिवारः पद्मावतीप्रमुखाश्च देव्यो भगवन्तं पर्युपासिरे, भगवांस्तु तेषां धर्ममाचख्यौ, ततः कृष्णो वन्दित्वाऽभ्यधात्-अस्या भदन्त! द्वारकावत्या द्वादशनवयोजनायामविस्तराया धनपतिनिर्म्मितायाः प्रत्यक्षदेवलोकभूतायाः किंमूलको विनाशो भविष्यति?, भगवान् त्रिभुवनगुरुर्जगाद-सुराग्निद्वीपायनमुनिमूलको विनाशो भविष्यतीति निशम्य मधुमथनो मनस्येवं विभावितवान्-धन्यास्ते प्रद्युम्नादयो ये निष्क्रान्ताः अहमधन्यो भोगमूर्च्छितो न शक्नोमि प्रव्रजितुमिति, ततस्तमर्हन्नवादीद्-भोः! कृष्ण न भवत्ययमर्थो यद्वासुदेवाः प्रव्रजन्ति, कृतनिदानत्वात्तेषां, अथाहं भदन्त! क्वोत्पत्स्ये?, भुवनविभुराह-दग्धायां पुरि पाण्डुमथुरां प्रति चलितः कौशाम्बकानने न्यग्रोधस्याधः सुप्तो जराकुमाराभिधानभ्रात्रा काण्डेन पादे विद्धः कालं कृत्वा वालुकाप्रभायामुत्पत्स्यसे, एवं निशम्य यदुनन्दनो दीनमनोवृत्तिरभवत्, ततो जगद्गुरुरगादीत्-मा दैन्यं व्रज यतस्ततस्त्वमुद्वृत्याऽऽगामिन्यामुत्सर्पिण्यां भारते वर्षेऽममाभिधानो द्वादशोऽर्हन् भविष्यसीति श्रुत्वा जहर्ष सिंहनादादि च चकार, ततो जनार्द्दनो नगरीं गत्वा घोषणां कारयाञ्चकार यदुतार्हता नेमिनाथेनास्या नगर्या विनाशः समादिष्टस्ततो यः कोऽपि तत्समीपे प्रव्रजति तस्याहं निष्क्रमणमहिमानं वितनोमीति निशम्य पद्मावतीप्रभृतिका देव्योऽवादिषुः-वयं युष्माभिरनुज्ञाताः प्रव्रजामः, ततस्ता महान्तं निष्क्रमणमहिमानं कृत्वा नेमिजिननायकस्य शिष्यिकात्वेन दत्तवान्, भग-

वांस्तु ताः प्रव्राजितवान्, ताश्च विंशतिवर्षाणि प्रव्रज्यापर्यायं परिपाल्य मासिक्या संलेखनया चरमोच्छ्वासनिःश्वासाभ्यां सिद्धा इति। एताश्च सिद्धा वीर्यादिति वीर्याभिधायिनः पूर्वस्य स्वरूपमाह—'वीरियपुव्वे'त्यादि, वीर्यप्रवादाख्यस्य तृतीयपूर्वस्य वस्तूनि-मूलवस्तूनि अध्ययनविशेषा आचारे ब्रह्मचर्याध्ययनवत् चूलावस्तूनि त्वाचाराग्रवदिति ॥

वस्तुवीर्यादेव गतयोऽपि भवन्तीति ता दर्शयन्नाह—

अट्ठ गतितो पं० तं०–णिरतगती तिरियगई जाव सिद्धिगती गुरुगती पणोल्लणगती पब्भारगती (सू० ६२८) गङ्गासिंधुरत्तारत्तवतिदेवीणं दीवा अट्ठ २ जोयणाइं आयामविक्खम्भेणं पं० (सू० ६२९) उक्कामुहमेहमुहविज्जुमुहविज्जुदन्तदीवाणं दीवा अट्ठ २ जोयणसयाइं आयामविक्खम्भेणं पं० (सू० ६३०) कालोते णं समुद्दे अट्ठ जोयणसयसहस्साइं चक्कवालविक्खम्भेणं पन्नत्ते (सू० ६३१) अब्भन्तरपुक्खरद्धे णं अट्ठ जोयणसयसहस्साइं चक्कवालविक्खम्भेणं पं०, एवं बाहिरपुक्खरद्धेवि (सू० ६३२) एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स अट्ठसोवन्निते काकिणिरयणे छत्तले दुवालसंसिते अट्ठकण्णिते अधिकरणिसंठिते (पं० सू० ६३३) मागधस्स णं जोयणस्स अट्ठ धणुसहस्साइं निधत्ते पं० (सू० ६३४)

'अट्ठ गईओ' इत्यादि, सुगमं, नवरं 'गुरुगइ'त्ति भावप्रधानत्वान्निर्देशस्य गौरवेण–ऊर्ध्वाधस्तिर्यग्गमनस्वभावेन या परमाण्वादीनां स्वभावतो गतिः सा गुरुगतिरिति, या तु परप्रेरणात् सा प्रणोदनगतिर्बाणादीनामिव, या तु द्रव्यान्तराक्रान्तस्य सा प्राग्भा-

रगनियथा नागादेरधोगतिरिति । अनन्तरं गतिरुक्तेति गतिमतीनां गङ्गादिनदीनामधिष्ठातृदेवीद्वीपस्वरूपमाह—'गङ्गे'त्यादि कण्ठ्यं, नवरं गङ्गाद्या भरतैरवतनद्यस्तदधिष्ठातृदेवीनां निवासद्वीपा गङ्गादिप्रपातकुण्डमध्यवर्त्तिनः । द्वीपाधिकारादन्तरद्वीपसूत्र, तत एव द्वीपत्वतः कालोदसमुद्रस्य प्रमाणसूत्रं, तदनन्तरभाविनः पुष्कराभ्यन्तरार्द्धस्य बाह्यार्द्धस्य च सूत्रे, सुगमानि चैतानि, नवरमुल्कामुखमेघमुखविद्युन्मुखविद्युद्दन्तशब्देषु प्रत्येकं द्वीपशब्दः संबध्यते, ततश्चोल्कामुखद्वीपादयो णमित्यलङ्कारे द्वीपा हिमवतः शिखरिणश्च वर्षधरपर्वतस्य पूर्वयोर्दंष्ट्रयोरपरयोश्च सप्तानां सप्तानामन्तरद्वीपानां मध्ये षष्ठोऽन्तरद्वीपः अष्टावष्टौ योजनशतानि आयामविष्कम्भेन प्रज्ञप्तः । पुष्करार्द्धे च चक्रिणो भवन्तीति तत्सत्करत्नविशेषस्याष्टस्थानकेऽवतारं कुर्वन्नाह—'एगमेगे' इत्यादि, एकैकस्य राज्ञश्चतुरन्तचक्रवर्त्तिन इत्यत्रान्यान्यकालोत्पन्नानामपि तुल्यकाकणीरत्नप्रतिपादनार्थमेकैकग्रहणं निरुपचरितराजशब्दविषयज्ञापनार्थं राजग्रहणं षट्खण्डभरतादिभोक्तृत्वप्रतिपादनार्थं चतुरन्तचक्रवर्तिग्रहणमिति, अष्टसौवर्णिकं काकणिरत्नं, सुवर्णमानं तु चत्वारि मधुरतृणफलान्येकः श्वेतसर्षपः षोडश श्वेतसर्षपा एकं धान्यमाषकफलं द्वे धान्यमाषफले एका गुञ्जा पञ्च गुञ्जाः एकः कर्ममाषकः षोडश कर्ममाषकाः एकः सुवर्णः, एतानि च मधुरतृणफलादीनि भरतकालभावीनि गृह्यन्ते, यतः सर्वचक्रवर्त्तिनां तुल्यमेव काकणिरत्नमिति, षट्तलं द्वादशास्रि अष्टकर्णिकं अधिकरणीसंस्थितं प्रज्ञप्तमिति, तत्र तलानि–मध्यखण्डानि अश्रयः–कोट्यः कर्णिकाः–कोणविभागाः अधिकरणिकं–सुवर्णकारोपकरणं प्रतीतमेवेति, इदञ्च चतुरङ्गुलप्रमाणं 'चउरंगुलप्पमाणा सुवन्नवरकागणी नेयत्ति वचनादिति । अङ्गुलप्रमाणनिष्पन्नं योजनमानमाह—'मागहे'त्यादि, मगधेषु भवं मागधं–मगधदेशव्यवहृतं तस्य योजनस्य–अध्वमानविशेषस्याष्ट धनुःसहस्राणि निहारो निगमः प्रमाणमितियावत् 'निहत्ते'ति क्वचित्पाठः तत्र निधत्तं–निकाचितं निश्चितं प्रमाणमिति गम्यते, इदं च प्रमाणं परमाण्वादिना क्रमेणा-

वसेयं, तथाहि—"परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो अट्ठगुणविवड्ढिया कमसो ॥१॥ [परमाणुस्त्रसरेणू रथरेणुर्वालस्याग्रं च लिक्षा यूका च यवोऽष्टगुणविवर्द्धिताः क्रमशः ॥१॥] तत्र परमाणुरनन्तानां निश्चयपरमाणूनां समुदयरूपः, ऊर्ध्वरेण्वादि (उत्श्लक्ष्णश्लक्ष्णिका) भेदा अनुयोगद्वाराभिहिता अनेनैव संगृहीता दृश्याः, तथा पौरस्त्यादिवायुप्रेरितस्त्रस्यति-गच्छतीति त्रसरेणुः, रथगमनोत्खातो रथरेणुरिति, एवं चाष्टौ यवमध्यान्यंगुलं, चतुर्विंशतिरंगुलानि हस्तः, चत्वारो हस्ताः धनुः, द्वे सहस्रे धनुषां गव्यूतं, चत्वारि गव्यूतानि योजनमिति, मागधग्रहणात् क्वचिदन्यदपि योजनं स्यादिति प्रतिपादितं, तत्र यस्मिन् देशे षोडशभिर्धनुःशतैर्गव्यूतं स्यात्तत्र षड्भिः सहस्रैश्चतुर्भिः शतैर्धनुषां योजनं भवतीति ॥

योजनप्रमाणमभिधायाष्टयोजनतो जम्ब्वादीनां प्रमाणप्रतिपादनाय सूत्रचतुष्टयमाह—

जंबू णं सुदंसणा अट्ठ जोयणाइं उद्धं उच्चत्तेणं बहुमज्झदेसभाए अट्ठ जोयणाइं विक्खंभेणं सातिरेगाइं अट्ठ जोयणाइं सव्वग्गेणं पं० १, कूडसामली णं अट्ठ जोयणाइं एवं चेव २ (सू० ६३५) तिमिसगुहा णमट्ठ जोयणाइं उद्धं उच्चत्तेणं ३ खंडप्पवातगुहा णं अट्ठ जोयणाइं उद्धं उच्चत्तेणं एवं चेव ४ (सू०६३६) जंबूमंदरस्स पव्वयस्स पुरच्छिमेणं सीताते महानतीते उभतोकूले अट्ठ वक्खारपव्वया पं०, तं०—चित्तकूडे पम्हकूडे नलिणकूडे एगसेलेतिकूडे वेसमणकूडे अंजणे मायंजणे १। जंबूमंदरपच्चच्छिमेणं सीतोताते महानतीते उभतोकूले अट्ठ वक्खारपव्वता पं० तं०-अंकावती पम्हावती आसीविसे सुहावहे चंदपव्वते सूरपव्वते णागपव्वते देवपव्वते २। जंबूमंदरपुरच्छि-

मेणं सीताते महानतीते उत्तरेणं अट्ठ चक्कवट्टिविजया पं० तं०—कच्छे सुकच्छे महाकच्छे कच्छगावती आवत्ते जाव पुक्खलावती ३, जंबूमंदरपुरच्छिमेणं सीताते महानतीते दाहिणेणमट्ठ चक्कवट्टिविजया पं० तं०—वच्छे सुवच्छे जाव मंगलावती ४, जंबूमंदरपच्चच्छिमेण सीतोनामहानदीते दाहिणेणं अट्ठ चक्कवट्टिविजया पं तं०—पम्हे जाव सलिलावती ५, जंबूमंदरपच्चत्थिमेणं सीतोनाए महानदीए उत्तरेणं अट्ठ चक्कवट्टिविजया पं० तं०—वप्पे सुवप्पे जाव गंधिलावती ६। जंबूमंदरपुरच्छिमेणं सीताते महानतीते उत्तरेणमट्ठ रायहाणीतो पं० तं०—खेमा खेमपुरी चेव जाव पुंडरीगिणी ७, जंबूमंदरपुर० सीताए महाणईए दाहिणेणं अट्ठ रायणीतो पं० तं०—सुसीमा कुंडला चेव जाव रयणसंचया ८, जंबूमंदरपच्चच्छिमेणं सीओदाते महाणदीते दाहिणेणं अट्ठ रायहाणीओ पं० तं०—आसपुरा जाव वीतसोगा ९, जंबूमंदरपच्च० सीतोताते महानतीते उत्तरेणमट्ठ रायहाणीओ पं तं०—विजया वेजयंती जाव अउज्झा १० (सू०६३७) जंबूमंदरपुर० सीताते महाणदीए उत्तरेणं उक्कोसपए अट्ठ अरहंता अट्ठ चक्कवट्टी अट्ठ बलदेवा अट्ठ वासुदेवा उप्पज्जिसु वा उपज्जंति वा उप्पज्जिस्संति वा ११, जंबूमंदरपुरच्छि० सीताए दाहिणेणं उक्कोसपए एवं चेव १२ जंबूमंदरपच्चत्थि० सीओयाते महाणदीए दाहिणेणं उक्कोसपए एवं चेव १३, एवं उत्तरेणवि १४ (सू० ६३८) जंबूमंदरपुर० सीताते महानईए उत्तरेणं अट्ठ दीहवेयड्ढा अट्ठ तिमिसगुहाओ अट्ठ खंडगप्पवायगुहा अट्ठ कयमालगा देवा अट्ठ णट्टमालगा देवा अट्ठ गंगाकुंडा अट्ठ सिंधुकुंडा अट्ठ गंगातो अट्ठ सिंधूओ अट्ठ उसभकूडा पव्वता अट्ठ उसभकूडा देवा पं० १५, जंबूमंदरपुरच्छिमेणं सीताते महानतीते दाहिणेणं

अट्ठ दीहवेअड्ढा एवं चेव जाव अट्ठ उसभकूडा देवा पं०, नवरमेत्थ रत्तारत्तावतीतो तासिं चेव कुंडा १६, जंबूमंदरपच्चच्छिमेणं सीतोताए महानदीते दाहिणेणं अट्ठ दीहवेयड्ढा जाव अट्ठ नट्टमालगा देवा अट्ठ गंगाकुंडा अट्ठ सिंधुकुंडा अट्ठ गंगातो अट्ठ सिंधूओ अट्ठ उसभकूडपव्वता अट्ठ उसभकूडा देवा पण्णत्ता १७, जंबूमंदरपच्चत्थि० सीओताते महानतीते उत्तरेणं अट्ठ दीहवेयड्ढा जाव अट्ठ नट्टमालगा देवा अट्ठ रत्तकुंडा अट्ठ रत्तावतिकुंडा अट्ठ रत्ताओ जाव अट्ठ उसभकूडा देवा पं० १८ (सू० ६३९) मंदरचूलिया णं बहुमज्झदेसभाते अट्ठ जोयणाइं विक्खंभेणं पं० १९ (सू० ६४०) धायइसंडदीवे पुरत्थिमद्धेणं धायतिरुक्खे अट्ठ जोयणाइं उड्ढं उच्चत्तेणं पं० बहुमज्झदेसभाए अट्ठ जोयणाइं विक्खंभेणं साइरेगाइं अट्ठ जोयणाइं सव्वग्गेणं पं० एवं धायइरुक्खातो आढवेत्ता सच्चेव जंबूदीववत्तव्वता भाणियव्वा जाव मंदरचूलियत्ति एवं पच्चच्छिमद्धेवि महाधाततिरुक्खातो आढवेत्ता जाव मंदरचूलियत्ति एवं पुक्खरवरदीवड्ढपुरच्छिमद्धेवि पउमरुक्खाओ आढवेत्ता जाव मंदरचूलियत्ति एवं पुक्खरवरदीवपच्चत्थि० महापउमरुक्खातो जाव मंदरचूलितत्ति (सू० ६४१) जंबूदीवे २ मंदरे पव्वते भद्दसालवणे अट्ठ दिसाहत्थिकूडा पं० तं०—पउमुत्तर नीलवंते सुहत्थि अंजणागिरी कुमुते य । पलासते वडिंसे (अट्ठमए) रोयणागिरी ॥१॥ १ जंबूदीवस्स णं दीवस्स जगती अट्ठ जोयणाइं उड्ढं उच्चत्तेणं बहुमज्झदेसभाते अट्ठ जोयणाइं विक्खंभेणं २ (सू० ६४२) जंबूदीवे २ मंदरस्स पव्वयस्स दाहिणेणं महाहिमवंते वासहरपव्वते अट्ठ कूडा पं० तं०—सिद्धे महाहिमवंते हिमवंते रोहिता हरीकूडे । हरिकंता हरिवासे वेरुलिते चेव कूडा उ ॥१॥ ३ जंबूमंदर-

८ स्थानाध्ययने उद्देश ३ जम्बूगुहावक्षारनगरी अर्हदादिदीर्घवैताढ्यचूलिकादिग्हस्तिकूटकल्पादि, सू० ६३५-६४४

उत्तरेणं रुप्पिमि वासहरपव्वते अट्ठ कूडा पं० तं०—सिद्धे य रुप्पी रम्मग नरकंता बुद्धि रूप्पकूडे या। हिरण्णवते मणिकंचणे त रुप्पिमि कूडा उ ॥१॥ ४ जंबूमंदरपुरच्छिमेणं रुयगवरे पव्वते कूडा पं० तं०—रिट्ठे तवणिज्ज ’चण रयत दिसासोत्थिते पलंबे य। अंजण अंजणपुलते रुयगस्स पुरच्छिमे कूडा ॥१॥ १ तत्थ णं अट्ठ दिसाकुमारिमहत्तरितानो महिड्ढियातो जाव पलिओवमट्ठितीतातो परिवसंति तं०—णंदुत्तरा य णंदा, आणंदा णंदिवद्धणा। विजया य वेजयंती, जयंती अपराजिया ॥१॥ २ जंबूमंदरदाहिणेणं रुतगवरे पव्वते अट्ठ कूडा पं० तं० —कणते कंचणे पउमे नलिणे ससि दिवायरे चेव। वेसमणे वेरुलिते रुयगस्स उ दाहिणे कूडा ॥१॥ ३ तत्थ णं अट्ठ दिसाकुमारिमहत्तरियातो महिड्ढियातो जाव पलिओवमट्ठितीतातो परिवसंति तं०—समाहारा सुप्पतिण्णा, सुप्पबुद्धा जसोहरा। लच्छिवती सेसवती, चित्तगुत्ता वसुंधरा ॥१॥ ४ जंबूमंदरपच० रुयगवरे पव्वते अट्ठ कूडा पं० तं०—सोत्थि ते अमोहे य, हिमवं मंदरे तहा। रुअगे रुतगुत्तमे चंदे, अट्ठमे त सुदंसणे ॥१॥ ५ तत्थ णमट्ठ दिसाकुमारिमहत्तरियाओ महिड्ढियातो जाव पलिओवमट्ठितीतातो परिवसंति तं०—इलादेवी सुरादेवी, पुढवी पउमावती। एगनासा णवमिता, सीता भद्दा त अट्ठमा ॥१॥ ६ जंबूमंदरउत्तररुअगवरे पव्वते अट्ठ कूडा पं० तं०—रयणं रयणुच्चते ता, सव्वरयण रयणसंचते चेव। विजये य विजयंते जयंते अपराजिते ॥१॥ तत्थ णं अट्ठ दिसाकुमारिमहत्तरियातो महड्ढिताओ जाव पलिओवमट्ठितीताओ परिवसंति तं—अलंबुसा मितकेसी पोंडरि गीतवारुणी। आसा य सव्वगा चेव, सिरी हिरी चेव उत्तरतो ॥१॥ ८ अट्ठ अहेलोगवत्थव्वातो दिसाकुमारिम-

हत्तरितातो पं० तं०—भोगंकरा भोगवती, सुभोगा भोगमालिणी। सुवच्छा वच्छमित्ता य, वारिसेणा बलाहगा ॥?॥ १ अट्ठ उड्ढलोगवत्थव्वाओ दिसाकुमारिमहत्तरितातो पं० तं०—मेघंकरा मेघवती, सुमेघा मेघमालिणी। तोयधारा विचित्ता य, पुप्फमाला अणिंदिता ॥१॥ २ (सू० ६४३) अट्ठ कप्पा तिरितमिस्सोववन्नगा पं० तं०—सोहम्मे जाव सहस्सारे ३, एतेसु णमट्ठसु कप्पेसु अट्ठ इंदा पं० तं०—सक्के जाव सहस्सारे ४, एतेसि णं अट्ठण्हमिंदाणं अट्ठ परियाणिया विमाणा पं० तं०—पालते पुप्फने सोमणसे सिरिवच्छे णंदावत्ते कामकमे पीतिमणे विमले ५। (सू० ६४४)

'जंबू ण'मित्यादि, जम्बूः—वृक्षविशेषस्तदाकारा सर्वरत्नमयी या सा जम्बूः, यया अयं जम्बूद्वीपोऽभिधीयते, सुदर्शनेति तस्या नाम, सा चोत्तरकुरूणां पूर्वार्द्धे शीताया महानद्याः पूर्वेण जाम्बूनदमययोजनशतपञ्चकायामविष्कम्भस्य द्वादशयोजनमध्यभागपिण्डस्य क्रमपरिहाणितो द्विगव्यूतोच्छ्रितपर्यन्तस्य द्विगव्यूतोच्छ्रितपञ्चधनुःशतविस्तीर्णपद्मवरवेदिकापरिक्षिप्तस्य द्विगव्यूतोच्छ्रितसच्छत्रतोरणचतुर्द्वारस्य पीठस्य मध्यभागव्यवस्थितायां चतुर्योजनोच्छ्रितायामष्टयोजनायामविष्कम्भायां मणिपीठिकायां प्रतिष्ठिता द्वादशवेदिकागुप्ता, 'अट्ठ जोयणाइ'मित्यादि अष्ट योजनान्यूर्द्ध्वोच्चत्वेन बहुमध्यदेशभागे-शाखाविस्तारदेशे अष्ट योजनानि विष्कम्भेण सातिरेकाणि—अतिरेकयुक्तान्युद्वेधगव्यूतिद्वयेनाधिकानीति भावः सव्वग्गेण—सर्व्वपरिमाणेनेति, तस्याश्च चतस्रः पूर्वादिदिक्षु शाखाः, तत्र पूर्वशाखायां "भवणं कोसपमाणं सयणिज्जं तत्थऽणाढियसुरस्स। तिसु पासाया सालेसु तेसु सीहासणा रम्मा॥१॥ ते पासाया कोसंसमूसिया कोसमद्धविच्छिन्ना। विडिमोवरि जिणभवणं कोसद्धं होइ विच्छिन्नं ॥२॥ देसूणकोसमुच्चं जंबू अट्ठस्सएणं जंबूणं। परिवारिया विरायइ तत्तो

अट्ठपमाणाहिं ॥३॥" [भवनं क्रोशप्रमाणं शयनीयं तत्रानादृतसुरस्य । त्रिषु शालेषु प्रासादाः तेषु सिंहासनानि रम्याणि ॥१॥ ते प्रासादाः क्रोशसमुच्छ्रिताः अर्धक्रोशविस्तीर्णाः विडिमोपरि जिनभवनं क्रोशार्द्धविस्तीर्णं भवति ॥२॥ देशोनक्रोशोच्चं जंबूनामष्टशतेन परिवृता जंबूर्निगजतं ततोऽर्धप्रमाणाभिः ॥३॥) तथा त्रिभिर्योजनशतप्रमाणैर्वनैः संपरिक्षिप्ता—"जंबूओ पन्नासं दिसि विदिसिं गंतु पढम वणसंडं । चउरो दिसासु भवणा विदिसासु य होंति पासाया ॥१॥ कोसपमाणा भवणा चउवावीपरिगया य पासाया । कोसद्धवित्थरा कोसमूसियाऽणाढियसुरस्स ॥२॥ पंचेव धणुसयाइं ओवेहेणं हवंति वावीओ । कोसद्धवित्थडाओ कोसायामाउ सव्वाउ ॥३॥ इति "पासायाण चउण्हं भवणाण य अंतरे कूडा ॥" [जंबूतः पञ्चाशद्दिक्षु विदिक्षु गत्वा प्रथमवनखंडं चतसृषु दिक्षु चत्वारि भवनानि विदिक्षु प्रासादाश्च भवन्ति ॥१॥ क्रोशप्रमाणानि भवनानि चतुर्वापीपरिगताश्च प्रासादाः क्रोशार्द्धविस्तराः क्रोशोच्छ्रिताः अनादृतसुरस्य ॥२॥ वाप्यः उद्वेधेन पंचधनुःशतानि भवन्ति क्रोशार्धविस्तृताः क्रोशायामा एव सर्वाः ॥३॥ चतुर्णां प्रासादानां भवनानां चान्तरे कूटाः ॥] तानि चाष्टौ, यदाह—"अट्ठुसभकूडतुल्ला सव्वे जंबूणयामया भणिया । तेसुवरिं जिणभवणा कोसपमाणा परमरम्मा ॥१॥" इति [ऋषभकूटतुल्या अष्टौ सर्वे जांबूनदमया भणिताः तेषामुपरि जिनभवनानि क्रोशप्रमाणानि परमरम्याणि॥१॥] कूटशाल्मली जंबूतुल्यवक्तव्यता, यदाह—"देवकुरुपच्छिमद्धे गरुलावासस्स सामलिदुमस्स । एसेव गमो नवरं पेढं कूडा य रययमया ॥१॥" इति [देवकुरुपश्चिमार्द्धे गरुडावासस्य शाल्मलिद्रुमस्य एष एव गमो नवरं पीठं कूटाश्च रजतमयाः ॥१॥] अत एव 'एवं चेवे'त्युक्तं, गुहासूत्रे व्यक्तं। जम्ब्वादीनि च वस्तूनि जम्बूद्वीपे भवन्तीति जम्बूद्वीपाधिकारात्तद्गतवस्तुप्ररूपणाय क्षेत्रसाधर्म्याद् धातकीखण्डपुष्करार्द्धगतवस्तुप्ररूपणाय च जम्बू इत्यादिकं सूत्रप्रपञ्चमाह—सूत्रसिद्धश्चायं, नवरं सूत्राणामयं विभागो—द्वे आद्ये वक्षस्काराणां २ चत्वारि च प्रत्येकं

विजयनगरीतीर्थकरादिदीर्घवैताढ्यादीना १८ मेकं चूलिकायाः १९, एवं धातकीषंडादौ धातक्यादिसूत्रपूर्वाण्येतान्येव द्विर्द्विर्भवन्तीति, तथा मालवच्छैलं मेरोः पूर्वोत्तरविदिग्व्यवस्थितं लक्षणीकृत्य प्रदक्षिणया वक्षारा विजयाश्च व्यवस्थाप्यन्त इति, तत्र चक्रवर्त्तिनो विजयन्ते येषु यान् वा ते चक्रवर्त्तिविजयाः–क्षेत्रविभागा इति, 'जाव पुक्खलावइ'त्ति भणनात् 'मंगलावत्ते पुक्खले'त्ति द्रष्टव्यं, 'जाव मंगलावइ'त्तिकरणात् 'महावच्छे वच्छावई रम्मे रम्मए रमणिज्जे' इति दृश्यं, 'जाव सलिलावइ'त्तिकरणात् 'सुपम्हे महापम्हे पम्हावई संखे नलिणे कुमुए'त्ति दृश्यं, 'जाव गंधिलावइ'त्तिकरणात् 'महावप्पे वप्पावई वग्गू सुवग्गू गंधिले'त्ति दृश्यं 'खेमपुरा चेव जाव'त्तिकरणात् 'अरिट्ठा रिट्ठावई खग्गी मंजूसा उसहपुरी'ति दृश्यं, 'सुसीमा कुण्डला चेव जाव'त्तिकरणात् 'अपराजिया पहंकरा अंकावई पम्हावई सुभा' इति दृश्यं, 'आसपुरा जाव'त्तिकरणात् 'सीहपुरा महापुरा विजयपुरा अवराजिया अवरा असोगत्ति दृश्यं, वैजयन्ती जावत्तिकरणात् 'जयन्ती अवराजिया चक्कपुरा खग्गपुरा अवज्झत्ति दृश्यं, एताश्च क्षेमादिराजधान्यः कच्छादिविजयानां शीतादिनदीसमासन्नखण्डत्रयमध्यमखण्डे भवंति नवयोजनविस्तारा द्वादशयोजनायामाः। आसु च तीर्थकरादयो भवन्तीति 'अट्ठ अरहंतत्ति उत्कृष्टतोऽष्टावर्हन्तो भवन्तीति, प्रत्येकं विजयेषु भावात्, एवं चक्रवर्त्यादयोऽपि, एवं च चतुर्ष्वपि महानदीकूलेषु द्वात्रिंशत्तीर्थकरा भवन्तीति, चक्रवर्त्तिनस्तु यद्यपि शीताशीतोदानद्योरेकैकस्मिन् कूले अष्टावष्टावुत्पद्यन्त इत्युच्यते तथापि सर्वविजयापेक्षया नैकदा ते द्वात्रिंशद्भवन्ति, जघन्यतोऽपि वासुदेवचतुष्टयाविरहितत्वान्महाविदेहस्य, यत्र च वासुदेवस्तत्र चक्रवर्त्ती न भवतीति, तस्मादुत्कृष्टतोऽप्यष्टाविंशतिरेव चक्रवर्त्तिनो भवन्ति, एवं जघन्यतोऽपि चक्रवर्त्तिचतुष्टयसम्भवाद्वासुदेवा अप्यष्टाविंशतिरेव, वासुदेवसहचरत्वाद्बलदेवा अप्येवमिति। 'दीहवेयड्ढ'त्ति दीर्घग्रहणं वर्त्तुलवैताढ्यव्यवच्छेदार्थं, गुहाष्टकयो-

यथाक्रमं द्वेयाष्टके इति, गङ्गाकुण्डानि नीलवद्वर्षधरपर्वतदक्षिणनितम्बस्थितानि षष्टियोजनायामविष्कम्भाणि मध्यवर्त्तिगङ्गादेवीसभवनद्वीपानि त्रिदिक्कृततोरणद्वाराणि येभ्यः प्रत्येकं दक्षिणतोरणेन गङ्गा विनिर्गत्य विजयानि विभजन्त्यो भरतगङ्गावच्छीतामनुप्रविशन्तीति, एवं सिन्धुकुण्डान्यपि । 'अट्ठ उसभकूड'त्ति अष्टौ ऋषभकूटपर्वता अष्टास्वपि विजयेषु तद्भावात् ते च वर्षधरपर्व्वतप्रत्यासन्ना म्लेच्छखण्डत्रयमध्यमखण्डवर्त्तिनः सर्वविजयभरतैरवतेषु भवन्ति, तत्प्रमाणं चेदम्—"सव्वेवि उसभकूडा उव्विद्धा अट्ठ जोयणा होंति । बारस अट्ठ य चउरो मूले मज्झुवरि विच्छिन्ना ॥१॥" [सर्वेऽपि ऋषभकूटा अष्टयोजनान्युद्विद्धा भवन्ति । मूले मध्ये उपरि च द्वादशाष्टौ चत्वारि विस्तीर्णाः ॥१॥] इति, देवास्तन्निवासिन एवेति, नवरं 'एत्थ रत्तारत्तावईओ तासिं चेव कुंड'त्ति शीताया दक्षिणतोऽपि अष्टौ दीर्घवैताढ्या इत्यादि सर्वं समानं केवलं गंगासिन्धुस्थाने रक्तारक्तवत्यौ वाच्ये, गङ्गादिकुण्डस्थानेऽपि रक्तादिकुण्डानि वाच्यानीति, यथाह—'अट्ठ रत्ताकुण्डा पन्नत्ता अट्ठ रत्तवईकुण्डा अट्ठ रत्ताओ अट्ठ रत्तवईओ' तथा निषधवर्षधरपर्व्वतोत्तरनितम्बवर्त्तीनि षष्टियोजनप्रमाणानि रक्तारक्तवतीकुण्डानि येभ्य उत्तरतोरणेन विनिर्गत्य ताः शीतामनुपतन्तीति, तथा धातकीमहाधातकीपद्ममहापद्मवृक्षाः जम्बूवृक्षसमानवक्तव्याः, यदाह—जो भणिओ जंबूए विही उ सो चेव होइ एएसिं । देवकुरासुं सामलिरुक्खा जह जंबूदीवम्मि ॥१॥" इति [य एव विधिर्जम्ब्वा भणितः स एव एतेषां (धातक्यादीनां) भवति देवकुरुषु शाल्मली वृक्षा यथा जंबूद्वीपे ॥१॥] क्षेत्राधिकारात् 'जंबूदीवे'त्यादि सूत्रचतुष्टयं, सुगमं, नवरं 'भद्दसालवणे'त्ति मेरुपरिक्षेपतो भूम्यां भद्रशालवनमस्ति, तत्राष्टौ शीताशीतोदयोरुभयकूलवर्त्तीनि पूर्वादिषु दिक्षु हस्त्याकाराणि कूटानि दिशाहस्तिकूटानि प्रज्ञप्तानि, तद्यथा—'पउमे' सिलोगो, कण्ठ्यः नवरमस्य सम्प्रदायो विभागोऽयम्—"मेरुओ पन्नासं दिसि विदिसिं गंतु भद्दसालवणं । चउरो सिद्धाययणा दिसासु विदिसासु पासाया ॥१॥

छत्तीसुच्चा पणवीसवित्थडा दुगुणमायतायणा । चउवाविपरिक्खित्ता पासाया पंचसयउच्चा ॥२॥ ईसाणस्सुत्तरिमा पासाया दाहिणा य सक्कस्स । अट्ठ य हवंति कूडा सीतोसीतोदुभयकूले ॥३॥ दो दो चउद्दिसिं मंदरस्स हिमवंतकूडसमकप्पा । पउमुत्तरोऽत्थ पढमो पुव्विम सीउत्तरे कूले ॥४॥ तत्तो य नेलवंते सुहत्थि तह अंजणागिरी कुमुए । तहय पलासवडंसे अट्ठमए रोयणगिरी या ॥५॥" इति [मेरुतः दिक्षु विदिक्षु च पंचाशद्योजनीं गत्वा भद्रशालवनं दिक्षु चत्वारि सिद्धायतनानि विदिक्षु प्रासादाः ॥१॥ षड्त्रिंशदुच्चानि पञ्चविंशतिविस्तृतानि द्विगुणायतान्यायतनानि पंचशतोच्चा वापीचतुष्कपरिक्षिप्ताः प्रासादाः ॥२॥ उत्तरत्या ईशानस्य दाक्षिणात्याश्च शक्रस्य प्रासादाः शीताशीतोदोभयकूलयोरष्टौ कूटानि भवन्ति ॥३॥ मेरोश्चतसृषु दिक्षु द्वौ द्वौ हिमवत्कूटसमाः अत्र प्रथमः पद्मोत्तरः पौरस्त्ये शीताया उत्तरकूले ॥४॥ ततश्च नीलवान् सुहस्ती तथांजनगिरिः कुमुदः तथा पलाशावतंसकः अष्टमो रोचनगिरिश्च ॥५॥] जगती वेदिकाधारभूता पाली । 'सिद्ध'गाहा, सिद्धायतनोपलक्षितं कूटं सिद्धकूटं, तच्च प्राच्यां, ततः क्रमेणापरतः शेषाणि, महाहिमवत्कूटं तद्गिरिनायकदेवभवनाधिष्ठितं, हैमवतकूटं हैमवद्वर्षनायकदेवावासभूतं, रोहितकूटं रोहिताख्यनदीदेवतासत्कं ह्रीकूटं महापद्माख्यतद्ह्रदनिवासिह्रीनामकदेवतासत्कं, हरिकान्ताकूटं तन्नामनदीदेवतासत्कं, हरिवर्षकूटं हरिवर्षनायकदेवसत्कं, वैडूर्यकूटं तद्रत्नमयत्वादिति, अनेनैव क्रमेण रुक्मिकूटान्यप्यूह्यानि, तद्गाथा 'सिद्धे रूप्पी'त्यादि, कण्ठ्यम्, 'जंबूद्दीवे'त्यादि, क्षेत्राधिकारात् रुचकाश्रितं सूत्राष्टकं, कण्ठ्यं, नवरं जम्बूद्वीपे यो मन्दरस्तदपेक्षया प्राच्यां दिशि रुचकवरे रुचकद्वीपवर्त्तिनि प्राग्वर्णितस्वरूपे चक्रवालाकारे अष्टौ कूटानि, तत्र 'रिट्ठे'त्यादि गाथा स्पष्टा तेषु च नन्दोत्तराद्याः दिक्कुमार्यो वसन्ति भगवतोऽर्हतो या जन्मन्यादर्शहस्ता गायन्त्यस्तं पर्युपासते, एवं दाक्षिणात्या भृङ्गारहस्ता गायन्ति, एवं प्रतीच्याः तालवृन्तहस्ताः, एवमौदीच्याश्चामरहस्ताः, देवाधिकारादेव 'अट्ठ

अट्ठे'त्यादिपञ्चसूत्री कण्ठया, नवरं 'अहेलोगवत्थव्वाओ'त्ति, "सोमणसगंधमायणविज्जुप्पभमालवंतवासीओ। अट्ठ दिसिदेवयाओ वत्थव्वाओ अहे लोए ॥१॥" इति, [सौमनसगन्धमादनविद्युत्प्रभमाल्यवद्वासिन्यः अष्टौ दिग्देव्यः अधोलोकवास्तव्याः, ॥१॥] भोगंकराद्या अष्टौ या अर्हतो जन्मभवनसंवर्त्तकपवनादि विदधतीति ऊर्ध्वलोकवास्तव्याः तथा च—"नंदणवणकूडेसुं एयाओ उड्ढलोयवत्थव्वाउ"त्ति, [नन्दनवनकूटेषु एता ऊर्ध्वलोकवास्तव्याः ॥] या अभ्रवर्दलकादि कुर्वन्तीति। 'तिरियमिस्सोववन्नग'त्ति अष्टसु तिर्यञ्चोऽप्युत्पद्यन्ते इति भूतभवापेक्षया तिर्यग्भिर्मिश्रास्तिर्यग्मिश्रास्ते मनुष्या उपपन्ना-देवतया जाता येषु ते तिर्यग्मिश्रोपपन्नका इति, परियायते-गम्यते यैस्तानि परियानानि तान्येव परियानिकानि परियानं वा-गमनं प्रयोजनं येषां तानि परियानिकानि यानकारकाभियोगिकपालकादिदेवकृतानि पालकादीन्यष्टौ क्रमेण शक्रादीनामिन्द्राणामिति।

देवत्वं च तपश्चरणादिति तद्विशेषमाह—

अट्ठट्ठमियाणं भिक्खुपडिमाणं चउसट्ठीते राइंदिएहिं दोहि य अट्ठासीतेहिं भिक्खासतेहिं अहासुत्ता जाव अणुपालितावि भवति (सू० ६४५) अट्ठविधा संसारसमावन्नगा जीवा पं० तं०—पढमसमयनेरतिता अपढमसमयनेरतिता एवं जाव अपढमसमयदेवा १ अट्ठविधा सव्वजीवा पं० तं०—नेरतिता तिरिक्खजोणिता तिरिक्खजोणिणीओ मणुस्सा मणुस्सीओ देवा देवीओ सिद्धा २ अथवा अट्ठविधा सव्वजीवा पं० तं०—आभिणिबो-

१ दशमे स्थानके वक्ष्यन्ति यद् आभियोगिका विमानीभवन्तीति।

हितनाणी जाव केवलनाणी मतिअन्नाणी सुतअण्णाणी विभंगणाणी २ (सू० ६४६) अट्ठविधे संजमे पं० तं०—पढमसमयसुहुमसंपरागसरागसंजमे अपढमसमयसुहुमसंपरायसरागसंजमे पढमसमयबादरसंजमे अपढमसमयबादरसंयमे पढमसमयउवसंतकसायवीतरायसंजमे अपढमसमयउवसंतकसायवीतरागसंजमे पढमसमय खीणकसायवीतरागसंजमे अपढमसमयखीण० (सू०६४७) अट्ठ पुढवीओ पं० तं०—रयणप्पभा जाव अहे सत्तमा ईसिपब्भारा १ ईसीपब्भाराते णं पुढवीते बहुमज्झदेसभागे अट्ठजोयणिए खेत्ते अट्ठ जोयणाइं बाहल्लेणं पण्णत्ते २ ईसिपब्भाराते णं पुढवीते अट्ठ नामधेज्जा पं० तं०—ईसिति वा ईसिपब्भाराति वा तणूति वा तणुतणूइ वा सिद्धीति वा सिद्धालतेति वा मुत्तीति वा मुत्तालतेति वा ३ (सू० ६४८)

'अट्ठट्ठमिए'त्यादि, अष्टावष्टमानि दिनानि यस्यां सा तथा, या ह्यष्टाभिर्दिनानामष्टकैः पूर्यते तस्यामष्टावष्टमदिनानि भवन्त्येव, तत्र चाष्टावष्टकानि चतुःषष्टिर्भवत्येव, तथा प्रथमाष्टके एका दत्तिर्भोजनस्य पानकस्य च एवं द्वितीये द्वे एवमष्टमेऽष्टौ, ततो द्वे शते अष्टाशीत्यधिके भिक्षाणां सर्वाग्रतो भवत इति, 'अहासुत्ता' 'अहाकप्पा अहामग्गा अहातच्चा सम्मं काएण फासिया पालिया सोहिया तीरिया किट्टिया आराहिया' इति यावत्करणात् दृश्यं 'अणुपालिय'त्ति आत्मसंयमानुकूलतया पालिता इति । तपश्च न सर्वेषामपि संसारिणामिति सम्बन्धात् संसारिणो जीवाधिकारात् सर्वजीवांश्च प्रतिपादयन् 'अट्ठविहे'त्यादि सूत्रत्रयमाह, कण्ठ्यं चेदम्, नवरं प्रथमसमयनैरयिका नरकायुःप्रथमसमयोदये इतरे त्वितरस्मिन् एवं सर्वेऽपि १, अनन्तरं ज्ञानिन उक्तास्ते च संयमिनोऽपि भवन्तीतिसम्बन्धात् संयमसूत्रं, तत्र 'संयमे'त्ति चारित्रं, स चेह तावद् द्विधा—सरागवीतरागभेदात्, तत्र सरागो द्विधा—सूक्ष्मबादरकषायभेदात्,

पुनस्त्री प्रथमाप्रथमसमयभेदाद् द्विधा, एवं चतुर्द्धा सरागसंयम इति, तत्र प्रथमः समयः प्राप्तो यस्य स तथा; सूक्ष्मः—किट्टीकृतः सम्परायः—कषायः सञ्ज्वलनलोभलक्षणो वेद्यमानो यस्मिन् स तथा, सह रागेण—अभिष्वङ्गलक्षणेन यः स सरागः स एव संयमः सरागस्य वा साधोः संयमो यः स तथा पश्चात्कर्मधारय इत्येकः, द्वितीयोऽयमेव अप्रथमसमयविशेषित इति, अयं च द्विविधोऽपि श्रेणिद्वयापेक्षया पुनर्द्वैविध्यं लभमानोऽपि न विवक्षित इति चतुर्द्धा नोक्तः, तथा बादरा—अकिट्टीकृताः सम्परायाः—संज्वलनक्रोधादयो यस्मिन् स तथा, वीतरागसंयमस्तु श्रेणिद्वयाश्रयणाद् द्विविधः, पुनः प्रथमाप्रथमसमयभेदेनैकैको द्विविध इति चतुर्द्धा, सामस्त्येन चाष्टधेति। संयमिनश्च पृथिव्यां भवन्तीति पृथिवीसूत्रत्रयं कण्ठ्यं, नवरमष्टयोजनिकं क्षेत्रमायामविष्कम्भाभ्यामिति गम्यते। ईषत्प्राग्भारया ईषदिति वा नाम रत्नप्रभाद्यपेक्षया ह्रस्वत्वात् तस्याः १ एवं प्राग्भारस्य ह्रस्वत्वादीषत्प्राग्भारेति वा २ अत एव तनुरिति वा तन्वीत्यर्थः ३ अतितनुत्वात्तनुतनुरिति वा ४ सिध्यन्ति तस्यामिति सिद्धिरिति वा ५ सिद्धानामाश्रयत्वात् सिद्धालय इति वा ६ मुच्यन्ते सकलकर्म्मभिस्तस्यामिति मुक्तिरिति वा ७ मुक्तानामाश्रयत्वान्मुक्तालय इति वेति ८।

सिद्धिश्च गुणानुष्ठानेष्वप्रमादितया भवतीति तानि तद्विषयत आह—

अट्ठहिं ठाणेहिं संमं संघडितव्वं जतितव्वं परक्कमितव्वं अस्सिं च णं अट्ठे णो पमातेतव्वं भवति—असुयाणं धम्माणं सम्मं सुणणताते अब्भुट्ठेतव्वं भवति १ सुताणं धम्माणं ओगिण्हणयाते उवधारणयाते अब्भुट्ठेतव्वं भवति २ पावाणं कम्माणं संजमेणमकरणताते अब्भुट्ठेयव्वं भवति ३ पोराणाणं कम्माणं तवसा विगिंच-

णताते विसोहणताते अब्भुट्ठेतव्वं भवइ ४ असंगिहीतपरितणस्स संगिण्हणताते अब्भुट्ठेयव्वं भवति ५ सेहं आयारगोयरगहणताते अब्भुट्ठेयव्वं भवति ६ गिलाणस्स अगिलाते वेयावच्चकरणताए अब्भुट्ठेयव्वं भवति ७ साहम्मिताणमधिकरणंसि उप्पण्णंसि तत्थ अनिस्सितोवस्सितो अपक्खग्गाही मज्झत्थभावभूते कह णु साहम्मिया अप्पसद्दा अप्पझंझा अप्पतुमन्तुमा उवसामणताते अब्भुट्ठेयव्वं भवति १० (सू० ६४९) महासुक्कसहस्सारेसु णं कप्पेसु विमाणा अट्ठ जोयणसताइं उड्ढं उच्चत्तेणं पन्नत्ता (सू० ६५०) अरहतो णं अरिट्ठनेमिस्स अट्ठसया वादीणं सदेवमणुयासुराते परिसाते वादे अपराजिताणं उक्कोसिया वादिसंपया हुत्था (सू० ६५१)

'अट्ठही'त्यादि कण्ठ्यं, नवरं अष्टासु स्थानेषु—वस्तुषु सम्यग्घटितव्यं—अप्राप्तेषु योगः कार्यः यतितव्यं—प्राप्तेषु तदवियोगार्थं यत्नः कार्यः पराक्रमितव्यं—शक्तिक्षयेऽपि तत्पालने पराक्रमः—उत्साहातिरेको विधेय इति, किं बहुना ?—एवं एतस्मिन्—अष्टस्थानकलक्षणे वक्ष्यमाणेऽर्थे न प्रमादनीयं—न प्रमादः कार्यो भवति, अश्रुतानाम्—अनाकर्णितानां धर्म्माणां—श्रुतभेदानां सम्यक् श्रवणतायां श्रवणतायै वाऽभ्युत्थातव्यं—अभ्युपगन्तव्यं भवति १, एवं श्रुतानां—श्रोत्रेन्द्रियविषयीकृतानामवग्रहणतायै—मनोविषयीकरणाय उपधारणतायै—अविच्युतिस्मृतिवासनाविषयीकरणायेत्यर्थः २, 'विकिंचणयाए'त्ति विवेचना निर्जरेत्यर्थः, तस्यै, अत एवात्मनो विशुद्धिः—विशोधना अकलङ्कत्वं तस्यै इति ३, असंगृहीतस्य—अनाश्रितस्य परिजनस्य—शिष्यवर्गस्येति ४, 'सेहं'ति विभक्तिपरिणामाच्छैक्षस्य—अभिनवप्रव्रजितस्य 'आयारगोयरं'ति आचारः—साधुसमाचारस्तस्य गोचरो—विषयो व्रतषट्कादिराचारगोचरः अथवा आचारश्च—ज्ञानादिविषयः पञ्चधा गोचरश्च—भिक्षाचर्येत्याचारगोचरं, इह विभक्तिपरिणामादाचारगोचरस्य ग्रहणतायां—शिक्षणे शैक्षमाचारगोचरं

ग्राहयितुमित्यर्थः ६, 'अगिलाए'त्ति अग्लान्या अखेदेनेत्यर्थः, वैयावृत्त्यं प्रतीति शेषः ७, 'अधिगरणंसि'त्ति विरोधे, तत्र साधर्मिकेषु निश्रितं-रागः उपाश्रितं-द्वेषः अथवा निश्रितं-आहारादिलिप्सा उपाश्रितं-शिष्यकुलाद्यपेक्षा तद्वर्जितो यः सोऽनिश्रितोपाश्रितः, न पक्षं शास्त्रबाधितं गृह्णातीत्यपक्षग्राही, अत एव मध्यस्थभावं भूतः-प्राप्तो यः स तथा, स भवेदिति शेषः, तेन च तथाभूतेन कथं नु?-केन प्रकारेण साधर्म्मिकाः-साधवोऽल्पशब्दाः-विगतराटीमहाध्वनयः अल्पझंझा-विगततथाविधविप्रकीर्णवचनाः अल्पतुमन्तुमाः-विगतक्रोधकृतमनोविकारविशेषा भविष्यन्तीति भावयतोपशमनायाधिकरणस्याभ्युत्थातव्यं भवतीति । अप्रमादिनां देवलोकोऽपि भवतीति देवलोकप्रतिबद्धाष्टकमाह- 'महासुक्के'त्यादि कण्ठ्यं, अनन्तरोक्तविमानवासिदेवैरपि वस्तुविचारे न जीयन्ते केचिदादिन इति तदष्टकमाह---'अरहओ' इत्यादि, सुगमं ।

एतेषां च नेमिनाथस्य विनेयानां मध्ये कश्चित्केवलीभूत्वा वेदनीयादिकर्म्मस्थितीनामायुष्कस्थित्या समीकरणार्थं केवलिसमुद्घातं कृतवानिति समुद्घातमाह---

अट्ठसमतिए केवलिसमुग्घाते पं० तं०---पढमे समए दंडं करेति बीए समए कवाडं करेति ततिए समते मंथानं करेति चउत्थे समते लोगं पूरेति पंचमे समए लोगं पडिसाहरति छट्ठे समए मंथं पडिसाहरति सत्तमे समए कवाडं पडिसाहरति अट्ठमे समए दंडं पडिसाहरति (सू० ६५२)

'अट्ठे'त्यादि, तत्र समुद्घातं प्रारभमाणः प्रथममेवावर्जीकरणमभ्येति, अन्तर्मौहूर्त्तिकं उदीरणावलिकायां कर्म्मप्रक्षेपव्यापाररूप-

मित्यर्थः, ततः समुद्घातं गच्छति, तत्र च प्रथमसमये स्वदेहविष्कम्भमूर्ध्वमधश्चायतमुभयतोऽपि लोकान्तगामिनं जीवप्रदेशसङ्घातं दण्डमिव दण्डं केवली ज्ञानाभोगतः करोति, द्वितीये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणात् पार्श्वतो लोकान्तगामिकपाटमिव कपाटं करोति, तृतीये तदेव दक्षिणोत्तरदिग्द्वये प्रसारणान्मन्थानं करोति लोकान्तप्रापिणमेवेति, एवं च लोकस्य प्रायो बहु पूरितं भवति, मन्थान्तराण्यपूरितानि भवन्ति अनुश्रेणिगमनाज्जीवप्रदेशानामिति, चतुर्थे तु समये मन्थान्तराण्यपि सकललोकनिष्कुटैः सह पूरयति, ततश्च सकलो लोकः पूरितो भवतीति, तदनन्तरमेव पञ्चमे समये यथोक्तप्रतिलोमं मन्थान्तराणि संहरति जीवप्रदेशान् सकर्म्मकान् सङ्कोचयति, षष्ठे मन्थानमुपसंहरति, घनतरसंकोचात्, सप्तमे कपाटमुपसंहरति, दण्डात्मनि सङ्कोचात्, अष्टमे दण्डमुपसंहृत्य शरीरस्थ एव भवति, तत्र च "औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः। मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥१॥ कार्मणशरीरयोगी चतुर्थके पञ्चमे तृतीये च। समयत्रये च तस्मिन् भवत्यनाहारको नियमाद् ॥२॥" इति, वाङ्मनसोस्त्वप्रयोक्तैव, प्रयोजनाभावादिति, अतोऽभिहितमष्टौ समयाः यस्मिन् सोऽष्टसमयः स एवाष्टसामयिकः केवलिनः समुद्घातो केवलिसमुद्घातो न शेष इति।

अनन्तरं केवलिनां समुद्घातवक्तव्यतोक्ता, अथाकेवलिनां गुणवतां देवत्वं भवतीति देवाधिकारवत् समणस्सेत्यादि सूत्रपञ्चकं—

**समणस्स णं भगवतो महावीरस्स अट्ठ सया अणुत्तरोववातियाणं गतिकल्लाणाणं जाव आगमेसिभद्दाणं उक्कोसिता अणुत्तरोववातितसंपया हुत्था १ (सू० ६५३) अट्ठविधा वाणमंतरा देवा पं० तं०—पिसाया भूना जक्खा रक्खसा किन्नरा किंपुरिसा महोरगा गंधव्वा २ एतेसि णं अट्ठण्हं वाणमंतरदेवाणं अट्ठ चेतितरुक्खा**

पं० तं०—कलंबो अ पिसायाणं, वडो जक्खाण चेतितं। तुलसी भूयाणं भवे, रक्खसाणं च कंडओ ॥१॥ असोओ किन्नराणं च, किंपुरिसाण य चंपतो। नागरुक्खो भुयंगाणं, गंधव्वाण य तेंदुओ ॥२॥ ३ (सू० ६५४) इमीसे रयणप्पभाते पुढवीते बहुसमरमणिज्जाओ भूमिभागाओ अट्ठजोयणसते उड्ढबाहाते सूरविमाणे चारं चरति ४ (सू० ६५५) अट्ठ नक्खत्ता चंदेणं सद्धिं पमद्दं जोगं जोतेंति तं०—कत्तिता रोहिणी पुणव्वसू महा चित्ता विसाहा अणुराधा जेट्ठा ५ (सू० ६५६) जंबुद्दीवस्स णं दीवस्स दारा अट्ठ जोयणाइं उड्ढं उच्चत्तेणं पन्नत्ता १ सव्वेसिंपि दीवसमुद्दाणं दारा अट्ठजोयणाइं उड्ढं उच्चत्तेणं पन्नत्ता २ (सू० ६५७) पुरिसवेयणिज्जस्स णं कम्मस्स जहन्नेणं अट्ठसंवच्छराइं बंधठिती पन्नत्ता १ जसोकित्तीनामएणं कम्मस्स जहण्णेणं अट्ठ मुहुत्ताइं बंधठिनी पं० २ उच्चगोयस्स णं कम्मस्स एवं चेव ३ (सू० ६५८) तेइंदियाणमट्ठ जातीकुलकोडीजोणीपमुहसतसहस्सा पं० (सू० ६५९) जीवा णं अट्ठठाणणिव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा चिणंति वा चिणिस्संति वा, तं०—पढमसमयनेरतितनिव्वत्तिते, जाव अपढमसमयदेवनिव्वत्तिते, एवं चिणउवचिण जाव निज्जरा चेव अट्ठपतेसिता खंधा अणंता पण्णत्ता, अट्ठपतेसोगाढा पोग्गला अणंता पण्णत्ता जाव अट्ठगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ६६०) अट्ठमं ठाणं सम्मत्तं ॥ अट्ठमं अज्झयणं सम्मत्तं ॥

सुगमं, नवरं अनुत्तरेषु-विजयादिविमानेषूपपातो येषामस्ति तेऽनुत्तरोपपातिकास्तेषां साधूनामिति गम्यते, तथा गतिः-देवगतिलक्षणा कल्याणा येषां, एवं स्थितिरपि, तथा आगमिष्यद्भद्रं-निर्वाणलक्षणं येषां ते तथा तेषां। चैत्यवृक्षा मणिपीठिकानामुपरि-

वर्त्तिनः सर्वरत्नमया उपरिच्छत्रध्वजादिभिरलङ्कृताः सुधर्म्मादिसभानामग्रतो ये श्रूयन्ते त एत इति सम्भाव्यते ये तु "चिंधाइं कलंबझए सुलस वडे तहय होइ खट्टंगे । असोय चंपए या नागे तह तुंबरू चेव ॥१॥" इति, [चिह्नानि कलंबो ध्वजः सुलसः वटः तथा च भवति खट्वांगः । अशोकश्चंपकश्च नागस्तथा तुंबरुश्चैव ॥१॥] ते चिह्नभूता एतेभ्योऽन्य एवेति, 'कलंबो' इत्यादि श्लोकद्वयं कण्ठ्यं नवरं 'भुयंगाणं'ति महोरगाणामिति । 'चारं चरइ'त्ति चारं करोति, चरतीत्यर्थः, 'पमद्दं'ति प्रमर्दः–चन्द्रेण स्पृश्यमानता तल्लक्षणं योगं च योजयन्त्यात्मनश्चन्द्रेण सार्द्धं कदाचित् न तु तमेव सदैवेति, उक्तं च—"पुणव्वसुरोहिणिचित्ता महजेट्ठणुराहकित्तियविसाहा । चंदस्स उभयजोगो" इति [पुनर्वसू रोहिणी चित्रा मघानुराधा ज्येष्ठा कृत्तिका विशाखा एतेषां चंद्रेणोभयथा योगः (दक्षिणोत्तरयोः) ] यानि च दक्षिणोत्तरयोगीनि तानि प्रमर्दयोगीन्यपि कदाचिद्भवन्ति, यतो लोकश्रीटीकाकृतोक्तं—"एतानि नक्षत्राण्युभययोगीनि–चन्द्रस्य दक्षिणेनोत्तरेण च युज्यन्ते कथञ्चिच्चन्द्रेण भेदमप्युपयान्ती"ति, एतत्फलं चेदम्—"एतेषामुत्तरगा ग्रहाः सुभिक्षाय चन्द्रमा नितरा"मिति । देवनिवासाधिकाराद्देवनिवासभूतजम्बूद्वीपादिद्वारसूत्रद्वयं । देवाधिकाराद्देवत्वभाविकर्म्मविशेषसूत्रत्रयम्, कर्माधिकारात्तन्निबन्धनकुलकोटिसूत्रं, त्रीन्द्रियादिवैचित्र्यहेतुकर्म्मपुद्गलसूत्राणि च सुगमानि, नवरं 'जातीत्यादि जातौ–त्रीन्द्रियजातौ कुलकोटीनां योनिप्रमुखाणां—योनिद्वारकाणां यानि शतसहस्राणि तानि तथेति ॥

॥ इति श्रीमदभयदेवसूरिविरचिते स्थानाख्यतृतीयाङ्गविवरणे
ऽष्टस्थानकाख्यमष्टममध्ययनं समाप्तम् ॥ श्लोकाः ७२०

९ स्थाना-
ध्ययने
उद्देश २
अनुत्तराः
देवाः सूर्य
चाराः प्रम
र्दयोगः द्वी
पद्वाराणि
कर्मस्थिति
कुलकोटी
पुद्गलादि
सू० ६५३-
६६०

## ॥अथ नवस्थानकाख्यं नवमाध्ययनम्

व्याख्यातमष्टममध्ययनमधुना सङ्ख्याक्रमसम्बद्धमेव नवमस्थानकाख्यं नवममध्ययनमारभ्यते, अस्य च पूर्वेण सह सम्बन्धः सङ्ख्याक्रमकृत एवैकः सम्बन्धान्तरं तु पूर्वस्मिन् जीवादिधर्म्मा उक्ताः इहापि त एवेत्येवंसम्बन्धस्यास्यादिसूत्रम्—

नवहिं ठाणेहिं समणे णिग्गंथे संभोतितं विसंभोतितं करेमाणे णातिक्कमति, तं०—आयरियपडिणीयं उवज्झायपडिणीयं थेरपडिणीयं कुल० गण० संघ० नाण० दंसण० चरित्तपडिणीयं (सू० ६६१) णव बंभचेरा पं० तं०—सत्थपरिन्ना लोगविजओ जाव उवहाणसुयं महापरिण्णा (सू० ६६२) नव बंभचेरगुत्तीतो पं० तं०—विवित्ताइं सयणासणाइं सेवित्ता भवति णो इत्थिसंसत्ताइं नो पसुसंसत्ताइं नो पंडगसंसत्ताइं १ नो इत्थिणं कहं कहेत्ता २ नो इत्थिठाणाइं सेवित्ता भवति ३ णो इत्थीणमिंदिताइं मणोहराइं मणोरमाइं आलोइत्ता निज्झाइत्ता भवइ ४ णो पणीतरसभोती ५ णो पाणभोयणस्स अतिमत्तं आहारते सता भवति ६ णो पुव्वरतं पुव्वकीलियं समरेत्ता भवति ७ णो सद्दाणुवाती णो रूवाणुवाती णो सिलोगाणुवाती ८ णो सातसोक्खपडिबद्धे यावि भवति ९. णव बंभचेरअगुत्तीओ पं० तं०—णो विवित्ताइं सयणासणाइं सेवित्ता भवइ, इत्थीसंसत्ताइं पसुसंस-

त्ताइं पंडगसंसत्ताइं इत्थीणं कहं कहेत्ता भवइ इत्थीणं ठाणाइं सेवित्ता भवति ईत्थीणं इदियाइं जाव निज्झाइत्ता भवति पणीयरसभोई पाणभोयणस्स अइमायमाहारए सया भवइ पुव्वरयं पुव्वकीलियं सरित्ता भवइ सद्दाणुवाई रूवाणुवाई सिलोगाणुवाई जाव सायासुक्खपडिबद्धे यावि भवति (सू० ६६३)

'नवहिं ठाणेहिं समणे' इत्यादि, अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः--पूर्वसूत्रे पुद्गला वर्णितास्तद्विशेषोदयाच्च कश्चिच्छ्रमणभावमुपगतोऽपि धर्माचार्यादीनां प्रत्यनीकतां करोति, तं च विसम्भोगिकं कुर्वन्नपरः सुश्रमणो नाज्ञामतिक्रामतीतीहाभिधीयत इत्येवंसम्बन्धस्यास्य व्याख्या, सा च सम्बन्धत एवोक्तेति। स्वयं ब्रह्मचर्यव्यवस्थित एव चैवं करोतीति तदभिधायकाध्ययनानि दर्शयन्नाह—'नव बंभचेरे'त्यादि, ब्रह्म-कुशलानुष्ठानं तच्च तच्चर्यं चासेव्यमिति ब्रह्मचर्यं संयम इत्यर्थः तत्प्रतिपादकान्यध्ययनान्याचारप्रथमश्रुतस्कन्धप्रतिबद्धानि ब्रह्मचर्याणि, तत्र शस्त्रं द्रव्यभावभेदादनेकविधं तस्य जीवशंसनहेतोः परिज्ञा-ज्ञानपूर्वकं प्रत्याख्यानं यत्रोच्यते सा शस्त्रपरिज्ञा १, 'लोकविजओ'त्ति भावलोकस्य रागद्वेषलक्षणस्य विजयो-निराकरणं यत्राभिधीयते स लोकविजयः २ 'सीओसणिज्जं'ति शीताः-अनुकूलाः परीषहा उष्णाः-प्रतिकूलास्तानाश्रित्य यत्कृतं तच्छीतोष्णीयम् ३ 'सम्मत्तं'त्ति सम्यक्त्वमचलं विधेयं न तापसादीनां कष्टतपःसेविनामष्टगुणैश्वर्यमुद्वीक्ष्य दृष्टिमोहः कार्य इति प्रतिपादनपरं सम्यक्त्वं ४ 'आवंती'ति आद्यपदेन नामान्तरेण तु लोकसारः, तच्चाज्ञानाद्यसारत्यागेन लोकसाररत्नत्रयोद्युक्तेन भाव्यमित्येवमर्थं लोकसारः ५ 'धूयं'ति धूतं-सङ्गानां त्यजन तत्प्रतिपादकं धूतमिति ६ 'विमोहो'त्ति मोहसमुत्थेषु परीषहोपसर्गेषु प्रादुर्भूतेषु विमोहो भवेत् तान् सम्यक् सहेतेति यत्राभिधीयते स विमोहः ७ महावीरासेवितस्योपधानस्य-तपसः प्रतिपादकं श्रुतं-ग्रन्थ उपधानश्रुतमिति ८ महती परिज्ञा-अन्तक्रिया-

लक्षणा सम्यग्निर्वचनप्रतिपादनपरं महापरिज्ञेति ९। ब्रह्मचर्यशब्देन मैथुनविरतिरप्यभिधीयत इति ब्रह्मचर्यगुप्तीः प्रतिपादयन्नाह—'नवे'त्यादि, ब्रह्मचर्यस्य–मैथुनव्रतस्य गुप्तयो–रक्षाप्रकाराः ब्रह्मचर्यगुप्तयः, 'विविक्तानि' स्त्रीपशुपण्डकेभ्यः पृथग्वर्त्तीनि शयनासनानि–संस्तारकपीठकादीनि उपलक्षणतया स्थानादीनि च 'सेविता' तेषां सेवको भवति ब्रह्मचारी, अन्यथा तद्बाधासम्भवात्, एतदेव सुगमं व्यतिरेकेणाह–नो स्त्रीसंसक्तानि–नो देवीनारीतिरश्चीभिः समाकीर्णानि सेविता भवतीति सम्बध्यते, एवं पशुभिः–गवादिभिः, तत्संसक्तौ हि तत्कृतविकारदर्शनात् मनोविकारः सम्भाव्यत इति, पण्डकाः–नपुंसकानि, तत्संसक्तौ स्त्रीसमानो दोषः प्रतीत एवेत्येकम् १, नो स्त्रीणां केवलानामिति गम्यते 'कथां' धर्मदेशनादिलक्षणवाक्यप्रतिबन्धरूपां यदिवा 'कर्णाटी सुरतोपचारकुशला लाटी विदग्धप्रिया' इत्यादिकां प्रागुक्तां वा जात्यादिचातुरूपां कथयिता–तत्कथको भवति ब्रह्मचारीति द्वितीयं २, 'नो इत्थिगणाइं'तीह सूत्रे स्थाने केवलं 'नो इत्थिठाणाइं'ति सम्भाव्यते उत्तराध्ययनेषु तथाऽधीतत्वात् प्रक्रमानुसारित्वाच्चास्येतीदमेव व्याख्यायते–'नो स्त्रीणां तिष्ठन्ति येषु तानि स्थानानि–निषद्याः स्त्रीस्थानानि तानि सेविता भवति ब्रह्मचारी, कोऽर्थः ?–स्त्रीभिः सहैकासने नोपविशेद्, उत्थितास्वपि हि तासु मुहूर्त्तं नोपविशेदिति, दृश्यमानपाठाभ्युपगमे त्वेवं व्याख्या–नो स्त्रीगणानां पर्युपासको भवेदिति ३ नो स्त्रीणामिन्द्रियाणि–नयननासिकादीनि मनो हरन्ति–दृष्टमात्राण्याक्षिपन्तीति मनोहराणि, तथा मनो रमयन्ति–दर्शनानन्तरमनुचिन्त्यमानान्याह्लादयन्तीति मनोरमाणि आलोक्यालोक्य 'निद्ध्याता' दर्शनानन्तरमतिशयेन चिन्तयिता यथाऽहो सलवणत्वं लोचनयोः ऋजुत्वं नासावंशस्येत्यादि भवति ब्रह्मचारीति ४ 'नो प्रणीतरसभोगी' नो गलत्स्नेहबिन्दुभोक्ता भवति ५ नो पानभोजनस्य रूक्षस्याप्यतिमात्रस्य "अद्धममणस्स सव्वंजणस्स कुज्जा दवस्स दो भाए। वाऊपवियारणट्ठा छब्भायं ऊणयं कुज्जा ॥१॥" [ अर्धमशनस्य

सव्यञ्जनस्य कुर्यात् द्रवस्य द्वौ भागौ। वायुप्रविचारणार्थं षष्ठं भागमूनं कुर्यात् ॥१॥] इत्येवंविधप्रमाणातिक्रमेणाहारकः-अभ्यवहर्त्ता 'सदा' सर्वदा भवति, खाद्यस्वाद्ययोरुत्सर्गतो यतीनामयोग्यत्वात्पानभोजनयोर्ग्रहणमिति ६ 'नो पूर्वरतं' नो गृहस्थावस्थायां स्त्रीसम्भोगानुभवनं तथा 'पूर्वक्रीडितं' तथैव द्यूतादिरमणलक्षणं 'स्मर्त्ता' चिन्तयिता भवति ७ 'नो शब्दानुपाती'ति शब्दं-मन्मनभाषितादिकमभिष्वङ्गहेतुमनुपतति-अनुसरतीत्येवंशीलः शब्दानुपाती एवं रूपानुपाती श्लोकं-ख्यातिमनुपततीति श्लोकानुपातीति पदत्रयेणाप्येकमेव स्थानकमिति ८ 'नो सातसौख्यप्रतिबद्ध' इति सातात्-पुण्यप्रकृतेः सकाशाद्यत्सौख्यं-सुखं गन्धरसस्पर्शलक्षणं विषयसम्पाद्यं तत्र प्रतिबद्धः-तत्परो ब्रह्मचारी, सातग्रहणादुपशमसौख्यप्रतिबद्धतायां न निषेधः, वापीति समुच्चये, भवति ९। उक्तविपरीता अगुप्तयोऽप्येवमेवेति ।

उक्तरूपं नवगुप्तिसनाथं च ब्रह्मचर्यं जिनैरभिहितमिति जिनविशेषौ प्रकृताध्ययनावतारद्वारेणाह—

**अभिणंदणाओ णं अरहओ सुमती अरहा नवहिं सागरोवमकोडीसयसहस्सेहिं विइक्कंतेहिं समुप्पन्ने (सू० ६६४) नव सब्भावपयत्था पं० तं०—जीवा अजीवा पुण्णं पावो आसवो संवरो निज्जरा बंधो मोक्खो ९ (सू० ६६५) णवविहा संसारसमावन्नगा जीवा पं० तं०—पुढविकाइया जाव वणस्सइकाइया बेइंदिया जाव पंचिंदितत्ति १ पुढविकाइया नवगइया नवआगतिता पं० तं०—पुढविकाइए पुढवीकाइएसु उववज्जमाणे पुढविकाइएहिंतो वा जाव पंचिंदियेहिंतो वा उववज्जेज्जा, से चेव णं से पुढविकाइए पुढविकायत्तं विप्पजहमाणे पुढविकाइ-**

यत्ताए जाव पंचिंदियत्ताते वा गच्छेज्जा २ एवमाउकाइयावि ३ जाव पंचिंदियत्ति १० णवविधा सव्वजीवा पं० तं०—एगिंदिया बेइंदिया तेइंदिया चउरिंदिया नेरतिता पंचेंदियतिरिक्खजोणिया मणुस्सा देवा सिद्धा ११ अथवा णवविहा सव्वजीवा पं० तं०—पढमसमयनेरतिता अपढमसमयनेरतिता जाव अपढमसमयदेवा सिद्धा १२। नवविहा सव्वजीवोगाहणा पं० तं०—पुढविकाइओगाहणा आउकाइओगाहणा जाव वणस्सइकायउगाहणा बेइंदियओगाहणा तेइंदियओगाहणा चउरिंदियओगाहणा पंचिंदियओगाहणा १३ जीवाणं नवहिं ठाणेहिं संसारं वत्तिंसु वा वत्तंति वा वत्तिस्संति वा, तं०—पुढविकाइयत्ताए जाव पंचिंदियत्ताए १४ (सू० ६६६) णवहिं ठाणेहिं रोगुप्पत्ती सिया तं०—अच्चासणाते अहितासणाते अतिणिद्दाए अतिजागरितेण उच्चारनिरोहेणं पासवणनिरोहेणं अद्धाणगमणेणं भोयणपडिकूलताते इंदियत्थविकोवणयाते १५ (सू० ६६७)

'अभिणंदणे'त्यादि कण्ठ्यं। अभिनन्दनसुमतिजिनाभ्यां च सद्भूताः पदार्थाः प्ररूपितास्ते च नवेति तान् दर्शयन्नाह—'नव सब्भावे'त्यादि, सद्भावेन-परमार्थेनानुपचारेणेत्यर्थः पदार्था-वस्तूनि सद्भावपदार्थाः, तद्यथा-जीवाः सुखदुःखज्ञानोपयोगलक्षणाः, अजीवास्तद्विपरिताः, पुण्यं-शुभप्रकृतिरूपं कर्म पापं-तद्विपरीतं कर्मैव आश्रूयते-गृह्यते कर्मानेनेत्याश्रवः शुभाशुभकर्मादानहेतुरिति भावः,संवरः-आश्रवनिरोधो गुप्त्यादिभिः, निर्जरा विपाकात् तपसा वा कर्म्मणां देशतः क्षपणा, बन्धः-आश्रवैरात्तस्य कर्म्मण आत्मना संयोगः, मोक्षः-कृत्स्नकर्मक्षयादात्मनः स्वात्मन्यवस्थानमिति, ननु जीवाजीवव्यतिरिक्ताः पुण्यादयो न सन्ति, तथाऽयुज्यमानत्वात् तथाहि-पुण्यपापे कर्म्मणी बन्धोऽपि तदात्मक एव कर्म्म च पुद्गलपरिणामः पुद्गलाश्चाजीवा इति आश्रवस्तु मिथ्यादर्शनादिरूपः परिणामो

जीवस्य, स चात्मानं पुद्गलांश्च विरहय्य कोऽन्यः?, संवरोऽप्याश्रवनिरोधलक्षणो देशसर्व्वभेद आत्मनः परिणामो निवृत्तिरूपो, निर्जरा तु कर्म्मपरिशाटो जीवः कर्म्मणां यत् पार्थक्यमापादयति स्वशक्त्या, मोक्षोऽप्यात्मा समस्तकर्म्मविरहित इति तस्माज्जीवाजीवौ सद्भावपदार्थाविति वक्तव्यं, अत एवोक्तमिहैव "जदत्थिं च णं लोए तं सव्वं दुप्पडोयारं, तंजहा–जीवच्चेअ अजीवच्चेअ" अत्रोच्यते, सत्यमेतत् , किन्तु यावेव जीवाजीवपदार्थौ सामान्येनोक्तौ तावेवेह विशेषतो नवधोक्तौ, सामान्यविशेषात्मकत्वाद्वस्तुनः, तथेह मोक्षमार्गे शिष्यः प्रवर्त्तनीयो न सङ्ग्रहाभिधानमात्रमेव कर्त्तव्यं, स च यदैवमाख्यायते यदुताश्रवो बन्धो बन्धद्वारायाते च पुण्यपापे मुख्यानि तत्त्वानि संसारकारणानि संवरनिर्जरे च मोक्षस्य तदा संसारकारणत्यागेनेतरत्र प्रवर्त्तते नान्यथेत्यतः षट्कोपन्यासः मुख्यसाध्यख्यापनार्थं च मोक्षस्येति । अत्र च पदार्थनवके प्रथमो जीवपदार्थोऽतस्तद्भेदगत्यागत्यवगाहनासंसारनिर्वर्त्तनरोगोत्पत्तिकारणप्रतिपादनाय 'नवविहे'त्यादिसूत्रपञ्चदशकमाह, सुगमं चेदं, नवरं अवगाहन्ते यस्यां सा अवगाहना–शरीरमिति, 'वत्तिंसु व'त्ति संसरणं निर्वर्त्तितवन्तः–अनुभूतवन्तः, एवमन्यदपि, 'अच्चासणयाए'त्ति अत्यन्तं-सततमासनं–उपवेशनं यस्य सोऽत्यासनस्तद्भावस्तत्ता तया, अर्शोविकारादयो हि रोगा एतया उत्पद्यन्त इति अथवा अतिमात्रमशनमत्यशनं तदेवात्यशनता, दीर्घत्वं च प्राकृतत्वात् तया, सा चाजीर्णकारणत्वात् रोगोत्पत्तये इति, 'अहियासणयाए'त्ति अहितं–अननुकूलं टोलपाषाणाद्यासनं यस्य स तथा, शेषं तथैव, तया, अहिताशनतया वा, अथवा 'साऽजीर्णे भुज्यते यत्तु, तदध्यसनमुच्यते ।' इति वचनात् तदध्यसनं–अजीर्णे भोजनं तदेव तत्ता तयेति, भोजनप्रतिकूलता–प्रकृत्यनुचितभोजनता तया, इन्द्रियार्थानां–शब्दादिविषयाणां विकोपनं–विपाकः इन्द्रियार्थविकोपनं कामविकार इत्यर्थः, ततो हि स्त्र्यादिष्वभिलाषादुन्मादादिरोगोत्पत्तिः, यत उक्तम्—"आदावभिलाषः १ स्याच्चिन्ता तदनन्तरं २ ततः स्मरणम् ३ ।

तदनु गुणानां कीर्तनं ४ मुद्वेगश्च ५ प्रलापश्च ६ उन्माद ७ स्तदनु ततो व्याधि ८ र्जडता ९ ततस्ततो मरणम् १० ॥१॥" इति।

विषयामाप्तौ रोगोत्पत्तिरत्यासक्तावपि राजयक्ष्मादिरोगोत्पत्तिः स्यादिति शारीररोगोत्पत्तिकारणान्युक्तान्यथान्तररोगकारणभूत-कर्मविशेषभेदाभिधानायाह—

णवविधे दरिसणावरणिज्जे कम्मे पं० तं—निद्दा निद्दानिद्दा पयला पयलापयला थीणगिद्धी चक्खुदंसणावरणे अचक्खुदंसणावरणे अवधिदंसणावरणे केवलदंसणावरणे (सू० ६६८) अभिती णं णक्खत्ते सातिरेगे नव मुहुत्ते चंदेण सद्धिं जोगं जोतेति, अभीतिआतिआ णं णवनक्खत्ता णं चंदस्स उत्तरेणं जोगं जोतेंति, तं०—अभीनी सवणो धणिट्ठा जाव भरणी (६६९) इमीसे णं रयणप्पभाते पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ णवजोअणसताइं उद्धं अबाहाते उवरिल्ले ताराख्वे चारं चरति (सू० ६७०) जंबूदीवे णं दीवे णवजोयणिआ मच्छा पविसिंसु वा पविसंति वा पविसिस्संति वा (सू० ६७१) जंबुद्दीवे दीवे भारहे वासे इमीसे ओसप्पिणीते नव बलदेववासुदेवपियरो हुत्था तं०—पयावती त बंभे य, रोद्दे सोमे सिवेतिता। महासीहे अग्गिसीहे, दसरह नवमे य वसुदेवे ॥१॥ इत्तो आढत्तं जधा समवाये निरवसेसं जाव एगा से गब्भवसही सिज्झिस्सति आगमेस्सेणं। जंबुद्दीवे दीवे भारहे वासे आगमेस्साए उस्सप्पिणीते नव बलदेववासुदेवपितरो भविस्संति, नव बलदेव० मायरो भविस्संति एवं जधा समवाते निरवसेसं जाव महाभीमसेण सुग्गीवे य अपच्छिमे। एए खलु

पडिसत्तू कित्तीपुरिसाण वासुदेवाणं। सव्वेवि चक्कजोही हम्मेहंती सचक्केहिं ॥१॥ (सू० ६७२)

'नवे'त्यादि, सामान्यविशेषात्मके वस्तुनि सामान्यग्रहणात्मको बोधो दर्शनं तस्यावरणस्वभावं कर्म दर्शनावरणं तत् नवविधं, तत्र निद्रापञ्चकं तावत् 'द्रा कुत्सायां गतौ' नियतं द्राति–कुत्सितत्वमविस्पष्टत्वं गच्छति चैतन्यमनयेति निद्रा–सुखप्रबोधा स्वापावस्था नखच्छोटिकामात्रेणापि यत्र प्रबोधो भवति तद्विपाकवेद्या कर्म्मप्रकृतिरपि निद्रेति कार्येण व्यपदिश्यते, तथा निद्रातिशायिनी निद्रा निद्रानिद्रा शाकपार्थिवादित्वात् मध्यमपदलोपी समासः, सा पुनर्दुःखप्रबोधा स्वापावस्था, तस्यां ह्यत्यर्थमस्फुटतरीभूतचैतन्यत्वाद्दुःखेन बहुभिर्घोलनादिभिः प्रबोधो भवत्यतः सुखप्रबोधनिद्रापेक्षया अस्या अतिशायिनीत्वं तद्विपाकवेद्या कर्म्मप्रकृतिरपि कार्यद्वारेण निद्रा-निद्रेत्युच्यते, उपविष्ट ऊर्ध्वस्थितो वा प्रचलत्यस्यां स्वापावस्थायामिति प्रचला, सा ह्युपविष्टस्योर्ध्वस्थितस्य वा घूर्णमानस्य स्वप्तुर्भवति, तथाविधविपाकवेद्या कर्म्मप्रकृतिरपि प्रचलेति उच्यते, तथैव प्रचलातिशायिनी प्रचला प्रचलाप्रचला, सा हि चंक्रमणादि कुर्वतः स्व-प्तुर्भवत्यतः स्थानस्थितस्वप्तृभवां प्रचलामपेक्ष्यातिशायिनी तद्विपाका कर्म्मप्रकृतिरपि प्रचलाप्रचला, स्त्याना–बहुत्वेन सङ्घातमापन्ना गृद्धिः–अभिकाङ्क्षा जाग्रदवस्थाऽध्यवसितार्थसाधनविषया यस्यां स्वापावस्थायां सा स्त्यानगृद्धिः, तस्यां हि सत्यां जाग्रदवस्थाध्यवसि-तमर्थमुत्थाय साधयति स्त्याना वा–पिण्डीभूता ऋद्धिः–आत्मशक्तिरूपाऽस्यामिति स्त्यानर्द्धिरित्यप्युच्यते, तद्भावे हि स्वप्तुः केशवार्द्ध-बलसदृशी शक्तिर्भवति, अथवा स्त्याना–जडीभूता चैतन्यर्द्धिरस्यामिति स्त्यानर्द्धिरिति, तादृशविपाकवेद्या कर्म्मप्रकृतिरपि स्त्यानर्द्धिः स्त्यानगृद्धिरिति वा, तदेवं निद्रापञ्चकं दर्शनावरणक्षयोपशमाल्लब्धात्मलाभानां दर्शनलब्धीनामावारकमुक्तमधुना यद्दर्शनलब्धीनां मूलत एव लाभमावृणोति तदिदं दर्शनावरणचतुष्कमुच्यते, चक्षुषा दर्शनं–सामान्यग्राही बोधश्चक्षुर्दर्शनं तस्यावरणं चक्षुर्दर्शनावरणं, अचक्षुषा–

चक्षुर्वर्जेन्द्रियचतुष्टयेन मनसा वा यद्दर्शनं तदचक्षुर्दर्शनं तस्यावरणमचक्षुर्दर्शनावरणं, अवधिना—रूपिमर्यादया अवधिरेव वा करणनिरपेक्षो बोधरूपो दर्शनं—सामान्यार्थग्रहणमवधिदर्शनं तस्यावरणमवधिदर्शनावरणं, तथा केवलं—उक्तस्वरूपं तच्च तद्दर्शनं च तस्यावरणं केवलदर्शनावरणमित्युक्तं नवविधं दर्शनावरणं । जीवानां कर्म्मणः सकाशान्नक्षत्रादिदेवत्वं तिर्यक्त्वं मानुषत्वं च भवतीति नक्षत्रादिवक्तव्यताप्रतिबद्धं सूत्रवृन्दं 'अभीत्यादि 'हम्मिहंति सचक्केहिं' इत्येतदन्तमाह सुगमं च, नवरं 'साइरेग'त्ति सातिरेकान्नव मुहूर्त्तान् यावच्चतुर्विंशत्या मुहूर्त्तस्य द्विषष्टिभागैः षट्षष्ट्या च द्विषष्टिभागस्य सप्तषष्टिभागानामिति, 'उत्तरेण जोगं'ति उत्तरस्यां दिशि स्थितानि, दक्षिणाशास्थितचन्द्रेण सह योगमनुभवन्तीति भावः, 'बहुसमरमणिज्जाउ'त्ति अत्यन्तसमो बहुसमोऽत एव रमणीयो रम्यस्तस्माद् भूमिभागान् न पर्वतापेक्षया नापि श्वभ्रापेक्षयेति भावः, 'आबाधाए'त्ति अन्तरे कृत्वेति वाक्यशेषः, 'उवरिल्ले'ति उपरितनं तारारूपं—तारकजातीयं 'चारं' भ्रमणं 'चरति' आचरति, 'नवजोयणिय'त्ति नव योजनायामा एव प्रविशन्ति, लवणसमुद्रे यद्यपि पञ्चशतयोजनायामा मत्स्या भवन्ति तथापि नदीमुखेषु जगतीरन्ध्रौचित्येनैतावतामेव प्रवेश इति, लोकानुभावो वाऽयमिति, 'पयावई'त्यदं श्लोकस्योत्तरं तु गाथापश्चार्द्धमिति, संक्षेपायातिदिशन्नाह—'एत्तो'त्ति इतः सूत्रादारब्धं 'जहा समवाए'त्ति समवाये चतुर्थांगे यथा तथा निरवशेषं ज्ञेयं, तच्चार्थत इदं—नव वासुदेवबलदेवानां मातापितरस्तेषामेव नामानि—पूर्वभवनामानि धर्माचार्या निदानभूमयो—निदानकारणानि प्रतिशत्रवो गतयश्चेति, किमन्तमेतदित्याह—'जाव एक्का' इत्यादि गाथापश्चार्द्धं पूर्वार्द्ध त्विदमस्याः—'अट्ठंतकडा रामा इक्को पुण बंभलोयकप्पंमि'त्ति । सिज्झिस्सइ आगमिस्सेणं'ति आगमिष्यति काले सेत्स्यति णमिति वाक्यालङ्कारे तृतीया वेयमिति, तथा 'जंबूदीवे' त्यादावागाम्युत्सर्प्पिणीसूत्रे 'एवं जहा समवाए'इत्याद्यतिदेशवचनमेवमेव भावनीयं यावत्प्रति-

वासुदेवछत्रं महाभीमसेनः सुग्रीवश्चापश्चिम इत्येतदन्तं, तथा 'एते गाहा'एते अनन्तरोदिता नव प्रतिशत्रवः 'कित्तीपुरिसाण'त्ति कीर्त्तिप्रधानाः पुरुषाः कीर्त्तिपुरुषास्तेषां, 'चक्कजोहि'त्ति चक्रेण योद्धुं शीलं येषां ते चक्रयोधिनः 'हंमीहंति'त्ति हनिष्यन्ते स्वचक्रैरिति॥

इह महापुरुषाधिकारे महापुरुषाणां चक्रवर्त्तिनां सम्बन्धिनिधिप्रकरणमाह—

एगमेगे णं महानिधी णं णव णव जोयणाइं विक्खंभेणं पण्णत्ते एगमेगस्स णं रन्नो चाउरंतचक्कवट्टिस्स नव महानिहओ पं० तं०—"णेसप्पे १ पंडुयए २ पिंगलते ३ सव्वरयण ४ महापउमे ५। काले य ६ महाकाले ७ माणवग ८ महानिही संखे ९ ॥१॥ णेसप्पंमि निवेसा गामागरनगरपट्टणाणं च। दोणमुहमडंबाणं खंधाराणं गिहाणं च ॥२॥ गणियस्स य बीयाणं माणुम्माणुस्स जं पमाणं च। धन्नस्स य बीयाणं उप्पत्ती पंडुते भणिया ॥३॥ सव्वा आभरणविही पुरिसाणं जा य होइ महिलाणं। आसाण य हत्थीण य पिंगलगनिहिंमि सा भणिया ॥४॥ रयणाइं सव्वरयणे चोद्दस पवराइं चक्कवट्टिस्स। उप्पज्जंति एगिंदियाइं पंचिंदियाइं च ॥५॥ वत्थाण य उप्पत्ती निप्पत्ती चेव सव्वभत्तीणं। रंगाण य धोयाण य सव्वा एसा महापउमे ॥६॥ काणे कालण्णाणं भव्वपुराणं च तीसु वासेसु। सिप्पसतं कम्माणि य तिन्नि पयाए हियकराइं ॥७॥ लोहस्स य उप्पत्ती होइ महाकालि आगराणं च। रुप्पस्स सुवन्नस्स य मणिमोत्तिसिलप्पवालाणं ॥८॥ जोधाण य उप्पत्ती आवरणाणं च पहरणाणं च। सव्वा य जुद्धनीती माणवते दंडनीती य ॥९॥ नट्टविही नाडगविही कव्वस्स चउव्विहस्स उप्पत्ती।

संखे महानिहिम्मी तुडियंगाणं च सव्वेसिं ॥१०॥ चक्कट्ठपइट्ठाणा अट्ठुस्सेहा य नव य विक्खंभे। बारसदीहा मंजूससंठियगा जह्नवीई मुहे ॥११॥ वेरुलियमणिकवाडा कणगमया विविधरयणपडिपुन्ना। ससिसूरचक्कलक्खण-अणुसमजुगबाहुवतणा त ॥१२॥ पलिओवमट्ठितीया णिहिसरिणामा य तेसु खलु देवा। जेसिं ते आवासा अक्किज्जा आहिवचा वा ॥१३॥ एए ते नवनिहओ पभूतधणरयणसंचयसमिद्धा। जे वसमुवगच्छंती सव्वेसिं चक्कवट्टीणं ॥१४॥ (सू० ६७३)

'एगमेगे' त्यादि सुगमं, नवरं ''नेसप्पे १ पंडुयए २ पिंगले ३ सव्वरयण ४ महापउमे ५। काले अ ६ महाकाले ७ माणवगमहानिही ८ संखे ९ ॥ १॥'' [नैसर्पः पाण्डुकः पिंगलः सर्वरत्नः महापद्मः कालश्च महाकालः माणवकः शंख इति नव महानिधयः ॥१॥] 'नेसप्पंमि'गाहा, इह निधानतन्नायकदेवयोरभेदविवक्षया नैसर्पो देवस्तस्मिन् सति तत इत्यर्थः, निवेशाः-स्थापनानि अभिनवग्रामादीनामिति, अथवा चक्रवर्त्तिराज्योपयोगीनि द्रव्याणि सर्वाण्यपि नवसु निधिष्ववतरन्ति, नव निधानतया व्यवह्रियन्त इत्यर्थः, तत्र ग्रामादीनामभिनवानां पुरातनानां च ये सन्निवेशा-निवेशनानि ते नैसर्प्पनिधौ वर्त्तन्ते, नैसर्प्पनिधितया व्यवह्रियन्त इति भावः, तत्र ग्रामो-जनपदप्रायलोकाधिष्ठितः आकरो-यत्र सन्निवेशे लवणाद्युत्पद्यते, न करो यत्रास्ति तन्नकरं पत्तनं-देशीस्थानं द्रोणमुखं-जलपथस्थलपथयुक्तं मडंबं-अविद्यमानप्रत्यासन्नवसिमं स्कन्धावारः-कटकनिवेशो गृहं-भवनमिति १। 'गणित'गाहा, गणितस्य-दीनारादिपूगफलादिलक्षणस्य, चकारस्य व्यवहितः सम्बन्धः स च दर्शयिष्यते, तथा बीजानां-तन्निबन्धनभूतानां तथा मानं सेतिकादि तद्विषयं यत्तदपि मानमेव धान्यादि मेयमिति भावः, तथोन्मानं-तुलाकर्षादि तद्विषयं यत्तदप्युन्मानं खण्डगुडादि धरिम-

मित्यर्थः, ततो द्वन्द्वसमाहारः कायस्ततस्तस्य च, किमित्याह–यत्प्रमाणं, चकारो व्यवहितसम्बन्ध एव, तथैव दर्शयिष्यते, तत्पाण्डुके भणितमिति लिङ्गपरिणामेन सम्बन्धः, तथा धान्यस्य–व्रीह्यादेर्बीजानां च–तद्विशेषाणामुत्पत्तिश्च या सा पाण्डुके–पाण्डुकनिधिविषया, तद्व्यापारोऽयमिति भावो, भणिता–उक्ता जिनादिभिरिति २। 'सव्वा' गाहा कण्ठ्या ३। 'रयण'गाहा, अक्षरघटनैवं–रत्नान्येकेन्द्रियाणि चक्रादीनि सप्त पञ्चेन्द्रियाणि सेनापत्यादीनि सप्त उत्पद्यन्ते –भवन्ति यानि चक्रवर्त्तिनस्तानि सर्वाणि 'सर्वरत्ने' सर्वरत्ननामनि निधौ द्रष्टव्यानीति ४। 'वत्थाणं'गाहा, वस्त्राणां–वाससां योत्पत्तिः सामान्यतो या च विशेषतो निष्पत्तिः–सिद्धिः सर्वभक्तीनां–सर्ववस्त्रप्रकाराणां सर्वा वा भक्तयः–प्रकारा येषां तानि तथा तेषां, किंभूतानां वस्त्राणामित्याह–रङ्गाणां–रङ्गवतां रक्तानामित्यर्थः, धौतानां–शुद्धस्वरूपाणां, सर्वैवैषा महापद्मे–महापद्मनिधिविषया ५। 'काले'गाहा, 'काले' कालनामनि निधौ 'कालज्ञानं' कालस्य शुभाशुभरूपस्य ज्ञानं वर्त्तते, ततो ज्ञायत इत्यर्थः, किम्भूतमित्याह–भाविवस्तुविषयं भव्यं पुरातनवस्तुविषयं पुराणं, चशब्दाद् वर्त्तमानवस्तुविषयं वर्त्तमानं, 'तीसु वासेसु'त्ति अनागतवर्षत्रयविषयमतीतवर्षत्रयविषयं चेति, तथा शिल्पशतं कालनिधौ वर्त्तते, शिल्पशतं च घट १ लोह २ चित्र ३ वस्त्र ४ नापित ५ शिल्पानां प्रत्येकं विंशतिभेदत्वादिति, तथा कर्माणि च कृषिवाणिज्यादीनि कालनिधाविति प्रक्रमः, एतानि च त्रीणि कालज्ञानशिल्पकर्म्माणि प्रजायाः–लोकस्य हितकराणि निर्वाहाभ्युदयहेतुत्वेनेति ६। 'लोह' गाहा, लोहस्य चोत्पत्तिर्महाकाले निधौ भवति–वर्त्तते, तथा आकराणां च लोहादिसत्कानामुत्पत्तिराकरीकरणलक्षणा, एवं रूप्यादीनामुत्पत्तिः सम्बन्धनीया केवलं मणयः–चन्द्रकान्तादयः मुक्ता–मुक्ताफलानि शिलाः–स्फटिकादिकाः प्रवालानि–विद्रुमाणीति ७।'जो'गाहा योधानां–शूरपुरुषाणां योत्पत्तिरावरणानां–सन्नाहानां प्रहरणानां–खड्गादीनां सा युद्धनीतिश्च–व्यूहरचनादिलक्षणा माणवके निधौ

निधिनायके वा भवति, ततः प्रवर्त्तत इति भावः, दण्डेनोपलक्षिता नीतिर्दण्डनीतिश्च—सामादिश्चतुर्विधा, अत एवोक्तमावश्यके—'सेगा उ दंडनीई माणवगनिहीउ होइ भरहस्स'त्ति ८। 'नट्ट'गाहा, नाट्यं—नृत्यम्, तद्विधिः—तत्करणप्रकारः, नाटकं—चरितानुसारि नाटकलक्षणोपेतं तद्विधिश्च, इह पदद्वये द्वन्द्वः तथा काव्यस्य चतुर्विधस्य धर्मार्थकाममोक्षलक्षणपुरुषार्थप्रतिबद्धग्रन्थस्य १ अथवा संस्कृतप्राकृतापभ्रंशसङ्कीर्णभाषानिबद्धस्य २ अथवा समविषमार्द्धसमवृत्तबद्धतया गद्यतया चेति ३ अथवा गद्यपद्यगेयवर्णपदभेदबद्धस्येति उत्पत्तिः—प्रभवः शङ्खे महानिधौ भवति, तथा तूर्याङ्गाणां च—मृदङ्गादीनां सर्वेषामिति ९। 'चक्क'गाहा, चक्रेष्वष्टासु प्रतिष्ठानं प्रतिष्ठा—अवस्थानं येषां ते तथा, अष्टौ योजनान्युत्सेधः—उच्छ्रयो येषां ते तथा, नव योजनानीति गम्यते विष्कम्भे—विस्तरे निधय इति शेषः, द्वादशयोजनानि दीर्घा मञ्जूषाः—प्रतीताः तत्संस्थिताः—तत्संस्थानाः, जाह्नव्याः—गङ्गाया मुखे भवन्तीति। 'वेरुलिय'गाहा, वैडूर्यमणिमयानि कपाटानि येषां ते तथा, मयशब्दस्य वृत्त्या उक्तार्थतेति, कनकमयाः—सौवर्णा विविधरत्नप्रतिपूर्णाः प्रतीतं शशिसूरचक्राकाराणि लक्षणानि—चिह्नानि येषां ते तथा अनुसमाः—अनुरूपा अविषमाः 'जुग'त्ति यूपः तदाकारा वृत्तत्वाद्दीर्घत्वाच्च बाहवो—द्वारशाखा वदनेषु—मुखेषु येषां ते तथा ततः पदत्रयस्य कर्मधारये शशिसूरचक्रलक्षणानुसमयुगबाहुवदना इति, चः समुच्चये। 'पलि'गाहा, 'निहिसरिनाम'त्ति निधिभिः सदृक्—सदृक्षं नाम येषां देवानां ते तथा, येषां देवानां ते निधयः आवासाः, किम्भूताः?—'अक्केया' अक्रयणीयाः, सर्वदैव तत्सम्बन्धित्वात्, आधिपत्यं च—स्वामिता च तेषु येषां देवानामिति प्रक्रमः, 'एते ते'गाहा, कण्ठ्या।

अनन्तरं चित्तविकृतिविगतिहेतवो निधय उक्ताः अधुना तथाविधा एव विकृतीः प्रतिपादयन्नाह—

णव विगतीतो पं० तं०—खीरं दधिं णवणीतं सप्पिं तेलं गुलो महुं मज्जं मंसं (सू० ६७४) णवसोतपरिस्सवा बोंदी पण्णत्ता, तं०—दो सोत्ता दो णेत्ता दो घाणा मुहं पोसे पाऊ (सू० ६७५) णवविधे पुन्ने पं० तं०—अन्नपुन्ने १ पाणपुण्णे २ वत्थपुन्ने ३ लेणपुण्णे ४ सयणपुन्ने ५ मणपुन्ने ६ वतिपुण्णे ७ कायपुण्णे ८ नमोक्कारपुण्णे ९ (सू० ६७६) णव पावस्सायतणा पं० तं०—पाणातिवाते मुसावाते जाव परिग्गहे कोहे माणे माया लोभे (सू० ६७७) नवविधे पावसुयपसंगे पं० तं०—उप्पाते १ निमित्ते २ मंते ३ आतिक्खते ४ तिगिच्छते ५। कला ३ आवरणे ७ ऽन्नाणे ८ मिच्छापावतणेति त ९॥१॥ (सू० ६७८)

'नव विगईओ' इत्यादि गतार्थं तथाप्युच्यते किञ्चित्—'विगईओ'त्ति विकृतयो विकारकारित्वात्, पक्कान्नं तु कदाचिदविकृतिरपि तेनैता नव, अन्यथा तु दशापि भवन्तीति, तथाहि—"एक्केण चेव तवओ पूरिज्जइ पूयएण जो ताओ। बिईओऽवि स पुण कप्पइ निव्विगईअ लेवडो नवरं ॥१॥" इति [ एकेन चैव तपकः पूर्यतेऽपूपेन यस्ततो द्वितीयोऽपि स पुनः कल्पते निर्विकृतिकस्य लेपकृत् नवरं ॥१॥ ] (द्वितीयोऽपि विकृतिर्न भवतीति भावः) तत्र क्षीरं पञ्चधा–अजैडकागोमहिष्युष्ट्रीभेदात्, दधिनवनीतघृतानि चतुर्द्धैवोष्ट्रीणां तदभावात्, तैलं चतुर्द्धा–तिलातसीकुसुम्भसर्षपभेदात्, गुडो द्विधा–द्रवपिण्डभेदात्, मधु त्रिधा–माक्षिककौन्तिकभ्रामरभेदात्, मद्यं द्विधा–काष्ठपिष्टभेदात्, मांसं त्रिधा–जलस्थलाकाशचरभेदादिति। विकृतयश्चोपचयहेतवः शरीरस्येति तस्यैव स्वरूपमाह—'नवे'त्यादि, नवभिः श्रोतोभिः–छिद्रैः परिश्रवति–मलं क्षरतीति नवश्रोतःपरिश्रवा बोन्दी–शरीरमौदारिकमेवैवंविधं द्वे श्रोत्रे–कर्णौ नेत्रे–नयने घ्राणे–नासिके मुखं–आस्यं पोसएत्ति–उपस्था पायुः–अपानमिति। एवंविधेनापि शरीरेण पुण्यमुपादीयत इति

पुण्यभेदानाह—'पुन्ने'त्यादि, पात्रायात्रदानाद् यस्तीर्थकरनामादिपुण्यप्रकृतिबन्धस्तदन्नपुण्यमेवं सर्वत्र, नवरं 'लेणं'ति लयनं-गृहम्, शयनं-संस्तारको मनसा गुणिषु तोषात् वाचा प्रशंसनात् कायेन पर्युपासनान्नमस्काराच्च यत्पुण्यं तन्मनःपुण्यादीनि, उक्तं च—"अन्नं पानं च वस्त्रं च, आलयः शयनासनम्। शुश्रूषा वन्दनं तुष्टिः, पुण्यं नवविधं स्मृतम् ॥१॥" इति। पुण्यविपर्यासरूपस्य पापस्य कारणान्याह—'नव पावस्से'त्यादि कण्ठ्यं, नवरं पापस्य-अशुभप्रकृतिरूपस्यायतनानि-बन्धहेतव इति। पापहेत्वधिकारात् पापश्रुतसूत्रं, कण्ठ्यम्, नवरं पापोपादानहेतुः श्रुतं-शास्त्रं पापश्रुतं तत्र प्रसङ्गः-तथाऽऽसेवारूपः विस्तरो वा-सूत्रवृत्तिवार्त्तिकरूपः पापश्रुतप्रसङ्गः, 'उप्पाए'त्ति लोगो तओरातः-प्रकृतिविकाररूपः सहजरुधिरवृष्ट्यादि तत्प्रतिपादनपरं शास्त्रमपि तथा राष्ट्रोत्पातादि, तथा निमित्तं-अतीतादिपरिज्ञानोपायशास्त्रं कूटपर्वतादि २ मन्तो-मन्त्रशास्त्रं जीवोद्धरणगारुडादि ३ 'आइक्खिए'त्ति मातङ्गविद्या यदुपदेशादतीतादि कथयन्ति डोण्डगो बधिरा इति लोकप्रतीताः ४ चैकित्सिकं-आयुर्वेदः ५ कला-लेखाद्याः गणितप्रधानाः शकुनरुतपर्यवसाना द्वासप्ततिलक्षणशास्त्राण्यपि तथा ६ आव्रियते आकाशमनेनेत्यावरणं-भवनप्रासादनगरादि तल्लक्षणशास्त्रमपि तथा वास्तुविद्येत्यर्थः ७ अज्ञानं-लौकिकश्रुतं भारतकाव्यनाटकादि ८ मिथ्याप्रवचनं-शाक्यादितीर्थिकशासनमिति ९ एतच्च सर्वमपि पापश्रुतं संयतेन पुष्टालम्बनेनासेव्यमानमपापश्रुतमेवेति, इतिरेवंप्रकारे, चः समुच्चये ॥

उत्पातादिश्रुतवन्तश्च निपुणा भवन्तीति निपुणपुरुषाभिधानायाह—

नव णेउणिता वत्थू पं० तं०—संखाणे निमित्ते कानिते पोराणे पारिहत्थिते परपंडिते वातिते भूतिकम्मे

तिगिच्छते (सू० ६७९) समणस्स णं भगवतो महावीरस्स णव गणा हुत्था, तं०—गोदासे गणे उत्तरबलिस्सहगणे उद्देहगणे चारणगणे उद्वातितगणे विस्सवातितगणे कामड्ढितगणे माणवगणे कोडितगणे ९ (सू० ६८०) समणेणं भगवता महावीरेणं समणाणं णिग्गंथाणं णवकोडिपरिसुद्धे भिक्खे पं० तं०—ण हणइ ण हणावइ हणंतं णाणुजाणइ ण पतति ण पतावेति पतंतं णाणुजाणति ण किणति ण कितावेति किणंतं णाणुजाणति (सू० ६८१)

'नव निउणे'त्यादि, निपुणं—सूक्ष्मं ज्ञानं तेन चरन्तीति नैपुणिकाः निपुणा एव वा नैपुणिकाः 'वत्थु'त्ति आचार्यादिपुरुषवस्तूनि पुरुषा इत्यर्थः, 'संखाणे' सिलोगो, संख्यानं—गणितं तद्योगात्पुरुषोऽपि तथा, संख्याने वा विषये निपुण इति, एवमन्यत्रापि, नवरं निमित्तं—चूडामणिप्रभृति कायिकं—शारीरिकम् इडापिङ्गलादि प्राणतत्त्वमित्यर्थः, पुराणो—वृद्धः, स च चिरजीवित्वाद् दृष्टबहुविधव्यतिकरत्वान्नैपुणिक इति पुराणं वा—शास्त्रविशेषः तज्ज्ञो निपुणप्रायो भवति, 'पारिहत्थिए'त्ति प्रकृत्यैव दक्षः सर्वप्रयोजनानामकालहीनतया कर्त्तेति, तथा परः—प्रकृष्टः पण्डितः परपण्डितो—बहुशास्त्रज्ञः परो वा—मित्रादिः पण्डितो यस्य स तथा, सोऽपि निपुणसंसर्गान्निपुणो भवति, वैद्यकृष्णकवदिति, वादी—वादलब्धिसम्पन्नो यः परेण न जीयते मन्त्रवादी वा धातुवादी वेति, ज्वरादिरक्षानिमित्तं भूतिदानं भूतिकर्म्म तत्र निपुणः, तथा चिकित्सिते निपुणः, अथवा अनुप्रवादाभिधानस्य नवमपूर्वस्य नैपुणिकानि वस्तूनि—अध्ययनविशेषा एवेति। एते च नैपुणिकाः साधवो गणान्तर्भाविनो भवन्तीति गणसूत्रं—'समणस्से'त्यादि सूत्रं कण्ठ्यं, नवरं गणाः—एकक्रियावाचनानां साधूनां समुदायाः, गोदासादीनि च तन्नामानीति। उक्तगणवर्तिनां च साधूनां यद्भगवता प्रज्ञप्तं तदाह—'समणेण'मित्यादि, नवभिः कोटिभिः—विभागैः परिशुद्धं—निर्दोषं नवकोटिपरिशुद्धं भिक्षाणां समूहो भैक्षं प्रज्ञप्तं, तद्यथा—न हन्ति साधुः

स्वयमेव गोधूमादिदलनेन न घातयति परेण गृहस्थादिना घ्नन्तं न-नैव अनुजानाति अनुमोदनेन तस्य वा दीयमानस्याप्रतिषेधनेन 'अप्रतिषिद्धमनुमत'मिति वचनात् हननप्रसङ्गजननाच्चेति, आह च—"कामं सयं न कुव्वइ जाणंतो पुण तहवि तग्गाही। वड्ढेइ तप्पसंगं अगिण्हमाणो उ वारेइ ॥१॥" इति [कामं न करोतीति सत्यं तथापि जानानस्तद्ग्राही पुनस्तत्प्रसंगं वर्धयति अगृह्णानस्तु वारयति ॥१॥] तथा हतं-पिष्टं सत् गोधूमादि मुद्गादि वा अहतमपि सन्न पचति स्वयं, शेषं प्राग्वत्, सुगमं च, इह चाद्याः षट् कोट्योऽविशोधिकोटयामवतरन्ति आधाकर्मादिरूपत्वात् अन्त्यास्तु तिस्रो विशोधिकोटयामिति, उक्तं च—"सा नवहा दुह कीरइ उग्गमकोडी विसोहिकोडी य। छसु पढमा ओयरई कीयतियंमी विसोही उ ॥१॥" इति [सा नवविधा कोटी द्विधा क्रियते उद्गमकोटिर्विशोधिकोटिश्च। षट्सु प्रथमावतरति क्रीतत्रिके विशोधिरेव ॥१॥]

नवकोटीशुद्धाहारग्राहिणां कथञ्चिन्निर्वाणाभावे देवगतिर्भवत्येवेति देवगतिगतवस्तुस्तोममभिधित्सुः 'ईसाणस्से' त्यादि सूत्रनवकमाह—

ईसाणस्स णं देविंदस्स देवरण्णो वरुणस्स महारन्नो णव अग्गमहिसीओ पं० (सू० ६८२) ईसाणस्स णं देविंदस्स देवरण्णो अग्गमहिसीणं णव पलिओवमाइं ठिती पं०, ईसाणे कप्पे उक्कोसेणं देवीणं णव पलिओवमाइं ठिती पं० (सू० ६८३) नव देवनिकाया पं० तं०—"सारस्सयमाइच्चा वण्ही वरुणा य गद्दतोया य। तुसिया अव्वाबाहा अग्गिचा चेव रिट्ठा य ॥१॥" अव्वाबाहाणं देवाणं नव देवा नव देवसया पं० एवं अग्गिचावि, एवं रिट्ठावि

(सू० ६८४) णव गेवेज्जविमाणपत्थडा पं० तं०—हेट्ठिमहेट्ठिमगेविज्जविमाणपत्थडे हेट्ठिममज्झिमगेविज्जविमाणपत्थडे हेट्ठिमउवरिमगेविज्जविमाणपत्थडे मज्झिमहेट्ठिमगेविज्जविमाणपत्थडे मज्झिममज्झिमगेविज्जविमाणपत्थडे मज्झिमउवरिमगेविज्जविमाणपत्थडे उवरिमहेट्ठिमगेवे० उवरिममज्झिम० उवरिम२गेविज्जविमाणपत्थडे, एतेसि णं णवण्हं गेविज्जविमाणपत्थडाणं णव नामधिज्जा पं० तं०—भद्दे सुभद्दे सुजाते सोमणसे पितदरिसणे। सुदंसणे अमोहे य सुप्पवुद्धे जसोधरे ॥१॥ (सू० ६८५)

सुगमं चेदम्, नवरं 'नव पलिओवमाइं'ति नवैव, तासां सपरिग्रहत्वाद्, उक्तं च—"सपरिग्गहेयराण सोहंमीसाण पलिय १ साहीयं २। उक्कोस सत्त पन्ना नव पणपन्ना य देवीणं ॥१॥" इति [सौधर्मेशानयोः सपरिग्रहाणां इतरासां च देवीनां पल्यमधिकं च उत्कृष्टं सप्त पञ्चाशत् नव पञ्चपञ्चाशच्च ॥१॥] 'सारस्सय' गाहा सारस्वताः १ आदित्या २ वह्नयः ३ वरुणा ४ गर्द्दतोयाः ५ तुषिता ६ अव्याबाधा ७ आग्नेयाः ८, एते कृष्णराज्यन्तरेष्वष्टासु परिवसन्ति, रिष्टास्तु कृष्णराजिमध्यभागवर्तिनि रिष्टाभविमानप्रस्तटे परिवसन्तीति॥

अनन्तरं ग्रैवेयकविमानानि उक्तानि, तद्वासिनश्चायुष्मन्तो भवन्तीत्यायुःपरिमाणभेदानाह—

नवविहे आउपरिणामे पं० तं०—गतिपरिणामे गतिबंधणपरिणामे ठिइपरिणामे ठितिबंधणपरिणामे उड्ढंगारवपरिणामे अहेगारवपरिणामे तिरितंगारवपरिणामे दीहंगारवपरिणामे रहस्संगारवपरिणामे (सू०६८६) णवणव-

मिना णं भिक्खुपडिमा एगासीते राइंदिएहिं चउहि य पंचुत्तरेहिं भिक्खासतेहिं अधासुत्ता जाव आराहिता यावि भवति (सू० ६८७) णवविधे पायच्छित्ते पं० तं० —आलोयणारिहे जाव मूलारिहे अणवठप्पारिहे (सू० ६८८)

'नवविहे'त्यादि, 'आउपरिणामे'त्ति आयुषः—कर्मप्रकृतिविशेषस्य परिणामः—स्वभावः शक्तिः धर्म्म इत्यायुःपरिणामः, तत्र गतिर्नारकादिका तां नियतां येन स्वभावेनायुर्जीवं प्रापयति स आयुषो गतिपरिणामः १, तथा येनायुःस्वभावेन प्रतिनियतगतिकर्म्मबन्धो भवति यथा नारकायुःस्वभावेन मनुष्यतिर्यग्गतिनामकर्म बध्नाति न देवनरकगतिनामकर्म्मेति स गतिबन्धनपरिणामः २, तथा आयुषो या अन्तर्मुहूर्त्तादित्रयस्त्रिंशत्सागरोपमान्ता स्थितिर्भवति सा स्थितिपरिणामः ३, तथा येन पूर्वभवायुःपरिणामेन परभवायुषो नियतां स्थितिं बध्नाति स स्थितिबन्धनपरिणामः, यथा तिर्यगायुःपरिणामेन देवायुष उत्कृष्टतोऽप्यष्टादश सागरोपमाणीति ४ तथा येनायुःस्वभावेन जीवस्योर्ध्वदिशि गमनशक्तिलक्षणः परिणामो भवति स ऊर्ध्वगौरवपरिणामः, इह गौरवशब्दो गमनपर्यायः ५, एवमितरौ द्वावपि ६-७, तथा यन आयुःस्वभावाज्जीवस्य दीर्घं—दीर्घगमनतया लोकान्तात् लोकान्तं यावद् गमनशक्तिर्भवति स दीर्घगौरवपरिणामः ८, एवं च यस्माद् ह्रस्वं गमनं स ह्रस्वगौरवपरिणामः, सर्वत्र प्राकृतत्वादनुस्वार इति, अन्यथाऽप्यूह्यमेतदिति ९ ॥ अनन्तरमायुःपरिणाम उक्तः, तत्रैव चायुःपरिणामविशेषे सति तपःशक्तिर्भवतीति तपोविशेषाभिधानायाह—'नवनवमिए'त्यादि कण्ठ्यं, नवरं नव नवमानि दिनानि यस्यां सा नवनवमिका नवनवमानि च भवन्ति नवसु नवकेष्विति तत्परिमाणेयमिति, नव च नवकान्येकाशीतिरिति कृत्वा एकाशीत्या रात्रिन्दिवैः—अहोरात्रैर्भवति, तथा प्रथमनवके प्रतिदिनमेका दत्तिः पानकस्य भोजनस्य चेत्येवमेकोत्तरया वृद्ध्या नवमे नवके नव नव दत्तयः, ततश्च सर्वसङ्कलनया चतुर्भिश्च पञ्चोत्तरैर्भिक्षाशतैर्यथासूत्रं यथाकल्पं यथामार्गं यथातत्त्वं स-

म्यकायेन स्पृष्टा पालिता शोभिता तीरिता कीर्त्तिता आराधिता चापि भवतीति । इयं च जन्मान्तरकृतपापकर्म्मप्रायश्चित्तमिति प्रायश्चित्तनिरूपणसूत्रं, तच्च गतार्थमिति ।

प्रायश्चित्तं च भरतादिक्षेत्रेष्वेवेति तद्गतवस्तुविशेषप्रतिपादनाय 'जंबूदीवेत्यादि एरवए कूडनामाइं' इत्येतदन्तं सूत्रप्रपञ्चमाह—

जंबूमंदरदाहिणेणं भरहे दीहवेतड्ढे नव कूडा पं० तं०—सिद्धे १ भरहे २ खंडग ३ माणी ४ वेयड्ढ ५ पुन्न ६ तिमिसगुहा ७। भरहे ८ वेसमणे ९ या भरहे कूडाण णामाइं ॥१॥ जंबूमंदिरदाहिणेणं निसभे वासहरपव्वते णव कूडा पं० तं०—सिद्धे १ निसहे २ हरिवास ३ विदेह ४ हरि ५ धिति ६ अ सीतोता ७। अवरविदेहे ८ रुयगे ९ निसभे कूडाण नामाणि ॥१॥ जंबूमंदरपव्वते णंदणवणे णव कूडा पं० तं०—णंदणे १ मंदरे २ चेव निसहे ३ हेमवते ४ रयय ५ रुयए ६ य। सागरचित्ते ७ वइरे ८ बलकूडे ८ चेव बोद्धव्वे ॥१॥ जंबूमालवंतवक्खारपव्वते णव कूडा पं० तं०—सिद्धे १ य मालवंते २ उत्तरकुरु ३ कच्छ ४ सागरे ५ रयते ६। सीता ७ तह पुण्णणामे ८ हरिस्सहकूडे ९ य बोद्धव्वे ॥१॥ जंबू० कच्छे दीहवेयड्ढे नव कूडा पं० तं०—सिद्धे १ कच्छे २ खंडग ३ माणी ४ वेयड्ढ ५ पुण ६ तिमिसगुहा ७। कच्छे ८ वेसमणे या ९ कच्छे कूडाण णामाइं ॥१॥ जम्बू सुकच्छे दीहवेयड्ढे णव कूडा पं० तं०—सिद्धे १ सुकच्छे २ खण्डग ३ माणी ४ वेयड्ढ ५ पुन्न ६ तिमिसगुहा ७। सुकच्छे ८ वेसमणे ९ ता सुकच्छि कूडाण णामाइं ॥१॥ एवं जाव पोक्खलावर्तिमि दीहवेयड्ढे, एवं वच्छे दीहवेयड्ढे एवं जाव मङ्गलाव-

तिमि दीहवेयड्ढे। जम्बूविज्जुप्पभे वक्खारपव्वते नव कूडा पं० तं०—सिद्धे १ अ विज्जुणामे २ देवकूरा ३ पम्ह ४ कणग ५ सोवत्थी ६। सीनोताते ७ सजले ८ हरिकूडे ९ चेव बोद्धव्वे ॥१॥ जम्बू० पम्हे दीहवेयड्ढे णव कूडा पं० तं०—सिद्धे १ पम्हे २ खण्डग ३ माणी ४ वेयड्ढ ५ एवं चेव जाव सलिलावतिंमि दीहवेयड्ढे, एवं वप्पे दीहवेयड्ढे एवं जाव गंधिलावतिंमि दीहवेयड्ढे नव कूडा पं० तं०— सिद्धे १ गंधिल २ खण्डग ३ माणी ४ वेयड्ढ ५ पुन्न ६ तिमिसगुहा ७। गंधिलावति ८ वेसमण ९ कूडाणं होंति णामाइं ॥१॥ एवं सव्वेसु दीहवेयड्ढेसु दो कूडा सरिसणामगा सेसा ते चेव, जम्बूमंदरेणं उत्तरेणं नेलवंते वासहरपव्वते णव कूडा पं० तं०—सिद्धे १ निलवंत २ विदेह ३ सीता ४ कित्ती त ५ नारिकंता ६ य। अवरविदेहे रम्मगकूडे ८ उवदंसणे ९ चेव ॥१॥ जम्बूमंदरउत्तरेणं एरवते दीहवेतड्ढे नव कूडा पं० तं०—सिद्धे १ रयणे २ खण्डग ३ माणी ४ वेयड्ढ ५ पुण्ण ६ तिमिसगुहा ७। एरवते ८ वेसमणे ९ एरवते कूडमाणाइं ॥१॥ (सू० ६८९)

सुगमश्चायं, नवरं भरतग्रहणं विजयादिव्यवच्छेदार्थं दीर्घग्रहणं वर्तुलवैताढ्यव्यवच्छेदार्थमिति, 'सिद्धे' गाहा, तत्र सिद्धायतनयुक्तं सिद्धकूटं सक्रोशयोजनषट्कोच्छ्रयमेतावदेव मूले विस्तीर्णं एतदर्द्धोपरिविस्तारं क्रोशायामेनार्द्धक्रोशविष्कम्भेण देशोनक्रोशोच्चेनापश्चिमद्वारपञ्चधनुःशतोच्छ्रयतदर्द्धविष्कम्भद्वारत्रयोपेतेन जिनप्रतिमाष्टोत्तरशतान्वितेन सिद्धायतनेन विभूषितोपरितनभागमिति, तच्च वैताढ्ये पूर्वस्यां दिशि शेषाणि तु क्रमेण परतस्तस्मादेवेति भरतदेवप्रासादावतंसकोपलक्षितं भरतकूटं, 'खंडग'त्ति खण्डप्रपाता नाम वैताढ्यगुहा यया चक्रवर्त्ती अनार्यक्षेत्रात् स्वक्षेत्रमागच्छति तदधिष्ठायकदेवसम्बन्धित्वात् खण्डप्रपातकूटमुच्यते, 'माणी'ति

माणिभद्राभिधानदेवावासत्वान्माणिभद्रकूटं 'वेयड्ढ'त्ति वैताढ्यगिरिनाथदेवनिवासाद्वैताढ्यकूटमिति 'पुन्न'त्ति पूर्णभद्राभिधानदेवनिवासात्पूर्णभद्रकूटं तिमिसगुहा नाम गुहा यया स्वक्षेत्राच्चक्रवर्त्ती चिलातक्षेत्रे याति तदधिष्ठायकदेवावासात् तिमिसगुहाकूटमिति, 'भरहे'त्ति तथैव, वैश्रमणलोकपालावासत्वाद्वैश्रमणकूटमिति। 'सिद्धे' गाहा, सिद्धेत्ति सिद्धायतनकूटं तथा निषधपर्वताधिष्ठातृदेवनिवासोपेतं निषधकूटं हरिवर्षस्य क्षेत्रविशेषस्याधिष्ठातृदेवेन स्वीकृतं हरिवर्षकूटं, एवं विदेहकूटमपि, ह्रीदेवीनिवासो ह्रीकूटं, एवं धृतिकूटं, शीतोदा नदी तद्देवीनिवासः शीतोदाकूटं, अपरविदेहकूटं विदेहकूटवदिति, रुचकश्चक्रवालपर्वतः तदधिष्ठातृदेवनिवासो रुचककूटमिति। 'नंदणे'त्ति नन्दनवनं मेरोः प्रथममेखलायां तत्र नव कूटानि 'नंदण' गाहा, तत्र नन्दनवने पूर्वादिदिक्षु चत्वारि सिद्धायतनानि विदिक्षु चतुश्चतुःपुष्करिणीपरिवृताश्चत्वारः प्रासादावतंसकाः, तत्र पूर्वस्मात्सिद्धायतनादुत्तरत उत्तरपूर्वस्थप्रासादाद्दक्षिणतो नन्दनकूटं, तत्र देवी मेघङ्करा १, तथा पूर्वसिद्धायतनादेव दक्षिणतो दक्षिणपूर्वप्रासादादुत्तरतो मन्दरकूटं, तत्र मेघवती देवी, अनेन क्रमेण शेषाण्यपि यावदष्टमं, देव्यस्तु निषधकूटे सुमेघा हैमवतकूटे मेघमालिनी रजतकूटे सुवच्छा रुचककूटे वच्छामित्रा सागरचित्रकूटे वैरसेना वैरकूटे बलाहकेति बलकूटं तु मेरोरुत्तरपूर्वस्यां नन्दनवने तत्र बलो देव इति। 'मालवंते'इत्यादि, 'सिद्धे' गाहा, माल्यवान्पूर्वोत्तरो गजदन्तपर्वतः तत्र सिद्धायतनकूटं मेरोरुत्तरपूर्वतः, एवं शेषाण्यपि, नवरं सिद्धकूटे भोगादेवी रजतकूटे भोगमालिनी देवी शेषेषु स्वसमाननामानो देवाः, हरिसहकूटं तु नीलवत्पर्वतस्य नीलवत्कूटाद् दक्षिणतः सहस्रप्रमाणं विद्युत्प्रभवर्त्ति हरिकूटं नन्दनवनवर्त्ति बलकूटं च, शेषाणि तु प्रायः पञ्चयोजनशतिकानीति, एवं कच्छादिविजयवैताढ्यकूटान्यपि व्याख्यातानुसारेण ज्ञेयानि, नवरं एवं 'जाव पुक्खलावईमी'त्यादौ यावत्करणान्महाकच्छाकच्छावतीआवर्त्तमङ्गलावर्त्तपुष्कलेषु सुकच्छवैताढ्येषु सिद्धकूटादीनि नव नव कू-

…न, अपाणि तु प्रायः पञ्चयोजनशतिकानीति, … नवरं…
'जाव पुक्खलावईमी'त्यादौ यावत्करणान्महाकच्छाकच्छावती आवर्त्तमङ्गलावर्त्तपुष्कलेषु सुकच्छवद्वैताढ्येषु सिद्धकूटादीनि नव नव कू-

टानि वाच्यानि, नवरं द्वितीयाष्टमस्थानेऽधिकृतविजयनाम वाच्यमिति, एवं 'वच्छे'ति शीताया दक्षिणे समुद्रासन्ने एवं 'जाव मंगलावईमी'त्यत्र यावत्करणात् सुवच्छमहावच्छवच्छावतीरम्यरम्यकरमणीयेषु प्रागिव कूटनवकं दृश्यमिति। विद्युत्प्रभो देवकुरुपश्चिमगजदन्तकः, तत्र नव कूटानि पूर्ववन्नवरं दिक्कुमार्यौ वारिसेनाबलाहकाभिधाने क्रमेण कनककूटस्वस्तिककूटयोरिति, 'पम्हे'ति शीतोदाया दक्षिणेन विद्युत्प्रभाभिधानगजदन्तकप्रत्यासन्नविजये 'जाव सलिलावईमी'त्यत्र यावत्करणात् सुपक्ष्ममहापक्ष्मपक्ष्मावतीशङ्खनलिनकुमुदेषु प्रागिव नव नव कूटानि वाच्यानि, 'एव'मित्युक्ताभिलापेन 'वप्पे'त्ति शीतोदाया उत्तरेण समुद्रप्रत्यासन्ने विजये 'जाव गंधिलावईमी'त्यत्र यावत्करणात् सुवप्रमहावप्रवप्रावतीवल्गुसुवल्गुगंधिलेषु नव नव कूटानि प्रागिव दृश्यानीति। पुनः पक्ष्मादिविजयेषु षोडशस्वतिदिशति—'एवं सव्वेसु' इत्यादिना, कूटानां सामान्यं लक्षणमुक्तमिति विशेषार्थिना तु जम्बूद्वीपप्रज्ञप्तिर्निरूपणीया, एवं नीलवत्कूटानि ऐरवतकूटानि च व्याख्येयानीति।

इयं कूटवक्तव्यता तीर्थकरैरुक्तेति प्रकृतावतारिणीं जिनवक्तव्यतामाह—

पासे णं अरहा पुरिसादाणिए वज्जरिसहणारायसंघयणे समचउरंससंठाणसंठिते नव रयणीओ उड्ढंउच्चत्तेणं हुत्था (सू० ६९०) समणस्स णं भगवतो महावीरस्स तित्थंसि णवहिं जीवेहिं तित्थगरणामगोत्ते कम्मे णिव्वत्तिते सेणितेणं सुपासेणं उदातिणा पोट्टिलेणं अणगारेणं दढाउणा संखेणं सततेणं सुलसाए सावित्ताते रेवतीते ०, (सू० ६९१)

'पासे' त्यादि सूत्रद्वयं कण्ठ्यं, नवरं 'तित्थगरनामे'ति तीर्थकरत्वनिबन्धनं नाम तीथकरनाम तच्च गोत्रं च-कर्म्मविशेष एवेत्येकवद्भावात् तीर्थकरनामगोत्रमिति अथवा तीर्थकरनामेति गोत्रं-अभिधानं यस्य तत्तीर्थकरनामगोत्रमिति, श्रेणिको राजा प्रसिद्धस्तेन १, एवं सुपार्श्वो भगवतो वर्द्धमानस्य पितृव्यः २, उदायी कोणिकपुत्रः, यः कोणिकेऽपक्रान्ते पाटलिपुत्रं नगरं न्यवीविशत् यश्च स्वभवनस्य विविक्तदेशे पर्वदिनेष्वाहूय संविग्नगीतार्थसद्गुरूंस्तत्पर्युपासनापरायणः परमसंवेगरसप्रकर्षमनुसरन् सामायिकपौषधादिकं सुश्रमणोपासकप्रायोग्यमनुष्ठानमनुतिष्ठते, एकदा च निशि देशनिर्द्धाटितरिपुराजपुत्रेण द्वादशवार्षिकद्रव्यसाधुना कृतपौषधोपवासः सुखप्रसुप्तः कङ्कायःकर्त्तिकाकण्ठकर्त्तनेन विनाशित इति ३, पोट्टिलोऽनगारोऽनुत्तरोपपातिकाङ्गेऽधीतो हस्तिनागपुरनिवासी भद्राभिधानसार्थवाहीतनयो द्वात्रिंशद्भार्यात्यागी महावीरशिष्यो मासिक्या संलेखनया सर्वार्थसिद्धोपपन्नः महाविदेहात्सिद्धिगामी, अयं त्विह भरतक्षेत्रात् सिद्धिगामी गदित इति ततोऽयमन्यः सम्भाव्यत इति ४, दृढायुरप्रतीतः ५, शङ्खशतकौ श्रावस्तीश्रावकौ, यथोरीदृशी वक्तव्यता-किल श्रावस्त्यां कोष्ठके चैत्ये भगवानेकदा विहरति स्म, शङ्खादिश्रमणोपासकाश्चागतं भगवन्तं विज्ञाय वन्दितुमागताः, ततो निवर्त्तमानांस्तान् शङ्खः खल्वाख्याति स्म-यथा भो देवानांप्रिया ! विपुलमशनाद्युपस्कारयत ततस्तत्परिभुञ्जानाः पाक्षिकं पर्व्व कुर्वाणा विहरिष्यामः, ततस्ते तत्प्रतिपेदिरे, पुनः शङ्खोऽचिन्तयत्-न श्रेयो मेऽशनादि भुञ्जानस्य पाक्षिकपौषधं प्रतिजाग्रतो विहर्त्तुं श्रेयस्तु मे पौषधशालायां पौषधिकस्य मुक्ताभरणशस्त्रादेः शान्तवेषस्य विहर्त्तुं, अथ स्वगृहे गत्वा उत्पलाभिधानस्वभार्याया वार्तां निवेद्य पौषधशालायां पौषधमकार्षीत्, इतश्च तेऽशनाद्युपस्कारयांचक्रुः एकत्र च समवेयुः शङ्खं प्रतीक्षमाणास्तस्थुः, ततोऽनागच्छति शङ्खे पुष्कलीनामा श्रमणोपासकः शतक इत्यपरनाम शङ्खस्याकारणार्थं तद्गृहं जगाम, आगतस्य चोत्पला श्रावकोचितप्रति

वर्त्तिं चकार, ततः पौषधशालायां स विवेश, ईर्यापथिकीं प्रतिचक्राम, शङ्खमभ्युवाच—यदुतोपस्कृतं तदशनादि तद् गच्छामः श्रावकस-
मवायं भुञ्ज्महे तदशनादि प्रतिजागृमः पाक्षिकपौषधं, तत उवाच शङ्खः—अहं हि पौषधिको नागमिष्यामीति, ततः पुष्कली गत्वा
श्रावकाणां तत् निविवेद ते तु तदनु बुभुजिरे, शङ्खस्तु प्रातः पौषधमपारयित्वैव पारगतपादपद्मप्रणिपतनार्थं प्रतस्थौ, प्रणिपत्य च
तमुचितदेशे उपविवेश, इतरेऽपि भगवन्तं वन्दित्वा धर्म्मं च श्रुत्वा शङ्खान्तिकं गत्वा एवमूचुः—सुष्ठु त्वं देवानांप्रिय ! अस्मान् हील-
यसि, ततस्तान् भगवान् जगाद—मा भो यूयं शङ्खं हीलयत शङ्खो ह्यहीलनीयः, यतोऽयं प्रियधर्म्मा दृढधर्म्मा च, तथा सुदृष्टिजागरिकां
जागरित इत्यादि ६–७, सुलसा राजगृहे प्रसेनजितो राज्ञः सम्बन्धिनो नागाभिधानस्य रथिकस्य भार्या बभूव, यस्याश्चरितमे-
वमनुश्रूयते—किल तया पुत्रार्थं स्वपतिरिन्द्रादीन् नमस्यन्नभिहितः—अन्यां परिणयेति, स च यस्तत्र पुत्रस्तेनेह प्रिये ! प्रयोजनमिति
भणित्वा न तत् प्रतिपन्नवान्, इतश्च तस्याः शक्रालये सम्यक्त्वप्रशंसां श्रुत्वा तत्परीक्षार्थं कोऽपि देवः साधुरूपेणागतस्तं च वन्दित्वा
बभाण—किमागमनप्रयोजनम् ? देवोऽवादीत्—तव गृहे लक्षपाकं तैलमस्ति तच्च मे वैद्येनोपदिष्टमिति तदीयतां, ददामीत्यभिगता गृह-
मध्ये अवतारयन्त्याश्च भिन्नं देवेन तद्भाजनं एवं द्वितीयं तृतीयं चेत्येवमखेदां दृष्ट्वा तुष्टो देवो द्वात्रिंशतं च गुटिका ददौ, एकैकां
खादेर्द्वात्रिंशत्ते सुता भविष्यन्ति प्रयोजनान्तरे चाहं स्मर्त्तव्य इत्यभिधाय गतोऽसौ, चिन्तितं चानया—सर्वाभिरप्येक एव मे पुत्रो
भूयादिति सर्वाः पीताः, आहृता द्वात्रिंशत्पुत्राः वर्द्धते स्म जठरमरतिश्च ततः कायोत्सर्गमकरोत् आगतो देवो निवेदितो व्यतिकरो वि-
हितो महोपकारो जातो लक्षणवत्पुत्रगण इत्यादि ७, तथा रेवती भगवत औषधदात्री, 'कथं ?', किलैकदा भगवतो मेण्ढिकग्रामनगरे
विहरतः पित्तज्वरो दाहबहुलो बभूव लोहितवर्चश्च प्रावर्त्तत, चातुर्वर्ण्यं च व्याकरोति स्म यदुत गोशालकस्य तपस्तेजसा दग्धशरीरो-

ऽन्तः षण्मासस्य कालं करिष्यतीति, तत्र च सिंहनामा मुनिरातापनाऽवसान एवममन्यत–मम धर्माचार्यस्य भगवतो महावीरस्य ज्वररोगो रुजति, ततो हा वदिष्यन्त्यन्यतीर्थिकाः यथा छद्मस्थ एव महावीरो गोशालकतेजोऽपहतः कालगत इति एवम्भूतभावनाजनितमानसमहादुःखखेदितशरीरो मालुककच्छाभिधानं विजनं वनमनुप्रविश्य कुहुकुहेत्येवं महाध्वनिना प्रारोदीत्, भगवांश्च स्थविरैस्तमाकार्योक्तवान्–हे सिंह! यत्त्वया व्यकल्पि न तद्भावि, यत इतोऽहं देशोनानि षोडश वर्षाणि केवलिपर्यायं पूरयिष्यामि, ततो गच्छ त्वं नगरमध्ये, तत्र रेवत्यभिधानया गृहपतिपत्न्या मदर्थं द्वे कूष्माण्डफलशरीरे उपस्कृते, न च ताभ्यां प्रयोजनं, तथाऽन्यदस्ति तद्गृहे परिवासितं मार्जाराभिधानस्य वायोर्निवृत्तिकारकं कुक्कुटमांसकं बीजपूरककटाहमित्यर्थः, तदाहर, तेन नः प्रयोजनमित्येवमुक्तोऽसौ तथैव कृतवान्, रेवती च सबहुमानं कृतार्थमात्मानं मन्यमाना यथायाचितं तत्पात्रे प्रक्षिप्तवती, तेनाप्यानीय तद्भगवतो हस्ते विसृष्टं, भगवतापि वीतरागतयैवोदरकोष्ठे निक्षिप्तं, ततस्तत्क्षणमेव क्षीणो रोगो जातः, जातानन्दो यतिवर्गो मुदितो निखिलो देवादिलोक इति।

अनन्तरं ये तीर्थकरा भविष्यन्ति ते प्रकृताध्ययनानुपातेनोक्ता अधुना तु ये जीवाः सेत्स्यन्ति तथैव तानाह—

एस णं अज्जो! कण्हे वासुदेवे १ रामे बलदेवे २ उदये पेढालपुत्ते ३ पुट्टिले ४ सतते गाहावती ५ दारुते नितंठे ६ सचती नितंठीपुत्ते ७ सावितबुद्धे अंबडे परिव्वायते ८ अज्जाविणं सुपासा पासावच्चिज्जा ९ आगमेस्साते उस्सप्पिणीते चाउज्जामं धम्मं पन्नवतित्ता सिज्झिहिन्ति जाव अन्तं काहिंति (सू० ६९२)

'एस णं'मित्यादि, तत्र 'एस' इति वासुदेवानां पश्चिमोऽनन्तरकालातिक्रान्त इति 'अज्जो'त्ति आमन्त्रणवचनं भगवान् महावीरः किल साधूनामन्त्रयति हे आर्या ! 'उदये पेढालपुत्ते'त्ति सूत्रकृतद्वितीयश्रुतस्कन्धे नालन्दीयाध्ययनाभिहितः, तद्यथा–उदकनामाऽनगारः पेढालपुत्रः पार्श्वजिनशिष्यः, योऽसौ राजगृहनगरबाहिरिकाया नालन्दाभिधानायाः उत्तरपूर्वस्यां दिशि हस्तिद्वीपवनखण्डे व्यवस्थितः, तदेकदेशस्थं गौतमं संशयविशेषमापृच्छय विच्छिन्नसंशयः सन् चतुर्यामधर्मं विहाय पञ्चयामं धर्मं प्रतिपेदे इति। पोट्टिलशतकावनन्तरोक्तावेव। दारुकोऽनगारो वासुदेवस्य पुत्रो भगवतोऽरिष्टनेमिनाथस्य शिष्योऽनुत्तरोपपातिकोक्तचरित इति, तथा सत्यकिर्निर्ग्रन्थीपुत्रो यस्येदृशी वक्तव्यता–किल चेटकमहाराजदुहिता सुज्येष्ठाभिधाना वैराग्येण प्रव्रजिता उपाश्रयस्यान्तरातापयति स्म, इतश्च पेढालो नाम परिव्राजको विद्यासिद्धो विद्या दातुकामो योग्यपुरुषं गवेषयति यदि ब्रह्मचारिण्याः पुत्रो भवेत्ततः सुन्यस्ता विद्या भवेयुरिति भावयंस्तां चातापयन्तीं दृष्ट्वा धूमिकाव्यामोहं कृत्वा बीजं निक्षिप्तवान् गर्भः सम्भूतो दारको जातो, निर्ग्रन्थिकासमेतो भगवत्समवसरणं गतः, तत्र च कालसन्दीपनामा विद्याधरो भगवन्तं वन्दित्वा पप्रच्छ–कुतो मे भय ?, स्वामी व्याकार्षीत्–एतस्मात्सत्यकेः, ततोऽसौ तत्समीपमुपागत्यावज्ञया तं प्रति बभाण–अरे रे मां त्वं मारयिष्यसि ?, इति भणित्वा पादयोः पातितः, ततोऽन्यदा साध्वीभ्यः सकाशादपहृत्य पितृविद्याधरेण विद्याः ग्राहितो, अथ रोहिण्या विद्यया पञ्चसु पूर्वभवेषु मारितः, षष्ठभवे षण्मासावशेषायुषा तेनासौ नेष्टा, इह तु सप्तमे भवे सिद्धा, तल्ललाटे विवरं विधाय तच्छरीरमतिगता, ललाटच्छिद्रं च देवतया तृतीयमक्षि कृतं, तेन च स्वपिता स च कालसन्दीपो मारितः, विद्याधरचक्रवर्त्तित्वं च प्राप्ति, ततोऽसौ सर्वांस्तीर्थकरान् वन्दित्वा नाट्यं चोपदर्श्याभिरमते स्मेति। तथा श्राविकां–श्रमणोपासिकां सुलसाभिधानां बुद्धः–सर्वज्ञधर्म्मे भावितेयमित्यवगतवान् श्राविका

वा बुद्धा-ज्ञाता येन स श्राविकाबुद्धः 'अंमडो' अंमडाभिधानः परिव्राजकविद्याधरश्रमणोपासकः, अयं चार्थः कथानकादवसेयः, तच्चेदं-चम्पाया नगर्याः अम्बडो विद्याधरश्रावको महावीरसमीपे धर्ममुपश्रुत्य राजगृहं प्रस्थितः, स च गच्छन् भगवता बहुसत्त्वोपकाराय भणितः,-यथा सुलसाश्राविकायाः कुशलवार्त्तां कथयेः, स च चिन्तयामास-पुण्यवतीयं यस्यास्त्रिलोकनाथः स्वकीयकुशलवार्त्तां प्रेषयति, कः पुनस्तस्या गुण इति तावत्सम्यक्त्वं परीक्षे, ततः परिव्राजकवेषधारिणा गत्वा तेन भणिताऽसौ-आयुष्मति ! धर्मो भवत्या भविष्यतीत्यस्मभ्यं भक्त्या भोजनं देहि, तया भणितम्-येभ्यो दत्ते भवत्यसौ ते विदिता एव, ततोऽसावाकाशविरचिततामरसासनो जनं विस्मापयते स्म, ततस्तं जनो भोजनेन निमन्त्रयामास, स तु नैच्छत्, लोकास्तं प्रपच्छ-कस्य भगवन् ! भोजनेन भागधेयवत्त्वं मासक्षपणपर्यन्ते संवर्द्धयिष्यति ?, स प्रतिभणति स्म-सुलसायाः, ततो लोकस्तस्या वर्द्धनकं न्यवेदयत्, यथा तव गेहे भिक्षुरयं बुभुक्षुः, तयाऽभ्यधायि-किं पाखण्डिभिरस्माकमिति, लोकस्तस्मै न्यवेदयत्, तेनापि व्यज्ञायि-परमसम्यग्दृष्टिरेषा या महातिशयदर्शनेऽपि न दृष्टिव्यामोहमगमदिति, ततो लोकेन सहासौ तद्गेहे नैषेधिकीं कुर्वन् पञ्चनमस्कारमुच्चारयन् प्रविवेश, साऽप्यभ्युत्थानादिकां प्रतिपत्तिमकरोत्, तेनाप्यसावुपबृंहितेति, यश्चौपपातिकोपाङ्गे महाविदेहे सेत्स्यतीत्यभिधीयते सोऽन्य इति सम्भाव्यते, तथा आर्यापि-आर्यिकाऽपि सुपार्श्वाभिधाना पार्श्वापत्यीया-पार्श्वनाथशिष्यशिष्या, चत्वारो यामा-महाव्रतानि यत्र स चतुर्यामस्तं प्रज्ञाप्य सेत्स्यन्ति १, एतेषु च मध्यमतीर्थंकरत्वेनोत्पत्स्यन्ते केचित्केचित्तु केवलित्वेन, 'भवसिद्धिओ उ भयवं सिज्झिस्सइ कण्हतित्थंमी'ति वचनादिति भावः, शेषं स्पष्टं ।

अनन्तरसूत्रोक्तस्य श्रेणिकस्य तीर्थंकरत्वाभिधानायाह—'एस णमित्यादि जस्सीलसमायारो' इत्यादिगाथापर्यन्तं सूत्रं—

एम णं अज्जो! सेणिए राया भिंभिसारे कालमासे कालं किच्चा इमीसे रयणप्पभाए पुढवीते सीमंतते नरए चउरासीतिवाससहस्सट्ठितीयंसि निरयंसि णेरइयत्ताए उववज्जिहिति से णं तत्थ णेरइए भविस्सति काले कालोभासे जाव परमकिण्हे वन्नेणं से णं तत्थ वेयणं वेदिहिती उज्जलं जाव दुरहियासं, से णं ततो नरताओ उव्वट्टेत्ता आगमेसाते उस्सप्पिणीते इहेव जंबुद्दीवे दीवे भारहे वासे वेयड्ढगिरिपायमूले पुंडेसु जणवतेसु सतदुवारे णगरे संमुइस्स कुलकरस्स भद्दाए भारियाए कुच्छिंसि पुमत्ताए पच्चायाहिती, तए णं सा भद्दा भारिया नवण्हं मासाण बहुपडिपुण्णाणं अद्धट्ठमाण य राइंदियाणं वीतिक्कंताणं सुकुमालपाणिपातं अहीणपडिपुन्नपंचिंदियसरीरं लक्खणवंजण जाव सुरूवं दारगं पयाहिती, जं रयणिं च णं से दारए पयाहिती तं रयणिं च णं सतदुवारे णगरे सब्भंतरबाहिरए भारग्गसो य कुंभग्गसो त पउमवासे त रयणवासे त वासे वासिहिति, तए णं तस्स दारयस्स अम्मापियरो एक्कारसमे दिवसे वइक्कंते जाव बारसाहे दिवसे अयमेयारूवं गोण्णं गुणनिप्फण्णं नामधिज्जं काहिंति जम्हा णं अम्हमिमंसि दारगंसि जातंसि समाणंसि सयदुवारे नगरे सब्भिंतरबाहिरए भारग्गसो य कुंभग्गसो य पउमवासे य रयणवासे य वासे वुट्ठे तं होउ णमम्हमिमस्स दारगस्स नामधिज्जं महापउमे, तए णं तस्स दारगस्स अम्मापियरो नामधिज्जं काहिंति—महापउमेत्ति, तए णं महापउमं दारगं अम्मापितरो सातिरेगं अट्ठवासजातगं जाणित्ता महता रायाभिसेएणं अभिसिंचिहिंति, से णं तत्थ राया भविस्सति महता हिमवंतमहंतमलयमंदररायवन्नओ जाव रज्जं पसाहेमाणे विहरिस्सति, तते णं तस्स महाप-

उमस्स रन्नो अन्नया कयाइ दो देवा महिड्डिया जाव महेसक्खा सेणाकम्मं काहिंति, तं०—पुन्नभद्दते माणिभद्दते, तए णं सतदुवारे नगरे बहवे रातीसरतलवरमाडंबितकोडुंबितइब्भसेट्ठिसेणावतिसत्थवाहप्पभितयो अन्नमन्नं सद्दावेहिंति एवं वतिस्संति जम्हा णं देवाणुप्पिया! अम्हं महापउमस्स रन्नो दो देवा महिड्डिया जाव महेसक्खा सेनाकम्मं क ति, तं०-पुन्नभद्दे त माणिभद्दे य तं होऊ णमम्हं देवाणुप्पिया! महापउमस्स रन्नो दोचेवि नामधेज्जे देवसेणे, तते णं तस्स महापउमस्स दोचेवि नामधेज्जे भविस्सइ देवसेणेति २, तए णं तस्स देवसेणस्स रन्नो अन्नता कताती सेयसंखतलविमलसन्निकासे चउद्दंते हत्थिरयणे समुप्पज्जिहिति, तए णं से देवसेणे राया तं सेयं संखतलविमलसन्निकासं चउद्दंतं हत्थिरयणं दुरूढे समाणे सतदुवारं नगरं मज्झंमज्झेणं अभिक्खणं २ अतिज्जाहि त णिज्जाहि त, तते णं सतदुवारे णगरे बहवे रातीसरतलवर जाव अन्नमन्नं सद्दाविंति २ एवं वइस्संति— जम्हा णं देवाणुप्पिया! अम्हं देवसेणस्स रन्नो सेते संखतलविमलसन्निकासे चउदंते हत्थिरयणे समुप्पन्ने तं होऊ णमम्हं देवाणुप्पिया! देवसेणस्स रन्नो तच्चेवि नामधेज्जे विमलवाहणे, तते णं तस्स देवसेणस्स रन्नो तच्चेवि णामधेज्जे भविस्सति विमलवाहणे २, तए णं से विमलवाहणे राया तीसं वासाइं अगारवासमज्झे वसित्ता अम्मापितीहिं देवत्तगतेहिं गुरुमहत्तरतेहिं अब्भणुन्नाते समाणे उडुंमि सरए संबुद्धे अणुत्तरे मोक्खमग्गे पुणरवि लोगंतितेहिं जीयकप्पितेहिं देवेहिं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं उरालाहिं कल्लाणाहिं धन्नाहिं सिवाहिं मंगल्लाहिं सस्सिरीआहिं वग्गूहिं अभिणंदिज्जमाणे अभिथुवमाणे य बहिया सुभूमि-

भागे उज्ञाणे एगं देवदूसमादाय मुंडे भवित्ता अगाराओ अणगारियं पव्वयाहिति तस्स णं भगवंतस्स साइरेगाइं दुवालस वासाइं निच्चं वोसट्ठकाए चियत्तदेहे जे केई उवसग्गा उप्पज्जंति तं०—दिव्वा वा माणुसा वा तिरिक्खजोणिया वा ते उप्पन्ने सम्मं सहिस्सइ खमिस्सइ तितिक्खिस्सइ अहियासिस्सइ, तए णं से भगवं ईरियासमिए भासासमिए जाव गुत्तबंभयारि अममे अकिंचणे छिन्नगंथे निरुवलेवे कंसपाईव मुक्कतोए जहा भावणाए जाव सुहुयहुयासणेतिव तेयसा जलंते ॥ कंसे संखे जीवे गगणे वाते य सारए सलिले। पुक्खरपत्ते कुम्मे विहगे खग्गे य भारंडे ॥१॥ कुंजर वसहे सीहे नगराया चेव सागरमखोभे। चंदे सूरे कणगे वसुंधरा चेव सुहुयहुए ॥२॥ नत्थि णं तस्स भगवंतस्स कत्थइ पडिबंधे भवइ, से य पडिबंधे चउव्विहे पं० तं०—अंडए वा पोयए वा उग्गहेइ वा पग्गहिएइ वा, जं णं जं णं दिसं इच्छइ तं णं तं णं दिसं अपडिबद्धे सुचिभूए लहुभूए अणप्पगंथे संजमेणं अप्पाणं भावेमाणे विहरिस्सइ, तस्स णं भगवंतस्स अणुत्तरेणं नाणेणं अणुत्तरेणं दंसणेणं अणुत्तरिएणं एवं आलएणं विहारेणं अज्जवे मद्दवे लाघवे खंती मुत्ती गुत्ती सच्च संजम तवगुणसुचरियसोवचियफलपरिनिव्वाणमग्गेणं अप्पाणं भावेमाणस्स झाणंतरियाए वट्टमाणस्स अणंते अणुत्तरे निव्वाघाए जाव केवलवरनाणदंसणे समुप्पज्जिहिति, तए णं से भगवं अरहं जिणे भविस्सइ, केवली सव्वन्नू सव्वदरिसी सदेवमणुआसुरस्स लोगस्स परियागं जाणइ पासइ सव्वलोए सव्वजीवाणं आगइं गतिं ठियं चयणं उववायं तक्कं मणोमाणसियं भुत्तं कडं परिसेवियं आवीकम्मं रहोकम्मं अरहा अरहस्स भागी तं तं कालं मणसवयसकाइए

जोगे वट्टमाणाणं सव्वलोए सव्वजीवाणं सव्वभावे जाणमाणे पासमाणे विहरइ, तए णं से भगवं तेणं अणुत्तरेणं केवलवरनाणदंसणेणं सदेवमणुआसुरलोगं अभिसमिच्चा समणाणं निग्गंथाणं [जे केइ उवसग्गा उप्पज्जंति, तं०—दिव्वा वा माणुसा वा तिरिक्खजोणिया वा ते उप्पन्ने सम्मं सहिस्सइ खमिस्सइ तितिक्खिस्सइ अहियासिस्सइ, तते णं से भगवं अणगारे भविस्सति ईरियासमिते भास० एवं जहा वद्धमाणसामी तं चेव निरवसेसं जाव अव्वावारविउसजोगजुत्ते, तस्स णं भगवंतस्स एतेणं विहारेणं विहरमाणस्स दुवालसहिं संवच्छरेहिं वीतिक्कंतेहिं तेरसहि य पक्खेहिं तेरसमस्स णं संवच्छरस्स अंतरा वट्टमाणस्स अणुत्तरेणं णाणेणं जहा भावणाते केवलवरनाणदंसणे समुप्पज्जिजहिन्ति जिणे भविस्सति केवली सव्वन्नू सव्वदरिसी सणेरईए जाव] पंच महव्वयाइं सभावणाइं छच्च जीवनिकायधम्मं देसेमाणे विहरिस्सति से जहाणामते अज्जो ! मते समणाणं निग्गंथाणं एगे आरंभठाणे पण्णत्ते, एवामेव महापउमेवि अरहा समणाणं णिग्गंथाणं एगं आरंभठाणं पण्णवेहिति से जहाणामते अज्जो मते समणाणं निग्गंथाणं दुविहे बंधणे पं० नं०—पेज्जबंधणे दोसबंधणे, एवामेव महापउमेवि अरहा समणाणं णिग्गंथाणं दुविहं बंधणं पन्नवेहिती, तं०—पेज्जबंधणं च दोसबंधणं च, से जहानामते अज्जो मते समणा० निग्गंथाणं तओ दंडा पं० तं०—मणदंडे ३ एवामेव महापउमेवि समाणाणं निग्गंथाणं ततो दंडे पण्णवेहिति, तं०—मणोदंडं ३, से जहा नामए एएणं अभिलावेणं चत्तारि कसाया पं० तं०—कोहकसाए ४ पंच कामगुणे पं० तं०—सद्दे ५, छज्जीवनिकाता पं० तं० पुढविकाइया जाव तसकाइया, एवामेव जाव तस-

काइया, से जहाणामते एएणं अभिलावेणं सत्त भयट्ठाणा पं० तं०—एवामेव महापउमेवि अरहा समणाणं निग्गंथाणं सत्त भयट्ठाणा पन्नवेहिति, एवमट्ठ मयट्ठाणे, णव बंभचेरगुत्तीओ दसविधे समणधम्मे एवं जाव तेत्तीसमासातणाउत्ति से जहानामते अज्जो! मते समणाणं निग्गंथाणं नग्गभावे मुंडभावे अण्हाणते अदंतवणे अच्छत्तए अणुवाहणते भूमिसेज्जा फलगसेज्जा कट्ठसेज्जा केसलोए बंभचेरवासे परघरपवेसे जाव लद्धावलद्धवित्तीउ पन्नत्ताओ एवामेव महापउमेवि अरहा समणाणं निग्गंथाणं णग्गभावं जाव लद्धावलद्धवित्ती पण्णवेहिती, से जहाणामए अज्जो! मए समणाणं नि० आधाकम्मिएति वा उद्देसितेति वा मीसज्जाएति वा अज्झोयरएति वा पूतिए कीते पामिच्चे अच्छेज्जे अणिसट्ठे अभिहडेति वा कंतारभत्तेति वा दुब्भिक्खभत्ते गिलाणभत्ते वद्दलिताभत्तेइ वा पाहुणभत्तेइ वा मूलभोयणेति वा कंदभो० फलभो० बीयभो० हरियभोयणेति वा पडिसिद्धे, एवामेव महापउमेवि अरहा समणाणं० आधाकम्मितं वा जाव हरितभोयणं वा पडिसेहिस्सति, से जहानामते अज्जो! मए समणाणं पंचमहव्वतिए सपडिक्कमणे अचेलते धम्मे पण्णत्ते एवामेव महापउमेवि अरहा समणाणं णिग्गंथाणं पञ्चमहव्वतितं जाव अचेलगं धम्मं पण्णवेहिती, से जहानामए अज्जो! मए पञ्चाणुव्वतिते सत्तसिक्खावतिते दुवालसविधे सावगधम्मे पण्णत्ते एवामेव महापउमेवि अरहा पञ्चाणुव्वतितं जाव सावगधम्मं पण्णवेस्सति, से जहानामते अज्जो! मए समणाणं० सेज्जातरपिंडेति वा रायपिंडेति वा पडिसिद्धे एवामेव महापउमेवि अरहा समणाणं० सेज्जातरपिंडेति वा पडिसेहिस्सति, से जधाणामते अज्जो! मम णव गणा इगारस

गणधरा एवामेव महापउमस्सवि अरिहतो णव गणा एगारस गणधरा भविस्संति, से जहानामते अज्जो! अहं तीसं वासाइं अगारवासमज्झ वसित्ता मुण्डे भवित्ता जाव पव्वतिते दुवालस संवच्छराइं तेरस पक्खा छउमत्थपरियागं पाउणित्ता तेरसहिं पक्खेहिं ऊणगाइं तीसं वासाइं केवलिपरियागं पाउणित्ता बायालीसं वासाइं सामण्णपरियागं पाउणित्ता बावत्तरि वासाइं सव्वाउयं पालइत्ता सिज्झिस्सं जाव सव्वदुक्खाणमंतं करेस्सं एवामेव महापउमेवि अरहा तीसं वासाइं अगारवासमज्झे वसित्ता जाव पव्विहिती दुवालस संवच्छराइं जाव बावत्तरिवासाइं सव्वाउयं पालइत्ता सिज्झिहिती जाव सव्वदुक्खाणमंतं काहिती—"जंसीलसमायारो अरहा तित्थंकरो महावीरो। तस्सीलसमायारो होति उ अरहा महापउमे ॥१॥" (सू० ६९३) (इति श्री महापद्मचरित्रं संपूर्णमिति)

सुगमं चैतत्, नवरं एषः—अनन्तरोक्त आर्या इति श्रमणामन्त्रणं 'भिंभि'त्ति ढक्का सा सारो यस्य स तथा, किल तेन कुमारत्वे प्रदीपनके जयढक्का गेहान्निष्काशिता ततः पित्रा भिंभिसार उक्त इति, सीमंतके नरकेन्द्रके प्रथमप्रस्तटवर्त्तिनि चतुरशीतिवर्षसहस्रस्थितिषु नरकेषु मध्ये नारकत्वेनोत्पत्स्यते, कालः स्वरूपेण कालावभासः—काल एवावभासते पश्यतां यावत्करणात् 'गंभीरलोमहरिसे' गम्भीरो महान् लोमहर्षो—भयविकारो यस्य स तथा, 'भीमो' विकरालः 'उत्तासणओ' उद्वेगजनकः, 'परमकिण्हे वन्नेणं'ति प्रतीतं, स च तत्र नरके वेदनां वेदयिष्यति, उज्ज्वलां—विपक्षस्य लेशेनाप्यकलङ्कितां यावत्करणाद् त्रीणि मनोवाक्कायबलानि उपरिमध्यमाधस्तनकायविभागान् वा तुलयति—जयतीति त्रितुला तां, क्वचिद्विपुलामिति पाठः, तत्र विपुला—शरीरव्यापिनी तां, तथा प्रगाढां—प्रकर्षवतीं

कटुकां-कटुकरसोत्पादितां कर्कशां-कर्कशस्पर्शसम्पादितां अथवा कटुकद्रव्यमिव कटुकामनिष्टां, एवं कर्कशामपि, चण्डां-वेगवतीं झटित्येव मूर्च्छोन्मादिकां, वेदना हि द्विविधा-सुखा दुःखा चेति, सुखाव्यवच्छेदार्थं दुःखामित्याह, दुर्गां-पर्वतादिदुर्गमिव कथमपि लङ्घयितुमशक्यां दिव्यां-देवनिर्मितां, किं बहुना ?-दुरधिसह्यां-सोढुमशक्यामिति, इहैव जम्बूद्वीपे, नासंख्येयतमे, 'पुमत्ताए'त्ति पुंस्तया 'पच्चायाहिइ'त्ति प्रत्याजनिष्यते. 'बहुपडिपुन्नाणं'ति अतिपरिपूर्णानामर्द्धमष्टमं येषु तान्यर्द्धाष्टमानि तेषु रात्रिन्दिवेषु-अहोरात्रेषु व्यतिक्रान्तेषु, इह षष्ठी सप्तम्यर्थे, सुकुमारौ-कोमलौ पाणी च पादौ च यस्य स सुकुमारपाणिपादस्तं, प्रतिपूर्णानि स्वकीयस्वकीयप्रमाणतः प्रतिपुण्यानि वा-पवित्राणि पञ्च इन्द्रियाणि-करणानि यस्मिंस्तत्तथा अहीनमङ्गोपाङ्गप्रमाणतः प्रतिपूर्णपञ्चेन्द्रियं प्रतिपुण्यपञ्चेन्द्रियं वा शरीरं यस्य सोऽहीनप्रतिपूर्णपञ्चेन्द्रियशरीरः अहीनप्रतिपुण्यपञ्चेन्द्रियशरीरो वा तं, तथा लक्षणं-पुरुषलक्षणं शास्त्राभिहित 'अस्थिष्वर्थाः सुखं मांसे' इत्यादि, मानोन्मानादिकं वा व्यञ्जनं-मषतिलकादि गुणाः-सौभाग्यादयः अथवा लक्षणव्यञ्जनयोर्ये गुणास्तैरुपेतो लक्षणव्यञ्जनगुणोपेतः, उववेओत्ति तु प्राकृतत्वाद्वर्णागमतः, अथवा उप अपेत इति स्थिते शकन्ध्वादिदर्शनादकारलोप इत्युपपेत इति लक्षणव्यञ्जनगुणोपपेतस्तं, लक्षणव्यञ्जनस्वरूपमिदमुक्तम्—"माणुम्माणपमाणादि लक्खणं वंजणं तु मसमाई। सहजं च लक्खणं वंजणं तु पच्छा समुप्पन्नं ॥१॥" इति [लक्षणं मानोन्मानप्रमाणादि मषादिर्व्यंजनं अथवा सहजं लक्षणं पश्चात्समुत्पन्नं तु व्यंजनं ॥१॥] लक्षणमेवाधिकृत्य विशेषणान्तरमाह—'माणुम्माणे'त्यादि, तत्र मानं-जलद्रोणप्रमाणता, सा ह्येवं-जलभृते कुण्डे प्रमातव्यपुरुष उपवेश्यते, ततो यज्जलं कुण्डान्निर्गच्छति तद्यदि द्रोणप्रमाणं भवति तदा स पुरुषः मानोपपन्न इत्युच्यते, उन्मानं तुलारोपितस्यार्द्धभारप्रमाणता, प्रमाणं-आत्माङ्गुलेनाष्टोत्तरशताङ्गुलोच्छ्रयता, उक्तं च—"जलदोण १ मद्धभारं २ समुहाइं समुस्सिओ व जो

नव उ ३। माणुम्माणपमाणं तिविहं खलु लक्खणं एयं ॥१॥" इति [जलद्रोणो मानमर्द्धभारमुन्मानं स्वमुखानि नवसमुच्छ्रितो यस्तु प्रमाणं त्रिविधं एतल्लक्षणं खलु] ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि सुष्ठु जातानि सर्वाण्यङ्गानि–शिरःप्रभृतीनि यस्मिंस्तत् तथाविधं सुन्दरमङ्गं–शरीरं यस्य स तथा तं मानोन्मानप्रमाणप्रतिपूर्णसुजातसर्वाङ्गसुन्दराङ्गं, तथा शशिवत्सौम्याकारं कान्तं–कमनीयं प्रियं–प्रेमावहं दर्शनं यस्य स शशिसौम्याकारकान्तप्रियदर्शनस्तं, अत एव सुरूपमिति दारकं प्रजनिष्यति भद्रेति सम्बन्धः, 'जं रयणिं च'त्ति यस्यां च रजन्यां 'तं रयणिं च'त्ति तस्यां रजन्यां पुनरिति, अर्द्धरात्र एव च तीर्थकरोत्पत्तिरिति रजनीग्रहणं, 'से दारए पयाहिए'त्ति स दारकः प्रजनिष्यते उत्पत्स्यत इति, 'सब्भिंतरबाहिरए'त्ति सहाभ्यन्तरेण बाह्यकेन च नगरभागेन यन्नगरं तत्र, सर्वत्र नगर इत्यर्थः, विंशत्या पलशतैर्भारो भवति अथवा पुरुषोत्क्षेपणीयो भारो भारक इति यः प्रसिद्धः अग्रं–प्रमाणं ततो भार एवाग्रं भाराग्रं तेन भाराग्रेण भाराग्रशो–भारपरिमाणतः, एवं कुम्भाग्रशो, नवरं कुम्भ आढकषष्ट्यादिप्रमाणतः, पद्मवर्षश्च रत्नवर्षश्च वर्षिष्यति भविष्यतीत्यर्थः, 'जाव'त्ति करणात् 'निव्वत्ते असुइजाइकम्मकरणे संपत्ते'त्ति दृश्यं, तत्र 'निर्वृत्ते' निर्वर्त्तित इत्यर्थः पाठान्तरतः निव्वत्ते वा निवृत्ते–उपरते अशुचीनां–अमेध्यानां जातकर्म्मणां–प्रसवव्यापाराणां करणे–विधाने सम्प्राप्ते–आगते 'बारसाहदिवसे'त्ति द्वादशानां पूरणो द्वादशः स एवाख्या यस्य स द्वादशाख्यः स चासौ दिवसश्चेति विग्रहः, अथवा द्वादशं च तदहश्च द्वादशाहस्तन्नामको दिवसो द्वादशाहदिवस इति, 'अयं'ति इदं वक्ष्यमाणतया प्रत्यक्षासन्नं 'एयारूवं'ति एतदेव रूपं–स्वभावो यस्य न मात्रयापि प्रकारान्तरापन्नमित्यर्थः, किं तत्?–नामधेयं–प्रशस्तं नाम, किंविधम्?–गौणं न पारिभाषिकं, गौणमित्यमुख्यमपि स्यादित्याह—'गुणनिष्पन्नं' इति गुणानाश्रित्य पद्मवर्षादीन्निष्पन्नं गुणनिष्पन्नमित्यक्षरघटना, 'महापउमे महापउमे'त्ति

तत्पित्रोः पर्यालोचनाभिलापानुकरणं, 'तए णं'ति पर्यालोचनानन्तरं 'महापउम' इति महापद्म इत्येवंरूपं 'साइरेगट्ठवासजायगं'ति मातिरेकाणि-साधिकान्यष्टौ वर्षाणि जातानि यस्य स तथा तं, 'रायवन्नओ'त्ति राजवर्णको वक्तव्यः, स चायं—'महयाहिमवन्तमहन्तमलयमंदरमहिंदसारे' महता-गुणसमूहेनान्तर्भूतभावप्रत्ययत्वाद्वा महत्तया हिमवांश्च-वर्षधरपर्वतविशेषः महांश्चासौ मलयश्च विन्ध्य इति चूर्णिकारः महामलयः स च मन्दरश्च-मेरुः महेन्द्रश्च-शक्रादिः ते इव सारः-प्रधानो यः स तथा, 'अच्चंतविसुद्धदीहरायकुलवंसप्पसूए' अत्यन्तविशुद्धः सर्वथा निर्दोषः दीर्घश्च-पुरुषपरम्परापेक्षया यो राज्ञां-भूपालानां कुललक्षणो वंशः-सन्तानस्तत्र प्रसूतो-जातो यः स तथा 'निरन्तरं रायलक्खणविराइयंगमंगे' नैरन्तर्येण राजलक्षणैः-चक्रस्वस्तिकादिभिर्विराजितान्यङ्गानि-शिरःप्रभृतीन्युपाङ्गानि च-अङ्गुल्यादीनि यस्य स तथा, 'बहुजणबहुमाणपूइए सव्वगुणसमिद्धे खत्तिए मुदिए'त्ति प्रतीतं 'मुद्धाभिसित्ते पितृपितामहादिभिर्मूर्द्धन्यभिषिक्तो यः स तथा, 'माउपिउसुजाए' सुपुत्रो विनीतत्वादिनेत्यर्थः, 'दयप्पत्ते' दयाप्राप्तो दयाकारीत्यर्थः सीमङ्करे-मर्यादाकारी 'सीमन्धरे' 'मर्यादां पूर्वपुरुषकृतां धारयति-नात्मनापि लोपयति यः स तथा खेमंकरो-नोपद्रवकारी खेमधरे-क्षेमं धारयत्यन्यकृतमिति यः स तथा, 'माणुसिंसदे जणवयपिया' लोकपिता वत्सलत्वात्, 'जणवयपुरोहिए' जनपदस्य पुरोधाः-पुरोहितः शान्तिकारीत्यर्थः, 'सेतुकरे' सेतुं-मार्गमापद्गतानां निस्तरणोपायं करोति यः स तथा, 'केतुकरे' चिह्नकरः अद्भुतकारित्वादिति, 'नरपवरे' नरः प्रवरः नरा वा प्रवरा यस्य स तथा 'पुरिसवरे' पुरुषप्रधानः 'पुरिससीहे' शौर्याद्यधिकतया, 'पुरिसआसीविसे' शापसमर्थत्वात् 'पुरिसपुंडरीए' पूज्यत्वात् सेव्यत्वाच्च, 'पुरिसवरगंधहत्थी' शेषराजगजविजयित्वात्, 'अड्ढे' धनेश्वरत्वात् 'दित्ते' दर्पकत्वात् 'वित्ते' प्रसिद्धत्वात् 'विच्छिन्नविपुलभवणसयणासणजाणवाहणाइन्ने' पूर्ववत् 'बहुधणबहुजायरूवरयए आओगपओगसंपउत्त'

आयोगप्रयोगा–द्रव्यार्जनोपायविशेषाः सम्प्रयुक्ताः–प्रवर्त्तिता येन स तथा, विच्छड्डियपउरभत्तपाणे बहुदासीदासगोमहिसगवेलगप्पभूए पडिपुन्नजंतकोसकोट्ठागारायुहागारे'यन्त्राणि–जलयन्त्रादीनि कोशः–श्रीगृहं कोष्ठागारं–धान्यागारं आयुधागारं–प्रहरणकोशः 'बलवं' हस्त्यादिसैन्ययुक्तः 'दुब्बलपच्चामित्ते' अबलप्रातिवेशिकराजः, 'ओहयकंटयं निहयकंटयं मलियकंटय उद्धियकंटयं अकंटयं एवं ओहयसत्तुं' उपहता राज्यापहारात् निहता मारणान्मलिता मानभञ्जनादुद्धृता देशनिष्काशनात्कण्टका–दायादा यत्र राज्ये तत्तथा अत एवाकण्टकं, एवं शत्रवोऽपि, नवरं शत्रवस्तेभ्योऽन्ये, 'पराईयसत्तुं' विजयवत्त्वादिति, 'ववगयदुभिक्खं मारिभयविप्पमुक्कं खेमं सिवं सुभिक्खं पसन्नडिंबडमरं' डिम्बानि–विघ्ना डमराणि–कुमारादिव्युत्थानादीनि, 'रज्जं पसासेमाणे'त्ति पालयन् विहरिस्सइ' त्ति। 'दो देवा महड्ढिया' इत्यत्र यावत्करणात् 'महज्जुइया महाणुभागा महायसा महाबले'ति दृश्यं, 'सेणाकम्मं'ति सेनायाः–सैन्यस्य कर्म्म–व्यापारः शत्रुसाधनलक्षणः सेनाविषयं वा कर्म–इतिकर्तव्यतालक्षणं सेनाकर्म्म, पूर्णभद्रश्च–दक्षिणयक्षनिकायेन्द्रः माणिभद्रश्च–उत्तरयक्षनिकायेन्द्रः, 'बहवे राईसरे'त्यादि, राजा–महामाण्डलिकः ईश्वरो–युवराजो माण्डलिकोऽमात्यो वा, अन्ये च व्याचक्षते–अणिमाद्यष्टविधैश्वर्ययुक्त ईश्वर इति, तलवरः–परितुष्टनरपतिप्रदत्तपट्टबन्धभूषितो माडम्बिकः–छिन्नमडम्बाधिपः, कौटुम्बिकः –कतिपयकुटुम्बप्रभुरिभ्यः–अर्थवान्, स च किल यदीयपुञ्जीकृतद्रव्यराश्यन्तरितो हस्त्यपि नोपलभ्यत इत्येतावताऽर्थेनेति भावः, श्रेष्ठी–श्रीदेवताध्यासितसौवर्णपट्टभूषितोत्तमाङ्गः पुरज्येष्ठो वणिक्, सेनापतिः–नृपतिनिरूपितो हस्त्यश्वरथपदातिसमुदायलक्षणायाः सेनायाः प्रभुरित्यर्थः, सार्थवाहकः–सार्थनायकः एतेषां द्वन्द्वः, ततश्च राजादयः प्रभृतिः–आदिर्येषां ते तथा, 'देवसेणे'त्ति देवावेव सेना यस्य देवाधिष्ठिता वा सेना यस्य स देवसेन इति, 'देवसेणाती'ति देवसेन इत्येवंरूपं, 'सेते'त्यादि श्रेयान्–अतिप्रशस्यः श्वेतो वा

कीदृगित्याह-शङ्खतलेन-कम्बुरूपेण विमलेन-पङ्कादिरहितेन सन्निकाशः-सङ्काशः सदृशो यः स शङ्खतलविमलसन्निकाशः, "दुरूढे"त्ति आरूढः 'समाणे'त्ति सन् 'अतियास्यति' प्रवेक्ष्यति 'निर्यास्यति' निगमिष्यतीति, क्वचिद्वर्त्तमाननिर्देशो दृश्यते स च तत्कालापेक्ष इति, एवं सर्वत्र, 'गुरुमहत्तरएहिं'ति गुर्वोः-मातापित्रोर्महत्तराः-पूज्याः अथवा गौरवार्हत्वेन गुरवो महत्तराश्च वयसा वृद्धत्वाद्ये ते गुरुमहत्तराः 'पुणरवि'त्ति महत्तराभ्यनुज्ञानानन्तरं लोकान्ते-लोकाग्रलक्षणे सिद्धस्थाने भवा लोकान्तिकाः, भाविनि भूतवदुपचारन्यायेन चैवं व्यपदेशः, अन्यथा ते कृष्णराजीमध्यवासिनो, लोकान्तभावित्वं च तेषामनन्तरभव एव सिद्धिगमनादिति, 'जीतकल्पः' आचरितकल्पो जिनप्रतिबोधनलक्षणो विद्यते येषां ते जीतकल्पिकाः, आचरितमेव तेषामिदं नतु तैस्तीर्थकरः प्रतिबोध्यते, स्वयंबुद्धत्वाद्भगवत इति, 'ताहिं'न्ति ताभिर्विवक्षिताभिः 'वग्गूहिं'ति वाग्भिर्यकाभिरानन्द उत्पद्यत इति भावः, 'इट्ठाभिः'इष्यन्ते स्म याः कान्ताभिः-कमनीयाभिः प्रियाभिः-प्रेमोत्पादिकाभिः, विरूपा अपि कारणवशात् प्रिया भवन्तीत्यत उच्यते-मनोज्ञाभिः-शुभस्वरूपाभिः मनोज्ञा अपि शब्दतोऽर्थतो न हृदयङ्गमा भवन्तीत्याह—'मणामाहिं'ति मनः अमन्ति-गच्छन्ति यास्ताः तथा ताभिरुदारेण-उदात्तेन स्वरेण प्रयुक्तत्वादुदाराभिः कल्यं-आरोग्यं अणन्ति-शब्दयन्तीति कल्याणास्ताभिः, शिवस्य-उपद्रवाभावस्य सूचकत्वाच्छिवाभिः धनं लभन्ते धने वा साध्व्यो धन्यास्ताभिः मङ्गले-दुरितक्षये साध्व्यो मङ्गल्यास्ताभिः सह श्रिया-वचनार्थशोभया यास्ताः सश्रीकास्ताभि वाग्भिरिति सम्बन्धिनं अभिनन्द्यमानः-समुल्लास्यमानः, 'बहिय'त्ति नगराद्बहिस्तादिति। इतो वाचनानन्तरमनुश्रित्य लिख्यते—'साइरेगाइ'न्ति अर्द्धसप्तमैर्मासैर्द्वादश वर्षाणि यावत् व्युत्सृष्टे काये परिकर्मवर्जनतस्त्यक्ते देहे परीषहादिसहनतस्तथा सत्स्वपि उत्पत्स्यमानेषूपसर्गेषु भयाभावतः क्षमिष्यत्युत्पन्नेषु क्रोधाभावतः तितिक्षिष्यति दैन्याभावतः अध्यासिष्यते अविचलतयेति,

'जाव गुत्ते'त्तिकरणादिदं दृश्यं--'एसणासमिए आयाणभंडमत्तनिक्खेवणासमिए' भाण्डमात्राया आदाने निक्षेपे च समित इत्यर्थः, उच्चारपासवणखेलसिंघाणजल्लपारिठावणियासमिए' खेलो-निष्ठीवनं सिंघाणो-नासिकाश्लेष्मा जल्लो-मलः, 'मणगुत्ते वइगुत्ते कायगुत्ते' 'गुत्ते' गुप्तत्वाद् त्रिगुप्तात्मेत्यर्थः, 'गुत्तिंदिए' स्वविषयेषु रागादिनेन्द्रियाणामप्रवृत्तेः, 'गुत्तबंभचारी गुप्तं-नवभिर्ब्रह्मचर्यगुप्तिभी रक्षितं ब्रह्म-मैथुनविरमणं चरतीति विग्रहः, तथा 'अममे' अविद्यमानममेत्यभिलापो निरनुषङ्गत्वात् 'अकिंचणे'नास्ति किंचनं-द्रव्यं यस्य स तथा, 'छिन्नग्रन्थे' छिन्नो ग्रन्थो--धनधान्यादिस्तत्प्रतिबन्धो वा येन स तथा क्वचित् 'किन्नग्गन्थे' इति पाठस्तत्र कीर्णः-क्षिप्तः, 'निरुवलेवे' द्रव्यतो निर्म्मलदेहत्वात् भावतो बन्धहेत्वभावान्निर्गत उपलेपो यस्मादिति निरुपलेपः, एतदेवोपमानैरभिधीयते—'कंसपातीव मुक्कतोये' कांस्यपात्रीव-कांस्यभाजनविशेष इव मुक्तं-त्यक्तं न लग्नमित्यर्थः तोयमिव बन्धहेतुत्वात्तोयं-स्नेहो येन स मुक्ततोयः यथा भावनायामाचाराङ्गद्वितीयश्रुतस्कन्धपञ्चदशाध्ययने तथा अयं वर्णको वाच्य इति भावः, कियद्दूरं यावदित्याह—'जाव सुहुये'त्यादि, सुष्ठु हुतं-क्षिप्तं घृतादीति गम्यते यस्मिन् स सुहुतः स चासौ हुताशनश्च-वह्निरिति सुहुतहुताशनस्तद्वत्तेजसा-ज्ञानरूपेण तपोरूपेण वा ज्वलन्-दीप्यमानः, अतिदिष्टपदानां सङ्ग्रहं गाथाभ्यामाह-कंसे गाहा, 'कुंजर' गाहा, कंसेत्ति 'कंसपाईव मुक्कतोये' संखेत्ति 'संखे इव निरङ्गणे' रङ्गणं-रागाद्युपरञ्जनं तस्मान्निर्गत इत्यर्थः, 'जीवे'त्ति जीव इव अप्पडिहयगई' संयमे गतिः-प्रवृत्तिर्न हन्यते अस्य कथञ्चिदिति भाव, 'गगणे'त्ति 'गगनमिव निरालम्बणे' न कुलग्रामाद्यालम्बन इति भावः, 'वाये य'त्ति 'वायुरिव अप्पडिबद्धे ग्रामादिष्वेकरात्रादिवासात् सारयसलिलेत्ति 'सारयसलिलं व शुद्धहियए' अकलुषमनस्त्वात्, 'पुक्खरपत्ते'त्ति 'पुक्खरपत्तमिव निरुवलेवे' प्रतीतं, 'कुम्मे'त्ति 'कुम्मो इव गुत्तिंदिए' कच्छपो हि कदाचिदवयवपञ्चकेन गुप्तो भवत्येवमसावपीन्द्रियपञ्चकेनेति, 'वि-

हगे'त्ति 'विहग इव विप्पमुक्के' मुक्तपरिच्छदत्वादनियतवासाच्चेति, 'खग्गे य'त्ति 'खग्गविसाणंव एगजाए' खड्गः—आटव्यो जीवस्तस्य विषाणं—शृङ्गं तदेकमेव भवति तद्वदेकजातः—एकभूतो रागादिसहायवैकल्यादिति, 'भारुंडे'त्ति 'भारुंडपक्खीव अप्पमत्ते' भारुण्डपक्षिणोः किलैकं शरीरं पृथग्ग्रीवं त्रिपादं च भवति, तौ चात्यन्तमप्रमत्ततयैव निर्वाहं लभेते इति तेनोपमेति ॥१॥ 'कुंजरे'त्ति 'कुंजरो इव सोंडीरे' हस्तीव शूरः कषायादिरिपून् प्रति, 'वसभे'त्ति 'वसभो इव जायथामे' गौरिवोत्पन्नबलः, प्रतिज्ञातवस्तुभरनिर्वाहक इत्यर्थः, 'सीहे'त्ति सीहो इव दुद्धरिसे' परीषहादिभिरनभिभवनीय इत्यर्थः, 'नगराया चेव'त्ति 'मंदरो इव अप्पकंपे' मेरुरिवानुकूलाद्युपसर्गैरविचलितसत्त्वः, 'सागरमक्खोहे'त्ति मकारोऽलाक्षणिकः सागरवदक्षोभः सागराक्षोभ इति सूत्रसूचा, सूत्रं च 'सागरो इव गंभीरे' हर्षशोकादिभिरक्षोभितत्वादिति, 'चंदे'त्ति 'चंदे इव सोमलेसे' अनुपतापकारिपरिणामः, 'सूरे'त्ति 'सूरे इव दित्ततेए' दीप्ततेजा द्रव्यतः शरीरदीप्त्या भावतो ज्ञानेन, 'कणगे'त्ति 'जच्चकणगंपिव जायरूवे' जातं—लब्धं रूपं—स्वरूपं रागादिकुद्रव्यविरहाद् येन स तथा, 'वसुंधरा चेव'त्ति 'वसुंधरा इव सव्वफासविसहे' स्पर्शाः—शीतोष्णादयोऽनुकूलेतराः, 'सुहुयहुए'त्ति व्याख्यातमेवेति 'नत्थी'त्यादि, नास्ति तस्य भगवतो महापद्मस्यायं पक्षः, यदुत कुत्रापि प्रतिबन्धः—स्नेहो भविष्यतीति, 'अण्डए इव'त्ति अण्डजो—हंसादिः ममायमित्युल्लेखेन वा प्रतिबन्धो भवति, अथवा अण्डकं मयूर्यादीनामिदं रमणकं मयूरादेः कारणमिति प्रतिबन्धः स्यादित्यथवाऽण्डजं पट्टसूत्रजमिति वा, पोतजो हस्त्यादिरयमिति वा प्रतिबन्धः स्यात्, अथवा पोतको बालक इति वा, अथवा पोतकं वस्त्रमिति वा प्रतिबन्धः स्यात्, आहारेऽपि च विशुद्धे सरागसंयमवतः प्रतिबन्धः स्यादिति दर्शयति-'उग्गहिए इ वा'त्ति अवगृहीतं—परिवेषणार्थमुत्पाटितं प्रगृहीतं—भोजनार्थमुत्पाटितमिति, अथवा अवग्रहिकमिति—अवग्रहोऽस्यास्तीति वसतिपीठफलकादिः, औपग्रहिकं वा दण्डकादिकमुपधिजातं,

तथा प्रकर्षेण ग्रहोऽस्येति प्रग्रहिकम्-औघिकमुपकरणं पात्रादीनि, अथवा अण्डजे वा पोतजे वेत्यादि व्याख्येयमिकारस्त्वागमिक इति, 'जन्नं'ति यां यां दिशं णमिति वाक्यालङ्कारे तुशब्दो वा अयं तदर्थं एव, इच्छति तदा विहर्त्तुमिति शेषः, तां तां दिशं स विहरिष्यतीति संबन्धः, सप्तम्यर्थो वेयं द्वितीया तस्यां तस्यामित्यर्थः, शुचिभूतो भावशुद्धितो लघुभूतोऽनुपधित्वेन गौरवत्यागेन च 'अणुप्पगंथे'त्ति अनुरूपतया-औचित्येन विरतेर्न त्वपुण्योदयादणुरपि वा-सूक्ष्मोऽप्यल्पोऽपि प्रगतो ग्रन्थो-धनादिर्यस्य यस्माद्वाऽसावनुप्रग्रन्थः अपेर्वृत्त्यन्तर्भूतत्वादणुग्रन्थो वा अथवा 'अणुप्प'त्ति अनर्प्यः अनर्पणीयः अढौकनीयः परेषामाध्यात्मिकत्वात् ग्रन्थवत्-द्रव्यवत् ग्रन्थो-ज्ञानादिर्यस्य सोऽनर्प्यग्रन्थ इति, 'भावेमाणे'त्ति वासयन्नित्यर्थः. 'अणुत्तरेणं'ति नास्त्युत्तरं-प्रधानमस्मादित्यनुत्तरं तेन, 'एव'मिति अनुत्तरेणेति विशेषणमुत्तरत्रापि संबन्धनीयमित्यर्थः, 'आलयेन' वसत्या विहारेणैकरात्रादिना आर्जवादयः क्रमेण मायामानगौरवक्रोधलोभनिग्रहाः गुप्तिर्मनःप्रभृतीनां तथा सत्यं च-द्वितीयं महाव्रतं संयमश्च-प्रथमं तपोगुणाश्च अनशनादयः सुचरितं-सुष्ठ्वासेवितं 'सोचविय'ति प्राकृतत्वाच्छौचं च-तृतीयं महाव्रतं, अथवा 'चिय'त्ति विच्च विज्ञानमिति द्वन्द्वस्ततश्चैतान्ये'ता एव वा 'फल'त्ति फलप्रधानः परिनिर्वाणमार्गो-निर्वृतिनगरीपथः सत्यादिपरिनिर्व्वाणमार्गस्तेन, ध्यानयोः-शुक्लध्यानद्वितीयतृतीयभेदलक्षणयोरन्तरं-मध्यं ध्यानान्तरं तदेव ध्यानान्तरिका तस्यां वर्त्तमानस्य, शुक्लस्य द्वितीयाद् भेदादुत्तीर्णस्य तृतीयमप्राप्तस्येत्यर्थः, अनन्तमनन्तविषयत्वात् अनुत्तरं सर्वोत्तमत्वात् निर्व्याघातं धरणीधरादिभिरप्रतिहतत्वात् निरावरणं सर्वावरणापगमात् कृत्स्नं सर्वार्थविषयत्वात् प्रतिपूर्णं स्वरूपतः पौर्णमासीचन्द्रवत् केवलमसहायमत एव वरं ज्ञानदर्शनं प्रतीतं केवलवरज्ञानदर्शनमिति 'अरहं'त्ति अर्हन् अष्टविधमहाप्रातिहार्यरूपपूजायोगात् जिनो रागादिजेतृत्वात् केवली परिपूर्णज्ञानादित्रययोगाद् सर्वज्ञः सर्वविशेषार्थबोधात् सर्वदर्शी सकलसामा-

न्यार्थानयोगात् ततश्च सह देवैश्च-वैमानिकज्योतिष्कलक्षणैर्मर्त्यैश्च-मनुजैरसुरैश्च-भवनपतिव्यन्तरलक्षणैर्यः स सदेवमर्त्यासुरस्तस्य लोकः -पञ्चास्तिकायात्मकस्तस्य 'परियागं ति जातावेकवचनमिति पर्यायान्-विचित्रपरिणामान् जाणइ पासइ'ति ज्ञास्यति द्रक्ष्यति चेत्यर्थः एतच्च देवादिग्रहणं प्रधानापेक्षमन्यथा सर्वजीवानां सर्वपर्यायान् ज्ञास्यति, अत एवाह—'सव्वलोए' इत्यादि, 'चयणं'ति वैमानिकज्योतिष्कमरणं उपपातं-नारकदेवानां जन्म तर्कं-विमर्शं मनः-चित्तं मनसि भवं मानसिकं-चिन्तितं वस्तु भुक्तमोदनादि कृतं घटादि प्रतिसेवितं-आसेवितं प्राणिवधादि आविष्कर्म्म-प्रकटक्रियां रहःकर्म्म-विजनव्यापारं ज्ञास्यतीत्यनुवर्त्तते, तथा 'अरहा' न विद्यते रहो-विजनं यस्य सर्वज्ञत्वादसावरहाः, अत एव रहस्यस्य-प्रच्छन्नस्याभावोऽरहस्यं तद्भजते इत्यरहस्यभागी, तं तं कालं आश्रित्येति शेषः, सप्तमी चेयमतस्तस्मिंस्तस्मिन् काल इत्यर्थः, 'मणसवयसकाइए'त्ति मानसश्च वाचसश्च कायिकश्च मानसवाचसकायिकं तत्र योगे-व्यापारे ह्रस्वत्वं च प्राकृतत्वादिति, वर्तमानानां—व्यवस्थितानां सर्वभावान्-सर्वपरिणामान् जानन् पश्यन्विहरिष्यति, 'अभिसमेच'त्ति अभिसमेत्य अवगम्य, 'सभावणाइं'ति सह भावनाभिः प्रतिव्रतं पञ्चभिरीर्यासमित्यादिभिर्यानि तानि सभावनानि तासां च स्वरूपमावद्व्यकान्मन्तव्यं'षड्जीवनिकायान् रक्षणीयतया 'धम्मं'ति एवंरूपं चारित्रात्मकं सुगतौ जीवस्य धारणाद् धर्म्मं श्रुतधर्मं च देशयन्-प्ररूपयन्निति, अथ महापद्मस्यात्मनश्च सर्वज्ञत्वात् सर्वज्ञयोश्च मताभेदाद् भेदे चैकस्यायथावस्तुदर्शनेनासर्वज्ञताप्रसङ्गादित्युभयोर्भगवान् समां वस्तुप्ररूपणां दर्शयन्नाह—'से जहे'त्यादि, 'से' इत्यथार्थो अथशब्दश्च वाक्योपन्यासार्थः यथेत्युपमानार्थः, 'नामए'त्ति वाक्यालंकारे 'अज्जो'त्ति हे आर्याः शिष्यामन्त्रणं, 'एगे आरंभट्ठाणे'त्ति आरम्भ एव स्थानं-वस्तु आरम्भस्थानमेकमेव, तत्त्वप्रमत्तयोगलक्षणत्वात् तस्य, यदाह-"सव्वो पमत्तजोगो समणस्स उ होइ आरंभो" इति, [सर्वः प्रमत्तयोगः भवति आरंभ एव श्रमण

स्य॥] इतः शेषमावश्यके प्रायः प्रसिद्धमिति न लिखितं, तथा फलकं-प्रतलमायतं काष्ठं-स्थूलमायतमेव लब्धानि च सन्मानादिना-ऽपलब्धानि च न्यक्कारपूर्वकतया यानि भक्तादीनि तैर्वृत्तयो-निर्वाहा लब्धापलब्धवृत्तयः, 'आहाकम्मिए इ व'त्ति आधाय-आश्रित्य साधून् कर्म्म-सचेतनस्याचेतनीकरणलक्षणा अचेतनस्य वा पाकलक्षणा क्रिया यत्र भक्तादौ तदाधाकर्म्म तदेवाधाकर्म्मिकम्, उक्तं च —"सचित्तं जमचित्तं साहूणऽट्ठाए कीरए जं च । अचित्तमेव पच्चइ आहाकम्मं तयं भणियं ॥१॥" [साध्वर्थं सचित्तं यदचित्तं क्रियते अचित्तस्य पाकादि वा तदाधाकर्म भणितं ॥१॥] इह चेकारः सर्वत्रागमिकः इतिशब्दो वाऽयमुपप्रदर्शनार्थपरो वा विकल्पार्थः, 'उद्देसियं'ति अर्थिनः पाखण्डिनः श्रमणान्निर्ग्रन्थान् वोद्दिश्य दुर्भिक्षात्ययादौ यद्भक्तं वितीर्यते तदौद्देशिकमिति, उद्देशे भवमौद्देशिकमितिशब्दार्थः, यद्वा तथैव यदुद्धरितं सद् दध्यादिभिर्विमिश्रय दीयते तापयित्वा वा तदपि तथैवेति, इहाभिहितम्-"उद्देसिय साहु-माई ओमव्वय भिक्खवियरणं जं च । उद्धरियं मीसेउं तविउं उद्देसियं तं तु ॥१॥" इति [अन्नमात्यये साध्वादीनुद्दिश्य यद्भिक्षावितरणं यद्वा उद्धृतं मिश्रयित्वा तापयित्वा दानं तदौद्देशिकमेव ॥१॥] मीसजाए व'त्ति गृहिसंयतार्थमुपस्कृततया मिश्रं जातं-उत्पन्नं मिश्रजातं, यदाह-"पढमं चिय गिहिसंजय मीसं उवक्खडइ मीसगं तं तु ॥" इति [प्रथममेव गृहिसंयतमिश्रमुपस्करोति तन्मिश्रमेव ॥] 'अज्झोयरए'त्ति स्वार्थमूलाद्ग्रहणे साध्वाद्यर्थं कणप्रक्षेपणमध्यवपूरकः, आह च-"सट्ठा मूलद्दहणे अज्झोयर होइ पक्खेवो ॥" इति, [मूलात् स्वार्थं पाके प्रक्षेपः साध्वर्थमध्यवपूरकः ॥] 'पूईए'त्ति शुद्धमपि कर्माद्यवयवैरपवित्रीकृतं पूतिकं, उक्तं च—"कम्मावयवसमेयं संभाविज्जइ जयं तु तं पूई ॥" इति [आधाकर्मावयवसमेतं संभाव्यते यत्तत्पूतिकं ॥] 'कीए'त्ति द्रव्येण भावेन वा क्रीतं-स्वीकृतं यत्तत्क्रीतमिति, यतोऽभ्यधायि-"दव्वाइएहिं किणणं साहूणट्ठाइ कीयं तु ॥" इति [द्रव्याद्यैः क्रीणनं साध्वर्थं तत्क्रीतन्तु ॥] 'पामिच्चं'

अपमित्यकं-साध्वर्थमुद्धारगृहीतं, यतोऽभिहितम्-"पामिच्चं साहूणं अट्ठा उच्छिदिउं दियावेइ" इति [साध्वर्थं उद्यतकं गृहीत्वा ददाति प्रामित्यकं] 'आच्छेद्यं' बलाद् भृत्यादिसत्कमाच्छिद्य यत्स्वामी साधवे ददाति, भणितं च—"अच्छेज्जं चाछिंदिय जं सामी भिच्चमाईणं" इति [भृत्यादिभ्य आच्छिद्य यत्स्वामी दत्ते तदाच्छेद्यं] 'अनिसृष्टं' साधारणं बहूनामेकादिना अननुज्ञातं दीयमानं, आह च—'अणिसट्ठं सामन्नं गोट्ठियमाईण दयउ एगस्स'इति [गोष्ठ्यादीनां सामान्यं एकस्य ददतोऽनिसृष्टं ॥] 'अभ्याहृतं' स्वग्रामादिभ्य आहृत्य यद्दानं, यतोऽभाणि—सग्गामपरग्गामा जमाणियं अभिहडं तयं होइ''इति [स्वग्रामपरग्रामाद्यदानीतं तदभ्याहृतं भवति ॥] [अध्यवपूरकादीनां स्वरूपमुक्तं न तु व्युत्पत्तिरित्याह-'एषा'मित्यादि] एषां शब्दार्थः प्रायः प्रकट एवेति, कान्तारभक्तादय आधाकर्मादिभेदा एव, तत्र कान्तारं-अटवी तत्र भक्तं-भोजनं यत्साध्वाद्यर्थं तत्तथा, एवं शेषाण्यपि, नवरं ग्लानो-रोगोपशान्तये यद्दाति ग्लानेभ्यो वा यद् दीयते, तथा वर्द्दलिका-मेघाडम्बरं तत्र हि वृष्ट्या भिक्षाभ्रमणाक्षमो भिक्षुकलोको भवतीति गृही तदर्थं विशेषतो भक्तं दानाय निरूपयतीति, प्राघूर्णकाः-आगन्तुकाः भिक्षुका एव तदर्थं यद्भक्तं तत्तथा, प्राघूर्णको वा गृही स यद्दापयति तदर्थं संस्कृत्य तत्तथा, मूलं पुनर्नवादीनां तस्य भोजनं तदेव वा भोजनं भुज्यत इति भोजनमितिकृत्वा, कन्दः-सूरणादिः फलं-त्रपुष्यादि बीजं दाडिमादीनां हरितं-मधुरतृणादिविशेषः, जीववधनिमित्तत्वाच्चैषां प्रतिषेध इति । 'पंचमहव्वइए' इत्यादि प्रथमपश्चिमतीर्थकराणां हि पञ्च महाव्रतानि शेषाणां महाविदेहजानां च चत्वारीति पञ्चमहाव्रतिकः, एवं सह प्रतिक्रमणेन-उभयसन्ध्यमावश्यकेन यः स तथा, अन्येषां तु कारणजात एव प्रतिक्रमणमिति, उक्तं च—"सपडिक्कमणो धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स । मज्झिमयाण जिणाणं कारणजाए पडिक्कमणं ॥१॥" इति, [पूर्वस्य पश्चिमस्य जिनस्य साधोः सप्रतिक्रमणो धर्मः मध्यमजिनसाधूनां कारणजाते प्रतिक्रमणं

॥१॥] तथा अविद्यमानानि-जिनकल्पिकविशेषापेक्षया असत्त्वादेव स्थविरकल्पिकापेक्षया तु जीर्णमलिनखण्डितश्वेताल्पत्वादिना चेलानि-वस्त्राणि यस्मिन् स तथा धर्म्मः-चारित्रं, न च सति चेले अचेलता न लोके प्रतीता, यत उक्तम्—"जह जलमवगाहंतो बहुचेलोऽवि सिरवेढियकडिल्लो। भन्नइ नरो अचेलो तह मुणओ संतचेलावि ॥१॥" [यथा जलमवगाहयन् बहुचेलोऽपि शिरोवेष्टितकटीवस्त्रः नरोऽचेलो भण्यते तथा मुनयः सचेला अपि ॥१॥] अतः—"परिसुद्धजुन्नकुच्छियथोवानियअन्नभोगभोगेहिं। मुणओ मुच्छारहिया संतेहिं अचेलया होंति ॥१॥" [श्वेतजीर्णकुथितस्तोकानियतान्यभोगभोगैः मूर्च्छारहिता मुनयः सत्स्वपि अचेलका भवन्ति ॥१॥] (अनियतैरन्यभोगे च सति भोग्यैरित्यर्थः> न च वस्त्रं संसक्तिरागादिनिमित्ततया चारित्रविघातायाध्यात्मशुद्धेः शरीराहारादिवदिति, न हि शरीराद्यूकादिसंसक्तिर्न भवति रागो वा नोत्पद्यते, उक्तं च—"अह कुणसि थुल्लवत्थाइएसु मुच्छं धुवं सरीरेऽवि। अक्केज्जदुल्लभतरे काहिसि मुच्छं विसेसेणं ॥१॥" इति [स्थूलवस्त्रादिषु मूर्च्छामथ करोषि ध्रुवं शरीरेऽपि अक्रेयदुर्लभतरे विशेषेण मूर्च्छां करिष्यसि ॥१॥] (अक्रयणीय इत्यर्थः) अध्यात्मशुद्ध्यभावेऽचेलकत्वमपि न चारित्राय, यथोक्तम्—"अपरिग्गहावि परसंतिएसु मुच्छाकसायदोसेहिं। अविणिग्गहियप्पाणो कम्ममलमणंतमज्जंति ॥१॥" [अपरिग्रहा अपि परकीयेषु मूर्च्छाकषायदोषैः अविनिगृहीतात्मानः अनन्तं कर्ममलमर्जयन्ति ॥१॥] इति, जिनोदाहरणादचेलकत्वमेव श्रेय इति न वक्तव्यमेतत्, यतोऽभ्यधायि—"न परोवएसविसया न य छउमत्था परोवएसंपि। दिंति न य सीसवग्गं दिक्खंति जिणा जहा सव्वे ॥१॥ तह सेसेहि य सव्वं कज्जं जह तेहिं सव्वसाहम्मं। एवं च कओ तित्थं? न चेदचेलत्ति को गाहो? ॥२॥" [जिनाः सर्वे न परोपदेशवशगाः न च छद्मस्थाः। परस्योपदेशमपि न च ददति न च शिष्यवर्गं दीक्षयंति यथा ॥१॥ तथा शेषैश्च सर्वं कार्यं यदि तैः सर्वसाधर्म्यं एवं च कुतः तीर्थं? न चेदचेल इति को ग्राहः

(आग्रहः) ॥२॥] अपि च–उचितचेलसद्भावे चारित्रधर्म्मो भवत्येव तदुपकारित्वाच्छरीराहारादिवदिति, अथ कथं चेलस्य चारित्रोपकारितेति चेत्, उच्यते, शीतादित्राणतो जीवसंसक्तिनिमित्ततृणपरिहारादिहेतुत्वात्, उक्तं च—"तणगहणानलसेवानिवारणा धम्मसुक्कझाणट्ठा। दिट्ठं कप्पग्गहणं गिलाणमरणट्ठया चेव ॥१॥" इति, [तृणग्रहणानलसेवानिवारणाय धर्मशुक्लध्यानार्थं कल्पग्रहणं दृष्टं ग्लानार्थाय मरणार्थाय चैव ॥१॥] तथा 'सेज्जायरे'त्ति शेरते यस्यां साधवः सा शय्या तया तरति भवसागरं इति शय्यातरो–वसतिदाता तस्य पिण्डो भक्तादिः शय्यातरपिण्डः, स च अशनादि ४ वस्त्रादि ४ शूच्यादि ४ श्चेति, तद्ग्रहणे दोषास्त्वमी–"तित्थंकरपडिकुट्ठो अन्नायं उग्गमोऽवि य न सुज्झे। अविमुत्ती अलाघवता दुल्लहसेज्जा विउच्छेओ ॥१॥" इति, तीर्थंकरप्रतिकुष्टः अज्ञातत्वमुद्गमोऽपि च न शुद्ध्यति अविमुक्तिरलाघवता दुर्लभा शय्या व्युच्छेदश्च ॥१॥" राज्ञः–चक्रवर्त्तिवासुदेवादेः पिण्डो राजपिण्डः, इदानीमुभयोरपि जिनयोः समानतानिगमनार्थमाह–'जस्सील' गाहा, यौ शीलसमाचारौ–स्वभावानुष्ठाने यस्य स यच्छीलसमाचारः तावेव शीलसमाचारौ यस्य स तथेति ॥

महापद्मजिनो हि महावीरवदुत्तरफाल्गुनीनक्षत्रजन्मादिव्यतिकर इति नक्षत्रसम्बन्धान्नक्षत्रसूत्रं—

णव णक्खत्ता चंदस्स पच्छंभागा पं० तं०–अभिती समणो धणिट्ठा रेवति अस्सिणि मग्गसिर पूसो। हत्थो चित्ता य तहा पच्छंभागा णव हवंति ॥१॥ (सू० ६९४) आणतपाणतआरणच्चुतेसु कप्पेसु विमाण णव जोयणसयाइं उड्ढं उच्चत्तेणं पं० (सू० ६९५) विमलवाहणे णं कुलकरे णव धणुसताइं उड्ढं उच्चत्तेणं हुत्था (सू० ६९६)

उसभे णं अरहा कोसलिते णं इमीसे ओसप्पिणीए णवहिं सागरोवमकोडाकोडीहिं विईक्कंताहिं तित्थे पवत्तिते (सू० ६९७) घणदंतलट्ठदंतगूढदंतसुद्धदंतदीवाणं दीवा णवणवजोयणसताइं आयामविक्खंभेणं पण्णत्ता (सू० ६९८) सुक्कस्स णं महागहस्स णव वीहीओ पं० तं०—हयवीही गतवीही णागवीही वसहवीही गोवीही उरगवीही अयवीही मितवीही वेसाणरवीही (सू० ६९९) नवविधे नोकसायवेयणिज्जे कम्मे पं० तं०—इत्थिवेते पुरिसवेते णपुंसगवेते हासे रती अरइ भये सोगे दुगुंछे (सू० ७००) चउरिंदियाणं णव जाइकुलकोडीजोणिपमुहसयसहस्सा पण्णत्ता, भुयगपरिसप्पथलयरपंचिंदियतिरिक्खजोणियाणं नवजाइकुलकोडिजोणिपमुहसयसहस्सा पण्णत्ता (सू० ७०१) जीवा णं णवट्ठाणनिवत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा ३ पुढविकाइयनिवत्तिते जाव पंचिंदितनिवत्तिते, एवं चिणउवचिण जाव णिज्जरा चेव (सू० ७०२) णव पएसिता खंधा अणंता पण्णत्ता नवपएसोगाढा पोग्गला अणंता पण्णत्ता जाव णवगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ७०३) नवमं ठाणं नवमज्झयणं समत्तं ॥

कण्ठ्यं च, नवरं 'पच्छंभाग'त्ति पश्चाद्भागश्चन्द्रेण भोगो येषां तानि पश्चाद्भागानि चन्द्रोऽतिक्रम्य यानि भुङ्क्ते, पृष्ठं दत्त्वेत्यर्थः, 'अभिई'गाहा, 'अस्सीइ'त्ति अश्विनी मतान्तरं पुनरेवम्—"अस्सिणिभरणी समणो अणुराहधणिट्ठरेवईपूसो। मियसिरहत्थो चित्ता पच्छिमजोगा मुणेयव्वा ॥१॥" इति [अश्विनी भरणी श्रवणं अनुराधा धनिष्ठा रेवती पुष्यः मृगशिरः हस्तश्चित्रा पश्चिमयोगानि ज्ञातव्यानि ॥१॥] नक्षत्रविमानव्यतिकर उक्त इति विमानविशेषव्यतिकरसूत्रं, व्यक्तं। अनन्तरं विमानानामुच्चत्वमुक्तमिति कुलकर-

विशेषस्योक्तत्वात्सूत्रं कुलकरसम्बन्धाद् वृषभकुलकरसूत्रं ऋषभो मनुष्य इत्यन्तरद्वीपजमनुष्यक्षेत्रविशेषप्रमाणसूत्रं च, सुगमानि चैतानि, नवरं घनदन्तादयः सप्तमा अन्तरद्वीपाः। नवयोजनशतानीत्युक्तमिति समधरणीतलादुपरिष्टान्नवयोजनशताभ्यन्तरचारिणो ग्रहविशेषस्य व्यतिकरमाह—'सुक्कस्से'त्यादि, शुक्रस्य महाग्रहस्य नव वीथयः—क्षेत्रभागाः प्रायस्त्रिभिस्त्रिभिर्नक्षत्रैर्भवन्ति, तत्र हयसंज्ञा वीथी हयवीथीत्येवं सर्वत्र, संज्ञा च व्यवहारविशेषार्थं, या चेह हयवीथी साऽन्यत्र नागवीथीति रूढा नागवीथी चैरावणपदमिति, एतासां च लक्षणं भद्रबाहुप्रसिद्धाभिरार्याभिः क्रमेण लिख्यते—भरणी स्वात्याग्नेयं ३ नागाख्या १ वीथिरुत्तरे मार्गे। रोहिण्यादि ३—रिभाख्या २ चादित्यादिः ३ सुरगजाख्या ३ ॥१॥ (आग्नेयं—कृत्तिका, आदित्यं पुनर्वसुरिति) वृषभाख्या ४ पैत्र्यादिः ३ श्रवणादि ३ मध्यमे जरद्गवाख्याः ५। प्रोष्ठपदादि ४ चतुष्के गोवीथि ६ स्तासु मध्यफलम् ॥२॥ (पैत्र्यं मघा मध्यमे इति—मार्गे प्रोष्ठपदा—पूर्वभद्रपदा) अजवीथी ७ हस्तादि ४ मृगवीथी ८ वैन्द्रदेवतादि स्यात्। दक्षिणमार्गे वैश्वानर्यापाढद्वयं ब्राह्मचम् ॥३॥ (इन्द्रदेवता—ज्येष्ठा ब्राह्मया-भिजिदिति) एतासु भृगुर्विचरति नागगजैरावतीषु वीथिषु चेत्। बहु वर्षेत् पर्जन्यः सुलभौषधयोऽर्थवृद्धिश्च ॥४॥ पशुसंज्ञासु च ३ मध्यमसस्यफलादिर्यदा चरेद् भृगुजः। अजमृगवैश्वानरवीथिष्वर्थभयार्दितो लोकः ॥५॥ इति। वीथिविशेषचारेण च शुक्रादयो ग्रहा मनुजादीनामनुग्रहोपघातकारिणो भवन्तीति द्रव्यादिसामग्र्या कर्मणामुदयादिसद्भावादितिसम्बन्धात् प्रस्तुताध्ययनावतारि कर्म्मस्व-रूपमाह—'नवविहे'त्यादि, इह नोशब्दः साहचर्यार्थः कषायैः—क्रोधादिभिः सहचरा नोकषायाः, केवलानां नैषां प्राधान्यं किंतु अनन्तानुबन्ध्यादिभिः सहोदयं यान्ति तद्विपाकसदृशमेव विपाकमादर्शयन्तीति बुधग्रहवदन्यसंसर्गमनुवर्त्तन्ते, एवं च नोकषायतया वेद्यते यत्कर्म्म तन्नोकषायवेदनीयमिति, तत्र यदुदयेन स्त्रियाः पुंस्यभिलाषः पित्तोदयेन मधुराभिलाषवत् स फुंफुंकाग्निसमानः स्त्रीवेदः,

यदुदयेन पुंसः स्त्रियामभिलाषः श्लेष्मोदयादम्लाभिलाषवत् स दावाग्निज्वालासमानः पुंवेदो, यदुदये नपुंसकस्य स्त्रीपुंसयोरुभयोरभिलाषः पित्तश्लेष्मणोरुदये मज्जिताभिलाषवत् स महानगरदाहाग्निसमानो नपुंसकवेद इति, यदुदयेन सनिमित्तमनिमित्तं वा हसति तत्कर्म्म हास्यं, यदुदयेन सचित्ताचित्तेषु बाह्यद्रव्येषु जीवस्य रतिरुत्पद्यते तद्रतिकर्म्म, यदुदयेन तेष्वेवारतिरुत्पद्यते तदरतिकर्म्म, यदुदयेन भयवर्जितस्यापि जीवस्येहलोकादि सप्तप्रकारं भयमुत्पद्यते तद्भयकर्म्म, यदुदयेन शोकरहितस्यापि जीवस्याक्रन्दनादिः शोको जायते तच्छोककर्मेति, यदुदयेन च विष्ठादिबीभत्सपदार्थेभ्यो जुगुप्सते तज्जुगुप्साकर्म्मेति । अनन्तरं कर्म्मोक्तं, तद्वशवर्त्तिनश्च नानाकुलकोटीभाजो भवन्तीति कुलकोटिसूत्रे तद्गताश्च कर्म्म चिन्वन्तीति चयादिसूत्रषट्कं, कर्म्मपुद्गलप्रस्तावात् पुद्गलसूत्राणि, सुगमानि चैतानि, नवरं 'नव जाई'त्यादि, चतुरिन्द्रियाणां जातौ यानि कुलकोटीनां योनिप्रमुखाणां—योनिद्वारकाणां शतसहस्राणि तानि तथा, भुजैर्गच्छन्तीति भुजगाः—गोधादय इति । इति नवमस्थानकविवरणम् ।

॥ इति श्रीमदभयदेवसूरिविरचिते स्थानाख्यतृतीयाङ्गविवरणे नवस्थानकाख्यं नवममध्ययनं समाप्तम् ॥ श्लोकाः ७०७

# अथ दशमस्थानाध्ययनम् ।

अथ संख्याविशेषसम्बन्धमेव दशस्थानकाध्ययनमारभ्यते, अस्य च पूर्वेण सहायमभिसम्बन्धः-अनन्तराध्ययने जीवाजीवा नवत्वेन प्ररूपिता इह तु त एव दशत्वेन निरूप्यन्त इत्येवंसम्बन्धस्य चतुरनुयोगद्वारस्यास्येदमादि सूत्रम्—

दसविधा लोगट्ठिती पं० तं०—जण्णं जीवा उद्दाइत्ता २ तत्थेव २ भुज्जो २ पच्चायंति एवं एगा लोगट्ठिती पण्णत्ता १ जण्णं जीवाणं सता समियं पावे कम्मे कज्जति एवंप्पेगा लोगट्ठिती पण्णत्ता २ जण्णं जीवा सया समितं मोहणिज्जे पावे कम्मे कज्जति एवंप्पेगा लोगट्ठिती पण्णत्ता ३ ण एवं भूतं वा भव्वं वा भविस्सति वा जं जीवा अजीवा भविस्संति अजीवा वा जीवा भविस्संति एवंप्पेगा लोगट्ठिती पण्णत्ता ४ ण एवं भूतं ३ जं तसा पाणा वोच्छिज्जिस्संति थावरा पाणा वोच्छिज्जिस्संति तसा पाणा भविस्संति वा एवंप्पेगा लोगट्ठिती पण्णत्ता ५ ण एवं भूतं वा ३ जं लोगे अलोगे भविस्सति अलोगे वा लोगे भविस्सति एवंप्पेगा लोगट्ठिती पण्णत्ता ६ ण एवं भूतं वा ३ जं लोए अलोए पविस्सति अलोए वा लोए पविस्सति एवंप्पेगा लोगट्ठिती ७ जाव ताव लोगे ताव ताव जीवा जाव ताव जीवा ताव ताव लोए एवंप्पेगा लोगट्ठिती ८ जाव ताव जीवाण त पोग्गलाण त गतिपरियाते ताव ताव लोए जाव ताव लोगे ताव ताव जीवाण य पोग्गलाण त गतिपरियाते एवंप्पेगा लोगट्ठिती ९,

सव्वेसुवि णं लोगंतेसु अबद्धपासपुट्ठा पोग्गला लुक्खत्ताते कज्जति जेणं जीवा त पोग्गला त नो संचायंति बहिता लोगंता गमणयाते एवंप्पेगा लोगट्ठिती पण्णत्ता १० (सू० ७०४)

'दसविहा लोगे'त्यादि, अस्य च पूर्वसूत्रेण सहायमभिसम्बन्धः- पूर्वं नवगुणरूक्षाः पुद्गला अनन्ता इत्युक्तं ते चासंख्येयप्रदेशे लोके संमान्तीति लोकस्थितिरतः सैवेहोच्यते इत्येवंसम्बन्धस्यास्य व्याख्या, इहापि संहितादिचर्चः प्रथमाध्ययनवत् केवलं लोकस्य-पञ्चास्तिकायात्मकस्य स्थितिः-स्वभावः लोकस्थितिर्यदित्युद्देशे णमिति वाक्यालङ्कारे 'उद्दाइत्त'त्ति अपद्राय मृत्वेत्यर्थः, 'तत्थेव'त्ति लोकदेशे गतौ योनौ कुले वा सान्तरं निरन्तरं वौचित्येन भूयो भूयः- पुनः पुनः 'प्रत्याजायन्ते' प्रत्युत्पद्यन्त इत्येवमप्येका लोकस्थितिरिति, अपिशब्द उत्तरवाक्यापेक्षया, अपिः क्वचिन्न दृश्यते, अथ द्वितीया-'जन्न' मित्यादि, सदा-प्रवाहतोऽनाद्यपर्यवसितं कालं 'समियं'ति निरन्तरं पापं कर्म-ज्ञानावरणादिकं सर्व्वमपि मोक्षविबन्धकत्वेन सर्वस्यापि पापत्वादिति क्रियते-बध्यते इत्येवमप्येका अन्येत्यर्थः, सततं कर्म्मबन्धनमिति द्वितीया २, 'मोहणिज्जे'त्ति मोहनीय प्रधानतया भेदेन निर्द्दिष्टमिति सततं मोहनीयबन्धनं तृतीया ३, जीवाजीवानामजीवजीवत्वाभावश्चतुर्थी ४, त्रसानां स्थावराणां चाव्यवच्छेदः पञ्चमी ५, लोकालोकयोरलोकलोकत्वेनाभवनं षष्ठी ६, तयोरेवान्योऽन्याप्रवेशः सप्तमी ७, 'जाव ताव लोए ताव ताव जीव'त्ति यावल्लोकस्तावज्जीवाः, यावति क्षेत्रे लोकव्यपदेशस्तावति क्षेत्रे जीवा इत्यर्थः, 'जाव ताव जीवा ताव ताव लोए'त्ति, इह यावज्जीवास्तावत्तावल्लोको, यावति यावति क्षेत्रे जीवास्तावत्क्षेत्रं लोक इति भावार्थः, 'जाव तावे'त्यादिवाक्यरचना तु भाषामात्रमित्यष्टमी ८, यावज्जीवादीनां गतिपर्यायस्तावल्लोक इति नवमी ९, सर्वेषु लोकान्तेषु 'अबद्धपासपुट्ठ'त्ति बद्धा-गाढश्लेषाः पार्श्वस्पृष्टाः-छुप्तमात्रा ये न तथा तेऽबद्धपार्श्वस्पृष्टाः रूक्षद्रव्यान्त-

रेणेति गम्यते तत्सम्पर्कादजातरूक्षपरिणामाः सन्त इति भावः, लोकान्ते स्वभावात् पुद्गलाः रूक्षतया क्रियन्ते—रूक्षतया परिणमन्ति, अथवा लोकान्तस्वभावाद्या रूक्षता भवति तया ते पुद्गला अबद्धपार्श्वस्पृष्टाः—परस्परमसम्बद्धाः क्रियन्ते, किं सर्वथा ?, नैवं, अपि तु नेनेत्यस्य गम्यमानत्वात्तेन रूपेण क्रियन्ते येन जीवाः सकर्मपुद्गलाः, पुद्गलाश्च—परमाण्वादयो, 'नो संचायंति'त्ति न शक्नुवन्ति बहिस्माल्लोकान्तात् गमनतायै—गन्तुमिति, छान्दसत्वेन तुमर्थे युट्प्रत्ययविधानादिति, एवमप्यन्या लोकस्थितिर्दशमी, शेषं कण्ठ्यमिति ॥

लोकस्थितेरेव विशिष्टवक्तृनिसृष्टा अपि शब्दपुद्गला लोकान्त एव गच्छन्तीति प्रस्तावाच्छब्दभेदानाह—

दसविहे सद्दे पं० तं०—नीहारि १ पिंडिमे २ लुक्खे ३, भिन्ने ४ जज्जरिते ५ इत । दीहे ६ रहस्से ७ पुहुत्ते ८ त काकणी ९ खिंखिणिस्सरे १० ॥१॥ (सू० ७०५) दस इंदियत्थातीता पण्णत्ता तं०—देसेणवि एगे सद्दाइं सुणिंसु सव्वेणवि एगे सद्दाइं सुणिंसु देसेणवि एगे रूवाइं पासिंसु सव्वेणवि एगे रूवाइं पासिंसु, एवं गंधाइं रसाइं फासाइं जाव सव्वेणवि एगे फासाइं पडिसंवेदेंसु, दस इंदियत्था पडुप्पन्ना पं० तं०—देसेणवि एगे सद्दाइं सुणेंति सव्वेणवि एगे सद्दाइं सुणेति, एवं जाव फासाइं, दस इंदियत्था अणागता पं० तं०—देसेणवि एगे सद्दाइं सुणिस्संति सव्वेणवि एगे सद्दाइं सुणेस्संति एवं जाव सव्वेणवि एगे फासाइं पडिसंवेदेस्संति (सू० ७०६)।

'दसविहे' इत्यादि, 'नीहारी' सिलोगो, निर्हारी—घोषवान् शब्दो घण्टाशब्दवत् पिण्डेन निर्वृत्तः पिण्डिमो—घोषवर्जितः ढक्का-

दिशब्दवत् रूक्षः काकादिशब्दवत् भिन्नः कुष्ठाद्युपहतशब्दवत् झर्झरितो जर्जरितो वा सतन्त्रीककरटिकादिवाद्यशब्दवत् दीर्घो–दीर्घवर्णाश्रितो दूरश्रव्यो वा मेघादिशब्दवत् ह्रस्वो–ह्रस्ववर्णाश्रयो विवक्षया लघुर्वा वीणादिशब्दवत् , 'पुहत्ते य'त्ति पृथक्त्वे–अनेकत्वे, कोऽर्थो ?–नानातूर्यादिद्रव्ययोगे यः स्वरो यमलशङ्खादिशब्दवत् स पृथक्त्व इति, 'काकणी'ति सूक्ष्मकण्ठगीतध्वनिः काकलीति यो रूढः 'खिंखिणी'ति किंकिणी–क्षुद्रघण्टिका तस्याः स्वरो–ध्वनिः किङ्किणीस्वरः । अनन्तरं शब्द उक्तः, स चेन्द्रियार्थ इति कालभेदेनेन्द्रियार्थान् प्ररूपयन्सूत्रत्रयमाह—'दस इंदिये'त्यादि, कण्ठ्यं, नवरं 'देसेणवि'त्ति विवक्षितशब्दसमूहापेक्षया देशेन–देशतः कांश्चिदित्यर्थः एकः कश्चिच्छ्रुतवानिति । 'सव्वेणवि'त्ति सर्वतया सर्वानित्यर्थः, इन्द्रियापेक्षया वा श्रोत्रेन्द्रियेण देशतः सम्भिन्नश्रोतोलब्धियुक्तावस्थायां सर्वेन्द्रियैः सर्वतोऽथवैककर्णेन देशत उभाभ्यां सर्वतः, एवं सर्वत्र, पडुप्पन्न'त्ति प्रत्युत्पन्ना वर्तमानाः ।

इन्द्रियार्थाश्च पुद्गलधर्मा इति पुद्गलस्वरूपमाह—

दसहिं ठाणेहिमच्छिन्ने पोग्गले चलेज्जा, तं०—आहारिज्जमाणे वा चलेज्जा परिणामेज्जमाणे वा चलेज्जा उस्ससिज्जमाणे वा चलेज्जा निस्ससिज्जमाणे वा चलेज्जा वेदेज्जमाणे वा चलेज्जा णिज्जरिज्जमाणे वा चलेज्जा विउव्विज्जमाणे वा चलेज्जा परियारिज्जमाणे वा चलेज्जा जक्खातिट्ठे वा चलेज्जा वातपरिग्गणे वा चलेज्जा (सू० ७०७) दसहिं ठाणेहिं कोधुप्पत्ती सिया तं०—मणुन्नाइं मे सद्दफरिसरसरूवगंधाइमवहरिंसु १ अमणुन्नाइं मे सद्दफरिसरसरूवगंधाइं उवहरिंसु २ मणुण्णाइं मे सद्दफरिसरसरूवगंधाइं अवहरइ ३ अमणुन्नाइं मे सद्दफरिसजावगंधाइं उव-

हरति ४ मणुण्णाइं मे सद्द जाव अवहरिस्सति ५ अमणुण्णाइं मे सद्द जाव उवहरिस्सति ६ मणुण्णाइं मे सद्द जाव गंधाइं अवहरिंसु वा अवहरइ अवहरिस्सति ७ अमणुण्णाइं मे सद्द जाव उवहरिंसु वा उवहरति उवहरिस्सति ८ मणुण्णामणुण्णाइं सद्द जाव अवहरिंसु अवहरति अवहरिस्सइ उवहरिंसु उवहरति उवहरिस्सति ९ अहं च णं आयरियउवज्झायाणं सम्मं वट्टामि ममं च णं आयरियउवज्झाया मिच्छं पडिवन्ना १० (सू० ७०८)

दसविधे संजमे पं० तं०—पुढविकातितसंजमे जाव वणस्सतिकाय संजमे बेइंदितसंजमे तेंदितसंजमे चउरिंदितसंजमे पंचिंदियसंजमे अजीवकायसंजमे। दसविधे असंजमे पं० तं०—पुढविकातितअसंजमे आउ० तेउ० वाउ० वणस्सति० जाव अजीवकायअसंजमे। दसविधे संवरे पं० तं०—सोतिंदियसंवरे जाव फासिंदितसंवरे मण० वय० काय० उवकरणसंवरे सूचीकुसग्गसंवरे। दसविधे असंवरे पं० तं०—सोतिंदितअसंवरे जाव सूचीकुसग्गअसंवरे (सू० ७०९)।

'दसही'त्यादि स्पष्टं, नवरं 'अच्छिन्ने'त्ति अच्छिन्नः—अपृथग्भूतः शरीरे विवक्षितस्कन्धे वा सम्बद्धः चलेत्—स्थानान्तरे गच्छेत् 'आहारेज्जमाणे'त्ति आह्रियमाणः—खाद्यमानः पुद्गलः आहारे वा अभ्यवह्रियमाणे सति पुद्गलश्चलेत् परिणम्यमानः पुद्गल एवोदराग्निना खलरसभावेन परिणम्यमाणे वा भोजने उच्छ्वस्यमानः—उच्छ्वासवायुपुद्गलः उच्छ्वस्यमाने वा—उच्छ्वसिते क्रियमाणे एवं निःश्वस्यमानो निःश्वस्यमाने वा वेद्यमानो निर्जीर्यमाणश्च कर्म्मपुद्गलोऽथवा वेद्यमाने निर्जीर्यमाणे च कर्म्मणि वैक्रियमाणो—वैक्रियशरीरतया परिणम्यमानः वैक्रियमाणे वा शरीरे परिचार्यमाणो—मैथुनसंज्ञाया विषयी क्रियमाणः शुक्रपुद्गलादिः परिचार्यमाणे वा—भुज्यमाने

स्त्रीशरीरादौ शुक्रादिरेव यक्षाविष्टो-भूताद्यधिष्ठितः यक्षाविष्टे वा सति पुरुषे यक्षावेशे वा सति तच्छरीरलक्षणः पुद्गलः वातपरिगतो-देहगतवायुप्रेरितः वातपरिगते वा देहे सति बाह्यवातेन वोत्क्षिप्त इति । पुद्गलाधिकारादेव पुद्गलधर्मानिन्द्रियार्थानाश्रित्य यद्भवति तदाह—'दसही'त्यादि गतार्थं नवरं स्थानविभागोऽयम्-तत्र मनोज्ञान् शब्दादीन् मेऽपहृतवानित्येवं भावयतः क्रोधोत्पत्तिः स्यादित्येकं, एवं अमनोज्ञानुपहृतवान्-उपनीतवान् , इह चैकवचनबहुवचनयोर्न विशेषः प्राकृतत्वादिति द्वितीय, एवं वर्त्तमाननिर्देशेनापि द्वयं भविष्यतापि द्वयमित्येवं षट्, तथा मनोज्ञानामपहारतः कालत्रयनिर्देशेन सप्तमः, एवममनोज्ञानामुपहारतोऽष्टमं, मनोज्ञामनोज्ञानामपहारोपहारतः कालत्रयनिर्देशेन नवमं, अहं चेत्यादि दशमं 'मिच्छं'ति वैपरीत्यं विशेषेण प्रतिपन्नौ विप्रतिपन्नाविति । क्रोधोत्पत्तिः संयमिनां नास्तीति संयमसूत्रं, संयमविपक्षश्चासंयम इत्यसंयमसूत्रमसंयमविपक्षः संवर इति संवरसूत्रं संवरविपरीतोऽसंवर इत्यसंवरसूत्रं, सुगमानि चैतानि, नवरमुपकरणसंवरः-अप्रतिनियताकल्पनीयवस्त्राद्यग्रहणरूपोऽथवा विप्रकीर्णस्य वस्त्राद्युपकरणस्य संवरणमुपकरणसंवरः, अय चौधिकोपकरणापेक्षः तथा शूच्याः कुशाग्राणां च शरीरोपघातकत्वाद्यत्संवरणं-सङ्गोपनं स शूचीकुशाग्रसंवरः, एष तूपलक्षणत्वात्समस्तौपग्रहिकोपकरणापेक्षो द्रष्टव्यः, इह चान्त्यपदद्वयेन द्रव्यसंवरावुक्ताविति ।

असंवरस्यैव विशेषमाह—

दसहिं ठाणेहिं अहमन्तीति थंभिज्जा, तं०—जातिमतेण वा कुलमएण वा जाव इस्सरियमतेण वा ८ णागसुवन्ना वा मे अंतितं हव्वमागच्छंति ९ पुरिसधम्मातो वा मे उत्तरिते अहोधिते णाणदंसणे समुप्पन्ने १० (सू०

७१०) दसविधा समाधी पं० तं०—पाणातिवायवेरमणे मुसा० अदिन्ना० मेहुण० परिग्गहा० ईरितासमिती भासासमिती एसणासमिती आयाण० उच्चारपासवणखेलसिंघाणगपारिट्ठावणितासमिती, दसविधा असमाधी प० तं०—पाणातिवाते जाव परिग्गहे ईरिताऽसमिती जाव उच्चारपासवणखेलसिंघाणगपारिट्ठावणियाऽसमिती (सू० ७११) दसविधा पव्वज्जा पं० तं०—छन्दा १ रोसा २ परिजुन्ना ३ सुविणा ४ पडिस्सुता ५ चेव। सारणिता ६ रोगिणीता ७ अणाढिता ८ देवसन्नत्ती ९. ॥१॥ वच्छाणुबंधिता १०। दसविधे समणधम्मे पं० तं०—खन्ती मुत्ती अज्जवे मद्दवे लाघवे सच्चे संजमे तवे चिताते बंभचेरवासे, दसविधे वेयावच्चे पं० तं०—आयरियवेयावच्चे १ उवज्झायवेयावच्चे २ थेरवेयावच्चे ३ तवस्सि० ४ गिलाण० ५ सेह० ६ कुल० ७ गण० ८ संघवेयावच्चे ९ साहम्मियवेयावच्चे १० (सू० ७१२)। दसविधे जीवपरिणामे पं० तं०—गतिपरिणामे इंदितपरिणामे कसायपरिणामे लेसा० जोगपरिणामे उवओग० णाण० दंसण० चरित्त० वेतपरिणामे। दसविधे अजीवपरिणामे पं०, तं०-बंधणपरिणामे गति० संठाणपरिणामे भेद० वण्ण० रस० गंध० फास० अगुरुलहु० सद्दपरिमाणे (सू० ७१३)।

'दसही'त्यादि, स्पष्टं, नवरं 'अहमन्ती'ति अहं अन्ता इति अन्तो—जात्यादिप्रकर्षपर्यन्तोऽस्यास्तीत्यन्तः अहमेव जात्यादिभिरुत्तमतया पर्यन्तवर्त्ती, अथवाऽनुस्वारप्राकृततयेति अहं अतिः—अतिशयवानिति एवंविधोल्लेखेन 'थंभिज्ज'त्ति स्तभ्नीयात्—स्तब्धो भवेत् मानोदित्यर्थः, यावत्करणात् 'बलमएण रूवमएण सुयमएण तवमएण लाभमएणे'ति दृश्यं, तथा 'नागसुवन्ने'ति नागकुमाराः सुपर्णकुमाराश्च वा विकल्पार्थः मे—मम अन्तिकं—समीपं 'हव्वं' शीघ्रमागच्छन्तीति. पुरुषाणां—प्राकृतपुरुषाणां धर्मो—ज्ञानपर्यायलक्षण-

स्तस्माद्वा सकाशात् उत्तरः–प्रधानः स एवौत्तरिकः 'अहोधिय'त्ति नियतक्षेत्रविषयोऽवधिस्तद्रूपं ज्ञानदर्शनं प्रतीतमिति। उक्तमदविलक्षणः समाधिरिति तत्सूत्रमेतद्विपक्षोऽसमाधिरिति तत्सूत्रं, समाधीतरयोराश्रयः प्रव्रज्येति तत्सूत्रं, प्रव्रज्यावतश्च श्रमणधर्मस्तद्विशेषश्च वैयावृत्त्यमिति तत्सूत्रे जीवधर्माश्चैत इति जीवपरिणामसूत्रमेतद्विलक्षणत्वादजीवपरिणामसूत्रं, सुगमानि चैतानि, नवरं 'समाहि'त्ति समाधानं समाधिः–समता सामान्यतो रागाद्यभाव इत्यर्थः, स चोपाधिभेदाद्दशधेति। 'छंदा'गाहा, 'छन्द'त्ति छन्दात् स्वकीयादभिप्रायविशेषाद्गोविंदवाचकस्येव सुन्दरीनन्दस्येव वा, परकीयाद्वा भ्रातृवशभवदत्तस्येव या सा छन्दा 'रोसा य'त्ति रोषात् शिवभूतेरिव या सा रोषा 'परिजुण्ण'त्ति परिद्युना दारिद्र्यात्काष्ठहारकस्येव या सा परिद्यूना 'सुविणे'त्ति स्वप्नात् पुष्पचुलाया इव या स्वप्ने वा या प्रतिपद्यते सा स्वप्ना 'पडिसुया चेव'त्ति प्रतिश्रुतात्–प्रतिज्ञानाद् या सा प्रतिश्रुता शालिभद्रभगिनीपतिधन्यकस्येव 'सारणिय'त्ति स्मारणाद्या सा स्मारणिका मल्लिनाथस्मारितजन्मान्तराणां प्रतिबुद्ध्यादिराजानामिव 'रोगिणिय'त्ति रोगः आलम्बनतया विद्यते यस्यां सा रोगिणी सैव रोगिणिका सनत्कुमारस्येव 'अणाढिय'त्ति अनादृताद्–अनादराद्या सा अनादृता नंदिषेणस्येव अनादृतस्य वा–शिथिलस्य या सा तथा 'देवसन्नत्ति'त्ति देवसंज्ञप्तेः–देवप्रतिबोधनाद्या सा तथा मेतार्यादेरिवेति, 'वच्छाणुबंधा य'त्ति गाथातिरिक्तं वत्सः–पुत्रस्तदनुबन्धो यस्यामस्ति सा वत्सानुबन्धिका, वैरस्वामिमातुरिवेति, श्रमणधर्मो व्याख्यात एव, नवरं 'चियाए'त्ति त्यागो दानधर्म्म इति। व्यावृत्तो व्यापृतो वा व्यापारस्तत्कर्म वैयावृत्त्यं वैयापृत्त्यं वा भक्तपानादिभिरुपष्टम्भ इत्यर्थः, 'साहम्मिय'त्ति समानो धर्म्मः सधर्म्मस्तेन चरन्तीति साधर्म्मिकाः–साधवः। 'परिणामे' त्यादि, परिणमनं परिणामस्तद्भावगमनमित्यर्थः, यदाह–"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानं। न च सर्वथा विनाशः परिणामस्तद्विदा-

मिश्रः ॥१॥" द्रव्यार्थनयस्येति, "सत्पर्ययेण नाशः प्रादुर्भावोऽसता च पर्ययतः। द्रव्याणां परिणामः प्रोक्तः खलु पर्ययनयस्य ॥१॥" इति, जीवस्य परिणामः २ इति विग्रहः, स च प्रायोगिकः, तत्र गतिरेव परिणामो गतिपरिणामः, एवं सर्वत्र, गतिश्चेह गतिनामकर्मोदयान्नारकादिव्यपदेशहेतुः तत्परिणामश्चाऽऽभवक्षयादिति, स च नरकगत्यादिश्चतुर्विधः, गतिपरिणामे च सत्येवेन्द्रियपरिणामो भवतीति तमाह—'इंदियपरिणामे'त्ति स च श्रोत्रादिभेदात् पञ्चधेति, इन्द्रियपरिणतौ चेष्टानिष्टविषयसम्बन्धाद्रागद्वेषपरिणतिरिति तदनन्तरं कषायपरिणाम उक्तः, स च क्रोधादिभेदाच्चतुर्विधः, कषायपरिणामे च सति लेश्यापरिणतिर्न तु लेश्यापरिणतौ कषायपरिणतिः, येन क्षीणकषायस्यापि शुक्ललेश्यापरिणतिर्देशोनपूर्वकोटिं यावद् भवति, यत उक्तम्—"मुहुत्तद्धं तु जहन्ना उक्कोसा होइ पुव्वकोडीओ। नवहिं वरिसेहिं ऊणा नायव्वा सुक्कलेस्साए ॥१॥" इति [शुक्ललेश्याया जघन्या स्थितिर्मुहूर्त्तार्धं नववर्षोना पूर्वकोटी उत्कृष्टा ज्ञातव्या भवति ॥१॥] अतो लेश्यापरिणाम उक्तः, स च कृष्णादिभेदात् षोढेति, अयं च योगपरिणामे सति भवति, यस्मान्निरुद्धयोगस्य लेश्यापरिणामोऽपैति, यतः—'समुच्छिन्नक्रियं ध्यानमलेश्यस्य भवती'ति लेश्यापरिणामानन्तरं योगपरिणाम उक्तः, स च मनोवाक्कायभेदात्त्रिधेति, संसारिणां च योगपरिणतावुपयोगपरिणतिर्भवतीति तदनन्तरमुपयोगपरिणाम उक्तः, स च साकारानाकारभेदाद् द्विधा, सति चोपयोगपरिणामे ज्ञानपरिणामोऽतस्तदनन्तरमसावुक्तः, स चाभिनिबोधिकादिभेदात् पञ्चधा, तथा मिथ्यादृष्टेर्ज्ञानमप्यज्ञानमित्यज्ञानपरिणामो मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानलक्षणस्त्रिविधोऽपि विशेषग्रहणसाधर्म्यात् ज्ञानपरिणामग्रहणेन गृहीतो द्रष्टव्य इति, ज्ञानाज्ञानपरिणामे च सति सम्यक्त्वादिपरिणतिरिति ततो दर्शनपरिणाम उक्तः, स च त्रिधा-सम्यक्त्वमिथ्यात्वमिश्रभेदात्, सम्यक्त्वे सति चारित्रमिति ततस्तत्परिणाम उक्तः, स च सामायिकादिभेदात् पञ्चधेति, स्त्र्यादिवेदपरिणामे चारित्रपरिणामो

न तु चारित्रपरिणामे वेदपरिणतिर्यस्मादवेदकस्यापि यथाख्यातचारित्रपरिणतिर्दृष्टेति चारित्रपरिणामानन्तरं वेदपरिणाम उक्तः, स च स्त्र्यादिभेदात् त्रिविध इति । 'अजीवे'त्यादि, अजीवानां–पुद्गलानां परिणामोऽजीवपरिणामः, तत्र बन्धनं–पुद्गलानां परस्परं सम्बन्धः संश्लेष इत्यर्थः स एव परिणामो बन्धनपरिणामः, एवं सर्वत्र, बन्धनपरिणामलक्षणं चैतत्—"समनिद्धयाए बंधो न होइ समलुक्खयायवि न होइ । वेमायनिद्धलुक्खत्तणेण बंधो उ खंधाणं ॥१॥" [समस्निग्धतया बंधो न भवति समरूक्षतयापि न भवति विमात्रस्निग्धरूक्षत्वेन स्कन्धानां बन्धः ॥१॥] एतदुक्तं भवति–समगुणस्निग्धस्य समगुणस्निग्धेन परमाण्वादिना बन्धो न भवति, समगुणरूक्षस्यापि समगुणरूक्षेणेति, यदा विषमा मात्रा तदा भवति बन्धो, विषममात्रानिरूपणार्थमुच्यते "निद्धस्स निद्धेण दुयाहिएणं, लुक्खस्स लुक्खेण दुयाहिएणं । निद्धस्स लुक्खेण उवेइ बंधो, जहन्नवज्जो विसमो समो वा ॥१॥"इति [स्निग्धस्य द्विकाधिकेन स्निग्धेन रूक्षस्य द्विकाधिकेन रूक्षेण रूक्षेण स्निग्धस्य बन्ध उपपद्यते विषमः समो वा जघन्यवर्ज्यः ॥१॥] गतिपरिणामो द्विविधः–स्पृशद्गतिपरिणाम इतरश्च, तत्राद्यो येन प्रयत्नविशेषात् क्षेत्रप्रदेशान् स्पृशन् गच्छति, द्वितीयस्तु येनास्पृशन्नेव तान् गच्छति, न चायं न सम्भाव्यते, गतिमद्द्रव्याणां प्रयत्नभेदोपलब्धेः, तथाहि–अभ्रङ्कषहर्म्यतलगतविमुक्ताश्मपातकालभेद उपलभ्यते अनवरतगतिप्रवृत्तानां च देशान्तरप्राप्तिकालभेदश्चेत्यतः सम्भाव्यतेऽस्पृशद्गतिपरिणाम इति, अथवा दीर्घह्रस्वभेदात् द्विविधोऽयमिति, संस्थानपरिणामः परिमण्डलवृत्तत्र्यस्रचतुरस्रायतभेदात् पञ्चविधः, भेदपरिणामः पञ्चधा, तत्र खण्डभेदः, क्षिप्तमृत्पिण्डस्येव १ प्रतरभेदोऽभ्रपटलस्येव २ अनुतटभेदो वंशस्येव ३ चूर्णभेदः चूर्णनं ४ उत्करिकाभेदः समुत्कीर्यमाणप्रस्थकस्येवेति, वर्णपरिणामः पञ्चधा गन्धपरिणामो द्विधा रसपरिणामः पञ्चधा स्पर्शपरिणामोऽष्टधा, न गुरुकमधोगमनस्वभावं न लघुकमूर्ध्वगमनस्वभावं यद्द्रव्यं तदगुरुकलघुकं–अत्यन्तसूक्ष्मं

भाषामनःकर्मद्रव्यादि तदेव परिणामः परिणामतद्वतोरभेदात् अगुरुलघुकपरिणामः एतद्ग्रहणेनैतद्विपक्षोऽपि गृहीतो द्रष्टव्यः, तत्र गुरुकं न विवक्षया लघुकं च विवक्षयैव यद् द्रव्यं तद्गुरुकलघुकं औदारिकादि स्थूलतरमित्यर्थः, इदमुक्तस्वरूपं द्विविधं वस्तु निश्चयनयमतेन व्यवहारतस्तु चतुर्द्धा, तत्र गुरुकं-अधोगमनस्वभावं वज्रादि लघुकं-ऊर्ध्वगमनस्वभावं धूमादि गुरुकलघुकं-तिर्यग्गामि वायुज्योतिष्कविमानादि अगुरुलघुकं-आकाशादिति, आह च भाष्यकारः—"निच्छयओ सव्वगुरू सव्वलहुं वा न विज्जई दव्वं। बायरमिह गुरुलहुयं अगुरुलहु सेसयं दव्वं ॥१॥ गुरुयं लहुयं उभयं णोभयमिति वावहारियनयस्सा। दव्वं लेट्ठू १ दीवो २ वाऊ ३ वोमं ४ जहासंखं ॥२॥" इति [निश्चयतः सर्वगुरु सर्वलघु वा द्रव्यं न विद्यते बादरं इह गुरुलघुकं शेषं द्रव्यमगुरुलघुकं ॥१॥ गुरु लघु उभयं अनुभयं न द्रव्यं व्यवहारनयस्येति लेष्टु १-र्दीपः २ वायुः ३ व्योम ४ यथासंख्यं ॥२॥] शब्दपरिणामः शुभाशुभभेदाद् द्विधेति।

अजीवपरिणामाधिकारात् पुद्गललक्षणाजीवपरिणाममन्तरिक्षलक्षणाजीवपरिणामोपाधिकमस्वाध्यायिकव्यपदेश्यं 'दसविहे'त्यादिना सूत्रेणाह—

दसविधे अंतलिक्खिते असज्झाइए पं० तं०—उक्कावाते दिसिदाघे गज्जिते विज्जुते निग्घाते जूयते जक्खालित्ते धूमिता महिता रतउग्घाते। दसविहे ओरालिते असज्झातिते पं० तं०—अट्ठि मंसं सोणिते असुतिसामंते सुसाणसामंते चंदोवराते सूरोवराए पडणे रायवुग्गहे उवसयस्स अंतो ओरालिए सरीरगे (सू० ७१४) पंचिंदियाणं जीवाणं असमारभमाणस्स दसविधे संजमे कज्जति, तं०-सोयामताओ सुक्खाओ अववरोवेत्ता भवति सोतामतेण

दुक्खेणं असंजोगेत्ता भवति एवं जाव फासामतेणं दुक्खेणं असंजोएत्ता भवति, एवं असंयमोवि भाणितव्वो ॥ (सू० ७१५)

तत्र 'अंतलिक्खए'त्ति अन्तरिक्षं-आकाशं तत्र भवमान्तरीक्षकं स्वाध्यायो-वाचनादिः पञ्चविधो यथासम्भवं यस्मिन्नस्ति तत्स्वाध्यायिकं तदभावोऽस्वाध्यायिकं तत्रोल्का-आकाशजा तस्याः पातः उल्कापातः, तथा दिशो दिशि वा दाहो दिग्दाहः, इदमुक्तं भवति-एकतरदिग्विभागे महानगरप्रदीपनकमिव य उद्योतो भूमावप्रतिष्ठितो गगनतलवर्त्ती स दिग्दाह इति, गर्जितं-जीमूतध्वनिः, विद्युत्-तडित् निर्घातः-साभ्रे निरभ्रे वा गगने व्यन्तरकृतो महागर्जितध्वनिः, 'जूयए'त्ति सन्ध्याप्रभा चन्द्रप्रभा च यद्युगपद् भवतस्तत् जुयगोत्ति भणितं, सन्ध्याप्रभाचन्द्रप्रभयोर्मिश्रत्वमिति भावः, तत्र चन्द्रप्रभाऽऽवृत्ता सन्ध्या अपगच्छन्ती न ज्ञायते शुक्लपक्षप्रतिपदादिषु दिनेषु, सन्ध्याच्छेदे वाऽज्ञायमाने कालवेला न जानन्त्यतस्त्रीणि दिनानि प्रादोषिकं कालं न गृह्णन्ति ततः कालिकस्यास्वाध्यायः स्यादिति, उल्कादीनां चेदं स्वरूपं—"दिसिदाहो छिन्नमूलो उक्कसरेहा पयासजुत्ता वा। संझाछेयावरणो जुयओ सुक्के दिणे तिन्नि ॥१॥" [छिन्नमूलो दिग्दाहः सरेखा प्रकाशयुक्ता वा उल्का संध्याछेदावरणस्तु यूपक एव शुक्ले त्रीणि दिनानि ॥१॥] 'जक्खालित्त'त्ति यक्षादीप्तमाकाशे भवति, एतेषु स्वाध्यायं कुर्वतां क्षुद्रदेवता छलनां करोति, धूमिका-महिकाभेदो वर्णतो धूमिका धूमाकारा धूम्रेत्यर्थः, महिका प्रतीता, एतच्च द्वयमपि कार्त्तिकादिषु गर्भमासेषु भवति, तच्च पतनान्तरमेव सूक्ष्मत्वात्सर्वमप्कायभावितं करोतीति, 'रयउग्घाए'त्ति विश्रसापरिणामतः समन्ताद्रेणुपतनं रजउद्घातो भण्यते। अस्वाध्यायाधिकारादेवेदमाह-'दसविहे ओरालिए'इत्यादि, औदारिकस्य-मनुष्यतिर्यक्शरीरस्येदमौदारिकमस्वाध्यायिकं, तत्रास्थिमांसशोणितानि प्रतीतानि, तत्र पञ्चेन्द्रियतिरश्चा-

मस्वाध्यायिकं द्रव्यतोऽस्थिमांसशोणितानि ग्रन्थान्तरे चर्म्माण्यधीयते. यदाह—"सोणिय मंसं चम्मं अट्ठीवि य होंति चत्तारि" इति, [शोणितं मांसं चर्म्मास्थि भवन्त्यपि चत्वारि ॥] क्षेत्रतः षष्टिहस्ताभ्यन्तरे, कालतः सम्भवकालाद्यावत्तृतीया पौरुषी मार्जारादिभिर्मूषिकादिव्यापादनेऽहोरात्रं चेति, भावतः सूत्रं नन्द्यादिकं नाध्येतव्यमिति, मनुष्यसम्बन्ध्यप्येवमेव, नवरं क्षेत्रतो हस्तशतमध्ये कालतोऽहोरात्रं यावत् आर्त्तवं दिनत्रयं स्त्रीजन्मनि दिनाष्टकं पुरुषजन्मनि दिनसप्तकं अस्थीनि तु जीवविमोक्षदिनादारभ्य हस्तशताभ्यन्तरस्थितानि द्वादश वर्षाणि यावदस्वाध्यायिकं भवति, चिताग्निना दग्धान्युदकवाहेन वा व्यूढान्यस्वाध्यायिकं न भवति, भूमिनिखातान्यस्वाध्यायिकमिति, तथा अशुचीनि—अमेध्यानि मूत्रपुरीषाणि तेषां सामन्तं—समीपमशुचिसामन्तमस्वाध्यायिकं भवति, उक्तं च कालग्रहणमाश्रित्य—"सोणियमुत्तपुरीसे घाणालोयं परिहरेज्जा" इति [शोणितमूत्रपुरीषेषु घ्राणालोकौ परिहरेत्] श्मशानसामन्तं—शवस्थानसमीपं, चन्द्रस्य—चन्द्रविमानस्योपरागो—राहुविमानतेजसोपरञ्जनं चन्द्रोपरागो ग्रहणमित्यर्थः, एवं सूरोपरागोऽपि, इह चेदं कालमानं—यदि चन्द्रः सूर्यो वा ग्रहणे सति सग्रहोऽन्यथा वा निमज्जति तदा ग्रहणकालं तद्रात्रिशेषं तदहोरात्रशेषं च ततः परमहोरात्रं च वर्जयन्ति, आह च—"चंदिमसूरुवरागे निग्घाए गुंजिए अहोरत्तं" इति [चन्द्रसूर्योपरागे निर्घाते गुंजितेऽहोरात्रं] आचरितं तु यदि तत्रैव रात्रौ दिने वा मुक्तस्तदा चन्द्रग्रहणे तस्या एव रात्रेः शेषं परिहरन्ति, सूर्यग्रहणे तु तद्दिनशेषं परिहृत्यानन्तरं रात्रिमपि परिहरन्तीति, आह च—"आइन्नं दिणमुक्के सोच्चिय दिवसो व राई य ।"इति [आचीर्णं दिनमुक्ते स एव दिवसः रात्रिर्वा ॥]चन्द्रसूर्योपरागयोश्चौदारिकत्वं तद्विमानपृथिवीकायिकापेक्षयाऽवसेयमान्तरीक्षकत्वं तु सदपि न विवक्षितं, आन्तरीक्षत्वेनोक्तेभ्य आकस्मिकेभ्य उल्कादिभ्यश्चन्द्रादिविमानानां शाश्वतत्वेन विलक्षणत्वादिति, 'पडणे'त्ति पतनं—मरणं राजामात्यसेनापतिग्रामभोगिकादीनां, तत्र यदा दण्डिकः कालगतो भवति

राजा वाऽन्यो यावन्न भवति तदा समये निर्भये वा स्वाध्यायं वर्जयतीति निर्भयश्रवणानन्तरमप्यहोरात्रं वर्जयन्तीति ग्राममहत्तरेऽधिकारनियुक्ते बहुस्वजने वा शय्यातरे वा पुरुषान्तरे वा सप्तगृहाभ्यन्तरमृतेऽहोरात्रं स्वाध्यायं वर्जयन्ति शनैर्वा पठन्ति, निर्दुःखा एत इति गर्हां लोको मा कार्षीदिति, आह च—"मयहर पगए बहुपक्खिए य सत्तघर अंतर मयंमि । निद्दुक्खत्ति य गरहा न पढंति सणीयगं वावि ॥१॥" इति [महत्तरे प्रगते बहुपाक्षिके च (शय्यातरे वा) सप्तगृहाभ्यन्तरे मृते निर्दुःखा इति गर्हेति न पठन्ति शनैर्वा ॥१॥] तथा 'रायवुग्गहे'त्ति राज्ञां संग्राम उपलक्षणत्वात्सेनापतिग्रामभोगिकमहत्तरपुरुषस्त्रीमल्लयुद्धान्यस्वाध्यायिकं, एवं पांशुपिष्टादिभण्डनान्यपि, यत एते प्रायो व्यन्तरबहुलास्तेषु प्रमत्तं देवता छलयेन्निर्दुःखा एत इत्युड्डाहो वाऽप्रीतिकं वा भवेदित्यतो यद्विग्रहादिकं यच्चिरकालं यस्मिन् क्षेत्रे भवति तत्र विग्रहादिके तावत्कालं तत्र क्षेत्रे स्वाध्यायं परिहरन्तीति, उक्तं च—"सेणाहिव भोइय मयहरे य पुंसित्थिमल्लयुद्धे य । लोट्टाइभंडणे वा गुज्झग उड्डाह अचियत्तं ॥१॥ इति, [सेनाधिपभोजिकमहत्तराणां पुंस्त्रियोर्मल्लानां युद्धे च पांशुपिष्टादिभंडने वा गुह्यकः उड्डाहोऽप्रीतिश्च ॥१॥] तथोपाश्रयस्य—वसतेरन्तः—मध्ये वर्त्तमानमौदारिकं मनुष्यादिसत्कं शरीरकं यद्युद्भिन्नं भवति तदा हस्तशताभ्यन्तरेऽस्वाध्यायिकं भवति, अथानुद्भिन्नं तथापि कुत्सितत्वादाचरितत्वाच्च हस्तशतं वर्ज्यते, परिष्ठापिते तु तत्र तत्स्थानं शुद्धं भवतीति । पञ्चेन्द्रियशरीरमस्वाध्यायिकमित्यनन्तरमुक्तमिति पञ्चेन्द्रियाधिकारात्तदाश्रितसंयमासंयमसूत्रे गतार्थे ।

संयमासंयमाधिकारात् तद्विषयभूतानि सूक्ष्माणि प्ररूपयन्नाह—

**दस सुहुमा पं० तं०—पाणसुहुमे पणगसुहुमे जाव सिणेहसुहुमे गणियसुहुमे भंगसुहुमे (सू० ७१६)**

जंबूमंदिरदाहिणेणं गंगासिंधुमहानदीओ दस महानतीओ समप्पेंति, तं०—जउणा १ सरऊ २ आवी ३ कोसी ४ मही ५ सिंधू ६ विवच्छा ७ विभासा ८ एरावती ९ चंद्रभागा १० । जंबूमंदरउत्तरेणं रत्तारत्तवतीओ महानदीओ दस महानदीओ समप्पेंति, तं०—किण्हा महाकिण्हा नीला महानीला तीरा महातीरा इंदा जाव महाभोगा (सू० ७१७) जंबुद्दीवे २ भरहवासे दस रायहाणीओ पं० तं०—चंपा १ महुरा २ वाणारसी ३ य सावत्थी ४ तह्त सातेतं ५ । हत्थिणउर ६ कंपिल्लं ७ मिहिला ८ कोसंबि ९ रायगिहं १० । १॥ एयासु णं दसरायहाणीसु दस रायाणो मुंडा भवेत्ता जाव पव्वतिता, तं०—भरहे सगरो मघवं सणंकुमारो संती कुंथू अरे महापउमे हरिसेणो जयणामे (सू० ७१८) जंबुद्दीवे २ मंदरे पव्वए दस जोयणसयाइं उव्वेहेणं धरणितले दस जोयणसहस्साइं विक्खंभेणं उवरिं दसजोयणसयाइं विक्खंभेणं दसदसाइं जोयणसहस्साइं सव्वग्गेणं पं० (सू० ७१९) जंबुद्दीवे २ मंदरस्स पव्वयस्स बहुमज्झदेसभागे इमीसे रयणप्पभाते पुढवीते उवरिमहेट्ठिल्लेसु खुड्डगपतरेसु, एत्थ णमट्ठपतेसिते रुयगे पं० जओ णमिमातो दस दिसाओ पवहंति, तं०—पुरच्छिमा १ पुरच्छिमदाहिणा २ दाहिणा ३ दाहिणपच्चत्थिमा ४ पच्चत्थिमा ५ पच्चत्थिमुत्तरा ६ उत्तरा ७ उत्तरपुरच्छिमा ८ उद्धा ९ अहो १०, एएसि णं दसण्हं दिसाणं दस नामधिज्जा पं० तं०—इंदा अग्गीइ जमा णेरती वारुणी य वायव्वा । सोमा ईसाणाविय विमला य तमा य बोद्धव्वा ॥१॥ लवणस्स णं समुद्दस्स दस जोयणसहस्साइं गोतित्थविरहिते खेत्ते पं०, लवणस्स णं समुद्दस्स दस जोयणसहस्साइं उदगमाले पन्नत्ते, सव्वेवि णं महापाताला दसदसाइं जोयणसहस्साइं-

मुव्वेहेणं पण्णत्ता, मूले दस जोयणसहस्साइं विक्खंभेणं पन्नत्ता, बहुमज्झदेसभागे एगपएसिताते सेढीए दसदसाइं जोयणसहस्साइं विक्खंभेणं पन्नत्ता, उवरिं मुहमूले दस जोयणसहस्साइं विक्खंभेणं पण्णत्ता, तेसि णं महापातालाणं कुड्डा सव्ववइरामया सव्वत्थसमा दस जोयणसयाइं बाहल्लेणं पन्नत्ता, सव्वेवि णं खुड्डा पाताला दस जोयणसताइं उव्वेहेणं पं०, मूले दसदसाइं जोयणाइं विक्खंभेणं, बहुमज्झदेसभागे एगपएसिताते सेढीते दस जोयणसताइं विक्खंभेणं पं०, उवरि मुहमूले दसदसाइं जोयणाइं विक्खंभेणं पं०, तेसि णं खुड्डापातालाणं कुड्डा सव्ववइरामता सव्वत्थ समा दस जोयणाइं बाहल्लेणं पण्णत्ता (सू० ७२०) धायतिसंडगा णं मंदरा दस- जोयणसयाइं उव्वेहेणं धरणितले देसूणाइं दस जोयणसहस्साइं विक्खंभेणं उवरिं दस जोयणसयाइं विक्खंभेणं पं०। पुक्खरवरदीवड्ढगा णं मंदरा दस जोयण एवं चेव (सू० ७२१) सव्वेवि णं वट्टवेयड्ढपव्वता दस जोयणसयाइं उड्ढं उच्चत्तेणं दस गाउयसयाइमुव्वेहेणं सव्वत्थसमा पल्लगसंठाणसंठिता, दस जोयणसयाइं विक्खंभेणं पं० (सू० ७२२) जंबुद्दीवे २ दस खेत्ता पं० तं०—भरहे एरवते हेमवते हेरन्नवते हरिवस्से रम्मगवस्से पुव्वविदेहे अवरविदेहे देवकुरा उत्तरकुरा (सू० ७२३) माणुसुत्तरे णं पव्वते मूले दस बावीसे जोयणसते विक्खंभेणं पं० (सू० ७२४) सव्वेवि णमंजणगपव्वता दस जोयणसयाइमुव्वेहेणं मूले दस जोयणसहस्साइं विक्खंभेणं उवरिं दस जोयणसताइं विक्खंभेणं पन्न०, सव्वेवि णं दहिमुहपव्वता दस जोयणसताइं उव्वेहेणं सव्वत्थसमा पल्लगसंठाणसंठिता दस जोयणसहस्साइं विक्खंभेणं पं०, सव्वेवि णं रतिकरगपव्वता दस जोयणसताइं उड्ढं उच्चत्तेणं

दसगाउयसताइं उव्वेहेणं सव्वत्थसमा झल्लरिसंठिता दस जोयणसहस्साइं विक्खंभेणं पं०(सू० ७२५) रुयगवरे णं पव्वते दस जोयणसयाइं उव्वेहेणं मूले दस जोयणसहस्साइं विक्खंभेणं उवरिं दस जोयणसताइं विक्खंभेणं पं० । एवं कुंडलवरेवि (सू० ७२६)।

'दस सुहुमे'त्यादि, प्राणसूक्ष्मं—अनुद्धरितकुन्थुः पनकसूक्ष्मं—उल्ली यावत्करणादिदं द्रष्टव्यं, बीजसूक्ष्मं—व्रीह्यादीनां नखिका हरितसूक्ष्मं—भूमिसमवर्णं तृणं पुष्पसूक्ष्मं—वटादिपुष्पाणि अण्डसूक्ष्मं—कीटिकाद्यण्डकानि लयनसूक्ष्मं—कीटिकानगरादि स्नेहसूक्ष्मं—अवश्यायादीत्यष्टमस्थानकभणितमेव इदमपरं गणितसूक्ष्मं—गणितं सङ्कलनादि तदेव सूक्ष्मं सूक्ष्मबुद्धिगम्यत्वात्, श्रूयते च वज्रांतं गणितमिति, 'भङ्गसूक्ष्मं' भङ्गा—भङ्गका वस्तुविकल्पास्ते च द्विधा—स्थानभङ्गकाः क्रमभङ्गकाश्च, तत्राद्या यथा द्रव्यतो नामैका हिंसा न भावतः १ अन्या भावतो न द्रव्यतः २ अन्या भावतो द्रव्यतश्च ३ अन्या न भावतो नापि द्रव्यतः ४ इति, इतरे तु द्रव्यतो हिंसा भावतश्च १ द्रव्यतोऽन्या न भावतः २ न द्रव्यतोऽन्या भावतः ३ अन्या न द्रव्यतो न भावतः ४ इति तल्लक्षणं सूक्ष्मं भङ्गसूक्ष्मं, सूक्ष्मता चास्य भजनीयपदबहुत्वे गहनभावेन सूक्ष्मबुद्धिगम्यत्वादिति । पूर्वं गणितसूक्ष्ममुक्तमिति तद्विषयविशेषभूतं प्रकृताध्ययनानुपातिना जंबुद्दीवेत्यादि गङ्गासूत्रादिकं कुण्डलसूत्रावसानं क्षेत्रप्रकरणमाह, कण्ठ्यश्चेदम्, नवरं गङ्गां समुपयान्ति दशानामाद्याः पञ्च इतराः सिन्धुमिति, एवं रक्तासूत्रमपि नवरं यावत्करणात् 'इन्दसेणा वारिसेण'त्ति द्रष्टव्यमिति । 'रायहाणीओ'त्ति राजा धीयते—विधीयते अभिषिच्यते यासु ता राजधान्यः—जनपदानां मध्ये प्रधाननगर्यः, 'चंपा'गाहा, चम्पानगरी अङ्गजनपदेषु मथुरा सूरसेनदेशे वाराणसी काश्यां श्रावस्ती कुणालायां साकेतमयोध्येत्यर्थः कोशलेषु जनपदेषु, 'हत्थिणपुरं'ति नागपुरं कुरुजनपदे काम्पिल्यं पाञ्चालेषु मिथिला विदेहे को-

शाम्बी वत्सेषु राजगृहं मगधेष्विति,एतासु किल साधवः उत्सर्गतो न प्रविशंति तरुणरमणीयपण्यरमण्यादिदर्शनेन मनःक्षोभादिसम्भवात्, मासस्यान्तर्द्विस्त्रिर्वा प्रविशतां त्वाज्ञादयो दोषा इति, एताश्च दशस्थानकानुसारेणाभिहिता न तु दशैवैताः अर्द्धषड्विंशतावार्यजनपदेषु षड्विंशतेर्नगरीणामुक्तत्वादिति, अयं च न्यायोऽन्यत्र ग्रन्थे तेषु तेषु प्रायश्चित्तादिविचारेषु प्रसिद्ध एवेति, व्याख्यातं च दशराजधानीग्रहणे शेषाणामपि ग्रहणं निशीथभाष्ये, यदाह—"दसरायहाणिगहणा सेसाणं सूयणा कया होइ। मासस्संतो दुगतिग ताओ अइंतंमि आणाई ॥१॥ दोषाश्चेह—"तरुणावेसित्थिविवाहरायमाईसु होइ सइकरणं। आउज्जगीयसद्दे इत्थीसद्दे य सवियारे ॥२॥" इति [दशराजधानीग्रहणाच्छेषाणां सूचना कृता भवति मासान्तर्द्विः त्रिः ताः प्रविशत आज्ञादि ॥१॥ तरुणा वेश्यास्त्री विवाहरागा (राजा) दिषु भवति स्मृतिकरणं आतोद्यगीतशब्दे स्त्रीशब्दे च सविकारे ॥१॥] 'एतास्वि'ति अनन्तरोदितासु दशस्वार्यनगरीषु मध्ये अन्यतरासु कासुचिद्दश राजानः चक्रवर्त्तिनः प्रव्रजिता इत्येवं दशस्थानकेऽवतारस्तेषां कृतः, द्वौ च सुभूमब्रह्मदत्ताभिधानौ न प्रव्रजितौ नरकं च गताविति, तत्र भरतसगरौ प्रथमद्वितीयौ चक्रवर्त्तिराजौ साकेते नगरे विनीताऽयोध्यापर्याये जातौ प्रव्रजितौ च, मघवान् श्रावस्त्यां, सनत्कुमाराद्यश्चत्वारो हस्तिनागपुरे महापद्मो वाणारस्यां हरिषेणः काम्पिल्ये जयनामा राजगृहे इति, न चैतासु नगरीषु क्रमेणैते राजानो व्याख्येयाः ग्रन्थविरोधात्, उक्तं च—"जंमण विणीय उज्झा सावत्थी पंच हत्थिणपुरंमि। वाणारसि कंपिल्ले रायगिहे चेव कंपिल्ला ॥१॥" इति, [जन्म विनीताऽयोध्या श्रावस्तीषु पंच हस्तिनापुरे वाराणस्यां कांपिल्ये राजगृहे चैव कांपिल्ये ॥१॥] अप्रव्रजितचक्रवर्त्तिनौ तु हस्तिनागपुरकाम्पिल्ययोरुत्पन्नाविति, ये च यत्रोत्पन्नास्ते तत्रैव प्रव्रजिता इति, इदमावश्यकाभिप्रायेण व्याख्यातं, निशीथभाष्याभिप्रायेण तु दशस्वेतासु नगरीषु द्वादश चक्रिणो जाताः, तत्र नवस्वेकैकः एकस्यां तु त्रय इति, आह

च–"चंपा महुरा वाणारसी य सावत्थिमेव साकेयं। हत्थिणपुरकंपिल्लं मिहिलाकोसंबिरायगिहं ॥१॥ संती कुंथू य अरो तिन्निवि जिणचक्कि एक्कहिं जाया। तेण दस होंति जत्थ व केसव जाया जणाइन्न ॥३॥"त्ति, [चंपा मथुरा वाणारसी च श्रावस्ती एव साकेतं हस्तिनापुरं कांपिल्यं मिथिला कोशांबी राजगृहं ॥१॥ शान्तिः कुन्थुश्चारस्त्रयो जिनचक्रिणः एकत्र जाताः तेन दश भवंति यत्र वा केशवा जाता जनाकीर्णाः ॥२॥] मन्दरो–मेरुः, 'उव्वेहेण'न्ति भूमाववगाहतः, 'विष्कम्भेण' पृथुत्वेन 'उपरि'पण्डकवनप्रदेशे दशशतानि सहस्रमित्यर्थः, दशदशकानि शतमित्यर्थः, केषां ?–योजनसहस्राणां, लक्षमित्यर्थः, ईदृशी च भणितिर्दशस्थानकानुरोधात्, 'सर्वाग्रेण' सर्वपरिमाणत इति 'उवरिमहेट्ठिल्लेसु'त्ति उपरितनाधस्तनयोः क्षुल्लकप्रतरयोः, सर्वेषां मध्ये तयोरेव लघुत्वात्, तयोरथ उपरि च प्रदेशान्तरवृद्ध्या वर्द्धमानतरत्वाल्लोकस्येति, 'अट्ठपएसिए'त्ति अष्टौ प्रदेशा यस्मिन्नित्यष्टप्रदेशिकः, स्वार्थिकप्रत्ययविधानादिति, तत्र चोपरितने प्रतरे चत्वारः प्रदेशा गोस्तनवदितरत्रापि चत्वारस्तथैवेति, 'इमाउ'त्ति वक्ष्यमाणाः 'दस'त्ति चतस्रो द्विप्रदेशादयो गुत्तराः शकटोर्द्धिसंस्थाना महादिशश्चतस्र एव एकप्रदेशादयोऽनुत्तरा मुक्तावलीकल्पा विदिशः, तथा द्वे चतुष्प्रदेशादिके अनुत्तरे ऊर्ध्वाधोदिशाविति, 'पवहंति'त्ति प्रवहंति प्रभवन्तीत्यर्थः, 'इंदा' गाहा, इन्द्रो देवता यस्याः सा ऐन्द्री एवमाग्नेयी याम्येत्यादि, विमला वितिमिरत्वादूर्ध्वदिशो नामधेयं, तमा अन्धकारयुक्तत्वेन रात्रितुल्यत्वादधोदिशश्चेति। 'लवणस्से'त्यादि, गवां तीर्थं–तडागादाववतारमार्गो गोतीर्थं, ततो गोतीर्थमिव गोतीर्थं–अवतारवती भूमिः, तद्विरहितं सममित्यर्थः, एतच्च पञ्चनवतियोजनसहस्राण्यर्वाग्भागतः परभागतश्च गोतीर्थरूपां भूमिं विहाय मध्ये भवतीति, 'उदकमाला' उदकशिखा वेलेत्यर्थः, दशयोजनसहस्राणि विष्कम्भतः उच्चत्वेन षोडशसहस्राणीति, समुद्रमध्यभागादेवोत्थितेति, 'सव्वेवी'त्यादि, सर्वेऽपीति पूर्वादिदिक्षु तद्भावाच्चत्वारोऽपि 'महापा-

तालाः' पातालकलशाः वलयामुखकेऊरजूयकईश्वरनामानश्चतुःस्थानकाभिहिताः, क्षुल्लकपातालकलशव्यवच्छेदार्थं महाग्रहणं, दशदशकानि शतं योजनसहस्राणां लक्षमित्यर्थः, 'उद्वेधेन' गाधेनेत्यर्थः 'मूले' बुध्ने दशसहस्राणि मध्ये लक्षं, कथ?, मूलविष्कम्भादुभयत एकैकप्रदेशवृद्ध्या विस्तरं गच्छतां वा एकप्रदेशिका श्रेणी भवति तया, अनेन प्रदेशवृद्धिरुपदर्शिता, अथवा एकप्रदेशिकायाः श्रेण्या अत्यन्तमध्ये, ततोऽध उपरि च प्रदेशोनं लक्षमित्यर्थः, तथा उपरि, किमुक्तं भवति?—अत आह—'मुखमूले' मुखप्रदेशे, 'कुड्ड'त्ति कुड्यानि भित्तय इत्यर्थः, सर्वाणि च तानि वज्रमयानि चेति वाक्यं, 'सर्वेऽपी'ति सप्तसहस्राण्यष्टशतानि चतुरशीत्यधिकानीत्येवंसंख्याः क्षुल्लका महदपेक्षया, उद्वेधेन मध्यविष्कम्भेण च सहस्रं, मूले मुखे च विष्कम्भेण शतं, कुड्यबाहल्येन च दश। 'धायइ' इत्यादि, 'मंदर'त्ति पूर्वापरौ मेरू, तत्स्वरूपं सूत्रसिद्धं, विशेष उच्यते—"धायइसंडे मेरू चुलसीइसहस्स ऊसिया दोन्नि। ओगाढा य सहस्सं होंति य सिहरंमि विच्छिन्ना ॥१॥ मूले पणनउइसया चउणउइसया य होंति धरणियले" इति, [धातकीखंडे मेरू चतुरशीतिसहस्राणि उच्छ्रितौ भवतः सहस्रमवगाढौ शिखरे च विस्तीर्णौ द्वावपि भवतः ॥१॥ पंचनवतिशतानि मूले चतुर्नवतिशतानि धरणितले च भवतः ॥] सर्वेऽपि वृत्तवैताढ्यपर्वताः विंशतिः प्रत्येकं पञ्चसु हैमवतैरण्यवतहरिवर्षरम्यकेष्वेषां शब्दावतीविकटावतीगन्धावतीमालवत्पर्यायाख्यानां भावादिति, वृत्तग्रहणं दीर्घवैताढ्यव्यवच्छेदार्थमिति, मानुषोत्तरश्चक्रवालपर्वतः प्रतीतः, अञ्जनकाश्चत्वारो नन्दीश्वरद्वीपवर्त्तिनः, दधिमुखाः प्रत्येकमञ्जनकानां दिक्चतुष्टयव्यवस्थितपुष्करिणीमध्यवर्त्तिनः षोडशेति, रतिकरा नन्दीश्वरद्वीपे विदिग्व्यवस्थिताः चत्वारश्चतुःस्थानकाभिहितस्वरूपाः। रुचको—रुचकाभिधानस्त्रयोदशद्वीपवर्त्ती चक्रबालपर्वतः। कुण्डलः—कुण्डलाभिधान एकादशद्वीपवर्त्ती चक्रवालपर्वत एव, 'एवं कुण्डलवरेऽवी'त्यनेनेह कुण्डलवर उद्वेधमूलविष्कम्भोपरिविष्कम्भ रुचकवरपर्वतसमान उक्तो

द्वीपसागरप्रज्ञप्त्यां त्वेवमुक्तः—"दस चेव जोयणसए बावीसे वित्थडो उ मूलंमि। चत्तारि जोयणसए चउवीसे वित्थडो सिहरि ॥१॥" इति [द्वाविंशत्यधिकानि दशयोजनशतानि मूले विस्तृतः चतुर्विंशदधिकानि चतुर्योजनशतानि शिखरे विस्तृतः (कुंडलवरः) अत्र तुल्यं ॥१॥] रुचकस्यापि, तत्रायं विशेष उक्तः—मूलविष्कम्भो दश सहस्राणि द्वाविंशत्यधिकानि शिखरे तु चत्वारि सहस्राणि चतुर्विंशत्यधिकानीति।

अनन्तरं गणितानुयोग उक्तः, अथ द्रव्यानुयोगस्वरूपं भेदत आह—

दसविहे दवियाणुओगे पं० तं०—दवियाणुओगे १ माउयाणुओगे २ एगट्ठियाणुओगे ३ करणाणुओगे ४ अप्पितणप्पिते ५ भाविताभाविते ६ बाहिराबाहिरे ७ सासयासासते ८ तहणाणे ९ अतहणाणे १० (सू० ७२७)

'दसविहे दविए'त्यादि, अनुयोजनं—सूत्रस्यार्थेन सम्बन्धनं अनुरूपोऽनुकूलो वा योगः—सूत्रस्याभिधेयार्थं प्रति व्यापारोऽनुयोगः, व्याख्यानमिति भावः, स च चतुर्द्धा व्याख्येयभेदात्, तद्यथा—चरणकरणानुयोगो धर्म्मकथानुयोगो गणितानुयोगो द्रव्यानुयोगश्च, तत्र द्रव्यस्य—जीवादेरनुयोगो—विचारो द्रव्यानुयोगः, स च दशधा, तत्र 'दवियाणुओगे'त्ति यज्जीवादेर्द्रव्यत्वं विचार्यते स द्रव्यानुयोगो यथा द्रवति—गच्छति तांस्तान् पर्यायान् द्रूयते वा तैस्तैः पर्यायैरिति द्रव्यं—गुणपर्यायवानर्थः, तत्र सन्ति जीवे ज्ञानादयः सहभावित्वलक्षणा गुणाः न हि तद्वियुक्तो जीवः कदाचनापि सम्भवति, जीवत्वहानेः, तथा पर्याया अपि मानुषत्वबाल्यादयः कालकृतावस्थालक्षणास्तत्र सन्त्येवेति, अतो भवत्यसौ गुणपर्यायवत्त्वात् द्रव्यमित्यादि द्रव्यानुयोगः १, तथा 'माउयाणुओगे'त्ति इह मातृकेव

मातृका—प्रवचनपुरुषस्योत्पादव्ययध्रौव्यलक्षणा पदत्रयी तस्या अनुयोगो, यथा उत्पादवज्जीवद्रव्यं बाल्यादिपर्यायाणामनुक्षणमुत्पत्तिदर्शनाद् अनुत्पादे च वृद्धाद्यवस्थानामप्राप्तिप्रसङ्गादसमञ्जसापत्तेः, तथा व्ययवज्जीवद्रव्यं प्रतिक्षणं बाल्याद्यवस्थानां व्ययदर्शनादव्ययत्वे च सर्वदा बाल्यादिप्राप्तेरसमञ्जसमेव, तथा यदि सर्वथाऽप्युत्पादव्ययवदेव तत् न केनापि प्रकारेण ध्रुवं स्यात्तदाअकृताभ्यागमकृतविप्रणाशप्राप्त्या पूर्वदृष्टानुस्मरणाभिलाषादिभावानामभावप्रसङ्गेन च सकलेहलोकपरलोकालम्बनानुष्ठानानामभावतोऽसमञ्जसमेव, ततो द्रव्यतयाऽस्य ध्रौव्यमित्युत्पादव्ययध्रौव्ययुक्तमतो द्रव्यमित्यादि मातृकापदानुयोगः २, तथा 'एगट्ठियाणुओग'त्ति एकश्चासावर्थश्च—अभिधेयो जीवादिः स येषामस्ति त एकार्थिकाः—शब्दास्तैरनुयोगस्तत्कथनमित्यर्थः, एकार्थिकानुयोगो यथा जीवद्रव्यं प्रति जीवः प्राणी भूतः सत्त्वः, एकार्थिकानां वाऽनुयोगो यथा जीवनात्—प्राणधारणाज्जीवः, प्राणानां—उच्छ्वासादीनामस्तित्वात् प्राणी, सर्वदा भवनाद्भूतः, सदा सत्त्वात्सत्त्वः इत्यादि ३, तथा 'करणाणुओगो'त्ति क्रियते एभिरिति करणानि तेषामनुयोगः करणानुयोगः, तथाहि—जीवद्रव्यस्य कर्तुर्विचित्रक्रियासु साधकतमानि कालस्वभावनियतिपूर्वकृतानि नैकाकी जीवः किञ्चन कर्तुमलमिति, मृद्द्रव्यं वा कुलालचक्रचीवरदण्डादिकं करणकलापमन्तरेण न घटलक्षणं कार्यं प्रति घटत इति तस्य तानि करणानीति द्रव्यस्य करणानुयोग इति ४, तथा 'अप्पियाणप्पिए'त्ति द्रव्यं ह्यर्पितं—विशेषितं यथा जीवद्रव्यं, किंविधं?—संसारीति, संसार्यपि त्रसरूपं त्रसरूपमपि पञ्चेन्द्रियं तदपि नररूपमित्यादि, अनर्पितं—अविशेषितमेव, यथा जीवद्रव्यमिति, ततश्चार्पितं च तदनर्पितं चेत्यर्पितानर्पितं द्रव्यं भवतीति द्रव्यानुयोगः ५, तथा 'भावियाभाविए'त्ति भावितं—वासितं द्रव्यान्तरसंसर्गतः अभावितमन्यथैव यत्, यथा जीवद्रव्यं भावितं किञ्चित्, तच्च प्रशस्तभावितमितरभावितं च, तत्र प्रशस्तभावितं संविग्नभावितमप्रशस्तभावितं चेतरभावितं,

तत् द्विविधमपि वामनीयमवामनीयं च, तत्र वामनीयं यत्संसर्गजं गुणं दोषं वा संसर्गान्तरेण वमति, अवामनीयं त्वन्यथा, अभावितं त्वसंसर्गप्राप्तं प्राप्तसंसर्गं वा वज्रतन्दुलकल्पं न वासयितुं शक्यमिति, एवं घटादिकं द्रव्यमपि, ततश्च भावितं च अभावितं च भाविताभावितम् , एवम्भूतो विचारो द्रव्यानुयोग इति ६, तथा 'बाहिराबाहिरे'त्ति बाह्याबाह्यं, तत्र जीवद्रव्यं बाह्यं चैतन्यधर्म्मेणाकाशास्तिकायादिभ्यो विलक्षणत्वात्तदेवाबाह्यममूर्त्तत्वादिना धर्म्मेण अमूर्त्तत्वादुभयेपामपि, चैतन्येन वा अबाह्यं जीवास्तिकायाच्चैतन्यलक्षणत्वादुभयोरपि, अथवा घटादिद्रव्यं बाह्यं कर्म्मचैतन्यादि त्वबाह्यमाध्यात्मिकमितियावदिति, एवमन्यो द्रव्यानुयोग इति ७, तथा 'सासयासासए'त्ति शाश्वताशाश्वतं, तत्र जीवद्रव्यमनादिनिधनत्वात् शाश्वतं तदेवापरापरपर्यायप्राप्तितोऽशाश्वतमित्येवमन्यो द्रव्यानुयोग इति ८, तथा 'तह्नाण'त्ति यथा वस्तु तथा ज्ञानं यस्य तत्तथाज्ञानं सम्यग्दृष्टिजीवद्रव्यं तस्यैवावितथज्ञानत्वात् , अथवा यथा तद्वस्तु तथैव ज्ञानं-अवबोधः प्रतीतिर्यस्मिंस्तत्तथाज्ञानं घटादिद्रव्यं घटादितयैव प्रतिभासमानं जैनाभ्युपगतं वा परिणामि परिणामितयैव प्रतिभासमानमित्येवमन्यो द्रव्यानुयोगइति ९, 'अतह्णाणे'त्ति अतथाज्ञानं मिथ्यादृष्टिजीवद्रव्यमज्ञातद्रव्यं वा वक्रतयाऽवभासमानमेकान्तवाद्यभ्युपगतं वा वस्तु, तथाहि-एकान्तेन नित्यमनित्यं वा वस्तु तैरभ्युपगतं प्रतिभाति च तत्परिणामितयेति तदतथाज्ञानमित्येवमन्यो द्रव्यानुयोग इति १० ॥

पुनर्गणितानुयोगमेवाधिकृत्योत्पातपर्व्वताधिकारमच्युतसूत्रं यावदाह—

चमरस्स णं असुरिंदस्स असुरकुमाररन्नो तिगिच्छकूडे उप्पातपव्वते मूले दसबावीसे जोयणसते विक्खंभेणं

पं० । चमरस्स णं असुरिन्दस्स असुरकुमाररन्नो सोमस्स महारन्नो सोमप्पभे उप्पातपव्वते दस जोयणसयाइं उद्धं उच्चत्तेणं दस गाउयसताइं उव्वेहेणं मूले दस जोयणसयाइं विक्खंभेणं पं० । चमरस्स णमसुरिंदस्स असुरकुमाररण्णो जमस्स महारन्नो जमप्पभे उप्पातपव्वते एवं चेव, एवं वरुणस्सवि, एवं वेसमणस्सवि । बलिस्स णं वइरोयणिंदस्स वतिरोतणरन्नो रुयगिंदे उप्पातपव्वते मूले दसबावीसे जोयणसते विक्खंभेणं पं० । बलिस्स णं वइरोयणिंदस्स सोमस्स एवं चेव जधा चमरस्स लोगपालाणं तं चेव बलिस्सवि । धरणस्स णं णागकुमारिंदस्स णागकुमाररन्नो धरणप्पभे उप्पातपव्वते दस जोयणसयाइं उद्धं उच्चत्तेणं दस गाउयसताइं उव्वेहेणं मूले दस जोयणसताइं विक्खंभेणं । धरणस्स नागकुमारिंदस्स णं नागकुमाररण्णो कालवालस्स महारण्णो महाकालप्पभे उप्पातपव्वते जोयणसयाइं उद्धं एवं चेव, एवं जाव संखवालस्स, एवं भूताणंदस्सवि, एवं लोगपालाणंपि से जहा धरणस्स एवं जाव थणितकुमाराणं सलोगपालाणं भाणियव्वं, सव्वेसिं उप्पायपव्वया भाणियव्वा सरिसणामगा । सक्कस्स णं देविंदस्स देवरण्णो सक्कप्पभे उप्पातपव्वते दस जोयणसहस्साइं उद्धं उच्चत्तेणं दस गाउयसहस्साइं उव्वेहेणं मूले दस जोयणसहस्साइं विक्खंभेणं पं०, सक्कस्स णं देविंदस्स देव० सोमस्स महारन्नो जधा सक्कस्स तधा सव्वेसिं लोगपालाणं सव्वेसिं च इंदाणं जाव अच्चुयत्ति, सव्वेसिं पमाणमेगं (सू० ७२८)।

'चमरस्से'त्यादि, सुगमं नवरं 'तिगिंछिकूडे'त्ति तिगिंछी—किंजल्कस्तत्प्रधानकूटत्वात्तिगिच्छिकूटः, तत्प्रधानत्वं च कमलबहुलत्वात्संज्ञा चेयं, 'उप्पायपव्वए'त्ति उत्पतनं—ऊर्द्ध्वंगमनमुत्पातस्तेनोपलक्षितः पर्वत उत्पातपर्वतः, स च रुचकवराभिधानात्

त्रयोदशात्समुद्राद्दक्षिणतोऽसंख्येयान् द्वीपसमुद्रानतिलङ्घ्य यावदरुणवरद्वीपारुणवरसमुद्रौ तयोररुणवरसमुद्रं दक्षिणतो द्विचत्वारिंशतं योजनसहस्राण्यवगाह्य भवति, तत्प्रमाणं च—"सत्तरस एक्कवीसाइं जोयणसयाइं सो समुव्विद्धो । दस चेव जोयणसए बावीसे वित्थडो हेट्ठा ॥१॥ चत्तारि जोयणसए चउवीसे वित्थडो उ मज्झम्मि । सत्तेव य तेवीसे सिहरतले वित्थडो होइ ॥२॥" इति [सप्तदशैकविंशतियोजनशतानि स समुद्विद्धः । दश चैव योजनशतानि द्वाविंशत्यधिकान्यधः विस्तृतः ॥१॥ चतुर्विंशत्यधिकचतुर्योजनशतानि मध्ये विस्तृतः त्रयोविंशत्यधिकसप्तशतानि शिखरतले विस्तृतः भवति ॥२॥] स च रत्नमयः पद्मवरवेदिकया वनखण्डेन च परिक्षिप्तः, तस्य च मध्येऽशोकावतंसको देवप्रसाद इति। 'चमरस्से'त्यादि, 'महारन्नो'त्ति लोकपालस्य सोमप्रभ उत्पातपर्वतः अरुणोदसमुद्र एव भवति, एवं यमवरुणवैश्रमणसूत्राणि नेयानीति। 'बलिस्से'त्यादि, रुचकेन्द्र उत्पातपर्वतोऽरुणोदसमुद्रे एव भवति, यथोक्तम्—"अरुणस्स उत्तरेणं बायालीसं भवे सहस्साइं । ओगाहिऊण उदहिं सिलनिचओ रायहाणीओ ॥१॥" इति [अरुणस्योत्तरस्यां द्विचत्वारिंशतं सहस्राण्यवगाह्योदधिं पर्वतः तत्र चतस्रो राजधान्यः ॥१॥] 'बलिस्से' त्यादि, 'वई'त्यादि सूत्रसूचा, एवं च दृश्य 'वइरोयणिंदस्स वइरोयणरन्नो सोमस्स य महारन्नो' 'एवं चेव'त्ति अतिदेशः, एतद्भावना—'जहे' त्यादि, यथा यत्प्रकारं चमरस्य लोकपालानामुत्पातपर्वतप्रमाणं प्रत्येकं चतुर्भिः सूत्रैरुक्तं 'तं चेव'त्ति तत्प्रकारमेव चतुर्भिः सूत्रैः बलिनोऽपि वैरोचनेन्द्रस्यापि वक्तव्यं, समानत्वादिति, 'धरणस्से' त्यादि• धरणस्योत्पातपर्वतोऽरुणोद एव समुद्रे भवति, 'धरणस्से'त्यादि प्रथमलोकपालसूत्रे 'एवं चेव'त्तिकरणात् 'उच्चत्तेणं दस गाउयसयाइं उव्वेहेण'मित्यादि सूत्रमतिदिष्टं, 'एवं जाव संखपालस्स'त्तिकरणाच्छेषाणां त्रयाणां लोकपालानां कोलवालसेलवालसंखवालाभिधानानामुत्पातपर्वताभिधायीनि त्रीण्यन्यानि सूत्राणि दर्शयति । 'एवं भूयाणंदस्सवि'त्ति भूतानन्दस्यापि

औदीच्यनागराजस्यापि उत्पातपर्वतस्तस्य नाम प्रमाणं च वाच्यं, यथा धरणस्येत्यर्थः, भूतानन्दप्रभश्चोत्पातपर्वतोऽरुणोद एव भवति, केवलमुत्तरतः, 'एवं लोगपालाणवि से'त्ति 'से' तस्य भूतानन्दस्य लोकपालानामपि, एवमुत्पातपर्वतप्रमाणं यथा धरणलोकपालानामिति भावः, नवरं तन्नामानि चतुःस्थानकानुसारेण ज्ञातव्यानीति, 'जहा धरणस्से'ति यथा धरणस्य एवमिति-तथा सुपर्णविद्युत्कुमारादीनां ये इन्द्रास्तेषामुत्पातपर्वतप्रमाणं भणितव्यं, किंपर्यन्तानां तेषामित्यत आह-'जाव थणियकुमाराणं'ति प्रकटं, किमिन्द्राणामेव नेत्याह—'सलोगपालाणं'ति, तल्लोकपालानामपीत्यर्थः, 'सव्वेसिं'मित्यादि, सर्वेषामिन्द्राणां तल्लोकपालानां चोत्पातपर्वताः सदृग्नामानो भणितव्याः, यथा धरणस्य धरणप्रभः, प्रथमतल्लोकपालस्य कालवालस्य कालवालप्रभ इत्येवं सर्वत्र, ते च पर्वताः स्थानमङ्गीकृत्यैवं भवन्ति—''असुराणं नागाणं उदहिकुमाराण होंति आवासा। अरुणोदए समुद्दे तत्थेव य तेसि उप्पाया ॥१॥ दीवदिसाअग्गीणं थणियकुमाराण होंति आवासा। अरुणवरे दीवंमि उ तत्थेव य तेसि उप्पाया ॥२॥ इति [असुराणां नागानां उदधिकुमाराणां भवन्त्यावासाः। अरुणोदके समुद्रे तत्रैव च तेषामुत्पाताः ॥१॥ द्वीपदिगग्नीनां स्तनितकुमाराणां भवन्त्यावासाः। अरुणवरे द्वीपे तु तत्रैव च तेषामुत्पाताः ॥२॥] 'सक्कस्से'त्यादि, कुण्डलवरद्वीपकुण्डलपर्वतस्याभ्यन्तरे दक्षिणतः षोडश राजधान्यः सन्ति, तासां चतसृणां चतसृणां मध्ये सोमप्रभयमप्रभवरुणप्रभवैश्रमणप्रभाख्या उत्पातपर्वताः सोमादीनां शक्रलोकपालानां भवन्ति, उत्तरपार्श्वे तु एवमेवेशानलोकपालानामिति, यथा शक्रस्य तथाऽच्युतान्तानामिन्द्राणां लोकपालानां चोत्पातपर्वता वाच्याः, यतः सर्वेषामेकं प्रमाणं, नवरं स्थानविशेषो विशेषसूत्रादवगन्तव्यः।

योजनसहस्राधिकारादेव योजनसाहस्रिकावगाहनासूत्रत्रयम्—

बायरस्सतिकानिताणं उक्कोसेणं दस जोयणसयाइं सरीरोगाहणा पण्णत्ता, जलचरपंचेंदियतिरिक्खजोणिताणं उक्कोसेणं दस जोयणसताइं सरीरोगाहणा पन्न० उरपरिसप्पथलचरपंचिंदिततिरिक्खजोणिताणं उक्कोसेणं एवं चेव (सू० ७२९) संभवाओ णमरहातो अभिनंदणे अरहा दसहिं सागरोवमकोडिसतसहस्सेहिं वीतिक्कंतेहिं समुप्पन्ने (सू० ७३०) दसविहे अणंतते पं० तं०—णामाणंतते ठवणाणंतते दव्वाणंतते गणणाणंतते पएसाणंतते एगतोणंतते दुहतोणंतते देसवित्थाराणंतते सव्ववित्थाराणंतते सासयाणंतते (सू० ७३१) उप्पायपुव्वस्स णं दस वत्थु पं० अत्थिणत्थिप्पवातपुव्वस्स णं दस चूलवत्थु पं० (सू० ७३२) दसविहा पडिसेवणा पं० तं०—दप्प १ पमाय २ णाभोगे ३, आउरे ४ आवतीसु ५ त। संकिते ६ सहसक्कारे ७ भय ८ प्पयोसा ९ य वीमंसा १० ॥१॥ दस आलोयणादोसा पं० तं०—आकंपइत्ता १ अणुमाणइत्ता २ जंदिट्ठं ३ बायरं ४ च सुहुमं वा ५। छण्णं ६ सद्दाउलगं ७ बहुजण ८ अव्वत्त ९ तस्सेवी १० ॥१॥ दसहिं ठाणेहिं संपन्ने अणगारे अरिहति अत्तदोसमालोएत्तते, तं०—जाइसंपन्ने कुलसंपन्ने एवं जधा अट्ठट्ठाणे जाव खंते दंते अमाती अपच्छाणुतावी, दसहिं ठाणेहिं संपन्ने अणगारे अरिहति आलोयणं पडिच्छित्तए, तंजहा—आयारवं अवहारवं जाव अवातदंसी पितधम्मे दढधम्मे, दसविधे पायच्छित्ते पं० तं०—आलोयणारिहे जाव अणवट्ठप्पारिहे पारंचियारिहे (सू० ७३३)।

'बायरे'त्यादि कण्ठ्यं, नवरं 'बादरे'त्ति बादराणामेव न सूक्ष्माणां तेषामङ्गुलासंख्येयभागमात्रावगाहनत्वात्, एवं जघन्यतोऽपि

मा भूदतः 'उक्कोसेणं'त्यभिहितं, दश योजनशतानि उत्सेधयोजनेन, न तु प्रमाणयोजनेन, "उस्सेहपमाणाउ मिणे देहं" [उत्सेधप्रमाणेन देहं मिनुयात्] इति वचनात् , शरीरस्यावगाहना–येषु प्रदेशेषु शरीरमवगाढं सा शरीरावगाहना, सा च तथाविधनद्या(दा)दिपद्मनालविषया द्रष्टव्येति। 'जलचरे'त्यादि, इह जलचरा मत्स्याः गर्भजा इतरे च दृश्याः, "मच्छजुयले सहस्स" [मत्स्ययुगले सहस्रं] मिति वचनात् , एते च किल स्वयम्भूरमण एव भवन्तीति। 'उरगे'त्यादि उरःपरिसर्प्पा इह गर्भजा महोरगा दृश्याः, "उरगेसु य गब्भजाईसु" [गर्भजातेषूदकेषु]। इति वचनात्, एते किल बाह्यद्वीपेषु जलनिश्रिता भवन्ति, 'एवं चेव'त्ति 'दसजोयणसयाइं सरीरोगाहणा पन्नत्ते'ति सूत्रं वाच्यमित्यर्थः। एवंविधाश्चार्था जिनैर्दर्शिता इति प्रकृताध्ययनावतारि जिनान्तरसूत्रं 'सम्भवे'त्यादि, सुगमं। अभिहितप्रमाणाश्चावगाहनादयोऽन्येपि पदार्था जिनैरनन्ता दृष्टा इत्यनन्तकं भेदत आह–'दसविहे'त्यादि नामानन्तकं–अनन्तकमित्येषा नामभूता वर्णानुपूर्वी यस्य वा सचेतनादेर्वस्तुनोऽनन्तकमिति नाम तन्नामानन्तकं स्थापनानन्तकं–यदक्षादावनन्तकमिति स्थाप्यते, द्रव्यानन्तकं–जीवद्रव्याणां पुद्गलद्रव्याणां वा यदनन्तत्वं, गणनानन्तकं यदेको द्वौ त्रय इत्येवं संख्याता असंख्याता अनन्ता इति संख्यामात्रतया संख्यातव्यानपेक्षं संख्यानमात्रं व्यपदिश्यत इति, प्रदेशानन्तकं–आकाशप्रदेशानां यदानन्त्यमिति एकतोऽनन्तकमतीताद्धा अनागताद्धा वा, द्विधाऽनन्तकं सर्वाद्धा, देशविस्तारानन्तकं एक आकाशप्रतरः, सर्वविस्तारानन्तकं–सर्वाकाशास्तिकाय इति, शाश्वतानन्तकमक्षयं जीवादिद्रव्यमिति। एवंविधार्थाभिधायकं पूर्वगतश्रुतमिति पूर्वश्रुतविशेषमिहावतारयन् सूत्रद्वयमाह—'उप्पाये'त्यादि, उत्पातपूर्वं प्रथमं तस्य दश वस्तूनि–अध्यायविशेषाः, अस्तिनास्तिप्रवादपूर्वं चतुर्थं तस्य मूलवस्तूनामुपरि चूलारूपाणि वस्तूनि चूलावस्तूनि। पूर्वगतादिश्रुतनिषिद्धवस्तूनां साधोर्यद्द्विधा प्रतिषेवा भवति तद्विधां तां दर्शयन्नाह—'दसविहे'त्यादि, प्रतिषेवणा–प्राणातिपाताद्या-

सेवनं, 'दप्प'मित्लोगो, दर्पो–वल्गनादि, 'दप्पो पुण वग्गणाईओ' [दर्पः पुनर्वल्गनादिकः] इति वचनात्, तस्मादागमप्रतिषिद्धप्राणातिपाताद्यासेवा या सा दर्पप्रतिषेवणेति, एवमुत्तरपदान्यपि नेयानि, नवरं प्रमादः–परिहासविकथादिः, "कंदप्पाइ पमाओ" कंदर्पादि प्रमाद] इति वचनात्, विधेयेष्वप्रयत्नो वा, अनाभोगो–विस्मृतिः, एषां समाहारद्वन्द्वस्तत्र, तथा आतुरे–ग्लाने सति प्रतिजागरणार्थमिति भावः, अथवा आत्मन एवातुरत्वे सति, लुप्तभावप्रत्ययत्वात्, अयमर्थः–क्षुत्पिपासाव्याधिभिरभिभूतः सन् यां करोति, उक्तं च—"पढमबीयदुओ वाहिओ व जं सेव आउरा एसा" इति [क्षुधातृषोपद्रुतो व्याधितो वा यत्सेवते एषा आतुरा] तथा आपत्सु द्रव्यादिभेदेन चतुर्विधासु, तत्र द्रव्यतः प्रासुकद्रव्यं दुर्लभं क्षेत्रतोऽध्वप्रतिपन्नता कालतो दुर्भिक्षं भावतो ग्लानत्वमिति, उक्तं च—"दव्वाइअलंभे पुण चउव्विहा आवया होइ" इति [द्रव्याद्यलाभे पुनः चतुर्विधा आपदो भवन्ति।] तथा शङ्किते एषणेऽप्यनेषणीयतया "जं संके तं समावज्जे" [यत्शङ्क्येत तत्समापद्येत॥] इति वचनात्, सहसाकारे–अकस्मात्करणे सति, सहसाकारलक्षणं चेदम्—"पुव्वं अपासिऊणं पाए छूढंमि जं पुणो पासे। न चएइ नियत्तेउं पायं सहसाकरणमेयं॥१॥" इति [पूर्वमदृष्ट्वा पादे त्यक्ते यत्पुनः पश्यति। न च निवर्तयितुं शक्नोति सहसाकरणमेतत् पादः॥१॥] भयं च–भीतिः नृपचौरादिभ्यः प्रद्वेषश्च–मात्सर्यं भयप्रद्वेषं तस्माच्च प्रतिषेवा भवति, यथा राजाद्यभियोगान्मार्गादि दर्शयति सिंहादिभयाद्वा वृक्षमारोहति, उक्तं च—"भयमभिउग्गेण सीहमाइ वत्ति" [अभियोगेन सिंहादि वा भयं] इह प्रद्वेषग्रहणेन कषाया विवक्षिताः, आह च—"कोहाईओ पओसो"त्ति [क्रोधादिकः प्रद्वेषः] तथा विमर्शः–शिक्षकादिपरीक्षा, आह च—"वीमंसा सेहमाईणं" इति [शिष्यादीनां परीक्षा] ततोऽपि प्रतिषेवा–पृथिव्यादिसंघट्टादिरूपा भवतीति। प्रतिषेवायां चालोचना विधेया, तत्र च ये दोषास्ते परिहार्या इति दर्शनायाह—'दसे'त्यादि, 'आकंप'गाहा, आकम्प्य आवर्ज्येत्यर्थः, यदुक्तम्

"वेयावच्चाईहिं पुव्वं आगंपइत्तु आयरिए। आलोएइ कहं मे थोवं वियरिज्ज पच्छित्तं ? ॥१॥"इति [ वैयावृत्त्यादिभिः पूर्वं आचार्यमाकंप्यालोचयति कथं मम स्तोकं प्रायश्चित्तं दद्यात् ? ॥१॥] 'अणुमाणइत्ता' अनुमानं कृत्वा, किमयं मृदुदण्ड उतोग्रदण्ड इति ज्ञात्वेत्यर्थः, अयमभिप्रायोऽस्य–यद्ययं मृदुदण्डस्ततो दास्याम्यालोचनामन्यथा नेति, उक्तं च—"किं एस उग्गदंडो मिउदंडो वत्ति एवमणुमाणे। अन्ने पलिंति थोव पच्छित्तं मज्झ देहिज्जा ॥१॥" इति [किमेष उग्रदंडो मृदुदंडो वेत्यनुमायैवं अन्यान् आलोचयति मम स्तोकं प्रायश्चित्तं दद्यात् ॥१॥] 'जं दिट्ठं'ति यदेव दृष्टमाचार्यादिना दोषजातं तदेवालोचयति नान्यं दोषं, आचार्यरञ्जनमात्रपरत्वेनासंविग्नत्वादस्येति, उक्तं च—"दिट्ठा व जे परेणं दोसा वियडेइ ते च्चिय न अन्ने। सोहिभया जाणंतु त एसो एयावदोसो उ ॥१॥" इति, [ये परेण दोषा दृष्टास्तानेव प्रकटयति नान्यान्। शोधिभयात् जानन्तु वा एष एतावद्दोष एव ॥१॥] 'बायरं व'त्ति बादरमेवातिचारजातमालोचयति न सूक्ष्ममिति, 'सुहुमं व'त्ति सूक्ष्ममेव वाऽतिचारमालोचयति, यः किल सूक्ष्ममालोचयति कथं बादरं सन्तं नालोचयत्येवंरूपभावसम्पादनायाचार्यस्येति, आह च—"बायर बहुवराहे जो आलोएइ सुहुम नालोए। अहवा सुहुमा लोए वरमन्नंतो उ एवं तु ॥१॥ जो सुहुमे आलोए सो किह नालोय बायरे दोसे ?" ति ॥ इति [बादरः बृहतोऽपराधान् आलोचयति सूक्ष्मान्नालोचयति अथवा सूक्ष्मानालोचयति परमेवं मन्वानः ॥१॥-यः किल सूक्ष्मानालोचयति कथं स न बादरान् दोषानालोचयति ॥] 'छन्नं'ति प्रच्छन्नमालोचयति यथाऽऽत्मनैव शृणोति नाचार्यः, भणितं च—"छन्नं तह आलोए जह नवरं अप्पणा सुणइ ॥" इति, [छन्नं तथालोचयति यथाऽऽत्मनैव शृणोति परं] 'सद्दाउलयं'ति शब्देनाकुलं शब्दाकुलं–बृहच्छब्दं, तथा महता शब्देनालोचयति यथाऽन्येऽप्यगीतार्थास्ते शृण्वन्तीति, अभाणि च—"सद्दाउल वड्डेणं सद्देणालोय जह अगीयावि बोहेइ ॥"

इति [शब्दाकुलं बृहता शब्देनालोचयति यथा अगीतार्था अपि बोधयंति ॥] 'बहुजणं'ति बहवो जना–आलोचनाचार्याः यस्मिन्ना-
लोचने तद्बहुजनं, अयमभिप्रायः—एक्कस्सालोएत्ता जो आलोए पुणोवि अन्नस्स । ते चेव य अवराहे तं होइ बहुजणं नाम ॥१॥"
इति, [एकस्यालोच्य पार्श्वे यः पुनरन्यस्याप्यालोचयति तानेवापराधान् तद्भवति बहुजनं नाम ॥१॥] अव्यक्तस्य–अगीतार्थस्य गुरोः
सकाशे यदालोचनं तत्सम्बन्धादव्यक्तमुच्यते, उक्तं च—"जो य अगीयत्थस्सा आलोए तं तु होइ अव्वत्तं" इति [यश्चागीतार्थस्या-
लोचयति तत्तु भवत्यव्यक्तं ॥] 'तस्सेवि'त्ति ये दोषा आलोचयितव्यास्तत्सेवी यो गुरुस्तस्य पुरतो यदालोचनं स तत्सेविलक्षण आलो-
चनादोषः, तत्र चायमभिप्रायः आलोचयितुः—"जह एसो मत्तुल्लो न दाही गुरुगमेव पच्छित्तं । इय जो किलिट्ठचित्तो दिन्ना
आलोयणा तेणं ॥१॥" इति [यथैष मत्तुल्यो (दोषेणेति) न गुरु प्रायश्चित्तं दास्यति इति यः क्लिष्टचित्तः तेनालोचना दत्ता एव (सूत-
मित्यर्थः) ॥१॥] एतद्दोषपरिहारिणाऽपि गुणवत एवालोचना देयेति तद्गुणानाह—'दसहिं ठाणेही'त्यादि, एवं अनेन क्रमेण
यथाऽष्टस्थानके तथा इदं सूत्रं पठनीयमित्यर्थः, कियद्दूरं यावत्खंतेदंतेत्तिपदे, तथाहि—'विणयसंपन्ने नाणसंपन्ने दंसणसंपन्ने चरण
संपन्ने'त्ति, 'अमायी अपच्छाणुतावी'त्ति पदद्वयमिहाधिकं प्रकटं च, नवरं ग्रन्थान्तरोक्तं तत्स्वरूपमिदं—"नो पलिउंचे अमायी अप-
च्छयावी न परितप्पे'त्ति । [नापह्नुवीतामायी अपश्चात्तापी न परितप्येत्] एवंभूतगुणवताऽपि दीयमानाऽऽलोचना गुणवतैव प्रत्येष्टव्येति
तद्गुणानाह—'दसही'त्यादि, 'आयारवं'ति ज्ञानाद्याचारवान् १ 'अवहारवं'ति अवधारणावान् २ जावकरणात् 'ववहारवं' आग
मादिपञ्चप्रकारव्यवहारवान् ३ 'उव्वीलए' अपव्रीडकः लज्जापनोदको यथा परः सुखमालोचयतीति ४ 'पकुव्वी' आलोचिते शुद्धि-
करणसमर्थः ५ 'निज्जवए' यस्तथा प्रायश्चित्तं दत्ते यथा परो निर्वोढुमलं भवतीति ६ 'अपरिस्सावी' आलोचकदोषानुपश्रुत्य यो

नोद्गिरति ७ 'अवायदंसी' सातिचारस्य पारलौकिकापायदर्शीति पूर्वोक्तमेव ८ 'पियधम्मे ९ दढधम्मे' १० त्ति अधिकमिह प्रियधर्म्मा–धर्म्मप्रियः दृढधर्म्मा य आपद्यपि धर्म्मान्न चलतीति । आलोचितदोषाय प्रायश्चित्तं देयमतस्तत्प्ररूपणसूत्रं–आलोचना–गुरुनिवेदनं तयैव यच्छुद्ध्यत्यतिचारजातं तत्तदर्हत्वादालोचनार्हं, तच्छुद्ध्यर्थं यत्प्रायश्चित्तं तदप्यालोचनार्हं, तच्चालोचनैवेत्येवं सर्वत्र, यावत्करणात् 'पडिक्कमणारिहे' प्रतिक्रमणं–मिथ्यादुष्कृतं तदर्हं 'तदुभयारिहे' आलोचनाप्रतिक्रमणार्हमित्यर्थः 'विवेगारिहे' परित्यागशोध्यं 'विउसग्गारिहे' कायोत्सर्गार्हं 'तवारिहे' निर्विकृतिकादितपःशोध्यं 'छेदारिहे' पर्यायच्छेदयोग्यं 'मूलारिहे' व्रतोपस्थापनार्हं 'अणवट्ठप्पारिहे' यस्मिन्नासेविते कञ्चन कालं व्रतेष्वनवस्थाप्यं कृत्वा पश्चाचीर्णतपास्तद्दोषोपरतो व्रतेषु स्थाप्यते तदनवस्थाप्यार्हं, 'पारञ्चियारिहे' एतदधिकमिह, तत्र यस्मिन् प्रतिषेविते लिङ्गक्षेत्रकालतपोभिः पाराञ्चिको–बहिर्भूतः क्रियते तत्पराञ्चिकं तदर्हमिति ।

पाराञ्चिको मिथ्यात्वमप्यनुभवेदतो मिथ्यात्वनिरूपणाय सूत्रम्—

**दसविधे मिच्छत्ते पं० तं०—अधम्मे धम्मसण्णा धम्मे अधम्मसण्णा अमग्गे मग्गसण्णा मग्गे उम्मग्गसन्ना अजीवेसु जीवसन्ना जीवेसु अजीवसन्ना असाहुसु साहुसन्ना साहुसु असाहुसण्णा अमुत्तेसु मुत्तसन्ना मुत्तेसु अमुत्तसण्णा (सू० ७३४) चंदप्पभे णं अरहा दस पुव्वसतसहस्साइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, धम्मे णमरहा दस वाससयसहस्साइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, णमी णमरहा दस वासस-**

हस्साइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, पुरिससीहे णं वासुदेवे दस वाससयसहस्साइं सव्वाउयं पालइत्ता छट्ठीते तमाए पुढवीए नेरतित्ताते उववन्ने, णेमी णं अरहा दस धणूइं उद्धं उच्चत्तेणं दस य वाससयाइं सव्वाउयं पालइत्ता सिद्धे जावप्पहीणे, कण्हे णं वासुदेवे दस धणूइं उद्धं उच्चत्तेणं दस य वाससयाइं सव्वाउयं पालइत्ता तच्चाते वालुयप्पभाते पुढवीते नेरतियत्ताते उववन्ने, (सू० ७३५) दसविहा भवणवासी देवा पं० तं०—असुरकुमारा जाव थणियकुमारा। एएसि णं दसविधाणं भवणवासीणं देवाणं दस चेतितरुक्खा पं० तं०—आसत्थ १ सत्तिवन्ने २ सामलि ३ उंबर ४ सिरीस ५ दहिवन्ने ६। वंजुल ७ पलास ८ वप्पे तते त ९ कणितारुक्खे १० ॥१॥ (सू० ७३६) दसविधे सोक्खे पं० तं०—आरोग्ग १ दीहमाउं २ अड्ढेज्जं ३ काम ४ भोग ५ संतोसे ६। अत्थि ७ सुहभोग ८ निक्खम्ममेव ९ तत्तो अणाबाहे १० ॥१॥ (सू० ७३७) दसविधे उवघाते पं० तं०—उग्गमोवघाते उप्पायणोवघाते जह पंचठाणे, जाव परिहरणोवघाते णाणोवघाते दंसणोवघाते चरित्तोवघाते अचियत्तोवघाते सारक्खणोवघाते दसविधा विसोही पं० तं०—उग्गमविसोही उप्पायणविसोही जाव सारक्खणविसोही (सू० ७३८)।

तत्र अधर्म्मे—श्रुतलक्षणविहीनत्वादनागमे अपौरुषेयादौ धर्म्मसंज्ञा—आगमबुद्धिर्मिथ्यात्वं, विपर्यस्तत्वादिति १ धर्म्मे—कषच्छेदादिशुद्धे सम्यक्श्रुते आप्तवचनलक्षणेऽधर्म्मसंज्ञा सर्वे एव पुरुषा रागादिमन्तोऽसर्वज्ञाश्च पुरुषत्वादहमिवेत्यादिप्रमाणतोऽनाप्तास्तदभावात्तत्प्रणीतं नागमं धर्म्म इत्यादिकुविकल्पवशादनागमबुद्धिरिति २ तथा उन्मार्गो—निर्वृतिपुरीं प्रति अपन्थाः वस्तुतत्त्वापेक्षया विपरीत-

श्रद्धानज्ञानानुष्ठानरूपस्तत्र मार्गसंज्ञा–कुवासनातो मार्गबुद्धिः ३ तथा मार्गेऽमार्गसंज्ञेति प्रतीतं ४ तथा अजीवेषु–आकाशपरमाण्वादिषु जीवसंज्ञा 'पुरुष एवेद' मित्याद्यभ्युपगमादिति तथा 'क्षितिजलपवनहुताशनयजमानाकाशचन्द्रसूर्याख्याः । इति मूर्त्तयो महेश्वरसम्बन्धिन्यो भवन्त्यष्टौ ॥१॥" इति ५, तथा जीवेषु –पृथिव्यादिष्वजीवसंज्ञा यथा न भवन्ति पृथिव्यादयो जीवाः उच्छ्वासादीनां प्राणिधर्म्माणामनुपलम्भाद् घटवदिति ६ तथाऽसाधुषु–षड्जीवनिकायवधानिवृत्तेष्वौद्देशिकादिभोजिष्वब्रह्मचारिषु साधुसंज्ञा, यथा–साधव एते सर्वपापप्रवृत्ता अपि ब्रह्ममुद्राधारित्वादित्यादिविकल्परूपेति ७ तथा साधुषु–ब्रह्मचर्यादिगुणान्वितेषु असाधुसंज्ञा, एते हि कुमारप्रव्रजिता नास्त्येषां गतिरपुत्रत्वात् स्नानादिविरहितत्वाद्वेत्यादिविकल्पात्मिकेति ८ तथाऽमुक्तेषु–सकर्म्मसु लोकव्यापारप्रवृत्तेषु मुक्तसंज्ञा, यथा—'अणिमाद्यष्टविधं प्राप्यैश्वर्यं कृतिनः सदा । मोदन्ते निर्वृतात्मानस्तीर्णाः परमदुस्तरम् ॥१॥" इत्यादिविकल्पात्मिकेति ९ तथा मुक्तेषु–सकलकर्म्मकृतविकारविरहितेष्वनन्तज्ञानदर्शनसुखवीर्ययुक्तेषु अमुक्तसंज्ञा, न सन्त्येवेदृशा मुक्ताः, अनादिकर्म्मयोगस्य निवर्त्तयितुमशक्यत्वादनादित्वादेव आकाशात्मयोगस्येवेति, न सन्ति वा मुक्ताः मुक्तस्य विध्यातदीपकल्पत्वादात्मन एव वा नास्तित्वादित्यादिविकल्परूपेति १० । अनन्तरं मिथ्यात्वविषयतया मुक्ताः उक्ताः, इदानीं तदधिकारात्तीर्थकरत्रयस्य दशस्थानकानुपातेन मुक्तत्वमभिधीयते—'चंदप्पभे णं' इत्यादि सूत्रत्रयमपि कण्ठ्यं, नवरं सिद्धे 'जाव'त्ति यावत्करणात् 'सिद्धे बुद्धे मुत्ते अंतकडे सव्वदुक्खप्पहीणे'त्ति सूत्रं द्रष्टव्यमिति, उक्ततीर्थकराश्च महापुरुषा इति तत्सम्बन्धि 'पुरिससीहे'त्यादिसूत्रत्रयं कण्ठ्यं । नैरयिकतयेति प्रागुक्तं, नारकासन्नाश्च क्षेत्रतो भवनवासिन इति तद्गतं सूत्रद्वयं कण्ठ्यं, नवरं—"असुरा १ नाग २ सुवन्ना ३ विज्जू ४ अग्गी ५ य दीव ६ उदही ७ य । दिसि ८ पवण ९ थणियनामा १० दसहा एए भवणवासी ॥१॥" इति, अनेन क्रमेणाश्वत्थादयश्चैत्यवृक्षा ये सिद्धायतनादिद्वारेषु

श्रूयन्त इति। भवनवासिनो देवा उक्तास्तेषां च किल सुखं भवतीति सुखं सामान्यत आह—'दसविहे'त्यादि, 'आरोग'गाहा, आरोग्यं—नीरोगता १ दीर्घमायुः—चिरं जीवितं, शुभमितीह विशेषणं दृश्यमिति २, 'अड्ढेज्ज'त्ति आढ्यत्वं—धनपतित्वं सुखकारणत्वात्सुखं, अथवा आढ्यैः क्रियमाणा इज्या—पूजा आढ्येज्या, प्राकृतत्वादड्ढेज्जत्ति ३, 'काम'त्ति कामौ—शब्दरूपे सुखकारणत्वात् सुख ४, एवं 'भोग'त्ति भोगाः—गन्धरसस्पर्शाः ५, तथा सन्तोषः—अल्पेच्छता तत्सुखमेव आनन्दरूपत्वात्सन्तोषस्य, उक्तं च—"आरोगसारियं माणुसत्तणं सच्चसारिओ धम्मो। विज्जा निच्छयसारा सुहाइं सन्तोससाराइं ॥१॥" इति [आरोग्यसारं मनुष्यत्वं सत्यसारो धर्मः। विद्या निश्चयसारा सुखानि सन्तोषसाराणि ॥१॥] ६, 'अत्थि'त्ति येन येन यदा यदा प्रयोजनं तत्तत्तदा तदाऽस्ति—भवति जायते इति सुखमानन्दहेतुत्वादिति ७, 'सुह भोग'त्ति शुभः—अनिन्दितो भोगो—विषयेषु भोगक्रियेति स सुखमेव सातोदयसम्पाद्यत्वात् तस्येति ८, तथा 'निक्खममेव'त्ति निष्क्रमणं निष्क्रमः—अविरतिजम्बालादिति गम्यते, प्रव्रज्येत्यर्थः, इह च द्विर्भावो नपुंसकता च प्राकृतत्वात्, एवकारोऽवधारणे, अयमर्थः—निष्क्रमणमेव भवस्थानां सुखं, निराबाधस्वायत्तानन्दरूपत्वात्, अत एवोच्यते—'दुवालसमासपरियाए समणे निग्गंथे अणुत्तराणं देवाणं तेउल्लेसं वीइवयइ'त्ति तथा "नैवास्ति राजराजस्य तत्सुखं नैव देवराजस्य। यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥१॥" इति, शेषसुखानि हि दुःखप्रतीकारमात्रत्वात् सुखाभिमानजनकत्वाच्च तत्त्वतो न सुखं भवतीति ९, 'तत्तो अणाबाहि'त्ति ततो—निष्क्रमणसुखानन्तरं अनाबाधं—न विद्यते अबाधा—जन्मजरामरणक्षुत्पिपासादिका यत्र तदनाबाधं मोक्षसुखमित्यर्थः, एतदेव च सर्वोत्तमं, यत उक्तम्—"नवि अत्थि माणुसाणं तं सोक्खं नविय सव्वदेवाणं। जं सिद्धाणं सोक्खं अव्वाबाहं उवगयाणं ॥१॥" इति, १० [नाप्यस्ति मनुष्याणां तत्सौख्यं नापि च सर्वदेवानां। यत्सिद्धानां सौख्यमव्याबाध-

मुपगतानां ॥१॥] निष्क्रमणसुखं चारित्रसुखमुक्तं, तच्चानुपहतमनाबाधसुखायेत्यतश्चारित्रस्यैतत्साधनस्य भक्तादेर्ज्ञानादेश्चोपघातनिरूपणसूत्रं, तत्र यदुद्गमेन—आधाकर्म्मादिना षोडशविधेनोपहननं—विराधनं चारित्रस्याकल्प्यता वा भक्तादेः स उद्गमोपघातः १, एवमुत्पादनया—धात्र्यादिदोषलक्षणया यः स उत्पादनोपघातः, 'जहा पंचट्ठाणे'त्ति भणनात् तत्सूत्रमिह दृश्यं, कियत् ?, अत आह—'जाव परी'त्यादि, तच्चेदम्—'एसणोवघाए' एषणया—शङ्कितादिभेदया यः स एषणोपघातः 'परिकम्मोवघाए' परिकर्म्म—वस्त्रपात्रादिसमारचनं तेनोपघातः स्वाध्यायस्य श्रमादिना शरीरस्य संयमस्य वोपघातः परिकर्मोपघातः, 'परिहरणोवघाए' परिहरणा—अलाक्षणिकस्याकल्प्यस्य वोपकरणस्याऽऽसेवा तया यः स परिहरणोपघातः, तथा ज्ञानोपघातः श्रुतज्ञानापेक्षया प्रमादतः, दर्शनोपघातः शङ्कादिभिः, चारित्रोपघातः समितिभङ्गादिभिः, 'अचियत्तोवघाए'त्ति अचियत्तम्—अप्रीतिकं तेनोपघातो विनयादेः, 'सारक्खणोवघाए'त्ति संरक्षणेन शरीरादिविषये मूर्च्छा उपघातः परिग्रहविरतेरिति संरक्षणोपघात इति। उपघातविपक्षभूतविशुद्धिनिरूपणाय सूत्रम्, ततोद्गमादिविशुद्धिर्भक्तादेर्निरवद्यता, जावत्तिकरणात् एसणेत्यादि वाच्यमित्यर्थः, तत्र परिकर्म्मणा—वसत्यादिसारवणलक्षणेन क्रियमाणेन विशुद्धिर्या संयमस्य सा परिकर्मविशुद्धिः परिहरणया—वस्त्रादेः शास्त्रीययाऽऽसेवनया विशुद्धिः परिहरणाविशुद्धिः, ज्ञानादित्रयविशुद्धयस्तदाचारपरिपालनातः, अचियत्तस्य—अप्रीतिकस्य विशोधिस्तन्निवर्त्तनादचियत्तविशोधिः, संरक्षणं संयमार्थं उपध्यादेस्तेन विशुद्धिश्चारित्रस्येति संरक्षणविशुद्धिः, अथवोद्गमाद्युपाधिका दशप्रकाराऽपीयं चेतसो विशुद्धिर्विशुद्ध्यमानता भणितेति।

इदानीं चित्तस्यैव विशुद्धिविपक्षभूतमुपध्याद्युपाधिकं संक्लेशमभिधातुमुपक्रमते, तत्र सूत्रम्—

दसविधे संकिलेसे पं० तं०—उवहिसंकिलेसे उवस्सयसंकिलेसे कसायसंकिलेसे भत्तपाणसंकिलेसे मणसंकिलेसे वतिसंकिलेसे कायसंकिलेसे णाणसंकिलेसे दंसणसंकिलेसे चरित्तसंकिलेसे। दसविहे असंकिलेसे पं० तं०—उवहिअसंकिलेसे जाव चरित्तअसंकिलेसे। (सू० ७३९) दसविधे बले पं० तं०—सोतिंदितबले जाव फासिंदितबले णाणबले दंसणबले चरित्तबले तवबले वीरितबले (सू० ७४०)।

'दसे'त्यादि, संक्लेशः–असमाधिः, उपधीयते–उपष्टभ्यते संयमः संयमशरीरं वा येन स उपधिः–वस्त्रादिस्तद्विषयः संक्लेशः उपधिसंक्लेशः, एवमन्यत्रापि, नवरं 'उवस्सय'त्ति उपाश्रयो–वसतिस्तथा कषाया एव कषायैर्वा संक्लेशः कषायसंक्लेशः तथा भक्तपानाश्रितः संक्लेशो भक्तपानसंक्लेशः तथा मनसो मनसि वा संक्लेशो वाचा संक्लेशः कायमाश्रित्य संक्लेश इति विग्रहः, तथा ज्ञानस्य संक्लेशः–अविशुध्यमानता स ज्ञानसंक्लेशः, एवं दर्शनचारित्रयोरपीति। एतद्विपक्षोऽसंक्लेशस्तमधुनाऽऽह—'दसे'त्यादि, कण्ठ्यं। असंक्लेशश्च विशिष्टे जीवस्य वीर्यबले सति भवतीति सामान्यतो बलनिरूपणायाह—'दसे'त्यादि, श्रोत्रेन्द्रियादीनां पञ्चानां बलं–स्वार्थग्रहणसामर्थ्यं 'जाव'त्ति चक्षुरिन्द्रियबलादि वाच्यमित्यर्थः, ज्ञानबलं–अतीतादिवस्तुपरिच्छेदसामर्थ्यं चारित्रसाधनतया मोक्षसाधनसामर्थ्यं वा, दर्शनबलं सर्ववेदिवचनप्रामाण्यादतीन्द्रियायुक्तिगम्यपदार्थरोचनलक्षणं चारित्रबलं यतो दुष्करमपि सकलसङ्गवियोगं करोत्यात्मा यच्चानन्तमनाबाधमैकान्तिकमात्यन्तिकमात्मायत्तमानन्दमाप्नोति, तपोबलं यदनेकभवार्जितमनेकदुःखकारणं निकाचितकर्मग्रन्थिं क्षपयति, वीर्यमेव बलं वीर्यबलं, यतो गमनागमनादिकासु विचित्रासु क्रियासु वर्त्तते, यच्चापनीय सकलकलुषपटलमनवरतानन्दभाजनं भवतीति।

चारित्रबलयुक्तः सत्यमेव भाषत इति तन्निरूपणायाह—

दसविहे सच्चे पण्णत्ते—'जणवय १ सम्मय २ ठवणा ३ नामे ४ रूवे ५ पडुच्चसच्चे ६ य। ववहार ७ भाव ८ जोगे ९ दसमे ओवम्मसच्चे य १०॥१॥ दसविधे मोसे पं० तं०—कोधे १ माणे २ माया ३ लोभे ४ पिज्जे ५ तहेव दोसे ६ य। हास ७ भते ८ अक्खातित ९ उवघातनिस्सिते दसमे १० ॥२॥ दसविधे सच्चामोसे पं० तं०—उप्पन्नमीसते १ विगतमीसते २ उप्पण्णविगतमीसते ३ जीवमीसए ४ अजीवमीसए ५ जीवाजीवमीसए ६ अणंतमीसए ७ परित्तमीसए ८ अद्धामीसए ९ अद्धद्धामीसए १० (सू० ७४१)।

'दसविहे'त्यादि, सन्तः-प्राणिनः पदार्था मुनयो वा तेभ्यो हितं सत्यं दशविधं तत्प्रज्ञप्तं, तद्यथा—'जणवय'गाहा, 'जणवय'त्ति सत्यशब्दः प्रत्येकमभिसम्बन्धनीयः, ततश्च जनपदेषु-देशेषु यद्यदर्थवाचकतया रूढं देशान्तरेऽपि तत्तदर्थवाचकतया प्रयुज्यमानं सत्यमवितथमिति जनपदसत्यं, यथा कोङ्कणादिषु पयः पिच्चं नीरमुदकमित्यादि, सत्यत्वं चास्यादुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद् व्यवहारप्रवृत्तः, एवं शेषेष्वपि भावना कार्येति, 'संमय'त्ति संमतं च तत् सत्यं चेति सम्मतसत्यं, तथाहि-कुमुदकुवलयोत्पलतामरसानां समाने पङ्कसम्भवे गोपालादीनामपि सम्मतमरविन्दमेव पङ्कजमिति अतस्तत्र संमततया पङ्कजशब्दः सत्यः कुवलयादावसत्योऽसंमतत्वादिति, 'ठवण'त्ति स्थाप्यत इति स्थापना यल्लेप्यादिकर्म्मार्हदादिविकल्पेन स्थाप्यते तद्विषये सत्यं स्थापनासत्यं, यथा अजिनोऽपि जिनोऽयमनाचार्योऽप्याचार्योऽयमिति, 'नामे'त्ति नाम-अभिधानं तत्सत्यं नामसत्यं, यथा कुलमवर्द्धयन्नपि कुलवर्द्धन

उच्यते एवं धनवर्द्धन इति, 'रूवे'त्ति रूपापेक्षया सत्यं रूपसत्यं, यथा प्रपञ्चयतिः प्रव्रजितरूपं धारयन् प्रव्रजित उच्यते न चासत्यताऽस्येति, 'पडुच्चसच्चे य'त्ति प्रतीत्य—आश्रित्य वस्त्वन्तरं सत्यं प्रतीत्यसत्यं, यथा अनामिकाया दीर्घत्वं ह्रस्वत्वं चेति, तथाहि—तस्याऽनन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसन्निधाने तत्तद्रूपमभिव्यज्यत इति सत्यता, 'ववहार'त्ति व्यवहारेण सत्यं व्यवहारसत्यं, यथा दह्यते गिरिः गलति भाजनं, अयं च गिरिगततृणादिदाहे व्यवहारः प्रवर्त्तते, उदके च गलति सतीति, 'भाव'त्ति भावं—भूयिष्ठशुक्लादिपर्यायमाश्रित्य सत्यं भावसत्यं, यथा शुक्ला बलाकेति, सत्यपि हि पञ्चवर्णसम्भवे शुक्लवर्णोत्कटत्वात् शुक्लेति, 'जोगे'त्ति योगतः—संबन्धतः सत्यं योगसत्यं, यथा दण्डयोगाद् दण्डः छत्रयोगाच्छत्र एवोच्यत इति, दशममौपम्यसत्यमिति उपमैवौपम्यं तेन सत्यमौपम्यसत्यं यथा समुद्रवत्तडागं देवोऽयं सिंहस्त्वमिति, सर्वत्रैकारः प्रथमैकवचनार्थो द्रष्टव्य इहेति । सत्यविपक्षं मृषाह—'दसे' त्यादि, 'मोसे'त्ति प्राकृतत्वात् मृषाऽनृतमित्यर्थः, 'कोहे'गाहा, 'कोहे'त्ति क्रोधे निश्रितमिति सम्बन्धात् क्रोधाश्रितं—कोपाश्रितं मृषेत्यर्थः, तत्र यथा क्रोधाभिभूतः अदासमपि दासमभिधत्त इति, माने निश्रितं यथा मानाध्मातः कश्चित् केनचिदल्पधनोऽपि पृष्टः सन्नाह—महाधनोऽहमिति, 'माय'त्ति मायायां निश्रितं यथा मायाकारप्रभृतय आहुः—'नष्टो गोलकः'इति, 'लोभे'त्ति लोभे निश्रितं वणिक्प्रभृतीनामन्यथाक्रीतमेवेत्थं क्रीतमित्यादि, 'पिज्ज'त्ति प्रेमणि निःश्रितं अतिरक्तानां दासोऽहं तवेत्यादि, 'तहेव दोसे य'त्ति द्वेषे निश्रितं, मत्सरिणां गुणवत्यपि निर्गुणोऽयमित्यादि, 'हासे'त्ति हासे निश्रितं यथा कान्दर्पिकाणां कस्मिंश्चित्कस्यचित्सम्बन्धिनि गृहीते पृष्टानां न दृष्टमित्यादि, 'भये'त्ति भयनिश्रितं तस्करादिगृहीतानां तथा तथा असमञ्जसाभिधानं 'अक्खाइय'त्ति आख्यायिकानिश्रितं तत्प्रतिबद्धोऽसत्प्रलापः, 'उवघायनिस्सिए'त्ति उपघाते—प्राणिवधे निश्रितं—आश्रितं दशमं मृषा, अचौरे चौरोऽयमित्य-

भ्याख्यानवचनं मृषाशब्दस्त्वव्यय इति । सत्यासत्ययोगे मिश्रं वचनं भवतीति तदाह— 'दसे'त्यादि, सत्यं च तन्मृषा चेति प्राकृतत्वात् सच्चामोसंति, 'उप्पन्नमीसए'त्ति उत्पन्नविषयं मिश्रं—सत्यामृषा उत्पन्नमिश्रं तदेवोत्पन्नमिश्रकं, यथैकं नगरमधिकृत्यास्मिन्नद्य दश दारका उत्पन्ना इत्यभिदधतस्तन्न्यूनाधिकभावे व्यवहारतोऽस्य सत्यामृषात्वात्, श्वस्ते शतं दास्यामीत्यभिधाय पञ्चाशत्यपि दत्तायां लोके मृषात्वादर्शनादनुत्पन्नेष्वेवादत्तेष्वेव वा मृषात्वसिद्धेः, सर्वथा क्रियाऽभावेन सर्वथा व्यत्ययाद्, एवं विगतादिष्वपि भावनीयमिति १, 'विगतमीसए'त्ति विगतविषयं मिश्रकं विगतमिश्रकं, यथैकं ग्राममधिकृत्यास्मिन्नद्य दश वृद्धा विगता इत्यभिदधतो न्यूनाधिकभावे मिश्रमिति २, 'उप्पन्नविगयमीसए'त्ति उत्पन्नं च विगतं च उत्पन्नविगते तद्विषयं मिश्रकं उत्पन्नविगतमिश्रकं, यथैकं पत्तनमधिकृत्यास्मिन्नद्य दश दारका जाताः दश च वृद्धा विगता इत्यभिदधतस्तन्न्यूनाधिकभाव इति ३, 'जीवमीसए'त्ति जीवविषयं मिश्रं—सत्यासत्यं जीवमिश्रं, यथा जीवन्मृतकृमिराशौ जीवराशिरिति ४, अजीवमीसए'त्ति अजीवानाश्रित्य मिश्रमजीवमिश्रं, यथा तस्मिन्नेव प्रभूतमृतकृमिराशावजीवराशिरिति ५, 'जीवाजीवमिस्सए'त्ति जीवाजीवविषयं मिश्रकं जीवाजीवमिश्रकं यथा तस्मिन्नेव जीवन्मृतकृमिराशौ प्रमाणनियमेनैतावन्तो जीवन्त्येतावन्तश्च मृता इत्यभिदधतस्तन्न्यूनाधिकत्वे ६, 'अणंतमीसए' त्ति अनन्तविषयं मिश्रकमनन्तमिश्रकं यथा मूलकन्दादौ परीतपत्रादिमत्यनन्तकायोऽयमित्यभिदधतः ७, 'परित्तमीसए'त्ति परीत्तविषयं मिश्रकं परीत्तमिश्रकं यथा अनन्तकायलेशवति परीत्ते परीत्तोऽयमित्यभिदधतः ८, 'अद्धामिस्सए'त्ति कालविषयं सत्यासत्यं यथा कश्चित् कस्मिंश्चित्प्रयोजने सहायांस्त्वरयन् परिणतप्राये वा वासरे एव रजनी वर्त्तत इति ब्रवीति ९, 'अद्धद्धामीसए'त्ति अद्धा—दिवसो रजनी वा तदेकदेशः प्रहरादिः अद्धद्धा तद्विषयं मिश्रकं—सत्यासत्यं अद्धाद्धामिश्रकं, यथा कश्चित् कस्मिंश्चित्प्रयोजने प्रहरमात्र एव-

१० स्थानाध्ययने उद्देशः १ सत्याद्या भाषाः सू–७४१

मध्याह्न इत्याह।

भाषाधिकारात् सकलभाषणीयार्थव्यापकं सत्यभाषारूपं दृष्टिवादं पर्यायतो दशधाऽऽह—

**दिट्ठिवायस्स णं दस नामधेज्जा पं० तं०—दिट्ठिवातेति वा हेउवातेति वा भूयवातेति वा तच्चावातेति वा सम्मावातेति वा धम्मावातेत्ति वा भासाविजतेति वा पुव्वगतेति वा अणुजोगगतेति वा सव्वपाणभूतजीवसत्तसुहावहेति वा (सू० ७४२)।**

'दिट्ठी'त्यादि दृष्टयो दर्शनानि वदनं वादः दृष्टीनां वादो दृष्टिवादः दृष्टीनां वा पातो यस्मिन्नसौ दृष्टिपातः, सर्वनयदृष्टय इहाख्यायन्त इत्यर्थः, तस्य दश नामधेयानि नामानीत्यर्थः, तद्यथा—दृष्टिवाद इति प्रतिपादितमेव, इतिशब्द उपप्रदर्शने वाशब्दो विकल्पे, तथा हिनोति—गमयति जिज्ञासितमर्थमिति हेतुः—अनुमानोत्थापकं लिङ्गमुपचारादनुमानमेव वा तद्वादो हेतुवादः, तथा भूताः—सद्भूताः पदार्थास्तेषां वादो भूतवादः, तथा तत्त्वानि—वस्तूनामैदम्पर्याणि तेषां वादस्तत्त्ववादस्तथ्यो वा—सन्यो वादस्तथ्यवादः, तथा सम्यग्—अविपरीतो वादः सम्यग्वादः, तथा धर्म्माणां—वस्तुपर्यायाणां धर्मस्य वा—चारित्रस्य वादो धर्म्मवादः, तथा भाषा—सत्यादिका तस्या विचयो—निर्णयो भाषाविचयः, भाषाया वा—वाचो विजयः—समृद्धिर्यस्मिन् स भाषाविजयः, तथा सर्वश्रुतात्पूर्वं क्रियन्त इति पूर्वाणि—उत्पादपूर्वादीनि चतुर्दश तेषु गतः—अभ्यन्तरीभूतस्तत्स्वभाव इत्यर्थ इति पूर्वगतः, तथाऽनुयोगः—प्रथमानुयोगस्तीर्थकरादिपूर्वभवादिव्याख्यानग्रन्थो गण्डिकानुयोगश्च भरतनरपतिवंशजानां निर्वाणगमनानुत्तरविमानवक्तव्यताव्याख्यानग्रन्थ इति द्विरूपेऽ-

नुयोगे गतोऽनुयोगगतः, एतौ च पूर्वगतानुयोगगतौ दृष्टिवादांशावपि दृष्टिवादतयोक्तौ अवयवे समुदायोपचारादिति, तथा सर्वे-विश्वे ते च ते प्राणाश्च-द्वीन्द्रियादयो भूताश्च-तरवः जीवाश्च-पञ्चेन्द्रियाः सत्त्वाश्च-पृथिव्यादयः इति द्वन्द्वे सति कर्मधारयः, ततस्तेषां सुखं शुभं वा आवहतीति सर्वप्राणभूतजीवसत्त्वसुखावहः, सुखावहत्वं च संयमप्रतिपादकत्वात् सत्त्वानां निर्वाणहेतुत्वाच्चेति ।

प्राणादीनां सुखावहो दृष्टिवादोऽशस्त्ररूपत्वात् शस्त्रमेव हि दुःखावहमिति शस्त्रप्ररूपणायाह—

**दसविधे सत्थे पं० तं०—'सत्थमग्गी १ विसं २ लोणं ३, सिणेहो ४ खार ५ मंबिलं ६ । दुप्पउत्तो मणो ७ वाया ८, काया ९ भावो त अविरती १० ॥१॥ दसविहे दोसे पं० तं०—तज्जातदोसे १ मतिभंगदोसे २ पसत्थारदोसे ३ परिहरणदोसे ४ । सलक्खण ५ कारण ६ हेउदोसे ७, संकामणं ८ निग्गह ९ वत्थुदोसे १० ॥१॥ दसविधे विसेसे पं० तं०—वत्थु १ तज्जातदोसे २ त, दोसे एगट्ठितेति ३ त । कारणे ४ त पडुप्पण्णे ५, दोसे ६ निच्चे ७ हि अट्ठमे ८ ॥१॥ अत्तणा ९ उवणीते १० त, विसेसेति त, ते दस (सू० ७४३) ।**

'दसे'त्यादि, शस्यते-हिंस्यते अनेनेति शस्त्रं, 'सत्थं'सिलोगो. शस्त्रं-हिंसकं वस्तु, तच्च द्विधा-द्रव्यतो भावतश्च, तत्र द्रव्यतस्तावदुच्यते-अग्निः-अनलः, स च विसदृशानलापेक्षया स्वकायशस्त्रं भवति, पृथिव्याद्यपेक्षया तु परकायशस्त्रं १ विषं-स्थावरजङ्गमभेदं द लवणं-प्रतीतं ३ स्नेहः-तैलघृतादि ४ क्षारो-भस्मादि ५ अम्लं-काञ्जिकं ६ 'भावो य'त्ति इह द्रष्टव्यं तेन भावो-भावरूपं शस्त्रं, किं तदित्याह-दुष्प्रयुक्तं-अकुशलं मनो-मानसं ७ वाग्-वचनं दुष्प्रयुक्ता ८ कायश्च-शरीरं दुष्प्रयुक्त एव ९, इह च कायस्य

हिंसाप्रवृत्तौ खड्गादेरुपकरणत्वात् कायग्रहणेनैव तद्ग्रहणं द्रष्टव्यमिति, अविरतिश्च—अप्रत्याख्यानमथवा अविरतिरूपो भावः शस्त्रमिति १०। अविरत्यादयो दोषाः शस्त्रमित्युक्तमिति दोपप्रस्तावाद्दोपविशेपनिरूपणायाह—'दसविहे'त्यादि, 'तज्जाये'त्यादि वृत्त, एते हि गुरुशिष्ययोर्वादिप्रतिवादिनोर्वा वादाश्रया इव लक्ष्यन्ते, तत्र तस्य गुर्वादेर्जातं—जातिः प्रकारो वा जन्ममर्मकर्मादिलक्षणः तज्जातं तदेव दूषणमितिकृत्वा दोपस्तज्जातदोपः, तथाविधकुलादिना दूषणमित्यर्थः, अथवा तस्मात्—प्रतिवाद्यादेः सकाशाज्जातः क्षोभान्मुखस्तम्भादि लक्षणो दोपस्तज्जातदोपः १ तथा स्वस्यैव मतेः—बुद्धेर्भङ्गो—विनाशो मतिभङ्गो—विस्मृत्यादिलक्षणो दोषो मतिभङ्गदोपः २ तथा प्रशास्ता—अनुशासको मर्यादाकारी सभानायकः सभ्यो वा तस्माद् द्विष्टादुपेक्षकाद्वा दोपः प्रतिवादिनो जयदानलक्षणो विस्मृतप्रमेय-प्रतिवादिनः प्रमेयस्मारणादिलक्षणो वा प्रशास्तृदोपः ३, इह त्थाशब्दो लघुश्रुतिरिति, तथा परिहरणं—आसेवा स्वदर्शनस्थित्या लोक-रूढ्या वा अनासेव्यस्य तदेव दोपः परिहरणदोपः, अथवा परिहरणं—अनासेवनं सभारूढ्या सेव्यस्य वस्तुनस्तदेव तस्माद्वा दोपः परिहरणदोपः अथवा वादिनोपन्यस्तस्य दूषणस्य असम्यक्परिहारो जात्युत्तरं परिहरणदोप इति, यथा बौद्धेनोक्तमनित्यः शब्दः कृतकत्वाद् घटवदिति, अत्र मीमांसकः परिहारमाह—ननु घटगतं कृतकत्वं शब्दस्यानित्यत्वसाधनायोपन्यस्यते शब्दगतं वा?, यदि घटगतं तदा तच्छब्दे नास्तीत्यसिद्धता हेतोः, अथ शब्दगतं तन्नानित्यत्वेन व्याप्तमुपलब्धमित्यसाधारणानैकान्तिको हेतुरित्ययं न सम्यक् परिहारः, एवं हि सर्वानुमानोच्छेदप्रसङ्गः, अनुमानं हि साधनधर्म्ममात्रात् साध्यधर्म्ममात्रनिर्णयात्मकं, अन्यथा धूमादनला-नुमानमपि न सिद्ध्येत् . तथाहि—अग्निरत्र धूमाद्यथा महानसे, अत्र विकल्प्यते—किमत्रेतिशब्दनिर्दिष्टपर्वतैकप्रदेशादिगतधूमोऽग्निमा-पनायोपात्तः उत महानसगतो ?, यदि पर्वतादिगतः सोऽग्निना न व्याप्तः सिद्ध इत्यसाधारणानैकान्तिको हेतुः, अथ महानसगतस्तदा

नासौ पर्वतैकदेशे वर्त्तत इत्यसिद्धो हेतुरिति अयं परिहरणदोष इति ४, तथा लक्ष्यते–तदन्यव्यपोहेनावधार्यते वस्त्वनेनेति लक्षणं स्वं च तल्लक्षणं च स्वलक्षणं यथा जीवस्योपयोगो यथा वा प्रमाणस्य स्वपरावभासकज्ञानत्वं ५, तथा करोतीति कारणं–परोक्षार्थनिर्णयनिमित्तमुपपत्तिमात्रं यथा निरुपमसुखः सिद्धो ज्ञानानाबाधप्रकर्षात्, नात्र किल सकललोकप्रतीतः साध्यसाधनधर्म्मानुगतो दृष्टान्तोऽस्तीत्युपपत्तिमात्रता ६, दृष्टान्तसद्भावेऽस्यैव हेतुव्यपदेशः स्यात्, तथा हिनोति गमयतीति हेतुः साध्यसद्भावभावतदभावाभावलक्षणः, ततश्च स्वलक्षणादीनां द्वन्द्वः, तेषां दोषः स्वलक्षणकारणहेतुदोषः, इह काशब्दः छन्दोऽर्थं द्विर्बद्धो ध्येयः ७, अथवा सह लक्षणेन यौ कारणहेतू तयोर्दोष इति विग्रहः तत्र लक्षणदोषोऽव्याप्तिरतिव्याप्तिर्वा, तत्राव्याप्तिर्यथा यस्यार्थस्य सन्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदस्तत्स्वलक्षणमिति, इदं स्वलक्षणलक्षणं, इदं चेन्द्रियप्रत्यक्षमेवाश्रित्य स्यात् न योगिज्ञानं, योगिज्ञाने हि न सन्निधानासन्निधानाभ्यां प्रतिभासभेदोऽस्तीत्यतस्तदपेक्षया न किञ्चित्स्वलक्षणं स्यादिति, अतिव्याप्तिर्यथा अर्थोपलब्धिहेतुः प्रमाणमिति प्रमाणलक्षणं इह चार्थोपलब्धिहेतुभूतानां चक्षुर्दध्योदनभोजनादीनामानन्त्येन प्रमाणेयत्ता न स्यात्, अथवा दार्ष्टान्तिकोऽर्थो लक्ष्यतेऽनेनेति लक्षणं –दृष्टान्तस्तद्दोषः–साध्यविकलत्वादिः, तत्र साध्यविकलता यथा नित्यः शब्दो मूर्त्तत्वाद् घटवद्, इह घटे नित्यत्वं नास्तीति कारणदोषः साध्यं प्रति तद्व्यभिचारो यथा अपौरुषेयो वेदो वेदकारणस्याश्रूयमाणत्वादिति, अश्रूयमाणत्वं हि कारणान्तरादपि सम्भवतीति हेतुदोषोऽसिद्धविरुद्धानैकान्तिकत्वलक्षणः, तत्रासिद्धो यथाऽनित्यः शब्दश्चाक्षुषत्वाद् घटवदिति, अत्र हि चाक्षुषत्वं शब्दे न सिद्धं, विरुद्धो यथा नित्यः शब्दः कृतकत्वात् घटवद्, इह घटे कृतकत्वं नित्यत्वविरुद्धमनित्यत्वमेव साधयतीति, अनैकान्तिको यथा नित्यः शब्दः प्रमेयत्वादाकाशवद्, इह हि प्रमेयत्वमनित्येष्वपि वर्त्तते, ततः संशय एवेति ७ तथा संक्रामणं–प्रस्तुतप्रमेयेऽप्रस्तुतप्रमेयस्य

प्रवेशनं प्रमेयान्तरगमनमित्यर्थः अथवा प्रतिवादिमते आत्मनः संक्रामणं परमताभ्यनुज्ञानमित्यर्थः, तदेव दोष इति ८, तथा निग्रहः-छलादिना पराजयस्थानं स एव दोषो निग्रहदोष इति, तथा वसतः-साध्यधर्मसाधनधर्म्मावत्रेति वस्तु-प्रकरणात् पक्षस्तस्य दोषः-प्रत्यक्षनिराकृतत्वादिः, यथा अश्रावणः शब्दः, शब्दे ह्यश्रावणत्वं प्रत्यक्षनिराकृतमिति । एतेषामेव तज्जातादिदोषाणां सामान्यतोऽभिहितानां तदन्येषां चार्थानां सामान्यविशेषरूपाणां सतां विशेषाभिधानायाह—'दसे'त्यादि, विशेषो भेदो व्यक्तिरित्यनर्थान्तरं, 'वत्थु' इत्यादिः सार्द्धः श्लोकः, वस्त्विति प्राक्तनसूत्रस्यान्तोक्तो यः पक्षः, 'तज्जात'मिति तस्यैवादावुक्तं प्रतिवाद्यादेर्जात्यादि तद्विषयो दोषो वस्तुतज्जातदोषः, तत्र वस्तुदोषः-पक्षदोषस्तज्जातदोषश्च-जात्यादिहीलनमेतौ च विशेषौ दोषसामान्यापेक्षया, अथवा वस्तुदोषे-वस्तुदोषविषये विशेषो-भेदः प्रत्यक्षनिराकृतत्वादिः, तत्र प्रत्यक्षनिराकृतो यथा अश्रावणः शब्दः, अनुमाननिराकृतो यथा नित्यः शब्दः, प्रतीतिनिराकृतो यथा अचन्द्रः शशी, स्ववचननिराकृतो यथा यदहं वच्मि तन्मिथ्येति, लोकरूढिनिराकृतो यथा शुचि नरशिरः-कपालमिति, तज्जातदोषविषयेऽपि भेदो जन्ममर्मकर्मादिभिः, जन्मदोषो यथा—"कच्छुल्लयाए घोडीए जाओ जो गद्दहेण छूढेण । तस्स महायणमज्झे आयारा पायडा होंति ॥१॥" [कच्छूलायां वडवायां यो गदर्भेन क्षिप्तेन जातः । तस्य महाजनमध्ये आकाराः प्रकटा भवन्ति ॥१॥] इत्यादिरनेकविधः २, चकारः समुच्चये, तथा 'दोसे'त्ति पूर्वोक्तसूत्रे ये शेषा मतिभङ्गादयोऽष्टावुक्तास्ते दोषा दोषशब्देनेह संगृहीताः, ते च दोषसामान्यापेक्षया विशेषा भवन्त्येवेति दोषो-विशेषः, अथवा 'दोसे'त्ति दोषेषु-शेषदोषविषये विशेषो-भेदः, स चानेकविधः स्वयमूह्यः ३, 'एगट्ठिए य'त्ति एकश्चासावर्थश्च-अभिधेयः एकार्थः स यस्यास्ति स एकार्थिकः एकार्थवाचक इत्यर्थः, इतिः-उपप्रदर्शने चः समुच्चये, स च शब्दसामान्यापेक्षयैकार्थिको नाम शब्दविशेषो भवति, यथा घट इति, तथा अनेकार्थिको

यथा गौः, यथोक्तं—'दिशि १ दृशि २ वाचि ३ जले ४ भुवि ५ दिवि ६ वज्रे ७ ऽशौ ८ पशौ ९ च गोशब्दः" इति, इहैकार्थिकविशेषग्रहणेनानेकार्थिकोऽपि गृहीतस्तद्विपरीतत्वात्, न चेहासौ गण्यते, दशस्थानकानुरोधात्, अथवा कथञ्चिदेकार्थिके शब्दग्रामे यः कथञ्चिद्भेदः स विशेषः स्यादिति प्रक्रमः, 'इय'त्ति पूरणे, यथा शक्रः पुरन्दर इत्यत्रैकार्थे शब्दद्वये शकनकाल एव शक्रः पूर्दारणकाल एव पुरन्दरः एवंभूतनयादेशादिति, अथवा दोषशब्द इहापि सम्बद्ध्यते, ततश्च न्यायोद्ग्रहणे शब्दान्तरापेक्षया विशेष इति ४, तथा कार्यकारणात्मके वस्तुसमूहे कारणमिति विशेषः, कार्यमपि विशेषो भवति, न चेहोक्तो, दशस्थानकानुवृत्तेः, अथवा कारणे—कारणविषये विशेषो—भेदो यथा परिणामिकारणं मृत्पिण्डः, अपेक्षाकारणं दिग्देशकालाकाशपुरुषचक्रादि, अथवोपादानकारणं—मृदादि निमित्तकारणं—कुलालादि सहकारिकारणं—चक्रचीवरादीत्यनेकधा कारणं. अथवा दोषशब्दसम्बन्धात् पूर्वव्याख्यातः कारणदोषो दोषसामान्यापेक्षया विशेष इति चः समुच्चये, तथा प्रत्युत्पन्नो—वार्त्तमानिकः अभूतपूर्व इत्यर्थः दोषः—गुणेतरः, स चातीतादिदोषसामान्यापेक्षया विशेषः ५, अथवा प्रत्युत्पन्ने—सर्वथा वस्तुन्यभ्युपगते विशेषो यो दोषोऽकृताभ्यागमकृतविप्रणाशादिः स दोषसामान्यापेक्षया विशेष इति ६, तथा नित्यो यो दोषोऽभव्यानां मिथ्यात्वादिरनाद्यपर्यवसितत्वात् स दोषसामान्यापेक्षया विशेषोऽथवा सर्वथा नित्ये वस्तुन्यभ्युपगते यो दोषो बालकुमाराद्यवस्थाऽभावापत्तिलक्षणः स दोषसामान्यापेक्षया दोषविशेष इति ७, तथा 'हिअट्ठमे'त्ति अकारप्रश्लेपादधिकं—वाद काले यत्परप्रत्यायनं प्रत्यतिरिक्तं दृष्टान्तनिगमनादि तद्दोषः, तदन्तरेणैव प्रतिपाद्यप्रतीतेस्तदभिधानस्यानर्थकत्वादिति, आह च—"जिणवयणं सिद्धं चेव भन्नए कत्थई उदाहरणं । आसज्ज उ सोयारं हेऊवि कहिंचि भन्नेज्जा ॥१॥ तथा—कत्थइ पंचावयवं दसहा वा सव्वहा न पडिकुट्ठं ॥" इति [जिनवचनं सिद्धमेव तथापि क्वचिदुदाहरणं भण्यते श्रोतारमासाद्य हेतुमपि कुत्रापि

१० स्थाना-
ध्ययने
उद्देशः १
शस्त्रदोष-
विशेषः
सू-७४३

॥४६८॥

कथयेत् ॥१॥ कुत्रचित्पश्चावयवं दशधा वा सर्वथा न प्रतिकुष्टं ॥] ततश्चाधिकदोषो दोषविशेषत्वाद्विशेष इति, अथवाऽधिके दृष्टान्तादौ सति यो दोषो-दूषणं वादिनः सोऽपि दोषविशेष एव, अयं चाष्टम आदितो गण्यमान इति ८, 'अत्तण'त्ति आत्मना कृतमिति शेषः, तथा उपनीतं-प्रापितं परेणेति शेषः, वस्तुसामान्यापेक्षयाऽऽत्मकृतं च विशेषः, परोपनीतं चापरो विशेष इति भावः ९, चकारयोर्विशेषशब्दस्य च प्रयोगो भावनावाक्ये दर्शितः, अथवा दोषशब्दानुवृत्तेरात्मना कृतो दोषः परोपनीतश्च दोष इति दोषसामान्यापेक्षया विशेषावेतौ इति, एवं ते विशेषा दश भवन्तीति, इहादर्शपुस्तकेषु 'निज्जेऽहिअट्ठमे'त्ति दृष्टं, न च तथाऽष्टौ पूर्यन्त इति, निचे इति व्याख्यातं ।

इहोक्तरूपा विशेषादयो भावा अनुयोगगम्याः, अनुयोगश्चार्थतो वचनतश्च, तत्रार्थतो यथा—"अहिंसा संजमो तवो" इत्यत्राहिंसादीनां स्वरूपभेदप्रतिपादनं, वचनानुयोगस्त्वेषामेव शब्दाश्रितो विचार इति, तदिह वचनानुयोगं भेदत आह—

**दसविधे सुद्धावाताणुओगे पं० तं०—चंकारे १ मंकारे २ पिंकारे ३ सेतंकारे ४ सातंकरे ५ एगत्ते ६ पुधत्ते ७ संजूहे ८ संकामिते ९ भिन्ने १० (सू० ७४४)।**

'दसे'त्यादि, शुद्धा-अनपेक्षितवाक्यार्था या वाक्-वचनं सूत्रमित्यर्थः तस्या अनुयोगो-विचारः शुद्धवागनुयोगः, सूत्रे च अपुंवद्भावः प्राकृतत्वात्, तत्र चकारादिकायाः शुद्धवाचो योऽनुयोगः स चकारादिरेव व्यपदेश्यः, तत्र 'चंकारे'त्ति अत्रानुस्वारोऽलाक्षणिको यथा 'मुंकं मणिनरे' इत्यादौ, ततश्चकार इत्यर्थः, तस्य चानुयोगो, यथा चशब्दः समाहारेतरेतरयोगसमुच्चयान्वाचयावधारण-

पादपूरणाधिकवचनादिष्विति, तत्र "इत्थीओ सयणाणि य" इति, इह सूत्रे चकारः समुच्चयार्थः स्त्रीणां शयनानां चापरिभोग्यतातुल्यप्रतिपादनार्थः १, 'मंकारे'त्ति मकारानुयोगो यथा 'समणं व माहणं वा' इतिसूत्रे माशब्दो निषेधे, अथवा 'जेणामेव समणे भगवं महावीरे तेणामेवे'त्यत्र सूत्रे जेणामेव इह मकार आगमिक एव, येनैवेत्यनेनैव विवक्षितप्रतीतेरिति २ 'पिंकारे'त्ति अकारलोपदर्शनेनानुस्वारागमेन चापिशब्द उक्तस्तदनुयोगो यथा अपिः सम्भावनानिवृत्त्यपेक्षासमुच्चयगर्हाशिष्यामर्पणभूषणप्रश्नेष्विति, तत्र 'एवंपि एगे आसासे' इत्यत्र सूत्रे एवमपि अन्यथाऽपीति प्रकारान्तरसमुच्चयार्थोऽपिशब्द इति ३, 'सेयंकरे'त्ति इहाप्यंकारोऽलाक्षणिकस्तेन सेकार इति, तदनुयोगो यथा 'से भिक्खू वे'त्यत्र सूत्रे सेशब्दोऽथार्थः, अथशब्दश्च प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचनसमुच्चयेष्वित्यानन्तर्यार्थः सेशब्द इति, क्वचिदसावित्यर्थः, क्वचित्तस्येत्यर्थः, अथवा 'सेयंकार' इति श्रेय इत्येतस्य करणं श्रेयस्कारः, श्रेयस उच्चारणमित्यर्थः, तदनुयोगो यथा 'सेयं मे अहिज्जिउं अज्झयण'मित्यत्र सूत्रे श्रेयः–अतिशयेन प्रशस्यं कल्याणमित्यर्थः, अथवा 'सेयकाले अकम्मं वावि भवई'त्यत्र सेयशब्दो भविष्यदर्थः ४, 'सायंकरे'त्ति सायमिति निपातः सत्यार्थस्तस्माद् 'वर्णात्कार' इत्यनेन छान्दसत्वात्कारप्रत्ययः करणं वा कारस्ततः सायंकार इति तदनुयोगो यथा सत्यं तथावचनसद्भावप्रश्नेष्विति, एते च चकारादयो निपातास्तेषामनुयोगभणनं शेषनिपातादिशब्दानुयोगोपलक्षणार्थमिति ५, 'एगत्ते'त्ति एकत्वमेकवचनं तदनुयोगो यथा 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग' इत्यत्रैकवचनं सम्यग्दर्शनादीनां समुदितानामेवैकमोक्षमार्गत्वख्यापनार्थं, असमुदितत्वे त्वमोक्षमार्गतेति प्रतिपादनार्थमिति ६ 'पुहुत्ते'त्ति पृथक्त्वं–भेदो द्विवचनबहुवचने इत्यर्थः, तदनुयोगो यथा धम्मत्थिकाये धम्मत्थिकायदेसे धम्मत्थिकायप्पदेसा इह सूत्र धर्मास्तिकायप्रदेशा इत्येतद्बहुवचनं तेषामसंख्यातत्वख्यापनाथमिति ७, 'संजूहे'त्ति सङ्गतं–युक्तार्थं यूथं–पदानां पदयोर्वा

समूहः संघूयं, समास इत्यर्थः, तदनुयोगो यथा 'सम्यग्दर्शनशुद्धं' सम्यग्दर्शनेन सम्यग्दर्शनाय सम्यग्दर्शनाद्वा शुद्धं सम्यग्दर्शनशुद्धमित्यादिरनेकधा इति ८, 'संकामिय'त्ति, संक्रामितं विभक्तिवचनाद्यन्तरतया परिणामितं तदनुयोगो यथा—'साहूणं वंदणेणं नासति पावं असंकिया भावा' इह साधूनामित्येतस्याः षष्ठ्याः साधुभ्यः सकाशादित्येवं लक्षणं पञ्चमीत्वेन विपरिणामं कृत्वा अशङ्किता भावा भवन्तीत्येतत्पदं सम्बन्धनीयं, तथा "अच्छंदा जे न भुंजंति, न से चाइत्ति वुच्चइ" इत्यत्र सूत्रे न स त्यागीत्युच्यते इत्येकवचनस्य बहुवचनतया परिणामं कृत्वा न ते त्यागिन उच्यन्त इत्येवं पदघटना कार्येति ९, 'भिन्न'मिति क्रमकालभेदादिभिर्भिन्नं—विसदृशं तदनुयोगो यथा—'तिविहं तिविहेण'मिति संग्रहमुक्त्वा पुनः 'मणेण'मित्यादिना तिविहेणंति विवृतमिति क्रमभिन्नं, क्रमेण हि तिविहमित्येतस्य करोम्यादिना विवृत्य ततस्त्रिविधेनेति विवरणीयं भवतीति, अस्य च क्रमभिन्नस्यानुयोगोऽयं यथाक्रमविवरणे हि यथासङ्ख्यदोषः स्यादिति तत्परिहारार्थं क्रमभेदः, तथाहि—न करोमि मनसा न कारयामि वाचा कुर्वन्तं नानुजानामि कायेनेति प्रसज्यते, अनिष्टं चैतदस्यैकपक्षस्यैवेष्टत्वात्, तथाहि—मनःप्रभृतिभिर्न करोमि तैरेव न कारयामि तैरेव नानुजानामीति, तथा कालभेदोऽतीतादिनिर्देशे प्राप्ते वर्त्तमानादिनिर्देशो यथा जम्बूद्वीपप्रज्ञप्त्यादिषु ऋषभस्वामिनमाश्रित्य 'सक्के देविंदे देवराया वंदति नमंसति'त्ति सूत्रे, तदनुयोगश्चायं—वर्त्तमाननिर्देशस्त्रिकालभाविष्वपि तीर्थकरेष्वेतन्न्यायप्रदर्शनार्थं इति, इदं च दोषादिसूत्रत्रयमन्यथापि विमर्शनीयं, गम्भीरत्वादस्येति ।

वागनुयोगतस्त्वर्थानुयोगः प्रवर्त्तत इति दानलक्षणस्यार्थस्य भेदानामनुयोगमाह—

दसविहे दाणे पं० तं०—अणुकंपा १ संगहे २ चेव, भये ३ कालुणितेति यं ४। लज्जाते ५ गारवेणं च ६, अहम्मे उण सत्तमे ७ ॥१॥ धम्मे त अट्ठमे वुत्ते ८, काहीति त ९ कतंति त १० ॥ दसविधा गती पं० तं०—निरयगती निरयविग्गहगई तिरियगती तिरियविहग्गगई एवं जाव सिद्धिगइ सिद्धिविग्गहगती (सू० ७४५) दस मुंडा पन्नत्ता पं० तं०—सोतिंदितमुंडे जाव फासिंदितमुंडे कोहमुंडे जाव लोभमुंडे दसमे सिरमुंडे (सू० ७४६) दसविधे संखाणे पं० तं०—परिकम्मं १ ववहारो २ रज्जू ३ रासी ५ कलासवन्ने ४ य । जावंतावति ६ वग्गो ७ घणो ८ त तह वग्गवग्गो ९ वि ॥१॥ कप्पो त १० (सू० ७४७)।

'दसे'त्यादि, 'अणुकंपे'त्यादि श्लोकः सार्द्धः, 'अनुकंप'त्ति दानशब्दसम्बन्धादनुकम्पया–कृपया दानं दीनानाथविषयमनुकम्पादानमथवा अनुकम्पातो यद्दानं तदनुकम्पैवोपचारात्, उक्तं च वाचकमुख्यैरुमास्वातिपूज्यपादैः—"कृपणेऽनाथदरिद्रे व्यसनप्राप्ते च रोगशोकहते। यद्दीयते कृपार्थादनुकम्पा तद्भवेद्दानम् ॥१॥" संग्रहणं संग्रहः–व्यसनादौ सहायकरणं तदर्थं दानं संग्रहदानं, अथवा अभेदाद्दानमपि संग्रह उच्यते, आह च—"अभ्युदये व्यसने वा यत्किञ्चिद्दीयते सहायार्थम्। तत्सङ्ग्रहतोऽभिमतं मुनिभिर्दानं न मोक्षाय ॥१॥" इति, तथा भयात् यद्दानं तत् भयदानं, भयनिमित्तत्वाद्वा दानमपि भयमुपचाराद् इति, उक्तं च—"राजारक्षपुरोहितमधुमुखमावल्लदण्डपाशिषु च। यद्दीयते भयार्थात्तद्भयदानं बुधैर्ज्ञेयम् ॥१॥" इति ३, 'कालुणिए इय'त्ति कारुण्यं–शोकस्तेन पुत्रवियोगादिजनितेन तदीयस्यैव तल्पादेः स जन्मान्तरे सुखितो भवत्विति वासनातोऽन्यस्य वा यद्दानं तत्कारुण्यदानं, कारुण्यजन्यत्वाद्वा दानमपि कारुण्यमुक्तमुपचारादिति ४, तथा 'लज्जया' ह्रिया दानं यत्तल्लज्जादानमुच्यते, उक्तं च—"अभ्यर्थितः परेण तु

यद्दानं जनसमूहमध्यगतः। परचित्तरक्षणार्थं लज्जायास्तद्भवेद्दानम् ॥१॥" इति, ५, 'गारवेणं च'त्ति गौरवेण–गर्वेण यद्दीयते तद् गौरवदानमिति, उक्तं च—"नटनर्त्तमुष्टिकेभ्यो दानं सम्बन्धिबन्धुमित्रेभ्यः। यद्दीयते यशोऽर्थं गर्वेण तु तद्भवेद्दानम् ॥१॥" ६, अधर्मपोषकं दानमधर्मदानं, अधर्मकारणत्वाद्वा अधर्म्म एवेति, उक्तं च—"हिंसानृतचौर्योद्यतपरदारपरिग्रहप्रसक्तेभ्यः। यद्दीयते हि तेषां तज्जानीयादधर्म्माय ॥१॥" इति ७, धर्म्मकारणं यत्तद्धर्म्मदानं धर्म्म एव वा, उक्तं च—"समतृणमणिमुक्तेभ्यो यद्दानं दीयते सुपात्रेभ्यः। अक्षयमतुलमनन्तं तद्दानं भवति धर्म्माय ॥१॥" इति, ८, 'काही इय'त्ति करिष्यति कञ्चनोपकारं ममायमितिबुद्ध्या यद्दानं तत्करिष्यतीति दानमुच्यते ९, तथा कृतं ममानेन तत्प्रयोजनमिति प्रत्युपकारार्थं यद्दानं तत्कृतमिति, उक्तं च—"शतशः कृतोपकारो दत्तं च सहस्रशो ममानेन। अहमपि ददामि किञ्चित्प्रत्युपकाराय तद्दानम् ॥१॥" इति १०। उक्तलक्षणाद्दानाच्छुभाशुभा गतिर्भवतीति सामान्यतो गतिनिरूपणायाह—'दसे'त्यादि, 'निरयगति'त्ति निर्गता अयात्–शुभादिति निरया–नारकाः तेषां गतिर्गम्यमानत्वान्नरकगतिस्तद्गतिनामकर्मोदयसम्पाद्यो नारकत्वलक्षणः पर्यायविशेषो वेति नरकगतिः, तथा निरयाणां–नारकाणां विग्रहात्–क्षेत्रविभागानतिक्रम्य गतिः–गमनं निरयविग्रहगतिः स्थितिनिवृत्तिलक्षणा ऋजुवक्ररूपा विहायोगतिकर्म्मापाद्या वेति, एवं तिर्यग्नरनाकिनामपीति, 'सिद्धिगति' इति सिद्ध्यन्ति–निष्ठितार्था भवन्ति यस्यां सा सिद्धिः सा चासौ गम्यमानत्वात् गतिश्चेति सिद्धिगतिः–लोकाग्रलक्षणा, तथा 'सिद्धविग्गहगइ'त्ति सिद्धस्य–मुक्तस्य विग्रहस्य–आकाशविभागस्यातिक्रमेण गतिः–लोकान्तप्राप्तिः सिद्धविग्रहगतिरिति, विग्रहगतिर्वक्रगतिरप्युच्यते परं सिद्धस्य सा नास्तीति तत्साहचर्यान्नारकादीनामप्यसौ न व्याख्यातेति, अथवा द्वितीयपदैर्नारकादीनां वक्रगतिरुक्ता, प्रथमैस्तु निर्विशेषणतया पारिशेष्यादृजुगतिः, 'सिद्धिगइ'त्ति सिद्धौ गमनं निर्विशेषणत्वा-

चानेन सामान्यात्सिद्धिगतिरुक्ता, 'सिद्धिविग्गहगइ'त्ति सिद्धावविग्रहेण-अवक्रेण गमनं सिद्ध्यविग्रहगतिः, अनेन च विशेषापेक्षायां विशिष्टा सिद्धिगतिरुक्ता, सामान्यविशेषविवक्षया चानयोर्भेद इति। सिद्धिगतिर्मुण्डानामेव भवतीति मुण्डनिरूपणायाह—'दसे'-त्यादि, मुण्डयति-अपनयतीति मुण्डः, स च श्रोत्रेन्द्रियादिभेदाद् दशधेति, शेषं सुगमं। मुंडा दशेति संख्यानमतस्तद्विधय उच्यन्ते, 'दसे'त्यादि, 'परिकम्मं'गाहा, परिकर्म्म-संकलिताद्यनेकविधं गणितज्ञप्रसिद्धं तेन यत्संख्येयस्य संख्यानं-परिगणनं तदपि परिकर्म्मेत्युच्यते १, एवं सर्वत्रेति, 'व्यवहारः' श्रेणीव्यवहारादिः पाटीगणितप्रसिद्धोऽनेकधा २, 'रज्जु'त्ति, रज्ज्वा यत्संख्यानं तद्रज्जुरभिधीयते, तच्च क्षेत्रगणितं ३, 'रासि'त्ति धान्यादेरुत्करस्तद्विषयं संख्यानं राशिः, स च पाट्यां राशिव्यवहार इति प्रसिद्धः ४, 'कलासवन्ने य'ति कलानाम्-अंशानां सवर्णनं सवर्णः सवर्णः-सदृशीकरणं यस्मिन् संख्याने तत्कलासवर्णं ५, 'जावंतावइ'त्ति 'जावं तावन्ति वा गुणकारोत्ति वा एगट्ठ'मिति वचनाद् गुणकारस्तेन यत्संख्यान तत्तथैवोच्यते, तच्च प्रत्युत्पन्नमिति लोकरूढं अथवा यावतः कुतोऽपि तावत एव गुणकराद्याद्दच्छिकादित्यर्थः यत्र विवक्षितं सङ्कलितादिकमानीयते तद्यावत्तावत्संख्यानमिति, तत्रोदाहरणम् 'गच्छो वाञ्छाभ्यस्तो वाञ्छयुतो गच्छसंगुणः कार्यः। द्विगुणीकृतवाञ्छहृते वदन्ति सङ्कलितमाचार्याः॥१॥' अत्र किल गच्छो दश १० ते च वाञ्छया याद्दच्छिकगुणकारेणाष्टकेनाभ्यस्ताः जाताऽशीतिः, ततो वाञ्छायुतास्ते अष्टाशीतिः ८८, पुनर्गच्छेन दशभिः संगुणिता अष्टौ शतान्यशीत्यधिकानि जातानि ८८०, ततो द्विगुणीकृतेन याद्दच्छिकगुणकारेण षोडशभिर्भागे हृते यल्लभ्यते तद्दशानां सङ्कलितमिति ५५, इदं च पाटीगणीतं श्रुयते इति ६, यथा वर्गः-संख्यानं यथा द्वयोर्वर्गश्चत्वारः 'सदृशद्विराशिघात' इति वचनात् ७ 'घणो य'त्ति घनः संख्यानं यथा द्वयोर्घनोऽष्टौ 'समत्रिराशिहति'रिति वचनात् ८, 'वग्गवग्गो'त्ति वर्गस्य वर्गो वर्गवर्गः, स च संख्यानं,

यथा द्वयोर्वर्गश्चत्वारस्तेषां चतुर्णां वर्गः षोडशेति, अपिशब्दः समुच्चये ९, 'कप्पे य'त्ति गाथाधिकं, तत्र कल्पः—छेदः क्रकचेन काष्ठस्य तद्विषयं संख्यानं कल्प एव यत्पाट्यां क्राकचव्यवहार इति प्रसिद्धमिति, इह च परिकर्म्मादीनां केषाञ्चिदुदाहरणानि मन्दबुद्धीनां दुरवगमानि भविष्यन्त्यतो न प्रदर्शितानीति १० ।

दश मुण्डा उक्तास्ते च प्रत्याख्यानतो भवन्तीति प्रत्याख्याननिरूपणायाह—

**दसविधे पच्चक्खाणे पं० तं०—अणागय १ मतिक्कंतं २ कोडीसहियं ३ नियंटितं ४ चेव । सागार ५ मणागारं ६ परिमाणकडं ७ निरवसेसं ८ ॥१॥ संकेयं ९ चेव अद्धाए १० पच्चक्खाणं दसविहं तु ॥ (सू० ७४८)।**

'दसविहे'त्यादि प्रतिकूलतया आ—मर्यादया ख्यानं—प्रकथनं प्रत्याख्यानं निवृत्तिरित्यर्थः, 'अणागय'गाहा सार्द्धा, 'अणागय'त्ति अनागतकरणादनागतं—पर्युषणादावाचार्यादिवैयावृत्त्यकरणान्तरायसद्भावादारत एव तत्तपःकरणमित्यर्थः, उक्तं च— "होही पज्जोसवणा मम य तया अंतराइयं होज्जा । गुरुवेयावच्चेणं तवस्सि गेलन्नयाए वा ॥१॥ सो दाइ तवोकम्मं पडिवज्जइ तं अणागए काले । एयं पच्चक्खाणं अणागयं होइ नायव्वं ॥२॥" [भविष्यति पर्युषणा मम च तदाऽऽन्तरायिकं भविष्यति आचार्यस्य वैयावृत्त्येन तपस्विनो ग्लानतया वा ॥१॥ स तदा तपःकर्म प्रतिपद्यते तदतीते काले एतत्प्रत्याख्यानमनागतं भवति ज्ञातव्यं ॥२॥] १ 'अइक्कंतं'ति एवमेवातीते पर्युषणादौ करणादतिक्रान्तं, आह च—"पज्जोसवणाए तवं जो खलु न करेइ कारणज्जाए। गुरुवेयावच्चेणं तवस्सिगेलन्नयाए वा ॥१॥ सो दाइ तवोकम्मं पडिवज्जइ तं अइच्छिए काले । एयं पच्चक्खाणं अइक्कंतं होइ नायव्वं ॥२॥" इति [पर्युषणायां

य: खलु तपो न करोति कारणजातेन गुरुवैयावृत्त्येन तपस्विनो ग्लानवैयावृत्त्येन वा ॥१॥ स तदा तपःकर्म प्रतिपद्यते तदतीते काले एतत्प्रत्याख्यानमतिक्रान्तं भवति ज्ञातव्यं ॥ २॥] २, 'कोडीसहियं'ति कोटीभ्यां—एक श्च चतुर्थादेरन्तविभागोऽपरस्य चतुर्थादेरेवारम्भविभाग इत्येवंलक्षणाभ्यां सहितं—मिलितं युक्तं कोटीसहितं मिलितोभयप्रत्याख्यानकोटेश्चतुर्थादेः करणमित्यर्थः, अभाणि च—"पट्ठवणओ उ दिवसो पच्चक्खाणस्स निट्ठवणओ य । जहियं समिंति दुन्नि उ तं भन्नइ कोडिसहियं तु ॥१॥ इति [प्रत्याख्यानस्य प्रस्थापकनिष्ठापकदिवसौ द्वावपि यत्र समितस्तद्भण्यते कोटीसहितं ॥१॥] ३, 'नियंटियं'ति नितरां यन्त्रितं—प्रतिज्ञातदिनादौ ग्लानत्वाद्यन्तरायभावेऽपि नियमात्कर्त्तव्यमिति हृदयं, एतच्च प्रथमसंहनननामेवेति, अभ्यधायि च—"मासे मासे य तवो अमुगो अमुगदिवसे य एवइओ । हट्ठेण गिलाणेण व कायव्वो जाव ऊसासो ॥१॥ एयं पच्चक्खाणं नियंटियं धीरपुरिसपन्नत्तं । जं गिण्हंतऽणगारा अणिस्सियप्पा अपडिबद्धा ॥२॥ चोद्दसपुव्वी जिणकप्पिएसु पढमंमि चेव संघयणे । एयं वोच्छिन्नं खलु थेरावि तया करेसीया ॥३॥" इति, [मासि मासि चामुकं तपोऽमुकदिवसे इयन्तं कालं हृष्टेन वा ग्लानेन वा कर्त्तव्यं यावदुच्छ्वासः ॥१॥ एतन्नियंत्रितं धीरपुरुषप्रज्ञप्तं प्रत्याख्यानं यदनिश्रितात्मानोऽप्रतिबद्धा अनगारा गृह्णन्ति ॥२॥ चतुर्दशपूर्विजिनकल्पिकयोरेतत् प्रथम एव संहनने तदा स्थविरा अपि अकार्षुर्व्युच्छिन्नं च एतत् ॥३॥] ४, 'सागारं'ति आक्रियन्त इत्याकाराः—प्रत्याख्यानापवादहेतवोऽनाभोगाद्यास्तैराकारैः सहेति साकारं ५ 'अणागारं'ति अविद्यमाना आकारा—महत्तराकारादयो निच्छिन्नप्रयोजनत्वात् प्रतिपत्तुर्यस्मिंस्तदनाकारं, तत्रापि अनाभोगसहसाकारावाकारौ स्यातां, मुखेऽङ्गुल्यादिप्रक्षेपसम्भवादिति ६, 'परिमाणकडं'ति परिमाणं—संख्यानं दत्तिकवलगृहभिक्षादीनां कृतं यस्मिंस्तत्परिमाणकृतमिति, यदाह—"दत्तीहि व कवलेहिं व घरेहिं भिक्खाहिं अहव दव्वेहिं । जो भत्तपरिच्चायं करेइ परिमाणकडमेयं

॥१॥" इति [दत्तिभिः कवलैर्वा गृहैर्भिक्षाभिरथवा द्रव्यैः यो भक्तपरित्यागं करोत्येतत् परिमाणकृतं ॥१॥] ७, 'निरवसेसं'ति निर्गतमवशेषमपि अल्पाल्पमशनाद्याहारजातं यस्मात्तत् निरवशेषं वा-सर्व्वमशनादि तद्विषयत्वान्निरवशेषमिति, अभिहितञ्च—"सव्वं असणं सव्वं च पाणगं सव्वखज्जपेज्जविहिं। परिहरइ सव्वभावेण एयं भणियं निरवसेसं ॥१॥" इति, [सर्वमशनं सर्वं च पानकं सर्वखाद्यपेयविधिं सर्वभावेन परिहरति एतन्निरवशेषं भणितं ॥१॥] ८, 'संकययं चेव'त्ति केतनं केतः-चिह्नमङ्गुष्ठमुष्टिग्रन्थिगृहादिकं स एव केतकः सह केतकेन सकेतकं ग्रन्थादिसहितमित्यर्थः, भणितं च—"अंगुट्ठमुट्ठिगंठीघरसेउस्सासथिवुगजोइक्खे। भणियं सकेयमेयं धीरेहिं अणंतणाणीहिं ॥१॥" इति [ अङ्गुष्ठमुष्टिग्रन्थिगृहस्वेदोच्छ्वासस्तिबुकदीपानाश्रित्य प्रत्याख्यानमेतत्संकेतं भणितं धीरैरनन्तज्ञानिभिः ॥१॥] ९ 'अद्धाए'त्ति अद्धायाः-कालस्य पौरुष्यादिकालमानमाश्रित्येत्यर्थः, न्यगादि च—"अद्धापच्चक्खाणं जं तं कालप्पमाणछेएणं। पुरिमड्ढपोरसीहिं मुहुत्तमासद्धमासेहिं ॥१॥" इति [तदद्धाप्रत्याख्यानं यत्कालप्रमाणच्छेदेन पुरिमार्द्धपौरुषीमुहूर्त्तमासार्द्धमासैः ॥१॥] १९। 'पच्चक्खाणं दसविधं तु'त्ति प्रत्याख्यानशब्दः सर्वत्रानागतादौ सम्बध्यते तुशब्द एवकारार्थः ततो दशविधमेवेति, इहोपाधिभेदात् स्पष्ट एव भेद इति न पौनरुक्त्यमाशङ्कनीयमिति।

प्रत्याख्यानं हि साधुसामाचारीति तदधिकारादन्यामपि सामाचारीं निरूपयन्नाह—

**दसविहा सामायारी पं० तं०—इच्छा १ मिच्छा २ तहक्कारो ३, आवस्सिता ४ निसीहता ५। आपुच्छणा ६ य पडिपुच्छा ७, छंदणा ८ य निमंतणा ९॥१॥ उवसंपया १० य काले सामायारी भवे दसविहा उ ॥ (सू०**

७४९) समणे भगवं महावीरे छउमत्थकालिताते अंतिमरातितंसी इमे दस महासुमिणे पासित्ता णं पडिबुद्धे तंजहा—एगं च णं महाघोररूवदित्तधरं तालपिसायं सुमिणे पराजितं पासित्ता णं पडिबुद्धे १, एगं च महं सुक्किलपक्खगं पुसकोइलगं सुमिणे पासित्ता णं पडिबुद्धे २, एगं च णं महं चित्तविचित्तपक्खगं पुसकोइलं सुविणे पासित्ता णं पडिबुद्धे ३, एगं च णं महं दामदुगं सव्वरयणामयं सुमिणे पासित्ता णं पडिबुद्धे ४ एगं च णं महं सेतं गोवग्गं सुमिणे पासित्ता णं पडिबुद्धे ५, एगं च णं महं पउमसरं सव्वओ समंता कुसुमितं सुमिणे पासित्ता णं पडिबुद्धे ६, एगं च णं महासागरं उम्मीवीचीसहस्सकलितं भुयाहिं तिण्णं सुमिणे पासित्ता णं पडिबुद्धे ७, एगं च णं महं दिणयरं तेयसा जलंतं सुमिणे पासित्ता णं पडिबुद्धे ८, एगं च णं महं हरिवेरुलितवन्नाभेणं नियतेणमंतेणं माणुसुत्तरं पव्वतं सव्वतो समंता आवेढियं परिवेढियं सुमिणे पासित्ता णं पडिबुद्धे ९, एगं च णं महं मंदरे पव्वते मंदरचूलियातो उवरिं सीहासणवरगयमत्ताणं सुभिणे पासित्ता ण पडिबुद्धे १०। जण्णं समणे भगवं महावीरे एगं महं घोररूवदित्तधरं तालपिसातं सुमिणे परातितं पासित्ता णं पडिबुद्धे तन्नं समणेणं भगवता महावीरेणं मोहणिज्जे कम्मे मूलाओ उग्घाइते १, जं नं समणे भगवं महावीरे एगं महं सुक्किलपक्खगं जाव पडिबुद्धे तं णं समणे भगवं महावीरे सुक्कज्झाणोवगए विहरइ २, जं णं समणे भगवं महावीरे एग महं चित्तविचित्तपक्खगं जाव पडिबुद्धे तं णं समणे भगवं महावीरे ससमतपरसमयितं चित्तविचित्तं दुवालसंग गणिपिडगं आघवेति पण्णवेति परूवेति दंसेति निदंसेति उवदंसेति तं०—आयारं जाव दिट्ठीवायं ३, जं नं

समणे भगवं महावीरे एगं महं दामदुगं सव्वरयणा जाव पडिवुद्धे तं नं समण भगवं महावीरे दुविह धम्म पण्णवेति, तं०—अगारधम्मं च अणगारधम्मं च ४ जं णं समणे भगवं महावीरे एगं महं सेतं गोवग्गं सुमिण जाव पडिवुद्धे तं णं समणस्स भगवओ महावीरस्स चाउव्वण्णाइण्णे संघे तं०—समणा समणीओ सावगा साविगाओ ५ जं णं समणे भगवं महावीरे एगं महं पउमसरं जाव पडिवुद्धे तं णं समणे भगवं महावीरे चउव्विहे देवे पण्णवेति, तं०—भवणवासी वाणमंतरा जोइसवासी वेमाणवासी ६ जण्ण समणे भगवं महावीरे एगं महं उम्मीवीची जाव पडिवुद्धे तं णं समणेणं भगवता महावीरेणं अणातीते अणवदग्गे दीहमद्धे चाउरंत-संसारकंतारे तिन्ने ७ जण्णं समणे भगवं महावीरे एगं महं दिणकरं जाव पडिवुद्धे तन्नं समणस्स भगवतो महावीरस्स अणंते अणुत्तरे जाव समुप्पन्ने ८ जण्णं समणे भगवं एगं महं हरिवेरुलित जाव पडिवुद्धे तण्णं समणस्स भगवतो महावीरस्स सदेवमणुयासुरे लोगे उराला कित्तिवन्नसद्दसिलोगा परिगुव्वंति इति खलु समणे भगवं महावीरे इति० ९ जण्णं समणे भगवं महावीरे मंदरे पव्वते मंदरचूलिताए उवरिं जाव पडिवुद्धे तं णं समणे भगवं महावीरे सदेवमणुयासुराते परिसाते मज्झगते केवलिपन्नत्तं धम्मं आघवेति पण्णवेति जाव उवदंसेति १० (सू० ७५०)।

'दसे'त्यादि, समाचरणं समाचारस्तद्भावः सामाचार्यं तदेव सामाचारी संव्यवहार इत्यर्थः, 'इच्छे'त्यादि सार्द्धश्लोकः, 'इच्छा' इति, एषणमिच्छा करणं कारः, तत्र कारशब्दः प्रत्येकमभिसम्बन्धनीयः, इच्छया—बलाभियोगमन्तरेण कार इच्छाकारः इच्छाक्रिये-

त्यर्थः, इच्छा चेच्छाकारेण ममेदं कुरु, इच्छाप्रधानक्रियया न बलाभियोगपूर्विकयेति भावार्थः, अस्त च प्रयोगः स्वार्थं परार्थं वा चिकीर्षन् यदा परमभ्यर्थयते, उक्तं च—"जइ अब्भत्थेज्ज परं कारणजाए करेज्ज से कोइ। तत्थ उ इच्छाकारो न कप्पइ बलाभिओगो उ ॥१॥" इति [ यदि परं कोऽपि कारणेऽभ्यर्थयेत्तत्र तस्य कुर्यादिच्छाकारं न कल्पते बलाभियोगो यस्मात् ॥१॥] तथा मिथ्या वितथमनृतमिति पर्यायाः, मिथ्याकारः मिथ्याक्रियेत्यर्थः, तथा च संयमयोगे वितथाचरणे विदितजिनवचनसाराः साधवस्तत्क्रियावैतथ्यप्रदर्शनाय मिथ्याकारं कुर्वते, मिथ्याक्रियेयमिति हृदयं, भणितं च—"संजमजोगे अब्भुट्ठियस्स जं किंचि वितहमायरियं। मिच्छा एयंति वियाणिऊण मिच्छत्ति कायव्वं ॥१॥" इति [संयमयोगेऽभ्युति तेन यत्किंचिद्वितथमाचरितं एतन्मिथ्येति विज्ञाय मिथ्याकारः कर्त्तव्यः ॥१॥] तथाकरणं तथाकारः, स च सूत्रप्रश्नादिगोचरः, यथा भवद्भिरुक्तं तथैवेदमित्येवंस्वरूपः, गदितं च—"वायणपडिसुणणाए उवएसे सुत्तअत्थकहणाए। अवितहमेयंति तहा पडिसुणणाए तहक्कारो ॥१॥" इति, [वाचनाप्रतिश्रवणयोः उपदेशे सूत्रार्थकथने अवितथमेतदिति तथाकारः प्रतिश्रवणे च तथाकारः ॥१॥] अयं च पुरुषविशेषविषय एव प्रयोक्तव्य इति, अगादि च—"कप्पाकप्पे परिनिट्ठियस्स ठाणेसु पंचसु ठियस्स। संजमतवड्ढगस्स उ अविगप्पेणं तहक्कारो ॥१॥" इति [कल्प्याकल्प्ययोः परिनिष्ठितस्य ज्ञानादिषु स्थानेषु पञ्चसु स्थितस्य संयमतपोवर्त्तकस्याविकल्पेन तथाकारः ॥१॥] ३, 'आवस्सिया य'त्ति अवश्यकर्त्तव्यैर्योगैर्निष्पन्नाऽऽवश्यकी, चः समुच्चये, एतत्प्रयोग आश्रयान्निर्गच्छतः आवश्यकयोगयुक्तस्य साधोर्भवति, आह हि—"कज्जे गच्छंतस्स उ गुरुनिद्देसेण सुत्तनीईए। आवस्सियत्ति नेया सुद्धा अन्नत्थजोगाओ ॥१॥" [सूत्रनीत्या गुर्वाज्ञया गच्छतः कार्ये आवश्यकी शुद्धा ज्ञेयेत्यन्वर्थयोगात् ॥१॥] (अन्वर्थयोगादित्यर्थः) तथा निषेधेन निर्वृत्ता नैषेधिकी—व्यापारान्तरनिषेधरूपा, प्रयोगश्चास्या आश्रये

प्रविशन इति, यत आह—"एओग्गहप्पवेसे निसीहिया उह निसिद्धजोगस्स । एयस्सेसा उचिया इयरस्स (अनिषिद्धयोगस्य) न चेव नत्थित्ति ॥१॥ (अन्वर्थो नास्तीतिकृत्वेत्यर्थः)" [एवमवग्रहप्रवेशे तथा निषिद्धयोगस्य नैषेधिकी । एतस्यैषोचिता इतरस्यैषा नोचितैव अन्वर्थो नास्तीति हेतोः ॥१॥] तथा आपृच्छनमापृच्छा सा विहारभूमिगमनादिषु प्रयोजनेषु गुरोः कार्या, चशब्दः पूर्ववत्, इहोक्तम्—"आपुच्छणा उ कज्जे गुरुणो तस्संमयस्स वा नियमा । एवं खु तयं सेयं जायइ सइ निज्जराहेऊ ॥१॥" इति [कार्ये गुरोः तन्मतस्य वा नियमादापृच्छनं एवं खलु तत् श्रेयो जायतेऽसकृत् निर्जराहेतुः ॥१॥] तथा प्रतिपृच्छा-प्रतिप्रश्नः, सा च प्राग्नियुक्तेनापि करणकाले कार्या, पूर्वं निषिद्धेन वा प्रयोजनतस्तदेव कर्तुकामेनेति, यदाह—"पडिपुच्छणा उ कज्जे पुव्वनिउत्तस्स करणकालम्मि । कज्जन्तरादिहेउं निद्दिट्ठा समयकेऊहिं ॥१॥" इति [कार्ये पूर्वं नियुक्तस्य करणकाले प्रतिप्रच्छना कार्यान्तरार्थं समयकेतुभिर्निर्दिष्टा ॥१॥] तथा छन्दना च-प्राग्गृहीतेनाशनादिना कार्या, इहावाचि—"पुव्वगहिएण छंदण गुरुआणाए जहारिहं होइ । असणादिणा उ एसा णेयेह विसेसविसयत्ति ॥१॥" [पूर्वगृहीतेनाशनादिना गुर्वाज्ञया यथार्हाणां निमन्त्रणं एषा ज्ञेया विशेषविषयेति छंदना ॥१॥] तथा निमन्त्रणा-अगृहीतेनैवाशनादिना भवदर्थमहमशनादिकमानयाम्येवंभूता, इहार्थे अभ्यधायि—"सज्झाया उव्वाओ (श्रान्तः) गुरुकिच्चे सेसगे असंतंमि । तं पुच्छिऊण कज्जे सेसाण निमंतणं कुज्जा ॥१॥" इति [स्वाध्यायाच्छ्रान्तो गुरुकृत्ये शेषेऽसति तं पृष्ट्वा कार्ये शेषाणां निमंत्रणं कुर्यात् ॥१॥] तथा 'उवसंपय'त्ति उपसंपत्-इतो भवदीयोऽहमित्यभ्युपगमः, सा च ज्ञानदर्शनचारित्रार्थत्वात् त्रिधा, तत्र ज्ञानोपसम्पत् सूत्रार्थयोः पूर्वगृहीतयोः स्थिरीकरणार्थं तथा विस्मृतसन्धानाय तथा प्रथमतो ग्रहणार्थमुपसम्पद्यते, दर्शनोपसम्पदप्येवं, नवरं दर्शनप्रभावकसम्मत्यादिशास्त्रविषया, चारित्रोपसम्पच्च वैयावृत्त्यकरणार्थं क्षपणार्थं चोपसम्पद्यमानस्येति, भणितं हि—"उव-

संपया य तितिहा नाणे तह दंसणे चरित्ते य । दंसणनाणे तिविहा दुविहा य चरित्तअट्ठाए ॥१॥ वत्तणसंधणगहणे सुत्तत्थोभयगया उ एसत्ति । वेयावच्चे खमणे काले पुण आवकहियत्ति ॥२॥" इति, [उपसंपच्च त्रिविधा ज्ञाने तथा दर्शने चारित्रे च दर्शनज्ञानयोस्त्रिविधा चारित्रार्थं द्विविधा ॥१॥ आवर्त्तनसन्धानग्रहणानि सूत्रार्थोभयगतान्येते वैयावृत्त्ये तपसि कालतः पुनर्यावत्कथं ॥२॥] 'काले'त्ति उपक्रमणकाले आवश्यकोपोद्घातनिर्युक्त्यभिहिते सामाचारी दशविधा भवति ॥ इयं च सामाचारी महावीरेणेह प्रज्ञापिता अतो भगवन्तमेवोररीकृत्य दशस्थानकमाह–समणे'त्यादि सुगमं, नवरं 'छउमत्थकालियाए'त्ति प्राकृतत्वाद् छद्मस्थकाले यदा किल भगवान् त्रिकचतुष्कचत्वरचतुर्मुखमहापथादिषु पटुपटहप्रतिरवोद्घोषणापूर्वं यथाकाममुपहतसकलजनदारिद्र्यमनवच्छिन्नमब्दं यावन्महादानं दत्त्वा सदेवमनुजासुरपरिषदा परिवृतः कुण्डपुरान्निर्गत्य ज्ञातखण्डवने मार्गशीर्षकृष्णदशम्यामेककः प्रव्रज्य मनःपर्यायज्ञानमुत्पाद्याष्टौ मासान् विहृत्य मयूरकाभिधानसन्निवेशबहिःस्थानां दूयमानाभिधानानां पाखण्डिकानां सम्बन्धिन्येकस्मिन्नुटजे तदनुज्ञया वर्षावासमारभ्य अविधीयमानरक्षतया पशुभिरुपद्रूयमाणे उटजेऽप्रीतिकं कुर्वाणमाकलय्य कुटीरकनायकमुनिकुमारकं ततो वर्षाणामर्द्धमासे गतेऽकाल एव निर्गत्यास्थिकग्रामाभिधानसन्निवेशाद् बहिः शूलपाणिनामकयक्षायतने शेषं वर्षावासमारेभे, तत्र च यदा रात्रौ शूलपाणिर्भगवतः क्षोभणाय झटिति टालिताट्टालकमट्टट्टहासं मुञ्चन् लोकमुत्रासयामास तदा विनाश्यते स भगवान् देवेनेति भगवदालम्बनां जनस्याधृतिं जनितवान् पुनर्हस्तिपिशाचनागरूपैर्भगवतः क्षोभं कर्त्तुमशक्नुवन् शिरःकर्णनासादन्तनखाक्षिपृष्ठिवेदनाः प्राकृतपुरुषस्य प्रत्येकं प्राणापहारप्रवणाः सपदि सम्पादितवान् तथापि प्रचण्डपवनप्रहतसुरगिरिशिखरमिवाविचलद्भावं वर्द्धमानस्वामिनमवलोक्य श्रान्तः सन्नसौ जिनपतिपादपद्मवन्दनपुरस्सरमाचचक्षे–क्षमस्व क्षमाश्रमण इति तथा सिद्धार्थाभिधानो व्यन्तरदेवस्तन्निग्रहार्थमुद्धाव,

रमाण च–अरे रे शूलपाणे अप्रार्थितप्रार्थक हीनपुण्यचतुर्दशीक श्रीह्रीधृतिकीर्त्तिवर्जित दुरन्तप्रान्तलक्षण ! न जानासि सिद्धार्थराजपुत्रं पुत्रीयितनिखिलजगज्जीवं जीविनसममशेषसुरासुरनरनिकायनायकानामेनं च भवदपराधं यदि जानाति त्रिदशपतिस्ततस्त्वां निर्विषयं क- रोतीति श्रुत्वा चासौ भीतो द्विगुणतरं क्षमयति स्म, तथा सिद्धार्थश्च तस्य धर्म्ममचकथत्, स चोपशान्तो भगवन्तं भक्तिभरनिर्भरमानसो गीतनृत्योपदर्शनपूर्वकमपूपुजत्, लोकश्च चिन्तयाञ्चकार–देवार्यकं विनाश्येदानीं देवः क्रीडतीति, स्वामी च देशोनांश्चतुरो यामानतीव तेन परितापितः प्रभातसमये मुहूर्त्तमात्रं निद्राप्रमादमुपगतवान् तत्रावसरे इत्यर्थोऽथवा छद्मस्थकाले भवा अवस्था छद्मस्थकालिकी तस्यां 'अंतिमराइयंसि'त्ति अन्तिमा–अन्तिमभागरूपा अवयवे समुदायोपचारात् सा चासौ रात्रिका चान्तिमरात्रिका तस्यां रात्रेरवसान इत्यर्थः महान्तः–प्रशस्ताः स्वप्ना–निद्राविकृतविज्ञानप्रतिभातार्थविशेषास्ते च ते चेति महास्वप्नास्तान् 'स्वपने' स्वापक्रियायां 'एगं चे'ति चकार उत्तरस्वप्नापेक्षया समुच्चयार्थः 'महाघोरं' अतिरौद्रं रूपम्–आकारं 'दीप्तं' ज्वलितं दृप्तं वा–दर्प्पवद्धारयतीति महाघो- ररूपदीप्तधरस्तद्दृप्तधरो वा, प्राकृतत्वादुत्तरत्र विशेषणन्यासः, तालो–वृक्षविशेषस्तदाकारो दीर्घत्वादिसाधर्म्यात् पिशाचो–राक्षसस्ताल- पिशाचस्तं 'पराजिनं' निराकृतमात्मना १ 'एगं च'त्ति अन्यं च 'पुंसकोकिलगं'ति पुमांश्चासौ कोकिलश्च–परपुष्टः पुंस्कोकिलकः स च किल कृष्णो भवतीति शुक्लपक्ष इति विशेषितः २ 'चित्तविचित्तपक्खं'त्ति चित्रेणेति–चित्रकर्म्मणा विचित्रौ–विविधवर्णवि- शेषवन्तौ पक्षौ यस्य स तथा ३ 'दामदुगं'ति मालाद्वयं ४ 'गोवग्गं'ति गोरूपाणि ५ 'पउमसर'त्ति पद्मानि यत्रोत्पद्यन्ते सरसि तत्पद्मसरः 'सर्वतः' सर्वासु दिक्षु समन्तात्–विदिक्षु च कुसुमानि–पद्मलक्षणानि जातानि यत्र तत्कुसुमितं ६ 'उम्मीवीइसहस्स- कलियं'ति ऊर्मयः–कल्लोलाः तल्लक्षणा या वीचयस्ता ऊर्म्मिवीचयः, वीचिशब्दो हि लोकेऽन्तरार्थोऽपि रूढः, अथवोर्म्मिवीच्योर्विशेषो

गुरुत्वलघुत्वकृतः, क्वचिद्वीचिशब्दो न पठ्यते एवेति, ऊर्म्मिवीचीनां सहस्रैः कलितो–युक्तो यः स तथा तं 'भुजाभ्यां' बाहुभ्यामिति ७ तथा दिनकरं ८ एकेन च णमित्यलङ्कारे 'मह'न्ति महता छान्दसत्वात् एगं च णं महंति पाठे मानुषोत्तरस्यैते विशेषणे 'हरिवेरुलियवन्नाभेणं'ति हरिः–पिङ्गो वर्णः वैडूर्यं–मणिविशेषस्तस्य वर्णो–नीलो वैडूर्यवर्णः, ततो द्वन्द्वः तद्वदाभाति यत्तद्धरिवैडूर्यवर्णाभं तेन, अथवा हरिवन्नीलं तच्च तद्वैडूर्यं चेति शेषं तथैव, निजकेन–आत्मीयेनांत्रेण–उदरमध्यावयवविशेषेण 'आवेढियं'ति सकृदावेष्टितं 'परिवेढियं'ति असकृदिति ९ 'एगं च णं महं'ति आत्मनो विशेषणं 'सिंहासणवरगयं'ति सिंहासनानां मध्ये यद्वरं तत्सिंहासनवरं तत्र गतो–व्यवस्थितो यस्तमिति १० । एतेषामेव दशानां महास्वप्नानां फलप्रतिपादनायाह—'जन्न'मित्यादि सुगमं, नवरं 'मूलओ'त्ति आदितः सर्वथैवेत्यर्थः, 'उद्धाइए' उद्घातितं विनाशितं विनाशयिष्यमाणत्वेनोपचारात्, सूत्रकारापेक्षया त्वयमतीतनिर्देश एवेत्येवमन्यत्रापि, 'ससमयपरसमइयं'ति स्वसिद्धान्तपरसिद्धान्तौ यत्र स्त इत्यर्थः, गणिनः–आचार्यस्य पिटकमिव पिटकं वणिज इव सर्वस्वस्थानं गणिपिटकं 'आघवेइ'त्ति आख्यापयति सामान्यविशेषरूपतः प्रज्ञापयति सामान्यतः प्ररूपयति प्रतिसूत्रमर्थकथनेन दर्शयति तदभिधेयप्रत्युपेक्षणादिक्रियादर्शनेन, इयं क्रियैभिरक्षरैरुपात्ता इत्थं क्रियत इति भावना, निदंसेइ'त्ति कथञ्चिदगृह्णतः परानुकम्पया निश्चयेन पुनः पुनर्दर्शयति निदर्शयति 'उवदंसेइ'त्ति सकलनययुक्तिभिरिति ३, 'चाउव्वण्णाइण्णे'त्ति चत्वारो वर्णाः–श्रमणादयः समाहृता इति चतुर्वर्णं तदेव चातुर्वर्ण्यं तेनाकीर्णः–आकुलश्चातुर्वर्ण्याकीर्णः अथवा चत्वारो वर्णाः–प्रकारा यस्मिन् स तथा, दीर्घत्वं प्राकृतत्वात्, चतुर्वर्णश्चासावाकीर्णश्च ज्ञानादिभिर्महागुणैरिति चतुर्वर्णाकीर्णः, 'चउव्विहे देवे पन्नवेइ'त्ति वन्दनकुतूहलादिप्रयोजनेनागतान् प्रज्ञापयति–जीवाजीवादीन् पदार्थान् बोधयति–सम्यक्त्वं ग्राहयति शिष्यीकरोतीतियावत्; लोकेभ्यो वा तान्

प्रकाशयति, 'अणंते' इत्यादौ सूत्रे यावत्करणात् 'निव्वाघाए निरावरणे कसिणे पडिपुण्णे केवलवरनाणदंसणे'त्ति दृश्यमिति, 'सदेवे'त्यादि, सह देवैः—वैमानिकज्योतिष्कैर्मनुजैः—नरैरसुरैश्च—भवनपतिव्यन्तरैश्च वर्त्तत इति सदेवमनुजासुरस्तत्र लोके—त्रिलोकरूपे 'उराल'त्ति प्रधानाः कीर्त्तिः—सर्वदिग्व्यापी साधुवादः वर्णः—एकदिग्व्यापी शब्दः—अर्द्धदिग्व्यापी श्लोकः—तत्तत्स्थान एव श्लाघा एषां द्वन्द्वः तत एते 'परिगुव्वंति' परिगुप्यन्ति व्याकुलीभवन्ति सततं भ्रमन्तीत्यर्थः, अथवा परिगूयन्ते—गूङ्धातोः शब्दार्थत्वात् संशब्द्यंते इत्यर्थः, पाठान्तरतः परिभ्राम्यन्ति, कथमित्याह—'इति खल्वि'त्यादि, इतिः—एवंप्रकारार्थः खलुर्वाक्यालङ्कारे तत-श्चैवंप्रकारो भगवान् सर्वज्ञानी सर्वदर्शी सर्वसंशयव्यवच्छेदी सर्वबोधकभाषाभाषी सर्वजगज्जीववत्सलः सर्वगुणीगणचक्रवर्त्ती सर्वनरनाकिनायकनिकायसेवितचरणयुग इत्यर्थः, 'महावीर'इति नाम, एतदेवावर्त्यते श्लाघाकारिणामादरख्यापनार्थमनेकत्वख्यापनार्थं चेति, 'आघवेइ'त्यादि पूर्ववत्।

सम्पन्दर्शनकाले भगवान् सरागसम्यग्दर्शनीति सरागसम्यग्दर्शनं निरूपयन्नाह—

दसविधे सरागसम्मद्दंसणे पन्नत्ते, तं०—निसग्गु १ वतेसरुई २ आणरुती ३ सुत्त ४ बीतरुतिमेव ५। अभिगम ७ वित्थाररुती ७ किरिया ८ संखेव ९ धम्मरुती १० ॥१॥ (सू० ७५१)।

'दसविहे'त्यादि, सरागस्य—अनुपशान्ताक्षीणमोहस्य यत्सम्यग्दर्शनं—तत्त्वार्थश्रद्धानं तत्तथा, अथवा सरागं च तत्सम्यग्दर्शनं चेति विग्रहः सरागं सम्यग्दर्शनमस्येति वेति, 'निसग्ग'गाहा, रुचिशब्दः प्रत्येकं योज्यते, ततो निसर्गः—स्वभावस्तेन रुचिः—तत्त्वा-

भिलापरूपाऽस्येति निसर्गरुचिर्निसर्गतो वा रुचिरिति निसर्गरुचिः, यो हि जातिस्मरणप्रतिभादिरूपया स्वमत्याऽवगतान् सद्भूतान् जीवादीन् पदार्थान् श्रद्दधाति स निसर्गरुचिरिति भावः, यदाह—"जो जिणदिट्ठे भावे चउव्विहे (द्रव्यादिभिः) सद्दहाइ सयमेव। एमेव नन्नहत्ति य निसग्गरुइत्ति नायव्वो ॥१॥" इति [द्रव्यादिचतुर्विधान् भावान् यो जिनदृष्टान् भावेन श्रद्धत्ते एवमेवैते नान्यथेति च निसर्गरुचिर्ज्ञातव्यः सः ॥१॥] तथोपदेशो—गुर्वादिना कथनं तेन रुचिर्यस्येत्युपदेशरुचिः तत्पुरुषपक्षः स्वयमूह्यः सर्वत्रेति, यो हि जिनोक्तानेव जीवादीनर्थान् तीर्थकरशिष्यादिनोपदिष्टान् श्रद्धत्ते स उपदेशरुचिरिति भावः, यत आह—"एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ। छउमत्थेण जिणेण व उवएसरुई मुणेयव्वो ॥१॥" इति [यः परेण छद्मस्थेन जिनेन वोपदिष्टानेतानेव भावान् श्रद्धत्ते स उपदेशरुचिर्ज्ञातव्यः ॥१॥] तथाऽऽज्ञा—सर्वज्ञवचनात्मिका तया रुचिर्यस्य स तथा, यो हि प्रतनुरागद्वेषमिथ्याज्ञानतयाऽऽचार्यादीनामाज्ञयैव कुग्रहाभावाज्जीवादि तथेति रोचते माषतुषादिवत् स आज्ञारुचिरिति भावः, भणितं च—"रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ। आणाए रोयंतो सो खलु आणारुई होई ॥१॥" इति, [सम्यक्त्वावारकरागद्वेषमोहाज्ञानानि यस्यापगतानि भवंति आज्ञाया रोचयन् स खलु आज्ञारुचिर्भवति ॥१॥] 'सुत्तबीयरुईमेव'त्ति इहापि रुचिशब्दस्य प्रत्येकमभिसम्बन्धात् सूत्रेण—आगमेन रुचिर्यस्य स सूत्ररुचिः, यो हि सूत्रागममधीयानस्तेनैवाङ्गप्रविष्टादिना सम्यक्त्वं लभते गोविन्दवाचकवत् स सूत्ररुचिरिति भावः, अभिहितं च—"जो सुत्तमहिज्जंतो सुएण ओगाहई उ सम्मत्तं। अंगेण बाहिरेण व सो सुत्तरुइत्ति नायव्वो ॥१॥"इति [यः सूत्रमधीयानः श्रुतेनावगाहते तु सम्यक्त्वं अंगेनांगबाह्येन वा स सूत्ररुचिरिति ज्ञातव्यः ॥१॥] तथा बीजमिव बीजं यदेकमप्यनेकार्थप्रतिबोधोत्पादकं वचस्तेन रुचिर्यस्य स बीजरुचिः, यस्य ह्येकेनापि जीवादिना पदेनावगतेनानेकेषु पदार्थेषु रुचिरुपैति स बीज-

रुचिरिति भावः, गदितं च—"एगपएणेगाइं पयाइं जो पसरई उ सम्मत्तं। उदएव्व तिल्लबिंदू सो बीयरुइत्ति नायव्वो ॥१॥" [एकपदेनानेकानि पदानि योऽवगाहते लभते च सम्यक्त्वं उदके इव तैलबिन्दुः स बीजरुचिरिति ज्ञातव्यः ॥१॥] इति, 'एवे'ति समुच्चये, तथा 'अभिगमवित्थाररुइ'त्ति इहापि प्रत्येकं रुचिशब्दः सम्बन्धनीयः, तत्राभिगमो–ज्ञानं ततो रुचिर्यस्य सोऽभिगमरुचिः, येन आचारादिकं श्रुतमर्थतोऽधिगतं भवति सोऽभिगमरुचिः, अभिगमपूर्वकत्वात्तद्रुचेरिति भावः, गाथाऽत्र—"सो होइ अभिगमरुई सुअनाणं जस्स अत्थओ दिट्ठं। एक्कारस अंगाइं पइन्नयं दिट्ठिवाओ य ॥१॥" इति [सोऽभिगमरुचिर्भवति येनार्थतः श्रुतज्ञानं दृष्टं एकादशांगानि प्रकीर्णकानि दृष्टिवादश्च ॥१॥] तथा विस्तारो–व्यासस्ततो रुचिर्यस्य स तथेति, येन हि धर्मास्तिकायादिद्रव्याणां सर्वपर्यायाः सर्वनयप्रमाणैर्ज्ञाता भवन्ति स विस्ताररुचिः, ज्ञानानुसारिरुचित्वादिति, न्यगादि च—"दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा। सव्वाहिं नयविहीहिं वित्थाररुई मुणेयव्वो ॥१॥" इति [द्रव्याणां सर्वे पर्यायाः सर्वप्रमाणैः सर्वनयविधिभिर्येनोपलब्धाः विस्ताररुचिर्ज्ञातव्यः ॥१॥] तथा क्रिया–अनुष्ठानं रुचिशब्दयोगात् तत्र रुचिर्यस्य स क्रियारुचिः, इदमुक्तं भवति–दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्तीति स क्रियारुचिरिति, उक्तं च—"नाणेण दंसणेण य तवे चरित्ते य समिइगुत्तीसु। जो किरिया भावरुई सो खलु किरियारुई होइ ॥१॥" इति [ज्ञाने दर्शने तपसि चारित्रे च समितिगुप्त्योः यः भावतः क्रियारुचिः स खलु क्रियारुचिर्भवति ॥१॥] तथा संक्षेपः–संग्रहस्तत्र रुचिरस्येति संक्षेपरुचिः, यो ह्यप्रतिपन्नकपिलादिदर्शनो जिनप्रवचनानभिज्ञश्च संक्षेपेणैव चिलातिपुत्रवदुपशमादिपदत्रयेण तत्त्वरुचिमवाप्नोति स संक्षेपरुचिरिति भावः, आह च—"अणभिग्गहियकुदिट्ठी संखेवरुइत्ति होइ नायव्वो। अविसारओ पवयणे अणभिग्गहिओ य सेसेसु ॥१॥" इति [अनभिगृहीतकुदृष्टिः अविशारदः प्रवचने संक्षेपरुचिरिति ज्ञातव्यः

शेषेष्वनभिगृहीतः ॥१॥] तथा धर्म्मे-श्रुतादौ रुचिर्यस्य स तथा, यो हि धर्मास्तिकायं श्रुतधर्म्मं चारित्रधर्म्मं च जिनोक्तं श्रद्धत्ते स धर्म्मरुचिरिति ज्ञेयः, यदगादि—"जो अत्थिकायधम्मं सुयधम्मं खलु चरित्तधम्मं च। सद्दहइ जिणाभिहियं सो धम्मरुइत्ति नायव्वो ॥१॥ इति [योऽस्तिकायधर्मं श्रुतधर्मं खलु चारित्रधर्मं च जिनाभिहितं श्रद्दधाति स धर्मरुचिरिति ज्ञातव्यः ॥१॥] १० ॥

अयं च सम्यग्दृष्टिर्दशानामपि संज्ञानां क्रमेण व्यवच्छेदं करोतीति ता आह—

**दस सण्णाओ पं० तं—आहारसण्णा जाव परिग्गहसण्णा ४ कोहसण्णा जाव लोभसण्णा ८ लोगसण्णा ९ ओहसण्णा १०, नेरतिताणं दस सण्णातो एवं चेव, एवं निरंतरं जाव वेमाणियाणं २४ (सू० ७५२) नेरइया णं दसविधं वेयणं पच्चणुभवमाणा विहरंति, तं०-सीतं १ उसिणं २ खुधं ३ पिवासं ४ कंडुं ५ परज्झं ६ भयं ७ सोगं ८ जरं ९ वाहिं १० (सू० ७५३)।**

'दसे'त्यादि, संज्ञानं संज्ञा आभोग इत्यर्थः, मनोविज्ञानमित्यन्ये, संज्ञायते वा आहाराद्यर्थी जीवोऽनयेति संज्ञा-वेदनीयमोहनीयोदयाश्रया ज्ञानदर्शनावरणक्षयोपशमाश्रया च विचित्रा आहारादिप्राप्तये क्रियैवेत्यर्थः, स चोपाधिभेदाद्भिद्यमाना दशप्रकारा भवतीति, तत्र क्षुद्वेदनीयोदयात् कवलाद्याहारार्थं पुद्गलोपादानक्रियैव संज्ञायतेऽनयेत्याहारसंज्ञा, तथा भयवेदनीयोदयाद्भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमाञ्चोद्भेदादिक्रियैव संज्ञायतेऽनयेति भयसंज्ञा, तथा पुंवेदोदयान्मैथुनाय स्त्र्यङ्गालोकनप्रसन्नवदनसंस्तम्भितोरुवेपथुप्रभृतिलक्षणा च क्रियैव संज्ञायतेऽनयेति मैथुनसंज्ञा, तथा लोभोदयात् प्रधानभवकारणाभिष्वङ्गपूर्विका सचित्तेतरद्रव्योपादानक्रिया च संज्ञाय-

नेऽनयेति परिग्रहसंज्ञा, तथा क्रोधोदयात्तदावेशगर्भा प्ररूक्षमुखनयनदन्तच्छदचेष्टैव संज्ञायतेऽनयेति क्रोधसंज्ञा, तथा मानोदयादहङ्काराद्यात्मिकोत्सेकादिपरिणतिरेव संज्ञायतेऽनयेति मानसंज्ञा, तथा मायोदयेनाशुभसंक्लेशादनृतसम्भाषणादिक्रियैव संज्ञायतेऽनयेति मायासंज्ञा, तथा लोभोदयाल्लालसत्वान्वितात्सचित्तेतरद्रव्यप्रार्थनैव संज्ञायतेऽनयेति लोभसंज्ञा, तथा मतिज्ञानाद्यावरणक्षयोपशमाच्छब्दाद्यर्थगोचरा सामान्यावबोधक्रियैव संज्ञायतेऽनयेत्योघसंज्ञा, तथा तद्विशेषावबोधक्रियैव संज्ञायतेऽनयेति लोकसंज्ञा १०, ततश्चौघसंज्ञा दर्शनोपयोगः लोकसंज्ञा ज्ञानोपयोग इति, व्यत्ययमन्ये, अन्ये पुनरित्थमभिदधति—सामान्यप्रवृत्तिरोघसंज्ञा लोकदृष्टिर्लोकसंज्ञा, एताश्च सुखप्रतिपत्तये स्पष्टरूपाः पञ्चेन्द्रियानधिकृत्योक्ताः, एकेन्द्रियादीनां तु प्रायो यथोक्तक्रियानिबन्धनकर्मोदयादिपरिणामरूपा एवावगन्तव्याः यावच्छब्दौ व्याख्यातार्थौ, एता एव सर्वजीवेषु चतुर्विंशतिदण्डकेन निरूपयति—'नेरइये'त्यादि, 'एवं चेव'त्ति यथा सामान्यसूत्रे एवमेव नारकसूत्रेऽपीत्यर्थः, 'एवं निरन्तर'मिति तथा नारकसूत्रे संज्ञास्तथा शेषेष्वपि वैमानिकान्तेष्वित्यर्थः । अनन्तरसूत्रे वैमानिका उक्ताः ते च सुखवेदना अनुभवन्ति, तद्विपर्यस्तास्तु नारका या वेदना अनुभवन्ति ता दर्शयति—'नेरइया' इत्यादि, कण्ठ्यं, नवरं वेदनां—पीडां, तत्र शीतस्पर्शजनिता शीता तां, सा च चतुर्थ्यादिनरकपृथ्वीष्विति, एवमुष्णां प्रथमादिषु, क्षुधं—बुभुक्षां पिपासां—तृषं कण्डूं—खर्जुं 'परज्झं'ति परतन्त्रतां भयं—भीतिं शोकं—दैन्यं जरां—वृद्धत्वं व्याधिं—ज्वरकुष्ठादिकमिति ।

अमुं च वेदनादिकममूर्त्तमर्थं जिन एव जानाति न छद्मस्थो यत आह—

दस ठाणाइं छउमत्थे णं सव्वभावेणं न जाणति ण पासति, तं०—धम्मत्थिगातं जाव वातं, अयं जिणे

भविस्सति वा ण वा भविस्सति अयं सव्वदुक्खाणमंतं करेस्सति वा ण वा करेस्सति, एताणि चेव उप्पन्ननाणदंसणधरे [अरहा] जाव अयं सव्वदुक्खाणमंतं करेस्सति वा ण वा करेस्सति (सू०७५४) दस दसाओ पं० तं०—कम्मविवागदसाओ उवासगदसाओ अंतगडदसाओ अणुत्तरोववायदसाओ आयारदसाओ पण्हावागरणदसाओ बंधदसाओ दोगिद्धिदसाओ दीहदसाओ संखेवितदसाओ। कम्मविवागदसाणं दस अज्झयणा पं० तं०—मियापुत्ते १ त गोत्तासे २, अंडे ३ सगडेति यावरे ४। माहणे ५ णंदिसेणे ६ त, सोरियत्ति ७ उदुंबरे ८ ॥१॥ सहसुदाहे आमलते ९ कुमारे लेच्छती १० इति २। उवासगदसाणं दस अज्झयणा पं० तं०—आणंदे १ कामदेवे २ अ, गाहावति चूलणीपिता ३। सुरादेवे ४ चुल्लसतते ५, गाहावति कुंडकोलिते ६ ॥१॥ सद्दालपुत्ते ७ महासतते ८, णंदिणीपिया ९ सालतियापिता १०–३। अंतगडदसाणं दस अज्झयणा पं० तं०—णमि १ मातंगे २ सोमिले ३ रामगुत्ते ४ सुदंसणे ५ चेव। जमाली ६ त भगाली त ७ किंकमे ८ पल्लतेतिय ९ ॥१॥ फाले अंबडपुत्ते त १०, एमेते दस आहिता ४॥ अणुत्तरोववातियदसाणं दस अज्झयणा पं० तं०—ईसिदासे य १ धण्णे त २, सुणक्खत्ते य ३ कातिते ४ [तिय]। सट्ठाणे ५ सालिभद्दे त ६, आणंदे ७ तेतली ८ तित ॥१॥ दसन्नभद्दे ९ अतिमुत्ते १०, एमेते दस अहिया ५॥ आयारदसाणं दस अज्झयणा पं० तं०—वीसं असमाहिट्ठाणा १ एगवीसं सबला २ तेत्तीसं आसायणातो ३ अट्ठविहा गणिसंपया ४ दस चित्तसमाहिट्ठाणा ५ एगारस उवासगपडिमातो ६ बारस भिक्खुपडिमातो ७ पज्जोसवणा कप्पो ८ तीसं मोहणिज्जट्ठाणा ९ आजाइट्ठाणं १०–६। पण्हावागरणदसाणं दस

अज्झयणा पं० तं०—उवमा १ संखा २ इसिभासियाइं ३ आयरियभासिताइं ४ महावीरभासिआइं ५ खोमगपसिणाइं ६ कोमलपसिणाइं ७ अद्दागपसिणाइं ८ अंगुट्ठपसिणाइं ९ बाहुपसिणाइं १०-७। बंधदसाणं दस अज्झयणा पं० तं०—बंधे १ य मोक्खे २ य देवद्धि ३ दसारमंडलेवित ४ आयरियविप्पडिवत्ती ५ उवज्झायविप्पडिवत्ती ६ भावणा ७ विमुत्ती ८ सातो ९ कम्मे १०-८। दोगेहिदसाणं दस अज्झयणा पं० तं०—वाते १ विवाते २ उववाते ३ सुखित्तकसिणे ४ बायालीसं सुमिणे ५ तीसं महासुमिणा ६ बावत्तरिं सव्वसुमिणा ७ हारे ८ रामे ९ गुत्ते १० एमेते दस आहिता ९। दीहदसाणं दस अज्झयणा पं० तं०—चंदे १ सूरते २ सुक्के ३ त सिरिदेवी ४ पभावती ५ दीवसमुद्दोववत्ती ६ बहूपुत्ती ८ मंदरेति त ९ थेरे संभूतविजते ८ थेरे पम्ह ९ ऊसासनीसासे १०-१० संखेवितदसाणं दस अज्झयणा पं० तं०—खुड्डिया विमाणपविभत्ती १ महल्लिया विमाणपविभत्ती २ अंगचूलिया ३ वग्गचूलिया ४ विवाहचूलिया ५ अरुणोववाए ६ वरुणोववाए ७ गरुलोववाते ८ वेलंधरोववाते ९ वेसमणोववाते १०-११ (सू० ७५५) दस सागरोवमकोडाकोडीओ कालो उस्सप्पिणीते दस सागरोवमकोडाकोडीओ कालो ओसप्पिणीते (सू० ७५६)।

'दसे'त्यादि गतार्थं, नवरं छमस्थ इह निरतिशय एव द्रष्टव्योऽन्यथाऽवधिज्ञानी परमाण्वादि जानात्येव, 'सव्वभावेणं'ति सर्वप्रकारेण स्पर्शरसगन्धरूपज्ञानेन घटमिवेत्यर्थः, धर्मास्तिकायं यावत्करणादधर्म्मास्तिकायं आकाशास्तिकायं जीवमशरीरप्रतिबद्धं परमाणुपुद्गलं शब्दं गन्धमिति, 'अय'मित्यादि द्वयमधिकमिह, तत्रायमिति—प्रत्यक्षज्ञानसाक्षात्कृतो 'जिनः' केवली भविष्यति न वा

भविष्यतीति नवमं, तथाऽयं 'सव्वे'त्यादि प्रकटं दशममिति । एतान्येव छद्मस्थानवबोध्यानि सातिशयज्ञानादित्वाज्जिनो जानातीति, आह च—'एयाइं' इत्यादि, यावत्करणात् 'जिणे अरहा केवली सव्वण्णू सव्वभावेण जाणइ पासइ, तंजहा—धम्मत्थिकाय'मित्यादि, यावद्दशमं स्थानं, तच्चोक्तमेवेति । सर्वज्ञत्वादेव यान् जिनोऽतीन्द्रियार्थप्रदर्शकान् श्रुतविशेषान् प्रणीतवांस्तान् दशस्थानकानुपातिनो दर्शयन्नाह—'दस दसे'त्याद्येकादश सूत्राणि, तत्र 'दस'त्ति दशसंख्या 'दसाउ'त्ति दशाधिकाराभिधायकत्वाद्दशा इति बहुवचनान्तं स्त्रीलिङ्गं शास्त्रस्याभिधानमिति, कर्म्मणः—अशुभस्य विपाकः—फलं कर्मविपाकः तत्प्रतिपादका दशाध्ययनात्मकत्वाद्दशाः कर्म्मविपाकदशाः, विपाकश्रुताख्यस्यैकादशाङ्गस्य प्रथमश्रुतस्कन्धः, द्वितीयश्रुतस्कन्धोऽप्यस्य दशाध्ययनात्मक एव, न चासाविहाभिमतः, उत्तरत्र विवरिष्यमाणत्वादिति, तथा साधून् उपासते—सेवन्त इत्युपासकाः—श्रावकास्तद्गतक्रियाकलापप्रतिबद्धाः दशा—दशाध्ययनोपलक्षिता उपासकदशाः सप्तममङ्गमिति, तथा अन्तो—विनाशः स च कर्म्मणस्तत्फलभूतस्य वा संसारस्य कृतो यैस्तेऽन्तकृतः ते च तीर्थकरादयस्तेषां दशाः अन्तकृद्दशाः, इह चाष्टमाङ्गस्य प्रथमवर्गे दशाध्ययनानीति तत्संख्ययोपलक्षितत्वादन्तकृद्दशा इत्यभिधानेनाष्टममङ्गमभिहितं, तथा उत्तरः—प्रधानो नास्योत्तरो विद्यत इत्यनुत्तरः उपपतनमुपपातो जन्मेत्यर्थः अनुत्तरश्चासावुपपातश्चेत्यनुत्तरोपपातः सोऽस्ति येषां तेऽनुत्तरोपपातिकाः सर्वार्थसिद्ध्यादिविमानपञ्चकोपपातिन इत्यर्थस्तद्वक्तव्यताप्रतिबद्धा दशा—दशाध्ययनोपलक्षिता अनुत्तरोपपातिकदशाः नवममङ्गमिति, तथा चरणमाचारो ज्ञानादिविषयः पञ्चधा आचारप्रतिपादनपरा दशा—दशाध्ययनात्मिका आचारदशाः, दशाश्रुतस्कन्ध इति या रूढाः, तथा प्रश्नाश्च—पृच्छाः व्याकरणानि च—निर्वचनानि प्रश्नव्याकरणानि तत्प्रतिपादिका दशाः—दशाध्ययनात्मिकाः प्रश्नव्याकरणदशाः दशममङ्गमिति, तथा बन्धदशाद्विगृद्धिदशादीर्घदशासंक्षेपिकदशाश्चास्माकमप्रतीता इति । कर्म्म-

विपाकदशानामध्ययनविभागमाह—'कम्मे'त्यादि, 'भिगे'त्यादि श्लोकः सार्द्धः, मृगा—मृगग्रामाभिधाननगरराजस्य विजयनाम्नो भार्या तस्याः पुत्रो मृगापुत्रः, तद् किल नगरे महावीरो गौतमेन समवसरणागतं जात्यन्धनरमवलोक्य पृष्टो—भदन्त ! अन्योऽपीहास्ति जात्यन्धो ?, भगवांस्तं मृगापुत्रं जात्यन्धमनाकृतिमुपदिदेश, गौतमस्तु कुतूहलेन तद्दर्शनार्थं तद्गृहं जगाम, मृगादेवी च वन्दित्वाऽऽगमनकारणं पप्रच्छ, गौतमस्तु त्वत्पुत्रदर्शनार्थमित्युवाच, ततः सा भूमिगृहस्थं तदुद्घाटनतस्तं गौतमस्य दर्शितवती, गौतमस्तु तमतिघृणास्पदं दृष्ट्वाऽऽगत्य च भगवन्तं पप्रच्छ कोऽयं जन्मान्तरेऽभवत् ?, भगवानुवाच—अयं हि विजयवर्द्धमानकाभिधाने खेटे मकाग्रीत्यभिधानो लंचोपचारादिभिर्लोकोपतापकारी राष्ट्रकूटो बभूव, ततः षोडशरोगातङ्काभिभूतो मृतो नरकं गतः, ततः पापकर्मविपाकेन मृगापुत्रो लोष्टाकारोऽव्यक्तेन्द्रियो दुर्गन्धिर्जातः, ततो मृत्वा नरकं गन्ता इत्यादि तद्वक्तव्यताप्रतिपादकं प्रथममध्ययनं मृगापुत्रमुक्तमिति ?, 'गोत्तासे'त्ति गोस्त्रासितवानिति गोत्रासः, अयं हि हस्तिनागपुरे भीमाभिधानकूटग्राहस्योत्पलाभिधानायाः भार्यायाः पुत्रोऽभूत्, प्रसवकाले चानेन महापापसत्त्वेनाराट्या गावस्त्रासिताः, यौवने चायं गोमांसान्यनेकधा भक्षितवान् ततो नारको जातः, ततो वाणिजग्रामनगरे विजयसार्थवाहभद्राभार्ययोरुज्झितकाभिधानः पुत्रो जातः, स च कामध्वजगणिकार्थे राज्ञा तिलशो मांसच्छेदनेन तत्खादनेन च चतुष्पथे विडम्ब्य व्यापादितो नरकं जगामेति गोत्रासवक्तव्यताप्रतिबद्धं द्वितीयमध्ययनं गोत्रासमुच्यते, इदमेव चोज्झितकनाम्ना विपाकश्रुते उज्झितकमुच्यते २, 'अंडे'त्ति पुरिमतालनगरवास्तव्यस्य कुक्कुटाद्यनेकविधाण्डकभाण्डव्यवहारिणो वाणिजकस्य निन्नकाभिधानस्य पापविपाकप्रतिपादकमण्डमिति, स च निन्नको नरकं गतस्तत उद्वृत्तोऽभग्नसेननामा पल्लीपतिर्जातः, स च पुरिमतालनगरवास्तव्येन निरन्तरं देशलूषणातिकोपितेन विश्वास्याऽऽनीय प्रत्येकं नगरचत्वरेषु तदग्रतः

पितृव्यपितृव्यानींप्रभृतिकं स्वजनवर्गं विनाश्य तिलशो मांसच्छेदनरुधिरमांसभोजनादिना कदर्थयित्वा निपातित इति, विपाकश्रुते चाभग्नसेन इतीदमध्ययनमुच्यते ३, 'सगडेत्ति यावरे' शकटमिति चापरमध्ययनं, तत्र शाखांजन्यां नगर्यां सुभद्राख्यसार्थवाह-भद्राभिधानतद्भार्ययोः पुत्रः शकटः, स च सुसेनाभिधानामात्येन सुदर्शनाभिधानगणिकाव्यतिकरे सगणिको मांसच्छेदादिनाऽत्यन्तं कदर्थयित्वा विनाशितः, स च जन्मान्तरे छगलपुरे नगरे छन्निकाभिधानः छागलिको मांसप्रिय आसीदित्येतदर्थप्रतिबद्धं चतुर्थमिति ४, 'माहण'त्ति कोशाम्ब्यां बृहस्पतिदत्तनामा ब्राह्मणः, स चान्तःपुरव्यतिकरे उदयनेन राज्ञा तथैव कदर्थयित्वा मारितो जन्मान्तरे चासावासीत् महेश्वरदत्तनामा पुरोहितः, स च जितशत्रो राज्ञः शत्रुजयार्थं ब्राह्मणादिभिर्होमं चकार, तत्र प्रतिदिनमेकैकं चातुर्वर्ण्यदारकमष्टम्यादिषु द्वौ द्वौ चतुर्मास्यां चतुरश्चतुरः षण्मास्यामष्टावष्टौ संवत्सरे षोडश २ परचक्रागमे अष्टशतं २ परचक्रं च जीयते, तदेवं मृत्वाऽसौ नरकं जगामेत्येवं ब्राह्मणवक्तव्यतानिबद्धं पञ्चममिति ५, 'नन्दिसेणे य'त्ति मथुराया श्रीदासराजसुतो नंदिसेणो युवराजो विपाकश्रुते च नन्दिवर्द्धनः श्रूयते, स च राजद्रोहव्यतिकरे राज्ञा नगरचत्वरे तप्तस्य लोहस्य द्रवेण स्नानं तद्विधसिंहासनोपवेशनं क्षारतैलभृतकलशै राज्याभिषेकं च कारयित्वा कष्टमारेण परासुतां नीतो नरकमगमत्, स च जन्मान्तरे सिंहपुरनगरराजस्य सिंहरथाभिधानस्य दुर्योधननामा गुप्तिपालो बभूव अनेकविधयातनाभिर्जनं कदर्थयित्वा मृतः नरकं गतवानित्येवमर्थं षष्ठमिति ६, 'सोरिय'त्ति शौरिकनगरे शौरिकदत्तो नाम मत्स्यबन्धपुत्रः, स च मत्स्यमांसप्रियो गलविलग्नमत्स्यकण्टको महाकष्टमनुभूय मृत्वा नरकं गतः, स च जन्मान्तरे नन्दिपुरनगरराजस्य मित्राभिधानस्य श्रीको नाम महानसिकोऽभूत्, जीवघातरतिः, मांसप्रियश्च, मृत्वा चासौ नरकं गतवानिति सप्तमं, इदं चाध्ययनं विपाकश्रुतेऽष्टममधीतं ७, 'उदुम्बरे'त्ति पाडली-

षण्डे नगरे सागरदत्तसार्थवाहसुतः उदुम्बरदत्तो नाम्नाऽभूत्, स च षोडशभिरोगैरेकदाऽभिभूतो महाकष्टमनुभूय मृतः, स च जन्मान्तरे विजयपुरराजस्य कनकरथनाम्नो धन्वन्तरिनामा वैद्य आसीत् मांसप्रियो मांसोपदेष्टा चेतिकृत्वा नरकं गतवानित्यष्टम ८, 'सहसुद्दाहे'त्ति सहसा-अकस्माद्दाहः-प्रकृष्टो दाहः सहसोद्दाहः सहस्राणां वा लोकस्योद्दाहः सहस्रोद्दाहः 'आमलए'त्ति रथ्रुतेऽभ्रुतिरित्यामरकः-सामस्त्येन मारिः, एवमर्थप्रतिबद्धं नवमं, तत्र किल सुप्रतिष्ठे नगरे सिंहसेनो राजा श्यामाभिधानदेव्यामनुरक्तस्तद्वचनादेवैकोनानि पञ्च शतानि देवीनां तां मिमारयिषूणि ज्ञात्वा कुपितः सन् तन्मातृणामेकोनपञ्चशतान्युपनिमन्त्रय महत्यगारे आवासं दत्त्वा भक्तादिभिः संपूज्य विश्रब्धानि सदेवीकानि सपरिवाराणि सर्वतो द्वारबन्धनपूर्वकमग्निप्रदानेन दग्धवान् ततोऽसौ राजा मृत्वा च षष्ठ्यां गत्वा रोहीतके नगरे दत्तसार्थवाहस्य दुहिता देवदत्ताभिधानाऽभवत् सा च पुष्पनन्दिना राज्ञा परिणीता स च मातुर्भक्तिपरतया तत्कृत्यानि कुर्वन्नासामास तया च भोगविघ्नकारिणीति तन्मातुर्ज्वलल्लोहदण्डस्यापानप्रक्षेपात्सहसा दाहेन वधो व्यधायि राज्ञा चासौ विविधविडम्बनाभिर्विडम्ब्य विनाशितेति विपाकश्रुते देवदत्ताभिधानं नवममिति ९, तथा 'कुमारे लेच्छई इय'त्ति कुमारा-राज्यार्हाः, अथवा कुमाराः-प्रथमवयस्थास्तान् 'लेच्छई इय'त्ति लिप्सूंश्च-वणिज आश्रित्य दशममध्ययनमितिशब्दश्च परिसमाप्तौ भिन्नक्रमश्च, अयमत्र भावार्थः-यदुत इन्द्रपुरे नगरे पृथिवीश्रीनामगणिकाऽभूत्, सा च बहून् राजकुमारवणिक्पुत्रादीन् मन्त्रचूर्णादिभिर्वशीकृत्योदारान् भोगान् भुक्तवती षष्ठ्यां च गत्वा वर्द्धमाननगरे धनदेवसार्थवाहदुहिता अञ्जूरित्यभिधाना जाता सा च विजयराजपरिणीता योनिशूलेन कृच्छ्रं जीवित्वा नरकं गतेति, अत एव विपाकश्रुते अञ्जू इति दशममध्ययनमुच्यत इति १० ॥ उपासकदशा विवृण्वन्नाह—'दसे'त्यादि, 'आनन्दे' सार्धः श्लोकः, 'आनन्दे'त्ति आनन्दो वाणिजग्रामाभिधाननगरवासी

महर्द्धिको गृहपतिर्महावीरेण बोधित एकादशोपासकप्रतिमाः कृत्वोत्पन्नावधिज्ञानो मासिक्या संलेखनया सौधर्ममगमदितिवक्तव्यताप्रतिबद्धं प्रथममध्ययनं आनन्द एवोच्यत इति १,'कामदेवे'त्ति कामदेवश्चम्पानगरीवास्तव्यस्तथैव प्रतिबुद्धः, परीक्षाकारिदेवकृतोपसर्गाविचलितप्रतिज्ञस्तथैव दिवमगमदित्येवमर्थं द्वितीयं कामदेव इति २, 'गाहावइ चूलणीपिय'त्ति चुलनीपितृनाम्ना गृहपतिर्वाणारसीनिवासी तथैव प्रतिबुद्धः :प्रतिपन्नप्रतिमो विमर्शकदेवेन मातरं त्रिखण्डीक्रियमाणां दृष्ट्वा क्षुभितश्चलितप्रतिज्ञो देवनिग्रहार्थमुद्दधाव पुनः कृतालोचनस्तथैव दिवं गत इतिवक्तव्यताप्रतिबद्धं चुलनीपितेत्युच्यते ३, 'सुरादेवे'त्ति सुरादेवो गृहपतिर्वाराणसीनिवासी परीक्षकदेवस्य षोडश रोगातङ्कान् भवतः शरीरे समकमुपनयामि यदि धर्मं न त्यजसीतिवचनमुपश्रुत्य चलितप्रतिज्ञः पुनरालोचितप्रतिक्रान्तस्तथैव दिवं गत इतिवक्तव्यताभिधायकं सुरादेव इति ४, 'चुल्लसयए'त्ति महाशतकापेक्षया लघुः शतकः चुल्लशतकः, स चालम्भिकानगरवासी देवेनोपसर्गकारिणा द्रव्यमपह्रियमाणमुपलभ्य चलितप्रतिज्ञः पुनर्निरतिचारः सन् दिवमगमद् यथा तथा यत्राभिधीयते तच्चुल्लशतक इति ५, 'गाहावइ कुंडकोलिए'त्ति कुंडकोलिको गृहपतिः काम्पील्यवासी धर्मध्यानस्थो यथा देवस्य गोशालकमतमुद्ग्राहयत उत्तरं ददौ दिवं च ययौ तथा यत्र अभिधीयते तत्तथेति ६, 'सद्दालपुत्ते'त्ति सद्दालपुत्रः पोलासपुरवासी कुम्भकारजातीयो गोशालकोपासको भगवता बोधितः पुनः स्वमतग्राहणोद्यतेन गोशालकेनाक्षोभितान्तःकरणः प्रतिपन्नप्रतिमश्च परीक्षकदेवेन भार्यामारणदर्शनतो भग्नप्रतिज्ञः पुनरपि कृतालोचनस्तथैव दिवं गत इतिवक्तव्यताप्रतिबद्धं सद्दालपुत्र इति ७, 'महासयए'त्ति महाशतकनाम्नो गृहपते राजगृहनगरनिवासिनस्त्रयोदशभार्यापतेरुपासकप्रतिमाकृतमतेरुत्पन्नावधिसंजाताधिगतेरेवत्यभिधानस्वभार्याकृतानुकूलोपसर्गाचलमतेः संलेखनाजातदिविगतेर्वक्तव्यतानिबद्धं महाशतक इति ८, 'नंदिणीपिय'त्ति नन्दिनी-

पितृनामकस्य श्रावस्तीवास्तव्यस्य भगवता बोधितस्य संलेखनादिगतस्य वक्तव्यतानिबन्धनान्नंदिनीपितृनामकमिति ९, 'सालइया-पिय'त्ति सालइकापितृनाम्नःश्रावस्तीनिवासिनो गृहमेधिनो भगवतो बोधिलाभिनोऽनन्तरं तथैव सौधर्म्मगामिनो वक्तव्यतानिबद्धं सालेयिकापितृनामकं दशममिति१०। दशाप्यमी विंशतिवर्षपर्यायाः सौधर्म्मे गताश्चतुःपल्योपमस्थितयो देवा जाता महाविदेहे च सेत्स्यन्तीति॥ अथान्तकृद्दशानामध्ययनविवरणमाह—'अन्तगडे'त्यादि,इह चाष्टौ वर्गास्तत्र प्रथमवर्गे दशाध्ययनानि, तानि चामूनि—'नमी'त्यादि सार्द्धं रूपकम् , एतानि च नमीत्यादिकान्यन्तकृत्साधुनामानि अन्तकृद्दशाङ्गप्रथमवर्गेऽध्ययनसंग्रहे नोपलभ्यन्ते, यतस्तत्राभिधीयते—"गोयम १ समुद्द २ सागर ३ गंभीरे ५ चेव होइ थिमिए ५ य। अयले ६ कंपिल्ले ७ खलु अक्खोभ ८ पसेणई ९ विण्हू १० ॥१॥"इति [गोतमः१ समुद्रः२ सागरः३ गंभीरः४ चैव भवति स्तिमितश्च ५ अचलः६ कांपील्यः७ अक्षोभ्यः८ प्रसेनजित् ८ विष्णुः१० ॥१॥] ततो वाचनान्तरापेक्षाणीमानीति संभावयामः,न च जन्मान्तरनामापेक्षयैतानि भविष्यन्तीति वाच्यं, जन्मान्तराणां तत्रानभिधीयमानत्वादिति॥ अधुनाऽनुत्तरोपपातिकदशानामध्ययनविभागमाह—'अणुत्तरो' इत्यादि, इह च त्रयो वर्गास्तत्र तृतीयवर्गे दृश्यमानाध्ययनैः कैश्चित् सह साम्यमस्ति न सर्वैः,यत इहोक्तम्—'इसिदासे'त्यादि, तत्र तु दृश्यते—"धन्ने य सुनक्खत्ते,ईसिदासे य आहिए पेल्लए रामपुत्ते य, चंदिमा पोट्टिके इय॥१॥ पेढालपुत्ते अणगारे, अणगारे पोट्टिले इय। विहल्ले दसमे वुत्ते, एमे ए दस आहिया ॥२॥' इति [धन्यश्च सुनक्षत्रः ऋषिदासश्चाख्यातःपेल्लको रामपुत्रश्चंद्रमाः प्रोष्ठक इति ॥१॥ पेढालपुत्रोऽनगारः पोट्टिलश्च विहल्लः दशम उक्तः एवमेते आख्याता दश ॥२॥] तदेवमिहापि वाचनान्तरापेक्षयाऽध्ययनविभाग उक्तो न पुनरुपलभ्यमानवाचनापेक्षयेति, तत्र धन्यक सुनक्षत्रकथानके एवं-काकन्द्यां नगर्यां भद्रासार्थवाहीसुतो धन्यको नाम महावीरसमीपे धर्ममनुश्रुत्य महाविभूत्या प्रव्रजितः षष्ठोपवासी

उज्झयमानलब्धाचाम्लपारणो विशिष्टतपसा क्षीणमांसशोणितो राजगृहे श्रेणिकमहाराजस्य चतुर्दशानां श्रमणसहस्राणां मध्येऽतिदुष्करकारक इति महावीरेण व्याहृतस्तेन च राज्ञा सभक्तिकं वन्दित उपबृंहितश्च कालं च कृत्वा सर्वार्थसिद्धविमान उत्पन्न इति, एवं सुनक्षत्रोऽपीति, कार्त्तिक इति हस्तिनागपुरे श्रेष्ठी इभ्यसहस्रप्रथमासनिकः श्रमणोपासको जितशत्रुराजस्याभियोगाच्च परिव्राजकस्य मासक्षपणपारणके भोजन परिवेषितवान् तमेव निर्वेदं कृत्वा मुनिसुव्रतस्वामिसमीपे प्रव्रज्यां प्रतिपन्नवान् द्वादशाङ्गधरो भूत्वा शक्रत्वेनोत्पन्न इत्येवं यो भगवत्यां श्रूयते सोऽन्य एव अयं पुनरन्योऽनुत्तरसुरेषूपपन्न इति, 'शालिभद्र' इति यः पूर्वभवे सङ्गमनामा वत्सपालोऽभवत्, सबहुमानं च साधवे पायसमदात्, राजगृहे गोभद्रश्रेष्ठिनः पुत्रत्वेनोत्पन्नो, देवीभूतगोभद्रश्रेष्ठिसमुपनीतदिव्यभोजनवसनकुसुमविलेपनभूषणादिभिर्भोगाङ्गैरङ्गनानां द्वात्रिंशता सह सप्तभूमिकरम्यहर्म्यतलगतो ललति स्म, वाणिजकोपनीतलक्षमूल्यबहुरत्नकम्बला गृहीता भद्रया शालिभद्रमात्रा वधूनां पादप्रोञ्छनीकृताश्चेतिश्रवणाज्जातकुतूहले दर्शनार्थं गृहमागते श्रेणिकमहाराजे जनन्याऽभिहितो–यथा त्वां स्वामी द्रष्टुमिच्छतीत्यवतर प्रासादशृङ्गात् स्वामिनं पश्येतिवचनश्रवणादस्माकमप्यन्यः स्वामीति भावयन् वैराग्यमुपजगाम वर्द्धमानस्वामिसमीपे च प्रवव्राज, विकृष्टतपसा क्षीणदेहः शिलातले पादपोपगमनविधिनाऽनुत्तरसुरेषूत्पन्नवानिति सोऽयमिह सम्भाव्यते, केवलमनुत्तरोपपातिकाङ्गे नाधीत इति, तेतलीतिय'त्ति तेतलिसुत इति यो ज्ञाताध्ययनेषु श्रूयते, स नायं, तस्य सिद्धिगमनश्रवणात्, तथा दशार्णभद्रो दशार्णपुरनगरवासी विश्वंभराविभुः यो भगवन्तं महावीरं दशार्णकूटनगरनिकटसमवसृतमुद्यानपालवचनादुपलभ्य यथा न केनापि वन्दितो भगवांस्तथा मया वन्दनीय इति राज्यसम्पदवलेपाद्भक्तितश्च चिन्तयामास, ततः प्रातः सविशेषकृतस्नानविलेपनाभरणादिविभूषः प्रकल्पितप्रधानद्विपपतिपृष्ठाधिरूढो वल्गनादिविविध-

क्रियाक्रान्तिमदर्पसर्पच्चतुरङ्गसैन्यसमन्वितः पुष्पमाणवसमुद्घुष्यमाणागणितगुणगणः सामन्तामात्यमन्त्रिराजदौवारिकदूतादिपरिवृतः सान्तःपुरपौरजनपरिगत आनन्दमयमिव सम्पादयन् महीमण्डलमाखण्डल इवामरावत्या नगरान्निर्जगाम निर्गत्य च समवसरणमभिगम्य यथाविधि भगवन्तं भव्यजननलिनवनविबोधनाभिनवभानुमन्तं महावीरं वन्दित्वोपविवेश, अवगतदशार्णभद्रभूपाभिप्रायं च तन्मानविनोदनोद्यतं कृताष्टमुखे प्रतिमुखं विहिताष्टदन्ते प्रतिदन्तं कृताष्टपुष्करिणीके प्रतिपुष्करिणि निरूपिताष्टपुष्करे प्रतिपुष्करं विरचिताष्टदले प्रतिदलं विरचितद्वात्रिंशद्बद्धनाटके वारणेन्द्रे समारूढं स्वश्रिया निखिलं गगनमण्डलमापूरयन्तममरपतिमवलोक्य क्वेतोऽस्मादृशामीदृशी विभूतिः कृतोऽनेन निरवद्यो धर्म इति ततोऽहमपि तं करोमीति विभाव्य प्रवव्राज, जितोऽहमधुना त्वयेति भणित्वा यमिन्द्रः प्रणिपपातेति सोऽयं दशार्णभद्रः सम्भाव्यते परमनुत्तरोपपातिकाङ्गे नाधीतः, क्वचित्सिद्धश्च श्रूयत इति, तथा अतिमुक्तः एवं श्रूयते अन्तकृद्दशाङ्गे—पोलासपुरे नगरे विजयस्य राज्ञः श्रीनाम्न्या देव्या अतिमुक्तको नाम पुत्रः षड्वार्षिको गौतमं गोचरगतं दृष्ट्वा एवमवादीत्—के यूयं किं वा अटथ ?, ततो गौतमोऽवादीत्—श्रमणा वयं भिक्षार्थं च पर्यटामः, तर्हि भदन्तागच्छत तुभ्यं भिक्षां दापयामीति भणित्वा अङ्गुल्या भगवन्तं गृहीत्वा स्वगृहमानैषीद्, ततः श्रीदेवी हृष्टा भगवन्तं प्रतिलम्भयामास, अतिमुक्तकः पुनरवोचत्—यूयं क्व वसथ ?, भगवानुवाच—भद्र ! मम धर्माचार्याः श्रीवर्द्धमानस्वामिन उद्याने वसंति तत्र वयं परिवसामः, भदन्त ! आगच्छाम्यहं भवद्भिः सार्द्धं भगवतो महावीरस्य पादान् वन्दितुं ?, गौतमोऽवादीत्—यथासुखं देवानां प्रिय !, ततो गौतमेन सहागत्यातिमुक्तकः कुमारो भगवन्तं वन्दते, स धर्मं श्रुत्वा प्रतिबुद्धो गृहमागत्य पितरावब्रवीत्—यथा संसारान्निर्विण्णोऽहं प्रव्रजामीत्यनुजानीतं मां युवां, तावूचतुः—बाल ! त्वं किं जानासि ?, ततोऽतिमुक्तकोऽवादीत्—हे अम्बतात ! यदेवाहं जानामि तदेव न

जानामि, यदेव न जानामि तदेव जानामि, ततस्तौ तमत्रादिष्टां—कथमेतत् ?; सोऽब्रवीत्– अम्बतात ! जानाम्यहं यदुत—जातेनावश्यं मर्त्तव्यं, न जानामि तु कदा वा कस्मिन् वा कथं वा कियच्चिराद्वा ?, तथा न जानामि कैः कर्म्मभिर्निरयादिषु जीवा उत्पद्यन्ते एतत्पुनर्जानामि यथा स्वयंकृतैः कर्म्मभिरिति, तदेवं मातापितरौ प्रतिबोध्य प्रवव्राज तपः कृत्वा च सिद्ध इति, इह त्वयमनुत्तरोपपातिकेषु दशमाध्ययनतयोक्तस्तदपर एवायं भविष्यतीति, 'दस आहिय'त्ति दशाध्ययनान्याख्यातानीत्यर्थः ॥ आचारदशानामध्ययनविभागमाह—'आयारे'त्यादि, असमाधिः—ज्ञानादिभावप्रतिषेधोऽप्रशस्तो भाव इत्यर्थः तस्य स्थानानि—पदानि असमाधिस्थानानि—यैरासेवितैरात्मपरोभयानामिह परत्र चोभयत्र वा असमाधिरुत्पद्यते तानीति भावः, तानि च विंशतिः द्रुतचारित्वादीनि तत एवावगम्यानीति, तत्प्रतिपादकमध्ययनमसमाधिस्थानानीति प्रथमं, तथा एकविंशतिः 'शबलाः' शबलं—कर्बुरं द्रव्यतः पटादि भावतः सातिचारं चारित्रं, इह च शबलचारित्रयोगाच्छबलास्साधवस्ते च करकर्म्मप्रकारान्तरमैथुनादीन्येकविंशतिपदानि तत्रैवोक्तरूपाणि सेवमाना उपाधित एकविंशतिर्भवन्ति तदर्थमध्ययनं एकविंशतिशबला इत्यभिधीयते २, 'तेत्तीसमासायणाउ'त्ति ज्ञानादिगुणा आ—सामस्त्येन शात्यन्ते—अपध्वस्यन्ते यकाभिस्ता आशातना—रत्नाधिकविषयाविनयरूपाः पुरतोगमनादिकास्तत्रप्रसिद्धास्त्रयस्त्रिंशद्भेदा यत्राभिधीयन्ते तदध्ययनमपि तथोच्यत इति ३, 'अट्ठे'त्यादि, अष्टविधा गणिसम्पत् आचारश्रुतशरीरवचनादिका आचार्यगुणर्द्धिरष्टस्थानकोक्तरूपा यत्राभिधीयते तदध्ययनमपि तथोच्यत इति ४, 'दसे'त्यादि, दश चित्तसमाधिस्थानानि येषु सत्सु चित्तस्य प्रशस्तपरिगतिर्जायते तानि तथा, असमुत्पन्नपूर्वकधर्मचिन्तोत्पादादीनि तत्रैव प्रसिद्धान्यभिधीयन्ते यत्र तत्तथैवोच्यत इति ५, 'एक्कारे'त्यादि, एकादशोपासकानां—श्रावकाणां प्रतिमाः—प्रतिपत्तिविशेषाः दर्शनव्रतसामायिकादिविषयाः प्रतिपाद्यन्ते यत्र तत्तथैवोच्यत इति ६, 'बारसे'त्यादि, द्वादश

भिक्षूणां प्रतिमाः-अभिग्रहा मासिकीद्विमासिकीप्रभृतयो यत्राभिधीयन्ते तत्तथोच्यते, 'पज्जो'इत्यादि, पर्याया ऋतुबद्धिकाः द्रव्यक्षेत्रकालभावसम्बन्धिन उत्सृज्यन्ते-उज्झ्यन्ते यस्यां सा निरुक्तविधिना पर्यासवना अथवा परीति-सर्वतः क्रोधादिभावेभ्यः उपशम्यते यस्यां सा पर्युपशमना अथवा परिः-सर्वथा एकक्षेत्रे जघन्यतः सप्ततिदिनानि उत्कृष्टतः षण्मासान् वसनं निरुक्तादेव पर्युषणा तस्याः कल्पः-आचारो मर्यादेत्यर्थः पर्यासवनाकल्पः पर्युपशमना कल्पः पर्युषणाकल्पो वेति, स च 'सक्कोसजोयणं विगइनवय' मित्यादिकस्तत्रैव प्रसिद्धस्तदर्थमध्ययनं स एवोच्यत इति ८, 'तीस'मित्यादि, त्रिंशन्मोहनीयकर्म्मणो बन्धस्थानानि-बन्धकारणानि 'वारिमज्झेऽवगाहित्ता, तसे पाणे विहिंसई'त्यादिकानि तत्रैव प्रसिद्धानि मोहनीयस्थानानि तत्प्रतिपादकमध्ययनं तथैवोच्यत इति ९, 'आजाइट्ठाण' मिति आजननमाजातिः-सम्मूर्च्छनगर्भोपपाततो जन्म तस्याः स्थानं-संसारस्तत्सनिदानस्य भवतीत्येवमर्थप्रतिपादनपरमाजातिस्थानमुच्यत इति १० ॥ प्रश्नव्याकरणदशा इहोक्तरूपा न दृश्यन्ते दृश्यमानास्तु पञ्चाश्रवपञ्चसंवरात्मिका इति, इहोक्तानां तूपमादीनामध्ययनानामक्षरार्थः प्रतीयमान एवेति, नवरं 'पसिणाइं'ति प्रश्नविद्याः यकाभिः क्षौमकादिषु देवतावतारः क्रियत इति, तत्र क्षौमकं-वस्त्रं अद्दागो-आदर्शः अङ्गुट्ठो-हस्तावयवः बाहवो-भुजा इति ॥ बन्धदशानामपि बन्धाद्यध्ययनानि श्रौतेनार्थेन व्याख्यातव्यानि । द्विगृद्धिदशाश्च स्वरूपतोऽप्यनवसिताः । दीर्घदशाः स्वरूपतोऽनवगता एव, तदध्ययनानि तु कानिचिन्नरकावलिकाश्रुतस्कन्धे उपलभ्यन्ते, तत्र चन्द्रवक्तव्यताप्रतिबद्धं चन्द्रमध्ययनं, तथाहि-राजगृहे महावीरस्य चन्द्रो ज्योतिष्कराजो वन्दनं कृत्वा नाट्यविधिं चोपदर्श्य प्रतिगतो, गौतमश्च भगवन्तं तद्वक्तव्यतां पप्रच्छ, भगवांश्चोवाच-श्रावस्त्यामङ्गजिन्नामा अयं गृहपतिरभूत् पार्श्वनाथसमीपे च प्रव्रजितो विराध्य च मनाक् श्रामण्यं चन्द्रतयोत्पन्नो महाविदेहे च सेत्स्यतीति, तथा सूरवक्तव्यताप्रतिबद्धं सूरं, सूरवक्तव्यता च

चन्द्रवत्, नवरं सुप्रतिष्ठो नाम्ना बभूवेति, शुक्रो—ग्रहस्तद्वक्तव्यता चैवं—राजगृहे भगवन्तं वन्दित्वा शुक्रे प्रतिगते गौतमस्य तथैव भगवानुवाच—वाणारस्यां सोमिलनामा ब्राह्मणोऽयमभवत्, पार्श्वनाथं चापृच्छत्—ते भंते ! जवणिज्जं', तथा 'सरिसवया मासा कुलत्था य ते भोज्जा ? एगे भवं दुवे भव'मित्यादि, भगवता चैतेषु विभक्तेष्वाक्षिप्तः श्रावको भूत्वा पुनर्विपर्यासादारामादिलौकिकधर्म्मस्थानानि कारयित्वा दिक्प्रोक्षकतापसत्वेन प्रव्रज्य प्रतिषष्ठपारणकं क्रमेण पूर्वादिदिग्भ्य आनीय कन्दादिकमभ्यवजहार, अन्यदाऽसौ यत्र क्वचन गर्त्तादौ पतिष्यामि तत्रैव प्राणांस्त्यक्ष्यामीत्यभिग्रहमभिगृह्य काष्ठमुद्रया मुखं बद्ध्वा उत्तराभिमुखः प्रतस्थौ, तत्र प्रथमदिवसेऽपराह्णसमयेऽशोकतरोरधो होमादिकर्म्म कृत्वोवास, तत्र देवेन केनाप्युक्तः—अहो सोमिलब्राह्मणमहर्षे ! दुष्प्रव्रजितं ते, पुनर्द्वितीयेऽहनि तथैव सप्तपर्णस्याध उषित उक्तः, तृतीयादिषु दिनेष्वश्वत्थवटोदुम्बराणामध उषितः भणितो देवेन, ततः पञ्चमदिनेऽवादीदसौ—कथ नु नाम मे दुष्प्रव्रजितं ?, देवोऽवोचत्—त्वं पार्श्वनाथस्य भगवतः समीपेऽणुव्रतादिकं श्रावकधर्म्मं प्रतिपद्याधुना अन्यथा वर्त्तसे इति दुष्प्रव्रजितं तव, ततोऽद्यापि तमेवाणुव्रतादिकं धर्म्मं प्रतिपद्यस्व येन सुप्रव्रजितं तव भवतीत्येवमुक्तस्तथैव चकार, ततः श्रावकत्वं प्रतिपाल्यानालोचितप्रतिक्रान्तः कालं कृत्वा शुक्रावतंसके विमाने शुक्रत्वेनोत्पन्न इति। तथा श्रीदेवीसमाश्रयमध्ययनं श्रीदेवीति, तथाहि—सा राजगृहे महावीरवन्दनाय सौधर्म्मादाजगाम, नाट्यं दर्शयित्वा प्रतिजगाम च, गौतमस्तत्पूर्वभवं पप्रच्छ, भगवांस्तं जगाद—राजगृहे सुदर्शनश्रेष्ठी बभूव प्रियाभिधाना च तद्भार्या तयोः सुता भूतानाम बृहत्कुमारिका पार्श्वनाथसमीपे प्रव्रजिता शरीरबकुशा जाता सातिचारा च मृत्वा दिवं गता महाविदेहे च सेत्स्यतीति। तथा प्रभावती—चेटकदुहिता वीतभयनगरनायकोदायनमहाराजभार्या यया जिनबिम्बपूजार्थं स्नानानन्तरं चेट्या सितवसनार्प्पणेऽपि विभ्रमाद्रक्तवसनमुपनीतमनवसरमनयेति मन्यमानया मन्युना दर्प्पणेन

चेटिका हता मृता च, ततो वैराग्यादनशनं प्रतिपद्य देवतया यया बभूवे, यया चोज्जयिनीराजं प्रति विक्षेपेण प्रस्थितस्य ग्रीष्मे मासि
पिपासाभिभूतसमस्तसैन्यस्योदायनमहाराजस्य स्वच्छशीतलजलपरिपूर्णत्रिपुष्करकरणेनोपकारोऽकारीत्येवंलक्षणप्रभावतीचरितयुक्तमध्य-
यनं प्रभावतीति सम्भाव्यते, न चेदं निरयावलिकाश्रुतस्कन्धे दृश्यत इति पञ्चमं, तथा बहुपुत्रिकादेवीप्रतिबद्धं सैवाध्ययनमुच्यते,
तथाहि-राजगृहे महावीरवन्दनार्थं सौधर्माद्बहुपुत्रिकाभिधाना देवी समवततार, वन्दित्वा च प्रतिजगाम, केयमिति पृष्टे गौत-
मेन भगवानवादीत्-वाराणस्यां नगर्यां भद्राभिधानस्य सार्थवाहस्य सुभद्राभिधाना भार्येयं बभूव, सा च वन्ध्या पुत्रार्थिनी भिक्षा-
र्थमागतमार्यासंघाटकं पुत्रलाभं पप्रच्छ स च धर्ममचकथत् प्राव्राजीच्च, सा बहुजनापत्येषु प्रीत्याऽभ्यङ्गोद्वर्त्तनापरायणा सातिचारा
मृत्वा सौधर्ममगमत्, ततश्च्युता च विभेले सन्निवेशे ब्राह्मणीत्वेनोत्पत्स्यते, ततः पितृभागिनेयभार्या भविष्यति युगलप्रसवा च,
सा षोडशभिर्वर्षैः द्वात्रिंशदपत्यानि जनयिष्यति, ततोऽसौ तन्निर्वेदादार्याः प्रक्ष्यति ताश्च धर्मं कथयिष्यन्ति श्रावकत्वं च सा प्रति-
पत्स्यते, कालान्तरे प्रव्रजिष्यति, सौधर्मे चेन्द्रसामानिकतयोत्पद्य महाविदेहे सेत्स्यतीति। तथा स्थविरः-सम्भूतविजयो भद्रबाहुस्वा-
मिनो गुरुभ्राता स्थूलभद्रस्य सगडालपुत्रस्य दीक्षादाता तद्वक्तव्यताप्रतिबद्धमध्ययनं स एवोच्यत इति नवमं, शेषाणि त्रीण्यप्रतीता-
नीति। संक्षेपिकदशा अप्यनवगतस्वरूपा एव, तदध्ययनानां पुनरयमर्थः—'खुड्डिए'त्यादि, इहावलिकाप्रविष्टेतरविमानप्रविभजनं
यत्राध्ययने, तद्विमानप्रविभक्तिः, तच्चैकमल्पग्रन्थार्थं तथाऽन्यन्महाग्रन्थार्थमतः क्षुल्लिकाविमानप्रविभक्तिर्महती विमानप्रविभक्तिरिति,
अङ्गस्य-आचारादेश्चूलिका यथाऽऽचारस्यानेकविधा, इहोक्तानुक्तार्थसंग्राहिका चूलिका, 'वग्गचूलिय'त्ति इह च वर्गः-अध्ययनादि-
समूहो, यथा अन्तकृद्दशास्वष्टौ वर्गास्तस्य चूलिका वर्गचूलिका, 'विवाहचूलिय'त्ति व्याख्या-भगवती तस्याश्चूलिका व्याख्याचूलिका,

'अरुणोपपात'इति इहारुणो नाम देवस्तत्समयनिबद्धो ग्रन्थस्तदुपपातहेतुररुणोपपातो, यदा तदध्ययनमुपयुक्तः सन् श्रमणः परिवर्त्तयति तदाऽसावरुणो देवः स्वसमयनिबद्धत्वाच्चलितासनः सम्भ्रमोद्भ्रान्तलोचनः प्रयुक्तावधिस्तद्विज्ञाय हृष्टप्रहृष्टश्चलचपलकुण्डधरो दिव्यया द्युत्या दिव्यया विभूत्या दिव्यया गत्या यत्रैवासौ भगवान् श्रमणस्तत्रैवोपागच्छति, उपागत्य च भक्तिभरावनतवदनो विमुक्तवरकुसुमवृष्टिरवपतति, अवपत्य च तदा तस्य श्रमणस्य पुरतः स्थित्वा अन्तर्हितः कृताञ्जलिक उपयुक्तः संवेगविशुद्ध्यमानाध्यवसानः शृण्वंस्तिष्ठति, समाप्ते च भणति–सुस्वाध्यायितं सुस्वाध्यायितमिति, वरं वृणीष्व २ इति, ततोऽसाविहलोकनिष्पिपासः समतृणमणिमुक्तालेष्टुकाञ्चनः सिद्धिवधूनिर्भरानुगतचित्तः श्रमणः प्रतिभणति–न मे वरेणार्थ इति, ततोऽसावरुणो देवोऽधिकतरजातसंवेगः प्रदक्षिणां कृत्वा वन्दित्वा नमस्यित्वा प्रतिगच्छति, एवं वरुणोपपातादिष्वपि भणितव्यमिति। एवंभूतं च श्रुतं कालविशेष एव भवतीति दशस्थानकावतारि तत्स्वरूपमाह—'दसही'त्यादि सूत्रद्वयं सुगमं।

यथोपाधिवशात् कालद्रव्यं भेदवत्तथा नारकादिजीवद्रव्याण्यपीत्याह—

दसविधा नेरइया पं० तं०—अणंतरोववन्ना परंपरोववन्ना अणंतरावगाढा परंपरावगाढा अणंतराहारगा परंपराहारगा अणंतरपज्जत्ता परंपरपज्जत्ता चरिमा अचरिमा, एवं निरंतरं जाव वेमाणिया २४। चउत्थीते णं पंकप्पभाते पुढवीते दस निरतावाससतसहस्सा पं० १ रयणप्पभाते पुढवीते जहन्नेणं नेरतिताणं दसवाससहस्साइं ठिती पं० २ चउत्थीते णं पंकप्पभाते पुढवीते उक्कोसेणं नेरतिताणं दस सागरोवमाइं ठिती पण्णत्ता ३

पंचमाते णं धूमप्पभाते पुढवीते जहन्नेणं नेरइयाणं दस सागरोवमाइं ठिती पं० ४ असुरकुमाराणं जहन्नणं दसवाससहस्साइं ठिती पं०, एवं जाव थणियकुमाराणं १४ बायरवणस्सतिकातिताणं उक्कोसेणं दसवाससहस्साइं ठिती पं० १५ वाणमंतरदेवाणं जहण्णेणं दस वाससहस्साइं ठिई पं० १६ बंभलोगे कप्पे उक्कोसेणं देवाणं दस सागरोवमाइं ठिती पं० १७ लंतते कप्पे देवाणं जहण्णेणं दस सागरोवमाइं ठिती प० १८ (सू० ७५७)।

'दसविहे'त्यादि, सूत्राणि चतुर्विंशतिः, न विद्यते अन्तरं–व्यवधानमस्येत्यनन्तरो–वर्त्तमानः समयः तत्रोपपन्नका अनन्तरोपपन्नकाः येषामुत्पन्नानामेकोऽपि समयो नातिक्रान्तस्त एत इति, येषां तूत्पन्नानां द्व्यादयः समया जातास्ते परम्परोपपन्नकाः परंपरसमयेषूपपन्नत्वात् तेषामित्ययं कालविशेषोपाधिकृतो भेदः, तथा विवक्षितप्रदेशापेक्षया अनन्तरप्रदेशेष्ववगाढा–अवस्थिता अनन्तरावगाढाः अथवा प्रथमसमयावगाढाः–अनन्तरावगाढा एतद्विलक्षणाः परंपरावगाढाः, अयं क्षेत्रतो भेदः, तथा अनन्तरान्–अव्यवहितान् जीवप्रदेशैराक्रान्ततया स्पृष्टतया वा पुद्गलानाहारयन्तीत्यनन्तराहारकाः, ये तु पूर्वं व्यवहितान् सतः पुद्गलान् स्वक्षेत्रमागतानाहारयन्ति ते परंपराहारकाः, अथवा प्रथमसमयाहारका अनन्तराहारकाः इतरे त्वितरे, अयं तु द्रव्यकृतो भेद इति, न विद्यते पर्याप्तत्वेऽन्तरं येषां ते अनन्तरास्ते च ते पर्याप्तकाश्चेत्यनन्तरपर्याप्तकाः, प्रथमसमयपर्याप्तका इत्यर्थः, इतरे तु परंपरपर्याप्तकाः, अयं भावकृतो भेदः पर्याप्तेर्भावत्वादिति, चरमनारकभवयुक्तत्वाच्चरमाः न पुनर्नारका भविष्यन्ति ये इति भावस्तद्विपरीता अचरमाः, अयमपि भावकृत एव भेदः, चरमाचरमत्वयोर्जीवपर्यायत्वादिति। 'एव'मित्यादि नारकवद्दशप्रकारत्वमिदं नैरन्तर्येण चतुर्विंशतिदण्डकोक्तानां वैमानिकान्तानामपि योजनीयमिति। दण्डकस्यादौ दशधा नारका उक्ताः अथ तदाधारान् नारकादिस्थितिं च दशस्थानानुपाततो निरूपयन् 'चउ-

त्थीए'त्यादिसूत्राष्टादशकमाह, सुगमं चैतदिति।

अनन्तरं लान्तकदेवा उक्तास्ते च लब्धभद्रा इति भद्रकारिकर्म्मकारणान्याह—

**दसहिं ठाणेहिं जीवा आगमेसिभद्दत्ताए कम्मं पगरेंति, तं०—अणिदाणताते १ दिट्ठिसंपन्नयाए २ जोगवाहियत्ताते ३ खंतिखमणताते ४ जितिंदियताते ५ अमाइल्लताते ६ अपासत्थताते ७ सुसामण्णताते ८ पवयणवच्छल्लयाते ९ पवयणउब्भावणताए १० (सू० ७५८)।**

'दसही'त्यादि, आगमिष्यद्—आगामिभवान्तरे भावि भद्रं—कल्याणं सुदेवत्वलक्षणमनन्तरं सुमानुषत्वप्राप्त्या मोक्षप्राप्तिलक्षणं च येषां ते आगमिष्यद्भद्रास्तेषां भावः आगमिष्यद्भद्रता तस्यै आगमिष्यद्भद्रतायै तदर्थमित्यर्थः आगमिष्यद्भद्रतया वा कर्म्म—शुभप्रकृतिरूपं प्रकुर्वते—बध्नन्ति, तद्यथा—निदायते—लूयते ज्ञानाद्याराधनालता आनन्दरसोपेतमोक्षफला येन पर्शुनेव देवेन्द्रादिगुणर्द्धिप्रार्थनाध्यवसानेन तन्निदानं अविद्यमानं तद्यस्य सोऽनिदानस्तद्भावस्तत्ता तया हेतुभूतया निरुत्सुकतयेत्यर्थः १, दृष्टिसम्पन्नतया—सम्यग्दृष्टितया २, योगवाहितया—श्रुतोपधानकारितया योगेन वा—समाधिना सर्वत्रानुत्सुकत्वलक्षणेन वहतीत्येवंशीलो योगवाही तद्भावस्तत्ता तया ३, क्षान्त्या क्षमत इति क्षान्तिक्षमणः, क्षान्तिग्रहणमसमर्थताव्यवच्छेदार्थं यतोऽसमर्थोऽपि क्षमत इति क्षान्तिक्षमणस्य भावस्तत्ता तया ४, जितेन्द्रियतया—करणनिग्रहेण ५, 'अमाइल्लयाए'त्ति माइल्लो—मायावांस्तत्प्रतिषेधेनामायावांस्तद्भावस्तत्ता तया ६, तथा पार्श्वे—वहिर्ज्ञानादीनां देशतः सर्वतो वा तिष्ठतीति पार्श्वस्थः, उक्तं च—"सो पासत्थो दुविहो देसे सव्वे य होइ नायव्वो। सव्वंमि

नाणदंसणचरणाणं जो उ पासत्थो ॥१॥ देसम्मि उ पासत्थो सेज्जायरभिहडनीयपिंडं च। नीयं च अग्गपिंडं भुंजइ निक्कारणे चेव ॥२॥" इत्यादि, [स पार्श्वस्थो द्विविधो देशतः सर्वतश्च भवति ज्ञातव्यः ज्ञानदर्शनचरणानां यस्तु पार्श्वस्थः स सर्वपार्श्वस्थः ॥१॥ देशतः पार्श्वस्थः शय्यातराभिहृतनित्यपिण्डानि नियताग्रपिंडे च निष्कारणे एव भुनक्ति ॥२॥] (नियतपिण्डो यथा–मयैतावद्दातव्यं भवता तु नित्यमेव ग्राह्यमित्येवं नियततया यो गृह्यते 'नीय'मिति नित्यः सदा अग्रपिण्डः अप्रवृत्ते परिवेषणे आदावेव यो गृह्यत इति) पार्श्वस्थस्य भावः पार्श्वस्थता न साऽपार्श्वस्थता तया ७, तथा शोभनः–पार्श्वस्थादिदोषवर्जिततया मूलोत्तरगुणसम्पन्नतया च स चासौ श्रमणश्च–साधुः सुश्रमणस्तद्भावस्तत्ता तया ८, तथा प्रकृष्टं प्रशस्तं प्रगतं वा वचनं–आगमः प्रवचनं–द्वादशाङ्गं तदाधारो वा सङ्घस्तस्य वत्सलता–हितकारिता प्रत्यनीकत्वादिनिरासेनेति प्रवचनवत्सलता तया ९, तथा प्रवचनस्य–द्वादशाङ्गस्योद्भावनं–प्रभावनं प्रावचनिकत्वधर्मकथावादादिलब्धिभिर्वर्णवादजननं प्रवचनोद्भावनं तदेव प्रवचनोद्भावनता तयेति १०॥

एतानि चागमिष्यद्भद्रताकारणानि कुर्वता आशंसाप्रयोगो न विधेय इति तत्स्वरूपमाह—

दसविहे आससप्पओगे पं० तं०—इहलोगासंसप्पओगे १ परलोगासंसप्पओगे २ दुहतोलोगासंसप्पतोगे ३ जीवितासंसप्पतोगे ४ मरणासंसप्पतोगे ५ कामासंसप्पतोगे ६ भोगासंसप्पतोगे ७ लाभासंसप्पतोगे ८ पूयासंसप्पतोगे ९ सक्कारासंसप्पतोगे १० (सू० ७५९)।

'दसे'त्यादि, आशंसनमाशंसा–इच्छा तस्याः प्रयोगो–व्यापारणं करणं आशंसैव वा प्रयोगो–व्यापारः आशंसाप्रयोगः, सूत्रे च

प्राकृतत्वात् आससप्पओगेत्ति भणितं, तत्र इह—अस्मिन् प्रज्ञापकमनुष्यापेक्षया मानुषत्वपर्याये यो वर्त्तते लोकः—प्राणिवर्गः स इहलोकस्तद्व्यतिरिक्तस्तु परलोकः, तत्रेहलोकं प्रति आशंसाप्रयोगो यथा भवेयमहमितस्तपश्चरणाच्चक्रवर्त्यादिरितीहलोकाशंसाप्रयोगः, एवमन्यत्रापि विग्रहः कार्यः १, परलोकाशंसाप्रयोगो यथा भवेयमहमितस्तपश्चरणादिन्द्र इन्द्रसामानिको वा २, द्विधालोकाशंसाप्रयोगो यथा भवेयमहमिन्द्रस्ततश्चक्रवर्त्ती, अथवा इहलोके—इहजन्मनि किञ्चिदाशास्ते एवं परजन्मन्युभयत्र चेति ३, एतत्रयं सामान्यमतोऽन्ये तद्विशेषा एव, अस्ति च सामान्यविशेषयोर्विवक्षया भेद इत्याशंसाप्रयोगाणां दशधात्वं न विरुध्यते, तथा जीवितं प्रत्याशंसा—चिरं मे जीवितं भवत्विति जीविताशंसाप्रयोगः ५, तथा मरणं प्रत्याशंसा—शीघ्रं मे मरणमस्त्विति मरणाशंसाप्रयोगः ५, तथा कामौ—शब्दरूपे तौ मनोज्ञौ मे भूयास्तामिति कामाशंसाप्रयोगः ६, तथा भोगा—गन्धरसस्पर्शास्ते मनोज्ञा मे भूयासुरिति भोगाशंसाप्रयोगः ७, तथा कीर्त्तिश्रुतादिलाभो भूयादिति लाभाशंसाप्रयोगः ८, तथा पूजा—पुष्पादिपूजनं मे स्यादिति पूजाशंसाप्रयोगः ९, सत्कारः—प्रवरवस्त्रादिभिः पूजनं तन्मे स्यादिति सत्काराशंसाप्रयोग इति १० ॥

उक्तलक्षणादप्याशंसाप्रयोगात् केचिद् धर्म्ममाचरन्तीति धर्मं सामान्येन निरूपयन्नाह—

**दसविधे धम्मे पं० तं०—गामधम्मे १ नगरधम्मे २ रट्ठधम्मे ३ पासंडधम्मे ४ कुलधम्मे ५ गणधम्मे ६ संघधम्मे ७ सुयधम्मे ८ चरित्तधम्मे ९ अत्थिकायधम्मे १० (सू० ७६०)।**

'दसे'त्यादि, ग्रामा—जनपदाश्रयास्तेषां तेषु वा धर्म्मः—समाचारो व्यवस्थेति ग्रामधर्म्मः, स च प्रतिग्रामं भिन्न इति, अथवा

ग्रामः-इन्द्रियग्रामो रूढेस्तद्धर्म्मो-विषयाभिलापः १, नागरधर्म्मो-नगराचारः, सोऽपि प्रतिनगरं प्रायो भिन्न एव २, राष्ट्रधर्मो-देशाचारः ३, पाखण्डधर्म्मः-पाखण्डिनामाचारः ४, कुलधर्म्मः-उग्रादिकुलाचारः, अथवा कुलं चान्द्रादिकमार्हतानां गच्छसमूहात्मकं तस्य धर्म्मः-सामाचारी ५, गणधर्म्मो-मल्लादिगणव्यवस्था जैनानां वा कुलसमुदायो गणः-कोटिकादिस्तद्धर्म्मः-तत्सामाचारी ६, संघधर्म्मो-गोष्ठीसमाचारः आर्हतानां वा गणसमुदायरूपश्चतुर्वर्णो वा संघस्तद्धर्म्मः-तत्समाचारः ७, श्रुतमेव-आचारादिकं दुर्गतिप्रपतज्जीवधारणात् धर्म्मः श्रुतधर्म्मः ८, चयरिक्तीकरणाच्चारित्रं तदेव धर्म्मश्चारित्रधर्म्मः ९, अस्तयः-प्रदेशास्तेषां कायो-राशिरस्तिकायः स एव धर्मो-गतिपर्याये जीवपुद्गलयोर्धारणादित्यस्तिकायधर्म्मः १० ॥

अयं च ग्रामधर्मादिर्धर्मः स्थविरैः कृतो भवतीति स्थविरान्निरूपयति—

दस थेरा पं० तं०—गामथेरा १ नगरथेरा २ रट्ठथेरा ३ पसत्थारथेरा ४ कुलथेरा ५ गणथेरा ६ संघथेरा ७ जातिथेरा ८ सुअथेरा ९ परितायथेरा १० । (सू० ७६१) दस पुत्ता पं० तं०—अत्तते १ खेत्तते २ दिन्नते ३ विण्णते ४ उरसे ५ मोहरे ६ सोंडीरे ७ संवुड्ढे ८ उवयातिते ९ धम्मन्तेवासी १० । (सू० ७६२)।

'दसे'त्यादि. स्थापयन्ति-दुर्व्यवस्थितं जनं सन्मार्गे स्थिरीकुर्वन्तीति स्थविराः, तत्र ये ग्रामनगरराष्ट्रेषु व्यवस्थाकारिणो बुद्धिमन्त आदेयाः प्रभविष्णवस्ते तत्स्थविरा इति १-२-३ प्रशासति-शिक्षयन्ति ये ते प्रशास्तारः-धर्म्मोपदेशकास्ते च ते स्थिरीकरणात् स्थविराश्चेति प्रशास्तृस्थविराः ४, ये कुलस्य गणस्य सङ्घस्य च लौकिकस्य लोकोत्तरस्य च व्यवस्थाकारिणस्तद्भंक्तुश्च निग्राहकास्ते

तथोच्यन्ते ५-६-७, जातिस्थविराः षष्टिवर्षप्रमाणजन्मपर्यायाः ८, श्रुतस्थविराः-समवायाद्यङ्गधारिणः ९, पर्यायस्थविरा-विंशतिवर्षप्रमाणप्रव्रज्यापर्यायवन्त इति १० ॥ स्थविराश्च पुत्रवदाश्रितान् परिपालयन्तीति पुत्रनिरूपणायाह—'दस पुत्ते'त्यादि, पुनाति पितरं पाति वा पितृमर्यादामिति पुत्रः-सूनुः, तत्र आत्मनः-पितृशरीराज्जातः आत्मजः, यथा भरतस्यादित्ययशाः १, क्षेत्रं-भार्या तस्या जातः क्षेत्रजो, यथा पण्डोः पाण्डवाः लोकरूढया तद्भार्यायाः कुन्त्या एव तेषां पुत्रत्वात् न तु पण्डोः धर्मादिभिर्जनितत्वादिति २; 'दिन्नए'त्ति दत्तकः पुत्रतया वितीर्णो यथा बाहुबलिनोऽनिलवेगः श्रूयते, स च पुत्रवत्पुत्रः, एवं सर्वत्र ३, 'विण्णए'त्ति विनयितः शिक्षां ग्राहितः, 'उरसे'त्ति उपगतो-जातो रसः-पुत्रस्नेहलक्षणो यस्मिन्पितृस्नेहलक्षणो वा यस्यासावुपरसः उरसि वा-हृदये स्नेहाद्वर्त्तते यः स ओरसः ५, मुखर एव मौखरो-मुखरतया चाटुकरणतो य आत्मानं पुत्रतया अभ्युपगमयति स मौखर इति भावः ६, शोंडीरो यः शौर्यवता शूर एव रणकरणेन वशीकृतः पुत्रतया प्रतिपद्यते यथा कुवलयमालाकथायां महेन्द्रसिंहाभिधानो राजसुतः श्रूयते ७, अथवाऽऽत्मज एव गुणभेदाद्भिद्यते, तत्र 'विन्नए'त्ति विज्ञकः-पण्डितोऽभयकुमारवत्, 'उरसे'त्ति उरसा वर्त्तते इति ओरसो-बलवान् बाहुबलीवत् शोण्डीरः-शूरः वासुदेववत् गर्वितो वा शौण्डीरः 'शौडृ गर्वे' इति वचनात्, 'संवुड्ढे'त्ति संवर्द्धितो भोजनदानादिना अनाथपुत्रकः ८, 'उवजाइय'त्ति उपयाचिते-देवताराधने भवः औपयाचितकः, अथवा अवपातः-सेवा सा प्रयोजनमस्येत्यावपातिकः-सेवक इति हृदयं ९, तथा अन्ते-समीपे वस्तुं शीलमस्येत्यन्तेवासी, धर्मार्थमन्तेवासी धर्म्मान्तेवासी, शिष्य इत्यर्थः १०॥

धर्म्मान्तेवासित्वं च छद्मस्थस्यैव न केवलिनोऽनुत्तरज्ञानादित्वात्, कानि कियन्ति च तस्यानुत्तराणीत्याह—

केवलिस्स णं दस अणुत्तरा पं० तं०—अणुत्तरे णाणे अणुत्तरे दंसणे अणुत्तरे चरित्ते अणुत्तरे तवे अणुत्तरे वीरिते अणुत्तरा खन्ती अणुत्तरा मुत्ती अणुत्तरे अज्जवे अणुत्तरे मद्दवे अणुत्तरे लाघवे १० (सू० ७६३) समतखेत्ते णं दस कुरातो पं० तं०-पञ्च देवकुरातो पंच उत्तरकुरातो, तत्थ णं दस महतिमहालया महादुमा पं० तं०-जम्बू सुदंसणा १ धायतिरुक्खे २ महाधायतिरुक्खे ३ पउमरुक्खे ४ महापउमरुक्खे ५ पंच कूडसामलीओ १०, तत्थ णं दस देवा महिड्ढिया जाव परिवसंति, तं०—अणाढिते जम्बुदीवाधिपती सुदंसणे पियदंसणे पोंडरीते महापोंडरिते पंच गरुला वेणुदेवा १० (सू० ७६४) दसहिं ठाणेहिं ओगाढं दुस्समं जाणेज्जा, तं०—अकाले वरिसइ काले ण वरिसइ असाहू पूइज्जन्ति साहू ण पूइज्जंति गुरुसु जणो मिच्छं पडिवन्नो अमणुण्णा सद्दा जाव फासा १०। दसहिं ठाणेहिं ओगाढं सुसमं जाणेज्जा तं०—अकाले न वरिसति तं चेव विपरीतं जाव मणुण्णा फासा (सू० ७६५) सुसमसुसमाए णं समाए दसविहा रुक्खा उवभोगत्ताए हव्वमागच्छन्ति, तं०—मत्तंगता १ य भिंगा २ तुडितङ्गा ३ दीव ४ जोति ५ चित्तङ्गा ६। चित्तरसा ७ मणियङ्गा ८ गेहागारा ९ अणितणा १० त ॥१॥ (सू० ७६६)।

'दसे'त्यादि, नास्त्युत्तरं-प्रधानतरं येभ्यस्तान्यनुत्तराणि, तत्र ज्ञानावरणक्षयात् ज्ञानमनुत्तरं एवं दर्शनावरणक्षयाद्दर्शनमोहनीयक्षयाच्च दर्शनं, चारित्रमोहनीयक्षयाच्चारित्रं, चारित्रमोहक्षयादनन्तवीर्यत्वाच्च तपः-शुक्लध्यानादिरूपं वीर्यान्तरायक्षयाद् वीर्यं, इह च तपःक्षांतिमुक्त्यार्जवमार्दवलाघवानि चारित्रभेदा एवेति चारित्रमोहनीयक्षयादेव भवन्ति, सामान्यविशेषयोश्च कथञ्चिद्भेदाद् भेदेनो-

पात्तानीति। केवली च मनुष्यक्षेत्र एव भवतीति दश स्थानकानुपातिपदार्थं 'समये'त्यादिकं 'पुक्खरवरदीवड्ढपच्चच्छिमद्धेवी'त्येतदन्तं समयक्षेत्रप्रमाणमाह, कण्ठ्यं चैतत्, नवरं 'मत्तंगे'त्यादि गाथा, मत्तं-मदस्तस्याङ्गं-कारणं मदिरा तद्ददतीति मत्ताङ्गदाः, चः समुच्चये, 'भिंग'त्ति भृतं-भरणं पूरणं तत्राङ्गानि-कारणानि भृताङ्गानि भाजनानि, न हि भरणक्रिया भरणीयं भाजनं विना भवतीति तत्सम्पादकत्वाद् वृक्षाः अपि भृताङ्गाः, प्राकृतत्वाच्च भिंगा उच्यन्ते, त्रुटितानि-तूर्याणि तत्कारणत्वात् त्रुटिताङ्गाः-तूर्यदायिनः, उक्तं च—"मत्तंगेसु य मज्जं १ (संपज्जइ) भायणाणि भिंगेसु २। तुडियङ्गेसु य सङ्गततुडियाइं बहुप्पगाराइं ३ ॥१॥" [मद्यं मद्यांगेषु १ भृंगेषु भाजनानि २ तूर्यांगेषु च सङ्गततूर्याणि बहुप्रकाराणि ॥१॥] "दीवजोइचित्तंगा" इति इहाङ्गशब्दः प्रत्येकमभिसम्बध्यते, ततो दीपः-प्रकाशकं वस्तु तत्कारणत्वाद्दीपाङ्गाः, ज्योतिः-अग्निस्तत्र च सुषमसुषमायामग्नेरभावाज्ज्योतिरिव यद्वस्तु सौम्यप्रकाशमिति भावस्तत्कारणत्वात् ज्योतिरङ्गाः, तथा चित्रस्य-अनेकविधस्य विवक्षाप्राधान्यान्माल्यस्य कारणत्वाच्चित्राङ्गाः, तथा चित्रा-विविधा मनोज्ञा रसा-मधुरादयो येभ्यस्ते चित्ररसा भोजनाङ्गा इति भावः, उक्तं च—"दीवसिहाजोइसनामया य ४-५ एए करिंति उज्जोयं। चित्तंगेसु य मल्लं ६ चित्तरसा भोयणट्ठाए ७ ॥१॥" [दीपशिखाज्योतिःसनाम्नी कुरुत उद्योतमेते चित्रांगेषु माल्यं भोजनार्थं चित्ररसाः ॥१] मणीनां-मणिमयाभरणानां कारणत्वान्मण्यङ्गाः आभरणहेतवः गेहं-गृहं तद्वदाकारो येषां ते गेहाकाराः, 'अणियय'त्ति वस्त्रदायिनः, उक्तं च—"मणियंगेसु य भूसणवराइं ८ भवणाइं भवणरुक्खेसु ९। आइन्नेसु य धणियं वत्थाइं बहुप्पगाराइं १० ॥१॥" इति। [मण्यंगेषु च वरभूषणानि भवनवृक्षेषु वराणि भवनानि आकीर्णेषु च बहुप्रकाराणि वस्त्राणि गाढं ॥१॥]

कालाधिकारादेव कालविशेषभाविकुलकरवक्तव्यतामाह—

१० स्थानाध्ययने उद्देश १
अनुत्तराणि कुर्वाद्याः दुष्षमादिकल्पवृक्षाः कुलकराः वक्षस्काराद्याः इंद्राद्याः सू० ७६३-७६९.

जम्बुद्दीवे २ भरहे वासे तीताते उस्सप्पिणीते दस कुलगरा हुत्था, तं०—"सयज्जले सयाऊ य अणंतसेणे त अमितसेणे त। तक्कसेणे भीमसेणे महाभीमसेणे त सत्तमे ॥१॥ दढरहे दसरहे सयरहे॥ जम्बुद्दीवे २ भारहे वासे आगमीसाते उस्सप्पिणीए दस कुलगरा भविस्संति, तं०—सीमंकरे सीमंधरे खेमंकरे खेमंधरे विमलवाहणे संमुती पडिसुते दढधणू दसधणू सतधणू। (सू० ७६७) जम्बुद्दीवे २ मंदरस्स पव्वयस्स पुरच्छिमेणं सीताते महानतीते उभतो कूले दस वक्खारपव्वता पं० तं०—मालवंते चित्तकूडे विचित्तकूडे बंभकूडे जाव सोमणसे। जम्बुमंदरपच्चत्थिमे णं सीओताते महानतीते उभतो कूले दस वक्खारपव्वता पं० तं०—विज्जुप्पभे जाव गंधमायणे, एवं धायइसंडपुरच्छिमद्धेवि वक्खारा भाणिअव्वा जाव पुक्खरवरदीवड्ढपच्चत्थिमद्धे (सू० ७६८) दस कप्पा इंदाहिट्ठिया पं० तं०—सोहम्मे जावसहस्सारे पाणते अच्चुए, एतेसु णं दससु कप्पेसु दस इंदा पं०तं०—सक्के ईसाणे जाव अच्चुते, एतेसु णं दसण्हं इंदाणं दस परिजाणितविमाणा पं० तं०—पालते पुप्फए जाव विमलवरे सव्वतोभद्दे (सू० ७६९)।

'जम्बुद्दीवे'त्यादि सूत्रद्वयं कण्ठ्यं नवरं 'तीयाए'त्ति अतीतायां 'उस्सप्पिणीए'त्ति उत्सर्पिण्यां कुलकरणशीलाः कुलकराः—विशिष्टबुद्धयो लोकव्यवस्थाकारिणः पुरुषविशेषाः, 'आगमिस्साए'त्ति आगमिष्यन्त्यां, वर्त्तमाना तु अवसर्पिणी सा च नोक्ता, तत्र हि सप्त कुलकराः, क्वचित्पञ्चदशापि दृश्यन्त इति। पुष्करार्द्धक्षेत्रस्वरूपमभिहितं प्रागतः क्षेत्राधिकारादेव कल्पानाश्रित्य दशकमाह—'दसे'त्यादि, सौधर्म्मादीनामिन्द्राधिष्ठितत्वमेतेष्विन्द्राणां निवासादानतारणयोस्तु तदनधिष्ठितत्वं तन्निवासाभावात्, स्वामितया तु

तावप्यधिष्ठितावेवेति मन्तव्यं, यावत्करणात् 'ईसाणे २ सणक्कुमारे ३ माहिंदे ४ बंभलोए ५ लंतगे ६ सुक्के ७'त्ति दृश्यमिति, यत एवैतेषु इन्द्रा अधिष्ठिता अत एवैते दशेन्द्रा भवन्तीति दर्शयितुमाह—'एएसु' इत्यादि, शक्रः–सौधर्मेन्द्रः, शेषा देवलोकसमाननामानः, शेषं सुगममिति ॥ इन्द्राधिकारादेव तद्विमानान्याह—'एते'इत्यादि, परियानं–देशान्तरगमनं तत् प्रयोजनं येषां तानि परियानिकानि गमनप्रयोजनानीत्यर्थः यानं–शिबिकादि तदाकाराणि विमानानि–देवाश्रया यानविमानानि न तु शाश्वतानि, नगराकाराणीत्यर्थः, पुस्तकान्तरे यानशब्दो न दृश्यते, 'पालए' इत्यादीनि शक्रादीनां क्रमेणावगन्तव्यानीति, यावत्करणात् 'सोमणस्से ३ सिरिवच्छे ४ नंदियावत्ते ५ कामकमे ६ पीइगमे ७ मणोरमे ८' इति द्रष्टव्यमिति, आभियोगिकाश्चैते देवा विमानीभवन्तीति।

एवंविधविमानयायिनश्चेन्द्राः प्रतिमादिकात् तपसो भवन्तीति दशकानुपातिनीं प्रतिमां स्वरूपत आह—

**दस दसमिता णं भिक्खुपडिमा णं एगेण रातिंदियसतेणं अद्धछट्ठेहि य भिक्खासतेहिं अहासुत्ता जाव आराधितावि भवति (सू० ७७०) दसविधा संसारसमावन्नगा जीवा पं० तं०—पढमसमयएगिंदिता अपढमसमयएगिंदिता एवं जाव अपढमसमयपंचिंदिता १ दसविधा सव्वजीवा पं० तं०—पुढविकाइया जाव वणस्सइकातिता बेंदिया जाव पंचेंदिता अणिंदिता २ अथवा दसविधा सव्वजीवा पं० त०—पढमसमयनेरतिया अपढमसमयनेरतिता जाव अपढमसमयदेवा पढमसमयसिद्धा अपढमसमयसिद्धा ३ (सू० ७७१)।**

'दसे'त्यादि, दश दशमानि दिनानि यस्यां सा दशदशमिका दशदशकनिष्पन्नेत्यर्थः, भिक्षूणां प्रतिमाः–प्रतिज्ञा भिक्षुप्रतिमाः,

'एकेने'त्यादि, दश दशकानि दिनानां शतं भवतीति, प्रथमे दशके दश भिक्षा द्वितीये विंशतिरेवं दशमे शतं सर्वमीलने पञ्च शतानि पञ्चाशदधिकानि भवन्तीति, 'अहासुत्त'मित्यादि, अहासुत्तं-सूत्रानतिक्रमेण, यावत्करणात् 'अहाअत्थं' अर्थस्य-निर्युक्त्यादेरनतिक्रमेण 'अहातच्चं' शब्दार्थानतिक्रमेण 'अहामग्गं' क्षायोपशमिकभावानतिक्रमेण 'अहाकप्पं' तदाचारानतिक्रमेण सम्यक्कायेन न मनोरथमात्रेण 'फासिया' विशुद्धपरिणामप्रतिपत्त्या 'पालिया' सीमां यावत्तत्परिणामाहान्या 'शोधिता' निरतिचारतया शोभिता वा तत्समाप्तानुचितानुष्ठानकरणतः, 'तीरिता' तीरं नीता प्रतिज्ञातकालोपर्यप्यनुष्ठानात्, कीर्त्तिता नामतः इदं चेदं च कर्त्तव्यमस्यां तत्कृतं मयेत्येवमिति, आराधिता सर्वपदमीलनात् 'भवति' जायत इति ॥ प्रतिमाभ्यासः संसारक्षयार्थं संसारिभिः क्रियत इति संसारिणो जीवान् जीवाधिकारात् सर्वजीवांश्च 'दसे'त्यादिना सूत्रत्रयेणाह, तच्च सुगमं, नवरं प्रथमः समयो येषामेकेन्द्रियत्वस्य ते प्रथमसमयास्ते च ते एकेन्द्रियाश्चेति विग्रहः, विपरीतास्त्वितरे, एवं द्वित्रिचतुःपञ्चेन्द्रिया वाच्याः, आह च-'एवं जावे'त्यादि, अणिंदिय'त्ति अनिन्द्रियाः सिद्धाः अपर्याप्ताः उपयोगतः केवलिनश्चेति ॥

संसारिपर्यायविशेषप्रतिपादनायैवाह—

वाससताउस्स णं पुरिसस्स दस दसाओ पं० तं०—बाला १ किड्डा २ य मंदा ३ य, बला ४ पन्ना ५ य हायणी ६ । पवंचा ७ पब्भारा ८ य, मुंमुही ९ सावणी १० तधा ॥ (सू० ७७२) ।

'वासे'त्यादि, वर्षशतमायुर्यत्र काले मनुष्याणां स वर्षशतायुष्कः कालस्तत्र यः पुरुषः सोऽप्युपचारात् वर्षशतायुष्कः, मुख्यवृत्त्या

वर्षशतायुपि पुरुषे गृह्यमाणे पूर्वकोटयायुष्कपुरुषकाले वर्षशतायुषः पुरुषस्य कस्यचित्कुमारत्वेऽपि बालादिदशादशकसमाप्तिः स्यात् न चैवं तत उपचार एव युक्त इति, 'दशे'ति संख्या, 'दसाउ'त्ति वर्षदशकप्रमाणाः कालकृता अवस्थाः इह च वर्षशतायुर्ग्रहणं विशिष्टतरदशस्थानकानुरोधात् विशिष्टतरत्वं च दशस्थानकस्यैवं वर्षदशकप्रमाणा दशा दशेति, अन्यथा पूर्वकोटयायुषोऽपि बालाद्या दशावस्था भवन्त्येव, केवलं दशवर्षप्रमाणा न भवन्ति, बहुवर्षा वा अल्पवर्षा वा स्युरिति भावः, तत्र बालस्येयमवस्था धर्मधर्म्मिणोरभेदाद्बाला, स्वरूप चास्याः—"जायमेत्तस्स जंतुस्स, जा सा पढमिया दसा । न तत्थ सुहदुक्खाइं, बहुं जाणंति बालया ॥१॥" इति. [जातमात्रस्य जन्तोर्या सा प्रथमा दशा तत्र सुखदुःखानि न बहुजानन्ति इति बाला ॥१॥] तथा क्रीडाप्रधाना दशा क्रीडा, उक्तं च—"बिइयं च दसं पत्तो, नाणाकीडाहिं कीडइ । न तत्थ कामभोगेहिं, तिव्वा उप्पज्जए मई ॥१॥" [द्वितीयां क्रीडादशां प्राप्तो नानाक्रीडाभिः क्रीडते न तत्र कामभोगेषु तीव्रा मतिरुत्पद्यते ॥१॥] तथा मन्दो—विशिष्टबलबुद्धिकार्योपदर्शनासमर्थो भोगानुभूतावेव च समर्थो यस्यामवस्थायां सा मन्दा, उक्तं च—"तइयं च दसं पत्तो, आणुपुव्वीएँ जो नरो । समत्थो भुंजिउं भोए, जइ से अत्थि घरे धुवा ॥१॥" इति, [तृतीयां मंददशां प्राप्तः आनुपूर्व्या यो नरः यदि तस्य निश्चिता भोगाः गृहे सन्ति तान् भोक्तुं समर्थः ॥१॥] भोगोपार्जने तु मन्द इति भावना, तथा यस्यामवस्थायां पुरुषस्य बलं भवति सा बलयोगाद् बला, उक्तं च—"चउत्थी य बला नाम, जं नरो दसमस्सिओ । समत्थो बलं दरिसेउं, जइ होइ निरुवद्दवो ॥१॥" इति, [चतुर्थी च बला नाम यां दशामाश्रितो नरः बलं दर्शयितुं समर्थः यदि भवति निरुपद्रवः ॥१॥] तथा प्रज्ञा—बुद्धिरीप्सितार्थसम्पादनविषया कुटुम्बकाभिवृद्धिविषया वा तद्योगाद्दशापि प्रज्ञा प्रकर्षेण जानातीति वा प्रज्ञा दशा तस्या एव कर्तृत्वविवक्षयेति, उक्तं च—"पंचमिं च दसं पत्तो, आनुपुव्वीएँ जो नरो । इच्छियत्थं विचिंतेइ,

कुडुंबं चाभिकंखइ ॥१॥" इति [आनुपूर्व्या यो नरः पंचमीं दशां प्राप्तः स इप्सितार्थं विचिन्तयति कुडुंबं चाभिकांक्षते ॥१॥] तथा हापयति पुरुषमिन्द्रियेष्विति–इन्द्रियाणि मनाक् स्वार्थग्रहणापटूनि करोतीति हापयति प्राकृतत्वेन च हायणित्ति, आह च—"छट्ठी उ हायणी नाम, जं नरो दसमस्सिओ। विरज्जई य कामेसु, इंदिएसु य हायइ ॥१॥" इति [षष्ठी हायनी नाम्नी यां नरो दशामाश्रितः कामेषु विरज्यते इंद्रियाणि च हीयंते ॥१॥] तथा प्रपञ्चते–व्यक्तीकरोति प्रपञ्चयति वा–विस्तारयति खेलकासादि या सा प्रपञ्चा प्रपञ्चयति वा –स्रंसयति आरोग्यादिति प्रपञ्चा, आह च—"सत्तमिं च दसं पत्तो, आणुपुव्वीए जो नरो। निच्छूहइ चिक्कणं खेलं, खासई य अभिक्खणं ॥१॥" इति [सप्तमीं प्रपंचां दशां प्राप्त आनुपूर्व्या यो नरः चिक्कणं श्लेष्माणं निष्काशयति अभीक्ष्णं कासते च ॥१॥] तथा प्राग्भारमीषदवनतमुच्यते तदेवंभूतं गात्रं यस्यां भवति सा प्राग्भारा, यतः—"संकुचियवलीचम्मो, संपत्तो अट्ठमिं दसं। नारीणमणभिप्पेओ, जराए परिणामिओ ॥१॥" इति, [संकुचितवलिचर्मा स्यात् सम्प्राप्तोऽष्टमीं दशां नारीणामनभिप्रेतः जरया परिणामितः ॥१॥] तथा मोचनं मुक् जराराक्षसीसमाक्रान्तशरीरगृहस्य जीवस्य मुचं प्रति मुखं–आभिमुख्यं यस्यां सा मुङ्मुखीति, तत्स्वरूपं चैदम्—"नवमी मुंमुही नाम, जं नरो दसमस्सिओ। जराघरे विणस्संते, जीवो वसइ अकामओ ॥१॥" इति [नवमी उन्मुखीनाम्नी यां दशां नर आश्रितः जरया गृहे विनश्यति जीवितेऽपि अकामः वसति ॥१॥ ('जीवे'त्ति जीविते, 'जीवो'त्ति वा नरलक्षणो जीव इत्यर्थः) तथा शाययति–स्वापयति निद्रावन्तं करोति या शेते वा यस्यां सा शायनी शयनी वा, तथेति समुच्चये, तत्स्वरूपमिदम्—"हीणभिन्नस्सरो दीणो, विवरीओ विचित्तओ। दुब्बलो दुक्खिओ वसई, संपत्तो दसमिं दसं ॥१॥"। [हीनभिन्नस्वरो दीनो विपरीतो विचित्तः दुर्बलो दुःखितो वसति दशमीं दशां संप्राप्तः ॥१॥]

अनन्तरं पुरुषदशा उक्ताः, अथ पुरुषसमानधर्मकाणां वनस्पतीनां ताः प्रकारान्तरत आह—

दसविधा तणवणस्सतिकातिता पं० तं०—मूले कंदे जाव पुप्फे फले बीये (सू० ७७३) सव्वतोवि णं विज्जाहरसेढीओ दसदसजोयणाइं विक्खंभेणं पण्णत्ता, सव्वतोवि णं अभिओगसेढीओ दस दस जोयणाइं विक्खंभेणं पं० (सू० ७७४) गेविज्जगविमाणाणं दस जोयणसयाइं उद्धं उच्चत्तेणं पण्णत्ता (सू० ७७५) दसहिं ठाणेहिं सह तेतसा भासं कुज्जा, तं०—केति तहारूवं समणं वा माहणं वा अच्चासातेज्जा, से य अच्चासातिते समाणे परिकुविते, तस्स तेतं निसिरेज्जा, से तं परितावेति, सेत्तं परितावेत्ता तामेव सह तेतसा भासं कुज्जा १, केति तहारूवं समणं माहणं वा अच्चासातेज्जा से य अच्चासातिते समाणे देवे परिकुविए तस्स तेयं निसिरेज्जा सेत्तं परितावेति सेत्तं २ तमेव सह तेतसा भासं कुज्जा २, केति तहारूवं समणं वा माहणं वा अच्चासातेज्जा, से य अच्चासातिते समाणे परिकुविए देवे त परिकुविते, दुहतो पडिण्णा तस्स तेयं निसिरेज्जा ते तं परितावेंति ते तं परितावेत्ता तमेव सह तेतसा भासं कुज्जा ३, केति तहारूवं समणं वा माहणं वा अच्चासादेज्जा से य अच्चासातिते परिकुविए तस्स तेयं निसिरेज्जा तत्थ फोडा संमुच्छंति ते फोडा भिज्जंति ते फोडा भिन्ना समाणा तामेव सह तेतसा भासं कुज्जा ४ केति तहारूवं समणं वा माहणं वा अच्चासातेज्जा से य अच्चासादिते देवे परिकुविए तस्स तेयं निसिरेज्जा, तत्थ फोडा संमुच्छंति, ते फोडा भिज्जंति, ते फोडा भिन्ना समाणा तमेव सह तेतसा भासं कुज्जा ५, केति तहारूवं समणं वा माहणं वा अच्चासाएज्जा से त अच्चासातिते परिकुविए देवेवि य परि-

कुविए ते कुद्धो पडिण्णा ते तस्स तेतं निसिरेज्जा, तत्थ फोडा संमुच्छंति सेसं तहेव जाव भासं कुज्जा ६, केति तहारूवं समणं वा माहणं वा अच्चासातेज्जा से य अच्चासातिते परिकुविए तस्स तेतं निसिरेज्जा, तत्थ फोडा संमुच्छंति ते फोडा भिज्जंति तत्थ पुला संमुच्छंति ते पुला भिज्जंति ते पुला भिन्ना समाणा तामेव सह यसा भासं कुज्जा ७ एते तिन्नि आलावगा भाणितव्वा ९, केति तहारूवं समणं वा माहणं वा अच्चासातेमाणे तेतं निसिरेज्जा से त तत्थ णो कम्मइ णो पकम्मति, अंचियं २ करेति करेत्ता आताहिणपयाहिणं करेति २त्ता उड्ढं वेहासं उप्पतति २ से णं ततो पडिहते पडिणियत्तति २त्ता तमेव सरीरगमणुदहमाणे २ सह तेतसा भासं कुज्जा जहा वा गोसालस्स मंखलिपुत्तस्स तवेतेते १० (सू० ७७६)।

'दसे'त्यादि, तृणवद्वनस्पतयः तृणवनस्पतयः, तृणसाधर्म्यं च बादरत्वेन तेन सूक्ष्माणां न दशविधत्वमिति, मूलं-जटा कन्दः स्कन्धाधोवर्त्ती यावत्करणात् 'खन्धे'त्यादीनि पञ्च द्रष्टव्यानि, तत्र स्कन्धः-स्थुडमिति यत्प्रतीतं त्वक्-वल्कः शाला-शाखा प्रवालं-अंकुरः पत्रं-पर्णं पुष्पं-कुसुमं फलं-प्रतीतं बीजं-मिंजेति। दशस्थानकाधिकार एव इदमपरमाह-'सव्वे'त्यादि सूत्रद्वयं, सर्वाः-सर्वदीर्घवैताढ्यसम्भवाः विद्याधरश्रेणयः-विद्याधरनगरश्रेणयः, दीर्घवैताढ्या हि पञ्चविंशतियोजनान्युच्चैस्त्वेन पञ्चाशच्च मूलविष्कम्भेण, तत्र दश योजनानि धरणीतलादतिक्रम्य दश योजनविष्कम्भा दक्षिणत उत्तरतश्च श्रेणयो भवन्ति, तत्र दक्षिणतः पञ्चाशन्नगराणि, उत्तरतस्तु षष्टिरिति भरतेषु, ऐरवतेषु तदेव व्यत्ययेन, विजयेषु तु पञ्चपञ्चाशत्पञ्चपञ्चाशदिति। तथा विद्याधरश्रेणीनामुपरि दश योजनान्यतिक्रम्य दशयोजनविष्कम्भा उभयत आभियोगिकदेवश्रेणयो भवन्ति, तत्राभियोगः-आज्ञा तया चरन्तीत्याभियोगिका

निदानयेयुरिति, सप्तमाष्टमनवमेष्वपि तथैव, नवरं तत्र स्फोटाः सम्मूर्च्छन्ति भिद्यन्ते च ततस्तत्र पुलाः-पुलाकिका लघुतरस्फोटिकाः सम्मूर्च्छन्ति ततो भिद्यन्ते, ते च पुलाः भिन्नाः सन्तस्तमेवोपसर्गकारिणं सहैव तेजसा भस्म कुर्युरित्येतानि नव स्थानानि साधुदेवकोपाश्रयाणि, दशमं तु वीतरागाश्रयं, तत्र 'अच्चासाएमाणे'त्ति उपसर्गं कुर्वन् गोशालकवत्तेजो निसृजेत्, 'से य तत्थ'त्ति तच्च तेजस्तत्र-श्रमणे निसृष्टं महावीर इव नो क्रमते ईषत् नो प्रक्रमते प्रकर्षेण न प्रभवतीत्यर्थः केवलं 'अंचिअंचियं'ति उत्पतनिपतां पार्श्वतः करोति, ततश्चादक्षिणतः-पार्श्वात् प्रदक्षिणा-पार्श्वभ्रमणमादक्षिणप्रदक्षिणा तां करोति, ततश्चोद्‌र्ध्वम्-उपरि दिशि 'वेहासं'ति विहाय आकाशमित्यर्थः उत्पतति, उत्पत्य च 'से'ऽ तत्तेजः ततः श्रमणशरीरसन्निधेस्तन्माहात्म्यप्रतिहतं सत् प्रतिनिवर्त्तते प्रतिनिवृत्य च तदेव शरीरकमुपसर्गकारिसम्बन्धि यतस्तन्निर्गतं तमनुदहन्-निसर्गानन्तरमुपतापयन् किंभूतं शरीरकं ?-सह तेजसा वर्त्तमानं-तेजोलब्धिमत् भस्म कुर्यादिति, अयमकोपस्यापि वीतरागस्य प्रभावो यत्परतेजो न प्रभवति, अत्रार्थे दृष्टान्तमाह—'जहा वा' यथैव गोशालकस्य-भगवच्छिष्याभासस्य मङ्खल्यभिधानमङ्खपुत्रस्य, मङ्खश्च-चित्रफलकप्रधानो भिक्षुकविशेषः, 'तवेतेए'त्ति तपोजनितत्यागतः किं तत् ?-तेजस्तेजोलेश्येति, तत्र किलैकदा भगवान् महावीरः श्रावस्त्यां विहरति स्म गोशालकश्च, तत्र च गौतमो गोचरगतो बहुजनशब्दमश्रौषीत् यथा इह श्रावस्त्यां द्वौ जिनौ सर्वज्ञौ-महावीरो गोशालकश्चेति श्रुत्वा भगवदन्तिकमागत्य गोशालकोत्थानं पृष्टवान्, भगवांश्चोवाच-यथा अयं शरवणग्रामे गोबहुलब्राह्मणगोशालायां जातो मङ्खलिनाम्नो मङ्खस्य सुभद्राभिधानभार्यायाश्च पुत्रः षड् वर्षाणि यावच्छद्मस्थेन मया सार्द्धं विहृतोऽसमत्त एव बहुश्रुतीभूत इति नायं जिनो न च सर्वज्ञः, इदं च भगवद्वचनमनुश्रुत्य बहुजनो नगर्याः त्रिकचतुष्कादिषु परस्परस्य कथयामास-गोशालको मङ्खलिपुत्रो न जिनो न सर्वज्ञः, इदं च लोकवच-

नमनुश्रुत्य गोशालकः कुपितः आनन्दाभिधानं च भगवदन्तेवासिनं गोचरगतमपश्यत्, तमवादीच्च—भो आनन्द! एहि तावदेकमौपम्यं निशामय, यथा केचन वणिजोऽर्थार्थिनो विविधपण्यभृतशकटा देशान्तरं गच्छन्तो महाटवीं प्रविष्टाः पिपासितास्तत्र जलं गवेषयन्तश्चत्वारि वल्मीकशिखराणि शाड्वलवृक्षस्यान्तरद्राक्षुः, क्षिप्रं चैकं विचिक्षिपुस्ततोऽतिविपुलममलजलमवापुः, तत्पयो यावत्पिपासमापीतवन्तः पयःपात्राणि च पयसा परिपूरयामासुः, अपायसम्भाविना वृद्धेन निवार्यमाणा अप्यतिलोभाद् द्वितीयतृतीयशिखरे बिभिदुः, तयोः क्रमेण सुवर्णं च रत्नानि च समासादयामासुः, पुनस्तथैव चतुर्थं भिन्दानाः घोरविषमतिकायमञ्जनपुञ्जतेजसमतिचञ्चलजिह्वायुगलमनाकलितकोपप्रसरमहीश्वरं सङ्घट्टितवन्तः, ततोऽसौ कोपाद्वल्मीकशिखरमारुह्य मार्त्तण्डमण्डलमवलोक्य निर्निमेषया दृष्ट्या समन्तादवलोकयंस्तान् भस्मसाच्चकार, तन्निवारकवृद्धवाणिजकं तु न्यायदर्शीत्यनुकम्पया वनदेवता स्वस्थानं सञ्जहारेति, एवं त्वदीयधर्माचार्यमात्मसम्पदाऽपरितुष्टमस्मदवर्णवादविधायिनमहं स्वकीयेन तपस्तेजसाऽद्यैव भस्मसात्करिष्यामीत्येष प्रचलितोऽहं, त्वं तु तस्येममर्थमावेदय, भवन्तं च वृद्धवाणिजमिव न्यायवादित्वाद्रक्षिष्यामीति श्रुत्वाऽसावानन्दमुनिर्भीतो भगवदन्तिकमुपागत्य तत्सर्वमावेदयत्, भगवताप्यसावभिहितः—एष आगच्छति गोशालकस्ततः साधवः शीघ्रमितोऽपसरन्तु प्रेरणां च तस्मै कश्चिदपि मा दादिति गौतमादीनां निवेदयेति, तथैव कृते गोशालक आगत्य भगवन्तमभि समभिदधौ—सुष्ठु आयुष्मन् काश्यप! साधु आयुष्मन् काश्यप! मामेवं वदसि—गोशालको मङ्खलिपुत्रोऽयमित्यादि, योऽसौ गोशालकस्तवान्तेवासी स देवभूयं गतः अहं त्वन्य एव तच्छरीरकं परीषहसहनसमर्थमास्थाय वर्त्ते इत्यादिकं कल्पितं वस्तूद्ग्राहयन् तत्प्रेरणाप्रवृत्तयोर्द्वयोः साध्वोः सर्वानुभूतिसुनक्षत्रनाम्नोस्तेजसा तेन दग्धयोर्भगवताभिहितो—हे गोशालक! कश्चिच्चौरो ग्रामेयकैः प्रारभ्यमाणस्तथाविधं दुर्गमलभमानोऽङ्गुल्या तृणेन शूकेन वाऽऽत्मानमावृण्वन्नावृतः किं

भवति ?, अनावृत एवासौ, त्वमप्येवमन्यथाजल्पनेनात्मानमाच्छादयन् किमाच्छादितो भवसि ?, स एव त्वं गोशालको यो मया बहुश्रुतीकृतस्तदेवं मा वोचः, एवं भगवतः समभावतया यथावत् ब्रुवाणस्य तपस्तेजोऽसौ कोपान्निससर्ज, उच्चावचाक्रोशैश्चाक्रोशयामास, तत्तेजश्च भगवत्यप्रभवत् तं प्रदक्षिणीकृत्य गोशालकशरीरमेव परितापयदनुप्रविवेश, तेन च दग्धशरीरोऽसौ दर्शितानेकविधविक्रियः सप्तमरात्रौ कालमकार्षीदिति। महावीरस्य भगवतो नमन्निखिलनरनाकिनिकायनायकस्यापि जघन्यतोऽपि कोटीसंख्यभक्तिभरनिर्भरामरसद्मादपदलनुष्टपादपद्मस्यापि विविधऋद्धिमद्वरविनेयसहस्रपरिवृतस्यापि स्वप्रभावप्रशमितयोजनशतमध्यगतवरमारिविड्वरदुर्भिक्षाद्युपद्रवस्याप्ययमनुत्तरपुण्यसम्भारस्यापि यद्गोशालकेन मनुष्यमात्रेणापि चिरपरिचितेनापि शिष्यकल्पेनाप्युपसर्गः क्रियते तदाश्चर्यमित्याश्चर्याधिकारादिदमाह—

दस अच्छेरगा पं० तं—उवसग्ग १ गब्भहरणं २ इत्थीतित्थं ३ अभाविया परिसा ४। कण्हस्स अवरकंका ५ उत्तरणं चंदसूराणं ६ ॥१॥ हरिवंसकुलुप्पत्ती ७ चमरुप्पातो त ८ अट्ठसयसिद्धा ९। अस्संजतेसु पूआ १०, दसवि अणंतेण कालेण ॥२॥ (सू० ७७७)।

'दसे'त्यादि आ—विस्मयतश्चर्यन्ते—अवगम्यन्त इत्याश्चर्याणि—अद्भुतानि, इह च सकारः कारस्करादित्वादिति, 'उवसग्गे'त्यादि गाथाद्वयं, उपसृज्यते क्षिप्यते च्याव्यते प्राणी धर्मादेभिरित्युपसर्गा—देवादिकृतोपद्रवाः, ते च भगवतो महावीरस्य छद्मस्थकाले केवलिकाले च नरानरतिर्यक्कृता अभूवन्, इदं च किल न कदाचिद्भूतपूर्वं, तीर्थंकरा हि अनुत्तरपुण्यसम्भारतया नोपसर्गभाजनमपि

तु सकलनरामरतिरश्चां सत्कारादिस्थानमेवेत्यनन्तकालभाव्ययमर्थो लोकेऽद्भुतभूत इति १, तथा गर्भस्य—उदरसत्त्वस्य हरणं—उदरान्तरसङ्क्रामणं गर्भहरणं एतदपि तीर्थकरापेक्षयाऽभूतपूर्वं सद्भगवतो महावीरस्य जातं, पुरन्दरादिष्टेन हरिणेगमेषिदेवेन देवानन्दाभिधानब्राह्मण्युदरात्त्रिशलाभिधानाया राजपत्न्या उदरे संक्रमणाद् , एतदप्यनन्तकालभावित्वादाश्चर्यमेवेति २, तथा स्त्री—योषित्तस्यास्तीर्थकरत्वेनोत्पन्नायाः तीर्थ—द्वादशाङ्गं सङ्घो वा स्त्रीतीर्थं, तीर्थं हि पुरुषसिंहाः पुरुषवरगन्धहस्तिनस्त्रिभुवनेऽप्यव्याहतप्रभुभावाः प्रवर्त्तयन्ति, इह त्ववसर्प्पिण्यां मिथिलानगरीपतेः कुम्भकराजस्य दुहिता मल्ल्यभिधाना एकोनविंशतितमतीर्थकरस्थानोत्पन्ना तीर्थं प्रवर्त्तितवतीत्यनन्तकालजातत्वादस्य भावस्याश्चर्यतेति ३, तथा अभव्या—अयोग्या चारित्रधर्मस्य पर्षत्—तीर्थकरसमवसरणश्रोतृलोकः, श्रूयते हि भगवतो वर्द्धमानस्य जृम्भिकग्रामनगराद्बहिरुत्पन्नकेवलस्य तदनन्तरं मिलितचतुर्विधदेवनिकायविरचितसमवसरणस्य भक्तिकुतूहलाकृष्टसमायातानेकनरामरविशिष्टतिरश्चां स्वस्वभाषानुसारिणाऽतिमनोहारिणा महाध्वनिना कल्पपरिपालनायैव धर्मकथा बभूव, यतो न केनापि तत्र विरतिः प्रतिपन्ना, न चैतत्तीर्थकृतः कस्यापि भूतपूर्वमितीदमाश्चर्यमिति ४, तथा कृष्णस्य—नवमवासुदेवस्य अवरकङ्का राजधानी गतिविषया जातेत्यप्यजातपूर्वत्वादाश्चर्यं, श्रूयते हि पाण्डवभार्या द्रौपदी धातकीखण्डभरतक्षेत्रापरकङ्काराजधानीनिवासिपद्मराजेन देवसामर्थ्येनापहृता, द्वारकावतीवास्तव्यश्च कृष्णो वासुदेवो नारदादुपलब्धतद्व्यतिकरः समाराधितसुस्थिताभिधानलवणसमुद्राधिपतिर्देवः पञ्चभिः पाण्डवैः सह द्वियोजनलक्षप्रमाणं जलधिमतिक्रम्य पद्मराजं रणविमर्देन विजित्य द्रौपदीमानीतवान् , तत्र च कपिलवासुदेवो मुनिसुव्रतजिनात् कृष्णवासुदेवागमनवार्त्तामुपलभ्य सबहुमानं कृष्णदर्शनार्थमागतः, कृष्णश्च तदा समुद्रमुल्लङ्घयति स्म, ततस्तेन पाञ्चजन्यः पूरितः कृष्णेनापि तथैव ततः परस्परशङ्खशब्दश्रवणमजायतेति ५, तथा भग-

यतो महावीरस्य वन्दनार्थमवतरणमाकाशात् समवसरणभूम्यां चन्द्रसूर्ययोः शाश्वतविमानोपेतयोर्बभूवेदमप्याश्चर्यमेवेति ६ तथा हरेः—पुरुषविशेषस्य वंशः—पुत्रपौत्रादिपरम्परा हरिवंशस्तल्लक्षणं यत्कुलं तस्योत्पत्तिः हरिवंशकुलोत्पत्तिः कुलं ह्यनेकधा अतो हरिवंशेन विशिष्यते, एतदप्याश्चर्यमेवेति, श्रूयते हि भरतक्षेत्रापेक्षया यत्तृतीयं हरिवर्षाख्यं मिथुनकक्षेत्रं ततः केनापि पूर्वविरोधिना व्यन्तरसुरेण मिथुनकमेकं भरतक्षेत्रे क्षिप्तं, तच्च पुण्यानुभावाद्राज्यं प्राप्तं, ततो हरिवर्षजातहरिनाम्नो पुरुषाद्यो वंशः स तथेति ७, तथा चमरस्य—असुरकुमारराजस्योत्पतनं—ऊर्ध्वगमनं चमरोत्पातः, सोऽप्याकस्मिकत्वादाश्चर्यकमिति, श्रूयते हि चमरचञ्चाराजधानीनिवासी चमरेन्द्रोऽभिनवोत्पन्नः सन्नूर्ध्वमवधिनाऽऽलोकयामास, ततः स्वशीर्षोपरि सौधर्म्मव्यवस्थितं शक्रं ददर्श, ततो मत्सराध्मातः शक्रतिरस्काराहितमतिरिहागत्य भगवन्तं महावीरं छद्मस्थावस्थमेकरात्रिकीं प्रतिमां प्रतिपन्नं सुंसुमारनगरोद्यानवर्त्तिनं सबहुमानं प्रणम्य भगवंस्त्वत्पादपङ्कजवनं मे शरणमपराजितस्येति विकल्प्य विरचितघोररूपो लक्षयोजनमानशरीरः परिघरत्नं प्रहरणं परितो भ्रमयन् गर्जन्नास्फोटयन् देवांस्त्रासयन्नुत्पपात, सौधर्मावतंसकविमानवेदिकायां पादन्यासं कृत्वा शक्रमाक्रोशयामास, शक्रोऽपि कोपाज्जाज्वल्यमानस्फारस्फुरत्स्फुलिङ्गशतसमाकुलं कुलिशं तं प्रति मुमोच, स च भयात् प्रतिनिवृत्त्य भगवत्पादौ शरणं प्रपेदे, शक्रोऽप्यवधिज्ञानावगततत्स्वरूपस्तीर्थकराशातनाभयात् शीघ्रमागत्य वज्रमुपसंजहार, बभाण च मुक्तोऽस्यहो भगवतः प्रसादात् नास्ति मत्तस्ते भयमिति ८, तथाऽष्टाभिरधिकं शतमष्टशतं अष्टशतं च ते सिद्धाश्च—निर्वृताः अष्टशतसिद्धाः, इदमप्यनन्तकालजातमित्याश्चर्यमिति ९, तथा असंयताः असंयमवन्त आरम्भपरिग्रहप्रसक्ता अब्रह्मचारिणः तेषु पूजा—सत्कारः, सर्वदा हि किल संयता एव पूजार्हाः, अस्यां त्ववसर्पिण्यां विपरीतं जातमित्याश्चर्यं, अत एवाह—दशाप्येतानि अनन्तेन कालेन—अनन्तकालात् संवृत्तानि अस्यामवसर्पिण्यामिति ।

अनन्तरसूत्रे चमरोत्पात उक्तः स च रत्नप्रभायाः सञ्जात इति रत्नप्रभावक्तव्यतामाह—

इमीसे णं रयणप्पभाते पुढवीए रयणे कण्डे दस जोअणसयाइं बाहल्लेणं पन्नत्ते, इमीसे रयणप्पभाए पुढवीए वतरे कण्डे दस जोयणसताइं बाहल्लेणं पण्णत्ते, एवं वेरुलिते १ लोहितक्खे २ मसारगल्ले ३ हंसगब्भे ४ पुलते ५ सोगंधिते ६ जोतिरसे ७ अञ्जणे ८ अञ्जणपुलते ९ रतते १० जातरूवे ११ अंके १२ फलिहे १३ रिट्ठे १४ जहा रयणे तहा सोलसविधा भाणितव्वा (सू० ७७८)।

'इमीसे ण'मित्यादि, येयं रज्जुरायामविष्कम्भाभ्यामशीतिसहस्राधिकं योजनलक्ष बाहल्यतः उपरि मध्येऽधस्ताच्च यस्याः खरकाण्डपङ्कबहुलकाण्डजलबहुलकाण्डाभिधानाः क्रमेण षोडशचतुरशीत्यशीतियोजनसहस्रबाहल्या विभागाः सन्ति, 'इमीसे'त्ति एतस्याः प्रत्यक्षासन्नायाः रत्नानां प्रभा यस्यां रत्नैर्वा प्रभाति–शोभते या सा रत्नप्रभा तस्याः पृथिव्याः–भूमेर्यत्तत् खरकाण्डं तत्षोडशविधरत्नात्मकत्वात् षोडशविधं, तत्र यः प्रथमो भागो रत्नकाण्डं नाम तद्दशयोजनशतानि बाहल्येन, सहस्रमेकं स्थूलतयेत्यर्थः, एवमन्यानि पञ्चदशापि सूत्राणि वाच्यानि, नवरं प्रथमं सामान्यरत्नात्मकं शेषाणि तद्विशेषमयानि, चतुर्दशानामतिदेशमाह—'एव'मित्यादि, 'पूर्व'मिति पूर्वाभिलापेन सर्वाणि वाच्यानि, 'वेरुलिय'त्ति वैडूर्यकाण्डं, एव लोहिताक्षकाण्डं मसारगल्लकाण्डं हंसगर्भकाण्डमेव सर्वाणि, नवरं रजतं–रूप्यं जातरूपं–सुवर्णमेते अपि रत्ने एवेति ॥

रत्नप्रभाप्रस्तावात् तदाधेयद्वीपादिवक्तव्यतां सूत्रचतुष्टयेनाह—

सव्वेवि णं दीवसमुद्दा दसजोयणसताइं उव्वेहेणं पण्णत्ता। सव्वेवि णं महादहा दस जोयणाइं उव्वेहेणं पण्णत्ता। सव्वेवि णं सलिलकुण्डा दसजोयणाइं उव्वेहेणं पण्णत्ता। सियासीओया णं महानदीओ मुहमूले दस दस जोयणाइं उव्वेहेणं पण्णत्ताओ (सू० ७७९) कत्तियाणक्खत्ते सव्वबाहिरातो मण्डलातो दसमे मण्डले चारं चरति, अणुराधानक्खत्ते सव्वब्भन्तरातो मण्डलातो दसमे मण्डले चारं चरति (सू० ७८०) दस णक्खत्ता णाणस्स विद्धिकरा पण्णत्ता, तं०—मिगसिरमद्दा पुस्सो तिन्नि य पुव्वाइं मूलमस्सेसा। हत्थो चित्ता य तहा दस वुड्किराइं णाणस्स ॥१॥ (सू० ७८१)।

'सव्वे'त्यादि सुगमं, नवरमुद्वेधः उण्डत्तति भणियं होइ, द्वीपानां उण्डत्तगाभावेऽवि अधोदिशि सहस्रं यावद्द्वीपव्यपदेशो, जंबूद्वीपे तु पश्चिमविदेहे जगतीप्रत्यासत्तौ उण्डत्तमवि अत्थित्ति ॥ महाह्रदाः हिमवदादिषु पद्मादयः, 'सलिलकुण्ड'त्ति सलिलानां—गङ्गादिनदीनां कुण्डानि—प्रपातकुण्डानि प्रभवकुण्डानि च सलिलाकुण्डानीति, 'मुहमूले'त्ति समुद्रप्रवेशे। द्वीपसमुद्राधिकारात् तद्वर्त्ति-नक्षत्रसूत्रद्वयमाह—'कत्तिए'त्यादि, इह किल सूर्यस्य चतुरशीत्यधिकं मण्डलशतं भवति चन्द्रस्य पञ्चदश नक्षत्राणां त्वष्टौ, मण्डलं च मार्ग उच्यते, तच्च यथास्वं सूर्यादिविमानतुल्यविष्कम्भं, तत्र जम्बूद्वीपस्याशीत्यधिके योजनशते पञ्चषष्टिः सूर्यस्य मण्डलानि भवन्ति, चन्द्रस्य पञ्च, नक्षत्राणां द्वे, तथा लवणसमुद्रं त्रीणि त्रिंशदधिकानि योजनशतान्यवगाह्य एकोनविंशत्यधिकं सूर्यस्य मण्डलशतं भवति, चन्द्रस्य दश, नक्षत्राणां च षट्, एतेषां च सर्वबाह्यं सुमेरोः पञ्चचत्वारिंशति योजनानां सहस्रेषु त्रिंशदधिकेषु च त्रिषु शतेषु भवति, सर्वाभ्यन्तरं च चतुश्चत्वारिंशति सहस्रेषु अष्टासु च विंशत्यधिकेषु शतेषु भवतीति, एवं च कृत्तिकानक्षत्रं सर्वबाह्यात् 'मण्डलाउ'त्ति

चन्द्रमण्डलाद्दशमे चन्द्रमण्डले सर्वाभ्यन्तरात् षष्ठ इत्यर्थः 'चारं चरइ'त्ति भ्रमणमाचरति, अनुराधानक्षत्रं सर्वाभ्यन्तरात् चन्द्रस्य मण्डलात् दशमे चन्द्रमण्डले सर्वबाह्यात्पष्ठ इत्यर्थः चारं चरतीति व्याख्यातमेवेति। 'विद्धिकराइं'ति एतन्नक्षत्रयुक्ते चन्द्रमसि सति ज्ञानस्य—श्रुतज्ञानस्योद्देशादिर्यदि क्रियते तदा ज्ञानं समृद्धिमुपयाति—अविघ्नेनाधीयते श्रूयते व्याख्यायते धार्यते वेति, भवति च कालविशेषस्तथाविधकार्येषु कारणं, क्षयोपशमादिहेतुत्वात्तस्य, यदाह—"उदयक्खयखओवसमोवसमा जं च कम्मुणो भणिया। दव्वं खेत्तं कालं भवं च भावं च संपप्प ॥१॥" इति, [ उदयक्षयक्षयोपशमोपशमा यच्च कर्मणो भणिताः। द्रव्यं क्षेत्रं कालं भवं च भावं च संप्राप्य ॥१॥ ] तद्यथा 'मिगसिर'गाहा कण्ठया।

द्वीपसमुद्राधिकारादेव द्वीपचारिजीववक्तव्यतां सूत्रद्वयेनाह—

**चउप्पयथलयरपंचिंदियतिरिक्खजोणिताणं दस जातिकुलकोडिजोणिपमुहसतसहस्सा पण्णत्ता, उरपरिसप्पथलयरपंचिंदियतिरिक्खजोणिताणं दस जातिकुलकोडिजोणिपमुहसतसहस्सा पण्णत्ता (सू० ७८२)।**

'चउप्पये'त्यादि, चत्वारि पदानि—पादा येषां ते चतुष्पदास्ते च ते स्थले चरन्तीति स्थलचराश्चेति चतुष्पदथलचरास्ते च ते पञ्चेन्द्रियाश्चेति विग्रहः, पुनस्तिर्यग्योनिकाश्चेति कर्म्मधारयः, तेषां 'दसे'ति दशैव, 'जातौ' पञ्चेन्द्रियजातौ यानि कुलकोटीनां—जातिविशेषलक्षणानां [शतानां] योनिप्रमुखाणि—उत्पत्तिस्थानद्वारकाणि शतसहस्राणि—लक्षाणि तानि तथा प्रज्ञप्तानि सर्वविदा, तत्र योनिर्यथा गोमयो द्वीन्द्रियाणामुत्पत्तिस्थानं, कुलानि तत्रैकत्रापि द्वीन्द्रियाणां कृम्याद्यनेकाकाराणि प्रतीतानीति, तथा उरसा—वक्षसा परि-

सर्पन्ति-सञ्चरन्तीत्युरःपरिसर्पास्ते च ते स्थलचराश्चेत्यादि तथैव ॥

जीवविषयं दशस्थानकमभिधायाधुनाऽजीवस्वरूपपुद्गलविषयं तदाह—

जीवाणं दसठाणनिव्वत्तिता पोग्गले पावकम्मत्ताए चिणिंसु वा ३, तंजहा—पढमसमयएगिंदियनिव्वत्तिए जाव फासिंदियनिव्वत्तिते, 'एवं चिण उवचिण बंध उदीर वेय तह णिज्जरा चेव'। दसपतेसिता खंधा अणंता पण्णत्ता दसपतेसोगाढा पोग्गला अणंता पण्णत्ता दससमतठितीना पोग्गला अणंता पण्णत्ता दसगुणकालगा पोग्गला अणंता पण्णत्ता, एवं वन्नेहिं गंधेहिं रसेहिं फासेहिं दसगुणलुक्खा पोग्गला अणंता पण्णत्ता। (सू० ७८३) सम्मत्तं च ठाणमिति दसमं ठाणं सम्मत्तं १०, दसमं अज्झयणं सम्मत्तं १० ।

॥ इति श्रीस्थानाङ्गं तृतीयाङ्गं समाप्तं ॥ (ग्रंथाग्रं ३७००)

'जीवा ण'मित्यादि, अथवा जातियोनिकुलादिविशेषा जीवाणां कर्म्मणश्चयोपचयादिभ्यो भवन्तीति त्रिकालभाविनो दशस्थानकानुपातेन कर्म्मणश्चयादीनाह—'जीवा ण'मित्यादि, जीवा-जीवनधर्माणो न सिद्धा इति भावः, णमिति वाक्यालङ्कारे दशभिः स्थानैः प्रथमसमयैकेन्द्रियत्वादिभिः पर्यायैः हेतुभिय निर्वर्त्तिता-बन्धयोग्यतया निष्पादितास्ते तथा दशभिः स्थानैर्निर्वृत्तिर्वा येषां ते तथा तान् पुद्गलान्-कर्म्मवर्गणारूपान् पापं-घातिकर्म्म सर्व्वमेव वा कर्म्म तच्च तत्क्रियमाणत्वात् कर्म्म च पापकर्म्म तद्भावस्तत्ता तया पापकर्मतया 'चिणिंसु'त्ति चितवन्तो गृहीतवन्तः चिन्वन्ति-गृह्णन्ति चेष्यन्ति-गृहीष्यन्त्यनेनात्मनां त्रिकालान्वयित्वमाह,

सर्वथा अनन्वयित्वेऽकृताभ्यागमकृतविप्रणाशप्रसङ्गादिति, वाशब्दा विकल्पार्थाः, तद्यथा-प्रथमः समयो येषामेकेन्द्रियत्वस्य ते तथा ते च ते एकेन्द्रियाश्चेति प्रथमसमयैकेन्द्रियास्तैः सद्भिर्ये निर्वर्त्तिताः-कर्म्मतयाऽऽपादिता अविशेषतो गृहीतास्ते तथा तान्, एतद्विपरीतैरप्रथमसमयैकेन्द्रियैर्निर्वर्त्तिता ये ते तथा तान्, एवं द्विभेदता द्वित्रिचतुष्पञ्चेन्द्रियाणां प्रत्येकं वाच्येति, एतदेवातिदेशेनाह—'जावे'-त्यादि, यथा चितवन्त इत्यादि कालत्रयनिर्देशेन सूत्रमुक्तमेवमुपचितवन्त इत्यादीन्यपि पञ्च वक्तव्यानीत्येतदेवाह—'एवं चिणे'-त्यादि, इह चैवमक्षरघटना-चिणात्ति-यथा चयनं कालत्रयविशेषितमुक्तमेवमुपचयो बन्ध उदीरणा वेदना निर्जरा च वाच्याः, 'चेव'त्ति समुच्चये नवरं चयनादीनामयं विशेषः-चयनं नाम कषायादिपरिणतस्य कर्म्मपुद्गलोपादानमात्रं, उपचयनं गृहीतानां ज्ञानावरणादिभावेन निषेचनं बन्धनं-निकाचनं उदीरणा-करणत उदये प्रवेशनं वेदनं-अनुभवनं निर्जरा-जीवप्रदेशेभ्यः परिशटनमिति। पुद्गलाधिकार एवेदमाह—'दसे'त्यादि सूत्रवृन्दं सुगमं च, नवरं दश प्रदेशा येषां ते तथा त एव दशप्रदेशिका-दशाणुकाः स्कन्धाः-समुच्चया इति द्रव्यतः पुद्गलचिंता, तथा दशसु प्रदेशेष्वाकाशस्यावगाढा-आश्रिता दशप्रदेशावगाढा इति क्षेत्रतः तथा दश समयान् स्थितिर्येषां ते तथेति कालतः तथा दशगुणः-एकगुणकालापेक्षया दशाभ्यस्तः कालो-वर्णविशेषो येषां ते दशगुणकालकाः एवमन्यैश्चतुर्भिर्वर्णैर्द्वाभ्यां गन्धाभ्यां पञ्चभी रसैरष्टाभिः स्पर्शैः विशेषिताः पुद्गलाः अनन्ता वाच्याः, अत एवाह—'एव'मित्यादि, 'जाव दसगुणलुक्खा पोग्गला अणन्ता पन्नत्ते'त्यनेन भावतः पुद्गलचिन्तायां विंशतितम आलापको दर्शितः। इह चानन्तशब्दोपादानेन वृद्ध्यादिशब्देनेवान्तमङ्गलमभिहितं, अयं चानन्तशब्द इह सर्वाध्ययनानामन्ते पठित इति सर्वेष्वप्यन्तमङ्गलतया बोद्धव्य इति। तदेवं निगमितमनुगमद्वारांशभूतं सूत्रस्पर्शकनिर्युक्तिद्वारं, शेषद्वाराणि तु सर्वाध्ययनेषु प्रथमाध्ययनवदनुगमनीयानीति॥ इति श्रीमदभयदेवसूरिविरचिते

स्थानाङ्गतृतीयाङ्गविवरणे दशस्थानकाख्यं दशममध्ययनं समाप्तमिति। ग्रंथाग्रं १७१४ ॥श्रीः॥ तत्समाप्तौ च समाप्तं स्थानाङ्गविवरणं, तथा च यदादावभिहितं स्थानाङ्गस्य महानिधानस्येवोन्मुद्रणमिवानुयोगः प्रारभ्यत इति तच्चन्द्रकुलीनप्रवचनप्रणीताप्रतिबद्धविहारहारिचरितश्रीवर्धमानाभिधानमुनिपतिपादोपसेविनः प्रमाणादिव्युत्पादनप्रवणप्रकरणप्रबन्धप्रणायिनः प्रबुद्धप्रतिबन्धप्रवक्तृप्रवीणाप्रतिहतप्रवचनार्थप्रधानवाक्प्रसरस्य सुविहितमुनिजनमुख्यस्य श्रीजिनेश्वराचार्यस्य तदनुजस्य च व्याकरणादिशास्त्रकर्तुः श्रीबुद्धिसागराचार्यस्य चरणकमलचञ्चरीककल्पेन श्रीमदभयदेवसूरिनाम्ना मया महावीरजिनराजसंतानवर्त्तिना महाराजवंशजन्मनेव संविग्नमुनिवर्गश्रीमदजितसिंहाचार्यान्तेवासियशोदेवगणिनामधेयसाधोरुत्तरसाधकस्येव विद्याक्रियाप्रधानस्य साहाय्येन समर्थितं। तदेवं सिद्धमहानिधानस्येव समापिताधिकृतानुयोगस्य मम मङ्गलार्थं पूज्यपूजा—नमो भगवते वर्त्तमानतीर्थनाथाय श्रीमन्महावीराय नमः प्रतिपन्थिसार्थप्रमथनाय श्रीपार्श्वनाथाय नमः प्रवचनप्रबोधिकायै श्रीप्रवचनदेवतायै नमः प्रस्तुतानुयोगशोधिकायै श्रीद्रोणाचार्यप्रमुखपण्डितपर्षदे नमश्चतुर्वर्णाय श्रीश्रमणसङ्घभट्टारकायेति। एवं च निजवंशवत्सलराजसंतानिकस्येव ममासमानमिममायासमतिसफलतां नयन्तो राजवंश्या इव वर्द्धमानजिनसन्तानवर्त्तिनः स्वीकुर्वन्तु यथोचितमितोऽर्थजातमनुतिष्ठन्तु सुष्टूचितपुरुषार्थसिद्धिमुपयुञ्जताश्च योग्येभ्योऽन्येभ्य इति ॥

किं च—

सत्सम्प्रदायहीनत्वात्, सदूहस्य वियोगतः। सर्वस्वपरशास्त्राणामदृष्टेरस्मृतेश्च मे ॥१॥
वाचनानामनेकत्वात्, पुस्तकानामशुद्धितः। सूत्राणामतिगाम्भीर्यान्मतभेदाच्च कुत्रचित् ॥२॥

क्षूणानि संभवन्तीह, केवलं सुविवेकिभिः। सिद्धान्तानुगतो योऽर्थः, सोऽस्माद् ग्राह्यो न चेतरः ॥३॥
शोध्यं चैतज्जिने भक्तैर्मामवद्भिर्दयापरैः। संसारकारणाद् घोरादपसिद्धान्तदेशनात् ॥४॥
कार्या न चाक्षमाऽस्मासु, यतोऽस्माभिरनाग्रहैः। एतद् गमनिकामात्रमुपकारीति चर्चितम् ॥५॥
तथा संभाव्य सिद्धान्ताद्, बोध्यं मध्यस्थया धिया। द्रोणाचार्यादिभिः प्राज्ञैरनेकैरादृतं यतः ॥६॥
जैनग्रन्थविशालदुर्गमवनादुच्चित्य गाढश्रमं, सद्व्याख्यानफलान्यमूनि मयका स्थानाङ्गसद्भाजने।
संस्थाप्योपहितानि दुर्गतनरप्रायेण लब्ध्यर्थिना, श्रीमत्सङ्घविभोरतः परमसावेत्र प्रमाणं कृती ॥७॥
श्रीविक्रमादित्यनरेन्द्रकालाच्छतेन विंशत्यधिकेन युक्ते।
समासहस्रेऽतिगते विदृब्धा, स्थानाङ्गटीकाऽल्पधियोऽपि गम्या ॥८॥
प्रत्यक्षरं निरूप्यास्या, ग्रथमानं विनिश्चितम्। अनुष्टुभां सपादानि, सहस्राणि चतुर्दश ॥१॥ (ग्रंथाग्रं १४२५०)

॥ इति श्रीमच्चान्द्रकुलीनाभयदेवाचार्यविहितविवृतियुतं
स्थानाङ्गाभिधानं तृतीयमङ्गं समाप्तम् ॥